श्रीमद्व्यासराजगुरुसार्वभौमविरचितम्

# ॥ श्रीमन्न्यायामृतम् ॥

श्रीमद्विजयीन्द्रतीर्थविरचित-

## लघ्वामोदव्याख्यानसहितम्



बृन्दावनसंस्था, मन्त्रालयः

SREE

SRIMANMOOLARAMO VIJAYATE

# SRIMAN NYAYAMRUTHAM

BY

SRI VYASARAJAGURUSARVABHOUMA

WITH

A Brilliant and Illuminating Commentary LAGHVAMODA

BY

SRI VIJAYEENDRATEERTHA

Chief Editor

*Panditaraja, Sacchastra Ratnakara etc.*

**Prof. M. S. RANGANATHACHAR**

Sub-Editor

*Panditabhushanam* **Prof. S. V. BHIMABHAT**

Published by

**BRUNDAVANAM OFFICE**

**SRI RAGHAVENDRA SWAMIGAL MUTT**

**MANTRALAYAM P.O., Kurnool Dist. (A.P.)**

मेरुकृति श्रीव्यासत्रयग्रन्थरत्नप्रणेतारः

## श्रीमद्व्यासराजगुरुसार्वभौमाः



अर्थिकल्पितकल्पोऽयं प्रत्यर्थिगजकेसरी । व्यासतीर्थगुरुर्भूयादस्मदिष्टार्थसिद्धये ॥

चतुरधिकशतप्रौढशास्त्रग्रन्थप्रणेतारः सर्वतन्त्रस्वतन्त्राः

**श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमाः**



भक्तानां मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥

सर्वजगन्मान्यागम्यमाहात्म्यसम्पन्नाः

## श्रीमद्राघवेन्द्रगुरुसार्वभौमाः



पूज्याय राघवेन्द्राय सत्यधर्मरताय च। भजतां कल्पवृक्षाय नमतां कामधेनवे ॥

दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे। श्रीराघवेन्द्रगुरवे नमोऽत्यन्तदयालवे ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत श्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वराः

## श्री श्री सुजयीन्द्रतीर्थगुरुवरेण्याः



सुयमीन्द्रकराब्जोत्थ सुविद्याबोधकं सदा ।
सुमूलरामपूजाढ्यं **सुजयीन्द्रगुरुं** भजे ॥

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागतश्रीमदानन्दतीर्थभगवत्पादाचार्यमूलमहा-
संस्थानाधीश्वराणां, श्रीमद्राघवेन्द्रगुरुसार्वभौमवेदान्तसाम्राज्यदिग्विजयविद्या-
सिंहासनाधीश्वराणां, श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यमन्दविरुदवृन्द-
विभूषितानां, श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-
श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारकाणां

## श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्

# अनुग्रहवचनम्

श्रीमन्मध्वसिद्धान्तप्रतिपाद्यप्रमेयप्रतिपादकातिप्रौढवाक्यार्थविजृम्भितग्रन्थरत्नसमुदायमध्ये मुनित्रयकोटिप्रविष्टत्वेन श्रीमुष्णमाहात्म्यग्रन्थोदाहृतैः, श्रीमन्नृसिंहरूपिपरमात्मपरमानुग्रहसम्पन्नश्रीप्रह्लादराजावतारभूतैः, श्रीमद्व्यासराजगुरुसार्वभौमैर्विरचितं व्यासत्रयकोटिप्रविष्टं मेरुकृतित्वेन पण्डितप्रकाण्डैरुपगीयमानं श्रीमन्न्यायामृतं नाम ग्रन्थरत्नं, चतुरधिकशतस्वतन्त्रप्रौढवाक्यार्थविलसितप्रबन्धनिर्मातृत्वेन, चतुःषष्टिकलाविद्यापारङ्गतत्वेन च जगद्विख्यातैः श्रीमद्विजयीन्द्रतीर्थगुरुवरेण्यैर्विरचितेन लघ्वामोदव्याख्यानेन समलङ्कृतमस्मद्गुरुवरेण्यानांश्रीमत्सुजयीन्द्रतीर्थश्रीपादानामाज्ञानुरोधेन सम्प्रति समग्रं मुद्रितं प्रकाश्यते । श्रीमद्विजयीन्द्रतीर्थविरचितलघ्वामोदव्याख्यानसहितन्यायामृतग्रन्थस्यास्य मुद्रणोपयुक्तप्रतिकृतिनिर्माण परिशोधनादि कार्येष्वस्मद्गुरुवरेण्यैः श्रीमत्सुजयीन्द्रतीर्थैरेव मन्त्रपवित्रमन्त्राक्षतप्रदानपुरस्सरं समाज्ञप्ताः पण्डितप्रकाण्डाः मागडि रङ्गनाथाचार्याः नियोजितमेतत्कार्यं सर्वाङ्गसुन्दरमकार्षुः। अतस्तेभ्योऽस्मदुपास्य श्रीमद्राघवेन्द्रगुरुसार्वभौमान्तर्गतश्रीमुख्यप्राणान्तर्गतश्रीमन्मूलरामचन्द्रः सुप्रीतो भूयांसि श्रेयांसि इतोऽप्यधिकं ज्ञानभक्तिवैराग्यादिकञ्च प्रदद्यादित्याशास्महे ॥

मन्त्रालयक्षेत्रम् इत्यनेकनारायणस्मरणानि

२०-१-१९९१

॥ श्रीः ॥

॥ श्रीमन्मूलगोपालकृष्णाभिन्नश्रीमन्मूलरामो विजयते ॥

पदवाक्यप्रमाणज्ञो दुर्मतध्वान्तभास्करः ।
व्यासतीर्थमुनीन्द्रो मे भूयाज्ज्ञानसमृद्धये ॥

भक्तानां मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥

# भूमिका

अथेदानीं निर्मत्सराणां दुराग्रहग्रस्तान्तरङ्गविधुराणां तत्वज्ञानैकपक्षपातिनां शमदमादिगुण-मण्डनमण्डितानां तत्वजिज्ञासूनां समक्षं तदिदं निवेदयामो यत् मध्वसिद्धान्तदुग्धाब्धिनिमज्जनमाचरद्भिरधिकारिचेतनैरधीयमानग्रन्थसमुदायमध्ये सयुक्तिकं सप्रमाणञ्च मतान्तरप्रक्रियानिराकरणपुरस्कृतं, सूत्रे, भाष्येऽनुभाष्ये, प्राचीननवीनटीकासु चास्पष्टीकृतार्थस्पष्टीकरणविजृम्भितमत एव विद्वद्वरेण्यैः मेरुकृतित्वेनोपगीयमानं व्यासत्रयं चरमतया व्यवस्थाप्यत इति ।

व्यासत्रयनाम्ना सुप्रसिद्धानां श्रीमत्तात्पर्यचन्द्रिका-न्यायामृत-तर्कताण्डवग्रन्थरत्नानामध्ययनादृते, वेदान्तशास्त्रपाण्डित्यं श्रीमद्वेदव्याससिद्धान्तविरुद्धाभासमयमतान्तरप्रक्रियानिराकरणप्रावीण्यञ्चात्मसाज्जातमिति को नाम विपश्चिद्पश्चिमः सञ्जानीते। एतदभिप्रायेणैव विद्वत्कविकुलावतंसैः श्रीराघवेन्द्रविजयमहाकाव्यनिर्मातृभिः श्रीनारायणाचार्यैः तात्पर्यचन्द्रिकाग्रन्थरत्नमधिकृत्येत्थमभ्यवर्णि ।

तद्यथा—व्याससूत्रपदार्थोपन्यासमाकर्ण्य मान्यपि ।
व्यासराजस्य भजते दासतां को न कोविदः ॥ इति ।

एवं श्रीव्यासराजशिष्यवरेण्यैश्चतुरधिकशतग्रन्थरत्नकर्तृभिः चतुःषष्टिकलाविद्यापारङ्गतैः परैरजय्यैः श्रीविजयीन्द्रतीर्थैः स्वदेशिकवर्यकृतपरमतनिराकरणप्रशंसनपुरस्सरमेवमभ्यधायि ।

तद्यथा—यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ इति ।

मध्वाध्वकण्टकोद्धारग्रन्थारम्भेऽप्येवं ते समाचक्षते ।

यद्यप्यानन्दतीर्थीयभाष्यमेवोपपत्तिमत् ।
न तु भाष्यान्तराणीति दर्शितं मम देशिकैः ॥

तथाप्याधुनिकोक्तानां दूषणानामलग्नताम् ।
प्रदर्श्य गुरुपादोक्तिमहिमात्र प्रदर्श्यते ॥ इति । (प्रकाश्यते इति पाठान्तरम्)

द्वैतसिद्धान्तवाङ्मये मूलटीकाग्रन्थव्याख्यानत्वेनोपलभ्यमानेषु बहुषु व्याख्यानेषु विद्यमानेष्वपि, प्राचीनाचार्यसम्मतसैद्धान्तिकसाम्प्रदायिकप्रामाणिकातिविमर्शितगहनार्थगर्भितत्वं श्रीव्यासराजविरचिततात्पर्यचन्द्रिकादिग्रन्थेष्वामूलाग्रमुपदृश्यत इत्यत्र निरन्तरतत्पाठप्रवचनपरायणाः पण्डितप्रकाण्डा एव प्रमाणम् । प्रकाशाख्यतात्पर्यचन्द्रिकाव्याख्याननिर्मातारस्तु श्रीमद्राघवेन्द्रगुरुसार्वभौमाः पुनः तद्व्याख्यानप्रारम्भ एवेममर्थमप्यसूचयन् ।

उक्तञ्च तैः—पदवाक्यप्रमाणज्ञान् सम्प्रदायार्थकोविदान् ।
व्यासतीर्थमुनीन् सेवे दुर्वादिफणिपक्षिपान् ॥ इति ।

अत्रोपात्तं सम्प्रदायार्थकोविदानिति विशेषणं प्रागुक्तमेवार्थमभिव्यनक्ति । अर्वाचीनास्तु प्रायः सर्वेऽपि पण्डिताग्रगण्याः व्याख्यातारश्च मध्वसिद्धान्तार्थनिरूपणावसरे स्वप्रतिपादितार्थप्रामाणिकत्वपरिपोषणाय व्यासत्रयगर्भितान्येव वाक्यानि संवादित्वेन प्रमाणत्वेन चोदाहरन्ति ।

अतिकर्कशतर्कप्रतिभापरिकल्पिततार्किकप्रक्रियानिराकरणपुरस्सरं श्रीमदानन्दतीर्थभगवत्पादाचार्यग्रन्थोदाहृतब्रह्मतर्कप्रमेयप्रामाण्यव्यवस्थापनायैव प्रवृत्तं व्यासत्रयकोटिप्रविष्टं तर्कताण्डवं नाम ग्रन्थरत्नं, तर्केण ताण्डवं, तर्कस्य ताण्डवं, तर्के ताण्डवमिति त्रेधा विद्वद्वरेण्यैर्निरुच्यमानं वेदापौरुषेयत्वस्वतःप्रामाण्यादिविषयेषु मध्वसिद्धान्तार्थ(निर्णायकं) प्रकाशकं सकलदार्शनिकाग्रगण्यचित्तवृत्तिमप्याश्चर्यकलितं कुरुते ।

अत एव वङ्गदेशीयतार्किकशिरोमणिना पक्षधरमिश्रेण श्रीव्यासराजगुरुवरेण्यासाधारणप्रतिभापुञ्जदर्शनचकिता(विस्मापिता)न्तरङ्गेण सानन्दं प्रशंसावचनमित्थमवोचि ।

तद्यथा—यदधीतं तदधीतं यदनधीतं तदप्यधीतम् ।
पक्षधरविपक्षो नावेक्षि विना नवीनव्यासेन ॥ इति ।

सम्प्रति लब्धामोदव्याख्यानसमलङ्कृतं श्रीमन्न्यायामृतग्रन्थमधिकृत्य किञ्चित्प्रस्तूयते ।

मन्दरपर्वतमथितदुग्धाब्धिप्रादुर्भूतदेवतावृन्दतर्पकदिव्यामृतमिव स्वकीयप्रतिभामन्दरपर्वतमथितश्रीमन्मध्वशास्त्रदुग्धजलधिसमुत्पन्नं न्यायामृतं भूमण्डलमण्डनायमानभूदेवतावृन्दमोदायार्पितमिति ग्रन्थकारैः श्रीव्यासराजगुरुसार्वभौमैर्ग्रन्थारम्भ एव न्यायामृतग्रन्थोदयमधिकृत्येत्थमुदघोषि ।

तद्यथा—श्रीमध्वशास्त्रदुग्धाब्धिं धीमन्दरमहीभृता ।
आमथ्योद्ध्रियते न्यायामृतं विबुधतृप्तये ॥ इति ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तावत् श्रीमद्बादरायणसम्मतद्वैतवेदान्तप्रतिष्ठापनाचार्या इति विश्वविश्रुताः मोक्षजनकतत्वज्ञानोत्पादकशास्त्रनिर्मातार इति वैदिकमध्वनाम्नैवावगम्यमानमहामाहात्म्य-सम्पन्ना लोकत्रयविश्रान्तकीर्तिरञ्जिता इदानीमपि उत्तरबदरीक्षेत्रे श्रीबादरायणसमीपे सशरीरं विराजन्ते ।

श्रीमध्वनिर्मितग्रन्थार्थप्रकाशकव्याख्यानकर्तारस्तु श्रीपद्मनाभतीर्थाः श्रीत्रिविक्रमपण्डिताचार्याश्च प्राचीनटीकाकारत्वेन प्राज्ञैः प्रख्यापिता वर्तन्ते ।

श्रीमन्न्यायसुधादिव्याख्यानरचयितारश्च श्रीमज्जयतीर्थश्रीमच्चरणाः पुनः टीकाचार्या इत्येव वेदान्तप्रपञ्चे सङ्कथ्यन्ते ।

श्रीमन्न्यायामृतादिव्यासत्रयप्रणेतारस्तु श्रीव्यासराजगुरुसार्वभौमाः पुनः वादरङ्गमूलाचार्या इति वेदान्ततत्वविमर्शनचातुरीपरिचितान्तरङ्गैःपण्डिताग्रगण्यैः संश्लाघिता वर्तन्ते ।

ऐक्यवादप्रक्रियानिराकरणविजृम्भिते न्यायामृतग्रन्थे तु न्यायामृतग्रन्थकाराः प्रपञ्चमिथ्यात्व-परिष्कारप्रभेदान्मतभेदेनैक्यवादिभिर्भिन्नभिन्नग्रन्थेषु विक्षिप्य, विक्षिप्य, तत्र तत्र प्रदर्शितानेकत्र संकलय्यातिगम्भीरया प्रणाल्या सरलसरलया वाण्या तत्तदभिमतानर्थान्विनैव कलङ्कमनूद्याच्छेद्याभेद्य-युक्तिजालैः श्रीमदाचार्योदाहृतप्रमाणपुञ्जैश्च प्रतिपक्षप्रतिक्षेपमकार्षुः ।

ऐक्यवादिमताभिमतप्रक्रियायां परिशील्यमानायामवान्तरभेदाः परस्परं विलक्षणाः सन्दृश्यन्ते ।

(१) तद्यथा—अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रति-बिम्बितं चैतन्यं जीव इति विवरणकाराः ।

(२) अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं तु बिम्बचैतन्य शुद्धमिति संक्षेपशारीरककाराः । अनयोः पक्षयोः बुद्धिभेदात् जीवनानात्वम्, प्रति-बिम्बस्य च पारमार्थिकत्वात् जहदजहल्लक्षणैव तत्वमादिपदेषु । इममेव प्रतिबिम्बवादमाचक्षत इत्याहुः ।

(३) अज्ञानविषयीकृतचैतन्यमीश्वरः, अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः । अस्मिंश्च पक्षे अज्ञाननानात्वात् जीवनानात्वम्, प्रतिजीवं च प्रपञ्चभेदः जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात्, प्रत्यभिज्ञा चातिसादृश्यात्, ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारण-तोपचारादिति । अयमेवावच्छेदवाद इति तेषामभिप्रायः ।

(४) अद्वैतवेदान्तसिद्धान्तः एकजीववादाख्यस्तु यथा—अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बितं चैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यं ईश्वरः, अज्ञानोपहितं जीव इति

वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः, इममेव दृष्टिसृष्टिवादमाचक्षते । अस्मिंश्च पक्षे जीवः स्वाज्ञानवशात् जगदुपादानं निमित्तं च, सर्वं प्रातीतिकं, देहभेदाच्च जीवभेदभ्रान्तिः, एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः । शुकादीनां च मोक्षश्रवणं तु अर्थवादः । महावाक्ये च तत्पदं अनन्तसत्यादिपदवद् अज्ञानानुपहितचैतन्यस्य लक्षणया उपस्थापकं इत्याद्याः, अवान्तरभेदाः वर्तन्ते ।

अन्यदप्युक्तं तैरेव, ननु वस्तुनि विकल्पासंभवात् कथं परस्परविरुद्धमतप्रामाण्यम् ? तस्मात्किमत्र हेयम् ? किमुपादेयम् ? इति चेन्न । क एवमाह वस्तुनि विकल्पो न संभवतीति । स्थाणुर्वा, पुरुषो वा, राक्षसो वेत्यादि विकल्पस्य वस्तुन्यपि दर्शनात् । अतात्विकी सा कल्पना । पुरुषबुद्धिमात्रप्रभवा, इयन्तु शास्त्रीया जीवेश्वरविभागादिव्यवस्था इति चेत्—नूनमतिमेधावी भवान् । अद्वितीयात्मतत्वं हि प्रधानं, फलवत्त्वात् अज्ञातत्वाच्च प्रमेयं शास्त्रस्य । जीवेश्वरादिविभागकल्पनास्तु पुरुषबुद्धिप्रभवा अपि शास्त्रेणानूद्यन्ते । तत्त्वज्ञानोपयोगित्वात् । "फलवत्सन्निधौ अफलं तदङ्ग" मिति न्यायात् । भ्रमसिद्धस्यापि श्रुत्यनुवादसम्भवात् । एतेन द्वैतज्ञानेन अद्वैतज्ञानस्य बाधो निरस्तः । घटादिद्वैतज्ञानस्यापि अद्वैतसन्मात्रांशे अज्ञाते प्रामाण्याभ्युपगमाच्च । ज्ञानाज्ञानयोः समानाश्रयविषयत्वनियमात् । जडे च प्रमाणप्रयोजनाभावेन, अज्ञानानभ्युपगमाद् तदवच्छिन्नचैतन्याज्ञानादेव तत्राप्यज्ञानव्यवहारोपपत्तेः । सर्वप्रमाणानां च अज्ञातज्ञापकत्वेनैव प्रामाण्यात् । अन्यथा स्मृतेरपि तदापत्तिरिति । एवं वेदान्तेषु सर्वत्र एवंविधविरोधे अयमेव परिहारः" इति मायावादिभिः प्रतिपादितम् ।

एवमेव ऐक्यवादिभिः चित्सुखानन्दबोधविवरणकारादिभिः मिथ्यात्वपरिष्काराः बहुधा प्रदर्शिताः सन्दृश्यन्ते ।

तेषु मध्ये पञ्चपादिकारीत्या सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वं मिथ्यात्वम् । विवरणकाररीत्या प्रतिपन्नोपाधौ अभावप्रतियोगित्वं ज्ञानत्वेन ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । चित्सुखरीत्या स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वम् । आनन्दबोधोक्तरीत्या सद्विविक्तत्वं मिथ्यात्वम् । प्रमाणमालारीत्या स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिः मिथ्यात्वमिति मतभेदेन तैः पञ्चधा मिथ्यात्वनिर्वचनं कृतं दरीदृश्यते ।

दृग्दृश्ययोराध्यासिकसंबन्धकल्पनञ्च । सृष्टिर्नाम ब्रह्मरूपसच्चिदानन्दवस्तुनि अब्धौ फेनादिवत् सर्वनामरूपकल्पनम् । सजातीयविजातीयस्वगतनानात्वरहितं निर्विशेषं ब्रह्मैव तत्वं, तदज्ञानवशाज्जगत् ईश्वरजीवरूपेण प्रतीयत इत्यादिचिरन्तनाद्वैतवाद्युक्तिः । इत्येवंरूपेण मायावादिनः प्रतिपादयन्ति ।

न्यायामृतकारैः श्रीव्यासराजगुरुवरेण्यैरेते पक्षाः प्रायःसर्वेऽपि न्यायामृते सयुक्तिकं सप्रमाणञ्च निराकृताः परिदृश्यन्ते । न्यायामृतग्रन्थस्तु जगन्मिथ्यात्ववादिनामैक्यवादिनां विषये सिंहस्वप्नायते । अत एव श्रीगुरुगुणस्तवननिर्मातारः श्रीमद्वादीन्द्रतीर्थगुरुवरेण्याः व्यासत्रयनाम्ना विश्वविश्रुतास्त्रयोऽपि ग्रन्थाः मायातन्त्रामरार्यखर्वगर्वविच्छेदकमध्वसिद्धान्तनाम्नः श्रीमन्नृसिंहरूपिणः परमात्मनस्त्रीणि नेत्राणीव त्रिजगति विद्योतन्त इति परमरमणीयकाव्यसरण्याऽभ्यवर्णयन् । तद्यथा—

> मायातन्त्रामरारिस्मयमपनयतो मध्वसिद्धान्तनाम्नो
> नेत्राणीव त्रयोऽपि त्रिजगति नृहरेरिन्धते यत्प्रबन्धाः ।
> यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते सः
> श्रेयो भूयो विदध्यात्सुमहितमहिमा सम्प्रति व्यासराजः ।। इति ।।

श्रीमन्न्यामृतग्रन्थनिर्माणानन्तरमेव द्वैताद्वैतवादप्रस्थानप्रसङ्गेन तत्वविमर्शनकौतूहलकलितान्तरङ्गैर्मध्वमतावलम्बिभिरद्वैतमताश्रितैश्च विद्वद्भिः खण्डनमण्डनात्मकाः ग्रन्थाः अकारिषतेत्ययं विषयः सुप्रसिद्ध एव । वादरङ्गमूलाचार्याणां महानुभावानां न्यायामृतग्रन्थनिर्मातॄणां श्रीव्यासराजगुरुवरेण्यानां विषये अद्वैतमतावलम्बिभिरनन्तकृष्णशास्त्रिभिरेव कृतानि नितरां प्रशंसापराणि वाक्यान्यत्र संगृह्य वाचकवरेण्यानामवगाहनार्थमुदाहरामः । उक्तञ्च तैर्यथा—

> "द्वैताद्वैतवादप्रस्थानप्रसङ्गेन तत्र तत्र न्यायमकरन्दचित्सुखीप्रमाणमालाद्वैतदीपिकादिग्रन्थेषु विशकलिततया उपलभ्यमानानां खण्डनमण्डनादिप्रसङ्गेनोट्टङ्कितानां प्रक्रियाविशेषाणां एकत्र सङ्कलनेन, विनैव कलङ्कं तत्तन्मतप्रक्रियाविशेषाणां अतिगम्भीरया प्रणाल्या सरलसरलयोपपादनेन श्री व्यासतीर्था एव न्यायामृतकारा मूलाचार्या इति नेयमतिशयोक्तिरिति वयं विश्वसिमः । यत् न केवलं द्वैतिनः किन्त्वद्वैतिनोऽपि विमर्शनकुतूहला अधमर्णा एव न्यायामृतकाराणां श्री व्यासरायमठादिपुरुषाणां सर्वतन्त्रस्वतन्त्राणां परःशतनिबन्धनिर्मातॄणाम् । विश्वसिमः यत् श्रीव्यासतीर्था अनितरसाधारणमहिमशालिनस्तेजस्विनः सर्वविद्याधिष्ठानदेवताः शान्तप्रकृतयश्च यतिवर्या इदानीमपि स्वतेजसा जीवन्ति श्रीव्यासरायमठास्थाने, यत्र तत्पीठाधिष्ठानमात्रेण बालोऽपि बृहस्पतिसमानो मूकोऽपि वाग्मिप्रवरो भवति, इति वयमद्वैतमतावलम्बिनोऽपि तच्चरणकमलाश्रयणमात्मनो भूषणमेव मन्महे । श्रीव्यासरायमठाधिष्ठानाः श्रीविजयीन्द्रतीर्थादयोऽपि विश्वसिमस्तत्पीठमहिम्नैव परश्शतनिबन्धनिर्माणेन लोकोपकारमदधुः" इति ।।

तदुक्तरीत्या न केवलमद्वैतिनः परन्तु मध्वमतावलम्बिनः सर्वेऽप्यर्वाचीनपण्डिताग्रगण्याः श्रीव्यासाज-गुरुवरेण्यानामधमर्णा एवेत्यत्र नास्त्येव विशयलेशोऽपि ।

न्यायामृतग्रन्थे परिच्छेदचतुष्टयात्मके प्रथमपरिच्छेदे सप्ताधिकषष्टिसंख्याकाः भङ्गाः (६७) वर्तन्ते । द्वितीयपरिच्छेदे तु त्रयस्त्रिंशत्संख्याकाः (३३) भङ्गाः विद्यन्ते । तृतीयपरिच्छेदे परं नव भङ्गाः सन्दृश्यन्ते । अन्तिमे तु चतुर्थपरिच्छेदे पञ्च भङ्गाः संलक्ष्यन्ते। आहत्य न्यायामृते चतुर्दशाधिकशतसंख्याकाः (११४) भङ्गाः वर्तन्ते । समग्रग्रन्थसंख्या तु (२४ सहस्रसंख्या) चतुर्विंशतिसहस्रसंख्याकग्रन्थात्मकोऽयं न्यायामृतग्रन्थः । ग्रन्थराजस्यास्यानेकसमग्रव्याख्यानानि वर्तन्ते, तानि यथा—

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागतश्रीमध्वाचार्यमूलमहासंस्थानाधीश्वरैः श्रीमद्वि-जयीन्द्रतीर्थैः विरचितानि लघ्वामोद-मध्यमामोद-गुर्वामोदसंज्ञकानि त्रीणि न्यायामृतव्याख्या-नानि सुप्रसिद्धानि ।

तत्परम्परागतवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वरैः श्रीमत्सुमतीन्द्रतीर्थैर्विरचित-मेकंव्याख्यानम् ।

तत्परम्परागतवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वरैः श्रीमत्सुजनेन्द्रतीर्थैर्विरचितं न्यायामृतव्याख्यानम् ।

तत्परम्पराप्रविष्टैः वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वरैः श्रीमत्सुज्ञानेन्द्रतीर्थै-र्विरचितमेकं व्याख्यानम् ।

श्रीव्यासराजगुरुसार्वभौमपीठपरम्परागतैः श्रीलक्ष्मीवल्लभतीर्थकरकमलसञ्जातैः श्रीयादवेन्द्र-तीर्थान्तेवासिभिः श्रीलक्ष्मीनाथतीर्थैर्विरचितं न्यायामृतव्याख्यानम् ।

सर्वजगन्मान्यागम्यमहिमश्रीमद्राघवेन्द्रगुरुसार्वभौमपूर्वाश्रमपुत्रवर्यश्रीलक्ष्मीनारायणाचार्य-विरचितं न्यायामृतमाधुरीसंज्ञकं व्याख्यानम् ।

श्रीमद्राघवेन्द्रगुरुसार्वभौममठीयशिष्यकोटिप्रविष्ट श्री एंजी वेंकटरामाचार्यैर्विरचितं न्यायामृतमक्षिकाव्यजनसंज्ञकमेकं व्याख्यानम् ।

तैरेव श्री ऐजी वेङ्कटरामाचार्यैर्विरचितं कुलिशाख्यं न्यायामृतस्य व्याख्यानान्तरम् ।

श्रीव्यासराजमठीयश्रीकुण्डलगिर्याचार्यैर्विरचितं रसकूलङ्कषाख्यं न्यायामृतव्याख्यानम् ।

श्रीविश्वनाथोरामाचार्यविरचितं न्यायामृततरङ्गिणीसंज्ञकं व्याख्यानम् ।
श्रीवनमालिमिश्रविरचितं न्यायामृतसौगन्ध्यसंज्ञकं न्यायामृतव्याख्यानम् ।
श्रीवनमालिमिश्रैरेव विरचितं न्यायामृततरङ्गिणीसौरभाख्यं व्याख्यानान्तरम् ।
श्रीराघवेन्द्रमठीय श्रीलिंघेरी श्रीनिवासतीर्थविरचितं न्यायामृतव्याख्यानम् ।
श्रीराघवेन्द्रमठीय लिंघेरी श्रीस्वामिरायाचार्यविरचितं न्यायामृतव्याख्यानम् ।

एषु नाम्ना विख्यातेषु कानिचिदेव मुद्रितान्युपलभ्यन्ते। अमुद्रितानि न्यायामृतव्याख्यानानि तत्र तत्र हस्तलिखितान्यप्रकाशितानि प्रतीयन्ते। मूलग्रन्थटीकाग्रन्थानां व्याख्याननिर्मातारस्तु प्रायस्तच्छिष्याः प्रशिष्याः तच्छिष्यपरम्पराप्रविष्टा एव सन्दृश्यन्ते। परन्तु मूलग्रन्थकृद्भ्यः स्वगुरुभ्यः साक्षादेव तदभिप्रायं समधिगम्य तदाशयमनतिक्रम्य व्याख्याकर्तारस्तु केवलं विरला एव। "दुराग्रहगृहीतत्वाद्वर्तन्ते समयाः सदा" (अनुव्याख्याने) इत्याचार्यभणितिरीत्या स्वाभिमत-प्रक्रियाप्रतिपिपादयिषया श्रीमद्बादरायणसूत्राणि शरणीकृत्यैव ते ते वादिनः तेषां भाष्याणि निर्माय सूत्रकारानभिमतान् स्वकीयसिद्धान्तानेव प्रत्यतिष्ठिपन्। द्वैतवेदान्तशास्त्रप्रणेतारस्तु श्रीमन्मध्वाचार्या-स्तावत् साक्षात् श्रीवेदव्यासमुखारविन्दादेव तन्निर्मितब्रह्मसूत्राणामर्थं समधिगम्य तदभिप्रायानुरोधेनैव सूत्रभाष्यादिकमरीरचन्। अत एवेतरभाष्यापेक्षया द्वैताचार्यविरचितभाष्यस्य श्रीवेदव्यासहृदयाति-वल्लभत्वमस्तीति पण्डिताचार्यैः श्रीसुमध्वविजयमहाकाव्ये सूत्रभाष्यवैशिष्ट्यप्रतिपादनावसरे प्रत्यपादि।

एवं श्रीविजयीन्द्रतीर्थैरपि श्रीव्यासराजगुरुवरेण्यशिष्यप्रमुखैः साक्षात्स्वगुरुमुखादेव न्यायामृत-ग्रन्थस्याशयं विज्ञाय लब्धामोदादिसंज्ञकं व्याख्यात्रयं निरमायि।

सम्प्रति श्रीमद्विजयीन्द्रतीर्थगुरुवरेण्यचरितं किञ्चिद्वक्तुं मोमुदीति नश्चेतः। तदीयासाधारण-प्रभावातिशयवर्णनपराणि वचनानि प्राचीनाचार्यकृतान्येवमुपलभ्यन्ते। तानि यथा—

चतुःषष्टिकलाविद्याजुषे विद्वन्महोमुषे।
जयीन्द्रज्योतिषे कुर्वां वन्दनानि यशोजुषे॥ (इति श्रीराघवेन्द्रविजये)
षड्वारं व्यासराजेन्दुमुखात् श्रुत्वा विशेषतः।
मध्वशास्त्रार्थसारन्तु व्याचक्षाणं निजान्प्रति॥
नवकृत्वो न्यायसुधां व्यासतीर्थपयोनिधेः।
उद्धृत्य पीतवन्तञ्च नाकीन्द्रमिव सन्नुतम्॥ इत्यादि॥

भारतभूभागविश्रुतत्वशास्त्रप्रपञ्चे विभूतिपुरुषाः परैरजय्याः न केवलं चतुरधिकशतसंख्याक-स्वतन्त्रप्रौढवाक्यार्थविजृम्भितशास्त्रग्रन्थरत्नकर्तारः परन्तु चतुःषष्टिकलाविद्यापारङ्गताः श्रीविजयीन्द्र-

तीर्थगुरुवरेण्याः स्वजीवितसमये कुम्भघोणक्षेत्रे प्रतिवादिदिग्गजगणस्य मृगराजायमाना व्यराजन्त । दक्षिणभारतदेशप्रसिद्धाप्पय्यदीक्षितप्रभृतिमायावादिभिर्विरचिताः जीवब्रह्मैक्यप्रतिपादकग्रन्थाः प्रायः सर्वेऽपि सयुक्तिकं सप्रमाणमेतैः प्राखण्डिषत ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रतिष्ठापितमध्वसिद्धान्तकल्पवृक्षस्तु मायावादिविद्वद्वृन्दभूयिष्ठे दक्षिणभारते श्रीमद्विजयीन्द्रतीर्थगुरुवरेण्यप्रभावातिशयादेव सम्प्रत्यपि निराबाधं पुष्पितः समुल्लसतीतीयमुक्तिः नातिशयोक्तिकोटिमाटीकते। एतदभिप्रायेणैव गुरुगुणस्तवनकारैः मध्वसिद्धान्तशाखी पुष्पितोऽयं विजयीन्द्रादित्यभ्यवर्णि । तद्यथा—

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्तैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयः पुष्पितोऽयं जयीन्द्रा-
दद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥ इति ॥

शकपुरुषाणां कुम्भघोणक्षेत्रे भव्यवृन्दावने विराजमानामेतेषां पवित्रं नामधेयं दक्षिणभारतनिवासिनामास्तिकवरेण्यानां रसनारङ्गे इदानीमपि नरीनृत्यते ।

तन्त्रचतुष्टये श्रीविजयीन्द्रतीर्थविरचिताः शास्त्रीयवाक्यार्थनिरूपणपराः ग्रन्थाः बहवो वर्तन्ते । पूर्वमीमांसाशास्त्रे शब्दशास्त्रेऽक्षपादप्रणीते न्यायशास्त्रे श्रीबादरायणसम्मतवेदान्तशास्त्रे च श्रीविजयीन्द्रतीर्थविरचितानां प्रबन्धानां सकृद् गुरुभ्यः सकाशात् श्रवणं वा स्वयं पठनं पाठनादिकं वा कर्तुं पुरुषस्याल्पायुष्कत्वादल्पतरजीवितसमयेऽशक्यमेव । तत्तावत्तिष्ठतु नाम। तद्विरचितानां ग्रन्थानामतिबाहुल्यात्तन्नामधेयानि यः कोऽप्यविकलं समग्रं यदि प्रब्रूयात्तर्हि स एव पण्डित इत्याघोषयन्ति विद्वत्कविकुलललामायमानाः श्रीराघवेन्द्रविजयमहाकाव्यप्रणेतारः श्रीनारायणाचार्याः । उक्तञ्च तैः—

वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान् प्रबन्धान् ।
आस्तां बुधः श्रोतुमशेषमेषामाख्यां समाख्याद्यदि पण्डितोऽसौ ॥ इति ॥

न्यायामृतग्रन्थनिर्माणस्य सार्थक्यप्रतिपादनावसरे ग्रन्थकारैः कारणानि नैकविधानि प्रदर्शितान्युल्पश्यामः । उक्तञ्च तैर्यथा—

विक्षिप्तसङ्ग्रहात् क्वापि क्वाप्युक्तस्योपपादनात् ।
अनुक्तकथनात्क्वापि सफलोऽयं श्रमो मम ॥ इति ॥

अत्र निर्दिष्टानां निमित्तानां मध्येऽनुक्तकथनात्कापीत्यस्य ग्रन्थकाराभिप्रेतनिगूढाभिप्रायोऽन्यव्याख्यान-दर्शितविवरणापेक्षया लघ्वामोदव्याख्यानसमर्थित एवातिसमीचीन इति निश्चप्रचमावेदयामः । तद्विषये लघ्वामोदव्याख्यानकर्तारस्तु मूलग्रन्थाभिप्रायमेवं प्रकाशयामासुः । तथाहि—

"ननु प्रसिद्धेषु प्राचीनप्रबन्धेष्वेवैतद्ग्रन्थप्रतिपाद्यार्थस्य प्रतिपादनात्तैरेव कृतकार्योऽसौ न्यायामृतग्रन्थो विफलत्वान्नारम्भणीय इत्याशंक्याह ॥ विक्षिप्तेति ॥ क्वापि प्राचीनग्रन्थेषु विक्षिप्तानां भिन्नभिन्नप्रदेशेषु प्रतिपादितानामर्थानां संग्रहाद् राशीकृत्य निरूपणाद् क्वापि प्राचीनग्रन्थेषु स्वरूपेणोक्तस्यानुपपादितस्योपपादनाद् उपपत्तिपूर्वकं निरूपणाद् , उक्तस्येत्येकवचनमविवक्षि-तार्थम् । अत्रेव तत्र बहूनां सिद्धान्त्यभिप्रेतानामप्यर्थानामनुपपादनाद् (अनुपादानादिति पाठान्तरं) क्वापि च तेष्वनुक्तानामपि कथनाच्चायं श्रमः न्यायामृताख्यनूतनग्रन्थनिर्माणप्रयासः सफल इति । नच अनुक्तकथनादित्ययुक्तम् । पूर्वाचार्यैः प्राचीनप्रबन्धेषु कथनीयस्य सर्वस्याप्यर्थस्य कथनाद्, अन्यथा तत्र तेषामज्ञानप्रतिपादनं पर्यवसितं स्यादिति वाच्यम् । ज्ञानिनामप्युक्तिवैमुख्यदर्शनाद् । तदभावेऽपि ज्ञातस्य सर्वस्योक्तिनियमाभावाच्च । अस्मदादिष्वपि ज्ञातसर्वार्थानुक्तेरनुभवसिद्धत्वाच्च । अन्यथा तस्य तदज्ञानप्रतिपादनपरत्वे अज्ञातकथनात्कापीत्येव ब्रूयात् । तस्माद्यत्किञ्चिदेवैतत्" इति ।

न्यायामृतग्रन्थरहस्यार्थप्रकाशकं श्रीमद्विजयीन्द्रतीर्थविरचितमेतल्लघ्वामोदसंज्ञकं समग्र-व्याख्यानं व्याख्यानान्तराणि सर्वाण्यप्यतिशेते । तस्मादेव लघ्वामोदव्याख्यानस्य मुद्रणपुरस्सरं प्रकाशनमत्यावश्यकमिति मन्यमानाः श्रीमद्राघवेन्द्रगुरुसार्वभौमपीठालंकृताः पण्डितवृन्दप्रपोषकाः वेदान्तविद्यापक्षपातिनः प्रतिवर्षं द्विवारं श्रीमत्समीरसमयविद्वत्सभाधिवेशनव्यवस्थापनकर्तारः श्री श्री सुजयीन्द्रतीर्थगुरुवरेण्याः न्यायामृतमूलसमलंकृतलघ्वामोदव्याख्यानमुद्रणस्याज्ञां प्रदाय तत्पाठ-प्रवचनतत्पराणां योग्याधिकारिणां महान्तमुपकारमकार्षुः । तन्मुद्रणोपयुक्तहस्तलिखितप्रतिकृति-निर्माणादिकार्येषु मन्त्रपवित्रमूलमन्त्राक्षतप्रदानपुरस्सरमस्मान्नियोज्यान्वगृह्णन् । तदनुग्रहविशेषं वारं वारं स्मारं स्मारं तच्चरणनलिनयोः भक्तिपूर्वकमनन्तप्रणामान् समर्पयामः ।

मुद्रणोपयुक्तप्रतिकृतिनिर्माणार्थं श्रीसोदामठपीठाधिष्ठित-श्रीबृन्दावनाचार्यहस्तलिखितताल-पत्रमयलघ्वामोदव्याख्यानपुस्तकप्रदानेनाधुना तत्पीठालंकृताः श्री श्री विश्वोत्तमतीर्थाः महान्तमुप-कारमादधुः । अतस्तेषामनन्तप्रणामानर्पयामः ।

एवं नञ्जनगूडु श्रीसुशीलेन्द्रतीर्थनामाङ्कितपुस्तकालयस्थहस्तलिखितग्रन्थदानेन श्रीमद्भिः राजा गुरुराजाचार्यैः कृतमुपकारं न कदापि विस्मरामः ।

मुद्रणोपयुक्तहस्तलिखितप्रतिकृतिनिर्माणकार्यनिर्वाहणावसरे तल्लेखनकार्यसहकारवर्तृणां मुद्रित-भागसंशोधनादिकर्तृणां सहृदयानां पण्डितवरेण्यानां श्री एस्. वि. भीमभट्टमहाशयानां तथा भागशः हस्तलिखितप्रतिकृतिविधायिनाञ्च विदुषामादवानि श्री राघवेन्द्राचार्याणाञ्चोपकारभरमविस्मरणीयं मन्यामहे। तेभ्यश्चानन्तधन्यवादान् वितरामः।

एतद्ग्रन्थरत्नमुद्रणकार्ये सर्वाङ्गसुन्दरं कृतवद्भ्यः प्रभामुद्रणालयाधिकारिभ्यः श्री डि. एस्. कृष्णाचार्येभ्यः तत्पुत्रवर्य चि. वासुदेवाय च कृतज्ञतां प्रदर्शयामः।

इति

मन्त्रालयः श्रीमदानन्दतीर्थभगवत्पादाचार्यादिगुरुवृन्दकृपाकांक्षिणः

२०-१-१९९१ **मागडि रङ्गनाथाचार्याः**

# लघ्वामोदव्याख्यानसमलंकृतन्यायामृतग्रन्थस्य विषयानुक्रमणिका

## ॥ प्रथमपरिच्छेदः ॥

## ॥ द्वितीयपरिच्छेदः ॥

## ॥ तृतीयपरिच्छेदः ॥



## ॥ चतुर्थपरिच्छेदः ॥

|| श्रीः ||

पद्वाक्यप्रमाणपारावारपारीणसर्वतन्त्रस्वतन्त्र-

श्रीमद्व्यासराजगुरुसार्वभौमविरचितं

# श्रीमन्न्यायामृतम्

पदवाक्यप्रमाणपारावारपारीणचतुःषष्टिकलाप्रवीण-

सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रयतिवरेण्यविरचित-

लघ्वामोदव्याख्यानविजृम्भितम्

---

## श्रीमन्न्यायामृतम्

### प्रथमः परिच्छेदः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

हरिः ॐ

निखिलगुणनिकायं नित्यनिर्धूतहेयं
शुभतममतिमेयं शुद्धसौख्याप्त्युपायम् ।
सकलनिगमगेयं सर्वशब्दाभिधेयं
नवजलधरकायं नौमि लक्ष्मीसहायम् ॥ १ ॥

---

लघ्वामोदव्याख्यानम्

श्रीवेदव्यासाय नमः । हरिः ॐ ।

स्तम्भाज्जम्भारिशैलादिव दिवसकरः प्रोज्जिहानस्त्रिलोकी-
ग्रासव्यासक्तनक्तञ्चरवरतिमिरारिप्रमुष्टिन्धयश्रीः ।
शाकाद्यादित्यचक्रप्रभयहरकरः[1] क्रूमपद्मानुपङ्गः
सिंहः प्रह्लादमोदी स हरतु दुरितं रंहसा प्रहसाख्यः ॥ १ ॥

---

[1] प्रभवभयकरः इति पाठः ।

चीर्णपुण्यजनोपास्यं पूर्णबोधेष्टदैवतम् ।
अर्णवं गुणरत्नानां तूर्णं नौमि रमेश्वरम् ॥ २ ॥

तं पाणिपल्लवं बाहुशाखं सद्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पद्रुमं भजे ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ४ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ५ ॥

रमावराख्याम्बुजराजहंसोल्लसत्कथाश्रोत्रकलापदं तम् ।
कुवादिराट्कुञ्जरशीर्षभेदे हरिं भजे व्यासमुनिं मुनीन्द्रम् ॥ ६ ॥

मूकोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोः स्तोत्रं कारं कारं भजे गिरम् ॥ ७ ॥

श्रीमन्मध्वमताख्यदुग्धजलधेर्धीमन्दरेण क्रमै-
रामथ्योद्धृतमर्पितं च गुरुभिर्न्यायामृतं यत् पुरा ।
सौवर्णे चषके महीसुरततेर्मोदाय तस्यादरादा-
मोदं सुमनोगुणैर्विजयिनामिन्द्रः करिष्येऽधुना ॥ ८ ॥

व्याख्यानव्याजतोऽन्योक्तदूषणानामलग्नताम् ।
प्रदर्श्य गुरुपादोक्तिमहिमाथ[1] प्रकाश्यते ॥ ९ ॥

प्रारिप्सितग्रन्थविघ्नविघाताद्यर्थं शिष्टाचारानुमितवेदबोधितकर्तव्यताकं विशिष्टेष्टाधिकृत-देवतानुतिरूपं मङ्गलमादावाचरति ॥ निखिलगुणनिकायमिति ॥ लक्ष्म्या अपि सकलवाङ्मनस-देवतात्वेन तन्नुतेरावश्यकत्वात्, भगवत्पारतन्त्र्येणैव तत्करणस्येष्टत्वमभिप्रेत्याह ॥ लक्ष्मीसहाय-मिति ॥ लक्ष्म्याः पतित्वेन सहायमित्यर्थः । लक्ष्मीं संपदं सहत इति लक्ष्मीसहः, अयः शुभावहो विधिः, आयः आदायो वा तत्वज्ञानं वा यस्मात्तं तथोक्तमिति वार्थः । अत्र सहत इति सहपदं पृथगेव संस्कर्तव्यम् । अनेन द्वितीयतृतीयव्याख्यानयोः श्रीकृष्णस्य रामस्य वा सम्पदविरोध्य-यादिप्रदत्वं विभावितं द्रष्टव्यम् । सर्वस्य भगवद्रूपस्य नन्तव्यत्वेऽपि नित्यनियतोपासनाविषयत्वेन

[1] महिमात्रेति पाठः ।

शीघ्रोपस्थितत्वात्, श्रीरामलक्षणस्य श्रीकृष्णलक्षणस्यैव वा तद्रूपस्य प्रकृते तदिति भावेनाह ॥ नवजलधरकायमिति ॥ नवजलधरवत् कायो देहो यस्य सः तं तथोक्तम्। ननु नुतेर्गुणिनिष्ठ-गुणाभिधानरूपतया वस्तुतो निर्गुणस्य नुतिरनुपपन्ना। कथंचिदुपपन्नाप्यसदादिविषयनुतिवदेवा-सत्या स्यादित्यत आह ॥ निखिलगुणनिकायमिति ॥ सकलगुणनिवासमित्यर्थः। यत्किञ्चिद्गुण-सत्वेऽप्युपपन्ना नुतिरनेकगुणसत्वे असत्यत्वानुपपन्नत्वशङ्कामेव नार्हतीति भावः। निपूर्वाच्चिनोते-र्निवासार्थे निवासचितिशरीरोपसमाधानेष्वादेश्च कः (३-३-४१) इति सूत्रेण घञि सति धात्वादेश्च कादेशे निकायशब्दः। यद्यपि निवासार्थे पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामि-धेनीष्विति (३-१-१२९) सूत्रेण निकाय्यशब्दोऽपि व्युत्पादितः। अत एव निकाय्यनिलयालया इति निघण्टावपि निकाय्यशब्दोपादानम्। तथापि प्रत्ययभेदमादाय निकायशब्दो व्युत्पन्नः। अत एव स्यान्निकायः पुञ्जराशी इति निघण्टौ निकायशब्दस्याप्युपादानम्[1]। अनेन प्रथमाध्यायार्थो दर्शितः। नन्तव्यत्वप्रयोजककल्याणगुणाढ्यत्वेन विशिष्टत्वं च। लोकवेदयोः कल्याणगुणाढ्यस्यैव विशिष्टत्वात्। ननु गुणशब्देन दुःखादिष्वपि वैशेषिकादीनां अविगीतव्यवहारदर्शनात् तद्वत्तया प्रतिपादनस्यानुचितत्वात् कथं तादृशधर्मानादाय नुतिरुपपन्ना? नहि लोके असौ दुःखी दुष्टः इत्याद्युक्तिभिर्नुतिरित्यत[2] आह। नित्यनिर्धूतहेयमिति। नित्यं सदा निर्धूतं तिरस्कृतं हेयं दुःखादि येन सः तं तथोक्तम्। एतद्विशेषणसमभिव्याहारात् निखिलगुणनिकायमित्यत्र गुणशब्द उपादेयधर्ममात्रपरोऽवसीयत इति। यद्वा लोके गुणाढ्यस्यापि दोषवत्त्वे निन्दाया अपि दर्शनात् किमसावपि तथेत्यत आह ॥ नित्यनिर्धूतहेयमिति ॥ सर्वदा दोषगन्धविधुरमित्यर्थः। तथाच भगवान् सर्वदा स्तोत्रपात्रमेव नतु कदापि निन्दापात्रमिति भावः। अथवा यत्र गुणास्तत्र दोषाणामप्युपलम्भात्, किमसावपि दोषवानित्या[3]शङ्कायामाह ॥ नित्यनिर्धूतहेयमिति ॥ ननु रामकृष्णाद्यवतारेषु छेदभेदादिदोषाणामपि दर्शनात् नित्यनिर्धूतहेयत्वमेवासिद्धमित्यत आह ॥ शुभतममतिमेयमिति ॥ शुभतमा निर्दुष्टा मतिर्दर्शनं येषां ते शुभतममतयः। तैर्मेयम्। यद्वा शुभतमा दोषरहिता या मतिस्तया मेयमित्यर्थः। अत्र पक्षे मेयमित्यत्र धातुः प्रत्ययमात्रानुग्रहार्थः। यद्वा शुभतमानां या मतिः तया मेयमित्यर्थः। यद्यपि रामकृष्णादिभगवदवतारेषु छेदभेदादिदोषाः दुष्टमतिभिर्दृष्टाः। तथापि शुभतममतिभिस्ते न दृष्टा इति न तस्य नित्यनिर्धूतहेयत्वमसिद्धमिति भावः। नहि दुष्टबुद्धिविषयोऽर्थः सिद्ध्यति। दोषजन्यबुद्धीनां तु भ्रमत्वनियमादिति। अनेन सोपपत्तिर्द्वितीयाध्यायार्थो दर्शितः। अत एव निखिलगुणनिकायः नित्यनिर्धूतहेयत्वादेवासौ लोक-

[1] निखिलगुणानां राशिरिति वा अर्थः। [2] इत्युक्तिर्नुतिरिति पाठः। [3] इति शङ्कायामिति पाठः।

विघ्नौघवारणं सत्याशेषविश्वस्य कारणम् ।
करुणासिन्धुमानन्दतीर्थबन्धुं हरिं भजे ॥ २ ॥

वेदयोः शुभतम इत्युच्यत इति वाह ॥ शुभतममिति ।। अत्र पक्षे शुभतममिति पदविभागः । नन्वेवंभूतः पुमानेव लोकेऽप्रसिद्ध इत्यत आह । अतिमेयमिति । मेयशब्देन क्षराक्षरशब्दार्थौ गृह्येते । तावतिक्रान्तमित्यर्थः । तथाच क्षराक्षरविलक्षणत्वाज्जगज्जन्मादिकारणत्वादिकल्याणगुण-विशिष्टो दुःखादिदोषरहितश्च भगवानलौकिक इति तदप्रसिद्धिमात्रमकिञ्चित्करमिति भावः । अनेन तृतीयाध्यायार्थोऽपि दर्शितः । ननु तस्य खलु प्रेक्षावता पर्वतादि(पर)व्यावृत्ता नुतिः क्रियते यस्तया प्रसीदति प्रसन्नश्चाभीष्टदः । नचासौ जलधरकायस्तादृशः येन तथाविधनुति-विषयः स्यादित्यत आह ॥ शुद्धसौख्याप्त्युपायमिति ।। सुखमेव सौख्यम् । स्वार्थे ष्यञ्प्रत्ययः । तस्य शुद्धत्वं सान्तत्वसातिशयत्वदुःखसंभिन्नत्वादिराहित्यम् । शुद्धस्य सौख्यस्याप्तौ प्राप्तावुपाय-मित्यर्थः । यद्वा शुद्धः प्रत्यवायानापादकः सौख्याप्त्युपायः श्रवणादिभगवत्प्रसादपर्यन्तः सुखोपायः । मुक्त्युपाय इति यावत् । स यस्मात्तं तथोक्तम् । यद्वा शुद्धं परिच्छेदादिदोषरहितं सौख्यं यस्यासौ शुद्धसौख्यो भगवान् । तस्याप्तौ प्राप्तावुपायं तत्स्वरूप(मेवेत्यर्थः)भूतमेवेत्यर्थः । अत्र (यद्यप्यत्रेति पा.) यद्यपि स्त्रियां क्तिन् इति प्रत्ययः गुरोश्च हलइत्यप्रत्ययेन बाध्यते । तथापि क्तिन्नावादिभ्य इति वार्तिकेन[1] क्तिन्प्रत्यये आप्तिरिति रूपं (साध्विति पा.) सिद्ध्यतीति द्रष्टव्यम् । अनेन चतुर्थाध्यायार्थो दर्शितः । (नन्वेवंविधो इति पा.) नन्वेवंभूतो भगवान् प्रत्यक्षत उपजीव्यानुमानगम्यश्चेत्तथोपलभ्येत वह्न्यादिवत् । नचोपलभ्यते । तस्मान्न तथाविधोऽस्तीत्यत आह ॥ सकलनिगमगेयमिति ।। वेदवेदाविरोधिसकलसदागमैर्गेयम् । तत्तदुपजीविमात्रप्रमाणक-मित्यर्थः (तत्तदुपजीव्यनुमानप्रमाणकमित्यर्थः इति पा.) । तथाच नोक्तदोष इति भावः । ननु-शब्दमात्रावाच्यस्य निगमगेयत्वमेवानुपपन्नम् । सकलनिगमगेयत्वं तु सुतराम् । न च लक्षणया तदुपपन्नम् । वाच्यत्वरहिते प्रत्यक्षाद्यगोचरे च लक्षणाया एवायोगात् । न ह्यनुपस्थिते लक्षणा-वृत्तिकल्पनं दृष्टचरमित्यत (इत्याशङ्कयाहेति पा.) आह ॥ सर्वशब्दाभिधेयमिति ।। सकलवैदिक-शब्दवाच्यमित्यर्थः । यद्वा निखिलगुणनिकायत्वे निगमं प्रमाणयित्वा अपर्यायानन्तशब्दवाच्यत्वा-न्यथानुपपत्तिं च प्रमाणयितुमाह ॥ सर्वशब्दाभिधेयमिति ।। नचापर्यायानन्तशब्दवाच्यत्वं प्रवृत्तिनिमित्तभूततावद्धर्मव्यतिरेके संभवतीति तदन्यथानुपपत्तिः सर्वशब्दाभिधेयत्वरूपविशेषणेन सूचितेति द्रष्टव्यम् ॥ १ ॥

[1] निष्ठायां सेट इति वाच्यमिति (वा. २२०८) वार्तिकेन इति पाठः ।

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ३ ॥
चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ४ ॥

---

श्रेयांसि बहुविघ्नानि भवन्ति महतामपीत्यादेः संभावितानेकविघ्नवारणस्यानेकमङ्गलं विनानुपपत्तेः तमेव हरिशब्दापरपर्यायं कृष्णं रामं वा पुनर्भजते ॥ विघ्नौघवारणमिति ॥ अनेन विघ्नवारणाक्षमस्य भजनं कृतमपि न तद्वारणस्येष्ट इति शङ्का निरस्ता । विश्वशब्दस्य संकोचे बाधकाभावमभिप्रेत्याह ॥ अशेषेति ॥ वक्ष्यमाणार्थमुपक्षिपति ॥ सत्येति ॥ कारणमित्युपलक्षणम् । पालकं नाशकं चेत्यपि बोद्धव्यम् । एतेन हरिः जगत्पालनमात्रव्यापारकत्वात् तत्सृष्टिमात्रव्यापारक चतुर्मुखब्रह्मवत् तत्संहारमात्रव्यापारकरुद्रवच्च गुणभूतमूर्तित्रयान्तर्गत एव न प्रधानभूतेश्वर इति शंका निरस्ता । अयमर्थोऽस्माभिः परतत्वप्रकाशिकायां न्यायमौक्तिकमालायां च सप्रपञ्चमुपपादितस्तत एवानुसन्धेयः । ननु हरेरशेषविश्वकारणत्वेन विघ्नौघवारणसमर्थत्वेऽपि अस्मदादि विघ्नवारणे किमर्थं प्रवर्तते अत आह ॥ करुणासिन्धुमिति ॥ निरुपाधिकपरदुःखप्रहाणेच्छा करुणा तया सिन्धुरिव तं तथोक्तम् । अनेन कारुणिकानां प्रवृत्तिर्न प्रयोजनमपेक्ष्य भवति किन्तु स्वभावादेवेति विभावितम् । हरेरस्मदाचार्यबन्धुत्वादपि सम्बन्धद्वयादस्मच्छ्रेयःप्रतिबन्धकविघ्नवारकत्वमवर्जनीयमिति सूचयितुमाह ॥ आनन्दतीर्थबन्धुमिति ॥ २ ॥

विविधतापग्रस्तस्य पुंसः कुशलकर्मसु सुखेन प्रवृत्त्ययोगात् तत्परिहारस्य महातीर्थसेवयापि संभवात् तदर्थमितरतीर्थापेक्षया स्वसेव्यानन्दतीर्थस्य वैलक्षण्यमुपवर्णयन् तं भजते ॥ अभ्रममिति ॥ अत्र सदेत्यस्य सर्वविशेषणैर्भज इत्यनेन चावृत्त्या तन्त्रन्यायेन संबन्धो द्रष्टव्यः । अत्रेतरतीर्थपक्षे भ्रमशब्द आवर्तवचनः । आनन्दतीर्थपक्षे तु मिथ्याज्ञानवचनः । भङ्गरहितमित्यत्रेतरतीर्थपक्षे भङ्गशब्दस्तरङ्गवाची । आनन्दतीर्थपक्षे पराभववाची । अजडमित्यत्र तत्पुरुषो द्रष्टव्यः । विमलमित्यत्र पङ्कः पापं च मलशब्दार्थः । विग्रहश्च विगतं मलं यस्मात्तं तथोक्तमिति । अतुलमित्यत्र तुलाशब्दः सादृश्यपरः । इतरतीर्थस्य तीर्थान्तरसादृश्यमस्तीति तद्राहित्येनानन्दतीर्थस्य ततोऽपि विशेषः । अत एव च तापत्रयापहमिति विशेषणं युक्तम् । तापत्रयमाध्यात्मिकादित्रयमपहन्तीति विग्रहः ॥ ३ ॥

नन्वाचार्यवाचामतीवगम्भीरत्वाद्यथावदर्थावगतौ तदनुसारिग्रन्थकरणोपयुक्तमङ्गलानुष्ठानं युक्तम् । नहि तावन्मात्रमेव ग्रन्थकरणसामग्री । यथावदर्थावगमं विना तन्निर्वाहायोगादित्यत

समुत्सार्य तमःस्तोमं सन्मार्गं संप्रकाश्य च ।
सदा विष्णुपदासक्तं सेवे ब्रह्मण्यभास्करम् ॥ ५ ॥

---

आह ॥ चित्रैरिति ॥ चित्रैर्व्याकरण[1]संस्कृतैर्नानाविधैः स्वभावत एव मत्तमरालवन्नानाविधैश्च पदैः सुप्तिङन्तलक्षणशब्दविशेषैश्चरणविन्यासविशेषैश्च वाक्यैः आकाङ्क्षादिमत्पदकदम्बकैः रहः-कृतसंकेतोपस्थापकवचनविशेषैश्च । मानैः प्रत्यक्षादिप्रमाणैरीर्ष्यापूर्वकाभिमानैश्च । अखण्डितैः कुयुक्तिपांसुभिरशक्याच्छादनैः स्वप्रतिज्ञानुसारेण प्रणिपातपर्यन्तव्यापारापादकैश्चेति मान-विशेषणम् । गुरुभावमाचार्याभिप्रायमात्मनो महत्त्वं च व्यञ्जयन्ती स्फोरयन्ती श्रीजयतीर्थवाक् श्रिया जयलक्ष्म्या युक्तो यो जयतीर्थः आचार्यग्रन्थटीकाकारो जयतीर्थनामा मुनिस्तस्य वाक् न्यायसुधादिरूपो ग्रन्थविशेषः । ममेति शेषः । भाति स्फुरति । अत्राप्रस्तुतरमण्याःगम्यमानत्वात् समासोक्तिरलंकारः । तथाचोक्तैरेतादृशोपायैः साभिप्रायाचार्यग्रन्थार्थस्फोरकैः न्यायसुधादिरूपै-रवगततदर्थस्य मम तदनुसारिग्रन्थकरणोपयुक्तमङ्गलानुष्ठानं नायुक्तमिति भावः । अनेन जयतीर्थनाम्नो मुनेः मद्देशिकस्य व्यासमुनेश्च पदवाक्यप्रमाणाभिज्ञत्वं विभावितम् । अत्र यद्यपि पदस्य वाक्यस्य च वाक्यत्वेनाभेदात् न तयोर्वाचो गुरुभावव्यञ्जकत्वे साधनत्वं युक्तम् । एक क्रियायामेकस्यैव कर्तृत्वसाधनत्वयोरयोगात् । तथापि वाक्शब्दार्थभूतस्य न्यायसुधादिग्रन्थ-विशेषस्य पदवाक्यसमुदायरूपत्वात् समुदायसमुदायिनोश्च भेदात् तस्य तयोश्च कर्तृत्वेन साधनत्वेन चोपादानं युक्तमिति[2] बोध्यम् ॥ ४ ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥

इति स्मरणात् तत्प्रतिपन्नफलस्य प्रकृतकर्मण्यवश्यापेक्षितत्वात् तस्य वृद्धसेवां विनाऽसम्भवात् वृद्धेष्वपि ज्ञानवृद्धस्यैवाभ्यर्हितत्वात् स्वसेव्यब्रह्मण्यमुनेर्गुरुत्वोपयोगिता[3]दृग्वृद्धत्वं स्फोरयन् तं भास्करत्वेन रूपयन् सेवते समुत्सार्येति । अत्र तमःशब्देनाज्ञानान्धकारौ विवक्षितौ तयोरुभयोरपि प्रकाशशब्दार्थभूतज्ञानालोकविरुद्ध[4]त्वात् । सन्मार्गशब्देन गतिमुक्त्युपायौ विवक्षितौ, तयोश्च सत्वं गतिज्ञानप्रतिबन्धककण्टकाद्यवरुद्धत्वसदाचार्योपदिष्टत्वराहित्यम् । संप्रकाश्येत्यत्र प्रकाश-शब्देन ज्ञानालोकौ । ज्ञानं जनयित्वा मार्गज्ञानोपायालोकं तत्र प्रसार्य चेत्यर्थः । सदा विष्णुपदा-

---

[1] संस्कारैरिति पाठः ।
[2] नायुक्तमिति पाठान्तरम् ।
[3] तादृक्त्वं स्फोरयन्निति पाठान्तरम् ।
[4] विरोधित्वादिति पाठान्तरम् ।

ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः ।
लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून्मम ॥ ६ ॥
श्रीमध्वशास्त्रदुग्धाब्धिं धीमन्दरमहीभृता ।
आमथ्योद्ध्रियते न्यायामृतं विबुधतृप्तये ॥ ७ ॥

---

सक्तत्वकथनात् प्रसिद्धभास्करस्य तन्नेति विभावितम् । सदेत्यस्य सेवे इत्यनेनापि सम्बन्धः । सदा विष्णुपदासक्तमित्यनेन ब्रह्मण्यभास्करस्य सदा सेव्यत्वे प्रयोजकमुक्तमिति द्रष्टव्यम् ॥ ५ ॥

यस्य देवे परा भक्तिरिति श्रुतेर्गुरुतमगुरुतरगुरुक्रमेण तद्वन्दनस्य महाफलहेतुत्वं निश्चिन्वन् गुरुत्वप्रयोजकधर्मपुरस्कारेणेदानीं विद्यागुरून् वन्दते ॥ ज्ञानवैराग्येति ॥ ज्ञानवैराग्यादीनां कल्याणत्वं मुक्त्युपायत्वादिकं द्रष्टव्यम् । अत्रादिशब्देन निरुपाधिकपरदुःखप्रहाणेच्छारूपदयादयो ग्राह्याः । शालिन इति मत्वर्थीयः प्रत्ययः । लक्ष्मीनारायणमुनीनित्यत्र लक्ष्मीनारायणा(ख्य)मुनयः लक्ष्मीनारायणमुनय इति विगृह्य एकशेषः । तथाचायमर्थः । लक्ष्मीनारायणे लक्ष्मीविशिष्टनारायणे ये मननशीलास्तान् लक्ष्मीनारायणा(णनामक)ख्यान् मुनीनिति । अनेन (लक्ष्मीनारायणाख्यमुनीनित्यनेनेति पाठान्तरम् ) पूर्वविशेषणोपात्तज्ञानभक्त्योः लक्ष्मीनारायणविषयत्वं सूचितम् । यद्विषयंमन नं तेन तद्विषयज्ञानस्यैव संपादनसामर्थ्यात् यत्र ज्ञानंतत्रैव विषये भक्तेः सम्भवादिति ॥ ६ ॥

प्रेक्षावदुपादेयताप्रयोजकप्रामाणिकशास्त्रमूलत्वं स्वग्रन्थस्य प्रतिपादयन् संज्ञाविशेषकरणे निमित्तममृतसादृश्यं च प्रतिपादयन् तत्संज्ञोक्तिपूर्वकं शिष्यमनःसमाधानाय स्वचिकीर्षितं प्रतिजानीते ॥ श्रीमध्वशास्त्रेति ॥ अत्र श्रीशब्देन वेदत्रयं गृह्यते । "ऋचःसामानि यजूंषि सा हि श्रीरमृता सतामिति" श्रुतेः । तथाच श्रिया युक्तं मध्वशास्त्रं श्रीमध्वशास्त्रमिति मध्वशास्त्रं श्रीयुक्तत्वेन विशिंषता मध्वशास्त्रस्य ऋग्यजुःसामवेदमूलकत्वसूचनात् तच्छास्त्रप्रतिपादितार्थानां परमप्रामाणिकत्वं सूचितम् । अनेन स्वग्रन्थस्य मध्वशास्त्रमूलत्वोक्त्या तस्य ये विषयप्रयोजने ये च तत्राधिकारिणः ते एव विषयप्रयोजने त एवाधिकारिण इति सूचनात् तद्वत्त्वरूपप्रेक्षावदुपादेयतालक्षणारम्भणीयताप्रयोजकं रूपं सूचितमिति[1] द्रष्टव्यम् । अत्र मध्वशास्त्रस्य दुग्धाब्धित्ववर्णनेन धियो मन्दरत्ववर्णनेन स्वग्रन्थ[2]स्यामृतत्ववर्णनेन श्रोतॄणां विशेषेण बुध्यन्त इति विबुधा इति व्युत्पत्त्या विबुधत्वप्रतिपादनेन च मध्वशास्त्रदुग्धाब्धेर्न्यायामृतोद्धर्तुर्दुग्धाब्धेर्मन्दरपर्वते-

---

[1] समुचितमिति पाठान्तरम् (ख) [2] अस्य ग्रन्थस्य (ग)

विक्षिप्तसङ्ग्रहात् क्वापि क्वाप्युक्तस्योपपादनात् ।
अनुक्तकथनात् क्वापि सफलोऽयं श्रमो मम ॥ ८ ॥

नामध्य विबुधतृप्तये अमृतोद्धर्त्रा नारायणेन स्फुटसादृश्यज्ञापनात् तदधीनचेष्टकत्वाच्च तत्प्रतिबिम्बत्वं सूचितमिति बोध्यम् । अत्रामथ्येत्यस्यालोड्य विचार्य सम्यङ्मथित्वेति चार्थः ॥ ७ ॥

ननु प्रसिद्धेषु प्राचीनप्रबन्धेष्वेवैतद्ग्रन्थप्रतिपाद्यार्थस्य[1]प्रतिपादनात् तैरेव कृतकार्योऽसौ न्यायामृतग्रन्थो विफलत्वान्नारम्भणीय इत्याशङ्क्याह विक्षिप्तेति । क्वापि प्राचीनग्रन्थेषु विक्षिप्तानां भिन्नभिन्नप्रदेशेषु प्रतिपादितानामर्थानां संग्रहात् राशीकृत्यनिरूपणात् क्वापि प्राचीनग्रन्थेषु[2] स्वरूपेणोक्तस्यानुपपादितस्योपपादनात् उपपत्तिपूर्वकनिरूपणात् । उक्तस्येत्येकवचनमविवक्षितार्थम् । अत्रैव तत्र बहूनां सिद्धान्त्यभिप्रेतानामप्यर्थानामनुपपादनात् (अनुपादानादिति पाठान्तरम् )। क्वापि च तेष्वनुक्तानामपि कथनाच्चायं श्रमः न्यायामृताख्यनूतनग्रन्थनिर्माणप्रयासः सफल इति । नचानुक्तकथनादित्ययुक्तं, पूर्वाचार्यैः प्राचीनप्रबन्धेषु कथनीयस्य सर्वस्याप्यर्थस्य कथनात्, अन्यथा तत्र तेषामज्ञानप्रतिपादनं पर्यवसितं स्यादिति वाच्यम् । ज्ञानिनामप्युक्तिवैमुख्यदर्शनात् । तदभावेऽपि ज्ञातस्य सर्वस्योक्तिनियमाभावाच्च । अस्मदादिष्वपि ज्ञातसर्वार्थानुक्तेरनुभवसिद्धत्वाच्च । अन्यथा तस्य तदज्ञानप्रतिपादनपरत्वे अज्ञातकथनात् क्वापीत्येव ब्रूयात् । तस्माद्यत्किञ्चिदेवैतत् ॥ ८ ॥

प्रसङ्गादशेषविश्वस्य सत्यत्वं स्थापयितुं तद्विरोध्यर्थमुपक्षिपति ॥ ननु मिथ्यैव विश्वमिति ॥ आक्षेपिक्येवात्र संगतिरित्यप्याहुः । अत्र विशेषणसंगतैवकारेण विशेष्ये विशेषणायोगव्यवच्छेदव्युत्पत्त्येन विश्वस्मिन् दैशिककालिकमिथ्यात्वायोगो व्यवच्छिद्यते । तेन विश्वं मिथ्यैव नतु किञ्चिदपि कचिदपि सत्यमपीत्यर्थः । केचित्तु विश्वत्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपस्य द्वित्वादिवद्व्यासज्यवृत्तितया विश्वपदार्थैकदेशभूते घटादिमात्रे पर्याप्त्यभावाद्विश्वं मिथ्येत्येच प्रतिज्ञायामपि न तदेकदेशे तत्र मिथ्यात्वरूपसाध्यसिद्धिमादाय प्रतिज्ञापर्यवसानं किन्तु तत्पर्याप्त्यधिकरण एव । तथा चैवकारस्य प्रयोजनान्तरमन्वेषणीयमिति वदन्ति । तन्न । तादृशविश्वत्वस्य ब्रह्मण्यपि सत्त्वेन तदंशे प्रतिज्ञावाक्यस्य बाधितार्थत्वप्रसक्तौ तत्परिहाराय तद्व्यतिरिक्तस्यैव विश्वपदार्थस्य पक्षत्वमिति संकोचस्यावश्यकत्वे तथैव किं विश्वपदार्थभूते ततोऽन्यत्रापि संकोचः किं वा नेति शङ्कानिरासायैव एवकारस्यावश्यकत्वात् । अत एव सत्याशेषविश्वस्य कारणमित्यत्र कारणपदसमभिव्याहारेण हरिव्यतिरिक्तविश्वपरत्वेनेव तदन्यपरत्वेनापि विश्वपदस्य संकुचि-

[1] प्रतिपाद्यार्थस्यापि (ख)   [2] प्रबन्धेषु (पा.)

ननु मिथ्यैव विश्वं तथाहि तत्र विप्रतिपत्तिः। ब्रह्मप्रमान्येन वा सप्रकारेण वा अबाध्यत्वे सति असद्विलक्षणत्वे सति ब्रह्मान्यत् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा

---

तार्थत्वप्रसक्तौ तत्परिहारायाशेषपदमुपात्तम् । तथाच मिथ्यैवेति विशेषणसंगतैवकारः ब्रह्ममिथ्यात्वस्य प्रमाणबाधितत्वात् प्रकृते विश्वपदं सत्याशेषविश्वस्य कारणमित्यत्रेव तद्व्यतिरिक्तप्रामाणिकपदार्थमात्रपरमिति ज्ञापनायेति न तस्य प्रयोजनान्तरमन्वेषणीयमिति ।

विचाराङ्गभूतां विप्रतिपत्तिं दर्शयति ॥ तत्रेति ॥ विश्वमिथ्यात्व इत्यर्थः ॥ ब्रह्मेति ॥ नचात्र प्रमेति व्यर्थम् । प्रातिभासिकरजतादेर्नेदं रजतमित्यादिना ब्रह्मज्ञानान्येनैव बाध्यतया तस्य पक्षत्वाप्रसक्त्या तदंशे सिद्धसाधनत्वस्यैवाप्राप्तेरिति वाच्यम् । सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थित इति परेण प्रत्ययमात्रस्य ब्रह्मज्ञानत्वाभ्युपगमेन नेदं रजतमित्यादिबाधकज्ञानस्यापि ब्रह्मज्ञानत्वेन शुक्तिरूप्यादेरपि तदन्यदण्डाद्यनिवर्त्यत्वेन प्रसक्तपक्षत्वनिवृत्त्यर्थं प्रमेत्यस्यावश्यकत्वात् । ननु तथापि ब्रह्मवृत्तिधर्मप्रकारकं ज्ञानं चेद्ब्रह्मप्रमा तदा बाधस्यापि कचित्तथात्वात् प्रातिभासिकविशेषांशे सिद्धसाधनतादवस्थ्यम् । ब्रह्ममात्रवृत्तिधर्मप्रकारकज्ञानं चेद्ब्रह्मप्रमापदेन विवक्षितं तदा ब्रह्ममात्रवृत्तित्वं हि ब्रह्मेतरावृत्तित्वे सति तद्वृत्तित्वमिति स्यात् तथाच तद्वृत्तित्वमधिकम् । न च तदपि विवक्षितं तथापि(च) ब्रह्मेतरावृत्तिधर्मप्रकारकज्ञानान्यचरमवृत्तिबाध्यत्वस्य पक्षे सत्वेन तद्बाध्यत्वस्यासिद्धतयाऽऽश्रयासिद्धेः । निरुक्तपक्षतावच्छेदकशरीरप्रविष्टसप्रकारकाबाध्यत्वस्यैव तदवच्छेदकत्वसमर्थत्वे(न) पूर्वदलवैयर्थ्याच्च । किञ्चैवं(मतीत) घटादेरपक्षत्वप्रसङ्गः। तस्य ब्रह्मेतरावृत्तिधर्मप्रकारकान्यनिष्प्रकारकदण्डादिनिवर्त्यत्वादिति चेन्न । ब्रह्मप्रमान्येनाबाध्यत्वे सतीत्यनेन ब्रह्मावृत्त्यप्रकारकान्यनिष्ठविरोधिविषयत्वावच्छिन्ना च या कारणता तन्निरूपितकार्यताश्रयनिवृत्त्यप्रतियोगित्वे सतीत्यस्य विवक्षितत्वात् । अत्र प्रपञ्चस्य विरोधिविषयकचरमवृत्तिबाध्यत्वेनाश्रयासिद्धिवारणाय ब्रह्मावृत्त्यप्रकारकान्यनिष्ठेति । उत्तरज्ञाननिवर्त्यपूर्वज्ञानादीनामीश्वरज्ञाननिवर्त्यघटादीनां च पक्षत्वसिद्धये विरोधिविषयत्वावच्छिन्नेति । शुक्तिरूप्यादिव्यावृत्तये निवृत्त्यप्रतियोगित्वे सतीति । ब्रह्मपदनञ्द्वयगर्भोक्तावच्छेदके गौरवं मन्वान आह ॥ सप्रकारेणवेति । विरोधिविषयत्वावच्छिन्नसप्रकारकनिष्ठकारणतानिरूपितकार्यताश्रयनिवृत्त्यप्रतियोगित्वेसतीत्यर्थः। अत्रापि विशेषणप्रयोजनं पूर्ववदेव द्रष्टव्यम्। वाशब्दोऽत्र पक्षतावच्छेदकद्वयसूचकः। (असति) मिथ्यात्वस्याग्रेतननिरुक्त्यनुरोधेनासद्व्यावृत्तत्वाव्यावृत्तत्वाभ्यामंशतोबाधांशतःसिद्धसाधनयोरन्यतरवारणायासद्विलक्षणत्वे सतीति । ब्रह्मण्येवांशतो बाधवारणाय ब्रह्मान्यदिति । न च पक्षतावच्छेदकनिरुक्तिद्वयेऽपि असद्विलक्षणत्वे सतीति व्यर्थम् । असतः पक्षत्वस्यैवा-

संभवात्। अन्यथा तस्य सविशेषत्वापातेनासत्त्वव्याघातात्। सति च व्याघाते पक्षत्वशङ्काया एवानुदयात्। व्याघातावधित्वाच्छङ्कायाः। किञ्च ब्रह्मान्यदितिपदेनैवासतः पक्षत्वव्यावृत्तेर्न तस्य पक्षत्वप्रसक्तिः। ब्रह्मान्यत्वस्य तत्प्रतियोगिकान्योन्याभावाधिकरणत्वरूपत्वात्। असतश्च भावाभावाधिकरणत्वानभ्युपगमादिति वाच्यम्। असतो ब्रह्मप्रतियोगिकभेदानधिकरणत्वे ब्रह्माभेदप्रसङ्गात्। ब्रह्मान्यत्वस्य ब्रह्मप्रतियोगिकभेदसंबन्धरूपत्वेन तदधिकरण(त्व)रूपत्वानभ्युपगमाच्च। असच्छशविषाणं ब्रह्मभिन्नमित्यबाधितविशिष्टप्रतीतिबलेनासतस्तत्प्रतियोगिकभेदेन सिद्धे संबन्धे विशिष्टधीनियामकत्वरूपसंबन्धत्वस्य भेद एव कल्पनाच्च। अन्यथा ध्वस्तो घटो ज्ञात इत्याद्यबाधितविशिष्टप्रतीतिबलेन ध्वस्तघटस्य ध्वंसज्ञानाभ्यां (ध्वंसज्ञानरूपयोः) प्रतियोग्यनुयोगिभावविषयविषयिभावसंबन्धयोरस्वीकारप्रसङ्गः। नचेष्टापत्तिः। ध्वस्तघटस्य ध्वंसप्रतियोगित्वज्ञानविषयत्वयोरभावप्रसङ्गात्। अबाधितविशिष्टप्रतीत्यापि विशेष्यविशेषणसंबन्धासिद्धौ भूतले घट इत्यादितथाविधप्रतीत्या प्रवृत्तस्य प्रवृत्तिसंवादाभावप्रसङ्गात्। ध्वस्तो घटो ज्ञात इत्यादिप्रतीतिविषयस्य ज्ञानस्य घटादिवद्विषयानुल्लेखित्वरूपनिर्विषयत्वापत्तेश्च। एतेनासतः पक्षत्वे सविशेषत्वापातेनासत्वव्याघातात् पक्षत्वशङ्कैव नोदेति, शङ्कायाः व्याघातावधित्वादिति निरस्तम्। वन्ध्यासुतो न वक्ता अचेतनत्वात् घटवदित्यनुमाने असतोऽपि वन्ध्यासुतस्य पक्षत्वदर्शनात्। न्यायदीपावल्यामस्यैव सदनुमानत्वस्वीकाराच्च। किञ्च पक्षत्वं सिषाधयिषितसाध्यसन्देहविषयत्वं वा सिषाधयिषाविरहसहकृतसिध्यभावो वा। उभयथाप्यसतः पक्षत्वानपाय एव। उभयोरपि ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वादिवत् धर्मिसत्वनिरपेक्षधर्मत्वात्। धर्मिसत्वे ध्वंसप्रागभावयोरेवायोगात्। धर्म्यसत्त्वे धर्मासत्त्वनियमस्य[1] धर्मिसत्त्वसापेक्षधर्ममात्रविषयत्वात्[2]। किञ्चासतः पक्षत्वे सविशेषत्वापत्तिरिति कोऽर्थः? किं तस्य धर्मसम्बन्धः स्यादिति? किं वा घटादिवत् प्रामाणिकत्वं स्यादिति? नाद्यः इष्टापादनात्। नहि सतोरेव सम्बन्ध इति नियमोऽस्ति। अन्यथा ध्वंसादिना घटादेः सम्बन्धाभावप्रसङ्गात्। यो गजधर्मस्य सामान्यस्य[3] ज्ञानस्य वा अतीताद्यर्थप्रत्यासत्तित्वाभावापत्तेश्च। नचाविशिष्टधीव्यावृत्तविशिष्टधीनियामकत्वतद्विषयत्वरूपसंबन्धत्वाश्रयस्य द्विष्ठत्वनियमे मानमस्ति। शतशो व्यभिचारात्। घटत्वराद्यनेकाधिकरणकैकाभावे घटपटाद्यनेकाभावाधिकरणे एकस्मिन् भूतलादौ सत्त्वाविशेषेऽपि अबाधितविशिष्टप्रतीत्यविशेषेऽपि च लाघवेन तादृशविशिष्टधीनियामकत्वरूपसम्बन्धत्वस्य तद्विषयत्वरूपसम्बन्धत्वस्य वा एकस्मिन्नभावे एकस्मिन्नधिकरणे कल्पनवत् तथाविधविशिष्टप्रतीतिगोचरयोर्भावाभावयोरेकैकत्वेऽपि लाघवेन

[1] इति नियमस्येति पाठान्तरम्। [2] रूपरसादिवत् बोध्यम्। [3] इदं तु नैयायिकरीत्या।

भाव एव तस्य कल्पनवच्च सदसतोस्तथाविधविशिष्टप्रतीत्यविशेषेऽपि (सत्येव) तादृशसंबन्धकल्पनं युक्तमित्यङ्गीकर्तव्यत्वाच्च । न द्वितीयः । असतोऽपि निषेध्यत्वेन ज्ञेयत्वादिना च प्रामाणिकत्वात् । न च सत्वेन प्रामाणिकत्वं तदर्थः । मिथ्यात्वानुमानादौ पक्षत्वेन त्वदभिमतस्य वियदादिप्रपञ्चस्य ब्रह्मवत् सत्त्वरहितत्वेनापक्षत्वप्रसङ्गात् । नच वियदादेरपि व्यावहारिकसत्त्ववत्त्वेन नापक्षत्वप्रसङ्गः । लाघवेन पक्षत्वे व्यावहारिकपारमार्थिकसत्वादिसाधारणसत्वमात्रस्यैव तन्त्रत्वादिति वाच्यम् । प्रपञ्चः ब्रह्मवत् सन्वा असन्वेति विप्रतिपत्तिदशायां वियदादौ सत्त्वस्यैवासिद्धेः । सत्त्वेन प्रतीतिमात्रस्य विशेषादर्शनदशायां वियदादाविवासच्छशविषाणादावपि सत्त्वेन तस्येव तस्यापि प्रयोजकसत्त्वेन पक्षत्वानपायात् । वन्ध्यासुतो न वक्तेत्यादिपरोदाहृतानुमाने पक्षत्वेनाभिमतस्य वन्ध्यासुतादेरपि सत्त्वेन प्रामाणिकत्वानभ्युपगमाच्च । अत एव न तस्यासत्त्वं व्याहतम् । उक्तसविशेषत्वस्यासत्त्वाविरोधित्वादिति[1] ।

अत्र ब्रह्मप्रमान्येन सप्रकारेण वा अबाध्यत्वे सतीत्यनेन बाधयोग्यतावच्छेदकावच्छिन्नभिन्नत्वस्य विवक्षितत्वात् असञ्जातबाधभ्रमविषयस्य ब्रह्मज्ञानाव्यवहितपूर्वकालीनभ्रमविषयस्य च न पक्षत्वप्रसक्तिः । तयोरागन्तुकदोषजन्यत्वरूपप्रातिभासिकत्वात्मकबाधयोग्यतावच्छेदकावच्छिन्नत्वेन तद्भिन्नत्वाभावात् । अतस्तदंशे न सिद्धसाधनमिति मन्तव्यम् । यद्यप्युभयत्र ब्रह्मासत्प्रातिभासिकान्य(त्व)स्यैव पक्षत्वमिति पर्यवसितम् । तथापि उक्तरीत्योपाधेरसंकरात् पक्षतावच्छेदकद्वित्वानपाय एव । नह्युपधेयसंकरमात्रेणोपाधिसांकर्यमिति द्रष्टव्यम् । यद्यपि सिद्धान्ते शुक्तिरूप्यादेरसत्वात् असद्विलक्षणत्वे सतीति द्वितीयसत्यन्तेनैव प्रथमसत्यन्तप्रयोजनसंपादनात् तस्य वैयर्थ्यम् । तदभावे च्चोपधेयसंकरवदुपाधिसांकर्यस्यावर्जनीयतया पक्षतावच्छेदकद्वित्वज्ञापकवाशब्दोऽनर्थकः । तथापि सिद्धान्तेऽप्यनुभूयमानारोपस्थले स्मर्यमाणारोपस्थल इवारोप्यस्य रजतादेरसत्त्वाभावेन वैशिष्ट्यमात्रस्यासत्त्वेन च तस्य च ब्रह्मज्ञानान्येनाधिष्ठानान्यप्रकारेण च नेदं रजतमित्यादिज्ञानेन बाध्यतया व्यावर्त्यसत्त्वेन प्रथमसत्यन्तमपि न व्यर्थम् । अन्यथा प्रथमसत्यन्ताभावे तदंशे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपप्रथमसाध्यसत्त्वात् सिद्धसाधनत्वप्रसङ्ग इत्येके । वस्तुतस्तु साध्ये सर्वत्रेति प्रतिपन्नोपाधिविशेषणात् सिद्धान्ते अनुभूयमानारोपविषयस्य वैशिष्ट्यस्यैवासत्त्वेन तस्यैवात्यन्ताभावप्रतियोगित्वेन रजताद्यंशे त्रैकालिकनिषेधप्रतियोगित्वस्यैवाभावेन तदंशमादाय न सिद्धसाधनशङ्कावकाशः । किञ्चासद्विलक्षण प्रातिभासिकानिर्वचनीयरजताद्यभ्युपगन्तृमते[2] तदंश एव सिद्धसाधनतावारणाय प्रथमसत्यन्त-

[1] पक्षत्वविषयत्वप्रतियोगित्वादिमत्त्वस्यासत्त्वाविरोधित्वादित्यर्थः । [2] मतेनेति पाठान्तरम् ।

मिति। एतच्च सिद्धान्ते प्रमेयो घट इतिवदुपरक्तबुद्धेरुद्देश्यत्वादुपरञ्जकमेवेदं[1] विशेषणम्। पक्षे उपरञ्जकस्यापि विशेषणस्य दानात्। परमते तु व्यावर्तकमेव। एकस्य प्रथमसत्यन्तरूप-विशेषणप्रयोजनस्याभावेऽप्युक्तरीत्योभयसिद्धप्रयोजनसत्त्वात्तद्वैयर्थ्यमिति द्रष्टव्यम्। ननु तथापि प्रथमसत्यन्तं व्यर्थम्। सिद्धसाधनं हि प्रपञ्चसत्यत्ववादिनोद्भाव्यम्। नहि तन्मतेऽनिर्वचनीयं रजतं प्रसिद्धं येन तदंशे तदुद्भाव्यं स्यात्। नच प्रपञ्चमिथ्यात्ववादिना तदुद्भावनं कर्तुं शक्यम्। सर्वेणापि स्वसिद्धस्यैव विप्रतिपत्तौ परं प्रति साधनादिति चेन्न। ग्रन्थस्य तत्त्व-निर्णिनीषुकथात्वेन तत्र गुरुशिष्यकथारूपे यदानिर्वचनीयरजतादौ मिथ्यात्वं निश्चितवन्तं शिष्यं प्रति गुरुणा ब्रह्मप्रमान्येन सप्रकारेणवेत्यादिपक्षविशेषणमदत्वा असद्विलक्षणं ब्रह्मान्यदित्येव पक्षं निर्दिश्य मिथ्यात्वं साध्यते तदा तदंशे शिष्योद्भावनीयसिद्धसाधनवारकत्वेन तस्यावैयर्थ्योपपत्ति-रिति संप्रदायः। केचित्तु परार्थानुमान इव स्वार्थानुमानेऽपि अंशे सिद्धिरनुमितिप्रतिबन्धिकेति तत्स्थलव्यावृत्तपक्षतावच्छेदकधर्मविशिष्टस्यैव पक्षस्य ज्ञानमनुमित्यङ्गमिति स्फोरणायोभयत्रापि पक्षतावच्छेदके प्रथमसत्यन्तमुपात्तमित्याहुः। ननु किं पक्षतावच्छेदकसाध्यसामानाधिकरण्यमात्र-मनुमिति[2] विषयः। तदवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं वा ? आद्ये नांशतः सिद्धसाधनं किन्तु सिद्धसाधनमेव। अंशतः सिद्धेरेव सिद्धित्वात्। अंशतो बाधस्यादोषत्वापत्तिश्च। अबाधादेव साध्यसिद्धेरप्रयोजकत्वात्। द्वितीयेत्वंशतः सिद्धसाधनं दोष एव न। सामान्यधर्मा-वच्छिन्नसिद्धेरजातत्वात् तद्धर्मावच्छिन्नसिद्धौ तद्धर्मावच्छिन्नसिद्धिविरहरूपपक्षत्वाविरोधात्। एवमंशतो बाधोऽपि न दूषणम्। सामान्यधर्मावच्छेदेन साध्याभावानवधारणात्। नच सामान्य-धर्मावच्छेदेन जातायामनुमितौ तदंशे भ्रमत्वं स्यादिति वाच्यम्। इष्टापादनात्। प्रपञ्च एव मिथ्यात्वप्रमितेरुद्देश्यत्वात्। नचैवमंशतः सिद्धसाधनांशतोबाधयोरदोषत्वप्रसङ्गः। पक्षता-वच्छेदकनानात्वस्थले तद्दोषत्वसम्भवात्। प्रकृते च तदैक्यादितिचेदुच्यते। द्वयी ह्यनुमितिः। एका पक्षतावच्छेदक (साध्य) सामानाधिकरण्यगोचरा। अपरा तदवच्छिन्नसाध्यगोचरा। येन रूपेण पक्षे हेतुज्ञानं तेन रूपेण हेतोः पक्षे साध्यसिद्धेः। हेतुज्ञानं च क्वचित् पक्षतावच्छेदक सामानाधिकरण्येन क्वचित्पक्षतावच्छेदकावच्छेदेनेति। तत्रोभयत्राप्यंशतः सिद्धसाधनं दोष एव। अनुमितिविषयीभूतधर्मसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसाध्यसिद्धिविरहरूपपक्षताविघट-कत्वात्। नच पृथिवी इतरभिन्नेत्यत्र घटादौ तत्वेनेतरभेदसिद्धावपि पृथिवीत्वावच्छेदेनो-द्देश्यायाः इतरभेदप्रतीतेरसिद्धिवत् प्रातिभासिकस्य तत्वेन मिथ्यात्वप्रतीतेः सिद्धावपि ब्रह्मा-

---

[1] उपरञ्जकमेव विशेषणमिति पाठान्तरम्।  [2] अनुमितौ विषय इति पाठान्तरम् (उडुपि पु. पाठः)

न्यत्वावच्छेदेनोद्देश्यायाः मिथ्यात्वप्रतीतेस्तदंशेऽप्यभावान्नांशे सिद्धसाधनमिति वाच्यम् । घटादेः (प्रातिभासिकस्य च) निश्चितसाध्यकत्वेन सन्देहसिषाधयिषयोरभावेन ब्रह्मान्यत्वपृथिवीत्वयोरतिप्रसक्ततया पक्षतावच्छेदकत्वायोगेन तद्व्यवच्छेदनार्थं ब्रह्मप्रमान्येनेत्यादि सत्यन्त(दलो)द्वयोपादानात् । न चैवं पृथिवीतरभिन्नेत्यादावपि पृथिवीत्वं न पक्षतावच्छेदकं स्यात् । किन्तु घटाद्यन्यपृथिवीत्वमेव तत् स्यादिति वाच्यम् । इष्टापादनात्। अत एव पक्षतावच्छेदकैक्येऽपि अंशतः सिद्धसाधनं दोष इति हृदि निधाय मणिकृता व्यतिरेकिण्युक्तम् । "यद्वा पृथिवीत्वेन रूपेण(यावानेव) विप्रतिपत्तिविषयः तावत एव पक्षतेति ।"

नच घटादौ घटत्वादिना इतरभेदनिश्चयेऽपि पृथिवीत्वेन तत्सन्देहसिषाधयिषे स्यातामिति वाच्यम् । विशेषाकारेण साध्यनिश्चये सति सामान्याकारेण तत्सन्देहस्य तद्विशेषेतरविषयत्वनियमात् । अन्यथैतत्पर्वतत्वेन वह्निमत्तया निश्चितेऽपि पर्वतत्वेन तत्सन्देहापत्त्या(तत्वसन्देहापत्त्या) तत्र वह्न्यर्थिनो निष्कम्पप्रवृत्तिर्न स्यात् । सिषाधयिषा हि साध्यगोचरनिश्चयेच्छा। नहि तन्निश्चये सति तदिच्छा भवितुमर्हति । सिद्धे इच्छाविरहस्य सर्वानुभवसिद्धत्वात् ; नच विशेषाकारेण साध्यनिश्चयेऽपि रूपान्तरेण तन्निश्चयाभावात् सिषाधयिषा युक्तेति वाच्यम् । तथासत्यभेदानुमानस्य[1] चीत्कारेण करित्वानुमानस्य वाऽनुदयप्रसङ्गात् । नहि तत्रानुमितौ रूपान्तरं भासते । नच तत्रानुमितिरेव सिषाधयिषाविषयः । सा च पूर्वमसिद्धैवेति वाच्यम् । निष्कम्पप्रवृत्त्यादिलक्षणव्यवहारस्य प्रात्यक्षिकनिश्चयेनैवोपपत्त्या तदनुमितेरनुद्देश्यत्वात् । नह्यनुमित्यापि स्वसमानविषयकप्रात्यक्षिकनिश्चयादधिकं फलं संपाद्यते । येन तत्कृतविशेषसद्भावेन (तद्विशेषसद्भावेन) तत्रानुमितीच्छारूपसिषाधयिषा स्यात् । उद्देश्यप्रतीतिसिद्ध्यसिद्ध्योरेव सिद्धसाधनतदभावौ प्रति तन्त्रतया तत्र पक्षतावच्छेदकनानात्वस्य वा तदैक्यस्य वा अतन्त्रत्वात् । अन्यथा तदुक्तेः परिभाषामात्रत्वप्रसङ्गात् । किञ्च यथा गौरवेणानुमानातिरिक्तसाधकबाधकमानाभावसहितसिद्धिविरहो न पक्षपदप्रवृत्तिनिमित्तम् तथा सिषाधयिषाविरहविशिष्टसिद्धिविरहो न तत्पदप्रवृत्तिनिमित्तम् । नहि सिद्धिदशायां सिद्ध्यन्तरेच्छया अनुमितिः प्रमाणसिद्धा येन तद्विरहोऽपि प्रमाणवद्गौरवस्यापि न्याय्यत्वादितिन्यायेन पक्षपदप्रवृत्तिनिमित्तशरीरे प्रवेशः स्यात् । एतेन विशेषाकारेण साध्यवत्तया निश्चिते (विशेषाकारेण साध्यनिश्चये सति) सामान्याकारेण तत्साध्यगोचरसंशयस्यानुभवबाधितत्वेन तत्र संशयघटितपक्षताविरहेऽपि सामान्याकारेण तत्साध्यगोचरसिद्धीच्छासम्भवेन सिषाधयिषाघटितपक्षतायाः अवैकल्यात् । अंशतः साध्यसिद्धावपि (सिद्धावपीति पाठः)

[1] अयमेतदभिन्नः एतत्वादित्यभेदानुमानस्येत्यर्थः ।

पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगि न वा। अखण्डार्थनिष्ठवेदान्तजन्यनिष्प्रकारकब्रह्मप्रमाबाध्यमपि विश्वं ब्रह्मप्रमान्येन वा सप्रकारेण वा न बाध्यमिति नाश्रयासिद्धिः। एवमुत्तरत्रापि पूर्वोत्तरपक्षानुमानप्रतिज्ञे संकलय्य विप्रतिपत्तिरूह्या। इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैव नतु वस्तुतः। तत्पक्षेऽपि विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहैकफलकत्वात्। तस्य च कथाबाह्येन निग्रहानर्हेण लौकिकरीत्यनुसारिणा संस्कृतरूपेण वा भाषारूपेण वा मया प्रपञ्चमिथ्यात्वं साध्यत इति वादिवाक्येन वा त्वया प्रपञ्चमिथ्यात्वं साध्यमिति मध्यस्थपरिकल्पितविषयस्वीकारेण वा सिद्धौ प्रतिज्ञाव्यतिरिक्तस्य उक्तकुसृष्टियुक्तस्य विप्रतिपत्ति-

---

तया न सिषाधयिषाघटितपक्षताविघटनम्। अत एवायं एतदभिन्नः एतत्वादित्यभेदानुमानप्रवृत्तिः। प्रत्यक्षपरिकलितेऽपि करिणि चीत्कारेण करित्वानुमानस्य च दृष्टान्तत्वे लाघवेन निश्चितसाध्यकत्वस्यैव तन्त्रत्वेन गौरवेण पक्षभिन्नत्वस्यातन्त्रतया उक्ताभेदानुमाने पक्षस्यैव सपक्षत्वोपपत्तिः। नचैवमंशतः सिद्धसाधनस्यादोषत्वप्रसङ्गः। पक्षतावच्छेदकनानात्वस्थले तस्य दोषत्वोपपत्तेरिति निरस्तम्। निश्चिते साध्यसन्देहवत् सिषाधयिषाया अप्ययोगस्योक्तत्वात्। अंशतो बाधस्तु द्वितीयायामेवानुमितौ दूषणम्। साध्याभाववति गृह्यमाणे धर्मे साध्यसामानाधिकरण्यावच्छेदकत्वाग्रहात्। अनतिप्रसक्ततया ज्ञायमान एव तत्रावच्छेदकत्वपरिच्छेदादिति नैयायिकमतरीत्यैवमभिधानादिति। प्रतिपन्नोपाधाविति। असद्व्यावर्तनायेदम्। प्रागभावादिप्रतियोगित्वमादायांशतः सिद्धसाधनवारणायाह त्रैकालिकेति। ननु विवरणे आपणादिस्थपारमार्थिकरजतस्यैव स्वरूपेण शुक्त्यादिरूपप्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगित्वस्योक्तत्वात् तद्वदेव प्रपञ्चस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वसाधनस्य सत्यत्वेऽप्युपपत्त्यार्थान्तरम्। संबन्धान्तरेण स्वसमवायिदेशनिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्य सत्वाच्च सिद्धसाधनमिति चेन्न। सर्वत्र प्रतिपन्नोपाधौ प्रतिपत्तिविषयीभूतसकलसंबन्धेन स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य केवलान्वय्यत्यन्ताभावप्रतियोगित्वस्य वा विवक्षितत्वात्। नचैवं विवक्षणे सिद्धसाधनमर्थान्तरं वा सत्यत्ववादिनोद्भावयितुं शक्यम्। तेन केवलान्वय्यत्यन्ताभावप्रतियोगिनः तदप्रतियोगिनश्च स्वदेशकालयोः प्रतिपत्तिविषयीभूतसकलसंबन्धेन स्वरूपेण सत्वस्यैवाङ्गीकारात्। नचैवं प्रतिपन्नोपाधाविति व्यर्थम्। सर्वत्रेत्यनेनैव तल्लाभादिति वाच्यम्। प्रतिपन्नोपाधावित्यनेनैव तथात्वस्य (तथार्थस्य) विवक्षितत्वादिति भावः। ननु स्वरूपेणैवंविधनिषेधप्रतियोगित्वे प्रपञ्चस्यात्यन्तासत्वमेव स्यात्। नहि शशविषाणादेरेवंविधनिषेधप्रतियोगित्वादन्यत् निस्स्वरूपत्वरूपमसत्वमन्विष्यमाणमुपलभ्यत इत्यस्वरसादाह पारमार्थिकत्वाकारेणेति। पारमार्थिकत्वाकारेण प्रतिपत्तिविषयीभूतसकल-

वाक्यस्य वैयर्थ्यात् । न च साध्योपस्थित्यर्थं तत् । प्रतिज्ञयैव तत्सिद्धेः । न च पक्षत्व-प्रयोजकसंशयार्थं तत् । वादिप्रतिवादिनोः प्राश्निकानां च निश्चयवत्त्वेन तदयोगात् । आहार्य-संशयस्य चातिप्रसङ्गे(गित्वे)न पक्षत्वाप्रयोजकत्वात् । विप्रतिपत्तिवाक्यानपेक्षत्वाच्च । संशयं विनापि सिषाधयिषाविरहसहकृतसाधकप्रमाणा(साधकबाधकप्रमाणा)भावरूपस्य पक्ष-त्वस्य संभवाच्च ।

प्रमाणं चात्रानुमानम् । विमतं मिथ्या "दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्ति-

---

संबन्धेन सर्वार्थनिष्ठत्रैकालिकनिषेधप्रतियोगि न वेत्यर्थः । अत्र पूर्वत्र च प्रतिपत्तौ विधिकोटि-प्रसिद्धिः शुक्तिरूप्यादौ द्रष्टव्या । तत्र तत्रोत्तरत्र विवक्षितस्थलेऽपि विप्रतिपत्त्यदर्शनात् ग्रन्थ-न्यूनतामाशङ्क्योक्तप्रकारमन्यत्राप्यतिदिशति एवमिति । अपसिद्धान्तमाशङ्क्याह इदञ्चेति । ननु वस्तुतो विचाराङ्गत्वादित्यर्थः । ननु तार्किकैर्विचाराङ्गत्वेनाङ्गीकृताया विप्रतिपत्तेर्विचारानङ्गत्वोक्ति-रयुक्तेत्याशङ्क्य तत्पक्षेऽपि तत्साध्यप्रयोजनस्य अन्यतोऽपि संभवेन तस्या न विचाराङ्गत्वमित्याह तत्पक्षेऽपीति । ननु वाक्यत्वाविशेषे किं विनिगमकमित्यत आह निग्रहानर्हेणेति । उक्तकुसृष्टि-युक्तस्येति । बहुनियमवतोऽनेकविशेषणवत इत्यर्थः । ननु पक्षपरिग्रहैकफलकत्वमसिद्धम् । साध्योपस्थित्यर्थमपि तत्संभवादित्याशङ्क्याह नचेति । साध्योपस्थित्यर्थमिति । पक्षपरिग्रहजनित-साध्योपस्थितेः समयबन्धादिना व्यवहितत्वादिति भावः । पक्षत्वेति । संदिग्धसाध्यवत एव पक्षत्वादिति भावः । अतिप्रसङ्गेनेति । विशेषदर्शनानिवर्त्यतयानुमित्यनन्तरमपि पक्षत्वापादकत्वे-नेत्यर्थः । ननु सिद्धिविरहसहितः संदेहः पक्षताप्रयोजकोऽ(पादकोऽस्तु पाठान्तरम् )स्त्वित्यत आह विप्रतिपत्तीति । पूर्वं संशयस्य पक्षत्वप्रयोजकत्वमभ्युपेत्य तस्य विप्रतिपत्तिवाक्य प्रयोज्यत्वं दूषितम् । इदानीं तु संशयस्य पक्षत्वप्रयोजकत्वमेव नेत्याह संशयं विनापीति । एतच्चोपलक्षणम् । समयबन्धादिव्यवहितस्य संशयस्य तदघटकत्वाच्चेत्यपि बोध्यम् । साधक-प्रमाणेति । अत्र साधकप्रमाणं भावव्युत्पत्त्या सिद्धिरेव । ननु करणव्युत्पत्त्या भावव्युत्पत्ति-सहितया सिद्धितत्करणान्यान्ये. गौरवात् । नचानुमानातिरिक्तप्रमाणकालेऽनुमित्यदर्शनात् गौरवं प्रामाणिकम् । तावतानुमितिविरहसहकृतानुमानातिरिक्तप्रमाणाभावस्यापि कारणत्वप्राप्तेः । नचोभयोः कारणत्वाविशेषात् सिध्यभावस्यैव पक्षतात्वे किं विनिगमकमिति वाच्यम् । लाघवेन सिध्यभावस्यैव पक्षपदप्रवृत्तिनिमित्तत्वादिति भावः ।

विमतमिति । मिथ्यात्वतदभावकोटिकसंशयविषय इत्यर्थः । यथान्युक्तरीत्या तादृशसंशय

[1] नन्वेवंविधनिषेधप्रतियोगित्वे इति पाठान्तरम् ।

रूप्यवत्" इत्यानन्दबोधोक्तेः । "अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वादंशित्वात्पटान्तरवत्" इति तत्वप्रदीपोक्तेः । यद्यपि विमतिरपि नियतविषयत्वायावच्छेदक (कांतर) सापेक्षा । तथापि सावयवत्वसाधितेन कार्यत्वेन पृथिव्याः सकर्तृकत्वसाधनमिव स्वनियामकनियतया लब्ध्या विप्रतिपत्त्या पक्षतावच्छेदो न विरुद्धः। यद्वा पृथिवी सत्या

---

एवासंभवी । तथापि तार्किकरीत्या तादृशसंशयमभिप्रेत्य एवं पक्षनिर्देशः कृत इति द्रष्टव्यम् । केचित्तु ययोर्वादिप्रतिवादिनोः पक्षे स्वसिषाधयिषितसाध्यनिश्चयो नास्ति कथायां कक्ष्याचालनसामर्थ्यमस्ति तयोः स्वारसिकतादृशसंशयो न संभवतीति तन्मात्रकर्तृककथाविशेषे तथापक्षनिर्देशोऽत्राभिमतः । पक्षतावच्छेदकत्वयोग्यधर्मान्तरसंभवेऽपि[1] विमतिविषयत्वेन पक्षनिर्देशो बाधसिद्धसाधनादिप्रतिज्ञादोषाणामुद्भावनानर्हत्वज्ञापनायेत्याहुः । अन्येतु स्वारसिकसंशयस्योक्तरीत्या असंभवेऽपि आहार्यतादृशसंशयस्य सुलभत्वात् तादृशसंशयत्वस्यैव[2] पक्षतावच्छेदकत्वमभिप्रेत्य तथात्र पक्षनिर्देशः कृत इति वदन्ति ।

परिच्छिन्नत्वादित्यनन्तरं वेति शेषः । तेन नाधिक्यदोषशङ्केति ध्येयम् । इत्यानन्दबोधोक्तेरित्युक्त्या नानुक्तोपालम्भ इति सूचयति । एतत्तन्तुनिष्ठेति । प्रतिपत्तिविषयीभूतसकलसंबन्धेनैतत्तन्तुनिष्ठेत्यर्थः । अत्यन्तपदमभावान्तरप्रतियोगित्वमादाय सिद्धसाधनादिवारणाय । अंशित्वादिति । द्रव्यारब्धद्रव्यत्वादित्यर्थः । ननु तादृशविमतेर्ब्रह्मासत्प्रातिभासिकसाधारण्येऽपि संभवात् तादृशविमतिविषयत्वमतिप्रसक्तं न पक्षतावच्छेदकत्वेन निर्देशार्हम् । किञ्च धर्मितावच्छेदकमगृहीत्वा तादृशविमतिविषयत्वमेव दुर्ग्रहमिति तद्ग्रहणस्यावश्यकत्वे प्रथमोपस्थितत्वेन तदेव सर्वत्र पक्षतावच्छेदकत्वेन निर्देशार्हम् । न विमतिविषयत्वमिति शङ्कते यद्यपीति । तथापीति । ननु विषमोऽयं दृष्टान्तः । नहि विमतिविषयत्वग्रहे धर्मितावच्छेदकोपस्थितिवत् कार्यत्वग्रहे सावयवत्वोपस्थितिर्नियमेनापेक्षिता । निरवयवेऽपि गुणकर्मादौ तदुपस्थितिं विनापि कार्यत्वस्य ग्रहादिति चेन्न । अन्योपस्थित्यधीनोपस्थितिकस्यापि उपयोगोऽस्तीत्येतावन्मात्रे तस्य दृष्टान्तत्वेनोपादानादितिभावः । नन्वतिप्रसक्तस्य विमतिविषयत्वस्य न पक्षतावच्छेदकत्वं युक्तम् । बाधानवतारदशायां कथायां तथाविधानुमानेनानुमितिसंभवेऽपि तस्या बाधितांशे भ्रमत्वापत्तेः । नहि तत्वनिर्णिनीषुकथारूपे ग्रन्थव्युत्पाद्यस्य शिष्यस्य भ्रमापादनमुचितमित्याशङ्कां वारयितुमाह स्वनियामकनियतयेति । धर्मितावच्छेदकतयोपस्थितो[3] यो धर्मः स्वनियामकः तन्नियतया तदुपस्थितिकृतानतिप्रसक्तविषयताकयेत्यर्थः । नन्वेवं विमतेरनतिप्रसक्त-

[1] धर्म्यन्तरेति पाठान्तरम् । [2] संशयस्यैवेति पाठान्तरम् । [3] उपस्थिताविति पाठः ।

मिथ्या वा जलं सत्यं मिथ्या वेत्यननुगतधर्म्याश्रया अनुगता विप्रतिपत्तिः पक्षतावच्छेदिका। यद्यपि विमतिस्समयबन्धादिना व्यवहितत्वान्नानुमानकालेऽस्त । तथापि सैवोपलक्षणतया तज्ज्ञानं वा विशेषणतया(पक्षता)वच्छेदकमस्तु । अत एव विमतमित्येव प्राचां प्रयोगः। नतु वियदादीत्येव पक्षनिर्देशः। अवच्छेदकाभावेऽसंकुचितेनादिशब्देन

---

विषयत्वसंभवेऽपि न तस्याः पक्षतावच्छेदकत्वेनोपादानं युक्तम् । किन्तूपस्थितिलाघवात् आवश्यकत्वाच्च तद्विषयतावच्छेदकं ब्रह्मप्रमान्येत्यादिना निरुक्तरूपमेव पक्षतावच्छेदकत्वेन स्वीकर्तुमुचितमित्यत आह लघ्व्येति। जात्यादिवदखण्डत्वेन लघुशरीरयेत्यर्थः। नच उपस्थिति प्रयुक्तलाघवासंभव एव शरीरलाघवमादरणीयम् । तत्संभवे तु तदेवादरणीयमिति वाच्यम् । ब्रह्मप्रमान्येन वा सप्रकारेण वा अबाध्यत्वे सति असद्विलक्षणत्वे सति ब्रह्मान्यत्वस्य ब्रह्मासत्प्रातिभासिकान्यानीति प्रतीतिविशेष्यत्वस्य ब्रह्मासत्प्रातिभासिकाप्रतियोगिकाभावप्रतियोगित्वादेश्च समनियतस्यानेकस्यापि सामग्रीविशेषमहिम्ना युगपदुपस्थितिसंभवात्, तदसंभवेऽपि प्रथममस्यैवोपस्थितिरिति नियमे प्रमाणाभावेन सामग्रीवशादुक्तधर्माणां कदाचित्तत्रैवान्यथाप्युपस्थिति संभवात् विनिगमनाविरहेण एकदोपस्थित(तानां)धर्माणामस्यैव पक्षतावच्छेदकत्वं नान्यस्येत्यत्र शरीरलाघवादिप्रयोजकस्याभावे वैपरीत्येनापि विशेषणविशेष्यभावसंभवाच्च । तादृशस्यानेकस्य पक्षतावच्छेदकत्वाश्रयणे गौरवादुक्तानेकधर्मनियतविषयताकाया उक्तरीत्या लघुशरीराया एकस्या एव विमतेः पक्षतावच्छेदकत्वाश्रयणे लाघवम् । नचैवमुपस्थितिलाघवानादरप्रसङ्गः । यत्रैकस्यैव नियमेन यदुपस्थितिप्रयोजकोपस्थितिविषयत्वं तत्र तदादरसंभवादिति भावः। विप्रतिपत्तिद्वैविध्येन व्यवस्थितविकल्पमभिप्रेत्याह यद्वेति । अनुगतेति । यद्यपि विमतित्वेनानुगमेऽतिप्रसङ्गः । मिथ्यात्वतदभावकोटिकविप्रतिपत्तित्वेनानुगमेऽपि विशेषादर्शनदशायां ब्रह्मादावपि तथाविधविप्रतिपत्तिसंभवेनातिप्रसङ्गतादवस्थ्यम् । विशेषदर्शनदशायामपि आहार्यसंदेहमादाय तद्दोषतादवस्थ्यम् । तथापि ब्रह्मासत्प्रातिभासिकविषयकान्यमिथ्यात्वतदभावकोटिकविमतित्वेन स्वरूपसतानुगमो द्रष्टव्यः। विमतेर्विशेषणतयैव पक्षतावच्छेदकत्वमभिप्रेत्य शङ्कते यद्यपीति । प्रसिद्धधूमाद्यनुमाने अनुमितिकाले सत एव धूमवत्पर्वतत्वादेः पक्षतावच्छेदकत्वदर्शनादिति भावः। सैवेति । यद्यप्यनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावेन तस्या उपलक्षणत्वायोगः। भावे वा तस्यैव पक्षतावच्छेदकत्वमस्तु, आवश्यकत्वात् तथापि न तस्या उपलक्षणत्वायोगः। तत्रैवह्युपलक्ष्यतावच्छेदकापेक्षा यत्र प्रत्याय्यव्यावृत्तिन्यूनाधिकवृत्त्युपलक्षणम् । यथा काकवन्तो देवदत्तगृहा इत्यत्र। नचैवं प्रकृते, उपलक्षणभूताया विमतेर्विषयतासंबन्धेन प्रत्याय्यव्यावृत्ति-

आत्मादेरपि ग्रहणप्रसङ्गात् । नापि प्रपञ्च इत्येव पक्षनिर्देशः । प्रपञ्चशब्देन वियदाद्यन्यतत्समुदायोक्तौ वियदादिमिथ्यात्वासिद्धेः । वियदादीनामेवोक्तावच्छेदकाभावेनोक्तदोषात् । नापि वियदित्येव पक्षनिर्देशः । घटादिस्तु पक्षतुल्य इति वाच्यम् । पक्षादन्यत्र निश्चितसाध्याभाववति हेतुसन्देह इव निश्चितहेतुमति साध्यसन्देहेऽपि सन्दिग्धानैकान्त्यात् । प्रतिज्ञां प्रत्यविषये घटे स्वार्थानुमानानुगतस्य साधकबाधकप्रमाणविरहरूपपक्षत्वस्य सत्वेऽपि एवं(विध) पक्षनिर्देशस्य घटादिसाधारणविप्रतिपत्त्यनानुगुण्याच्च । विप्रतिपत्तौ तु न विमतिर्धर्मितावच्छेदिका आत्माश्रयात् । नवीनास्तु एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः

---

न्यूनाधिकदेशावृत्तित्वात् । नचातीतत्वात् कथं तयेदानीं व्यावृत्तिधीरिति वाच्यम् । व्यावर्तकधर्मज्ञानस्यैव व्यावृत्तिधीहेतुत्वात् । कुरूणां क्षेत्रं गुरूणां टीकेत्यत्र तज्ज्ञानस्य व्यावृत्तिधीहेतुत्वदर्शनादिति भावः । तुष्यतु दुर्जन इति न्यायेनाह तज्ज्ञानं वेति । वाशब्दोऽयमनास्थायाम् । नचैवं विमतत्वेन ज्ञातमिति पक्षनिर्देशप्रसङ्गः, अत्रेष्टापादनादिति भावः । अत एवेति । यतएवोक्तरीत्या एवंविधस्थले शरीरलाघवमादरणीयं ततएवेत्यर्थः । एतच्च विमतेरूपलक्षणत्वेन पक्षतावच्छेदकत्वपक्षमभिप्रेत्येति द्रष्टव्यम् । स्वोक्तप्रकारनिर्वाहाय प्रकारान्तरमुपन्यस्य दूषयति न तु वियदादीति । अवच्छेदकाभाव इति । तत्स्वीकारेत्वस्मदुक्तपक्ष एव प्रवेश इति भावः । पक्षतुल्य इति । प्रतिज्ञां प्रत्यविषयत्वे सति व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यानुमितिविशेष्यत्वयोग्य इत्यर्थः । पक्षतुल्यत्वाभिमते तदज्ञाने हेत्वज्ञानादेव न व्यभिचारज्ञानविषय इति भावः । पक्षादन्यत्रेति । तथाच पक्षताघटकान्यव्यभिचारज्ञानविषयत्वेनैव प्रतिबन्धकत्वं लाघवात् । पक्षसमव्यभिचारसंशयश्चेत्तदुक्तरीत्या पक्षताघटकान्य एवेति भावः । ननु पक्षसमस्यापि पक्षत्वमेव पक्षताश्रयत्वात् । प्रतिज्ञां प्रत्यविषयत्वमात्रेण तत्र पक्षसमत्वव्यवहारः । तथाच तत्संशयोपल[1]क्षिताघटकत्वादप्रतिबन्धक एवेत्यत आह प्रतिज्ञां प्रतीति । घटादिसाधारणविप्रतिपत्तौ सत्यां तत्साधारणपक्षत्वे च सति विप्रतिपत्त्येकदेशप्रतिज्ञायाः समग्रविप्रतिपत्तिजन्यसंशयनिवर्तकनिश्चयाप्रयोजकत्वेनायुक्तत्वादित्यर्थः । यद्यप्येतन्मते विप्रतिपत्तिरपि प्रत्येकमेव, साधारणधर्मस्य निर्वक्तुमशक्यत्वादिति वक्तुं शक्यम् । तथापि ब्रह्मासत्प्रातिभासिक[2]व्यावृत्तविषयकत्वरूपसाधारणधर्मस्य निरुक्तत्वात् प्रत्येकविप्रतिपत्तिकल्पने गौरवमिति भावः । ननूक्तरीत्या लघुत्वेन

---

[1] तत्संशयोऽपि पक्षताघटकत्वादप्रतिबन्धक एवेति । (पाठान्तरम्)

[2] त्रितयाविषयकत्वेति (पाठान्तरम्)

एतत्पटानाद्यभावत्वात् एतत्पटान्योन्याभाववत् । (एतत्तं) तन्तुनाशजन्यस्य(स्यैतत्प)पट-नाश(स्यैतत्तं)स्य तन्त्ववृत्तित्वादनादीतिविशेषणम् । विमतं वा ब्रह्मप्रमान्येनेत्यादिविप्रतिपत्ति वाक्योक्तविशेषणत्रयवत्त्वे सति अव्याप्यवृत्तित्वानधिकरणं वा स्वसमानाधिकरणात्यन्ता-भावप्रतियोगि, अनात्मत्वात् संयोगवदिति । अत्र च पक्षधर्मताबलान्मिथ्यात्वसिद्धिः । विमतं नित्यद्रव्यान्यत् केवलान्वय्यत्यन्ताभावप्रतियोगि पदार्थत्वात्, नित्यद्रव्यवत् । तार्किकमते नित्यद्रव्याणामवृत्तित्वेन तदत्यन्ताभावः केवलान्वयीति न दृष्टान्तः साध्य-विकलः । अत एव नात्मनि व्यभिचारः । मिथ्यात्वसिद्धिस्तु पक्षधर्मताबलात् । आत्मत्वा-वच्छिन्नधर्मिताको भेदो न परमार्थसत्प्रतियोगिकः । अनात्ममात्रप्रतियोगिकत्वात्, शुक्ति-रूप्यप्रतियोगिकभेदवदित्याहुः । मिथ्यात्वं च यद्यपि नात्यन्तासत्त्वं अपसिद्धान्तात् ।

---

विमतेरेव पक्षतावच्छेदकत्वे आवश्यकत्वात् सैव (विप्रतिपत्ति) धर्मितावच्छेदिकास्तु । ननु ब्रह्मप्रमान्येनेत्यादिनिरुक्तगुरुधर्मस्तदवच्छेदक इत्यत आह विप्रतिपत्तौ त्विति ॥ अत्र विमति-शब्देन विप्रतिपत्तिवाक्यस्य ग्रहणे आत्माश्रयः । तज्जन्यसंशयग्रहणे त्वन्योन्याश्रय इति बोध्यम् । एतत्पटात्यन्ताभाव इति । एतत्पटाधिकरणताप्रयोजकसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभाव इत्यर्थः । अतो न सम्बन्धान्तरावच्छिन्नात्यन्ताभावमादायांशतः सिद्धसाधनमिति बोध्यम् । एतत्तन्त्ववृत्तिप्रागभावे व्यभिचारवारणायाह एतत्पटेति । अंशतः सिद्धसाधनार्थान्तरयोर्वार-णायाहाव्याप्यवृत्तित्वेति । स्वसमानाधिकरणेति । अधिकरणतानियामकसम्बन्धेन स्वसमा-नाधिकरणात्यन्ताभावप्रतियोगीत्यर्थः । अनात्मेति । यद्यप्यवृत्तिगगनादावात्मवदधिकरणाप्रसिद्धे-र्व्यभिचार एव । तथाप्यत्रेदानीमाकाश इति प्रतीत्याप्यधिकरणप्रतीतेर्न तथेति बोध्यम् । ननु सत्यत्ववादिनाप्यस्य संयोगादावभ्युपगमान्नैतन्मिथ्यात्वशरीरमित्यत आह अत्र चेति । अव्याप्यवृत्तित्वानधिकरणत्वेन ज्ञातेऽन्यत्र विद्यमाने स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वे-सिध्यति सति सैव सर्वावच्छेदकावच्छिन्नात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिरित्यर्थः । विमतमित्यस्यानन्तरं स्ववृत्तिनियामकसम्बन्धारोप्यकाभावप्रतियोगीति शेषः । तेन व्यधिकरण-सम्बन्धमादाय नार्थान्तरमिति बोध्यम् । अंशतः सिद्धसाधनवारणायाह नित्यद्रव्यान्यदिति । ननु दृष्टान्तबहिर्भावाय । दृष्टान्तत्वप्रयोजकनिश्चितसाध्यसाधनवत्त्वेन पक्षस्यापि दृष्टान्तत्वा-विरोधात् । अतएवायमेतदभिन्नः एतत्त्वादेतद्वदित्यभेदानुमाने पक्षस्यैव सपक्षत्वमिति बोध्यम् । केवलान्वयीति ॥ सर्वावच्छेदकावच्छिन्नात्यन्ताभावमात्रप्रतियोगीत्यर्थः । अतो नाव्याप्यवृत्त्यंशे

नाप्यनिर्वाच्यत्वं अप्रसिद्धेः। नापि सद्विविक्तत्वं सतोऽपि सदन्तरविविक्तत्वात्। नापि सत्त्वानधिकरणत्वं निर्धर्मके ब्रह्मण्यपि सत्वात्। नच निर्धर्मकत्वादेव तत्र सत्त्वानधिकरणत्वमपि नेति वाच्यम्। निर्धर्मकत्वरूपहेतोः सत्त्वानधिकरणत्वाभावरूपसाध्यस्य च भावाभावाभ्यां व्याघातेनाभावरूपधर्मनिषेधायोगात्। अन्यथाऽसत्त्वानधिकरणत्वस्यापि तत्राभावेन तद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरणत्वरूपविशेषणायोगात्। नच प्रमित्यविषयत्वं मिथ्यात्वम्। ब्रह्म तु वेदान्तजन्यवृत्तिव्याप्यमिति वाच्यम्। शुक्तिरूप्यादेरपि व्यवसायद्वारा अनुव्यवसायं प्रति साक्षाच्च बाधकज्ञानं प्रति मिथ्यात्वनिषेध्यत्वेन विषयत्वात्। सत्त्वप्रकारकप्रमां प्रति साक्षादविषयत्वं चेदावश्यकत्वात्सत्त्वाभाव एव मिथ्यात्वं स्यात्। नापि भ्रान्तिविषयत्वम्। ब्रह्मणोऽप्यधिष्ठानत्वेन तद्विषयत्वात्। भ्रान्तिमात्रविषयत्वस्य चोक्तरीत्या शुक्तिरूप्यादावप्यभावात्। अध्यस्ततया भ्रान्तिविषयत्वं चेद्विशेष्यवैयर्थ्यात्। विशेषणमात्रस्य च निरुच्यमानमिथ्यात्वानतिरेकात्। नापि बाध्यत्वं, तद्धि न तावदन्यथाविज्ञातस्य सम्यग्विज्ञातत्वम्। मिथ्यात्वक्षणिकत्वादिना विज्ञातस्य प्रपञ्चस्य

---

सिद्धसाधनम्॥ अत एवेति॥ नित्यद्रव्यत्वेन साध्यसत्त्वादेवेत्यर्थः। ननु परमते सर्वावच्छेदकावच्छिन्नात्यन्ताभावमात्रप्रतियोगित्वं परमार्थसन्निःयद्रव्येऽपीति नैतावता मिथ्यात्वसिद्धिरत आह मिथ्यात्वसिद्धिस्त्विति। वृत्तिमतः तद्वृत्त्यवच्छिन्नात्यन्ताभावस्य सर्वावच्छेदकावच्छिन्नत्वसिद्धिरेव मिथ्यात्वसिद्धिरित्यर्थः। आत्मधर्मिताको भेद इत्येवोक्ते ब्रह्मप्रतियोगिकजीवनिष्ठभेदस्यापि पक्षत्वेऽशतोबाधः स्यात्। अत उक्तमात्मत्वावच्छिन्नधर्मिताक इति। द्रव्यत्वावच्छिन्नात्मप्रतियोगिकभेदे व्यभिचारवारणायाह मात्रेति।

मिथ्यात्वं च यद्यपीति। ननु मिथ्यैव विश्वमिति विश्वमिथ्यात्वं प्रतिज्ञाय तदनन्तरं विप्रतिपत्तिवाक्ये द्वेधाविधिकोटिप्रदर्शनात् प्रतिज्ञावाक्ये विमतं मिथ्येति मिथ्यात्वानुमाने च विवक्षितं मिथ्यात्वमुक्तप्रायमिति तज्जिज्ञासाविरहान्मिथ्यात्वं च यद्यपीत्यादिना विवक्षितमिथ्यात्वनिरूपणोद्यमो न संभवतीति चेत्। उच्यते। विप्रतिपत्तिवाक्ये विधिकोटिपर्यवसितमिथ्यात्वनिरुक्तेः मिथ्यात्वान्तरोपलक्षणार्थत्वेन तज्जिज्ञासासंभवात् स्वाभिमतमिथ्यात्वान्तराणि वक्तुं स्वानभिमतनिराकरणोद्यमोऽयं संभवति। अत एव विप्रतिपत्तौ द्वेधाविधिकोटिप्रदर्शनमिति ध्येयम्। अप्रसिद्धेरिति परमत इति शेषः। भावाभावाभ्यामिति। निर्धर्मकत्वमस्ति नवा। यद्यस्ति तदा निर्धर्मकत्वमपि धर्म एवेति निर्धर्मकत्वं व्याहतम्। नेतिपक्षे द्वौ निषेधौ प्रस्तुतमर्थं

सत्यत्वस्थायित्वादिना विज्ञातत्वेन सिद्धसाधनात् । नापि बाधकज्ञानविषयत्वं ब्रह्मण्यतिव्याप्तेः । नापि नास्ति नासीन्नभविष्यतीति बोध्यमानाभावप्रतियोगित्वेन तद्विषयत्वम् । मन्मते ह्यापणस्थरूप्यस्यैव तत्प्रतियोगित्वात् । नापि ज्ञाननिवर्त्यत्वं उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेऽप्युपपत्तेः । नापि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं, अव्याप्यवृत्तिसंयोगादेरिवसत्त्वेऽप्युपपत्तेः । नाप्यव्याप्यवृत्तित्वानाश्रयस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । आरोपितस्य संयोगस्याऽत्यन्ताभावस्तु अनारोपितस्य संयोगस्यात्यन्ताभावादन्य एव व्याप्यवृत्तिरिति वाच्यम् । शुक्तिरूप्यादौ तदभावादित्युक्तत्वात् । नाप्यविद्यातत्कार्ययोरन्यतरत्वं, अनादौ जीवब्रह्मविभागादावव्याप्तेः । परमतेऽज्ञानस्य तत्कार्यभ्रान्त्यादेश्च स(त्य)त्वेनार्थान्तरत्वाच्च । शुक्तिरूप्यादावनिर्वाच्याविद्याकार्यत्वस्य प्रतिवाद्यसंमतेश्च । तथापि मिथ्याशब्दोऽनिर्वाच्यवचन इति पञ्चपादिकारीत्या सदसत्त्वानधिकरणत्वरूपानिर्वाच्यत्वं मिथ्यात्वम् । तत्प्रसिद्धिश्च ख्यातिवादे वक्ष्यते ॥ १ ॥

---

गमयत इति न्यायेन सधर्मकत्वे सति पुनरपि निर्धर्मकत्वं व्याहतम् । एवं साध्येऽप्यूहनीयम् । यद्वा द्वौ निषेधाविति न्यायेन साध्यं सत्त्वाधिकरणत्वं पर्यवसन्नम् । तथाच हेतुभावसाध्यभावाभ्यां साध्याभावहेत्वभावाभ्यां साध्यहेत्वोर्व्याघातेन विरोधेनेत्यर्थः । अन्यथेति । अभावरूपधर्मनिषेध इत्यर्थः । साक्षाच्चेति । व्यवसायविषयत्वेनेत्यर्थः । सत्त्वप्रकारकेति । सत्त्वनिष्ठप्रमीय(प्रमा)प्रकारत्वनिरूपितविशेष्यत्वानाश्रयत्वमित्यर्थः । तेन सदिदं रजतं नेति प्रमितौ शुक्तिरूप्यादेरपि विषयत्वेन तत्रोक्तवृत्त्यविषयत्वस्याभाव इति शंका निरस्ता । आवश्यकत्वादिति । सदिदं रजतमिति शुक्तिरजतज्ञानस्य प्रमात्वाभावस्थापनार्थं सत्त्वाभावस्या[1]वश्यकत्वादित्यर्थः ॥ इदमुपलक्षणम् । सत्ताजातेर्ब्रह्मण्यभावेन तत्प्रकारकप्रमाया अभावात् तत्रातिप्रसङ्गेन नैतन्मिथ्यात्वमिति द्रष्टव्यम् । उक्तरीत्येति ॥ अनुव्यवसायादिविषयत्वादिनेत्यर्थः । निरुच्यमानेति वाध्यत्वरूपेत्यर्थः ॥ ब्रह्मणीति ॥ ज्ञानमात्र एव चितः स्फुरणादिति भावः । अभावप्रतियोगित्वेन बाधकज्ञानविषयत्वं कदाचित् ब्रह्मणोऽपीति अत आह ॥ नास्तिनासीन्नभविष्यतीति ॥ त्रैकालिकसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगित्वेन तद्विषयत्वमित्यर्थः । नच तादृशाभावप्रतियोगित्वमेव मिथ्यात्वमस्त्विति वाच्यम् । अभावप्रतियोगिकत्वस्य प्रकारकत्वलक्षणसम्बन्धेन ज्ञानविशेषणतया प्रतियोग्यविशेषणत्वात् ज्ञानस्यैव तद्विशेषणत्वाच्च । अभावप्रतियोगित्वतत्प्रकारकज्ञानविषयत्वयो-

---

[1] सत्वाभावस्यावश्यवाच्यत्वादित्यर्थः इति पाठान्तरम् ।

यद्वा बाध्यत्वमनिर्वाच्यत्वम् । तच्च शुक्तिरूप्यदिरेव पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगीतिमते प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् । उक्तं हि (च) विवरणे। प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्येति । उक्तं च वार्तिके । तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः । अविद्यासहकार्येण नासीदस्तिभविष्यतीति । प्रतिपन्नत्वं च न प्रमितत्वं येन विरोधः । नापि भ्रान्तिप्रतिपन्नत्वम् । येन सिद्धसाधनम् । किन्तु प्रतीतत्वमात्रम् । सर्वस्मिंश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं विवक्षितम् । सत्त्वपक्षे रजतत्वं प्रतिपन्नोपाधौ शुक्तौ निषिध्यमानमपि रजते न निषिध्यत इति न सिद्धसाधनम् । मतान्तरे तु बाध्यत्वं ज्ञानत्वेन ज्ञाननिवर्त्यत्वम् । उक्तं हि विवरणे । अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध इति । अनुमितिं प्रति मनसो मनस्त्वेन हेतुत्वेऽपीन्द्रियत्वेनाहेतुत्ववत् पूर्वज्ञानादिकं प्रति उत्तरस्य ज्ञानेच्छादेरुत्तरात्मविशेषगुणत्वेन निवर्तकत्वेऽपि ज्ञानत्वेनानिवर्तकत्वात् ॥ २ ॥

---

घटत्वतत्प्रकारकप्रमाविशेष्यत्वयोरिव भेदान्न यथोक्तविशेषणविशेष्यभाववैयर्थ्यशङ्केति भावः ॥ मन्मत इति ॥ कालत्रयेऽपि न रजतमित्याकारकबाधाभावात् , कालत्रयेऽपि नात्ररजतमित्याकारकबाधस्य चापणस्थरजतप्रतियोगिकत्वावगाहितयोपपत्तेरिति भावः । एवं सति ब्रह्मण्यतिव्याप्तिरपि द्रष्टव्या तस्यावृत्तित्वादिति[1] । नन्वेवमारोपितसंयोगस्य मिथ्यात्वं न सिध्येदित्यत आह आरोपितस्येति । तथाच न तमादाय साध्यापर्यवसानमिति भावः । उक्तत्वादिति । मन्मत इत्यादिनेत्यर्थः । एवं च दृष्टान्तः साध्यविकल इति भावः । नन्वविद्यापदं ध्वंसप्रतियोग्यनादिपरं विवक्षितमतो नोक्तदोष इत्यत आह परमत इति । नन्वनिर्वचनीयाविद्याकार्यशुक्तिरूप्यादिदृष्टान्तेनेदमनुमानं मिथ्यात्वे पर्यवस्यतीत्यत आह शुक्तिरूप्यादाविति । तथाच दृष्टान्तासिद्धिरिति भावः । नन्वनिर्वचनीयत्वमप्रसिद्धमित्युक्तमित्यत आह तत्प्रसिद्धिश्चेति । आपणस्थरूप्यस्यैव तत्प्रतियोगित्वादित्येतदुद्धरति शुक्तिरूप्यादिरेवेति । त्रैकालिकत्वांशे संवादमाह उक्तं चेति[2] । विरोधः प्रतिज्ञाविरोधः । येनेति । तदभाववति तदभावसाधनादित्यर्थः । सर्वस्मिंश्चेति । यथा चैतत्तथोक्तं विप्रतिपत्तौ । नन्वेकत्र धर्मिणि भावाभावौ विरुद्धावत आह अनुमितिं प्रतीति । तथा चावच्छेदकभेदेनाविरुद्धौ तावित्यर्थः । उत्तरेति । योग्योत्तरेत्यर्थः । नन्वेवमप्यव्याप्यवृत्तावंशतः सिद्धसाधनमत आह संयोगेति । अभावाधिकरणे प्रतियोगिनो

[1] तस्य तद्वृत्तित्वादिति पाठान्तरम् । [2] हीति पाठान्तरम् । [3] नन्वव्याप्यवृत्ताविति पाठः ।

अथवा चित्सुखरीत्या स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् । संयोगतदत्यन्ताभावयोरवच्छेदकभेदेन भिन्नाश्रितत्वस्यैवानुभवेन सत्त्वपक्षे सामानाधिकरण्या(योगात् )भावात् । शुक्तिरूप्यादेरपि पारमार्थिकत्वाकारेण स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाच्च । नचाधिकरणशब्देन तात्त्विकाधिकरणोक्तौ समवायिनि संयोगिनि वा तत्त्वतस्तदधिकरणे तदत्यन्ताभावायोगेनासम्भवः । अधिकरणत्वेन प्रतीतत्व(प्रतीतित्व) मात्रोक्तौ चान्यथाख्यातिपक्षे रजतत्वादेः स्वाधिकरणत्वेन प्रतीतशुक्त्या(दौतदत्यं) दावत्यन्ताभावस्य सत्त्वात्सिद्धसाधनमिति वाच्यम् । स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वस्य विवक्षितत्वात् । तत्पक्षे च रजतत्वादिकं स्वात्यन्ताभावानधिकरणे रजतेऽपि भाति ॥ ३ ॥

यद्वाऽऽनन्दबोधोक्तरीत्या सद्विविक्तत्वं मिथ्यात्वम् । तच्च सद्रूपत्वाभावः । ब्रह्म च सत्तारहितमपि सामान्यमिव सद्रूपम् । दृश्यत्वं च न्यायदीपावलीरीत्या दृग्विषयत्वम् । ननु

---

विरुद्धत्वेन बाधादहं स्वर्गी स्यामित्यत्रेव मूले वृक्षः कपिसंयोगाभाववान् इति प्रतीतेर्मूलमात्रविषयकत्वमिति भावः । दृष्टान्तासिद्धिमुद्धरति शुक्तिरूप्यादेरपीति । स्वात्यन्ताभावेति । नचैवकारव्यावर्त्यस्वात्यन्ताभावानधिकरणाप्रसिद्धिरिति वाच्यम् । स्वाधिकरणत्वेन प्रतीयमानयावन्निष्ठप्रतीतिविषयसंबन्धावच्छिन्नात्यन्ताभावप्रतियोगिविषयत्वस्य विवक्षितत्वादिति भावः । सतोऽपीत्यनेनोक्तं दूषणं परिहरति तच्चेति । ननु सत्तात्यंताभावस्य निर्धर्मकत्वेन ब्रह्मण्यपि तत्सत्त्वादिति केवलान्वयित्वाभावात् व्यतिरेको[1]पासनं दृश्यत्वहेतोरावश्यकमित्यभिप्रेत्य शङ्कते नन्विति । संदिग्धेति ॥ यद्यपि व्यतिरेकव्याप्त्यग्रहे अज्ञानरूपासिद्धिरेवायाति । नतु संदिग्धानैकान्त्यम् । तस्य सन्देहप्रयुक्तत्वात् । तथापि मिथ्यात्वाभावरूपव्याप्यसंदेहवति विपक्षे दृश्यत्वाभावरूपव्यापकाभावरूपदृश्यत्वनिश्चयात् संदिग्धानैकान्त्यं द्रष्टव्यम् । नचैवं व्यतिरेकिविलयापत्तिः । तावता अगृहीतव्यतिरेकव्याप्तिकत्वेन हेतोर्विशेषणीयत्वात् । अत एवाह व्यतिरेकस्याग्रह इति । ननु केनापि रूपणोपस्थितौ दृश्यत्वमेव ब्रह्मणः । नोचेदिदानीमनुपस्थितिरेवेति नोभयथापि व्याप्तिग्रहः । आकाशे तु शब्दाश्रयत्वरूपधर्माश्रय एव घटाद्यवच्छिन्नत्वं तदभावश्चेत्यत आह यद्वेति । नोक्तरूपमिति । नियमाभावादिति भावः । योगार्थत्यागे परिभाषाया अनियमादाह अस्वप्रकाशत्वंवेति । विषयविषयिभावस्वीकारे वृत्तिविरोधोऽपसिद्धान्तश्चेत्यतोवाह स्वप्रकाशत्वं

[1] यन्नमिथ्यानतद्दृश्यमिति व्यतिरेकव्याप्त्युपादानम् ।

यन्नमिथ्या न तद्दृश्यमिति व्यतिरेकस्याग्रहे सन्दिग्धानैकान्त्यम् । तद्ग्रहश्च न तावदसति । तत्र सद्विविक्तत्वरूपमिथ्यात्वस्य व्यतिरेकाभावात् । मिथ्यात्वान्तरव्यतिरेकसद्भावेऽपि तत्र (मिथ्यात्व) साध्यव्यतिरेकग्रहार्थं तस्यापि ज्ञातव्यत्वेन व्यभिचारात् । ब्रह्मणि मिथ्यात्व-व्यतिरेकग्रहे(च)ऽपि ब्रह्मापि दृश्यमिति चेन्न । आकाशस्य स्वरूपेणापरिच्छेदेऽपि घटा-वच्छिन्नस्य परिच्छेदवद्ब्रह्मणः स्वरूपेणादृश्यत्वेऽपि व्यतिरेकावच्छिन्नत्य दृश्यत्वात् ॥ ४ ॥

यद्वा प्रमाणमालारीत्या स्वव्यवहारे स्वातिरेकिसंवि(त्सा)दपेक्षानियतिर्दृश्यत्वम् । तथाचात्मनो ज्ञानविषयत्वेऽपि नोक्तरूपं दृश्यत्वम् । अस्वप्रकाशत्वं वा दृश्यत्वम् । स्वप्रकाशत्वं च फलाव्याप्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । फलं च वृत्तिप्रति(बिंबित)-फलितचैतन्यम् । स्वप्रकाशत्वाभावश्च(प)घटादौ विशेषणाभावेन धर्मादौ विशेष्याभावेनेति विशिष्टाभावोऽनुगतः । अस्मिंश्च पक्षे जडत्वमसंविद्रूपत्वमित्यसङ्करः ॥ ५ ॥

---

चेति । असङ्कर इति । न हेत्वोरभेद इत्यर्थः । ननु यावद्विशेषाभावग्रहे यत्किञ्चिद्विशेषग्राहि-प्रत्यक्षं भवत्येव विरोधीत्यत आह दृश्यते चेति । प्रत्यक्षस्य दुर्बलत्वेन न तत् श्रुत्यनुमान-बाधकमिति भावः ।

अग्रेतनदूषण[1]न्यूनताशङ्कामादौ परिहरन्नाह मिथ्यात्वमिति[2] । सदेवेति । विशेष्याभाव-प्रयुक्तविशिष्टाभावसत्वादिति भावः । उपलक्षणमेतत् सत्त्वेसत्यसत्त्वरूपविशिष्टस्य प्रतियोगिनोऽ-प्रसिध्या साध्याप्रसिद्धिरित्यपि बोध्यम् । व्याहतेरिति । सत्त्वासत्त्वयोर्नित्यत्वानित्यत्वयोरिव-परस्परविरहरूपत्वादित्यर्थः । ननु सत्त्वासत्त्वयोः परस्परविरहरूपत्वेऽपि प्रपञ्चे न तदुभयाभाव-सिद्धिविरोधः । घटात्यन्ताभावस्य घटतदत्यन्ताभावानधिकरणत्वदर्शनादिति चेन्न । घटात्यन्ता-भावे घटो नास्तीत्यबाधितप्रतीत्या घटात्यन्ताभावस्य स्वाधिकरणत्वेन दृष्टान्तासम्मतेः । नचैव-मात्माश्रयदोषः । दृश्यत्वमिथ्यात्वयोर्दृश्यत्वमिथ्यात्वाधारत्ववत् सिद्धविषयत्वेनादोषत्वादिति भावः । सत्त्वासत्त्वयोरुभयोरपि भावरूपत्वमभ्युपेत्याह निर्धर्मकब्रह्मवदिति । ननु सत्त्वानधि-करणत्वमित्यस्य सद्रूपानधिकरणत्वमित्येवार्थः । एवं च नार्थान्तरमित्यत आह पृथिवीति । नन्वभावद्वयवृत्तिद्वित्वं साध्यतावच्छेदकम् । नच तदवच्छिन्नसाध्यसिद्धिः पक्षे इत्यत आह दृष्टान्तस्येति । मन्मते असत एव भानाभ्युपगमादिति भावः । ननु पृथिवी त्रयोदशा-न्योन्याभाववतीत्यत्र त्रयोदशत्वमेव साध्यतावच्छेदकं न तु तत्तदभावत्वम् । तथासति

---

[1] णीय पाठान्तरम् ।  [2] हीति पाठान्तरम् ।

श्रुतिश्चात्र प्रमाणम् । “एकमेवाद्वितीय”मित्यादौ अद्वितीयमित्यादिशब्दैर्द्वितीयमात्रनिषेधात् । नच प्रत्यक्षबाधादनुमानममानं श्रुतिश्चामुख्यार्थेति युक्तम् । प्रत्यक्षेण व्यावहारिकसत्त्वग्रहात् । अनुमानादिभिश्च पारमार्थिकसत्त्वनिषेधात् । नहि वर्तमानमात्रग्राहि प्रत्यक्षं त्रिकालाबाध्यत्वग्राहि । वह्निरनुष्ण इत्यत्र तु उष्णत्वस्य प्रत्यक्षसिद्धव्यावहारिकसत्त्वप्रतिषेधाद्बाधः । दृश्यते च नभोनैल्यचन्द्रप्रादेशत्वग्राहिप्रत्यक्षयोरनुमानागमाभ्यां बाध इति ।

उच्यते । मिथ्यात्वं हि त्वयैव पक्षान्तरनिषेधेन पञ्चधा निरुक्तम् । तत्राद्ये किं सत्त्वे सत्यसत्त्वरूपविशिष्टस्याभावोऽभिप्रेतः । किंवा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयम् । यद्वा सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभाववत्त्वरूपं विशिष्टम् । नाद्यः । मन्मते सदेकस्वभावे जगति तस्य सिद्धत्वात् । न द्वितीयः । व्याहतेः । निर्धर्मकब्रह्मवत्सत्त्वराहित्येऽपि सद्रूपत्वेनाऽमिथ्यात्वोपपत्त्यार्थान्तराच्च । पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र त्रयोदशान्योन्याभावानामिवात्रापि सत्त्वासत्त्वात्यन्ताभावयोः प्रत्येकं प्रसिद्धत्वेन कथंचिदप्रसिद्धविशेषणत्वाभावेऽपि असत्त्वात्यन्ताभावांशे सिद्धसाधनाच्च । नहि सिद्धमसिद्धेन सहोच्चरित-(च्यमान)मसिद्धं भवति । पृथिवीतरभिन्नेत्यत्र तु जलाद्येकैकान्योन्याभावोऽपि न पृथिवीत्वोपहिते सिद्धः । दृष्टान्तस्य साध्यवैकल्याच्च । पृथिवीत्वहेतुस्तु केवलव्यतिरेकी । त्रयोदशान्योन्याभावरूपसाध्यस्य व्यतिरेकनिरूपणं तु भिन्नाश्रितानामपि त्रयोदशान्योन्याभावानां समूहालम्बनैकज्ञानोपारूढत्वमात्रेण युक्तम् । अत एव न तृतीयः । व्याहतेरर्थान्तरा(त्दृष्टान्ते)त्साध्यवैकल्याच्च । किञ्च यथा अनित्ये वाङ्मनसे इत्यत्र पक्षतावच्छेदक

---

तदवच्छिन्नसाध्यवदव्यावृत्तत्वेन हेतोरसाधारण्यप्रसङ्गात् । तथाच तदवच्छिन्नसाध्यवतोऽप्रसिद्धत्वेऽपि तदनुमानप्रवृत्तिवत् दृश्यत्वानुमानप्रवृत्तिरस्त्वित्यत आह पृथिवीत्वहेतुस्त्विति । तुशब्दस्य नत्वन्वय्यपीत्यर्थः । ननु त्रयोदशत्वावच्छिन्ना(प्रतियोगिताकाभावानाम् ) भावानामेकत्रानिरूपणे तदभावनिरूपितव्याप्तेरेवानिरूपणात् नैतदनुमानप्रवृत्तिरुपपद्यत इत्यत आह त्रयोदशेति । एकस्य त्रयोदशसाध्यवतोऽप्रसिद्धावपि भिन्नभिन्नाधिकरणस्थानां एते त्रयोदशान्योन्याभावा इति तेषामभावानां त्रयोदशत्वावच्छिन्नत्वज्ञानसम्भवेन साध्यतावच्छेदकावच्छिन्नप्रसिद्धिसंभवात् व्यतिरेकनिरूपणसंभवेऽनुमानप्रवृत्तिरविकलेत्यर्थः । ननु प्रसाध्याङ्क-

4

नानात्वेनांशे सिद्धसाधनत्वेऽपि पृथिवीतरभिन्नेत्यत्र पक्षतावच्छेदकैक्यान्नां(शतः)शे सिद्धसाधनम्। तथेहापि यद्यपि कथञ्चित् साध्यतावच्छेदकैक्यान्नांशे सिद्धसाधनम्। नापि व्यर्थविशेष्यत्वम्। विमतं उपादानापरोक्षज्ञप्तिचिकीर्षाकृतिमज्जन्यमित्यत्र कृतिग्रहणेनैवेश्वरसिद्धावपि चिकीर्षादेरिव गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यत्र तार्किकाङ्गीकृतभिन्नत्वस्येव च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वात्। इह(च) तु सद्विलक्षणत्वे सत्यसद्विलक्षणमितिप्रतीतेरुद्देश्यत्वात्। यदि चाभेदे सत्यपि घटः कलश इति सामानाधिकरण्यादर्शनादप्रयोजकत्वनिरासाय विशिष्टधीस्तत्रोद्देश्या तर्हि तुच्छे सद्वैलक्षण्ये सत्यपि दृश्यत्वादर्शनादिहापि सोद्देश्येति समम्। तथाप्यप्रसिद्धविशेषणत्वम्। पृथिवी इतरभिन्नेत्यत्रत्वनेकधर्मसाधनपक्ष एव प्रत्येकप्रसिद्ध्या साध्यप्रसिद्धिरुक्ता। अन्यथा शशादीनां प्रत्येकं प्रसिद्ध्या शशशृङ्गोल्लिखितत्वस्यापि सा स्यात्। न द्वितीयः। त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानेः। प्रातिभासिकत्वे सिद्धसाधनात्। व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन

---

एवायं दृष्टान्त इत्यत आह किञ्चेति। यद्यपीत्येतत् किञ्चेत्यस्यानन्तरमेव योज्यम्। पक्षतावच्छेदकैक्यादिति। यद्यपि पक्षतावच्छेदकैक्येऽप्यंशतः सिद्धसाधनं व्यवस्थापितमधस्तात्। तथापि सिषाधयिषाघटितपक्षतामभिप्रेत्यैतदुक्तं भवति। विशेषप्रकारसिद्धौ जातायामपि सामान्यधर्मावच्छिन्नसिद्धाविच्छा सिद्धा। कथञ्चिदिति। विशिष्टस्य विशेषणविशेष्योभयात्मकत्वेन विशिष्टत्वस्योभयपर्याप्तत्वादित्यर्थः। विमतमिति। यद्यप्यत्रैकैकजन्यत्वं सिध्यदर्थात्त्रितयजन्यत्वसमूहालम्बनानुमित्या विषयीक्रियत इति चिन्तामणौ कण्ठरवेणाभिहितम्। तथापि तत्प्रतीतेरुद्देश्यत्वविशिष्टस्य साध्यत्वेनोपादानेऽपि न क्षतिरित्यभिप्रेत्यैतदुक्तमिति ध्येयम्। तथापीति। ऐकाधिकरण्यरूपसाध्यतावच्छेदकावच्छिन्नसाध्याप्रसिद्धेरित्यर्थः। अद्वैतहानेरिति। तथाच ततो भीतेन त्वया त्रैकालिकनिषेधस्य ब्रह्मानतिरिक्तत्वाङ्गीकारेण नाद्वैतहानिः। तथापि ब्रह्मणो वियदादिभावरूपप्रपञ्चप्रतियोगिकत्रैकालिकनिषेधानतिरिक्तत्वे घटादिप्रतियोगिकत्रैकालिकनिषेधवदनुपलब्धिप्रमाणकत्वापातेन भावरूपत्वाभावप्रसङ्गः। भावप्रतियोगिकत्रैकालिकनिषेधस्यानुपलब्धिप्रमाणकत्वनियमात्। अन्यथा घटादेरपि अनुपलब्धिप्रमाणकाभावान्तरास्वीकारप्रसङ्गात् ब्रह्मरूपाभावेनैव घटाद्यभावप्रतीतिव्यवहारोपपत्तेः ब्रह्मण एव तव प्रपञ्चात्यन्ताभावरूपत्वस्वीकारावश्यंभावात्। किञ्च वियदादिप्रपञ्चकारणस्य ब्रह्मणो वियदाद्यभावत्वाङ्गीकारे अवश्यं तत्कारणीभूताभावस्य तत्प्रागभावत्वापत्त्या तदत्यन्ताभावत्वमेव न स्यात्। प्रागभावरूपत्वे च प्रतियोगिनाश्य-

तात्त्विकसत्त्वाविरोधित्वेनार्थान्तरात् । अद्वैतश्रुतेरतत्वावेदकत्वापाताच्च । तत्प्रतियोगिनोऽप्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वापत्तेश्च । किञ्च निषेधप्रतियोगित्वं किं स्वरूपेण किंवा असद्विलक्षणस्वरूपानुपमर्देन पारमार्थिकत्वाकारेण । नाद्यः । श्रुत्यादिसिद्धोत्पत्त्यादिकस्यार्थक्रियासामर्थ्यस्याविद्योपादानकस्य तत्त्वज्ञाननाश्यस्य च वियदादे रूप्यादेश्च धीकाले विद्यमानेनासद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात् । त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थरूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकरूप्यं वा प्रतियोगीति त्वन्मतहानेश्च । अत्यन्तासत्त्वापाताच्च । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमपि ह्यन्यत्रासत्त्वेन संमतस्य पटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यन्तमिति त्वन्मतम् । अन्यथा अन्यत्र तत्सत्त्वापातात् । नहि तेषामन्यत्र सत्ता सम्भाविनीति त्वदुक्तेश्च । तथाच कथं नात्यन्तासत्त्वापत्तिः । नहि शशशृङ्गादीनामपीतोऽन्यदसत्त्वमस्ति । नच निरुपाख्यत्वमेव तेषामसत्त्वम् । निरुपाख्यपदेनैव ख्यायमानत्वात् । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानस्यासत्प्रतीतिनिरासस्य असत्पदप्रयोगस्य

---

त्वाद्यापत्तेश्चेति भावः । प्रातिभासिकत्व इति ॥ आगन्तुकदोषप्रयुक्तभानत्व इत्यर्थः । तथाच घटवति घटप्रतियोगिकनिषेधइव प्रपञ्चवति ब्रह्मणि अन्यत्र वा तत्प्रतियोगिकनिषेधे आगन्तुकदोषप्रयुक्तभानरूपाध्यास एव परमते पर्यवसित इति प्रपञ्चे तादृशप्रतिषेध[1]प्रतियोगित्वं साधयतः परस्य न तत्र स्वाभिमतमिथ्यात्वसिद्धिः । अत एव प्रपञ्चसत्यत्ववादिना तथा मिथ्यात्वं साधयन्तं (परं) प्रति सिद्धसाधनोद्भावनमर्थान्तरोद्भावनं वा सुकरमिति भावः । तस्य बाध्यत्वेनेति ॥ अध्यस्तत्वे सत्यागन्तुकदोषजन्यस्य परेण व्यावहारिकशब्दार्थत्वेन स्वीकृतस्य ब्रह्मज्ञानबाध्यत्वस्वीकारादित्यर्थः । तात्त्विकसत्त्वाविरोधित्वेनेति । परेण समसत्ताकयोरेव विरोधस्वीकारादिति भावः ॥ अद्वैतश्रुतेरिति ॥ यद्यपि परमते अद्वैतश्रुतेरखण्डचिन्मात्रपरत्वेन नातत्त्वावेदकत्वम् । तथापि तच्छ्रुतितः प्रपञ्चमिथ्यात्वसिद्धिं प्रार्थयमानेन परेण तच्छ्रुतेरखण्डचिन्मात्रपरत्वमङ्गीकार्यम् । अन्यथामिथ्यात्वशरीरप्रविष्टत्रैकालिकनिषेधासिद्ध्या तद्घटित(मूर्तिक)मिथ्यात्वासिद्धिप्रसङ्गादिति भावः । तत्प्रतियोगिन इति ॥ व्यावहारिकनिषेधप्रतियोगिन इत्यर्थः । ननु किमेवं विमतः प्रपञ्चः पारमार्थिकः अप्रातिभासिकत्वे सति व्यावहारिकनिषेधप्रतियोगित्वादितिसाधनमभिप्रेतं किं वा पारमार्थिकत्वे अप्रातिभासिकत्वे सति व्यावहारिकनिषेधप्रतियोगित्वं प्रयोजकमभिप्रेतम् ? नाद्यः व्याप्तिग्रहस्थलाभावात् । न द्वितीयः त्वदुक्तं प्रयोजकं विनापि ब्रह्मणः पारमार्थि-

[1] निषेधः इति पाठान्तरम् ।

त्वायोगाच । नाप्यपरोक्षतोऽप्रतीयमानत्वमसत्त्वम् । नित्यातीन्द्रियेऽपि सत्त्वात् । नापि क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वमसत्त्वं, जगति शुक्तिरूप्यादौ चैवंविधासद्वैलक्षण्यस्य शून्यवादेऽपि सत्त्वात् । त्वयाप्यसत्त्वेनाप्रतीयेतेतिवदतोक्ताप्रतीतिं प्रति प्रयोजकस्यान्यस्यैवासत्त्वस्य वक्तव्यत्वाच । ब्रह्मण्यङ्गीकृतं यत्प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वात्मकाबाध्यत्वरूपं सत्त्वं तद्विरुद्धस्यैवासत्त्वरूपत्वाच । अन्यथा अप्रतीत्यनुपाधिकासत्त्वाभावे ब्रह्मण्यपि सत्त्वेन प्रतीतिरेव सत्त्वं स्यात् । येन पुंसा शशशृङ्गाभावो न निश्चितः तस्य गोशृङ्गमस्तीतिवाक्यादिव शशशृङ्गमस्तीतिवाक्यादपि ज्ञानोत्पत्तेश्च । त्वन्मतेऽपि हि तत्राध्यस्तस्याज्ञानस्यानिर्वाच्यत्वेऽप्यधिष्ठानमसदेव । वक्ष्यते चैतदनिर्वाच्यत्वभङ्गे । "तद्धैक आहुरसदेवेदमग्र आसीत्" इतिश्रुत्याप्यसतः सत्त्वेन प्रतीतेश्च । नापि सदनिर्वाच्याभ्यामन्यत्वमसत्त्वं, अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्याश्रयात् । लाघवेन सार्वत्रिकत्रैका-

---

लत्वेन व्यभिचारादिति चेन्न । आद्यपक्षाङ्गीकारे दोषाभावात् ब्रह्मण एव व्यतिरेकव्याप्तिग्राहकस्थलत्वात् । न चाप्रयोजकता । निरुपाधिसहचारकपनत्सत्त्वेनाप्रयोजकत्वाभावात् । न च तत्रापरिच्छिन्नत्वमेवोपाधिः । तस्य पक्षमात्रव्यावर्तकत्वेन पक्षेतरत्वादिति भावः । अन्यथेति । अन्यथाऽसत्त्वेनासंमतस्य इत्यर्थः । ननु निरुपाख्यत्वं किं प्रतिपादकशब्दशून्यत्वं किंवा प्रतीतिमात्रविषयत्वमिति विकल्प्य तत्राद्ये दोषमाह निरुपाख्यपदेनेवेति । यद्यपि निरुपाख्येति शब्दं पदमिति पक्षे न पदं किन्तु वाक्यमेव । तथाच निरुपाख्यत्वं पदावाच्यत्वमित्युक्ते न कश्चिद्दोषः । तथाप्यसत्त्वमात्रस्य शशशृङ्गादेरपि शशशृङ्गादिपदवाच्यत्वमस्त्येव । अन्यथा कस्य विशेषणमसत्त्वादिकमित्यवधेयम् । द्वितीये त्वाह असत इति । ननु ब्रह्मभिन्ने शून्यवादिभिरस्माकं साम्यसंबन्धस्याह त्वयापीति । तथाच वादिप्रतिवादिनोर्भेदः स्यादिति भावः । ननु सत्त्वेनाप्रतीतिरपरोक्षत्वेनाप्रतीतौ प्रयोजिकेति वादिप्रतिवादिनोरभेद एव नेत्यत आह ब्रह्मणीति । ननु ब्रह्मनिष्ठसत्त्वविरोधित्वं किं तद्विरहव्याप्यत्वं किं वा तद्विरहरूपत्वम् ? नाद्यः । तस्यासत्त्वेऽसत्त्वात् । व्याप्यत्वस्य साध्यनाधिकरण्यगर्भत्वात् । असतोऽनधिकरणत्वात् । न द्वितीयः । तस्य प्रपञ्चसाधारण्येनासत्पदप्रवृत्तिनिमित्तत्वायोगादिति चेन्न । तद्विरहरूपस्यैव ब्रह्मनिष्ठसत्ताविरोधित्वरूपत्वेन विवक्षितत्वात् । न च तस्य प्रपञ्चसाधारणत्वेनासत्पदप्रवृत्तिनिमित्तत्वायोगः । प्रपञ्चः प्रतिपन्नोपाधिकत्रैकालिकनिषेधप्रतियोगी । तथेति चिरप्रतिपन्नरजतायां ब्रह्मनिष्ठसत्ता-

¹ तस्याकल्पत्वादिति पाठान्तरम् ।

लिकनिषेधाप्रतियोगिरूपसदन्यत्वस्यैव तत्त्वाच्च। अनिर्वाच्यस्यापि स्वरूपेण त्रैकालिकनिषेधेऽसतोऽनिर्वाच्यादन्यत्वासिद्धेश्च। अर्थक्रियासामर्थ्याभावादिकमसत्त्वमित्यशक्यशङ्कम्। शुक्तिरूप्यादौ शुद्धब्रह्मणि च सत्त्वात्। नच निःस्वरूपत्वमसत्त्वं मिथ्याभूतं तु सस्वरूपमिति वाच्यम्। मिथ्याभूतस्यापि स्वरूपेणैव त्रैकालिकनिषेधप्रतिपक्षे निःस्वरूपत्वस्य दुर्वारत्वात्। नच मिथ्याभूतं स्वरूपं मिथ्यात्वादेव स्वरूपेण त्रैकालिकनिषेधसामानाधिकरण्याविरोधीति

---

विरहस्य तत्रासिद्धत्वेन प्रपञ्चसाधारण्यासिद्धेरिति भावः। ज्ञानेनापसेधेति। तदनङ्गीकारेऽनुभवविरोध इति भावः। वक्ष्यते चैतदनिर्वाच्यत्वभङ्ग इति। आभासभूतानिर्वाच्यस्यानाभासभूतासच्छशशृङ्गादेः शशशृङ्गमस्तीत्यादिवाक्यादपि प्रत्यक्षादिन इव प्रतीत्यनङ्गीकारे ब्रह्मजगतोस्त्रैलक्षण्यमेव न सिध्येत्। असत्प्रतीतिः परेणावश्यमङ्गीकार्येति वक्ष्यत इत्यर्थः। तदुक्त आहुरिति। नह्येतच्छ्रुतिगतासत्पदस्याप्याभासभूतानिर्वचनीयासत्परत्वं परेणाभ्युपगन्तुं शक्यम्। तच्छ्रुतेर्बौद्धमतनिराकरणार्थं प्रवृत्ततया तत्रत्यासत्पदस्य बौद्धाभिमतासत्परतया एव स्वीकार्यत्वात्। अन्यथा कथमसतः सज्जायेतेति उत्तरवाक्ये तन्निराकरणानुपपत्तिरिति भावः। असत्त्वनिरूपितत्वेनेति। अनिर्वाच्यत्वस्य सद्विलक्षणत्वे सत्य[1]सद्विलक्षणत्वरूपत्वेनासत्त्वघटितमूर्तितयेत्यर्थः। नन्वस्मिन् पक्षे वाच्यत्वमनिर्वाच्यत्वं, न तु सदसद्वैलक्षण्यगर्भं वा असत्त्वानधिकरणत्वगर्भं वा येनानिर्वाच्यत्वस्यासत्त्वघटितमूर्तित्वेनान्योन्याश्रयः स्यादिति चेन्न। अनिर्वाच्यत्वे बाधान्यथानुपपत्तेः प्रमाणत्वेन तदर्था वाच्यत्वान्यस्यैवानिर्वाच्यत्वस्य वक्तव्यत्वात्। यद्वा एतत्स्वरसादेवाह लाघवेनेति। ननु निरुक्तमसत्त्वमनिर्वाच्यसाधारणमित्यत आह अनिर्वाच्यस्यापीति। शुक्तिरूप्यादावेति। तथाच तत्रैवातिव्याप्तिरिति भावः। नहि शुक्तिरूप्यं शुद्धं ब्रह्म वास्तवसत्त्वेन परेण स्वीकृतमिति। ननु शुक्तिरूप्यादावर्थक्रियाभावोऽसिद्धः। बाधानन्तरं प्रतियोगित्वेनात्मनः स्वनिवृत्तिं प्रत्येव जनकत्वात्। कटककुण्डलादिष्वर्थक्रियाभावस्यापि विनष्टरूप्यादिविनष्टघटपटादिसर्वसाधारणो वास्तीति तत्साधारणो नासत्त्वापादकः। किञ्चाऽऽवरणदशायां जनकत्वावच्छेदकावच्छिन्नस्य कार्याव्यवहितपूर्वकालनियतवृत्तित्वदशायामर्थक्रियाऽजनकत्वेऽपि तद्दशायां ब्रह्मणोऽप्यर्थक्रियाजनकत्वमविरुद्धमिति चेन्न। बाधानन्तरं मम शुक्त्यज्ञानं नष्टं तत्र मम रूप्यभ्रमो नष्ट इतिवत् शुक्तिरूप्यमुत्पन्नं नष्टमिति कस्याप्यननुभवेन तदुत्पत्तिविनाशयोरेव प्रमाणाभावात्। यत्तु शुद्धब्रह्मणि अन्तःकरणवत् शुद्धत्वदशायां जनकतावच्छेदकविरहात् तद्वासितविषयार्थक्रियाजनकत्वेऽपि तद्दशायां तदविरुद्धमित्युक्तं तन्न। अन्तर्भूतत्वाभावतया

[1] असद्विलक्षणत्वे सति सदसद्विलक्षणत्वरूपत्वेनेति पाठान्तरम्।

वाच्यम्। स्वदेशकालयोस्तत्स्वरूपसहिष्णोस्तत्स्वरूपप्रतिषेधत्वस्य पारिभाषिकत्वापातात्। अन्यथा तन्तुष्विवातन्तुष्वपि व्यावहारिकपटस्वरूपापातात्। प्रागभावादिसमानकालीनत्वेनाप्यविशेषापाताच्च। तुच्छेऽपि परोक्षप्रतीत्याद्यन्यथानुपपत्त्या एतादृशस्वरूपस्यापि सुवचत्वाच्च। तस्मात्सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वमेवात्यन्तासत्त्वम्। तत्र तदानीमसदित्यनेन तत्र तदा निषेधप्रतियोगित्वस्यैवात्यन्तासदित्यनेनापि सर्वत्र सदानिषेधप्रतियोगित्वस्यैव प्रतीतेः। नच मिथ्याभूतस्यापि स्वरूपेणैव निषेधइतिपक्षे तदभावः सप्रतियोगिकः तुच्छाभावस्तु निष्प्रतियोगिक इति वा मिथ्याभूतस्य सदा सर्वत्र सद्वैलक्षण्यमात्रं तुच्छस्य तु स्वरूपेणैव प्रतिषेध इति वा, वैषम्यं वक्तुं शक्यम्।

---

भुत्वव्यवधारितस्य विशुद्धचैतन्यस्यावच्छेदकीभूतधर्मस्याकारिसिद्धे स्वभावव्याकोपापत्तेः। नचौपाधिकत्वमङ्गीकारात् तस्य स्वाभाविकात्यन्तिकत्वमविरुद्धमिति वाच्यम्। अनाद्यविद्यासङ्गस्यानौपाधिकत्वात्। लोकवेदयोरागन्तुक एव उपाधिप्रागभावप्रयुक्तप्रागभावप्रतियोगिन्यौपाधिकत्वव्यवहारस्य दर्शनात्। अन्यत्र तददर्शनाच्च। नचवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वेनौपाधिकत्वे परिभाषामात्रप्रसङ्गात्। अपेक्षाबुद्धिनिवृत्तिप्रयुक्तनिवृत्तिप्रतियोगिद्वित्वादौ तदुपाधिकत्वाव्यवहाराच्चेति। स्वदेशकालयोरिति। कदापि[1] तत्स्वरूपप्रतिषेध(क)स्वभावत्वाभावेऽपि तन्निषेधरूपत्वेऽतिप्रसङ्ग इति भावः। पटस्वरूपमात्रापादने तत्र प्रातिभासिकपटसत्त्वादिष्टापत्तिरित्यत आह व्यावहारिकेति। अर्थक्रियासमर्थपटस्वरूपापादनादित्यर्थः। तन्त्वभावस्य व्यावहारिकपटस्वरूपसहिष्णुता न तत्स्वरूपसत्तापादिका। किन्तु तत्सामग्री। सा च तन्तुष्वेवास्ति। नातन्तुष्वपि। कार्यव्यवस्थादर्शनेन तत्सामग्र्याः तत्रैव कल्पनादित्यनुशयादाह प्रागभावादीति। तथा च तन्तुषु व्यावहारिकपटसत्त्वकाले तत्र विद्यमानोऽपि तत्पटात्यन्ताभावो यथा तत्र तत्पटसत्त्वाविरोधी तथा तत्रैव तन्तुषु तत्पटसामग्रीतारतम्यविशिष्टप्रागभावः स्वयमेव स्वनाशरूपं तमेव पटं न विरुन्ध्यात्। उत्पन्नो वा पटस्तत्रैव तन्तुषु विद्यमानः स्वकाले स्वाभावरूपं प्रागभावं न विरुन्ध्यात्। एवं स एव पटस्तत्रैव तन्तुषु स्वकालेऽपि स्वनाशासहिष्णुश्च स्यात्। ध्वंसो वा स्वकाले तत्र स्वप्रतियोगिभूतपटसहिष्णुश्च स्यात्। क्रमविशेषस्यागत्या दोषत्वेन स्वाङ्गीकारादित्यर्थः। तुच्छेऽपीति। यथा अपरोक्षप्रतीत्यन्यथानुपपत्त्या प्रातिभासिकस्य रजतादिवत् सत्त्वरूपत्वं तथा परोक्षप्रतीत्यन्यथानुपपत्त्या धर्माधर्मादिवत् असतोऽपि सत्त्वरूपत्वं

[1] कदाचिदपीति ग्रन्थान्तरे।

अथ मतम् । असतोऽसत्त्वादेवात्यन्तिकनिषेधप्रतियोगि(त्वम)तापिनेति । तन्न । असत्त्वस्योक्तनिषेधप्रतियोगित्वरूपत्वेन हेतोर्विरुद्धत्वात् । असतोऽसत्त्ववत्, सद्वैलक्षण्यवत्, त्वयोच्यमानप्रतियोगित्वाभाववत्, परोक्षज्ञानव्यवहारौ प्रति विषयत्ववदसद्वैलक्षण्यं प्रति प्रतियोगित्ववच्च निषेधप्रतियोगित्वस्याप्युपपत्तेश्च । प्रागभावादिदशायामसत एव घटादेस्तत्प्रतियोगित्वदर्शनेन प्रतियोगित्वस्य रूपादिवद्धर्मिसत्ता(निर)(त्तासापेक्षाभावाच्च) नपेक्षत्वाच्च । कालान्तरे सत्त्व(स्यचे)स्येदानीमनुपयोगात् । शिष्टमनिर्वाच्यत्वभङ्गे वक्ष्यते । एतेन यदुक्तं मकरन्दे । असतोऽप्रसक्तेर्निषेधाप्रतियोगित्वमिति तच्च निरस्तम् । असतोऽप्रसक्त्या ब्रह्मजगतोरसद्वैलक्षण्यस्य नासदासीदिति श्रौतनिषेधस्यासति च सद्वैलक्षण्यस्य प्रतियोगित्वाभावस्य चासिद्ध्यापातात् । तस्यापि प्रतियोगिप्रतीत्यधीनसिद्धिकत्वात् । ननु

---

स्यात् । अथैतदप्रयोजकत्वान्न सत्स्वरूपत्वसाधकमिति चेत्तर्हि अपरोक्षप्रतीतिविषयत्वमपि न सत्स्वरूपत्वसाधकमप्रयोजकत्वात्, आहार्यापरोक्षस्थले उक्तरीत्या त्वदभिमतसामग्र्यभावात् तद्विषयीभूतरजतादेर्निःस्वरूपत्वस्य दुर्वारत्वात् तत्रापरोक्षप्रतीतिविषयत्वस्य व्यभिचाराच्चेत्यर्थः । उपसंहरति तस्मादिति । परिशेषादित्यर्थः । अनुभवबलादपि सर्वत्र त्रैकालिकनिषेधप्रतियोगित्व-मेवात्यन्तासत्त्वमित्याह तत्रेदानीमसदित्यनेनेति । नचेति । नच वक्तुं शक्यमिति योजना । तदभावः मिथ्याभूतस्याभावः । कुतो वैलक्ष्यं वक्तुं न शक्यमिति चेत् मिथ्यात्यन्तासत्पदार्थ-योरुभयोरप्युक्तरीत्या स्वरूपविरोध्यभावप्रतियोगित्वस्याविशेषादिति भावः । असत्त्वस्येति । असत्त्वस्य स्वरूपेण सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वरूपत्वेन तद्रूपहेतुना तादृशनिषेधप्रति-योगित्वाभावसाधने विरोधः स्यादिति स्फुटत्वादित्यर्थः । न केवलमसत्त्वमद्वैलक्षण्यादिधर्म-विशेषेषु धर्मिसत्त्वनिरपेक्षत्वदर्शनात् तत्प्रतिबन्द्या तद्दृष्टान्तेन वा मया प्रतियोगित्वं धर्मिसत्त्व-निरपेक्षत्वं साध्यते अपि तु प्रतियोगित्वे तन्निरपेक्षत्वं प्रमाणदृष्टं चेत्याह प्रागभावादिदशाया-मिति । यो घटो घटिकाद्वयानन्तरमत्रोत्पत्स्यते स इदानीमत्र नास्तीति पूर्वमत्रोत्पन्नो यो घटः स इदानीमत्रैव मुद्गरपातेन ध्वस्त इति च प्रत्यक्षादिना तत्र तत्र तदानीं स्वरूपेणासत एव वस्तुतः प्रामाणिकघटे प्रागभावध्वंसप्रतियोगित्वयोरनुभवादित्यर्थः । ननु प्रतियोगी स्वरूपेण कदाचित्सत्त्वा-पेक्षत इत्याह कालान्तर इति । ननु रूपादिवत् प्रागभावप्रतियोगित्वादिकमपि धर्मिसत्तां धर्मि-सत्त्वमपेक्षते ननु स्वमसत्त्वात्मकत्वेऽपि । लाघवेन धर्मसत्त्वं धर्मिसत्त्वमात्रस्यैव प्रयोजकत्वादित्यत आह शिष्टमिति । एवमसत्त्वस्यापि धर्मतया तद्धर्मिणोऽपि सत्त्वापत्तिनिवारणाय स्वभावाय । अमद्वि-

तत्रशब्दाभासादिना बुद्धिपूर्वारोपेण वा प्रसक्तिर्वा । परार्थेन शब्देनाप्रसक्तस्यानिषेधेऽपि शब्दाभासादिमूलके प्रतियोगिस्मृत्यादिके सति प्रत्यक्षेणाप्रसक्तस्यैव वा निषेधो युक्तः । अन्यथा अंगुल्यग्रे हस्तिशताभावो न सिद्ध्येदिति चेत् समं प्रकृतेऽपि । शशशृङ्गं नास्तीत्यबाधितप्रतीतेः । न च तत्रापि बुद्धिपूर्वकमारोपितस्यानिर्वाच्यस्यैव शृंगस्य निषेधः । अनाभासस्यैवारोप्य निषेध इति तार्किकमते आभासस्यानिर्वाच्यस्य प्रसक्त्या अनाभासस्य निषेध इति त्वन्मते चानिर्वाच्यान्यस्यैव शृङ्गस्य निषेद्धव्यत्वात् । जगदादावनिर्वाच्यभूताभासासद्वैलक्षण्यमेव नत्वनाभासासद्वैलक्षण्यमित्यापाताच्च । ननु सदा सर्वत्राविद्यामानत्वमसत्त्वं चेदनाश्रितात्मादिविशुद्धव्याप्त्यन्ताभावोऽपि केवलान्वयीत्यात्मादिरप्यसन्स्यादिति चेत् तर्हि त्वन्मतेऽपि आत्मा मिथ्या स्यात् । तस्यापि "स एवाधस्तादि"त्यादिश्रुतिप्रतिपन्नो-

---

भावप्रसङ्ग इत्यादि कल्प्यत इत्यर्थः । एतेन यदुक्तं मकरन्द इति । तदेव निषेधप्रतियोगि भवति यत् प्रसक्तिमद्भवति । असच्च न प्रसक्तिमदतो न निषेधप्रतियोगि । न च ज्ञानमात्रं प्रसक्तिः तथासत्यप्रसक्तप्रतिषेधत्वस्य क्वापि दोषभावप्रसङ्गात् । किं तु प्रतियोग्यधिकरणसंसर्गज्ञानम् । न ह्यसतः क्वचिदप्यधिकरणे संसर्गज्ञानं संभवति सामग्रीविरहात् । अतोऽसति निषेधप्रतियोगित्वं नाङ्गीकारार्हमिति यन्मकरन्द उक्तं तदनेन उच्यमानेन दोषेण निरस्तमित्यर्थः । एतेनेत्यनेनोच्यमानदोष एव क इत्यतस्तं निदर्शयति अन्यतोऽप्रसक्तेरिति । यद्यपि नासदासीदित्यत्रासत्त्वधर्मेण यावत्कालसम्बन्धेन नात्यन्तासत्त्वप्रतिपादनम् इति तच्छ्रुतिर्न तन्निषेधपरा । तथापि नासदासीदिति श्रुत्यर्थान्यथानुपपत्त्यानिर्वचनीयाज्ञानसिद्धिमङ्गीकुर्वत्परकीतिमाश्रित्यैवं दूषणाभिधानमिति द्रष्टव्यम् । तुल्यन्यायतया असतो निषेधप्रतियोगित्वं दुर्निरसमिति मकरन्दमतसिद्धान्ती परमुखेन तत्र स्वोक्तदूषणोद्धारप्रकारमेवं वाचयति[1] ननु तत्रेति । तत्र जगतोऽसतीत्यर्थः । प्रसक्तिर्वेति वाशब्दः अप्रसक्तस्यैव वेति प्रथमवाशब्दोक्तपक्षान्तरापेक्षया पक्षान्तरद्योतको द्रष्टव्यः । अन्यथेति । क्वापि कस्यचिदपि तदधिकरणसंबन्धायोग्यत्वेन तत्प्रसक्तिरहितस्य निषेधानङ्गीकार इत्यर्थः । समंमिति । शशशृङ्गं नास्तीति प्रतीत्यन्यथानुपपत्तितुल्येत्यर्थः । ननु शशशृङ्गं नास्तीति प्रतीतिर्नासच्छृङ्गविषयकं किन्त्वनिर्वचनीयशृङ्गविषयकमतोऽनेन्याशङ्कां निराकरोति न चेति तत्रापीति ॥ अनिर्वाच्यान्यस्यैवेति ॥ तार्किकमते विशेषणाभावात् त्वन्मते च विशेष्याभावात् विशिष्टाभावस्य निषेधप्रतियोगित्वमविशिष्टमित्यर्थः । ननु प्रसक्त्या

[1] वादयतीति पाठान्तरम् ।

पाधौ कालत्रयेऽप्यभावात्। अथ विभुत्वेनोर्ध्वाधरीभावहीनोऽप्यात्मा सामान्यादिवत्स्वदेशकालयोरप्यस्ति, सदा सर्वत्रात्मेत्यबाधितप्रतीतेरिति न तस्य मिथ्यात्वम्। तर्हि तत एव नासत्त्वम्। देशकालावपि सदा सर्वत्र देशकालावित्यबाधितप्रतीत्या प्रमेयत्वाभिधेयत्ववत्तार्किकाभिमत(देशका)दिकालात्यन्ताभाववच्च स्ववृत्ती अन्योन्यवृत्ती च। अन्यथा त्वन्मतेऽपि

---

निषेधबुद्धिरित्येवास्माकमभिमतम्। निषेधश्च तार्किकमतेऽनाभासस्यैव, प्रसक्तिरपि तस्यैव। अस्माकं तु प्रसक्तिराभासस्य। निषेधोऽपि तस्यैवेत्यन्यदेतदित्यत आह जगदादाविति। आदिपदेन जगद्ब्रह्मणोरित्यर्थः। न चेष्टापत्तिः। परेण जगद्ब्रह्मणोरनाभासासद्वैलक्षण्यस्याभ्युपगतत्वादिति भावः। ननु स्वरूपेण सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं नात्यन्तासत्त्वम्। तथासत्यात्मादिद्रव्याणामप्यसत्त्वापत्तिरिति शङ्कते नन्विति। ननु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्। न चावृत्तिपदार्थस्यात्मादेः प्रतिपन्नोपाधिरस्तीत्यत आह तस्यापीति। आत्मनोऽपीत्यर्थः। यद्यप्यात्मनोऽपि येन रूपेणोपाधिप्रतिपत्तिरस्ति तेन रूपेण मिथ्यात्वमिष्टमेव। नहि विशिष्टाकारेणोपहिताकारेण वात्मा तात्त्विक इति परेणाभ्युपगम्यते। विशुद्धचैतन्यरूपस्य तस्योपाधिप्रतिपत्तिरेव नास्तीति शङ्कात्र भवति। तथापि येन रूपेण प्रपञ्चस्योपाधिरस्ति तेन रूपेण तस्य मिथ्यात्वमिष्टमेव। प्रपञ्चनिषेधश्रुतेर्विशिष्टाकारेणोपहिताकारेण वा तद्विषयत्वमङ्गीकृत्याविरोधवर्णनसंभवाच्च तद्विरोधशङ्का। शुद्धप्रपञ्चे तूपाधिप्रतिपत्तिरेव नास्तीत्यभ्युपगमापत्त्या परेणोक्तशङ्का नैवंविधविषये कर्तुमर्हा। आत्मसद्रूपत्वावेदकश्रुतिवत् प्रपञ्चसद्रूपत्वावेदकप्रत्यक्षादेरविशेषात्। नेह नानास्तीतिश्रुतेः प्रपञ्चविषयत्ववदात्मविषयत्वस्याप्यविशेषाच्च। नहि घटत्वावच्छिन्नघटो नास्तीति वाक्यमाधारभूतघटविषयं नेत्यस्तीति। यद्यपि स एवाधस्तादित्यादिश्रुतिः स एवेदं सर्वमित्युत्तरवाक्यानुसारेण सर्वात्मकत्वपरा। नोपाधिप्रतिपत्त्यर्था। अस्तातिप्रत्ययस्य "सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरिति" पाणिनिना सप्तमीपञ्चम्यन्ताभ्यामिव प्रथमान्तादपि स्मरणात् स एवाधस्तादित्युपक्रमगतास्तातिप्रत्ययान्ताविरोधात्। तथाप्यनन्तगुणसंविज्ञानवपुर्महिमाधिन्येत्यादिश्रुतीतिश्रुतिशब्देन तुर्यं सत् सर्वदृक् सदा, सर्वेषु भूतेष्वेवं, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिश्रुतिविवक्षितेत्यदोषः। महीति। सकलसंबन्धावच्छिन्नत्रैकालिकनिषेधप्रतियोगित्वमसत्त्वम्। तच्च न यत्किञ्चित्संबन्धवति संभवतीति भावः। नन्वेवं देशकालयोरप्यसत्त्वापत्तिः। तयोरात्माश्रयेण स्ववृत्तित्वासंभवात्। विभुत्वेनान्योन्यवृत्तित्वासंभवाच्चेत्यत आह देशकालावपीति। अबाधित-

¹ स्वल्पा मादौन पाठान्तरम्।

तयोः प्रातिभासिकसत्त्वं स्यादिति न कश्चिद्दोषः । तस्मात्स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वे अत्यन्तासत्त्वं दुर्वारम् । तदुक्तम् । "नासीदस्ति भविष्यच्च तदितिज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवांगीकृतं पुन"रिति । नापि पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वमित्यन्त्यः । अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात् । रूप्यं नास्ति नासीन्न भविष्यतीति नेह नानास्ति किञ्चनेति च स्वरूपेणैव निषेधाच्च । अन्यथा नृशृङ्गादेरपि न स्वरूपेण निषेधः किन्तु सत्त्वेनेति स्यात् । रूप्यवत्पारमार्थिकत्वस्याप्यपरोक्षप्रतीत्यन्यथानुपपत्त्या धीकाले वर्तमानतया निषेधायोगाच्च । पारमार्थिकत्वस्य पारमार्थिकत्वेन निषेधे त्वनवस्था । सुखाद्यनुभवरूपस्य ब्रह्मणोऽपि मयि सुखाद्यनुभव इत्यादिप्रत्यक्षेण स एवाधस्तादित्यादिश्रुत्या च प्रतिपन्नोपाधौ निर्धर्मकत्वेन

---

प्रतीत्येति । तथाच देशकालयोः स्ववृत्तित्वाङ्गीकारे नात्माश्रयो दोषःसिद्धविषयत्वादिति भावः । अन्यथेति । प्रतीताधिकरणस्य व्यावहारिकसंबन्धानाश्रयत्व इत्यर्थः । तयोरिति । देशकालयोरित्यर्थः । रूप्यं नास्तीति । तथाच दृष्टान्ते साध्यवैकल्यं पक्षे च बाध इति भावः । अन्यथेति । श्रुतविषयं परित्यज्य प्रतीतेरन्यविषयकल्पन इत्यर्थः । किन्तु सत्त्वेनेतीति । स्वरूपेण निषेधप्रतीत्य विशेषेऽपि रूप्यादेरपरोक्षप्रतीत्यन्यथानुपपत्त्या स्वरूपमङ्गीकृत्य पारमार्थिकत्वाकारेणैव तस्य त्रैकालिकनिषेधाङ्गीकारे अपरोक्षप्रतीत्यपेक्षया लाघवेन प्रतीतत्वमात्रस्यैव सत्स्वरूपत्वस्वीकारे तत्तन्त्वापत्त्या नृशृङ्गादेरपि स्वरूपमङ्गीकृत्य न स्वरूपेण निषेधोऽङ्गीकार्यः किन्तु सत्त्वेनैव सोऽङ्गीकार्यः स्यादिति भावः । किञ्च पारमार्थिकत्वस्यापि किं स्वरूपेण निषेधः किं वा पारमार्थिकत्वाकारेणेति विकल्प्याद्ये दोषमाह रूप्यवदिति । द्वितीय आह पारमार्थिकत्वस्येति । यद्यपि पारमार्थिकत्वरूपव्यधिकरणधर्मावच्छिन्ननिषेधः तदवच्छिन्नप्रतियोगिक एव । न पारमार्थिकत्वधर्मप्रतियोगिक इति तस्य स्वरूपेण पारमार्थिकत्वाकारेण वा निषेधप्रसक्तिरेव नेति नानवस्था । तथापि न विरोधः लाघवेन प्रतियोगितावच्छेदकस्यैवाभावसत्त्वविरोधितया पारमार्थिकत्वाकारेण रजतनिषेधोऽपि पारमार्थिकत्वनिषेध एव पर्यवस्यति तथापि विशिष्टाभावो व्यतिरिक्तः सिध्येदिति शक्तिभिन्नत्वः स्यादिति भावः । सुखाद्यनुभवरूपस्येति । नन्विदानीमनुभूयमानसुखस्य तदनुभवस्य च न ब्रह्मरूपत्वं विषयान्वयव्यतिरेकानुविधायित्वेन तज्जन्यत्वावश्यंभावात् तदनुभवस्यापि वृत्तिरूपत्वोपपत्तेश्च । तथाच ब्रह्मणि नास्तित्वमिति चेन्न । एषोऽस्य परमानन्दः[2] एषोऽस्य

[1] [illegible] इति पाठान्तरम् । [2] परम आनन्दः पाठान्तरम् ।

पारमार्थिकत्वाकारेण निषेधेनातिव्याप्त्यापत्तेश्च । प्रतिपन्नोपाधिशब्देनाध्यस्ताधिष्ठानविवक्षायां चाध्यस्तत्वस्य निरूप्यमाणमिथ्यात्वानतिरेकेणात्माश्रयात् । शेषमेवमध्याह्य । ब्रह्मणः प्रतिपन्नोपाध्यभावेऽपि पारमार्थिकत्वरूपधर्माभावस्य ब्रह्मण्यपरिच्छिन्नसद्रूपत्वाविरोधित्ववद्घटादेः प्रतिपन्नोपाधिसद्भावेऽपि पारमार्थिकत्वाभावस्य घटादौ परिच्छिन्नसद्रूपत्वाविरोधित्वोपपत्तेश्च । नहि ब्रह्मण्यपि स्वरूपातिरिक्तं पारमार्थिकत्वं तत्त्वतोऽस्ति । अद्वैतहानेः । नच सोपाधिकबाधाभावगर्भितं पारमार्थिकत्वं निरुपाधिकब्रह्ममात्रम् । एवञ्च ब्रह्म कालत्रयेऽपि सत् वियदादि रूप्यादिच कदाचिदेवेति नित्यत्वानित्यत्वाभ्यामेव वैषम्यम् । नतु सत्यत्वमिथ्यात्वाभ्याम् । तथाच "स्वरूपेण त्रिकालस्थनिषेधो नास्ति ते मते । रूप्यादे-

---

परमा गतिः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुत्या ब्रह्मानन्दस्यैव विद्वत्परमगतित्वासंकुचितसर्वभूतानन्दत्वयोरावेदनस्य त्वया स्वीकृतत्वेन विषयैरपि स्वरूपसुखमेवाभिव्यज्यते नतु तदन्यं सुखमस्तीति विवरणोक्तया च त्वया ब्रह्मानन्दान्यविषयजन्यसुखस्यानभ्युपेयत्वात् । वृत्तेर्जडत्वेनानुभवरूपत्वस्यानभ्युपगतत्वाच्चेति । ननु प्रतिपन्नोपाधिशब्देनाध्यासाधिष्ठानं विवक्षितम् । ब्रह्म तु न काप्यध्यस्तमिति न तत्रातिव्याप्तिरित्यत आह प्रतिपन्नोपाधिशब्देनेति । तथाच नाध्यस्ताधिष्ठानं प्रतिपन्नोपाधिशब्दार्थः । किन्त्वाधारत्वेन प्रतीतमात्रमिति ब्रह्मण्यतिव्याप्तिः सुस्थेति भावः । नन्वलक्ष्ये लक्षणगमनमतिव्याप्तिः । नचैवं प्रकृते । धर्मविशिष्टस्य ब्रह्मणोऽपि लक्ष्यत्वादित्यत आह ब्रह्मण इति । शुद्धस्येत्यर्थः । तथाप्यर्थान्तरं तदवस्थमेवेति भावः । यद्यपि घटादेः साधिकरणा सत्ता । तेनात्यन्ताभावस्य प्रतिपन्नोपाधिनिष्ठात्यन्ताभावः सत्तासामान्याभावमापादयति । ब्रह्मणस्तु निरधिकरणा सत्ता । अतः पारमार्थिकत्वेनाभावः सर्वत्र विद्यमानोऽपि न ब्रह्मसत्ताविरोधी । अन्यथा त्वन्मतेऽपि शुक्तिपदार्थोच्छेदापत्तिः । अत एव प्रतिपन्नोपाधिसद्भावाप्रयोजकत्वोपवर्णनमप्यसंगतम् । तस्य समानविषयत्वे(क)न प्रतिबध्यप्रतिबन्धकभावमूलनार्थत्वात् इति । तथापि सत्त्वासत्त्वग्राहकप्रमाणयोरुभयोरपि प्रमाणत्वोपपत्त्यर्थमत्रापि निरधिकरण(घट)सत्ताया अभ्युपेयत्वात् । अत एवापरिच्छिन्नसद्रूपत्वाविरोधित्ववदित्युक्तम् । वस्तुतस्तु प्रपञ्चस्येव ब्रह्मणोऽपि साधिकरणैव सत्ता । आकाशवत् सर्वगतश्च नित्यः । ध्रुवं सत्यं सर्वदृक् सर्वेन्यादिश्रुतेः । तथासंगत्वादिलक्षणश्रुतिविरोधः । ब्रह्मण्याधीनस्थितिकं सद्ब्रह्मयुक्तलवणवत् तत्पर्यवसानादिति भावः । ननु ब्रह्मणि पारमार्थिकत्वाभावो नास्त्येवेत्यत आह नहीति । नन्वद्वैतं सदा हीयेत यदि ब्रह्मातिरिक्तं पारमार्थिकत्वं स्यादित्यत आह नचेति । धर्मकालत्रयाबाध्यत्वरूपस्य पारमार्थिकत्वस्य केवलाधिकरण-

तात्त्विकत्वेन निषेधस्त्वात्मनोऽपि च"। नापि ज्ञानत्वेन ज्ञाननिवर्त्यत्वमिति तृतीयः। अतीतघटादावव्याप्तेः। शुक्तिज्ञानेन रूप्यं नष्टमिति कदा(चिदनुभवाभावेन)प्यननुभवेन तत्राप्यव्याप्तेश्च। एतावन्तं कालं शुक्त्यज्ञानमासीद्भ्रमआसीदित्यनुभवेन शुक्तिवत्सत्ये अज्ञानभ्रमादौ शुक्तिज्ञानेन तदज्ञानं नष्टमित्यनुभवेन ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य सत्त्वेनातिव्याप्तेश्च। अपरोक्षाध्यासं प्रति ज्ञानस्यापरोक्षज्ञानतया निवर्तकत्वेन ज्ञानत्वेनानिवर्तकत्वाच्च। ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वस्य चेच्छाद्यनिवर्त्ये स्मृतित्वेन स्मृतिनिवर्त्ये संस्कारादावतिव्याप्तेः। अनुभवत्वव्याप्यधर्मेण तन्निवर्त्यत्वस्य च यथार्थस्मृतिनिवर्त्यायथार्थस्मृतिविषयेऽव्याप्तेः। भ्रमोत्तरप्रमानिवर्त्यत्वस्य च तत्त्वज्ञानसंस्कारनिवर्त्याज्ञानसंस्कारे अव्याप्तेः। स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वस्य चानाद्यध्यासेऽभावात्। लाघवेनाज्ञानोपादानकत्व-

---

रूपत्वाभावादिति भावः। ननु पारमार्थिकत्वं त्रैकालिकनिषेधप्रतियोगित्वाभावः। अभावश्चास्मन्मतेऽधिकरणात्मैव। तदेव चाधिकरणं प्रतियोगिना निरूप्यते। ननु तद्घटितोऽपि। घटाभावे घटो नेतिवत्। तथा च न ब्रह्मणि पारमार्थिकत्वाभाव इत्याशङ्कामुपसंहारव्याजेन निराकरोति एवं चेति। इदमत्राकूतम्। घटादावपि पारमार्थिकत्वं त्रैकालिकनिषेधप्रतियोगित्वाभावः। सत्त्वाभावो घटाद्यधिकरणात्मैव। तदेव चाधिकरणं कदाचित्प्रतियोगिना निरूप्यते। ननु तद्घटितोऽपि। अभावाधिकरणकाभाववदेव। इयांस्तु विशेषः। ब्रह्म कालत्रयेऽपि सत्। घटादिकं तु कदाचिदेवेति। तथा चैतादृशवैषम्यं कादाचित्काभावाप्रतियोगित्वतत्प्रतियोगित्वाभ्यामेवोपपादनीयम्। न तु त्वदुक्तसत्यत्वमिथ्यात्वाभ्याम्। त्वदुक्तमिथ्यात्वस्य प्रपञ्चेऽभावादिति। अतीतघटादाविति। यद्यप्यतीतघटादौ न निवृत्तिः किन्तु प्रविलयमात्रमिति पराभ्युपगमः। तथापि घटो निवृत्त इत्यबाधितानुभवेन निवृत्तिरेवाङ्गीकार्या। अन्यथा विश्वमायानिवृत्तिरिति श्रुतमायानिवृत्तिरपि विलयरूपा स्यादिति भावः। साध्यनिर्वचनरूपत्वे दृष्टान्तो बाधो दोष इति ध्येयम्[1]। शुक्तिज्ञानेनेति। साध्यनिर्वचनरूपत्वे दृष्टान्तः साध्यविकल इत्यपि बोध्यम्। अव्याप्तेश्चेति। साध्यनिर्वचनरूपत्वे दृष्टान्तः साध्यविकल इत्यपि बोध्यम्। अतिव्याप्तेश्चेति। साध्यनिर्वचनरूपत्वेऽर्थान्तरमिति द्रष्टव्यम्। अपरोक्षज्ञानतयेति। तदिन्द्रियजन्यापरोक्षज्ञानतयेत्यर्थः। तेन चेत्तो वायुश्रोत्रजभ्रमस्य स्वाचापरोक्षज्ञानानिवर्त्यत्वेऽपरोक्षज्ञानत्वमपि न निवर्तकतावच्छेदकमिति शङ्का निरस्ता। ननु संस्कारादेर्न स्मृतित्वेन स्मृतिनिवर्त्यता। किन्तु योग्योत्तरात्मविशेष-

[1] बोध्यम् इति पाठान्तरम्।

स्यैव लक्षणत्वापाताच्च । तथाच "विज्ञाननाश्यता मिथ्यारूप्यादौ नानुभूयते । किन्त्वधिष्ठानवत्सत्ये तदज्ञानेऽनुभूयते " । एतेन स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वमिति चतुर्थोऽपि निरस्तः । अत्यन्ताभावस्य तात्विकत्वे प्रातिभासिकत्वे व्यावहारिकत्वे च दोषस्योक्तत्वात् । अत्यन्ताभावप्रतियोगित्वं स्वरूपेणेति पक्षे पारमार्थिक(त्वेनेतिचपक्षे)स्वाकारेणेति च पक्षे दोषस्योक्तत्वाच्च । पञ्चमेऽपि(किंसत्) सत्किं सत्ताजातिमद्विवक्षितं अबाध्यं वा ब्रह्म वा । नाद्यः । त्वन्मते घटादौ जातेस्सत्त्वात् । द्वितीये बाध्यत्वं मिथ्यात्वमिति स्यात् । तच्च निरस्तम् । न तृतीयः । सिद्धसाधनात् । नृशृङ्गादावपि सद्रूपत्वाभावादन्यस्याऽसत्त्वस्याभावेनात्यन्तासत्त्वापाताच्च । मन्मते अबाध्यत्वादिरूपस्य सत्त्वस्याऽभिधेयत्वादिवत् स्वाश्रितत्वेन ब्रह्मणि सत्त्वाभावे सद्रूपत्वासिद्धेश्च । तस्मात् । "अनिर्वाच्येऽप्रसिद्धयादिः प्रतीते प्रतिषेध्यता । स्वाश्रयेऽत्यन्तविरहः सद्विलक्षणता तथा । इति पक्षत्रयेऽत्यन्तासत्त्वं स्यादनिवारितम् । धीनाश्यत्वे त्वनित्यत्वमेव स्यान्न मृषात्मता " । मम त्वत्यन्तासत्त्वमेव मिथ्यात्वमिति नास्मत्प्रतिबन्दी ॥

॥ इति मिथ्यात्वनिरुक्तिभङ्गः ॥ १ ॥

---

गुणत्वेनेति शङ्कानिवारणायोक्तम् इच्छाद्यनिवर्त्य इति । संस्कारादावपीत्यादिपदात् सुखदर्शननिवर्त्यदुःखादेः परिग्रहः । अनुभवत्वेति । यत्र भ्रमोत्तरजातस्य भ्रमस्य स्वजन्यस्मृतिपर्यन्तं बाधो न जातः, प्रथमभ्रमाजनितस्मृत्या भ्रमजनितस्मृतिविषयबाधश्च दृश्यते तत्राव्याप्तिरिति[1] भावः । तत्त्वज्ञानेनेति । नन्वज्ञानसंस्कारस्यापि तत्त्वज्ञाननिवर्त्यत्वमेव स्वीक्रियते । अतो न तत्राव्याप्तिरिति चेन्न । अज्ञानस्येवाज्ञानसंस्कारस्याज्ञानत्वाभावेन ज्ञाननिवर्त्यत्वानुपपत्तेः । ज्ञानाज्ञानयोरेव विरोधात् । नचाज्ञानसंस्कारस्याप्यज्ञानोपादानतया तत्त्वज्ञानेन स्वोपादाननिवृत्तौ स्वस्यापि तद्द्वारा तन्निवर्त्यत्वमविकलमिति वाच्यम् । अज्ञानसंस्कारनिवृत्तौ कर्तव्यायां अज्ञाननिवृत्तेस्तत्त्वज्ञानद्वारत्वे मानाभावादिति भावः । ननु स्वोपादानाज्ञाननिवर्तकज्ञाननिवर्त्यत्वं विवक्षितम् । अतो न संस्कारादावव्याप्तिरित्याशङ्क्याह स्वोपादानेति । पञ्चमेऽपीति । सद्विविक्तत्वं मिथ्यात्वमिति पक्षेऽपीत्यर्थः । साधारणलक्षणेनापि दूषयति नृशृङ्गादावपीति । अन्यस्येति । प्रपञ्चव्यावृत्तस्येति शेषः । ननु त्वन्मतेऽपि सत्त्वमेव सद्रूपत्वं येन सत्त्वं सद्रूपं न स्यात् । स्वस्मिन् स्वस्यावृत्तेरित्यत आह मन्मत इति । ननु तव धर्मिविपर्ययीभूतार्थे यदेव मिथ्यात्वं तदेव ममापीत्यत आह मम त्विति । तथाकारे तवापसिद्धान्तः स्यादिति भावः ॥

॥ इति मिथ्यात्वनिरुक्तिभङ्गः ॥ १ ॥

[1] इत्यर्थ इति पाठान्तरम् ।

## ॥ अथ सामान्यतो मिथ्यात्वभङ्गः ॥

अस्तु वा मिथ्यात्वं यत्किंचित्। तथापि मिथ्यत्वमबाध्यं बाध्यं वा। आद्ये अद्वैतहानिः। न हि प्रपञ्चोपाधिकं भ्रमकालानिश्चितं तन्मिथ्यात्वं निरुपाधिकभ्रमकालनिश्चिताधिष्ठानब्रह्ममात्रम्। तस्य मां प्रत्यपि सिद्धत्वात्। दृश्यत्वादेर्मिथ्यात्व एव व्यभिचारश्च। मिथ्यात्वस्य चादृश्यत्वेऽनुमानवैयर्थ्यम्। तस्य मानाद्यस्पर्शत्वात्। अन्त्ये सिद्धसाधनं अद्वैतश्रुतेरतत्त्वावेदकत्वं च स्यात्। जगच्च सत्यं स्यात्। आत्मवत्। नचात्मत्वमुपाधिः। सत्यत्वं विना तद्विरुद्धस्य मिथ्यात्वस्य मिथ्यात्वे व्याघातवदज्ञातृत्वादिरूपानात्मत्वस्यासत्यत्वं विना व्याघाताभावेनोपाधेरप्रयोजकत्वात्। नच मिथ्यात्वं न ब्रह्ममात्रं किन्तु

---

अबाध्य(त्व)मिति पक्षेऽपि तत् ब्रह्मणोऽतिरिक्तं नवेति द्वेधा विकल्प्याद्ये दोषमाह आद्य इति। द्वितीय आह नहीति। प्रपञ्चघटितत्वभ्रमकालानिश्चितत्वाभ्यां विशिष्टस्य तद्रहितब्रह्माभिन्नत्वं बाधितमित्यर्थः। यद्यपि प्रपञ्चसत्यत्ववादिनो मते वेदैकसमधिगम्यस्य ब्रह्मणः भ्रमकालानिश्चिताधिष्ठानत्वमनुपपन्नम्। तथापि पराभ्युपगमानुसारेणैवमुक्तमिति ध्येयम्। किञ्च तथाभूतब्रह्मणो मिथ्यात्वरूपत्वे जगन्मिथ्येति प्रतिज्ञाया जगद्ब्रह्मसंबन्धीत्यर्थः स्यात्। एवञ्च सिद्धसाधनमित्याह तस्येति। किञ्चाबाध्यत्वेन स्वीकृतं मिथ्यात्वं दृश्यं नवेति विकल्प्याद्ये दोषमाह दृश्यत्वादेरिति। द्वितीय आह मिथ्यात्वस्य चेति। अनुमानवैयर्थ्यम् दृश्यत्वाद्यनुमानवैयर्थ्यम्। अन्त्य इति। बाध्यमिथ्यात्वस्य सत्त्वे जगत्यपि सत्त्वादिति भावः। अद्वैतश्रुतेरिति। यद्यप्यद्वैतश्रुतेरखण्डब्रह्मैक्यमात्रपरत्वेन नातत्त्वावेदकत्वम्। तथापि जगन्मिथ्यात्वमङ्गीकुर्वता तत्सिद्ध्यर्थं तत्रापि तच्छ्रुतेस्तात्पर्यं वाच्यम्। अन्यथा तदसिद्धिप्रसङ्गात्। तात्पर्यविषयसत्त्वे तत्र तात्पर्यस्य दुर्वारत्वाच्च। मानान्तराविरोधमात्रेण तत्सिद्ध्यङ्गीकारे त्वदभिमतब्रह्मणोऽपि तन्मात्रेण सिद्ध्युपपत्तौ वेदान्तानां ब्रह्मण्यपि तात्पर्याभावापत्तेरिति भावः। किञ्च मिथ्याभूतमिथ्यात्वस्य साधकत्वे तथा साधनतः परस्य नेष्टसिद्धिः। प्रत्युत ममैवेष्टसिद्धिरित्याह जगच्चेति। जगत्सत्यं भवितुमर्हतीति मिथ्याभूतमिथ्यात्वा(त्वका)दात्मवदित्यनुमानादित्यर्थः। सत्यत्वं विनेति। उपाधेः साध्यव्यापकताग्राहके सत्प्रतिपक्षादुत्थापकत्वं वाच्यम्। साध्यव्यापकताग्राहकं न संभवति। अनुकूलतर्काभावात्। हेतौ च साध्यव्याप्यताग्राहके तत्सत्त्वेन साध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्याव्यापकत्वादित्यर्थः। ननु मिथ्यात्वं ब्रह्मानतिरिक्तमेव। न च सोपाधिकस्य निरुपाधिकब्रह्माभेदायोगः सिद्धसाधनं चेति वाच्यम्। द्वितीयाभावोपलक्षित

द्वितीयभावोपलक्षितं ब्रह्मेति वाच्यम् । उपलक्षणे द्वितीयाभाव एव वाच्याऽवाच्यविकल्पात् । द्वितीयाभावाधिकरणतयाऽविद्याधिष्ठानतया(अविद्यासाक्षि)तत्साक्षितया च भासमानचिद्न्यस्योपलक्ष्यस्याभावेन द्वितीयाभावस्योपलक्षणत्वायोगाच्च । ननु रूप्यधर्मो मिथ्यात्वमपि मिथ्यैव । नच तथात्वे रूप्यस्य सत्यत्वं सत्यं स्यादिति वाच्यम् । धर्मिणो मिथ्यात्वे विरुद्धयोरपि धर्मयोर्मिथ्यात्वात् । परस्परविरुद्धयोरेकस्याभावेऽन्यस्य सत्त्वनियमस्तु यत्र धर्मी स(नृत)त्यस्तत्रैव । नहि वन्ध्यासुतस्य श्यामत्वाद्यभावे गौरत्वं सत्यम् । नवा स्वप्ने ज्ञातस्य गजस्य मिथ्यात्वे तत्रैव ज्ञातत्तदभावस्सत्य इति चेन्न । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं हि मिथ्यात्वम् । नच प्रतियोगित्वं धर्मान्तरवद्धर्मिसत्त्वा(त्ता)पेक्षमित्यनिर्वाच्यत्वभङ्गे वक्ष्यते । धर्म्यसत्त्वे धर्मासत्त्वं तु धर्मिसत्तासापेक्षधर्मविषयं मिथ्यात्वं तु

---

ब्रह्ममात्रत्वाभ्युपगमादित्याशङ्क्य निराकरोति नचेति । वाच्यावाच्यविकल्पादिति । उपलक्षणीभूतद्वितीयाभावस्य वाच्यत्वे जगन्मिथ्येत्युक्ते वाच्यद्वितीयाभावोपलक्षितब्रह्मसंबन्धीत्यर्थः स्यात् । तथाच सिद्धसाधनम् । अवाच्यत्वेऽपि ब्रह्मानतिरिक्तत्वे उपलक्षणत्वायोगः । अतिरिक्तत्वे चाद्वैतहानिरिति भावः । अत्र द्वितीयाभावस्योपलक्षणत्वं न मिथ्यात्वशरीरान्तर्भूतत्वम् । तथासति तस्य शुद्धब्रह्मरूपत्वेनोक्तसिद्धसाधनतादवस्थ्यात् । एवं चोपलक्षणत्वमुपलक्ष्यगतासाधर्मोपस्थापकत्वमेव द्वितीयाभावस्य वाच्यं तत्कथमित्यत । तच्च न संभवति स्वाधिकरणान्योपलक्ष्यसत्त्व एव तथात्वादित्याह द्वितीयाभावाधिकरणतयेति । यद्वा द्वितीयाभावरूपोपलक्षणोपस्थाप्यविशेषस्य भासमानचिदन्यस्याभावात् न द्वितीयाभावस्योपलक्षणत्वोक्तिर्युक्तेत्याह । द्वितीयाभावाधिकरणतयेति । मिथ्याभूतमिथ्यात्ववत्त्वहेतोरप्रयोजकत्वं शङ्कते ननु रूप्यधर्म इति । धर्मिणो मिथ्यात्वे इत्यनेन विमतं मिथ्यात्वं मिथ्या मिथ्याभूतधर्मकत्वात् वन्ध्यासुतश्यामत्ववदित्यनुमानं विवक्षितमिति बोध्यम् । विरुद्धयोरपीत्युक्तिरविरुद्धयोः सुतरामिति सूचयति । ननु परस्परविरुद्धधर्ममात्रे नैवंनियमः । गोत्वाश्वत्वोभयरहितस्य गजादेरपि सत्त्वात् । किन्तु परस्पराभावसमनियतधर्ममात्रे । तथाच तादृशयोर्धर्मयोर्मध्ये यदेकमसत्त्व नापर इति नियमः । एवं च यदि रूप्यं सत्यं तन्मिथ्यात्वं सत्त मिथ्यात्वमसत्त्वात् रूप्यं सदिति केनापि दुर्निरसम् । (एवं च यदि रूप्यमिथ्यात्वं मिथ्या तर्हि तत्सत्यत्वं सत्यं स्यादिति केनापि दुर्निरसम् ) नचैवं प्रकृते धर्मिरूपस्य वंध्यासुतस्य भावात् । धर्मयोः परस्पराभावनियतत्वाभावात् इत्यत आह नचेति । वक्ष्यमाणोपाधौ साधनव्यापकत्वमाशङ्क्याह नचेति । मिथ्याभूतधर्मिकत्वादित्युक्तानुमाने

तत्प्रतिकूलम्। अन्यथासिद्धसाधनात्। किञ्च प्रतिपन्नोपाधावनिषिद्धं प्रत्युत बाधकज्ञानेन विहितमपि रूप्यमिथ्यात्वं यदि प्रातिभासिकरूप्यसम्बन्धमात्रेण प्रातिभासिकं तर्हि सति ब्रह्मणि निषिद्धा अपि धर्मास्सन्तः स्युः। रूप्याधिष्ठानशुक्तिरपि प्रातिभासिकी स्यात्। रूप्ये प्रपञ्चे च सद्वैलक्षण्यं च सत्स्यात्। असद्वैलक्षण्यं चासत्स्यात्। असति च सद्वैलक्षण्यममस्त्यात्। रूप्यतन्मिथ्यात्वयोर्मिथ्यात्वे भ्रान्तिबाधव्यवस्था च न स्यात्। त्वदुक्तेन धर्मिणो मिथ्यात्वेन हेतुना साध्यस्य मिथ्यात्वमिथ्यात्वस्यापि प्रातिभासिकत्वापत्त्या हेतोरत्यन्ताप्रामाण्यं च स्यात्। हेतूक्तस्य धर्मिमिथ्यात्वस्य मिथ्यात्वे घटरूपादौ व्यभिचारापत्त्या सत्यत्वावश्यंभावाद्विरोधश्च स्यात्। नच त्वन्मते रूप्यादिकं वियदादिकं वा वन्ध्यासुतवन्निःस्वरूपम्। शून्यवादापातात्। स्वाप्नस्यापि कल्पितत्वेन तद्ध्वंसादेर्मिथ्यात्वेऽपि तन्मिथ्यात्वं स्वप्ने प्रतीतमपि आत्मवदबाधात्सत्यमेव। नच मिथ्यात्वं प्रपञ्चसमसत्ताकं। एवञ्च न तात्त्विकाद्वैतहानिः। नापि सिद्धसाधनम्। त्वन्मते प्रपञ्चे स्वसमसत्ताकमिथ्यात्वासिद्धेरिति वाच्यम्। मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्याऽनपोदित-

---

नमेवोपाधिमाह धर्म्यमत्व इति। धर्मिसत्त्वसापेक्षधर्मत्वमुपाधिरिति निर्गलितोऽर्थः(तार्थः)। मिथ्यात्वं त्विति। तस्य धर्मिस्वरूपापहाररूपाभावघटितमूर्तित्वादिति भावः। अन्यथेति। तदघटितमूर्तित्व इत्यर्थः। प्रातिभासिकरूप्यसंबन्धमात्रेणेति। साक्षात्परम्परासाधारणसंबन्धमात्रेणेत्यर्थः। मिथ्यात्व इति। प्रातिभासिकत्व इत्यर्थः। भ्रान्तिबाधेति। विषयप्रयुक्तविशेषाभावेन वैपरीत्यं च स्यादिति भावः। हेतोरिति। मिथ्याभूतधर्मिकत्वरूपहेतोः। शुक्तिरूप्यमस्तीति वाक्यस्येव व्यावहारिकमपि प्रामाण्यं न स्यादिति भावः। (न स्यादित्यर्थः) हेतूक्तस्येति। मिथ्यात्वं मिथ्या मिथ्याभूतमिथ्यात्वाश्रयधर्मिकत्वादित्यनुमाने मिथ्याभूतमिथ्यात्वाश्रयघटधर्मिके रूपादौ व्यभिचारापत्तेरित्यर्थः। तन्मिथ्यात्वस्याप्यसिद्धेरिति भावः। विरोध इति। सत्तोऽसत्त्वायोगरूप इत्यर्थः। किञ्च मिथ्याधर्मिकत्वादिति कोऽर्थः किं निःस्वरूपधर्मिकत्वादिति किंवा सस्वरूपबाध्यधर्मिकत्वादिति। तत्र नाद्य इत्याह नचेति। तथाच हेतोः पक्षेऽसिद्धिरिति भावः। नापि द्वितीय इत्याह स्वाप्नगजस्यापीति। तथाच दृष्टान्ते साध्यवैकल्यमिति भावः। यद्यपि स्वाप्नगजतद्ध्वंसादेरपि सम्मते सत्यत्वेन दृष्टान्तः साधनविकलः इति वक्ष्यते वक्तुम्। तथापि परीत्या साध्यवैकल्यमेवोक्तमिति ध्येयम्। ननु मिथ्यात्वं मिथ्यैवेति पक्षं उक्तदूषणोद्धारमनाहृत्य निराकरोति नचेति। मिथ्यात्वस्येति। तद्विरोधिन इत्यस्यानन्तरं

स्वतःप्रामाण्यप्रत्यक्षादिसिद्धस्य च विश्वसत्यत्वस्य पारमार्थिकत्वापातात् । द्वैताद्वैतप्रमाण-योर्व्यावहारिकपारमार्थिकविषयत्वेन व्यवस्थोक्त्ययोगाच्च । मिथ्यात्वस्य प्रातिभासिके व्याव-हारिकतया व्यावहारिके च प्रातिभासिकतया च दृष्टत्वेन तयोस्तुल्यसत्ताकत्वायोगाच्च । अन्यथा प्रपञ्चे सत्यत्वमिथ्यात्वयोर्विधिसमुच्चयो वा निषेधसमुच्चयो वा स्यात् । तथा च " मिथ्यात्वं यद्यबाध्यं स्यात्सदद्वैतमतक्षतिः । मिथ्यात्वं यदि बाध्यं स्याज्जगत्सत्यत्वमापतेत् ।" नच मिथ्यात्वस्य सत्यत्वमिथ्यात्वाभ्यां दूषणं नित्यसमा जातिः । स्वव्याघातादेरभावात् । उक्तं हि " मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । सत्यत्वस्य च सत्यत्वे सत्यत्वं स्थापितं भवे "दिति । किञ्च " धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवे "दिति तल्लक्षणम् । नचात्र मिथ्यात्वस्य सत्यत्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः । किन्तु अद्वैतहानिः । प्रत्युत भेदः किं भिन्ने उताभिन्ने स्यादिति त्वदुक्तिरेवाभिन्नादि-

---

व्यावहारिकसत्त्वाभ्युपगमायोगेनेति शेषः । तथाच प्रपञ्चे सत्यत्वस्य व्यावहारिकत्वायोगात् प्रातिभासिकत्वस्य च त्वयैवानभ्युपगमात् अनपोदितस्वतःप्रामाण्यप्रत्यक्षादिप्रमाणसिद्धत्वाच्च तस्य सत्यत्वं ब्रह्मसत्त्ववत् पारमार्थिकमेव स्यादित्यर्थः । इदमुक्तं भवति । प्रपञ्चे मिथ्यात्वं व्यावहारिकमित्यङ्गीकुर्वाणेन परेण तत्राङ्गीकृतसत्यत्वमपि न व्यावहारिकमङ्गीकर्तुं शक्यम् । तथात्वे ति तयोस्तुल्यसत्त्वप्रयुक्तविरोधापत्त्या तत्रान्यतरसत्त्वमेव स्यात् । न तूभयसत्त्वम् । अस्ति चोभयसत्त्वम् । एवञ्च तदविरोधेनैवोपपादनीयम् । अविरोधश्च सत्यत्वस्य पारमार्थिकत्वेन वा प्रातिभासिकत्वेन वा संभवति । प्रातिभासिकत्वं च त्वयैव नेष्यत इति तत्पारमार्थिकत्वं पर्यवसितमिति । ननु प्रपञ्चे सत्यत्वमिथ्यात्वयोर्व्यावहारिकत्वेऽप्यविरोधोऽङ्गीक्रियत इत्यत आह द्वैताद्वैतेति । प्रपञ्चसत्यत्वतन्मिथ्यात्वयोरिव द्वैताद्वैतयोः समानसत्ताकत्वेऽप्यविरोधोपपत्तेरिति भावः । अन्यथेति । प्रपञ्चसत्यत्वतन्मिथ्यात्वयोस्तुल्यसत्त्वाङ्गीकार इत्यर्थः । स्वव्याघातादेरिति । स्वव्याघातकोत्तरस्य जातित्वादिति भावः । ननु विशेषलक्षणसत्त्वे स्वव्याघातकोत्तरत्वरूपसामान्यलक्षणस्यासत्त्वं न दोषः । तत्साधारणसामान्यलक्षणान्तरस्यापि संभवादित्यत आह किञ्चेति । ननु मिथ्यात्वमबाध्यं बाध्यं वेति विकल्प्य दूषणाभिधानं नित्यसमा जातिरेव । मिथ्यात्वस्य बाध्यत्वे प्रपञ्चस्य मिथ्यात्ववैशिष्ट्यभङ्गात् । अबाध्यत्वेऽपि प्रपञ्चान्तःप्रविष्टमिथ्यात्वस्य मिथ्यात्वानिष्पत्त्या सर्वप्रपञ्चमिथ्यात्वासिद्धेरिति पक्षद्वयेऽपि मिथ्यात्ववैशिष्ट्यभङ्गस्याविशिष्टत्वादित्याशङ्क्य निराकरोति नचेति । अद्वैतहानिरिति । यद्यप्यद्वैतहान्युद्भावनमपि बाधकतर्करूपतया

तत्प्रतिकूलम्। अन्यथासिद्धसाधनात्। किञ्च प्रतिपन्नोपाधावनिषिद्धं प्रत्युत बाधकज्ञानेन विहितमपि रूप्यमिथ्यात्वं यदि प्रातिभासिकरूप्यसम्बन्धमात्रेण प्रातिभासिकं तर्हि सति ब्रह्मणि निषिद्धा अपि धर्मास्सन्तः स्युः। रूप्याधिष्ठानशुक्तिरपि प्रातिभासिकी स्यात्। रूप्ये प्रपञ्चे च सद्वैलक्षण्यं च सत्स्यात्। असद्वैलक्षण्यं चासत्स्यात्। असति च सद्वैलक्षण्यमसत्स्यात्। रूप्यतन्मिथ्यात्वयोर्मिथ्यात्वे भ्रान्तिबाधव्यवस्था च न स्यात्। त्वदुक्तेन धर्मिणो मिथ्यात्वेन हेतुना साध्यस्य मिथ्यात्वमिथ्यात्वस्यापि प्रातिभासिकत्वापत्त्या हेतोरत्यन्ताप्रामाण्यं च स्यात्। हेतूक्तस्य धर्मिमिथ्यात्वस्य मिथ्यात्वे घटरूपादौ व्यभिचारापत्त्या सत्यत्वावश्यंभावाद्विरोधश्च स्यात्। नच त्वन्मते रूप्यादिकं वियदादिकं वा वन्ध्यासुतवन्निःस्वरूपम्। शून्यवादापातात्। स्वाप्नस्यापि कल्पितत्वेन तद्गमादेर्मिथ्यात्वेऽपि तन्मिथ्यात्वं स्वप्ने प्रतीतमपि आत्मवदबाधात्सत्यमेव। नच मिथ्यात्वं प्रपञ्चसमसत्ताकं। एवञ्च न तात्त्विकाद्वैतहानिः। नापि सिद्धसाधनम्। त्वन्मते प्रपञ्चे स्वसमसत्ताकमिथ्यात्वासिद्धेरिति वाच्यम्। मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्याऽनपोदित-

---

नमेवोपाधिमाह धर्म्यमत्य इति। धर्मिसत्त्वसापेक्षधर्मत्वमुपाधिरिति निर्गलितोऽर्थः(तार्थः)। मिथ्यात्वं त्विति। तस्य धर्मिस्वरूपापहाररूपाभावघटितमूर्तित्वादिति भावः। अन्यथेति। तदघटितमूर्तित्व इत्यर्थः। प्रातिभासिकरूप्यसंबन्धमात्रेणेति। साक्षात्परम्परासाधारणसंबन्धमात्रेणेत्यर्थः। मिथ्यात्व इति। प्रातिभासिकत्व इत्यर्थः। भ्रान्तिबाधेति। विषयप्रयुक्तविशेषाभावेन वैपरीत्यं च स्यादिति भावः। हेतोरिति। मिथ्याभूतधर्मिकत्वरूपहेतोः। शुक्तिरूप्यमस्तीति वाक्यस्येव व्यावहारिकमपि प्रामाण्यं न स्यादिति भावः। (न स्यादित्यर्थः) हेतूक्तस्येति। मिथ्यात्वं मिथ्या मिथ्याभूतमिथ्यात्वाश्रयधर्मिकत्वादित्यनुमाने मिथ्याभूतमिथ्यात्वाश्रयघटधर्मिके रूपादौ व्यभिचारापत्त्येत्यर्थः। तन्मिथ्यात्वस्याप्यसिद्धेरिति भावः। विरोध इति। सतोऽसत्त्वायोगरूप इत्यर्थः। किञ्च मिथ्याधर्मिकत्वादिति कोऽर्थः किं निःस्वरूपधर्मिकत्वादिति किंवा सत्स्वरूपबाध्यधर्मिकत्वादिति। तत्र नाद्य इत्याह नचेति। तथाच हेतोः पक्षेऽसिद्धिरिति भावः। नापि द्वितीय इत्याह स्वाप्नगजस्यापीति। तथाच दृष्टान्ते साध्यवैकल्यमिति भावः। यद्यपि स्वाप्नगजतद्ध्वंसयोरपि मन्मते सत्यत्वेन दृष्टान्तः साधनविकलः इति शक्यते वक्तुम्। तथापि परनीत्या साध्यवैकल्यमेवोक्तमिति ध्येयम्। ननु मिथ्यात्वं मिथ्यैवेति पक्षं उक्तदूषणोद्धारमाशङ्क्य निराकरोति नचेति। मिथ्यात्वस्येति। तद्विरोधिन इत्यस्यानन्तरं

स्वतःप्रामाण्यप्रत्यक्षादिसिद्धस्य च विश्वसत्यत्वस्य पारमार्थिकत्वापातात् । द्वैताद्वैतप्रमाणयोर्व्यावहारिकपारमार्थिकविषयत्वेन व्यवस्थोक्त्ययोगाच्च । मिथ्यात्वस्य प्रातिभासिके व्यावहारिकतया व्यावहारिके च प्रातिभासिकतया च दृष्टत्वेन तयोस्तुल्यसत्ताकत्वायोगाच्च । अन्यथा प्रपञ्चे सत्यत्वमिथ्यात्वयोर्विधिसमुच्चयो वा निषेधसमुच्चयो वा स्यात् । तथा च " मिथ्यात्वं यद्यबाध्यं स्यात्सदद्वैतमतक्षतिः । मिथ्यात्वं यदि बाध्यं स्याज्जगत्सत्यत्वमापतेत् ।" नच मिथ्यात्वस्य सत्यत्वमिथ्यात्वाभ्यां दूषणं नित्यसमा जातिः । स्वव्याघातादेरभावात् । उक्तं हि " मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । सत्यत्वस्य च सत्यत्वे सत्यत्वं स्थापितं भवे"दिति । किञ्च " धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवे"दिति तल्लक्षणम् । नचात्र मिथ्यात्वस्य सत्यत्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः । किन्तु अद्वैतहानिः । प्रत्युत भेदः किं भिन्ने उताभिन्ने स्यादिति त्वदुक्तिरेवाभिन्नादि-

---

व्यावहारिकसत्त्वाभ्युपगमायोगेनेति शेषः । तथाच प्रपञ्चे सत्त्वस्य व्यावहारिकत्वायोगात् प्रातिभासिकत्वस्य च त्वयैवानभ्युपगमात् अनपोदितस्वतःप्रामाण्यप्रत्यक्षादिप्रमाणसिद्धत्वाच्च तस्य सत्त्वं ब्रह्मसत्त्ववत् पारमार्थिकमेव स्यादित्यर्थः । इदमुक्तं भवति । प्रपञ्चे मिथ्यात्वं व्यावहारिकमित्यङ्गीकुर्वाणेन परेण तत्राङ्गीकृतसत्यत्वमपि न व्यावहारिकमङ्गीकर्तुं शक्यम् । तथासति तयोस्तुल्यसत्त्वप्रयुक्तविरोधापत्त्या तत्रान्यतरसत्त्वमेव स्यात् । न तूभयसत्त्वम् । अस्ति चोभयसत्त्वम् । एवञ्च तदविरोधेनैवोपपादनीयम् । अविरोधश्च सत्यत्वस्य पारमार्थिकत्वेन वा प्रातिभासिकत्वेन वा संभवति । प्रातिभासिकत्वं च त्वयैव नेष्यत इति तत्पारमार्थिकत्वं पर्यवसितमिति । ननु प्रपञ्चे सत्यत्वमिथ्यात्वयोर्व्यावहारिकत्वेऽप्यविरोधोऽङ्गीक्रियत इत्यत आह द्वैताद्वैतेति । प्रपञ्चसत्यत्वतन्मिथ्यात्वयोरिव द्वैताद्वैतयोः समानसत्ताकत्वेऽप्यविरोधोपपत्तेरिति भावः । अन्यथेति । प्रपञ्चसत्यत्वतन्मिथ्यात्वयोस्तुल्यसत्त्वाङ्गीकार इत्यर्थः । स्वव्याघातादेरिति । स्वव्याघातकोटिकस्य जातित्वादिति भावः । ननु विशेषलक्षणसत्त्वे स्वव्याघातकोटिकत्वरूपसामान्यलक्षणस्यासत्त्वं न दोषः । तस्याधारणसामान्यलक्षणान्तरस्यापि संभवादित्यत आह किञ्चेति । ननु मिथ्यात्वमबाध्यं बाध्यं वेति विकल्प्य दूषणाभिधानं नित्यसमा जातिरेव । मिथ्यात्वस्य बाध्यत्वे प्रपञ्चस्य मिथ्यात्ववैशिष्ट्यभङ्गात् । अबाध्यत्वेऽपि प्रपञ्चान्तःप्रविष्टमिथ्यात्वस्य मिथ्यात्वानिष्पत्त्या सर्वप्रपञ्चमिथ्यात्वासिद्धेरिति पक्षद्वयेऽपि मिथ्यात्ववैशिष्ट्यभङ्गस्याविशिष्टत्वादित्याशङ्क्य निराकरोति नचेति । अद्वैतहानिरिति । यद्यप्यद्वैतहान्युद्भावनस्यापि बाधकतर्करूपतया

रूपविशिष्टमात्रनिरासकत्वेन स्वव्याघातापाताज्जातिः । उक्तं हि । “एतामेव जातिमवष्टभ्य शुष्कतर्कवादिनां बौद्धचार्वाकवेदान्तिनां बालव्यामोहहेतवः कण्ठकोलाहला” इति ॥

॥ इति सामान्यतो मिथ्यात्वभङ्गः ॥ २ ॥

---

## ॥ अथ दृश्यत्वहेतुभङ्गः ॥

दृश्यत्वहेतूक्तिरपि “स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथाहि यः । प्रत्ययस्स मृषा दृष्टः स्वप्नादिप्रत्ययो यथे”ति बौद्धोक्तयुक्तिच्छर्दिमात्रम् । इयांस्तु विशेषः । बौद्धमते ह्यप्रामाण्यस्य स्वतस्त्वाद्युक्तम् । त्वन्मते तु प्रामाण्यस्य स्वतस्त्वात्तदयुक्तमिति । किञ्चेदं दृश्यत्वं वृत्तिव्याप्यत्वं फलव्याप्यत्वं वा साधारणं वा कदाचित्कथञ्चिद्विषयत्वं वा स्वव्यवहारे स्वातिरेकिसंविदपेक्षानियतिर्वा अस्वप्रकाशत्वं वा । नाद्यः । आत्मनोऽपि वेदान्तज(न्य)नितवृत्तिव्याप्यत्वात् । अन्यथा ब्रह्मपराणां वेदान्तानां ब्रह्मज्ञानार्थं श्रवणादि-

---

विपर्यये पर्यवसानस्यावश्यकत्वेन मिथ्यात्ववैशिष्ट्यभङ्ग एव पर्यवसानात् जातित्वं दुर्वारम् । तथापि तदुद्भावकस्यापसिद्धान्त एव तात्पर्यं न मिथ्यात्ववैशिष्ट्यभङ्ग इति न जातित्वमिति ध्येयम् । प्रत्युक्तेति । यद्यपि तत्र धर्मिण एव विकल्पितत्वेन धर्मस्याविकल्पितत्वाच्च जातिः । धर्मस्य विकल्प्य दूषण एव तथात्वात् । तथापि विमतो मिथ्यो मुक्तत्वादित्यनुमानप्रतिज्ञाविषयीभूतमोक्षविषयकतया प्रकृतविकल्पपूर्वकपरोक्तदूषणविषयत्वादस्य ग्रन्थस्येति जातित्वं दुर्वारमिति ध्येयम् । स्वव्याघातापातादिति । त्वदभिमतामेवेऽप्येवं विकल्प्य दूषणाभिधानसंभवादिति भावः । सामान्यत इति । मिथ्यात्वशरीरघटकोपाध्यविचारेणेत्यर्थः ।

॥ इति सामान्यतो मिथ्यात्वभङ्गः ॥ २ ॥

---

बौद्धोक्तेति ॥ ननु स्वकल्पनेत्यर्थः । ननु तत्कल्पनापि दूषणसमर्था चेत् का नो हानिरित्यत आह इयांस्तु भेद इति[1] । तदयुक्तमिति । अप्रामाण्यस्याबाधितार्थकत्वरूपस्य बाध्यत्वरूपमिथ्यात्वासहिष्णुत्वादित्यर्थः । स्वव्यवहार इति । अत्र नियतिपदं स्वप्रकाशत्वादिविशिष्टान्य-

[1] इयांस्तु विशेष इति पाठान्तरम् ।

विधेश्च वैयर्थ्यम् । ब्रह्मविचारयतोर्गुरुशिष्ययोर्मौनं मौढ्यं च स्यात् । किञ्च ब्रह्मजिज्ञासा-ब्रह्मज्ञानमित्यादौ कर्मणि षष्ठी, तमेव धीरो विज्ञायेत्यादौ द्वितीया, दृश्यते त्वग्र्यया बुध्येत्यादौ तिङ्, आत्मा वा अरे द्रष्टव्य इत्यादौ तव्यादि(प्रत्यय)श्च न स्यात् । दृशोऽज्ञाने दृग्विषयत्व-रूपदृश्यत्वज्ञानं च न स्यात् । "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थित" इत्यादिस्ववचन-विरोधश्च स्यात् । नच विपक्षे धर्मिसमसत्त्वस्य हेतोर्वृत्तिर्व्यभिचारः नत्वारोपितस्य, अति-प्रसङ्गात् । दृश्यत्वं च व्यावहारिके जगतीव पारमार्थिकात्मन्यपि व्यावहारिकमेवेति न व्यभिचार इति वाच्यम् । ब्रह्मजगतोः पारमार्थिकत्वव्यावहारिकत्वविभागस्याद्याप्यसिद्धेः । किञ्च पक्षे धर्मिसमसत्त्वस्य साध्यस्याभावो बाधः । पक्षे हेतोर्धर्मिसमसत्ताकस्य सत्त्वं च सिद्धिः तदभावोऽसिद्धिः । तथाचात्मनि तात्त्विकधर्महीने स्वप्रकाशत्वादिरूपसाध्यस्य बाधः । तत्साधकानुभूतित्वादेश्चासिद्धिः । एवं विपक्षे धर्मिसमसत्ताकः साधनस्याभावोऽ-

---

व्यवहारे स्वातिरेकिसंविदपेक्षासत्त्वात् तत्र व्यभिचारवारणाय । मौनमिति । गुरोः स्वीय-शब्दात् शिष्यस्य ब्रह्मप्रतीत्यभावनिश्चयात् शब्दाप्रयोग इत्यर्थः । द्वितीयेति । तमित्यत्र कर्मणि द्वितीया दृश्यत इत्यत्र भावकर्मणोः द्रष्टव्य इत्यत्र तयोरेव कृत्यक्तखलर्था इति पाणिनिना कर्मणि द्वितीयातव्यादिप्रत्ययानां स्मरणादिति भावः । दृशोऽज्ञान इति । ब्रह्मणो वृत्तिविषयत्वानङ्गीकारे तस्य भासा सर्वमिदं विभातीतिश्रुतिप्रतिपन्नस्य दृक्शब्दितचैतन्यविषयत्वस्य प्रपञ्चे दुर्ज्ञानत्वप्रसङ्गः । अननुसंहितोपाध्युपहितप्रत्ययायोगादित्यर्थः । यद्वा मिथ्यात्वे साध्ये (वृत्ति) दृश्यत्वापरपर्याय-दृक्शब्दितचित्कर्मत्वविषयत्वादेरपि त्वया हेतूकरणात् घटकपदार्थज्ञानं विना तद्घटितमूर्तिहेतु-ज्ञानासंभवात् तत्र्ये दृक्शब्दितहेतुशरीरघटकचितोऽपि वृत्तिरूपज्ञानविषयत्वरूपवृत्तिव्याप्यत्वं दुर्निवारमिति चैतन्ये व्यभिचारः सर्वथास्मिन् पक्षे दुर्निवार इत्यर्थः । ननु विपक्षे आरोपिता-नारोपितसाधारणहेतुसत्त्वमात्रं व्यभिचारित्वे तन्त्रम् । अन्यथा गौरवादित्याशङ्क्याह नत्वेति । अतिप्रसङ्गादिति । धूमादेरपि विपक्षे आरोपितसत्त्वसंभवेन व्यभिचारित्वप्रसङ्गात् । तथाच गौरवमप्रामाणिकमिति भावः । किञ्चेति । अन्यथारोपितसाध्यसाधनाभावमादाय सदनुमानेऽपि बाधासिद्धिप्रसङ्ग इति भावः । एवमिति । अन्यथा वह्नेरपि आरोपितवह्न्यभावमादाय धूमाभाव-वद्वृत्त्यभावप्रतियोगित्वसंभवेन धूमाव्यभिचारित्वं स्यादिति भावः । तथाचेति । एवञ्च धर्मि-समसत्ताकहेतुसत्त्वादिकं न व्यभिचारादिप्रयोजकमिति भावः । उक्तबाधकमुपसंहरन्व्याजे-नोद्धरति तस्मादिति । दृश्यत्वहेतोरित्यर्थः । अत्रेति । अतो नात्मनि व्यभिचार इति भावः ।

व्यभिचारित्वम् । तथाच दृश्यत्वादीनां आत्मनि व्यभिचार इति च स्यात् । तस्माद्यथात्मनः पक्षत्वे तत्र व्यावहारिकस्य हेतोस्सत्त्वान्नासिद्धिः तथा (अस्य) तस्य विपक्षत्वेऽपि व्यावहारिकस्य हेतोस्सत्त्वाद्व्यभिचारः अथ धर्मिसमसत्त्वं हेतुविशेषणम् । तर्ह्यात्मन्येवंविधधर्मस्य कस्याप्यभावाद्विषयत्वादिरेव मिथ्यात्वे हेतुः स्यात् । मम रीत्या आत्मनि व्यभिचारश्च । दृष्टान्तस्य साधनवैकल्यं च । ननु शुद्धं ब्रह्म न दृश्यं किन्तु विशिष्टमेव, दृश्यत्वश्रुतयोऽपि तद्विषयाः । अन्यथा यत्तदद्रेश्यमित्यादिश्रुतिविरोधादिति चेन्न । स्वतःसिद्धेर्निराकरिष्यमाणत्वेन शुद्धासिद्धिप्रसङ्गात् । अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वाच्च । नच स्वप्रकाशत्वेन स्वतःसिद्धे शुद्धे वृत्त्या दृश्यत्वनिषेधधीः । शुद्धं स्वप्रकाशमिति शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेः । लाघवेन स्फुरणमात्रमेव मिथ्यात्वे तन्त्रमिति स्वतः स्फुरदपि ब्रह्म मिथ्यैव । तत्सत्यत्वश्रुतिस्तु जगत्सत्यत्वश्रुतिवदनुमानादिविरोधेना-

---

एवंविधस्येति[1] । धर्मिसमसत्ताकस्येत्यर्थः । विषयत्वादिरेवेति । धर्मिसमसत्ताकविषयत्वादिरेवेत्यर्थः । ननु विषयत्वमिव दृश्यत्वमपि हेतुतया प्रयोक्तुं शक्यम् । नच दृक्पदवैयर्थ्यम्, न किञ्चिदिति न्यायेन तस्य सार्थक्यात् । अन्यथा प्रमेयत्वादिहेतौ का गतिरित्यस्वरसादाह ममरीत्येति । दृष्टान्तस्येति । परमते प्रातिभासिके दृश्यत्वस्य व्यावहारिकतया सिद्धान्ते चासति शुक्तिरूप्ये दृश्यत्वस्य सत्यतया विवक्षितहेतोस्तत्राभावादिति भावः । यथाभुतहेतोर्व्यभिचारोद्धारं शङ्कते नन्विति । शुद्धे हेत्वभावात् विशिष्टे साध्यस्यापि सत्त्वान्न व्यभिचार इति भावः । दृश्यत्वश्रुतयो दृश्यते त्वग्र्यया बुद्ध्येत्यादिश्रुतयः । स्वतःसिद्धेरिति । अवेद्यत्वलक्षणस्वप्रकाशत्वस्येत्यर्थः । शुद्धासिद्धिप्रसङ्गादिति । तथाच शुद्धसिद्धिमिच्छता तस्य वृत्तिव्याप्यत्वं वक्तव्यमिति तत्र व्यभिचार एवेति भावः । ननु शुद्धे न दृश्यत्वनिषेधायोगः तस्य स्वविषयप्रकाशकत्वलक्षणस्वप्रकाशत्वेन धर्मिज्ञानरूपतया वृत्तिविषयतानावश्यकत्वात् । अतो न व्यभिचारो नवा(च)शुद्धासिद्धिरित्याशङ्क्य निराकरोति न चेति । लाघवेनेति । मिथ्यात्वे स्फुरणमात्रमेव तन्त्रं लाघवात् । न त्वन्यतः स्फुरणं स्वतः स्फुरणं वा गौरवात् । स्फुरणमात्रं च स्वतः स्फुरत्यपि ब्रह्मण्यविशिष्टमिति जगद्वत् ब्रह्मापि मिथ्यैव स्यादित्यर्थः । यद्वा लाघवेनेति । उपस्थितिलाघवेनेत्यर्थः । चैतन्यस्य स्फुरणाव्यभिचारित्वेन वृत्तेस्तु तदधीनप्रकाशत्वादिति ॥

[1] एवंविधधर्मस्येति पाठान्तरम् ।

सद्वैलक्षण्यपरेत्यापाताच्च । शुद्धं न दृश्यत इत्यत्र शुद्धशब्दस्याभिधया लक्षणया वा शुद्धाबोधकत्वे तत्प्रयोगवैयर्थ्याच्च । विशिष्टे मिथ्यात्वदृश्यत्वयोर्व्यतिरेकासम्भवेन शुद्धनिष्ठव्यतिरेकज्ञानाय शुद्धस्य ज्ञेयत्वाच्च । विशिष्टज्ञाने विशेष्यस्यापि भानेन विशिष्टस्य दृश्यत्वेनैव शुद्धस्यापि दृश्यत्वसिद्धेश्च । नच विष्णवे शिपिविष्टायेत्यादौ देवतात्ववत् विषयत्वमपि विशिष्ट एव नतु विशेष्येऽपीति युक्तम् । देवतात्ववदेव विषयत्वस्यापि विशेषणेऽप्यभावेन भागासिद्धेः । घटत्वविशिष्ट एव दृश्यत्वं नतु विशेष्ये घट इत्यापाताच्च । विशिष्टे ज्ञातेऽपि कदाचिद्विशेष्ये अज्ञानाद्यापाताच्च । दण्डी चैत्र इति ज्ञानेनैव चैत्रोऽपि ज्ञात इत्यनुभवाच्च । एतेनानुभवविरोधादिनैवाग्नीषोमयोर्देवतात्ववद्विषयत्वमपि व्यासज्यवृत्तीति न विशेष्ये तदिति निरस्तम् । अत एवादृश्यत्वश्रुतिस्साकल्येनादृश्यत्वपरा । अन्यथा यत्तदद्रेश्यमित्यादौ यच्छब्दायोगात् । एतेन चरमवृत्त्युपहितस्यैवात्मनस्तद्विषयत्वात्तस्य च मिथ्यात्वाच्च व्यभिचार इति निरस्तम् । चरमवृत्तेः स्वविषयान्तर्भावे तस्याः स्वप्रकाशत्वस्याप्रमात्वस्य चापातात् । वृत्त्युपरागोऽत्र सत्तयोपयुज्यते नतु प्रतिभासतयेति कल्पतरुविरोधाच्च । बहिर्भावे च विषयस्य सत्यत्वेन व्यभिचारानुद्धारात् । नच स्वरूपेण दृश्यत्वं हेतुः । ब्रह्म तु विशिष्टरूपेणैव दृश्यमिति वाच्यम् । निर्विकल्पकाभावपक्षे घटादेरपि तत्सद्भावपक्षे

तत्सत्यत्वश्रुतिः ॥ सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतिः ॥ जगत्सत्यत्वश्रुतिवदिति ॥ विश्वं सत्यं, यच्चिकेतसत्यमित्यादिश्रुतिवदित्यर्थः ॥ विशिष्टज्ञान इति ॥ विशिष्टस्य विशेषणादित्रितयात्मकत्वादित्यर्थः । शिपिविष्टायरश्मिभिराविष्टाय । एतेनेत्यस्य विवरणमनुभवविरोधादिनैवेति । तत्स्वोपलक्षणम् । विषयत्वस्य द्वित्वादिवदेकैकत्र पर्याप्त्यभावेऽपि विशेष्यवृत्तित्वानपायात् । विशेषणादित्रितयपर्याप्ताधिकरणताकस्य विषयत्वस्य हेतुकरणे च भागासिद्ध्यादावध्रुवमिति ध्येयम् । अत एवेति । विशेष्ये ज्ञानाविषयत्वस्यानुभवबाधितत्वादेवेत्यर्थः । यत्तदिति । तयोः सर्वनामत्वेन बुद्धिस्थपरामर्शकत्वादिति भावः । अप्रमात्वस्य चेति । मिथ्या(भूतस्य)विषयकत्वादिति भावः । यद्यप्यप्रमात्वस्य वृत्तिरूपविषयांशे आपादनमिष्टमेव । ब्रह्मचैतन्यरूपविषयांशे त्वापादकाभावः, तस्य सत्यत्वात् । तथापि तत्त्वावेदकत्वाल्लिङ्गागमजन्याबाध्यप्रमावृत्तेर्न[1] बाध्यविषयत्वमङ्गीकर्तव्यम् । अन्यथा प्रत्यक्षादिजन्यवृत्त्यविशेषापातः, वृत्तिमात्रस्य त्वया चैतन्यविषयत्वस्वीकारादिति । यद्वा तत्वस्वरसादेवाह वृत्त्युपराग इति । वृत्त्युपहितस्यात्मनस्तद्विषयत्वमित्यत्र वृत्तेः

[1] नाबाध्यत्वविषयत्वमङ्गीकर्तव्यम् इति पाठः ।

नित्यातीन्द्रियस्यापि विशिष्टरूपेणैव दृश्यत्वेनासिद्धेः । नहि लिङ्गादिना निर्विकल्पकधीः । वेदान्तानां कल्पितविशिष्टपरत्वे तत्वावेदकत्वायोगाच्च । "तरति शोकमात्मवि"[1]दित्यादौ मोक्षसाधनशुद्धरूपप्रमोक्तेश्च । किञ्च शुद्धज्ञानाभावे तदाच्छादकस्य मूलाज्ञानस्य निवृत्तिर्न स्यात् । ज्ञानस्याज्ञाननिवर्तकत्वे हि समानविषयत्वं तन्त्रम् । नच घटादिविषयज्ञानेष्वप्यन्याविषयत्वमेव तन्त्रम् । गौरवात् । दीपच्छादौ समानविषयत्वेनैव विरोधितमोद्वेषादिनिवर्तकत्वदर्शनाच्च । घटपटाविति ज्ञानेन घटाज्ञानस्य विशिष्टज्ञानेन च विशेषणाज्ञानस्य च निवृत्तिदर्शनाच्च । ब्रह्मज्ञानस्य निर्विषयत्वे ज्ञानत्वायोगस्य वक्ष्यमाणत्वाच्च । अथ तदज्ञाननिवर्तकत्वे तदाकारत्वमेव तन्त्रम् । तच्च तद्विषयत्वाभावेऽपि करणसामर्थ्यादेव शशशृंगादिशब्दजन्यज्ञानस्येव युक्तम् ।

दृश्यत्वश्रुत्यादिकमपि तद्विषयमिति चेत् । स एवाकारो यस्येति वा । तदाकार एवाकारो यस्येति वा । तदाकार इवाकारो यस्येति वा । नाद्यः । वृत्त्यनाश्रितस्यात्मनो वृत्त्याकारत्वायोगात् । न द्वितीयः । साकारवादापातात् । जडाद्याकारवृत्तावात्मीयस्य

---

स्वविषयान्तर्भावोऽस्ति नवेति विकल्प्याद्यं निरस्य द्वितीयं निराह बहिर्भावेचेदिति । स्वरूपेणेति । वैशिष्ट्यप्रतियोग्यनुयोगिभावानापन्नतयेत्यर्थः । कल्पितविशिष्टपरत्वे इति । नच शब्दस्वाभाव्यात् कल्पितविशिष्टप्रत्यायकत्वेऽपि वेदान्तानां तत्र तात्पर्याभावात् चिन्मात्र एव तात्पर्याच्च न तत्त्वावेदकत्वायोग इति वाच्यम् । अपूर्वतादिरूपतात्पर्यलिङ्गसत्त्वेन वेदान्तानां कल्पितविशिष्टे तात्पर्यस्य दुर्निवारत्वात् । अन्यथा तात्पर्यव्यभिचारित्वेन तस्यातल्लिङ्गत्वप्रसङ्ग इति भावः ।

शुद्धरूपेति ॥ शुद्धेन रूप्यते निरूप्यते इति व्युत्पत्त्या शुद्धविषयकप्रमोक्तेरिति भावः । समानविषयत्वमिति । अन्यथा घटज्ञानेनापि पटाज्ञानस्य निवृत्तिप्रसङ्ग इति भावः । गौरवादिति । अभावघटितत्वादिति भावः । समानविषयत्वेनैवेति । दीपादेरन्यविषयत्वेऽपि स्वविरोधितमआदिनिवर्तकत्वदर्शनादिति भावः ॥ ब्रह्मज्ञानस्येति वेदान्तजन्यज्ञानस्येत्यर्थः ।

तद्विषयमिति । तदाकारत्वपरमित्यर्थः । स एवाकार इति । अत्राकारशब्दो धर्मपरः । तदाकार एवेति । तत्प्रकारक एवेत्यर्थः ॥ तदाकार इवेति ॥ मध्यमपदलोपी समासः ॥ साकारवादेति ॥ ज्ञानस्यापि घटादिवत् घटत्वादिधर्माश्रयत्वाविशेषादित्यर्थः । ननु नास्माकं

[1] छान्दो. ७. १. ३.

ज्ञानानन्दाद्यपरिच्छेदाकारस्याभावाच्च । सत्तयैकाकारत्वे च घटज्ञानस्याप्यात्माकारत्वा-पाताच्च । आत्मनो निराकारत्वाच्च । अत एव न तृतीयः । ज्ञानानन्दादिना साम्यस्या-सम्भवात् । सत्तया साम्यस्य चातिप्रसक्तेः । संस्थान(सारूप्य)साम्यस्य च घटतद्वृत्त्योः कथञ्चित्सम्भवेऽपि अपरिच्छिन्नपरिच्छिन्नयोर्ब्रह्मतद्वृत्त्योरयोगात् । तस्मात्तद्विषयत्वमेव तदाकारत्वमिति वाच्यम् । अन्यथा घटादिज्ञाने तद्विषयत्वं तन्त्रम्, आत्मज्ञाने तु तदाकारत्वमित्यननुगमादिति सुस्थ आत्मनि व्यभिचारः । अनिर्वचनीयत्वादिकं मिथ्यात्व-मितिपक्षे तु तुच्छे व्यभिचारश्च । असद्वैलक्षण्यज्ञानार्थं तस्यापि ज्ञेयत्वात् ।

अथ प्राचां रीत्या मास्तु दृग्विषयत्वं दृश्यत्वम् । किन्त्वाधुनिकरीत्या फलव्याप्य-त्वमिति द्वितीयोऽस्त्विति चेत् । फलं हि मद्रीत्या व्यवहारो वा भट्टरीत्या ज्ञातता वा

---

साकारत्वात् ज्ञानातिरिक्तविषयस्यापि स्वीकारादित्यनुशयेनाह जडाद्याकारेति । ननु ज्ञानानन्दाद्य-साधारणधर्मेण तदाकारत्वाभावेऽपि साधारणधर्मेण तदाकारत्वमस्तीत्याशङ्क्याह[1] सत्तयेति । आत्माकारत्वापातादिति । तथाच घटज्ञानेनाप्यात्माज्ञाननिवृत्तिप्रसङ्ग इति भावः । निराकार-त्वादिति । निर्धर्मकत्वादित्यर्थः । ननु शशविषाणादिशब्दजन्यवृत्तौ यत्तदाकारत्वं तदेवात्रापि स्यादित्याशङ्कामुपसंहारव्याजेन निरस्यति तस्मादिति । तथाप्यन्यस्य तदाकारत्वस्य दुर्वचत्वेन सर्वत्र तद्विषयत्वमेव तदाकारत्वमित्यर्थः ।

घटादिज्ञान इति । तदज्ञाननिवर्तकतायामिति शेषः । अननुगमादिति । अननुगमापत्ते-रित्यर्थः । एतच्चोपलक्षणम् । चरमवृत्तिवत् घटादिज्ञानस्यापि तदज्ञाननिवर्तकतायां[2] तदाकार-त्वस्यैव तन्त्रतया तदतिरिक्ततद्विषयकत्वे मानाभावेन दृग्विषयत्वरूपदृश्यत्वहेतोः स्वरूपा-सिद्धिरिति ध्येयम् । तुच्छ इति । यद्यप्यसत्त्वप्रकारकवृत्तिव्याप्यत्वस्य हेतुत्वविवक्षायां न तुच्छे व्यभिचारः । तथाप्यसतोऽपि शशविषाणमस्तीति वाक्यजन्यतथाविधवृत्तिविषयत्वात् व्यभिचार एव । न च तथाप्याभासानिर्वचनीयशृङ्गस्यैव विषयत्वान्न व्यभिचार इति वाच्यम् । असत्त्वस्यानिर्वचनीयत्वेऽप्यधिष्ठानस्यासत्त्वेन व्यभिचारतादवस्थ्यात् । यथा चासत्त्वस्यास-देवाधिष्ठानं तथाग्र एव स्फुटीभविष्यतीति ध्येयम् ।

॥ इति दृग्व्याप्यत्वहेतुभङ्गः ॥ ३-१ ॥

[1] असिद्ध्याशङ्क्येति पाठान्तरम् ।	[2] तत्रेति पाठान्तरम् ।

त्वद्रीत्या वृत्तिप्रतिफलितं चैतन्यं वा तदभिव्यक्तं विषयाधिष्ठानचैतन्यं वा । नाद्यः । हानादेर्गगनादावभावात् । अभिलापस्य चात्मन्यपि भावात् । न द्वितीयः । ज्ञाततया मम घटादौ परस्याप्यतीतादावभावात् । न तृतीयचतुर्थौ । अतीतादावसिद्धेः । तदपि स्वसत्ताकाले फलव्याप्यमिति चेन्न । नित्यातीन्द्रियेऽसिद्धेः । तदपि योगिनं प्रति फलव्याप्यमिति चेन्न । चित्सुखेन नच योगिप्रत्यक्षगम्यतयाऽपरोक्षत्वं धर्मादीनां, चोदनैकप्रमाण(गम्य)योग्यत्वादित्युक्तत्वेन तद्विरोधात् । तुच्छमपि तुच्छत्वेन योगिनं प्रत्यपरोक्षमिति सुवचत्वाच्च । पक्षैकदेशे साक्षिवेद्याविद्यान्तःकरणतद्धर्मसुखादौ दृष्टान्ते शुक्तिरूप्ये च फलव्याप्यत्वाभावाच्च । नापि साधारणमिति तृतीयः (पक्षः)। ब्रह्मणि वृत्तिव्याप्यत्वरूपविशेषस्य सत्वेन (दृश्यत्वरूप) सामान्यस्यापि सत्वात् । नन्वस्तु तर्हि चतुर्थः । अतीतादेरपि कदाचित्स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वात् । अविद्यादेरपि साक्षिविषयत्वात् । नित्यातीन्द्रियस्यापि ज्ञातत्वेनाज्ञातत्वेन वा साक्षिविषयत्वात् । दृग्(परमा)त्मनस्तु तदविषयत्वादिति चेन्न । नित्यातीन्द्रियं पूर्वं न ज्ञातं इदानीं शब्देन ज्ञातमितिवत् शुद्धं ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन ब्रह्मणि व्यभिचारात् । तद्व्यवहारजनने तद्विषयत्वस्य

---

ननु व्यवहारोऽपि किमादानादिरूपः किंवाभिलपनरूप इति विकल्प्याद्यं निराचष्टे हानादेरिति । तथाच भागासिद्धिरिति भावः । न द्वितीय इत्याह अभिलापस्य चेति । तथाच व्यभिचार इति भावः । ममेति । प्रमाणाभावादिति भावः । अतीतादाविति । यद्यप्यतीतानागतयोरपि वर्तमानतादशायामस्त्येव ज्ञाततावत्त्वम् । तथापि ज्ञाततायामेव मानाभावेन तद्गर्भहेतुः स्वरूपासिद्ध इत्यत्रैव तात्पर्यम् । ननु चोदनैकसमधिगम्यत्वं शाब्दत्वनुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वं विवक्षितम् । योगजधर्मश्च चोदनोपजीवक इति न चित्सुखोक्तिविरोध इत्यत आह तुच्छमपीति ॥ फलेनेति ॥ वृत्त्यभिव्यक्तचैतन्यस्यैव फलत्वादिति भावः ।

॥ इति फलव्याप्यत्वहेतुभङ्गः ॥ ३-२ ॥

साधारणमिति । वृत्तिफलव्याप्यत्वविशेषानालिङ्गितमित्यर्थः । तदविषयत्वादिति । कर्तृकर्मभावविरोधादिति भावः । ज्ञातमित्यनुभवेनेति । तादृशानुभवस्यानुव्यवसायतया मनाद्वयेऽपि विद्यमानत्वादिति भावः । तद्व्यवहारजनन इति । ननु व्यवहारत्वेन ज्ञानत्वेन सामान्यतः कार्यकारणभावः । घटादिव्यवहारे अतिप्रसङ्गपरिहाराय तद्व्यवहारत्वेन तद्विषयकज्ञानत्वेन विशिष्य

तन्त्रत्वेन स्वव्यवहारहेतोश्चितोऽप्यभिधानस्याभिधेयत्ववच्चिद्विषयत्वाच्च । कल्पितभेदेन बिम्बप्रतिबिम्बयोर्लिङ्गलिङ्गिभाववज्जीवब्रह्मणोर्ज्ञातृज्ञेयभाववच्चात्मनोऽपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसम्भवाच्च । अन्यथा तया तदज्ञाननिवृत्त्ययोगात् । तदाकारवृत्त्यैव च तन्निवृत्तौ घटादावपि तथात्वापातेनासिद्धेः । अज्ञानविरोधिस्फुरणरूपत्वस्य चात्मनीव घटादावपि सुवचत्वात् । अस्फुरणरूपेष्वतीन्द्रियेष्विवैन्द्रियकेष्वपि वृत्तिविषयत्वमात्रेण व्यवहारादिसम्भवे तत्प्रतिफलितचैतन्यविषयत्वस्य तदभिव्यक्तचैतन्यविषयत्वस्य वा कल्पनायोगाच्च । घटादावन्धकारानिवर्तकप्रभाया इवाज्ञानाविरोधिज्ञानस्याननुभवाच्च । अन्यथा इच्छा(द्याकारां) द्यन्तःकरणवृत्तिप्रतिफलितं तद्व्यंग्यं वा इच्छादिकं परोक्षवृत्तिप्रतिफलितं तद्व्यंग्यं वा परोक्षज्ञानं

---

कार्यकारणभावः । ज्ञानव्यवहारे तु न तद्विषयकज्ञानत्वं कारणतावच्छेदकं गौरवात् । किन्तु ज्ञानत्वमेव लाघवात् । तथाच चैतन्यव्यवहारे न तद्विषयकज्ञानं कारणमिति न तत्र व्यभिचार इति चेन्न । स्वरूपतो व्यवहारायोग्ये निर्विकल्पकेऽपि (वि)ज्ञानत्वस्य सत्त्वेन तस्य व्यवहारजनकतानवच्छेदकत्वात् । अतीतानागतज्ञानव्यवहारेऽपि तद्विषयकज्ञानस्यैव हेतुत्वेन तस्याहेतुत्वाच्चेति । नन्वभिधात्वेन विषयता, अभिधायकनिरूपिताभिधात्वेन विषयितेत्याकारभेदसत्त्वान्न वृत्तिविरोध इत्यत आह कल्पितभेदेनेति । तयेति । वृत्तिप्रतिफलितचितेत्यर्थः । तदाकारवृत्त्येति । ब्रह्माकारवृत्त्यैव तदज्ञाननिवृत्तौ तेनैव न्यायेन घटादावपि तत्तदाकारवृत्त्यैव तत्तदज्ञाननिवृत्त्युपपत्त्या चिद्विषयत्वे मानाभावेन तद्घटितहेतोः स्वरूपासिद्ध्यापत्तेरित्यर्थः । नन्वात्मनोऽज्ञानाविरोधिज्ञानत्वेन अविद्यानिवृत्तौ (वृत्तिविषयत्वं प्रयोजकमेव) स्वविषयत्वमप्रयोजकमेव । अतस्तदाकारवृत्त्यैव तदज्ञाननिवृत्तिरित्यत आह अज्ञानाविरोधिस्फुरणरूपत्वस्येति । तथाचात्मनोऽज्ञानाविरोधित्वे घटादिवत् स्फुरणरूपत्वमेव न स्यात्, स्फुरणस्य धर्मिग्राहकमानेनाज्ञानविरोधित्वेनैव सिद्धेः । अन्यथा स्फुरणस्याप्यज्ञानावृतत्वापत्त्या जगदान्ध्यापत्तेरिति भावः । ननु घटादिव्यवहारसिद्ध्यर्थं चिद्विषयत्वमावश्यकम् । व्यवहर्तव्यज्ञानं विना तद्व्यवहारस्यैवायोगात् । तथाच चिद्विषयत्वरूपहेतुर्नासिद्ध इत्यत आह अस्फुरणरूपेष्विति । तदभिव्यक्तेति । वृत्त्यभिव्यक्तेत्यर्थः । ननु वृत्तेः स्वकाशादविद्यानिवृत्तिसंभवेऽपि जडत्वात्तस्याः घटादिविषयप्रकाशकत्वमसंभवीति तत्प्रकाशार्थं वृत्तिप्रतिफलितचैतन्यविषयत्वमावश्यकम् । आत्मनस्तु स्वत एव प्रकाशत्वात् अज्ञाननिवृत्त्यर्थमेव वृत्त्यपेक्षेत्यत आह घटादाविति । तथाचाज्ञानाविरोधिन्यां वृत्तावेव घटादिप्रकाशकत्वकल्पनमुचितम् । नन्वननुभूयमानाज्ञानाविरोधिज्ञानमङ्गीकृत्य तस्य विषयप्रकाश

तमोनिवर्तकप्रभाप्रतिफलितं तद्वयं वा प्रभांतरं च कल्प्यं स्यात्। "तमेव भांत"मि(त्यादि)तिश्रुत्यर्थस्तु प्रतिकर्मव्यवस्थाभङ्गे वक्ष्यते। चैतन्याविषयस्याप्यापरोक्ष्यं च चैतन्याभिव्यंजकत्वार्थमावश्यकेनेन्द्रियजन्यत्वप्रयुक्तेन वृत्तिगतेन साक्षात्कारत्वरूपविशेषणेनोपपन्नम्। इच्छादिवृत्त्यनिष्ठेन परोक्षवृत्तिगतेन ज्ञानत्वरूपविशेषेण विषयस्य ज्ञातत्ववत् स्मृत्याद्यनिष्ठेनानुभवादिगतेन विशेषेण तद्विषयस्यानुभूतत्वानुमितत्वादिवच्च। अन्यथा परोक्षत्वापरोक्षत्वे एकज्ञानत्वव्याप्ये न स्याताम्।

न पञ्चमः। आत्मनोऽपि स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टव्यवहारे तदपेक्षानियमात्। नन्वात्मनि विशिष्टव्यवहारे विशेषणोपनायकमानापेक्षानियमेऽपि स्वरूपमात्रव्यवहारे तदनपेक्षेति चेन्न। घटादावपि तथेत्यसिद्धेः। ननु घटादौ स्वरूपमात्रव्यवहार एव नास्ति आत्मनि तु सुषुप्तावस्तीति चेन्न। एतावन्तं कालं सुखमहमस्वाप्समिति परामर्शेन तस्य विशिष्टत्वेनैव सिद्धेः। नन्वात्मनि विशिष्टव्यवहारे तदपेक्षायामपि न विशेष्यांशे तदपेक्षा। स्वप्रकाशत्वात्। घटादौ तदंशेऽपीति चेन्न। नियतिपदवैयर्थ्यात्। आसंसारमज्ञानावृतस्य

---

रूपत्वकल्पनमिति भावः। ज्ञानस्येति। घटाकारवृत्तिप्रतिफलितचैतन्यस्येत्यर्थः। अन्यथेति। प्रमाणं विनाप्यज्ञानाविरोधितादृशज्ञानकल्पन इत्यर्थः। यद्वाननुभूयमानस्यान्यथोपपन्नकार्यस्य ज्ञानस्य कल्पन इत्यर्थः। नन्वज्ञानाविरोधिज्ञानं न कल्प्यते किन्तु तमेव भान्तमिति श्रुत्यैव सिध्यतीत्यत आह तमेवेति। ननु घटादीनां प्रमाणसिद्धापरोक्ष्यनिर्वाहाय वृत्तिप्रतिफलितचैतन्यविषयत्वमावश्यकम्, तथाच नासिद्धिरित्यत आह चैतन्याविषयस्यापीति। इन्द्रियजन्यत्वेति। इन्द्रियत्वेनेन्द्रियजन्यत्वेत्यर्थः। एतच्चोपलक्षणम्। अनावृतसंवित्तादात्म्येनैव परेणार्थापरोक्ष्यस्वीकारात्, आपरोक्ष्यसिद्ध्यर्थमपि चिद्विषयत्वस्यानावश्यकत्वेनाप्रसिद्धितादवस्थ्यमित्यपि बोध्यम्। अन्यथेति। वृत्तेरपि साक्षात्कारत्वानभ्युपगमे इत्यर्थः। एकेति। चिद्गतापरोक्षत्वस्य वृत्तिगतज्ञानत्वासमानाधिकरणत्वादिति भावः।

ननु स्वातिरेकिसंविदपेक्षेत्यत्र संवित्पदेन किं वृत्तिर्विवक्षिता किंवा चैतन्यमिति विकल्प्य तत्राद्यं निराकरोति आत्मनोऽपीति। घटादावपीति। घटादावपि विशिष्टव्यवहारे तदतिरिक्तसंविदपेक्षानियमेऽपि निर्विकल्पकरूपे तत्स्वरूपव्यवहारे न तदपेक्षेत्यसिद्धिरित्यर्थः। नन्विति। निर्विकल्पके प्रमाणाभावादिति भावः। न विशेष्यांश इति। विशेषणांशे साध्यस्यापि सत्त्वाद व्यभिचार इति भावः। नियतीति। व्यभिचारावारकत्वादिति भावः। ननु चैतन्यस्वरूपमात्र-

मुमुक्षुस्य स्वव्यवहारे अनधिगतार्थबोधकवेदांतजन्याज्ञाननिवर्तकवृत्त्यपेक्षानियमाच्च। वृत्त्यन्य-संविदपेक्षायाश्च तव नित्यातीन्द्रिये मम घटादावप्यभावादित्युक्तत्वाच्च। नच घटादावपि वृत्त्याऽज्ञाने निवृत्ते व्यवहारार्थं संविदन्तरापेक्षा अनुभूयते। एतेन स्वव्यवहारे स्वातिरिक्त-स्वावच्छिन्नसंवित्सापेक्षत्वं दृश्यत्वमिति निरस्तम्।

न षष्ठः। घटादौ विशेष्यवत्फलव्याप्यत्वाभावरूपविशेषणस्याप्युक्तन्यायेन सत्त्वेना-विद्यादौ शुक्तिरूप्यादौ च विशेषणवद्विशेष्यस्यापि सत्त्वेन विशिष्टरूपस्वप्रकाशत्वव्यतिरेक-रूपहेतोः पक्षैकदेशे दृष्टान्ते चाभावात्।

अत्रोक्तं चित्सुखेन। "शुक्तिरूप्यादौ विशेषणमस्ति नतु विशेष्यम्। अध्यस्तत्वात्। अपरोक्षव्यवहारायोग्येऽपि तत्र तद्व्यवहारस्तु अधिष्ठानभूतसाक्षिगतापरोक्ष्याध्यासाद्युक्तः। इदमिति व्यवहारायोग्येऽपि तस्मिन्नधिष्ठानगतेदंत्वारोपादिदमितिव्यवहारवत्। यद्यपि घटादिरप्यध्यस्तः। तथापि तत्र सत्त्वमिवाऽऽपरोक्ष्यं व्यावहारिकम्। रूप्यादौ तु प्राति-भासिक"मिति। तन्न। सर्वव्यावहारिकोपादाने ब्रह्मज्ञानात्प्रागबाधिते श्रुत्यादिसिद्धे च व्यावहारिकेऽज्ञाने अंतःकरणादौ च योग्यत्वस्यापि व्यावहारिकत्वात्। नह्यापरोक्ष्यैकरसेन साक्षिणा साक्षाद्वेद्ये अज्ञानादावापरोक्ष्यं प्रातिभासिकम्, वृत्तिद्वारा तद्वेद्ये घटादौ तु व्यावहारिकमिति युक्तम्। शिष्टं स्वप्रकाशत्ववादे वक्ष्यते।

---

व्यवहारस्याधुनातनस्य स्वातिरेकि[1]संविदपेक्षत्वात् तत्र व्यभिचारवारणार्थेव नियतिपदमिति न सन्देग्धर्यमित्यत आह आसंसारमिति। अज्ञाननिवृत्त्यनन्तरं तादृशविलक्षणस्वव्यवहारे माना-भावात् नियतिपदसत्त्वेऽपि व्यभिचारतादवस्थ्येन न वैयर्थ्यं तत्पदस्येति भावः। द्वितीयं निराह वृत्त्यन्यसंविदपेक्षायाश्चेति। एतेनेति। तव नित्यातीन्द्रिये मम घटादावपि स्वावच्छिन्न संवित्सापेक्षत्वाभावेनेत्यर्थः। उक्तन्यायेनेति। आवश्यकवृत्तिवेद्यत्वोपपत्तौ तत्प्रतिफलितचैतन्य-विषयत्वे मानाभावेनेत्यर्थः। ननु यथा शुक्तिरूप्यादिदृष्टान्ते स्वप्रकाशत्वाभावरूपसाध्यवैकल्यं विशेष्याभावात् परिह्रियते तथैव घटादावप्युभयाभावप्रयुक्तविशिष्टाभावाङ्गीकारेणासिद्धिः किं न परिह्रियते? अध्यस्तत्वहेतुना तत्रापि विशेष्याभावस्य साधयितुं शक्यत्वादिति शङ्कते यद्यपीति। अपरोक्षव्यवहारायोग्यत्वसाधने नाध्यस्तत्वमात्रं हेतुः। किन्त्वागन्तुकदोषप्रयुक्तभानत्वरूपप्राति-

[1] स्वव्यतिरेकीति पाठान्तरम्।

किञ्चास्वप्रकाशत्वस्य पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचारः । यत्तु प्रमाणवस्त्वन्यतराधीनवृत्तिविषयत्वं दृश्यत्वम् । तुच्छस्य घटादिवत्प्रमाणाधीनवृत्तिविषयत्वस्य प्रातिभासिकवद्वस्त्वधीनवृत्तिविषयत्वस्य चाभावान्न तत्र व्यभिचार इति । तत्त्वतितुच्छम् । प्रमाणाधीनवृत्तिविषयत्वस्यामिथ्यात्वेन व्याप्तेः । प्रमाणशब्देन ज्ञापकोक्तौ तु तुच्छे व्यभिचारः । तज्ज्ञानस्यापि ज्ञापकाधीनत्वात् । धीमात्रशरीररूप्यादिवृत्तौ वस्तुपरतन्त्रत्वस्याप्यभावाच्च । वस्तुपरतन्त्रशब्देनासदविषयकत्वस्यासद्विलक्षणविषयकत्वस्य चोक्तौ मद्रीत्या दृष्टान्तस्य साधनवैकल्यात् । ब्रह्मणि व्यभिचारापरिहाराच्च । एवञ्च ।

न धर्मादौ फलव्याप्तिर्वृत्तिव्याप्यत्वमात्मनि । अज्ञातत्वादिरूपेण चिद्वेद्यत्वं तु चित्यपि ॥
अन्यापेक्षाभिलाषत्वमस्त्यौपनिषदात्मनि । त्वदुक्तास्वप्रभत्वं च रूप्ये नास्त्यस्ति चात्मनि ॥

॥ इति दृश्यत्वहेतुभङ्गः ॥ ३ ॥

---

भासिकत्वम् । तच्च घटादौ नास्त्येव । तदाश्रयत्वमात्रेण तत्साधने बाधश्चेत्यभिप्रेत्य परिहरति तथापीति । योग्यत्वस्यापीति । व्यवहारयोग्यत्वस्यापीत्यर्थः । प्रमाणशब्देनेति । व्यावहारिकप्रमाणत्वविवक्षायां चासिद्धिः[1] । व्यावहारिकत्वस्य मिथ्यात्वविशेषरूपस्याद्याप्यसिद्धत्वादिति भावः । ननु दृष्टान्ते प्रसाध्याङ्गस्याभावात् साधनवैकल्यं दोष इत्यत आह ब्रह्मणीति । सुखप्रतिपत्त्यर्थमुक्तदूषणानि संगृह्णाति एवञ्चेति ।

॥ इति दृश्यत्वहेतुभङ्गः ॥ ३ ॥

[1] व्यसिद्धिः इति पाठः

## ॥ अथ जडत्वहेतुभङ्गः ॥

जडत्वमप्यज्ञातृत्वं वा अज्ञानत्वं वा अस्वप्रकाशत्वं वा अनात्मत्वं वा पराभिप्रेतं वा। नाद्यः। त्वन्मते पक्षनिक्षिप्तस्याहमर्थस्यैव ज्ञातृत्वात्। शुद्धात्मनोऽप्यज्ञातृत्वाच्च। शुद्धेऽपि कल्पितं ज्ञातृत्वमस्तीति चेन्न। कल्पितेन हेत्वभावेन व्यभिचारापरिहारात्। कल्पितस्य ज्ञातृत्वस्याभावो हेतुरिति चेन्न। गौरोऽहं जानामीति कल्पितज्ञातृत्ववति देहादौ तदभावासिद्धेः। धर्मिसमसत्ताकस्य ज्ञातृत्वस्याभावो हेतुरिति चेन्न। तादृशज्ञातृत्ववत्यन्तःकरणे तदभावासिद्धेः। शुद्धे तादृशज्ञातृत्वाभावाच्च। न द्वितीयः। वृत्तिज्ञाने भागासिद्धेः। यदि च सांख्यवेदांतिनां तु करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानमिति विवरणोक्तेर्वृत्तिरज्ञप्तिस्तर्हि परोक्षवृत्त्या स्वविषये अज्ञाननिवृत्तिव्यवहारस्मृतयो न स्युः। तासां ज्ञप्तिकार्यत्वात्। धर्माधर्मादिकं च जानामीत्यनुभवश्च न स्यात्। किञ्चात्मनि व्यभिचारः। तथाहि। आत्मरूपं ज्ञानं सविषयं निर्विषयं वा। आद्येऽपि स्वविषयं परविषयं वा। नाद्यः। स्ववृत्तिविरोधेन परैरस्वीकारात्। ननु स्वकर्मकत्वाभावेऽपि स्वव्यवहारजननयोग्यत्वरूपं स्वविषयत्वमस्ति। तत्स्वभावस्यापि स्फुरणस्य तद्व्यवहारजनकतया तद्विषयत्वमिति चित्सुखोक्तेरिति चेन्न। घटादावप्येतदन्यस्य ज्ञप्तिकर्मत्वस्याभावात्। नहि घटादावपि तदाकारवृत्तिः तत्प्रतिबिम्बितचैतन्यं वा ज्ञप्तिः। तां च प्रति कर्मत्वं तत्कारकविशेषत्वं वा तज्जन्यावरणाभिभवरूपातिशययोगित्वं वेतियुक्तम्। ज्ञातैकसति सुखादौ शुक्तिरूप्यादौ चोक्तरूपज्ञप्तिकर्मत्वाभावापातात्। ब्रह्मणोऽपि चरमवृत्तिविषयस्योक्तरूपां ज्ञप्तिं प्रत्युक्तरूपकर्मत्वापाताच्च। किन्तु

---

अहमर्थस्यैवेति। तथाच भागासिद्धिरिति भावः। शुद्धात्मनोऽपीति। तथाच तत्र व्यभिचार इति भावः। व्यभिचारापरिहारादिति। अन्यथा विपक्षे आरोपितसाधनाभावमादायासद्धेतोरपि सद्धेतुत्वप्रसङ्ग इति भावः। तादृशज्ञातृत्वेति। धर्मिसमसत्ताकज्ञातृत्वेत्यर्थः। बुद्धिवृत्तिरिति। अत्र बुद्धिपदमन्तःकरणपरम्। स्ववृत्तिविरोधेनेति। स्वस्यैव स्वंप्रति कर्तृत्वकर्मत्वविरोधेनेत्यर्थः। तत्स्वभावस्यापीति। स्वकर्मकत्वाभावस्वभावस्यापीत्यर्थः। चित्सुखोक्तेरिति। असौ नापसिद्धान्त इति भावः। घटादावपीति। तथाच घटादिसाधारण्याज्ञप्तिकर्मत्वोक्तावपसिद्धान्तानवकाशस्यमिति भावः। ननु वह्निमनुमिनोमीत्यादौ वह्न्यादेः शुक्त्यादावपि कर्मत्वमस्त्वित्यत आह ब्रह्मणोऽपीति। किं च कर्मत्वव्यवहारो निरालम्बनः स्यादित्याह

वृत्त्यभिव्यक्तं घटाद्यधिष्ठानचैतन्यं तज्ज्ञप्तिः, नच तस्य घटादावपि व्यवहारादन्यत्कृत्यमस्ति। इयांस्तु भेदः, घटादिः स्वान्यज्ञप्तिकर्म चैतन्यं तु स्वस्वरूपज्ञप्तिकर्मेति। न द्वितीयः मोक्षे पराभावात्। त्वन्मते च वर्तमानस्यैव साक्षात्साक्षिविषयत्वात्। वह्निरासीदित्याद्यनुमिताविव साक्षिज्ञाने मोक्षसुखयोरतीतविषयोल्लेखरूपोपप्लवापाताच्च। निर्विषयत्वे तु ज्ञानत्वमेव न स्यात्, तद्धि विषयानुल्लेखित्वम्। न तूल्लिखितस्य विषयस्यावर्तमानत्वमत्यन्तासत्त्वं वा येनातीतादिज्ञाने तुच्छज्ञाने च व्यभिचारः स्यात्। नच कदाचित्सविषयत्वमात्रेण ज्ञानत्वम्। सप्रतियोगिके अभावादौ सप्रतियोगिकत्ववत् सविषयके इच्छादौ घटादिज्ञाने च सविषयकत्वादेः स्वभावत्वदर्शनात्। परमपुरुषार्थे मोक्षे आनन्दाप्रकाशापाताच्च। अर्थप्रकाशत्वरूपज्ञानस्वभावाभावेऽपि ज्ञानत्वे घटादेरपि ज्ञानत्वापाताच्च। अर्थाप्रकाशात्मकजडव्यावृत्तेरपि अर्थप्रकाशात्मकत्वं विनाऽयोगाच्च। एवं ज्ञात्रभावादपि न ज्ञानम्। नहि भोज्यभोक्तृरहिता भुक्तिरस्ति। यदि च ज्ञानस्यानादित्वात्तदनपेक्षा तर्ह्यनादेः प्रागभावादेः प्रतियोगिनि

---

किं न्विति। ज्ञप्तिकर्मत्वस्य ज्ञप्तिनिरूपणं विना निरूपणायोगात् तत्स्वरूपमाह वृत्त्यभिव्यक्तमिति। वृत्तिकृतावरणाभिभवमित्यर्थः। नच तस्येति। तथाच तज्जन्यव्यवहारयोग्यत्वमेव[1] ज्ञप्तिकर्मत्वं पर्यवसितम्। एवञ्चापसिद्धान्त इति भावः। भेदः विशेषः। नन्वतीतमेव तदापि विषयोऽस्त्वित्यत आह त्वन्मत इति। वर्तमानस्यैव त्वन्मते ज्ञानाज्ञानविषयत्वं विनैव शुद्धचैतन्यविषयत्वादित्यर्थः। नन्वतीतमतीतत्वेनैव मोक्षदशायां शुद्धचैतन्यविषयोऽस्त्वित्यत आह वह्निरासीदिति। न चेष्टापत्तिः सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यनुभवविरोधादिति भावः। एतच्चोपलक्षणम्। शुद्धचैतन्यस्य साक्षिपदार्थत्वास्वीकारेऽपसिद्धान्तश्चेत्यपि बोध्यम्। द्वितीयपक्षे दोषमाह निर्विषयत्वे त्विति। ननु निर्विषयत्वं न ज्ञानत्वाभावापादकम्, अतीतादिज्ञाने व्यभिचारादित्यत आह तद्धीति। नन्वात्मरूपं ज्ञानं परविषयत्वेनैव ज्ञानं स्यात्। नच मोक्षे पराभावः। तथापि संसारदशायां परसत्त्वेन ज्ञानत्वानपायात्। ज्ञानत्वे लाघवेन सविषयत्वमात्रस्यैव तन्त्रत्वादित्याशङ्क्य निराकरोति नचेति। सविषयकत्वादेरिति। यद्यपि सप्रतियोगिक इत्युपक्रमात् सप्रतियोगिकत्वादेरित्येव वक्तुमुचितम्। तथापि साध्यतया प्रधानत्वात्तस्य दृष्टान्तभूतप्रथमप्रक्रान्तसप्रतियोगिकत्वोल्लङ्घनेन सविषयकत्वस्यैवोपादानमिति ध्येयम्। परमपुरुषार्थ इति। स्वरूपानन्दस्य प्रकाशाभावादिति भावः। निर्विषयकत्वपक्षे दोषान्तर-

---

[1] व्यवहारानुकूलत्वमिति क.ख.। [2] आमोदपाठे सप्रतियोगिकत्वादेरिति नास्तीति भाति।

जातिरूपस्य धर्मस्य व्यक्तिरूपे धर्मिणि जीवब्रह्मविभागस्य च धर्मिप्रतियोगिनोर्भेदरूपस्य शब्दस्य च वक्तृवाच्ययोरज्ञानस्य चाश्रयविषययोर्ब्रह्मसत्तायाश्च कर्तर्यपेक्षा न स्यात् । तथाचास्ति ब्रह्मेत्यादौ कर्तरि लकारो न स्यात् । अतीतादिज्ञानस्येश्वरज्ञानस्य चोत्पत्त्यर्थं विषयाद्यनपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वस्वभावत्वाच्च । इदमहं जानामीति ह्यनुभवः । उक्तं हि विवरणे । "ज्ञातुरर्थप्रकाशस्य ज्ञानत्वा"दिति । तथाच "ज्ञातृज्ञेयविहीनं ते ब्रह्मज्ञानात्मकं यदि । भोक्तृभोज्यविहीनापि भवेत्तर्हि भुजिक्रिया ।"

किञ्चात्मा ज्ञानं चेत्प्रमा भ्रमो वा । नाद्यः । तद्वयस्याविद्यादेस्तात्त्विकत्वापातात् । नांत्यः दोषाजन्यत्वात् । नन्वन्तःकरणवृत्तिप्रतिबिंबितस्स प्रमा । अविद्यावृत्तिप्रतिबिंबितस्तु भ्रम इति चेन्न । स्वभावप्रश्नं प्रत्यस्यानुत्तरत्वात् । स्वभावतो रूपद्वयहीनश्चेत्स्वभावतो ज्ञानमपि न स्यात् । न तृतीयः । निरस्तत्वात् । चतुर्थेऽपि न तावदात्मत्वं जातिविशेषः । आत्मन एकत्वात् । विशिष्टात्मनां भेदेऽपि तेषां पक्षनिक्षिप्तत्वात् । नापि ज्ञातृत्वं वा ज्ञानत्वं वा

---

माह अर्थेति । दृष्टान्तवैषम्यं शङ्कते यदि चाज्ञानस्येति । आत्मरूपस्येति शेषः । तर्हीति[1] । प्रागभावादेरनादित्वेऽपि प्रतियोगिनिरूप्यत्वादिरूपापेक्षाया अनुभवसिद्धत्वेन तत्त्यागेऽनुभवविरोध इति भावः । अपेक्षेत्येतत् प्रतियोगिनीत्यादि सप्तम्यन्तपदोपादानेन संबध्यते । तथाचेति । अन्यथा लः कर्मणि च भावे चाकर्मकेभ्य इति पाणिनिस्मृतिविरोध इति भावः । नन्वात्मरूपज्ञानस्यातीतादिज्ञानवदुत्पत्तौ विषयाद्यनपेक्षत्वेऽपि ज्ञानत्वं सेत्स्यतीत्यत आह अतीतादिज्ञानस्येति । उक्तार्थेऽनुभवं प्रमाणयति इदमहमिति । पराभ्युपगमोऽप्येवमेवेत्याह उक्तं हीति । तद्वयस्येति । प्रामाण्यस्य विषयाबाधघटितमूर्तित्वादिति भावः । दोषाजन्यत्वादिति । भ्रमत्वस्याप्रामाण्यरूपस्योत्पत्तौ परतस्त्वेन दोषजन्यत्वावश्यंभावादिति भावः ।

नन्विति । नन्वेकस्यैवात्मनः प्रमाभ्रमोभयरूपत्वं विरोधः, वृत्तिरूपोपाधिभेदेन न विरोधोपपत्तेरिति भावः । स्वभावप्रश्नं प्रतीति । आत्मस्वरूपं कीदृशमिति पृष्टप्रश्नं प्रति तत्स्वरूपमीदृशमिति उत्तरे वक्तव्ये स्वकपोलकल्पितप्रमात्वादिस्वरूपकथनस्यानुचितत्वादित्यर्थः । ज्ञानमपि न स्यादिति । न च निर्विकल्पकसाक्षीभास्यज्ञानवत् रूपद्वयहीनोऽप्यात्मा ज्ञानं स्यादिति वाच्यम् । तयोरपि अबाधितार्थकत्वेन प्रमात्वात् । नन्वेवं साक्षीभास्यज्ञानस्य अजन्यत्वेन प्रामाण्यस्योत्पत्तौ स्वतस्त्वपक्षे ज्ञानसामान्यसामग्रीजन्यत्वरूपस्वतस्त्वनिर्वाहाय प्रमावृत्तिर्भावो वृत्तिर्वा इति

[1] तर्थः इति पाठः ।

स्वप्रकाशत्वं वा। निरस्तत्वात्। नाप्यानन्दत्वम्। जन्मादिमत्यऽनात्मनि वैषयिकानन्देऽनानन्दत्वासिद्धेः। तस्याप्यात्मत्वे नीरपानजातात्क्षीरपानजं सुखमधिकमित्यनुभवेन सैषानन्दस्य मीमांसा भवतीत्यादिश्रुत्या साधनतारतम्यादियुक्त्या च सिद्धमानन्दतारतम्यं च न स्यात्। अखण्डे स्वरूपानन्दे अभिव्यक्तितारतम्यस्याप्ययोगात्। विरोधिनो दुःखस्य सर्वात्मनाभावेऽपि सुखे तारतम्यानुभवाच्च। अन्तःकरणवृत्तिरूपज्ञानवत्तद्वृत्तिरूपसुखाभावे अहंसुखीत्यनुभवायोगाच्च। अनानन्दत्वस्य मिथ्यात्वं प्रत्यप्रयोजकत्वाच्च। नाप्यहंत्वम्। तदभावस्याहंकारेऽसिद्धेः। आत्मनि व्यभिचाराच्च। नापि प्रत्यक्त्वम्। उक्तादन्यस्य तस्याभावात्। नाप्यपरिच्छिन्नत्वम्। निरसिष्यमाणत्वात्। नाप्यबाध्यत्वम्। हेतोः साध्यावैशिष्ट्यात्। नाप्यात्मशब्दवाच्यत्वम्। अवाच्ये आत्मनि हेतोर्व्यभिचारात्, आत्मशब्दवाच्ये देहादावसिद्धेश्च। नापि तल्लक्ष्यत्वम्, तत्प्रतिपाद्यत्वमात्रं वा। इन्द्रियादावात्मशब्दलक्ष्ये हेतोर्भागासिद्धेः। नापि पराभिप्रेतम्। मया ज्ञातृत्वमात्मत्वमित्यङ्गीकारात्। तस्माच्च चतुर्थः। नापि पञ्चमः। मया अज्ञातृत्वं जडत्वमित्यङ्गीकारात्। एतेन तत्वशुध्युक्तोऽचेतनत्वहेतुरपि निरस्त इति॥

॥ इति जडत्वहेतुभङ्गः ॥ ४॥

---

वाच्यम्। विशेषसामग्र्यजन्यज्ञानत्वस्यैवोत्पत्तौ स्वतस्त्वरूपत्वेनोक्तत्वादिति। अनानन्दत्वासिद्धेरिति। परेणाप्यनुभवबलेन तस्याप्यानन्दत्वस्याभ्युपगन्तव्यत्वादिति भावः। तस्यापीति। वैषयिकसुखस्येत्यर्थः। नच सुखे जन्माद्यनुभवविरोधः। तस्याभिव्यञ्जकवृत्तिविशेषविषयत्वादिति भावः। ननु तरतमभावापन्नदुःखसंबन्धेन आनन्दतारतम्यव्यवहारोपपत्तिरित्यत आह विरोधिन इति। तद्वृत्तिरूपसुखाभाव इति। अन्यथा वृत्तिरूपज्ञानमपि न सिध्येदिति भावः। अहंत्वमिति। अहंकारत्वमित्यर्थः। उक्तादन्यस्येति। ज्ञातृत्वादितोऽन्यस्येत्यर्थः। निरसिष्यमाणत्वादिति। परिच्छिन्नत्वहेतुभङ्ग इति शेषः। साध्यावैशिष्ट्यादिति। अबाध्यत्वस्यात्मत्वे तदभावो बाध्यत्वमेव हेतुः स्यात्। तदेव च मिथ्यात्वमिति साध्यावैशिष्ट्यादिति भावः। मिथ्यात्वान्तरस्य साध्यत्वेऽपि साध्यवदेव हेतोः संदिग्धत्वात् फलतः साध्यावैशिष्ट्यमित्यवधेयम्। अवेति। तथाचात्मनि व्यभिचारतादवस्थ्यम्। अन्तःकरणे भागासिद्धिश्चेति भावः। एतेन जडत्वहेतुदूषणेन। ॥ इति जडत्वहेतुभङ्गः ॥ ४॥

[1] मु. ल्यात्यात स्वतः।

## ॥ अथ परिच्छिन्नत्वहेतुभङ्गः ॥

परिच्छिन्नत्वमपि देशतः कालतो वस्तुतो वा । नाद्यद्वितीयौ । देशकालाज्ञानेषु त्वदभिमते वियदादेरूप्यादेश्च प्रतिपन्नोपाधिस्थनिषेधे चासिद्धेः । अवकाशरूपदेशस्य कालस्य चाऽपरिच्छिन्न(तयैव)त्वेनैव धर्मिग्राहिणा साक्षिणा "आकाशवत्सर्वगतश्च नित्यः । सदेव सौम्येदमग्रे, दृष्ट्वैव तं मुच्यते, अथ मर्त्योऽमृतो भवति, यत्र त्वस्य सर्वमात्मैवाभू"दित्यादिश्रुत्या सदा सर्वत्र कार्यदर्शनादियुक्त्या च सिद्धेः । "आकाशः संभूत" इत्यादिश्रुतेश्च भूताकाशविषयत्वात् । उक्तं चाकाशद्वैतमन्यत्र । अत्र देशो नास्ति इदानीं कालो नास्तीत्यस्य व्याहतत्वाच्च । ब्रह्म कुत्रचित्कदाचिद्देशं कालं च विनास्तीत्यस्यापि व्याहतत्वाच्च । देशकालयोः स्वोपाधौ निषेधे विरोधेनाविरोधाय निषेधोपाधितया देशकालांतर-

---

अवकाशरूपदेशस्येति । नैयायिकाभिमतदिक्शब्दवाच्यस्येत्यर्थः । कालस्येति । अविद्यारूपकालस्येत्यर्थः । तादृशाकाशकालयोः प्रमाणमाह ॥ धर्मिग्राहिणेति ॥ साक्षिणः प्रमाकरणत्वाभावेन तस्य प्रामाण्यमेव दुर्लभमिति चेदस्तं प्रत्याह आकाशवदिति । श्रुतौ चकारस्वारस्यादाकाशवदिति सर्वगतत्वे नित्यत्वे च दृष्टान्त इति द्रष्टव्यम् । अग्र आसीत्, दृष्ट्वा मुच्यते, भवति, यत्राभूदित्यादिशब्दैः कालः प्रतीयते । अनद्यतने लङ्, समानकर्तृकयोः पूर्वकाले क्त्वा, वर्तमाने लट्, भूत इति पाणिनिस्मरणात्, मङ्गलानन्तरेत्यादिकोशकारस्मरणाच्चेति भावः । यत्र त्वस्येति श्रुतौ यत्रेति यदेत्यर्थः । देशकालयोरपरिच्छिन्नत्वेऽनुमानमपि प्रमाणयति ॥ सर्वदा सर्वत्रेति ॥ विमतं कार्यं देशकालोभयजन्यं कार्यत्वात् सम्प्रतिपन्नवदित्यादि (अभियुक्तोक्तयुक्त्येति पाठान्तरम्) युक्त्येत्यर्थः । अत्र दर्शनग्रहणं स्वरूपासिद्धिवारणायेति बोध्यम् । नन्वाकाशोत्पत्तेः श्रुतिसिद्धत्वान्न तस्य कालतोऽपरिच्छिन्नत्वमित्यत आह ॥ आकाश इति ॥ ननु भूताकाशान्याकाशे प्रमाणाभावेन न तत्रासिद्धिशङ्कोदय इत्यत आह ॥ उक्तञ्चेति ॥ देशकालयोः देशकालकृतपरिच्छेदोऽस्तीत्यत्र अत्र देशो नास्ति, इदानीं कालो नास्ति, ब्रह्म कुत्रचित् कदाचित् देशं कालं च विनास्तीति प्रतीतिर्वा प्रमाणीकर्तव्या । न च सा प्रमाणीभवितुं शक्यते व्याहतेत्याह व्याहतत्वादिना ॥ देशकालयोरिति ॥ अनुपहितदेशकालयोरुपहितदेशकालयोर्वा निषेधबुद्धिः विरोधात् । प्रतियोगितावच्छेदकावच्छिन्नज्ञानसत्त्वात् । अतीतं वर्तमानादि निषेधबुद्धिश्च तत्तदुपाधौ तत्तदुपाधिविशिष्टे वा तत्तदुपाधेस्तत्तदुपाधिविशिष्टस्य वा अभावमवगाहते, इति

योरावश्यकत्वाच । देशस्सर्वत्रास्ति कालस्सदास्ति पूर्वः काल इत्याद्यबाधितप्रतीत्या तयोः स्वनिर्वाहकतया प्रमेयत्वादिवत्स्वसंबन्धसंभवाच । अज्ञानस्य च सर्वगतदेशकालोपादानत्वेन सर्वगतं ब्रह्म प्रति विषयसंबन्ध्यावरणत्वेन च देशादिपरिच्छेदायोगात् । प्रतिपक्षोपाधौ निषेधस्य च कुत्रचित्कदाचिदभावे तत्र तदा प्रतियोगिनः सत्त्वापातात् । तथाच—
"कालादिर्न परिच्छिन्न अग्र आसीद्यथामृतः । इत्यादिश्रुतिभिर्नोचेद्दुर्वारा व्याहृतिर्भवेत् ।"
किञ्च कालादिपरिच्छिन्नत्वं न तावदेककालादिमात्रे सत्त्वम् । रूप्यादौ ममासिद्धेः । तेन त्रैकालिकनिषेधसाधने विरोधाच । नापि तथाधीमात्रम् । मात्रशब्देनैककालादिमात्रे सत्त्वरूपार्थाभावोक्तौ भ्रमोक्तौ च प्रपञ्चे ममासिद्धेः । प्रमाभ्रमसाधारणधीत्वसामान्योक्तावात्मन्यपि तादृशभ्रमसंभवेन व्यभिचारात् । व्यावहारिकप्रमोक्तौ रूप्यादावभावात् । नापि कालान्तरादावसत्त्वम् । तेन स्वकालादावप्यसत्त्वसाधने प्रमाणविरोधस्याविशिष्टतया स्वकालादौ सत्त्वेन कालान्तरादौ सत्त्वसाधनापातात् । रूपान्तरेणासतो ब्रह्मणः स्वरूपेणाप्यसत्त्वापाताच । रूप्यादेर्वियदादेश्च स्वकालेऽप्यसद्विलक्षणस्वरूपाभावापाताच । एतेन

---

नानुपहितयोस्तयोः परिच्छिन्नत्वमित्यर्थः । नन्वनुपहिते देशे काले च कथं नानुपहितदेशकालाभावज्ञानं, तस्य स्वावृत्तित्वादित्यत आह ॥ देश इति ॥ अज्ञानस्या(प्रतिज्ञातम)परिच्छिन्नत्वमुपपादयति ॥ अज्ञानस्य चेति ॥ ननु सर्वगतब्रह्मावरकत्वेऽपि नाज्ञानस्यापरिच्छिन्नत्वं विषयावरकनयनपटलादेः परिच्छिन्नत्वदर्शनादित्यत आह ॥ विषयसम्बन्ध्यावरकत्वेन चेति ॥ तत्र तदेति ॥ अभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमादिति भावः । कालादिर्नपरिच्छिन्नः अग्र इत्यत्र संधिकार्यं विना निर्देशः श्रुतिवाक्यस्याकारप्रदर्शनार्थः । अत एवेत्यादिश्रुतिभिरिति श्रुत्याकारप्रदर्शनमत्र इत्यवधेयम् ॥ ममेति ॥ ममज्ञानाङ्गीकर्तुरित्यर्थः ॥ विरोधाचेति ॥ यत्किञ्चिद्विरोधसत्त्वस्यैव सामान्याभावविरोधित्वादित्यर्थः ॥ तथाधीमात्रमिति ॥ एककालादिमात्रसत्त्वप्रकारकधीमात्रमित्यर्थः । [illegible]मात्रमित्यादौ मात्रशब्देन सामीचीन्यव्यवच्छेदवत् धीमात्रमित्यत्रापि [मात्रपदेन सामीचीन्यव्यवच्छेदवत्] धीमात्रमित्यत्रापि सामीचीन्यमरूपेण पर्यवस्यतीति त्याशयेनाह ॥ भ्रमोक्तौ चेति ॥ मात्रपदस्य तत्त्वावेदकत्वप्रामाण्यरूपधीसामीचीन्यव्यवच्छेदपरत्वाङ्गीकारे को दोष इत्यत आह ॥ व्यावहारिकेति ॥ ननु कालान्तरादौ स्वरूपेणासत्त्वं हेतुः, प्रतियोगिरूपव्यतिरिक्तरूपेणेति विवक्षायां निराकरोति ॥ तेनेति ॥ द्वितीयं निराह ॥ रूपान्तरेणेति ॥ [illegible]मित्यर्थः । रूप्यादेरिति ॥ शुक्तिरूप्यादेरपि पारमार्थिकत्वाभाव-

यत्सत्तत्सदा सर्वत्र सदेव । नहि रूपं कदाचित्कुत्रचिद्गन्धो भवति । तथाच यत्कदाचित्कुत्रचिदसत्तत्सदा सर्वत्रासदेवेति वाचस्पतीयं शून्यवाद्युक्तयुक्त्युद्गिरणं निरस्तम् ।

ननु देशपरिच्छिन्नत्वं सर्वमूर्तासंयोगित्वं वा परममहत्परिमाणानधिकरणत्वं वा महत्त्वानधिकरणपरिमाणाधिकरणत्वं वेति चेन्न । आद्ययोरसङ्गे निर्गुणे च ब्रह्मण्यपि भावात् । अंत्यस्य गुणादावप्यभावात् । कालपरिच्छिन्नत्वमन्योन्याभावादौ प्रतिवादिसिद्धं च ।

न तृतीयः । तद्धि भिन्नत्वम् । तस्य च तात्विकस्य प्रपञ्चेऽप्यभावात् । आत्मन्यप्यनृतव्यावृत्तिस्तात्विकीति वक्ष्यमाणत्वाच्च । कल्पितस्य त्वात्मन्यपि भावात् । धर्मिसमसत्त्वस्वरूपेऽपि ममाभावात् । भिन्नत्वमात्रस्य चाध्यस्ताद्भेदेन सत्वेऽप्युपपत्तेः । सत्याद्भेदस्य चासिद्धेः ।

एतेन यदुक्तं प्रमाणमालायां "विवादाध्यासिताः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात् । यथा सर्पमालादिकं स्वानुगते रज्ज्वा इदमंशे सदर्थे च ब्रह्मण्यनुगच्छति

---

हारिकत्वादिरूपान्तरेणासत्त्वात् । तथाच कालान्तरासत्त्वं न स्वकाले असत्त्वप्रयोजकम् । नचैवमेकत्रसत्त्वासत्त्वयोः विरोधः । अवच्छेदकभेदेनाविरोधोपपत्तेरिति भावः (अविरोधोपपत्तिरिति भावः, इति पाठान्तरम् ) एतेनेति ।। अवच्छेदकभेदेन विरुद्धयोरप्यविरोधव्यवस्थापनेनेत्यर्थः । नचैवं रूपं कदाचिद्गन्धो भवेदिति वाच्यम् । तत्र रूपत्वगन्धत्वयोः सर्वदा विरोधस्य प्रमाणसिद्धत्वेन तस्य (सत्वापादनेति पाठान्तरम् ) तत्वापादने न किञ्चित्कारणान्तरमस्तीति भावः ।

सकलमूर्तसंयोगिदेशकालाद्यनभ्युपगन्तुः शाङ्करमित्यसिद्धपुद्भावनमुपेक्ष्य व्यभिचारमाह ॥ आद्ययोरिति ।। यद्यपि निर्गुण इत्यनेनैवोभयव्यभिचारप्रदर्शनं भवति संयोगस्यापि गुणत्वादित्यसङ्गः इत्यधिकम्, तथापि प्रथमहेतुमत्त्वे प्रकारान्तरमप्यस्तीति सूचयितुं तदुक्तिरित्यवधेयम् ॥ प्रतिवादिसिद्धमिति ।। नैयायिकाद्यसिद्धमित्यर्थः । तद्धीति ।। वस्तुतः परिच्छिन्नत्वमित्यर्थः ॥ ननु भिन्नत्वं तात्विकमतात्विकं वा साधारणं वेति विकल्प्याद्ये दोषमाह ॥ तस्येति ।। वक्ष्यमाणत्वाचेति ।। ब्रह्मण्यवेदवाद इति शेषः । द्वितीय आह ।। कल्पितस्येति ।। ननु कल्पितभिन्नत्वमात्रस्यात्मनि व्यभिचारेऽपि धर्मिसमसत्त्वेन विशेषितस्य तस्य न व्यभिचार इत्यत आह ॥ धर्मिसमसत्त्वस्येति ।। धर्मिणाध्यो भिन्नत्वसमः । ममापि मत इत्यर्थः । तृतीय आह ।। भिन्नत्वमात्रस्येति ।। सत्यादिति ।। सत्यत्वावच्छिन्नादित्यर्थः ॥ स्वानुगतप्रतिभास इति ॥

खण्डो गौर्मुण्डो गौरिति प्रत्येकं गोत्वानुविद्धस्यापि खण्डादेस्तत्रानध्यासात् । किञ्च रूपादिहीनमासंसारमज्ञानावृतं शब्दैकगम्यं ब्रह्म सन्घटः सन् शब्द इत्यादिचाक्षुषादिज्ञाने न भाति । किंत्वनित्यो घट इत्यादौ अनित्यत्वादिकमिव सत्वमपि घटगतमेव । नच स्वरूपेणाप्रत्यक्षस्यापि राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेन प्रत्यक्षतेति युक्तम् । शब्दाद्यवच्छिन्नस्य गगनादेः श्रावणादित्वापातात् । राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य शुक्लभास्वरचन्द्रसंबन्धाच्चाक्षुषता युक्तेति ॥

॥ इति परिच्छिन्नत्वहेतुभङ्गः ॥ ५ ॥

---

ब्रह्मणोऽपि चाक्षुषत्वं किं न स्यादित्यत आह ॥ आसंसारमिति ॥ आकल्पाभिविधौ । किञ्च ब्रह्मणः शब्दैकसमाधिगम्यत्वादपि न चाक्षुषादिप्रत्ययगोचरत्वमित्याह ॥ शब्दैकसमधिगम्यमिति ॥ घटगतमेवेति ॥ स्वीकार्यमितिशेषः । अन्यथाऽनित्यत्वादिकमपि घटादिधर्मतया न सिद्ध्येदिति भावः । नन्वेवं राहोरपि चाक्षुषत्वं न स्यादित्यत आह ॥ राहोस्त्विति ॥ उद्भूतनीलरूपवत्त्वेन तस्यायोग्यत्वमसिद्धमिति भावः ॥ ५ ॥

॥ इति परिच्छिन्नत्वहेतुभङ्गः ॥ ५ ॥

## ॥ अथांशित्वादिहेतुभङ्गः ॥

अंशित्वादिहेतुष्वपि मतद्वयेऽपि कार्यस्य कारणाभेदेन तदनाश्रितत्वात्सिद्धसाधनम्। अनाश्रितत्वेनान्याश्रितत्वेन चोपपत्त्यार्थान्तरं च। यदि च प्रत्यक्षबाधादेतत्तंत्वारब्धस्य पक्षत्वेन पक्षधर्मताबलाद्वा नानाश्रितत्वादिकं तर्हि तत एवैतत्तन्तुष्वपि नासत्त्वम्। अपि-चात्यन्ताभावः प्रामाणिकोऽप्रामाणिको वा। आद्येऽद्वैतहानिः। अन्त्ये सिद्धसाधनम्। एतेनात्यन्ताभावमात्रं साध्यमिति निरस्तम्। अत्यन्ताभावो व्यावहारिक इति तु निरस्तम्। नन्वभावरूपा धर्मा नाद्वैतं घ्नन्तीति मण्डनोक्तेरभावाद्वैतं स्वीकृतमिति चेन्न। अभावे अभावत्वादेस्तदाश्रये चाभावाश्रयत्वादेः भावस्यावश्यकत्वात्। अभावरूपप्रवृत्तिनिमित्त-संभवेन ब्रह्मणोऽद्वितीयादिशब्दवाच्यत्वापातात्। अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वयोर-सिद्धेश्च। अन्यस्य च तत्त्वावेदकस्याभावात्। श्रौताद्वितीयपदस्याभावरूपद्वितीयनिषेध इव भावरूपद्वितीयनिषेधेऽपि मानान्तरेणाग्र इति स्वपदेन च विरोधाविशेषे भावरूपद्वितीय-

---

कार्यस्येति ॥ उपादेयस्योपादानाभेदेनेत्यर्थः। ननु त्वन्मते कार्यकारणयोः अत्यन्त-भेदाद्भिन्नत्वसंभवान्न सिद्धसाधनम्। कार्यकारणयोरभेदवादस्तु सत्कार्यवाद्यभिप्राय इत्यत आह ॥ अनाश्रितत्वेनेति ॥ गतेनेति ॥ सामान्यस्य विना विशेषमपर्यवसानादिति भावः ॥ निरस्तमिति ॥ प्रमाणिप्रसिद्धस्य व्यावहारिकनिषेधप्रतियोगिनः पारमार्थिकत्वापातेनेति भावः ॥ अभाव इति ॥ अभावत्वमखण्डोपाधिस्तत्संबन्धमात्रातिरिक्त इत्यभिप्रेत्यैतदुक्तम् ॥ अभावाश्रयत्वादेरिति ॥ यद्यप्यभावाश्रयत्वं तदाश्रयान्नातिरिच्यते तथापि तदाश्रयमात्रम्। किन्तु तत्स्वरूपविशेषः। स च भावनिर्विशेषत्ववादिना नाङ्गीकर्तुं शक्य इति भावः ॥ अद्वितीयादिशब्देनेति ॥ यद्यप्य-द्वितीयादिशब्दस्य न पदत्वमिति (अपदत्वमिति पाठान्तरम्) न प्रवृत्तिनिमित्तापेक्षा। तथाप्य-तद्गुणसंविज्ञानबहुव्रीहिणा पदैकपदयोः स्वगतभेदसजातीयभेदनिषेधकयोर्ग्रहणमिति ध्येयम्। किञ्च ब्रह्माभावाद्वितीयाभावे किं प्रमाणं वेदान्तो वा अन्यो वेति विकल्प्य नाद्य इत्याह ॥ अखण्डार्थेनेति ॥ संसर्गासंसर्गिनिष्प्रकारकधीजनकेनेत्यर्थः। द्वितीयं निराह ॥ अन्यस्य चेति ॥

नन्वद्वितीयपदमहिम्नैव द्वितीयाभावः सिद्ध्यतीति ॥ नच द्वितीयत्वेन तस्यापि निषेधः विरोधादित्यत आह ॥ श्रौतेति ॥ मानान्तरेणेति ॥ यस्मिन्श्रौतित्याद्विवाक्यान्तरेणेत्यर्थः ॥ स्वपदेनेति ॥ स्वसमभिव्याहृतपदेनेत्यर्थः। किञ्चाभावरूपा धर्मा नाद्वैतं घ्नन्तीत्यभ्युपगच्छता

निषेधपरत्वेनैव संकोचो नत्वभावरूपद्वितीयनिषेधपरत्वेनेत्यत्र हेत्वभावाच्च। भावस्यापि स्वाभावाभावत्वाच्च। अभेदस्याप्यन्योन्याभावप्रतियोगित्वेन तत्सत्यत्वासिद्धेश्च। भेदस्याप्यन्योन्याभावत्वेन तत्सत्यत्वापत्तेश्च। प्रध्वंसादेः प्रतियोगिना सह विरोधाय स्वतुल्यसत्वप्रतियोगिसापेक्षत्वाच्च। भावत्वानिर्वचने भावस्येवाभावत्वानिर्वचनेऽभावस्यापि सत्वासिद्धेरभावे सत्वार्थं तवाप्यभावत्वादिनिर्वच(ने)नप्रयासापाताच्च। अभावे दृश्यत्वादेर्व्यभिचारस्य (वा)चाभाववद्भावस्यापि सत्यत्वेऽपि दृश्यत्वोपपत्त्या अप्रयोजकत्वस्य(वा)चापाताच्च। अभावस्य प्रतियोगिघटितत्वेन भावादपि विशिष्याद्वैतविरोधित्वाच्च। किञ्चात्यन्ताभावप्रतियोगित्वं स्वरूपेण वा पारमार्थिकत्वेन वा। नोभयमपि, निरस्तत्वात्। अन्या(न्यत्रा)समवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना(ऽनुपपन्नमि)न युक्तमिति विरुद्धश्च। कस्यचित्पटस्य संयोगवृत्त्या एतत्तन्तुषु सत्त्वादनैकांतिकश्च। समवायवृत्त्या एतत्तन्तुष्वसत्त्वं तु विशेषणासत्वेनापि युक्तम्। इह तन्तुषु पट इतिप्रत्यक्षबाधितश्च। अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न। एतत्तन्त्वारब्धत्वाद्व्यतिरेकेण पटान्तरवदिति सत्प्रतिपक्षश्च। नचाप्रसिद्धविशेषणता। एतत्तन्तुनिष्ठा-

---

(अभावरूपधर्मा नाद्वैतं निघ्नन्तीत्यभ्युपगच्छतेति पाठान्तरम्) किमभावत्वेनाभावव्यवहारालम्बनमात्रं विवक्षितं किं वा सप्तमपदार्थः। द्वितीयेऽप्यन्योन्याभावो वा संसर्गाभावो वेति विकल्प्य नाद्य इत्याह ॥ भावस्यापीति ॥ द्वितीये प्रथमं निराह ॥ अभेदस्यापीति ॥ पारमार्थिकाभावप्रतियोगित्वस्यैव मिथ्यात्वे तन्त्रत्वादिति भावः। अन्त्ये दोषमाह ॥ प्रध्वंसादेरिति ॥ किञ्चाभावः पारमार्थिक इति न त्वयाऽभ्युपगन्तुं शक्यः। तथासति तत्सत्यत्वनिर्वाहार्थं त्वयाऽभावत्वस्य निर्वक्तव्यत्वापत्तेः। अन्यथा भावत्वस्य दुर्वचत्वेन भावस्य मिथ्यात्वमिति न स्यादित्यत आह भावत्वानिर्वचन इति॥ ननु भावत्वेन हेतुविशेषणान्न व्यभिचार इत्यत आह॥ अभाववदिति ॥ अभावस्य प्रतियोगिघटितत्वेनेति। अतिरिक्ताभावस्य स्वसमानसत्ताकप्रतियोगिनिरूप्यत्वेनेत्यर्थः॥ विरुद्धश्चेति ॥ स्वस्य पक्षधर्मतासिद्ध्यर्थं साध्याभावसापेक्षत्वात् तेन साध्यसाधने विरोध इति भावः।

किञ्चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं संयोगेन समवायेन संबन्धान्तरेण वेति विकल्प्याद्ये दोषमाह ॥ कस्यचिदिति ॥ यद्यपि पटान्तरसंयुक्त(असंवृत्तेति पाठान्तरम्)तन्तुष्वारब्धपटस्य पक्षत्वे नायं दोषः। तथापि सिद्धसाधनमित्यत्र तात्पर्यम् ॥ द्वितीये दोषमाह ॥ समवायवृत्त्येति ॥ त्वयाऽस्यां समवायस्यानभ्युपगमादिति भावः। तृतीय आह ॥ इहेति। एतच्च नैयायिकरीत्या

त्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि संसर्गाभावप्रतियोगित्वव्याप्यत्वात् प्रागभावप्रतियोगित्ववदितिसामान्यतस्तत्सिद्धेः । एतच्चानारभ्यत्वं चोपाधिः । नचैतत्तन्त्वारब्धसंयोगे साध्याव्यापकम् । आवयोस्संयोगःस्वात्यन्ताभावासमानाधिकरणइतिसंमतेः । द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वोपपत्तेश्चोपाधिरेव प्रयोजकः । साध्यवति ब्रह्मणि उपाधिवद्धेतोरभावात् । अनुकूलतर्काभावे च व्यतिरेकहीनस्याप्युपाधित्वाच्च । नह्यंशित्वं साध्यं विना न युक्तम् । उक्तहेतुनैवैतत्पटार्थक्रियाकारित्वाद्यभावस्यापि सुसाधत्वादाभाससाम्यं च ।

यत्तु विमतं ज्ञानव्यतिरेकेणासत् ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादितिविद्यासागरीयं बौद्धोक्तसहोपलंभयुक्त्युद्धरणम्, तत्र ज्ञानाद्भेदेनानुपलभ्यमानत्वं वा हेतुः ज्ञानविरह-

---

बोध्यम् । सिद्धान्ते एतादृशप्रतीतेरेवासिद्धेरिति ॥ नचेति ॥ यद्यप्यभावसाध्यकव्यतिरेकिणि न साध्याप्रसिद्धिर्दोषः । साध्यप्रसिद्धिं विनापि साध्याभावहेत्वभावयोर्भावरूपतया व्याप्तिग्रहसंभवात् । तथापि साध्याभावत्वेन तत्प्रतीतेः साध्यप्रसिद्धिं विना असम्भवेन साध्याप्रसिद्धिर्दोष एवेति । (साध्याभावत्वेन व्याप्तिग्रहासंभवात् साध्याप्रसिद्धिर्दोष एवेति) ॥ संसर्गाभावेति ॥ अत्र संसर्गाभावपदं अन्योन्याभावप्रतियोगित्वे व्यभिचारवारणाय ॥ आवयोरिति ॥ नच संयोगस्य व्याप्यवृत्तित्वं मूले वृक्षः कपिसंयोगी शाखायां नेत्यनुभवबाधितमिति वाच्यम् । एतदनुभवादेव मूलावच्छिन्नवृक्षात् शाखावच्छिन्नवृक्षस्य भिन्नत्वसिद्ध्या संयोगतदत्यन्ताभावयोर्भिन्नाधिकरणत्वस्यैव सिद्धेः । नच प्रत्यभिज्ञाविरोधः । तस्या जातिविषयत्वात् । संयोगस्याव्याप्यवृत्तित्वमभिप्रेत्याह ॥ द्रव्यत्वेति ॥ द्रव्यत्वेति साध्यव्यापकतायामसाधारणं रूपमाह ॥ उपाधिरेवेत्येवकारो भिन्नक्रमः प्रयोजक एवोपाधिरिति । यो यद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगी स तं प्रति प्रयोजक इति कृत्वा उपाधिवदितिव्यतिरेकदृष्टान्तः । अन्यथोपाधिवत् हेतोर्भावादित्युक्तस्यापत्तेरिति द्रष्टव्यम् । प्रयोजकत्वमन्यदेवेति मन्वानाशङ्काविरासार्थमाह ॥ हेतोरिति ॥ तथाच तेन विनापि भवतः साध्यस्य तत्प्रयोजकत्वेनोपाधेः साध्यव्यापकतासिद्धेः साध्यव्यापकव्यभिचारिहेतोः साध्यव्यभिचारित्वमिति समस्तवाक्यस्य निष्कर्षितोऽर्थः (निर्गलितोऽर्थ इति पाठान्तरम् )

ननु यत्रैतत्सम्बन्धाद्व्यभिचारशङ्का तत्र साध्याभाव इति व्यतिरेकग्रहः पक्ष एव वाच्यः । तथाचापि नोभयोः साध्यनिश्चय इति व्यतिरेकहीनोऽयं कथमुपाधिरित्यत आह ॥ अनुकूलेति ॥ व्यभिचारेणानुकूलतर्काभावे व्यतिरेकग्रहो नाम्वयसहचारग्रहव्यापकत्वग्रहे विरोधिशङ्काभावक

प्रयुक्तोपलब्धिविरहवत्त्वं वा । आद्येऽसिद्धिः । घटस्य ज्ञानमिति हि धीः न तु घटो ज्ञानमिति । नान्त्यः । ज्ञानस्योपलब्धित्वेन तद्विरहस्य तद्विरहाप्रयुक्तत्वात् । उपलब्धिसामग्रीविरहप्रयुक्तत्वाच्च ।

यत्तु विमतं मिथ्या धीकाल एवान्यथाप्रमितत्वाच्चित्रनिम्नोन्नतादिवत्, भारूपवस्तुसंलग्नत्वात्सवितृच्छिद्रवत् । नचासिद्धिः । इदानीमेव "इदं सर्वं यदयमात्मे"तिश्रुत्या अशेषानात्मनः आत्मत्वप्रमितेः । घटादिकं स्फुरतीतिभारूपवस्तुसंलग्नत्वाच्चेतिकौमुद्युक्तम् । तत्राद्येऽन्यथेत्यस्य यद्यात्मत्वेनेत्यर्थः तदा सदात्मत्वेन प्रमितत्वस्यामिथ्यात्वव्याप्तत्वाद्विरुद्धो हेतुः । यदि प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वेनेति तर्ह्यसिद्धिः । व्यर्थविशेषणता

(साधकेति पाठान्तरम् ) इत्यर्थः । अनुकूलतर्काभावमेवोपपादयति ॥ न ह्यंशित्वमिति ॥ ननु सहचारदर्शनव्यभिचारादर्शनाभ्यामेव व्याप्तिग्रहसंभवे कानुकूलतर्कापेक्षापीत्यत आह ॥ उक्तहेतुनैवेति ॥ ननु ज्ञानाभावकालेऽनुपलभ्यमानत्वादिति हेत्वर्थः । स च मेयामेयसाधारण इत्यत आह ॥ उपलब्धीति ॥ एतावता ज्ञानोपलब्धिसामग्र्योः समनियतत्वमायातं नतूपलब्धिविषयस्यासत्वं ज्ञानत्वं चेति भावः । अत एव ज्ञानाविषयकप्रतीत्यविषयकत्वादिति हेत्वर्थो विवक्षित इति परास्तम् । एतावताप्युभयविषयतानियामकसमाजाविषयकत्वमायातम् । नाविषयत्वमासत्वम् । किञ्चैवं हेत्वर्थमभिदधतो ज्ञानविषयकप्रतीतिरेवासिद्धा । अन्यथा तदविषयकत्वासिद्धेर्हेतोर्भागासिद्धिप्रसङ्गः । नच ज्ञानाविषयकाविषयकत्वमर्थः । नचैवमप्रसिद्धिः । ज्ञानाविषयकस्य घटादेरेव प्रसिद्धत्वादिति वाच्यम् । ज्ञानाविषयकेऽप्यविषयत्वेन विमतेऽसिद्धिप्रसङ्गादिति ॥ ज्ञानव्यतिरेकेणेति तृतीयार्थस्य प्रकारत्वेऽपि एतदेव दूषणं द्रष्टव्यम् । यद्यपि एवम्भ नैवं व्याप्तिः सम्प्रतिपन्ना । तथापि स्वमताचष्टम्भेनैनदुक्तमिति द्रष्टव्यम् ।

(यद्यपि)यत्तु विमतं मिथ्येति धीकाल एवान्यथाप्रमितत्वं पक्षे नोभयवादिसम्प्रतिपन्नम् । श्रुत्यनुसंधानकालेऽपि भ्रमदोषर्गालितत्वाभिमताप्रामाण्यशङ्काशून्यविपरीतप्रत्ययमत्त्वेन पक्षे श्रुत्याप्यात्मत्वप्रमितेरसम्भवात् । तथाप्येतदनुमानमद्वैतप्रक्रियान्तर्गतत्वात्पूर्वपक्षस्य दूष्यत इति द्रष्टव्यम् । द्वितीयहेतावासिद्धिमुद्धर्तुमाह ॥ घटादिकमिति ॥ तत्रेति ॥ उपन्यस्तहेत्वोरित्यर्थः ॥ असिद्धिरिति ॥ अन्यतरासिद्धिरित्यर्थः ॥ व्यर्थविशेषणता चेति ॥ धीकाल एवान्यथानुपयोगादित्यर्थः ॥ सवितुः प्रकाशात्मत्वात्मनि चेति ॥ किञ्च पक्षदृष्टान्तसाधारणैकहेत्वभावादनुमानाप्रवृत्तिः । नच प्रकाशत्वं तत्, प्रकाशजनकत्वरूपस्य तस्य स्फुरणावृत्तित्वात् प्रकाशापरनामकज्ञानकारणत्वस्य च

च। द्वितीयस्तु सविघ्नादावात्मनि चानैकान्तिकः। तस्यापि सविता प्रकाशते आत्मा स्फुरतीति भारूपसंलग्नत्वादिति दिक्।

एतेन नवीनानामनुमानानि निरस्तानि। आद्ये सिद्धसाध(नादि)नदोषात्। द्वितीये अव्याप्यवृत्तित्वानधिकरणशब्देनावयवावृत्तित्वोक्तावयव्यादेरपक्षत्वापातात्। स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वोक्तौ च तदप्रतियोगिनि तत्प्रतियोगित्वस्य बाधितत्वात्। अनात्मत्वस्य निरस्तत्वाच्च। तृतीये स्वरूपेणात्यन्ताभावप्रतियोगित्वे साध्ये अत्यन्तासत्वापातात्। धर्मावच्छेदेन तत्प्रतियोगित्वे साध्ये अर्थान्तरत्वात्। नित्यद्रव्याणामपि काले सत्वेन दृष्टान्तस्य साध्यवैकल्याच्च। चतुर्थे न व्यावहारिकप्रतियोगिक इत्यपि सुसाधत्वेनाभासाम्यात्। वक्ष्यमाणदूषणगणग्रासाच्च।

॥ इत्यंशित्वादिहेतुभङ्गः ॥ ६ ॥

---

सविशेषवृत्तित्वादिति दूषणमभिप्रेत्याह ॥ इतिदिगिति ॥ आद्य इति। एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठ इत्यनुमान इत्यर्थः ॥ सिद्धसाधनादीत्यादिशब्देनार्थान्तरादिदूषणमभिप्रेत्याह (परिग्रहः इति पाठान्तरम्)॥ कारणस्य कारणाभेदेन तदनाश्रितत्वव्युत्पादनात् अवृत्तित्वेनाप्युपपत्तेश्च व्युत्पादनाच्चेति भावः॥ द्वितीय इति ॥ स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसाध्यकानुमान इत्यर्थः॥ निरस्तत्वादिति ॥ जडत्वहेतुभङ्ग इत्यर्थः ॥ धर्मावच्छेदेनेति ॥ पारमार्थिकत्वरूपधर्मावच्छेदेनेत्यर्थः ॥

॥ इत्यंशित्वहेतुभङ्गः ॥ ६ ॥

## ॥ अथ दृश्यत्वादेरुपाधिविवरणम् ॥

सोपाधिकाश्च दृश्यत्वादयः । स्वबाधकाभिमतबाध्यदोषप्रयुक्तभानत्वस्य तद्बाध्य-बाधकं प्रति निषेध्यत्वेन विषयत्वस्य वा पक्षाव्यावृत्तस्य समव्याप्तिमतो व्यतिरेकव्याप्ति-मतश्चोपाधित्वात् । नच पर्वतावयववृत्त्यन्यत्वापर्वतीयवह्निसामग्रीयुक्तत्वादेरिव पक्षमात्र-व्यावर्तकविशेषणवत्त्वात्पक्षेतरत्वम् । वह्निना धूमे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वादेरिव वक्ष्यमाणानुकूलतर्कैस्साध्यव्यापकत्वनिश्चयात् । बाधिते पक्षेतरत्वस्याप्युपाधित्वाच्च । इह च वक्ष्यमाणप्रत्यक्षादिबाधात् । यद्वा यथा अनुकूलतर्काभावान्मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वं तस्मिन्साध्ये श्यामत्वमुपाधिस्तथेहापि बाध्यत्वादिरूपे मिथ्यात्वे साध्ये विपरीतप्रमाविषयत्वदोषप्रयुक्तभानत्वादिकं तस्मिन्साध्ये मिथ्यात्वमुपाधिरस्तु । युगपदुभय-साधने त्वर्थान्तरम् । मिथ्यात्व एव विप्रतिपत्तेः । बाधो भ्रांतिपूर्वकःविपरीतप्रमा तु नेति तयोर्भेदः । यद्वा अधिष्ठानाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वमुपाधिः । ब्रह्मणोऽपि

---

स्वबाधकाभिमतेति ॥ स्वशब्दः समभिव्याहृतपरः । स्वस्य बाधकत्वेनाभिमतं यदेदं रजतमितिज्ञानं तद्बाध्यो यो दोषः काचादिः तत्प्रयुक्तं तत्प्रयोज्यं भानं यस्य तत्त्वमित्यर्थः । अत्र साधनाव्यापकतानिरासार्थम् ॥ स्वेति ॥ अविद्यारूपदोषस्य प्रपञ्चबाधकब्रह्मज्ञानबाध्यत्वात् साध्य-व्यापकत्वे सति साधनाव्यापकत्वमक्षुण्णमिति भावः । यदि शुक्तिरूप्यभानेऽपि, अधिष्ठाना-ज्ञानमेव दोषः तदा अज्ञानरूपदोषस्य, तद्बाधकबाध्यत्वाभावात् साध्याव्यापकतेति उपाध्यन्तरमाह ॥ तद्बाध्येति ॥ प्रपञ्चबाधिकायाश्चरमवृत्तेः स्वबाध्यत्वात् प्रातिभासिकरूप्यादिबाधकस्य शुक्त्यादि-याथार्थ्यज्ञानस्य च स्वाबाध्यत्वात् अस्योपाधित्वमुभयसंप्रतिपन्नमित्यर्थः । उपाधिशब्दार्थगवेषणायां समव्याप्तस्यैवोपाधित्वमित्यभिप्रेत्याह समव्याप्तिमत इति ॥ नचेति ॥ यद्यपि पर्वतावयव-वृत्त्यन्यत्वं पर्वतावयववृत्तिरूपादिकमपि व्यावर्तयतीति न पक्षमात्रव्यावर्तकम् । तथापि तत्तुल्य-योगक्षेमत्वादिदमुदाहरणमिति द्रष्टव्यम् । नन्वार्द्रेन्धनप्रभववह्निमत्त्वादेः पक्षमात्रव्यावर्तकतया नोपादानं किन्तु समव्याप्तस्यैवोपाधित्वमित्यभिप्रायेण । प्रकृते तु विनाश्यमात्रस्यैव समव्याप्तत्वात् वैषम्यमित्यत आह ॥ बाधित इति ॥

यद्वा पक्षमात्रव्यावर्तकविशेषणमनुपादेयमेव । नचैवं साधनव्यापकत्वान्नायमुपाधिः । तन्निश्चयाभावेन सन्दिग्धोपाधित्वस्येष्टत्वात् । व्यभिचारसंशयाधायकतया तस्यापि दूषणसमर्थ-त्वादित्याह ॥ यद्वेति ॥

बौद्धकल्पितदोषवद्वेदजन्यज्ञानविषयत्वात् । समव्याप्त्यर्थमधिष्ठानसमसत्ताकेतिविशेषणम् । नतु पक्षव्यावृत्त्यर्थम् । येन पक्षेतरत्वं स्यात् । यद्वा वेदतात्पर्यविषयाद्धर्माधर्मादिरूपात्साक्षिवेद्यात्सुखदुःखादिरूपाद्वा पक्षैकदेशाद्व्यावृत्तं श्रुतितात्पर्याविषयत्वं दोषजन्यधीविषयत्वं वा पक्षमात्राद्व्यावृत्तं प्रतिभासमात्रशरीरत्वं वोपाधिः । नच तवापि जगत्प्रतिभासमात्रशरीरं प्रतिकर्मव्यवस्थाद्ययोगादितिदिक् ॥

॥ इति दृश्यत्वादेरुपाधिविवरणम् ॥ ७ ॥

## ॥ अथ दृश्यत्वादेराभाससाम्यविवरणम् ॥

विमतं प्रातिभासिकं दृश्यत्वाच्छुक्तिरूप्यवत् । ब्रह्म मिथ्या व्यवहारविषयत्वादसद्विलक्षणत्वाद्वा शुक्तिरूप्यवदित्याभाससाम्यं च । जगतोऽप्रातिभासिकत्वग्राहिप्रत्यक्षप्रबाधसत्यत्वश्रुतिश्चानुमानविरोधादप्रमाणम् । विपक्षे च गौरवम् । व्यवहृतिव्यवहार्ययोः संबन्धान्तराभावात्सर्वं व्यवहार्यं व्यवहृतावध्यस्तमित्यादि च बाधकमिति सुवचत्वात् ॥

॥ इति दृश्यत्वादेराभाससाम्यविवरणम् ॥ ८ ॥

---

ननु साध्यव्याप्यहेतुव्यापकतया साध्याव्यापकत्वनिश्चयात् संदिग्धोपाधित्वमपि नास्तीत्यत आह ॥ अनुकूलतर्काभावादिति ॥ हेतावनुकूलतर्काभावदशायामेवोपाधेर्दूषणत्वमित्यर्थः । अर्थान्तरमित्यापाततः । युगपदुभयसाधनेऽप्येकांशस्योपाधित्वमिति द्रष्टव्यम् । ननु विपरीतप्रमाविषयत्वं नोपाधिः । तस्यैव साध्यत्वाभिमतबाध्यत्वरूपत्वात् । अन्यथानुमानमात्रोच्छेदापत्तेरित्यत आह ॥ बाध इति ॥ ननु पक्षव्यावृत्त्यर्थमिति ॥ यद्यप्यधिष्ठानसमसत्ताकत्वविशेषणमव्यावर्तकम् । तथापि समव्याप्त्यर्थमेवोपात्तेन तेन पक्षे व्यावृत्तिरपि सिध्यतीति भावः ।

॥ इति दृश्यत्वादेरुपाधिविवरणम् ॥ ७ ॥

ननु बाधिप्रतिबन्ध्युभयानाक्रान्त एव दोषो वाच्यः । अन्यथाधिष्ठानसमसत्ताकत्वस्यापि दोषे वीक्षाभिमतत्वेन पुनरप्युपाधेर्न समव्याप्तत्वमित्यत आह ॥ यद्वेति ॥ पक्षैकदेशादिति ॥ नच साध्याभावसाधने उपाधिव्यतिरेकस्य भागासिद्धत्वं व्यभिचारोद्भावकत्वेनैव दोषत्वसंभवादिति भावः ॥ श्रुतितात्पर्येति ॥ नच धर्मादौ मुख्यतः श्रुतितात्पर्याविषयत्वमस्त्येवेति वाच्यम् । मुख्यत्वस्याप्यविशेषणत्वादिति भावः ॥ प्रतिकर्मेति ॥ लोकमर्यादातिक्रमे उन्मत्तवदुपेक्षणीयत्वापत्तेरिति भावः ॥ गौरवमिति ॥ व्यवहारान्तरस्य हेतुविशेषणत्वे गौरवमित्यर्थः ॥ सर्वमिति ॥ यत्र यत्र सर्वं दृश्यमध्यस्तं तद्वदित्यर्थः । ॥ इति दृश्यत्वादेरुपाधिराभाससाम्यञ्च ॥ ८ ॥

## ॥ अथ सत्त्वनिरुक्तिः ॥

सन्घटइत्यादिप्रत्यक्षबाधिताश्च दृश्यत्वादयः । ननु किमिदं सत्त्वं यत् प्रत्यक्षसिद्धं परजातिर्वा असद्वैलक्षण्यं वा अर्थक्रियाकारित्वं वा प्रमाविषयत्वं वा तद्योग्यत्वं वा भ्रमाविषयत्वं वा स्वसमानाधिकरणस्वसमानकालीननिषेधाप्रतियोगित्वं वा अबाध्यत्वं वा । नाद्यः । सिद्धसाधनात् । न चतुर्थः । असति प्रमाणाप्रवृत्त्या तद्विषयत्वात्प्राक्सत्त्वस्य वक्तव्यतया तस्य सत्त्वादन्यत्वात् । असतोऽपि व्यवसायद्वारा साक्षाच्चासत्त्वप्रकारकप्रमाविषयत्वाच्च । सत्त्वप्रकारकप्रमाविषयत्वे चात्माश्रयात् । असत्त्वाप्रकारकप्रमाविषयत्वे चासत्त्वस्य सत्त्वनिरूप्यत्वेनान्योन्याश्रयात् । अत एव न पञ्चमः । न षष्ठः । सतोऽप्यसत्त्वप्रकारकभ्रमविषयत्वात् । सत्त्वप्रकारकभ्रमाविषयत्वे चात्माश्रयात् । असत्त्वाप्रकारकभ्रमाविषयत्वे चान्योन्याश्रयात् । न सप्तमः । संयोगादावव्याप्तेः । शुक्तिरूप्यादेरधिकरणाद्यभावेनातिव्याप्तेश्च । नाप्यष्टमः । बाधस्य प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधत्वेनान्योन्याश्रयात् । उच्यते । तवात्मनि यत्सत्त्वं तदेवेह मम । उक्तं हि "यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि" इति । तत्र तदनिर्वाच्यं चेदिहापि तथास्तु । सत्त्वानिर्वचनेऽपि तद्वदेव स्वरूपपारमार्थ्योपपत्तेः । यदि च तत्रानृतव्यावृत्तिमात्रं अबाधितस्वरूपं

---

परजातिर्वेति ॥ सत्ताजातिरित्यर्थः । तद्योग्यत्वं वेति ॥ प्रमाविषयतावच्छेदकावच्छिन्नत्वमित्यर्थः ॥ सिद्धसाधनादिति ॥ मदभ्युपगतस्यैव त्वया प्रत्यक्षविषयत्वेनोच्यमानत्वादित्यर्थः । तथाच दृश्यत्वाद्यनुमानं निर्बाधमिति भावः । स्वरीत्या दूषयति ॥ असतीति ॥ प्रमाणस्य नियतविषयत्वनिर्वाहाय तद्विषयतावच्छेदकस्याप्यसत्त्वे सत्त्वस्याविद्याऽभ्युपगन्तव्यत्वादित्यर्थः ॥ तस्येति ॥ प्रमाविषयत्वस्येत्यर्थः ॥ सिद्धान्तरीत्याप्याह ॥ असतोऽपीति ॥ असत्त्वप्रकारकेति ॥ असत्त्वसमानाधिकरणधर्मप्रकारकेत्यर्थः । तेन शशशृङ्गत्वप्रकारकप्रमाविषये असति नातिप्रसङ्ग इति बोध्यम । असत्त्वं सत्त्वात्यन्ताभाव एवेत्यभिप्रेत्य दूषयति ॥ सत्त्वनिरूप्यत्वेनेति ॥ अत एवेति ॥ अन्योन्याश्रयादेवेत्यर्थः ॥ अधिकरणाद्यभावेनेति ॥ त्वन्मत इति शेषः ॥ त्रैकालिकेति ॥ स्वरूपेण निषेधे शून्यवादापत्तिरिति भावः ॥ [illegible]त्वेनेति ॥ तथाच नापरिच्छिन्नत्वं सत्त्वमिति भावः ॥ सं प्रतीति ॥ निषेधं प्रतीत्यर्थः ॥ ब्रह्मसत्त्वतुल्ये इति ॥ [illegible]ग्रहणं [illegible] । कारिकां व्याचष्टे ॥ सर्वेति ॥ संयोगाभावस्या-

वा सत्त्वम् । बाधश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधः । ज्ञानेन निवृत्तिर्वेति नान्योन्याश्रयः । तर्हीहापि तथास्तु ब्रह्मसाम्यस्यैवापेक्षितत्वात् । अपरिच्छिन्नत्वं तत्र सत्त्वमितिचेन्न । शुक्तिरूप्ययोः परिच्छिन्नत्वे ब्रह्मशून्ययोश्चापरिच्छिन्नत्वे तुल्येऽपि सत्त्वासत्त्वयोर्व्यवस्थितत्वेन जगत्युक्तपारिभाषिकसत्त्वाभावस्य ब्रह्मणि परिच्छिन्नत्वरूपसत्त्वाभावस्येवेष्टत्वात् । सौहार्देतु "त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता । सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी ।" सर्वदेशकालसंबन्धिनिषेधाप्रतियोगित्वं सत्त्वम् । यदवच्छिन्ने संयोगस्तदवच्छिन्ने तदत्यन्ताभावो नेति न तत्राव्याप्तिः । गगनादेरप्यत्यन्ताभावः केवलान्वयी नेत्युक्तत्वाच्च गगनादाव व्याप्तिः । तुच्छमध्यस्तं च उक्तप्रतिषेधप्रतियोगीत्युक्तत्वान्नातिव्याप्तिरपि । अश्वे गोत्वं कदाचिदपिनास्तीत्यादौ तत्संसर्ग एव निषिध्यत इति मते देशपदमनपेक्षितम् । केचित्तु पराभिप्रेतमिथ्यात्वाभावो वाऽसद्विलक्षणत्वे सत्यनारोपितत्वं वा अस्तित्वप्रकारकप्रमां प्रति कदाचित्साक्षाद्विषयत्वं वा कालसंबन्धित्वं वा सत्त्वम् । अस्तित्वं च वर्तमानत्वम् । अतीतादिरपि कदाचिद्वर्तत एव । आरोपितं तु कालत्रयासंबन्धित्वेन बाधबोधितमिति न दोष इत्याहुः ॥

॥ इति सत्त्वनिरुक्तिः ॥ ९ ॥

---

व्याप्यवृत्तित्वमभिप्रेत्याह ॥ यदवच्छिन्नेति ॥ असद्वैलक्षण्य इति ॥ एतच्चासत्यतिव्याप्तिवारणाय । अनारोपितत्वं तु मिथ्यात्वविरोधित्वार्थमिति ध्येयम् ॥ अस्तित्वेति ॥ अत्र साक्षात्पदं व्यवसायद्वारा सत्त्वप्रकारकज्ञानविषये असत्यतिव्याप्तिवारणाय । आत्माश्रयवारणायाह ॥ अस्तित्वं चेति ॥ कदाचित्पदं च स्वरूपकथनार्थम् ॥ न दोष इति ॥ नातिव्याप्तिरित्यर्थः । आद्यविभागस्वरूपोद्भावनम् । तदीदं नु पराभिप्रेतमिथ्यात्वस्य प्रतिपन्नोपाधिघटितत्वेन तदभावरूपसत्त्वस्यासत्यतिव्याप्तिः । तदघटितत्वे चात्मपुत्रकान्तर्भावः । द्वितीये त्वसत्त्वस्य सत्त्वनिरूप्यत्वेनान्योन्याश्रय इत्याकर एव स्फुटम् । अत एव न तृतीयोऽपि । प्रमाणप्रवृत्तिनियामकत्वेनाप्यस्यैव सत्त्वस्य निर्वक्तव्यत्वात् । चतुर्थे च सिद्धसाधनम् । कालसंबन्धित्वस्य मेनाप्यभ्युपगमादिति ॥ ९ ॥

॥ इति सत्त्वनिरुक्तिभङ्गः ॥

## ॥ अथ प्रत्यक्षस्य जात्योपक्रमादिन्यायैश्च प्राबल्यम् ॥

नन्विदं रूप्यमित्यत्रेदमितिवत् सन्घट इत्यत्रापि सदित्यधिष्ठानब्रह्मानुवेध एवेति चेन्न। चाक्षुषादिज्ञाने रूपादिहीनब्रह्मास्फुरणादित्युक्तत्वात्। नीलो घटः मिथ्या रूप्यं असन्नृशृंगमित्यादावपि नील इत्यादिरधिष्ठानानुवेध इत्यापाताच्च। नैल्यादिकं घटेऽस्ति सत्त्वं तु नेति चेन्न। अस्यारोपितत्वसिद्ध्यधीनत्वेनान्योन्याश्रयात्। अन्यथा सत्यं ज्ञानमित्यत्रापि सत्यमित्यधिष्ठानानुवेध इति स्यात्। तस्मादापि ब्रह्मैव सद्रूपमन्यन्मिथ्येति सिद्धम्। ननु तथापि कथं प्रत्यक्षमात्यन्तिकाबाध्यत्वग्राहि। तात्कालिकाबाधस्तु रूप्यादेरिवेष्ट इतिचेत्किं प्रत्यक्षमप्रमाणमेव उत प्रमाणमपि वर्तमानमात्रग्राहित्वात् त्रिकालाबाधग्रहाक्षमम्। आद्येऽपि स्वतः-

---

इदमिति ॥ इदमंशानुवेधवदित्यर्थः। तथाच सत्त्वग्राहिप्रत्यक्षं न दृश्यत्वाद्यनुमानबाधकमिति भावः ॥ उक्तत्वादिति ॥ परिच्छिन्नत्वादिहेतुभङ्ग इति शेषः। एतच्चोपलक्षणम्। न संदृशे तिष्ठतीत्यादिश्रुत्या चाक्षुषत्वप्रयोजकरूपाभावोक्तिपूर्वकं तस्य चक्षुर्ग्राह्यत्वनिषेधादित्यपि द्रष्टव्यम्। नील इति ॥ यद्यप्युभयसिद्धसत्त्वाश्रयब्रह्मवदुभयसिद्धनैल्याद्याश्रयः कश्चिदन्यो नास्ति यदनुवेधः प्रकृते वाच्यः। कल्पनीयत्वे घटादावेव नैल्यादिकमस्तु। कृतमन्य(न)-कल्पनया। तथापि घटनिष्ठतया प्रतीतस्य सत्त्वस्य घटे बाधके सत्येवान्यानुवेधो वाच्यः। अन्यथातिप्रसङ्गादित्यत्र तात्पर्यम् ॥ वर्तमानमात्रेति ॥ प्रत्यक्षस्य सन्निकृष्टार्थमात्रग्राहित्वादिति भावः। तस्मिन्निति ॥ अप्रामाण्य इत्यर्थः ॥ तयोरिति ॥ अनुमानागमयोरित्यर्थः।

नन्वेवमक्षस्यापि प्रामाण्यं न स्यात्। अनुमानागमविरोधादित्यत आह ॥ अक्षस्येति ॥ ननु तदगृहीतविषयकत्वेन यदि प्रत्यक्षस्य प्राबल्यं तदा प्रत्यक्षागृहीतघटादिनिष्ठातीन्द्रियधर्मविषयकत्वेनानुमानमपि प्रबलं किं न स्यादित्यत आह ॥ अनुमित्यादीति ॥ षाड्गुण्येति ॥ बहुपजीव्येत्यर्थः। तदुपजीव्यगोचरप्रत्यक्षस्यापि न जात्यानुमानाद्यपेक्षया प्राबल्यम्। अपितु धर्मिग्राहकत्वेनोपजीव्यत्वादेवेत्यत आह ॥ धर्म्यादीति ॥ जात्येति ॥ यद्यपि प्रत्यक्षस्य न प्रत्यक्षत्वेन प्राबल्यम्। किन्त्वनन्यथासिद्धप्रत्यक्षत्वेन। तथाप्यनन्यथासिद्धानुमानिकाद्युपजीव्ये विद्यमानेऽपि पीतप्रत्यक्षोदयात् जात्यैव क्रमदोषाजन्यस्य तस्य प्राबल्यम्। तच्चानुमानागमाभ्यामपहरणायोग्यविषयकत्वमिति भावः। ननु प्रत्यक्षस्यानुमानागमापेक्षया प्राबल्ये सिद्धान्तविरोध इत्यत आह ॥ वैदिकार्थविषयमिति ॥ अन्यप्रमाणप्रत्यक्षप्रवृत्तिकार्थविषयमित्यर्थः। यद्यपि देशैकत्वमधिगम्येऽर्थे प्रत्यक्षाप्रवृत्तेः न तयोः प्राबल्यदौर्बल्यचिन्ता युक्ता। तथापि भगवद्वचनादेषु

प्राप्तस्य तत्त्वावेदनरूपप्रामाण्यस्य त्यागः किमनुमानविरोधादागमविरोधाद्वा भाविबाधकशंकामात्रेण वा। नाद्यौ। तयोः प्रामाण्ये तद्विरोधेनाक्षस्याप्रामाण्यं सति च तस्मिन्मानाविरोधेन तयोः प्रामाण्यमित्यन्योन्याश्रयात्। अक्षस्य तु प्रबलस्य प्रामाण्यम(नुमितिशब्दाविरो)नुमानागमाविरोधापेक्षं नेति नान्योन्याश्रयः। नहि सिंहः शशशावकाभा(वं प्रतीक्ष्य)वमपेक्ष्य वनं गाहते। प्रत्यक्षस्यानुमित्यादितः प्राबल्यं च तदगृहीतरेखोपरेखादिविशेषग्राहित्वादनुमित्याद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वाच्च जात्यैव। दृष्टं हि वह्निशैत्यानुमाने धर्म्यादेश्चक्षु-

---

रादेर्मेदादिग्राहिप्रत्यक्षप्रवृत्तेः समानविषयत्वमस्तीति ध्येयम्॥ उक्तार्थे संवादमाह॥ अत एवेति॥ प्रत्यक्षस्य प्राबल्ये वैदिकदृष्टान्तमाह॥ उपक्रमेति॥ एतच्च शेषलक्षणे तृतीये तृतीयपादे विचारितम्। "श्रुतेर्जाताधिकारः स्यात्"। अत्र ज्योतिष्टोमे "प्रजापतिर्वा इदमेक आसीत्, प्रजापतिरकामयत प्रजाः सृजेयेति। स तपोऽतप्यत। तस्मात्तेपानात् त्रयो देवा असृज्यन्त अग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेः ऋग्वेदः, वायोर्यजुर्वेदः आदित्यात्सामवेदः इत्येवमुपक्रम्य तदुपसंहारे श्रूयते, तस्मादुच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्नेति। तत्र संदेहः। किमुच्चैस्त्वादयः ऋगादिमन्त्राणां धर्माः उत वेदानामिति। उपक्रमे वेदशब्दश्रवणादुपसंहारे ऋगादिशब्दश्रवणाच्च संशयो जायते। वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मकस्य ग्रन्थविशेषस्य वाचकः। वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममित्यादिव्यवहारात्। ऋग्यजुःसामशब्दास्तु मन्त्रलक्षणे तेषामृग्यजुःसामार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः, इति सूत्रैः सपादकत्वापादबन्धगीतिविशेषवाचकत्वेन निर्णीताः। अतो वेदशब्दस्य ऋगादिशब्दानां चास्त्येव संशयप्रयोजकभिन्नार्थत्वम्। तत्रोपसंहारगतेषु विध्युद्देशेषु ऋगादिशब्दश्रवणात् उपक्रमगतार्थवादे ऋग्वेदशब्दसत्त्वेऽपि अर्थवादस्य विधिशेषतया गुणप्रधानविरोधे प्रधानस्य विध्युद्देशस्यैवानुसरणीयत्वात् ऋगादिधर्माः उच्चैस्त्वादयः। एवञ्च यजुर्वेदादिगतेष्वपि ऋगादिषु उच्चैस्त्वादयः कर्तव्या इति पूर्वपक्षे लब्धात्मनः प्रधानस्य गुणाद्बलीयस्त्वम्। नचेह विध्युद्देशानां ऋगादिविषयतया लब्धात्मता। उपक्रमे वेदसंकीर्तनेन वेदानां किञ्चिद्विधास्यत इति प्रथममेव विधास्यमानस्य वेदधर्मत्वावगत्या तदेकवाक्यतया पश्चादापततः उपसंहारस्य तद्विरुद्धार्थबोधकत्वासंभवात्। तस्मात्प्रथममुपक्रमेण कस्मिन्नर्थे बोधिते तदेकवाक्यतया पश्चादुपसंहारः तदाकांक्षानुसारेण लक्षणादिना प्रतिपद्यत इति ऋगादिशब्दानां ऋग्वेदादिलक्षकत्वेन वेदधर्माः उच्चैस्त्वादयः, इति सिद्धान्त इति। विरोधिसत्त्वासत्त्वाभ्यां बलाबलमुक्त्वा शीघ्रत्वविलम्बत्वाभ्यां बलाबलं श्रौतदृष्टान्तव्याजेनाह॥ लिङ्गाच्छ्रुतेरिवेति॥

रादिनापि सिद्धयानुपजीव्यत्वेऽपि औष्ण्यप्रत्यक्षस्य जात्यैव प्राबल्यम् । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति तु वैदिकार्थविषयम् । अत एवोक्तम् । "क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधित"मिति । उपक्रमाधिकरणन्यायेनोपसंहारादुपक्रमस्यैवानुपसंजातविरोधित्वाच्च । उक्तं हि । "असंजातविरोधित्वादर्थवादो यथा श्रुतः । व्याख्येयस्तद्विरुद्धस्य विध्युद्देशस्थ लक्षणे"ति । लिङ्गाच्छ्रुतेरिव शीघ्रगामित्वाच्च । उक्तञ्च । "प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयो"रिति । यदाहवनीये जुहोतीत्यस्मात्पदे जुहोतीत्यस्यैव विशेषविषयत्वाच्च । प्रत्यक्षं हि विशिष्टपर्यटसत्त्वग्राहि ।

---

एतदपि तत्रैव शेषलक्षणे तृतीये तृतीयपादे चिन्तितम् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । तत्र श्रुतिलिङ्गविरोधे इदमुदाहरणम् । अग्निचयने श्रूयते । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति । तत्र किमैन्द्र्या कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे इत्यृचेन्द्रस्योपस्थानं कर्तव्यं किं वा गार्हपत्याग्नेरिति संशये मन्त्रवाक्यार्थे वस्तुनि केनापि विनियोक्तुमशक्यत्वात् ऐन्द्र्येति तृतीयाश्रुत्यापि ऐन्द्री शक्य एव विनियोक्तव्या । तस्याश्च शक्तिरिन्द्रप्रकाशन एवेति तस्यैवोपस्थानं कर्तव्यम् । गार्हपत्यशब्दश्च यज्ञसाधनत्वसाधर्म्यादिना इन्द्रे वर्तयितव्य इति पूर्वपक्षे, यत्र वस्तुनः सर्वथाऽसामर्थ्यं तत्रैव विनियोगो न संभवति । अस्ति त्विन्द्रशब्दस्य गार्हपत्ये गौणं तत् । अवश्यं च तन्मन्त्रे इन्द्रशब्दस्य वा (ब्राह्मणे) गार्हपत्यशब्दस्य वा कस्यचिदमुख्यार्थत्वं कल्पनीयम् । तच्च प्रामार्थे मन्त्र एव युक्तं विधौ लक्षणायाः अन्याय्यत्वात् । न च विध्यनुसारेण लक्षणया गार्हपत्योपस्थाने विनियोगेऽपि इन्द्रप्रकाशनशक्तिरूपया मुख्यवृत्त्या लिङ्गात्मिकया इन्द्रोपस्थानेऽपि विनियोगोऽस्त्विति वाच्यम् । प्रत्यक्षश्रुत्या शीघ्रं विनियुक्ते मन्त्रे तावतैव मन्त्राम्नानस्य चरितार्थत्वेन लैङ्गिकविनियोगकल्पनानिमित्ताभावात् । तस्माद्गार्हपत्यस्यैवोपस्थानं कर्तव्यमिति सिद्धान्त इति । विशेषनियतत्वेनापि (विषयत्वेनापि) प्रत्यक्षप्राबल्यमित्यत्र श्रौतदृष्टान्तमाह ॥ यदाहवनीय इति ॥ एतच्च दशमे अध्याये अष्टमपादे चिन्तितम् । अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत् संदिग्धमाराद्विशेषविधिः स्यात् । यदाहवनीये जुहोतीति होमसामान्येऽधिकरणत्वेन विहितस्याहवनीयस्य गार्हपत्ये पत्नीसंयाजान् जुहोतीत्यादिना होमविशेषेष्वधिकरणत्वेन विहितैर्गार्हपत्यादिभिः विकल्पो बाधो वेति संदेहे सामान्यविशेषशास्त्रयोर्द्वयोरपि प्रत्यक्षत्वेन तुल्यतया श्रौतलैङ्गिकविनियोगवत् क्रमकल्पनाभावेन बलाबलानवधारणाद्विकल्प इति पूर्वपक्षः । (पूर्वपक्षं तिर

श्रुतिस्तु सामान्येन द्वितीयनिषेधिका । किञ्च यथा "यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"त्यत्रत्यस्य यत्किञ्चिच्छब्दस्य प्रकृतविशेषवाचित्वेन सामान्याविषयत्वेऽपि दीक्षणीयाव्यतिरिक्ते सावकाशत्वात् "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूया-"दित्यनेन निरवकाशेन संकोचः तथा वृत्त्यन्तरेण वा अनेकार्थत्वेन वा विषयान्तरपरत्वेन वा सावकाशायाः श्रुतेर्निरवकाशेनाक्षेण संकोचः किं न स्यात् । किञ्च पञ्चदशरात्रे प्रथमेऽहनि

---

पाठान्तरम्) इत्यन्वयेऽपि सामान्यविशेषशास्त्रयोः विशेषशास्त्रतः पत्नीसंयाजादिहोमविशेषे गार्हपत्यादेः श्रुत्यैव प्राप्तिः । सामान्यशास्त्रतस्तु आहवनीयादेः होमसामान्ये विधानात् श्रुतहोमसामान्यमुखेन तद्विशेषलक्षणया तत्राहवनीयस्य प्राप्तिरित्येवं सन्निकर्षविप्रकर्षसद्भावात् विशेषविहितैः गार्हपत्यादिभिः सामान्यविहितस्य बाध एवेति सिद्धान्त इति । प्रत्यक्षस्यागमापेक्षया निरवकाशत्वेनापि प्राबल्यमित्येतच्छ्रौतदृष्टान्तावष्टम्भेन दर्शयितुमाह ॥ किञ्च यथेति ॥ तदेतत्तृतीयाध्याये प्रथमपादे चिन्तितम् । देशासंबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्देशात् तस्य च तत्र भावात् इति । ज्योतिष्टोमे श्रूयते "त्सरा वा एषा यज्ञस्य । तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इति । तत्र संशयः, किमिदमुपांशुत्वं यज्ञस्याग्नीषोमीयात्प्राग्भागस्तद्धर्मः । उताग्नीषोमीयपशोर्वे प्राग्भागवर्तिनः पदार्थाः तद्धर्म इति । तत्र प्राचीनशब्दस्य दिक्शब्दतया यज्ञप्राग्भागे मुख्यवृत्तेः तदन्येषु पदार्थेषु लक्षणावृत्तेः मुख्यवृत्त्या प्रथमोपस्थितस्य प्राग्भागस्यातिक्रमे कारणाभावात् तद्धर्म एवोपांशुत्वमिति पूर्वपक्षे प्राग्भागधर्मत्वे तस्यैकत्वात् यत्प्राचीनमग्नीषोमीयादित्येतावदेव वक्तव्यं स्यादिति यत्किञ्चिदित्यनेकव्यक्तिवचनशब्दानुपपत्तेः तदनुरोधेनाग्नीषोमीयप्राग्भागवर्तिनां पदार्थानामेवोपांशुत्वमेव । एवञ्च यद्यपि यत्किञ्चिदित्यनेकव्यक्तिवाचिना शब्देन प्राग्भागवर्तिनः सर्वेऽपि पदार्थाः दीक्षणीयादयः तत्तत्प्रातिस्विकरूपेणोपस्थापयितुं युक्ताः । तथापि "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्" इत्यादिधर्मान्तरविधीनां निरवकाशत्वात् सावकाशं यत्किञ्चिदित्येतत् दीक्षणीयादिव्यतिरिक्तपरं कल्पनीयमिति सिद्धान्त इति । यज्ञोपांशुत्वस्य प्राग्भागधर्मत्वमिति पूर्वपक्षे, ज्योतिष्टोमविकृतिषु प्राग्भागारम्भकेऽप्राकृतपदार्थेऽपि उपांशुत्वं स्यात् । प्राग्भागवर्तिज्योतिष्टोमिकतत्तत्पदार्थधर्मत्वमिति सिद्धान्ते विकृतिषु तावन्मात्रेष्वेवोपांशुत्वं स्यान्नाप्राकृतपदार्थ इति फलभेदो द्रष्टव्य इति ॥ तथा वृत्त्यन्तरेणेति ॥ लक्षणादिरूपवृत्त्यन्तरेणेत्यर्थः ॥ निरवकाशेनेति ॥ प्रत्यक्षस्य शब्दवद्वृत्त्य-संभवेन वृत्त्यन्तरेण अन्यथाव्याख्यानासंभवेनानुपपत्तिविषयत्वाभावे प्रत्यक्षस्य निर्विषयत्वमेव-

अग्निष्टुन्नामके नामातिदेशेन एकाहाग्निष्टुद्धर्मभूता सुब्रह्मण्याग्नेयी प्राप्ता। तस्या अल्पविषयाया-श्चतुर्दशाहस्सु चोदकेन प्राप्तया ऐन्द्र्या बहुविषयया बाधः। बहुबाधस्यान्याय्यत्वात्। तथा द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकांडसृष्ट्यादिवाक्यसगुणोपासनावाक्यादिरूपबहुप्रमाणा-बाधायाद्वैतवाक्यस्य प्रतीतार्थबाधः किं न स्यात्। तदुक्तं "बहुप्रमाणविरोधे चैकस्या-प्रामाण्यं दृष्टं शुक्तिरजतादावि"ति ॥

॥ इति प्रत्यक्षस्य जात्योपक्रमादिन्यायैश्च प्राबल्यम् ॥ १० ॥

---

स्यादित्यर्थः। "बहूनामनुग्रहो न्याय्यः" इति न्यायेनापि प्रत्यक्षस्य प्राबल्यमित्याह ॥ किञ्चेति ॥ द्वादशाध्याये द्वितीयपादे एतच्चिन्तितम्। "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्" इति। पञ्चदशरात्रे सत्रे प्रथममहः एकाहाग्निष्टुन्नामकम्। तत्र नामातिदेशेन एकाहाग्निष्टुद्धर्मभूता आग्नेयी सुब्रह्मण्या प्राप्नोति। इतरेषु त्वहस्सु यथाप्रकृत्यैन्द्री। तत्रोपसद्विधिषु का वानयोराम्नातव्येति विशये मुख्यश्रुत्यनुग्रहार्थमाग्नेयीति पूर्वपक्षे प्रयोगवचनस्य भूयोवैगुण्यासहिष्णुत्वात् द्वितीयादिबहुश्रुत्यनुग्रहार्थं ऐन्द्रीसुब्रह्मण्याम्नातव्या" इति सिद्धान्त इति ॥ अद्वैतवाक्यस्येति ॥ यद्यप्यद्वैतवाक्यान्यपि बहूनि द्वैतवाक्यवत्। विषयैक्यन्तु द्वैत-वाक्येऽपि समम्। तथापि द्वैतप्रमाणानां प्रत्यक्षत्वानुमानत्वादिनानेकत्वं यथा न तथाऽद्वैत-वाक्यस्येति द्रष्टव्यम् ॥ बहुप्रमाणविरोधेति। प्रमाणविभाजकोपाधिभिर्बहुत्वमत्र विवक्षितमिति द्रष्टव्यम्।

॥ इति प्रत्यक्षस्य जात्योपक्रमादिन्यायैश्च प्राबल्यम् ॥ १० ॥



## ॥ अथ प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यविवरणम् ॥

किञ्चोपजीव्यत्वात्प्राबल्यमक्षस्य श्रुतेः स्मृतेरिव । तथाक्षेणानुमितिकारणस्य पक्ष-साध्यहेतुव्याप्त्यादेः शाब्दधीहेतोः शब्दस्वरूपस्य तद्धर्मस्य योग्यतादेः उपक्रमोपसंहारैक-रूप्यादेः अनुमितिशाब्दधीस्वरूपतत्प्रामाण्यादेश्च ग्राह्यत्वात् । यदा हि घटो व्यापकः सत्त्वादित्यत्राक्षं धर्मिमात्रग्राहित्वेन, शुचि नरशिरःकपालं प्राण्यङ्गत्वादित्यत्र शब्दः साध्यमात्र-ग्राहित्वेन, मनो विभु ज्ञानासमवाय्याधारत्वादित्यत्रानुमानं हेतुमात्रग्राहित्वेनाऽनुमानस्योप-जीव्यम् । तदेह प्रत्यक्षं लिङ्गशब्दापेक्षितसर्वग्राहीति कथं नोपजीव्यम् । चक्षुरादेः शब्द-तज्जन्यज्ञानप्रामाण्याद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वात् । रूप्यादिधर्म्यंशे साक्षा-दुपजीव्यत्वाच्च प्राबल्यम् । दृष्टं च नरशिरःकपालाशुचित्वागमस्य तच्छुचित्वानुमानादुप-जीव्याशुचित्वग्राहिशब्दसाजात्यमात्रेण प्राबल्यम् । यद्यपीन्द्रियमनुमेयं तथापि तस्याज्ञात-

---

तथेति ।। प्राबल्यमित्यर्थः । ग्राह्यत्वादिति ।। अक्षस्येत्यनेन सम्बध्यते । कैमुतिक-न्यायेनापि, अक्षस्योपजीव्यत्वं साधयति । यदाहीति ।। "शुचि नरशिरःकपालमित्यत्र "नरशिरः कपालं शुचीनि प्रतिज्ञावाक्यक्रमो द्रष्टव्यः । ननु तथापि, आगमाद्यपेक्षया कथं चाक्षुषादि-प्रत्यक्षस्य प्राबल्यं, तदनुपजीव्यत्वादित्यत आह चक्षुरादेरिति । श्रोत्रादीत्यादिपदात् साक्षि-परिग्रहः । न केवलं चक्षुरादेरुपजीव्यजातीयत्वमात्रेण प्राबल्यं किन्तु मिथ्यात्वानुमितिप्रयोजक-व्याप्तिग्राहकध्यानभूतशुक्तिरूप्यादिधर्म्यंशसाक्षात्कारजनकतया साक्षादप्युपजीव्यत्वेन प्राबल्य-मित्याह ॥ रूप्यादिधर्म्यंश इति ।। रूप्यादिरूपं यद्धर्मि तदंश इत्यर्थः । नच शुक्तिरूप्यादेः साक्षिभास्यत्वमेव न चक्षुर्भास्यत्वमिति वाच्यम् । चक्षुरन्वयव्यतिरेकानुविधानेन "चक्षुषेदं रजतं पश्यामि" इत्यनुव्यवसायबलेन च तत्प्रतीतेः चाक्षुषत्वस्वीकारस्योचितत्वात् । अन्यथा घटादेरपि साक्षिभास्यत्वस्वीकारप्रसङ्गात् । अत एव चक्षुरन्वयव्यतिरेकानुविधानं रूप्याद्यध्यास-कारणेदमाकारकधर्मिज्ञानोपक्षीणमिति निरस्तम् । तथापि मिथ्यात्वानुमितेश्चक्षुरिन्द्रियरूप-प्रत्यक्षोपजीवकत्वानपायात् । साक्षात्परम्परया वा येन विना यस्योत्थानमेव न भवति तं प्रति तस्योपजीव्यत्वादिति भावः । उपजीव्यजातीयत्वेनानुमानादागमस्य प्राबल्यं यदुक्तं तत्स्पष्टं दर्शयति ॥ दृष्टं चेति ।। उपजीव्येति ।। शुचित्वानुमानोपजीव्येत्यर्थः । तदुपजीव्यत्वञ्च शुचित्वरूपसाध्यप्रसिद्ध्युपयोगित्वेनेति द्रष्टव्यम् । यद्यपि चक्षुरादीन्द्रियस्वरूपसिद्ध्यनुमानमुप-

करणत्वाच्चानुमोपजीव्या । अक्षाप्रामाण्ये हि तत्सिद्धस्य व्याप्त्यादेर्योग्यतादेश्च बाधेनानुमेयस्य शब्दार्थस्य च बाधः स्यात् । अनुमेयस्य व्याप्त्यादिनानुमितिप्रामाण्यादिना शब्दार्थस्य च योग्यतादिना शाब्दधीप्रामाण्यादिना च तुल्ययोगक्षेमत्वात् । अन्यथा प्रातिभासिकव्याप्त्यादिमता बाष्पाध्यस्तधूमेन तात्त्विको व्यावहारिको(वह्निः)ऽग्निः व्यावहारिकव्याप्त्यादिमता च धूमेन तात्त्विकोऽग्निः व्यावहारिकेणाबाधेन विरुद्धधर्माधिकरणत्वेन च विश्वस्य जीवेशभेदस्य च तात्त्विक(स)त्वं सिद्ध्येत् । प्रातिभासिकयोग्यतादिमताऽनाप्तवाक्येन च तात्त्विको व्यावहारिको वार्थः व्यावहारिकयोग्यतादिमता च लौकिकवाक्येनाग्निहोत्रादिवाक्येन च तात्त्विकोऽर्थः सिद्ध्येत् । प्रतिबिम्बस्य मिथ्यात्वेऽपि बिम्बरहितावृत्तित्वरूपा व्याप्तिरस्त्येव । नच धूमस्य तात्त्विकाग्निना न व्याप्तिः दृश्यत्वस्य तु तात्त्विक-

---

जीव्यम् । तस्यातीन्द्रियत्वात् । तथापि चक्षुरादेरज्ञातकरणतया, तेन ज्ञाने जनयितव्ये नानुमानस्योपजीव्यत्वमित्याह । यद्यप्यात्यादिनोपजीव्येत्यन्तेन ।

ननु श्रुतौ स्मृत्यपेक्षितप्रामाण्याश्रयत्वमुपजीव्यत्वम् । नचैवं प्रकृते । निषेध्यसमर्पकत्वेन विरुद्धत्वादित्यत आह ॥ अक्षाप्रामाण्ये हीति ॥ तथाच श्रुत्यपेक्षितप्रामाण्याश्रयत्वेनाक्षस्य श्रुतिनिषेध्यसमर्पकत्वमेव नास्तीत्यर्थः । ननु यादृच्छिकसंवादस्थल इव व्याप्त्यादेरसत्त्वेऽपि नानुमेयादेरसिद्धिरित्यत आह ॥ अनुमेयस्येति ॥ यादृच्छिकसंवादिस्थले धूमवत्त्वमात्रस्यारोपो न तु व्याप्त्यादेः । तदनन्तरं "यो यो धूमवान् सोऽग्निमान्" इति जायमानायाः स्मृतेः प्रागनुभूतव्याप्त्यादिविषयकत्वादितिभावः ॥ तुल्ययोगक्षेमत्वादिति ॥ एतच्चानुमेयस्य शाब्दार्थस्य चेत्युभयत्र सम्बध्यते ॥ अन्यथेति ॥ परामर्शविषयीभूतव्याप्त्यादिमत्त्वाविजातीयानुमेयमत्त्वाङ्गीकार इत्यर्थः ॥ व्यावहारिकेणेति ॥ एतच्च विरुद्धधर्माधिकरणत्वेनेत्यनेनापि सम्बध्यते । अत्र तृतीयान्तपदद्वयस्य षष्ठ्यन्तपदद्वयेन क्रमेण सम्बन्धः ।

ननु प्रतिबिम्बस्य मिथ्यात्वेन तन्निष्ठाबिम्बनिरूपिता व्याप्तिरपि तादृश्येव । नच तथानुमेयस्य बिम्बस्य तुल्यसत्ताकत्वमस्ति । तथाच व्याप्त्यादिनानुमेयस्य तुल्ययोगक्षेमत्वनियमस्तत्रैव भग्न इत्यत आह ॥ प्रतिबिम्बस्येति ॥ बिम्बरहितावृत्तित्वरूपेति ॥ बिम्बाविनाभावरूपेत्यर्थः । तथाच प्रतिबिम्बस्य मिथ्यात्वेऽपि बिम्बाभाववन्निष्ठाभावप्रतियोगित्वरूपाविनाभावः सत्य एवेति नोक्तनियमभङ्ग इति भावः । इदञ्च परीक्ष्या । सिद्धान्तेतु प्रतिबिम्बस्यापि सत्यत्वमेवेति बोध्यम् । ननु यस्य यादृशेन व्याप्तिः तादृशस्य तत् गमकमित्येव नियमः । तथाच धूमस्य न

मिथ्यात्वेन व्याप्तिरित्यस्ति । न(चा)प्यत्रापि मिथ्यात्वप्रमाणं तत्त्वावेदकमन्यदतत्त्वावेदकमिति व्यवस्था सिद्धा । येन तन्नियमत्यागः । अकस्मात्त्यागे च दृश्यत्वस्य मिथ्यात्वनियमोऽपि त्याज्यः । ननु तथापि कथं प्रामाण्यमिथ्यात्वे विषयमिथ्यात्वम् । प्रत्यक्षस्याप्रमाणत्वेन तद्विषयस्य श्रौतधीप्रामाण्यस्य मिथ्यात्वेऽपि श्रुतेः प्रमाणत्वात्तद्बोध्याद्वैतस्य सत्यत्वोपपत्तेरिति चेन्न । रूप्यादिज्ञानेषु प्रामाण्यमिथ्यात्वे विषयमिथ्यात्वदर्शनात् । अर्थाबाधरूपप्रामाण्यस्यातात्त्विकत्वेऽर्थस्य तात्त्विकत्वायोगाच्च । यत्तूक्तं वाचस्पतिना "उपजीव्यविरोधेन श्रुत्यप्रामाण्ये इदं रूप्यमिति पूर्वधीविरोधान्नेदं रूप्यमिति धीरप्रमा स्यादि"ति तन्न । यत्प्रामाण्यं स्वरूपसिद्ध्यर्थं अपवादनिरासार्थं वा यत्प्रामाण्यायत्तं तत्तस्योपजीव्यम् । इह नच व्याप्त्यादिज्ञानाप्रामाण्येऽनुमित्याद्यप्रामाण्यवत्सर्वज्ञ(त्वनिर्दुःख)त्वादिरूपब्रह्मबुद्ध्यप्रामाण्ये ब्रह्मात्मैक्यबुद्ध्यप्रामाण्यवच्च प्रतिषेध्यज्ञानाप्रामाण्ये प्रतिषेधकज्ञानाप्रामाण्यम् । येन तदुपजीव्यं स्यात् । यद्वा येन विना यस्यानुत्थानं तत्तस्योपजीव्यम् ।

---

तात्त्विकाग्निना व्याप्तिरस्तीति स न तद्गमकः । दृश्यत्वस्य तु स्वयमपि मिथ्याभूतस्यापि तात्त्विकमिथ्यात्वेन व्याप्तिसत्त्वात् तद्गमकत्वमित्यत आह ॥ नच धूमस्येति ॥ दृश्यत्वस्यापि तात्त्विकमिथ्यात्वेन व्याप्तिसत्त्वे मानाभावात् तस्य धूमेनाविशेष इति भावः । ननु दृश्यत्वादेस्तत्त्वावेदकत्वमेव धूमादितो विशेष इत्यत आह ॥ न चाद्यापीति ॥ अकस्मादिति ॥ बाधकं विनेत्यर्थः । ननु विषयस्याबाधे तत्त्वावेदकप्रमाणवेद्यत्वमेव तन्त्रम् । ननु तत्प्रामाण्यसत्यत्वमपि गौरवादिति शङ्कते ॥ ननु तथापीति ॥ अर्थाबाधेति ॥ अबाधितार्थकत्वव्यतिरेकेण ज्ञानादौ प्रामाण्यस्यैवासंभवादिति भावः ॥ उपजीव्येति ॥ यथाकथञ्चिदुपजीव्येत्यर्थः ॥ इदं रूप्यमितीति ॥ पूर्वधियोऽपि बाधकज्ञानोत्थानप्रयोजकत्वेनोपजीव्यत्वादिति भावः ॥ यत् प्रामाण्यमिति ॥ अनुमित्यादिप्रामाण्यं स्वरूपसिद्ध्यर्थं व्याप्त्यादिज्ञानप्रामाण्यायत्तमित्यर्थः । ननु सिद्धिरुत्पत्तिः ज्ञप्तिर्वा । नाद्यः । स्वतस्त्वहानेः । न द्वितीयः । स्वज्ञानस्य ग्राहकप्रामाण्यानधीनत्वात् इत्यनुरागेणाह ॥ अपवादनिरासार्थं वेति ॥ (निरसनार्थं वेति पाठान्तरम्) घटादिज्ञानप्रामाण्यं स्वमप्रमाणं ज्ञानत्वात् भ्रमवत् इत्यपवादनिरासार्थं दूरे गत्वा साक्षिप्रामाण्यमपेक्षत इति साक्षिण उपजीव्यत्वमित्यर्थः । इह बाध्यबाधकभावव्यवस्थायां कर्तव्यायां विवक्षितमिति शेषः । सर्वज्ञत्वेति ॥ सर्वज्ञत्वनिर्दुःखत्वादिधर्मैः लक्ष्यते यत्तत् सर्वज्ञत्वादिरूपं बोधितस्तत्पदार्थ इत्यर्थः । तत्पदार्थज्ञानमेव तत्त्वमस्यादिवाक्यार्थपरिज्ञानः ॥ ब्रह्मात्मैक्येति ॥ अयञ्च दृष्टान्तः परकीयेति बोध्यम् ।

इदं रूप्यमितिधीश्च प्रतिषेध्यार्पकतया धर्म्यर्पकतया चोपजीव्यैव । तथापि न दोषः । नह्युप-जीव्यत्वमेव प्राबल्ये तन्त्रम् । किन्तु परीक्षितत्वविशिष्टम् । उक्तं हि "यावच्छक्तिपरीक्षाया-मुपजीव्यस्य बाधने । दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वल"मिति । नहि परत्वं प्राबल्ये तन्त्रमिति त्वन्मतेऽपि परत्वमात्रं तन्त्रम् । किन्तु परीक्षितत्वविशिष्टम् । अन्यथा प्रमानन्तर-भ्रमस्य वेदात्परस्य बाह्यागमस्य च तत्त्वं स्यात् । परीक्षितत्वं च न तावत्प्रतिषेध्यार्पके-शुक्तिरूप्याभेदज्ञानांशेऽस्ति । सजातीयविजातीयसंवादविसंवादभावाभावौ हि परीक्षा । नचात्र विशेषदर्शनजन्यत्वसमानविषयकज्ञानान्तररूपः सजातीयसंवादो वा रूप्यार्थक्रियादि-रूपो विजातीयसंवादो वास्ति प्रत्युत तद्विसंवाद एव । दृश्यते चोत्तरस्यैव संवादादिकमिति पूर्वधीर्बाध्या । जगत्सत्यत्वप्रत्यक्षे तु विशेषदर्शनजन्यं सन्घट इति ज्ञानान्तरं घटार्थक्रिया प्रत्यक्षे असद्दूरादिदोषाभावश्चास्तीति न तद्बाध्यम् । जीवेशाभेदश्रुतौ च निषेध्यार्पिका भेद-

---

भ्रमात्मपदेन किञ्चिज्ज्ञत्वदुःखित्वादिधर्मविनिर्मुक्तत्वंपदार्थभूतजीवचैतन्यं विवक्षितम् । उपजीव्यमात्रबाधो न दोषः । परीक्षितोपजीव्यबाध एव दोष इत्यत्र सम्मतिमाह ॥ उक्तं हीति ॥ परीक्षितस्यैवोपजीव्यस्य बाधने दोषो भवति । अशोधिते अपरीक्षिते उपजीव्यत्वमलमस्तु । तथापि तद्बाधने न दोष इति श्लोकार्थः । नन्वेवं परीक्षितत्वमेव प्राबल्यप्रयोजकं स्यात् । नोपजीव्यत्वमित्याशङ्क्य समःसमाधिरित्याह ॥ नहीति ॥ अन्यथेति ॥ परत्वमात्रस्य प्राबल्य-प्रयोजकत्वे इत्यर्थः ॥ तदिति ॥ प्राबल्यमित्यर्थः । ननु परीक्षितत्वविशिष्टमुपजीव्यत्वमपि शुक्ता-विदं रूप्यमिति ज्ञानेऽप्यस्तीति, उक्तातिप्रसङ्गस्तदवस्थ इत्यत आह ॥ परीक्षितत्वञ्चेति ॥ तथाच यदंशे परीक्षितत्वविशिष्टमुपजीव्यत्वं तदंशे प्राबल्यमस्त्येव । यदंशे केवलमुपजीव्यत्वं न तदंशे प्राबल्यमिति भावः ॥ सजातीयेति ॥ अत्र सजातीयविजातीयपदाभ्यां संवादविसंवादाभाव-पदाभ्यां प्रत्येकं सम्बन्धयेत् ॥ अत्रेति ॥ शुक्तिरूप्यादिज्ञानस्थल इत्यर्थः ॥ विसंवाद एवेति ॥ प्रवृत्तिविषयालाभ इत्यर्थः । ननु बाधकज्ञानस्यापि पूर्वधीतुल्यतया, संवादाद्यभावे, किं केन बाध्यतां, इत्यत आह ॥ दृश्यते चेति ॥ ननु विसंवादाभावस्यापि परीक्षात्वात् व्यावहारिकरूप-जगत्सत्यत्वे तदसिद्धेः कथं परीक्षितत्वमित्यत आह ॥ प्रत्यक्ष इति ॥ असद्दोषाजन्यत्वनिश्चयेन तत्र विसंवादाभावोऽपि निश्चेतुं शक्यत इति भावः ।

जीवेशाभेदश्रुतौ चेति ॥ तत्त्वमस्यादिश्रुतावित्यर्थः । यद्यपीयं श्रुतिः जीवब्रह्माभेद-विधायिनी । तथापि अभेदस्य भेदाभावरूपत्वेनैतच्छ्रुतेः भेदनिषेधकत्वमिति भावः । यद्वा

श्रुतिः साक्षिप्रत्यक्षं चादोषत्वात् परीक्षितमिति न तदपि बाध्यम् । इत्थमेव च दोषाभावादिज्ञानरूपपरीक्षायामनाश्वासे वेदस्यापौरुषेयत्वेन तज्ज्ञाने त्वदुक्तानुमाने च योग्यानुपलंभादिना हेत्वाभासादिराहित्यज्ञाने ब्रह्ममीमांसायां च प्रत्यधिकरणं सिद्धान्त्यभिप्रेतार्थे उपक्रमाद्यानुगुण्यज्ञाने चानाश्वासः स्यादिति प्रमाणतदाभासादिव्यवस्था न स्यात् । यद्यपि धर्म्यर्पके इदं ज्ञानांशे परीक्षितत्वविशिष्टमुपजीव्यत्वमस्ति । तथापि तन्नबाध्यते । शिष्टमैक्यभङ्गे वक्ष्यते ॥

इति प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यविवरणम् ॥ ११ ॥

---

नान्योतोऽस्ति द्रष्टेत्यादि श्रुतावित्यर्थः ॥ साक्षिप्रत्यक्षं चेति ॥ यद्यपि जगत्सत्यत्वग्राहिप्रत्यक्षे त्वित्यादिना जगदन्तः पातिभेदग्राहि साक्षिणोऽपि प्रत्यक्षत्वेन प्राबल्यमुक्तम् । तथापि तस्यात्मस्वरूपतया चक्षुरादिजन्यप्रत्यक्षवत् जन्यत्वाभावेन दोषजन्यत्वशङ्कानवसरज्ञापनाय प्रागुपादानमिति ध्येयम् । ननूक्तपरीक्षाया दोषाभावादिज्ञानरूपत्वात् ज्ञानरूपत्वाविशेषेण तत्राप्यनाश्वासे कथं प्राबल्यरूपवस्तुव्यवस्थासिद्धिरित्यत आह ॥ इत्थमेव चेति ॥ तज्ज्ञान इति ॥ दोषाभावादिज्ञान इत्यर्थः ॥ यद्यपीति ॥ यद्यपि परीक्षितत्वं च न तावत् प्रतिषेध्यार्पके शुक्तिरूप्याभेदज्ञानांशेऽस्तीति पूर्ववाक्येनैव धर्म्यर्पकेदंज्ञानांशे परीक्षितत्वविशिष्टमुपजीव्यत्वं ज्ञातुं शक्यम् । तथापि मन्दव्युत्पादनाय शब्दतस्तादृशार्थसमर्पणमिति ध्येयम् । नन्वभेदश्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वेन बलीयस्त्वात् तयैव भेदश्रुतेः बाधो युक्त इत्यत आह ॥ शिष्टमिति ॥

॥ इति प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यविवरणम् ॥ ११ ॥

## ॥ अथ प्रत्यक्षस्यानुमानबाध्यत्वे बाधकम् ॥

यदितु प्रत्यक्षं लिङ्गबाध्यं तर्हि "औदुम्बरीं स्पृष्ट्वोद्गायेत्" "ऐन्द्या गार्हपत्यमुपतिष्ठते" "शरमयं बर्हिर्भवति" इति श्रुतित्रयग्राहिप्रत्यक्षं च यथाक्रमं औदुम्बरीवा सर्वा वेष्टयितव्येति स्मृतिरूपेण सर्ववेष्टनश्रुत्यनुमानेन "नेंद्रसश्वसिदाशुष" इति मन्त्रसामर्थ्यरूपेण इन्द्रशेषत्वश्रुत्यनुमानेन चोदनालिङ्गसारूप्येण कुशश्रुत्यनुमानेन बाध्येतेति सर्वैव मीमांसोन्मूलिता स्यात् । अग्न्यौष्ण्यप्रत्यक्षं च तच्छैत्यानुमित्या विवरणोक्तं आत्मस्थायित्वप्रत्यभिज्ञानं च बौद्धोक्ततत्क्षणिकत्वानुमित्या बाध्येतेति कालात्ययापदिष्टोच्छेदः स्यात् । तथाच

---

पूर्वं प्रत्यक्षस्य प्रबलत्वेन लिङ्गाबाध्यत्वमुक्तम् । इदानीन्तु तस्य तद्बाध्यत्वांगीकारे प्रति प्रसङ्गमाह ॥ यदित्विति ॥ श्रुतित्रयग्राहिप्रत्यक्षमिति ॥ यद्यप्युच्चारणज्ञानगर्भानुपूर्वीविशेषविशिष्टायाःश्रुतेः श्रवणेन्द्रियायोग्यत्वं, तथाप्यानुपूर्व्यंशे उपनयमादाय तथोक्तमिति ध्येयम् ॥ सर्ववेष्टनश्रुत्यनुमानेनेति ॥ एतच्च प्रमाणलक्षणे स्मृतिपादे चिन्तितम् ॥ विरोधेत्वनपेक्षं स्यादसतिह्यनुमानमिति ॥ ज्योतिष्टोमे सदोनामकस्य मण्टपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तत्रौदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुत्या उदुम्बरमयीं यज्ञसदःस्थूणारूपां शाखां स्पृष्ट्वोद्गात्रोद्गानं कर्तव्यमिति विहितम् । स्मृतिकारास्तु तत्स्पर्शविरुद्धं तस्याः कार्त्स्न्येन वाससा वेष्टनं स्मरन्ति औदुम्बरी सर्वा वेष्टयितव्येति । सा स्मृतिः प्रमाणमप्रमाणं वेति सन्देहे स्मृत्यधिकरणे स्मृतीनां मूलश्रुत्यनुमापकतया अष्टकादिस्मृतीनामिव प्रामाण्यसमर्थनादियं स्मृतिर्मूलश्रुतिमनुमापयन्ती प्रमाणमिति पूर्वपक्षे स्पर्शनवेष्टनयोर्विरुद्धतया तत्कर्तव्यताबोधकयोरप्यौष्ण्यशैत्यवद्विरुद्धत्वात् वन्ह्यौष्ण्यप्रत्यक्षेण शैत्यानुमानस्येव स्पर्शनश्रुतिप्रत्यक्षेण सर्ववेष्टनस्मृत्या स्वसमानार्थकस्वमूलभूतश्रुत्यनुमानस्य बाधान्मूलश्रुत्यभावेन सा स्मृतिरप्रमाणमिति सिद्धान्त इति ॥ श्रुतिलिङ्गोदाहरणन्तु प्रागेव प्रतिपादितम् ।

चोदनालिङ्गरूपेणेति ॥ (चोदनालिङ्गसारूप्येति पाठः मूले दृश्यते) एतच्च दशमे चतुर्थपादे विचारितम् ॥ चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत । (चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात्" इति सूत्रम् ) पूर्वमीमांसादर्शने (अ. १० पा. ४ सू. २) "सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्" इति श्रूयते । अत्र शरमयं बर्हिर्भवतीति श्रुतम् । तत्र किं दार्शपौर्णमासिकाः कुशा नियम्यन्ते न नियम्यन्तेवेतिसंशये शराणां कुशानां चोपदेशातिदेशाभ्यां ११

भृङ्गित्वे पशुत्वं तन्त्रं ननु तद्विशेषो गोत्वादीत्यादितर्कानुगृहीतेन पशुत्वादिना शशादेस्तात्त्विकं व्यावहारिकं वा भृङ्गम्, गन्धवद्द्रव्यस्य भूतत्वेनाऽपृथिवीत्वं पदार्थत्वादिनाऽभिमतस्यानमत्वं सुखस्य निरुपाधिकेष्टत्वाभावः दुःखस्य निरुपाधिकानिष्टत्वाभावः असद्वैलक्षण्येन शुक्तिरूप्यस्यापि सत्यत्वं अप्रातिभासिकत्वादिना प्रपञ्चस्यादृश्यत्वं घटवृत्तित्वादिना दृश्यत्वस्य मिथ्यात्वाव्याप्यत्वं च स्यादिति व्यावहारिक्यपि व्यवस्था न स्यात् । नह्यत्र प्रत्यक्षबाधादन्यो दोषोऽस्ति ॥

॥ इति प्रत्यक्षस्यानुमानबाध्यत्वे बाधकम् ॥ १२ ॥

---

प्रमाणद्वयाधिगतत्वात् समुच्चय इति । न कुशा निवर्तन्ते । कुतः ? मयटा शरप्राचुर्यस्य विधानात् अबाधेनापि तदुपपत्तेरिति पूर्वपक्षयित्वा "नित्यं वृद्धशरादिभ्यः (पाणिनि सू. ४-३-१४३) इति सूत्रेण शरशब्दात् विकारार्थे मयट् प्रत्ययः प्रतिपदोक्तः । "तत्र प्रतिपदोक्तस्यैव ग्रहणं न्याय्यं" लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायात् । अतस्तत्परित्यज्य प्राचुर्यार्थो न ग्रहीतुं शक्यः । प्राचुर्यार्थे प्रकरणान्तरं कल्पनीयं स्यात् । बर्हिःशब्दलक्षिते बर्हिःकार्ये शराणां विधायकस्य वचनस्य प्रत्यक्षत्वात् तैरेव कृतस्वकार्याणां कुशानां प्रापकस्य कुशसाधारणस्यातिदेशवाक्यस्य कल्पनं न प्रवर्तते । किन्तु कुशव्यतिरिक्ताङ्गप्रापकस्यैव तस्यानुमानमिति प्रापकाभावात् कुशा निवर्तन्त इति सिद्धान्तितम् ॥ इति सर्वेति ॥ एवं विधा, या, मीमांसा, सा सर्वैवेत्यर्थः ॥ कालात्ययापदिष्टेति ॥ यद्यप्यनुमानयोर्मध्ये तर्कानुगृहीतेनैकेनापरस्य कालात्ययापदिष्टत्वं साधकमेवं तथापि सकलतान्त्रिकोदाहृतकालात्ययापदिष्टोच्छेदः स्यादित्यत्र तात्पर्यम् ॥ अत्राभिमतस्येति ॥ भक्तत्वेन सकलसंप्रतिपन्नस्येत्यर्थः ॥ निरुपाधिकेष्टत्वेति ॥ अन्यद्वेषानधीनद्वेषविषयत्वेत्यर्थः ॥

॥ इति प्रत्यक्षस्यानुमानबाध्यत्वे बाधकविवरणम् ॥ १२ ॥

## ॥ अथ प्रत्यक्षस्य शब्दबाध्यत्वे बाधकम् ॥

यदि चाक्षं शब्दबाध्यं तर्हि जैमिनिना तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिरित्याद्यर्थवादस्य अदितिर्द्यौरित्यादिमन्त्रस्य च दृष्टविरोधेनाप्रामाण्ये प्राप्ते तदविरोधाय "गुणवादस्तु गुणादविप्रतिषेधः स्यादि"त्यादिना गौणार्थता नोच्येत। तत्सिद्धिरित्यादितत्सिद्धिपेटिकया च "यजमानः प्रस्तर" इत्यादेर्गौणार्थता नोच्येत। त्वया च प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नोच्येत। श्रुतिविरोधात्प्रत्यक्षस्यैवाप्रामाण्यसंभवात्। एतेनाद्वैतवाक्य-

---

इदानीं प्रत्यक्षस्य शब्दबाध्यत्वे बाधकमाह ॥ यदि चेति ॥ तस्माद्धूम एवाग्नेरिति ॥ एतच्च प्रमाणलक्षणे अर्थवादाधिकरणे चिन्तितम्। तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः। तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इत्यर्थवादयोर्दिवाप्यर्चिर्दर्शनात् नक्तमपि धूमदर्शनात् दृष्टविरोधेनानर्थक्ये शङ्किते गुणवादस्त्विति सिद्धान्तसूत्रेण (१-२-१-१०) दिवानक्तंचार्चिर्धूमयोरदर्शनशब्दो गौण इति दृष्टविरोधः समाहितः। गौणतानिमित्तं च दूरभूयस्त्वात् (१-२-१-१२) इति सूत्रेण यथा दिवा धूमो दूरस्थैर्भूम्ना दृश्यते न तथार्चिः। यथाच रात्रावर्चिर्दूरस्थैर्भूम्ना दृश्यते न तथा धूम इति न ददृश इत्यत्र दर्शनमात्रवाचिना दृशिना दूर(स्थ) भूम्ना विशिष्टे दर्शने लक्षिते तदभावस्तयोर्नञाबोध्यत इत्युक्तम् ॥ अदितिर्द्यौरिति ॥ इदञ्च मन्त्राधिकरणे चिन्तितम् ॥ अदितिर्द्यौरदितिरन्तरिक्षमित्यादिमन्त्रस्यैकस्य अदितेः परस्परभिन्नद्युगगनाद्यनेकात्मकत्वविरोधेन विवक्षितार्थत्वे (अर्थविप्रकर्षादिति) (१-२-४-३६) अर्थविप्रतिषेधात् इति सूत्रेण दूषिते गुणादप्रतिषेधः स्यात् (१-२-४-४७) इति सिद्धान्तसूत्रेणादितेर्द्युकार्यकारित्वादिना त्वमेव माता च पिता त्वमेवेत्यादौ मात्रादिशब्दानामिव द्युशब्दादीनां गौणत्वमाश्रित्य विरोधः समाहितः ॥ तत्सिद्धिरिति ॥ एतच्च नामधेयपादे चिन्तितम्। "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया गुणाश्रयाः (१-४-१३-२३) इति सूत्रेण यजमानः प्रस्तरः "अग्निर्वै ब्राह्मणः, आग्नेयो वै ब्राह्मणः, आदित्यो यूपः, अपशवो वा अन्ये गो अश्वेभ्यः" इति श्रुतिषु प्रस्तरस्य यज्ञसाधनभूतदर्भमुष्टिविशेषस्य यजमानत्वं, ब्राह्मणस्याग्नित्वं, यूपस्यादित्यत्वं, गवाश्वव्यतिरिक्तानामजादीनामपशुत्वं च प्रत्यक्षविरुद्धमिति तत्परिहाराय प्रस्तरादिषु यजमानादिशब्दा गौणा इति तेषां प्रवृत्तिनिमित्तभूता गुणाः प्रदर्शिताः। तत्र यजमानशब्दस्य प्रस्तरे प्रवृत्तौ तत्कार्यकारित्वरूपा तत्सिद्धिर्गुणः। उभयोरपि यज्ञसाधनत्वेनैककार्यकारित्वात्। अग्निशब्दस्य ब्राह्मणे प्रवृत्तौ जातिरूपम् एकप्रभवत्वं गुणः। ब्राह्मणोऽस्य मुखमासीत्, मुखादिन्द्रश्चाग्निश्चेति तयोर्मुखजत्वश्रवणात्।

मनन्यपरत्वान्नामुख्यार्थं प्रस्तरवाक्यादिकं तु अन्यपरमितिवाचस्पत्युक्तं निरस्तम् । सत्यपि तात्पर्यलिङ्गे मानान्तरविरोधे प्रस्तरादिवाक्यवत् सोमेन यजेतेत्यादिवद्वानन्यपरत्वस्यैवायोगात् । नहि कुरूपां अशूरं चोद्दिश्य अहो दर्शनीयेति सिंह इति च शतकृत्वः प्रयुक्तमपि वाक्यं वाच्यार्थपरं भवति । नवा तत्वमसिवाक्यं षड्विधतात्पर्यलिङ्गोपेतमपि मानान्तरविरुद्धं वाच्यार्थपरम् । किञ्चोपक्रमोपसंहारादिकं हि प्रत्येकं तात्पर्यलिङ्गं, अस्ति च प्रस्तरादि वाक्येऽपूर्वता । त्वत्पक्षे च प्रत्यक्षसिद्धे भेदे श्रुतिरिवैकलिङ्गसिद्धे लिङ्गान्तरमनुवादकमेवेति किं तद्बाहुल्येन । यच्चोक्तं वाचस्पतिना प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थं अद्वैतवाक्यं तु न तथा । उक्तं हि शाबरभाष्ये "न विधौ परः शब्दार्थ" इति । तन्न । अन्य-

---

आदित्यशब्दस्य यूपे प्रवृत्तौ ऊर्ध्वत्वमाज्याञ्जननिमित्तमौज्ज्वल्यं च गुणः । इदमेवसूत्रेसारूप्यमित्युक्तम् । अजादिष्वपशुशब्दस्य प्रवृत्तौ प्रशंसा निमित्तम् । पशुशब्देन गवाश्वगते उपकारातिशयेन प्रशस्तत्वे लक्षिते नञा तदभावः पश्वन्तरेषु बोध्यत इति । भूमलिङ्गसमवायोदाहरणन्तु प्रकृतानुपयुक्तमिति न लिख्यते ॥ अनन्यपरत्वेनेति ॥ स्वार्थतात्पर्यकत्वेनेत्यर्थः ॥ सत्यपीति ॥ तथाच मानान्तराविरोधे सत्येवोपक्रमादीनां तात्पर्यलिङ्गत्वमिति भावः ॥ प्रस्तरादिवाक्यवदिति ॥ यद्यपि प्रस्तरादिवाक्यस्य प्रकरणशास्त्रविरोधेनैवान्यपरत्वं, न प्रत्यक्षविरोधेनेति शक्यते वक्तुम् । तथापि प्रकरणशास्त्रप्रयुक्तविरोधोऽपि स्वात्मलाभाय प्रत्यक्षमेवापेक्षत इति दूरे गत्वा तद्विरोधादेव तस्यान्यपरत्वमित्यवधेयम् । मानान्तराविरोधस्य तात्पर्यलिङ्गविशेषणत्वं न केवलं मयोपेयते, किन्तु त्वयापीत्याह ॥ नवेति ॥ अन्यथा तत्त्वंपदवाच्ययोरेवाभेदान्वयः स्यादिति भावः । मानान्तरविरोधस्याकिञ्चित्करत्वे प्रस्तरादिवाक्यमपि तात्पर्यलिङ्गबलेन स्वार्थपरं स्यादित्याह ॥ किञ्चेति ॥ ननु स्वार्थपरत्वे षड्विधतात्पर्यलिङ्गवत्त्वमेव तन्त्रम् । नत्वेकैकलिङ्गवत्त्वम् । अतो नोक्तदोष इत्यत आह ॥ त्वत्पक्षे चेति ॥ श्रुतिरिवेति ॥ भेदश्रुतिरिवेत्यर्थः ॥ अनुवादकमिति ॥ ज्ञातज्ञापकमित्यर्थः । एतच्चाभ्युपेत्य । लिङ्गानां क्रमेणैवोपस्थितेः प्रथमोपस्थितलिङ्गेन तात्पर्ये सिद्धे लिङ्गान्तरेण तात्पर्यानुमितौ प्रतिबन्धकत्वेन ज्ञातज्ञापकत्वमपि न संभवतीति ध्येयम् । किं तद्बाहुल्येनेति ॥ अन्यथा पूर्वोत्तरमीमांसयोः विधिस्तु धारणेऽपूर्वत्वात् । (जै. सू. अ. ३ पा. ४ अधि. ५, सू. १५) आनन्दमयोऽभ्यासादित्यादौ एकैकलिङ्गोदाहरणं न स्यादिति भावः । अन्यशेषत्वादिति ॥ विध्यपेक्षितप्राशस्त्यसमर्पकत्वेन विध्यर्थत्वादित्यर्थः । परः मुख्यार्थादन्यः । मुख्यार्थत्यागेऽन्यशेषत्वं न तन्त्रं लोकवेदयोरन्वयव्यभिचाराद्व्यतिरेकव्यभिचाराच्च । किन्तु

शेषेऽपि प्रत्यक्षाविरुद्धे लोके " इयं गौः क्रय्या बहुक्षीरे "त्यादौ " कामधेनु "रित्यादाविवाऽमुख्यवृत्तेः, वेदेऽपि "सोऽरोदीदि"त्यादौ प्रस्तरादिवाक्य इवामुख्यवृत्तेरनाश्रयणात् । अनन्यशेषेऽपि " सोमेन यजेते "त्यादौ वैयधिकरण्येनान्वये विरुद्धत्रिकद्वयापातात् सामानाधिकरण्येनान्वये प्रत्यक्षाविरोधाय सोमवता यागेनेतिमत्वर्थलक्षणायाः विचारविधायके च जिज्ञासासूत्रे तद्विजिज्ञासस्वेत्यादिश्रुतौ च प्रत्यक्षाविरोधाय जिज्ञासाशब्देन विचारलक्षणायाः

---

मानान्तरविरोध एवेत्याह ॥ अन्यशेषेऽपीति ॥ कामधेनुरित्यादाविवेति प्रस्तरादिवाक्य इवेति च व्यतिरेकदृष्टान्तौ । अमुख्यवृत्तेरिति षष्ठ्यन्तद्वयस्यानाश्रयणादिति पञ्चम्यन्तेन संबन्धः । अमुख्यार्थत्वाश्रयणे अन्यशेषत्वस्येव मुख्यार्थग्रहणेऽपि अनन्यशेषत्वं न कारणं व्यभिचारादित्याह अनन्यशेषेऽपीति । सोमेन यजेतेत्यादाविति । एतच्च नामधेयपादे विचारितम् । " नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् " । (जै सू. अ. १ पा. ४ अधि ६ सू. ६) वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्दो गुणविधिः नामधेयं वेति संशये वाजशब्दस्यान्नवाचकत्वात् वाजमन्नं यत्पेयं तद्वाजपेयमिति योगोपस्थितयवाग्वादिलक्षणगुणविधिः न तु यागनामधेयं नातिप्रयोजनत्वादिति पूर्वपक्षयित्वा गुणविधित्वे वाजपेयवता यागेन फलं भावयेदिति द्रव्यविशिष्टस्य यजेः फलभावनाकरणत्वेन विधिमुपगम्य वाजपेयशब्दस्य यजिना सामानाधिकरण्येनान्वयाङ्गीकारे तदन्वयनिर्वाहाय तस्य मत्वर्थलक्षणादोष आपततीति वाजपेयेन यागं भावयेत् यागेन स्वाराज्यमिति यागकर्मिकायां भावनायां द्रव्यस्य करणत्वेन फलकर्मिकायां यागस्य करणत्वेन च विधिमुपगम्य तस्य वैयधिकरण्येनान्वयांगीकारे भावनायां द्रव्यस्य करणतयान्वयाय यागस्य कर्मत्वेन, फलस्य कर्मतयान्वयाय च यागस्य करणत्वेन प्रत्येतव्यत्वात् । तथा प्रत्यययोश्च क्रमिकत्वे यजेरावृत्तिलक्षणवाक्यदोषप्रसंगादेकस्यैव यजेर्युगपदनुपपन्नं परस्परविरुद्धकर्मत्वकरणत्वरूपद्वयोपस्थापकत्वात्मकवैरूप्यस्य यागे कर्मत्वानुबन्धिप्रधानत्वानुवाद्यत्वोद्देश्यत्वकरणत्वानुबन्धिगुणत्वविधेयत्वोपादेयत्वरूपविरुद्धत्रिकद्वयस्य च प्रसङ्गात् गुणविधानानुपपत्तेः कर्मनामधेयपरं वाजपेयपदमिति सिद्धान्तितमिति । एवञ्च सोमेन यजेतेत्यत्रापि वैयधिकरण्येन गुणविधिस्वीकारे सोमेन यागं कुर्यात् यागेन (स्वर्गमिति) समाहितमिति विरुद्धत्रिकद्वयापत्तेः सामानाधिकरण्ये वक्तव्ये नामतया यागसामानाधिकरण्यं, लतारूपेऽर्थान्तरे रूढस्य तस्य शक्त्यन्तरकल्पनापत्तेरतः ततो वरं लक्षणेति । मत्वर्थलक्षणया गुणविधित्वेन सामानाधिकरण्यं, मत्वर्थलक्षणाया अप्यभावे सोमलताया यागक्रियायाश्च भेदस्य प्रत्यक्षसिद्धत्वेन सामानाधि-

सर्वं खल्विदं ब्रह्मेत्यादौ अमुख्यार्थतायाश्च स्वीकृतत्वाच्च । सर्वस्यापि वाक्यस्यावाच्ये ब्रह्मणि लक्षणाया एवेष्टत्वेनामुख्यार्थत्वनिषेधायोगाच्च अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणा-बीजस्य विध्यविधिसाधारण्याच्च । शाबरवचनं तु अनुवादमुख्यार्थत्वाय विधौ लक्षणा न युक्तेत्येवंपरम् । तस्माच्च प्रत्यक्षं शब्दबाध्यम् । तदुक्तं "यजमानप्रस्तरत्वं यथानार्थः श्रुतेर्भवेत् । ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषत" इति ॥

॥ इति प्रत्यक्षस्य शब्दबाध्यत्वे बाधकम् ॥ १३ ॥

---

करण्यस्य तेन बाधप्रसङ्गादिति तस्य प्रकृतोपयोगो द्रष्टव्यः । प्रत्यक्षेति । सोमलतायां यागस्य च भेदग्राहक (ग्राहि) प्रत्यक्षेत्यर्थः । यद्यपि मन्त्वर्थलक्षणाश्रयणं नात्र प्रत्यक्षविरोधात् किन्तु द्रव्यान्तरकल्पनागौरवादिति शक्यते वक्तुम् । तथापि ध्रौवाज्यसत्वेन कल्पनागौरवा-भावात् प्रत्यक्षविरोधादेव तत्र मन्त्वर्थलक्षणाश्रयणमिति द्रष्टव्यम् । प्रत्यक्षाविरोधायेति । श्रुतिसूत्रयोर्जिज्ञासाशब्दार्थस्य ज्ञानेच्छारूपस्य प्रमाणवस्तुपरतन्त्रत्वेन पुरुषप्रयत्नसाध्यत्वस्य प्रत्यक्षबाधिततया तदविरोधायेत्यर्थः । (एतच्च) इदमपि पररीत्येति द्रष्टव्यम् । अमुख्यार्थतायां इति ॥ बाधायां सामानाधिकरण्यरूपामुख्यार्थताया इत्यर्थः । सर्वस्यापीति ॥ ज्ञेयब्रह्मनिष्ठ-सर्ववाक्यगतपदस्येत्यर्थः । इष्टत्वेनेत्यनन्तरं त्वयेति शेषः । तात्पर्यानुपपत्तेरिति ॥ तात्पर्य-विषयान्वयानुपपत्तेरित्यर्थः । नन्वेवं शाबरवचनविरोध इत्यत आह ॥ शाबरवचनं त्विति ॥ न विधौ परः शब्दार्थ इति शाबरवचनं विध्यनुवादयोरन्यतरामुख्यवृत्तावावश्यकत्वायामनुवाद-मुख्यार्थत्वाय विधौ न लक्षणेत्येवंपरमित्यर्थः । प्रत्यक्षस्येति । विरोधिप्रत्यक्षस्येत्यर्थः ।

॥ इति प्रत्यक्षस्य शब्दबाध्यत्वे बाधकविवरणम् ॥ १३ ॥

---

## ॥ अथ अपच्छेदन्यायवैषम्यम् ॥

यत्तूक्तं वाचस्पतिना पूर्वस्य प्रत्यक्षस्य परेणागमेनापच्छेदन्यायेन बाध इति तन्न । नह्यस्माभिः पूर्वत्वमात्रेण प्रत्यक्षस्य बाधकतोक्ता किन्तूपजीव्यत्वेन, नचापच्छेदे पूर्वमुपजीव्यम् । किञ्च प्रतिहर्त्रुद्गात्रोः क्रमेणापच्छेदे प्रतिहर्त्रपच्छेदनिमित्तसर्ववेदसदानस्य परेणोद्गात्रपच्छेदनिमित्तादक्षिण्येन बाधेऽपि नात्यन्तबाधः प्रतिहर्तृमात्रापच्छेदे द्वयोरपि युगपद-

---

अपच्छेदन्यायेनेति । एतच्च षष्ठे पञ्चमपादे विचारितम् । (चिन्तितम्) पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्* । ज्योतिष्टोमेऽन्योन्यं संबध्य यज्ञशालातो निर्गच्छताम् ऋत्विजाम् "अध्वर्युं प्रस्तोतान्वारभते । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारमुद्गाता । उद्गातारं ब्रह्मा । तं यजमानः । यजमानं प्रशास्ते"ति श्रुत्या विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तविशेषाः श्रूयन्ते । यदि प्रस्तोता अपच्छिन्द्यात् ब्रह्मणे वरं दद्यात् । यदि प्रतिहर्ता (अपच्छिन्द्यात्) सर्ववेदसं (वेतसं) दद्यात् । यद्युद्गातापच्छिन्द्यादद‍क्षिणं (तं) यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन्स्यादिति । तत्र क्रमेण प्रतिहर्त्रुद्गात्रोरपच्छेदे (उद्गातृप्रतिहर्त्रोरपच्छेदे इति पाठः) किं पूर्वनिमित्तं (अदक्षिणमिति पाठः) सर्वस्वदक्षिणाप्रायश्चित्तं कर्तव्यमुतोत्तरनिमित्तमदक्षिणमिति (सर्वस्वदक्षिणाप्रायश्चित्तमिति पाठः) संशये उपक्रमाधिकरणन्यायेनासंजातविरोधितया बलीयस्त्वात् पूर्वनिमित्तकं प्रायश्चित्तं कर्तव्यमिति पूर्वपक्षे उपसंहारस्य प्रथमप्रवृत्तोपक्रमैकवाक्यत्वेनापाततस्तदाकांक्षितार्थसमर्पणनियमेन तद्विरुद्धार्थविषयत्वे लब्धात्मकतैव नास्तीति युक्तमुपक्रमाधिकरणे पूर्वप्राबल्यम् । इह तु परस्परनिरपेक्षं शास्त्रद्वयाधीनकर्तव्यताज्ञानयोरायेन द्वितीयस्योत्पत्तिप्रतिबन्धासंभवादुत्पद्यमानस्य च तस्य नानुपमृद्य पूर्वं तद्विरोध्युत्तरमुत्पत्तुमर्हतीति पूर्वोपमर्देनोत्पत्तेः परस्य प्राबल्यं न्याय्यमिति परनिमित्तकं प्रायश्चित्तं कर्तव्यमिति सिद्धान्त इत्यपच्छेदन्यायेनेत्यर्थः । नहीति । तथाच परस्परनिरपेक्षतया प्रवृत्तयोरपच्छेदनिमित्तप्रायश्चित्तशास्त्रयोः पूर्वस्य परेण बाधो युक्तः । इह तु आगमप्रवृत्तेर्नियमेन प्रत्यक्षसापेक्षतया न तेन प्रत्यक्षस्य बाधो युक्तः । तदाहुः पूर्वात् परबलीयस्त्वं तत्र तावत् प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेदितीति भावः । अपच्छेद इति । अपच्छेदनिमित्तकप्रायश्चित्तशास्त्र इत्यर्थः । किञ्चापच्छेदस्थले पूर्वस्य परेण न नियमेन बाधः । प्रकृते तु पूर्वस्य प्रत्यक्षस्य परेणागमेन नियमेन बाधादपच्छेदन्यायविषयतैव नास्तीत्याह किञ्चेति । प्रतिहर्त्रुद्गात्रोः क्रमेणेति ।

* (जै. सू. अ. ६, पा. ५, अधि. २१, सू. ५४)

पच्छेदे क्रमेणापच्छेदेऽपि प्रतिहर्त्रपच्छेदस्य पश्चात्त्वे च "यदि प्रतिहर्तापच्छिन्द्यात्तर्हि सर्ववेदसं दद्यादि"ति शास्त्रप्रामाण्यसंभवात्। अत एव षष्ठे "तत्र विप्रतिषेधाद्विकल्पः स्यादि"त्यधिकरणे द्वयोर्युगपदपच्छेदे विकल्प उक्तः। किञ्च "यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्यादि"त्यधिकरणे उद्गात्रपच्छेदस्य प्रतिहर्त्रपच्छेदात्परत्वे उद्गात्रपच्छेदनिमित्तके प्रथमप्रयोगं दक्षिणाहीनं समाप्य कर्तव्ये ज्योतिष्टोमस्य द्वितीयप्रयोगे "तद्दद्याद्यत्पूर्वस्मिन् दास्यन्स्यादि"ति या श्रुत्युक्ता दक्षिणा सा पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्य सर्वस्वदित्साया अबाधेन सर्वस्वरूपैव नतु या ज्योतिष्टोमे नित्या द्वादशशतरूपा सा। तस्मात्प्रतिहर्त्रपच्छेदस्य सर्वथा बाधः किन्तु प्रयोगान्तरे निक्षेप इत्युक्तम्। उक्तं हि टुपटीकायां

---

यत्र प्रतिहर्त्रपच्छेदः पूर्वमुद्गात्रपच्छेदश्च पश्चाज्जातस्तत्रेत्यर्थः। अत्यन्ताबाधमेवोपपादयति प्रतिहर्तृमात्रेति। द्वयोरिति। उद्गातृप्रतिहर्त्रोरित्यर्थः। क्रमेणापच्छेदेऽपीति। युगपदपच्छेदाभावेऽपीत्यर्थः। प्रामाण्यसंभवादित्येतत् अपिशब्दसमभिव्याहृतसप्तम्यन्तमात्रेण संबध्यते। प्रतिहर्तृमात्रापच्छेदस्थले प्रतिहर्त्रपच्छेदस्य पश्चात्त्वे च प्रामाण्यं सूपपादमित्यतस्तदुपपादनमकृत्वा युगपदपच्छेदस्थलप्रामाण्यमुपपादयति अत एवेति। तत्र विप्रतिषेधाद्विकल्पः स्यात्। उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे किं नैमित्तिकद्वयं समुच्चीयते किं वा विकल्प्यत इति संशये विकल्पस्याष्टदोषदुष्टत्वात् पुनर्यजेतेति प्रयोगद्वयसद्भावेन पूर्वस्मिन्नदक्षिणत्वमुत्तरस्मिन् सर्ववेद(स)समित्युभयसंभवाच्च समुच्चीयत इति पूर्वपक्षे यत्र प्रयोगे निमित्तं तस्यैवाङ्गं नैमित्तिकम्। न प्रयोगान्तरे क्रियमाणं निमित्तवतः प्रयोगस्य साद्गुण्यावहमित्येकस्मिन्नेव प्रयोगे द्वयमापतितम्। विरोधात्समुच्चेतुमशक्यं तद्विकल्प्यत इति सिद्धान्त इति षष्ठ एव विकल्प उक्त इत्यर्थः। यद्यपि क्रमेणापच्छेदः प्रतिहर्त्रपच्छेदश्च पूर्वं तदापि तन्निमित्तप्रायश्चित्तशास्त्रस्य अत्यन्ताबाधमुपपादयति किञ्चेति। इत्यधिकरण इति। यद्युद्गात्रपच्छेदः परो भवति तदा तन्निमित्तके पुनर्यज्ञे किं क्रतुसंकल्पकाले दित्सितद्वादशशतमेव तत्र देयमुत प्रतिहर्त्रपच्छेदे दित्सितं सर्वस्वमिति संशये पूर्वस्मिन् दास्यत्त्वेनेन पक्षिस्यवत् क्रतुस्वभावतो देयं तदेव प्रतीयते। तस्यागन्तुकमिति द्वादशशतमेव तत्र देयमिति पूर्वपक्षे प्रथमं यद्द्वादशशतं दास्यन्नासीत् तत्परेण सर्ववेद(स)सेन बाधितमेव। न च तदपि परेणादक्षिण्येन बाधितमिति वाच्यम्। तस्याबाधेनैव प्रयोगान्तरे निक्षेपोपपत्तेस्तत्र सर्वस्वमेव देयमिति सिद्धान्त इति अधिकरण इत्यर्थः। प्रतिहर्त्रपच्छेदस्येति। प्रतिहर्त्रपच्छेदनिमित्तकप्रायश्चित्तशास्त्रस्येत्यर्थः। उक्तमिति। एतच्च इत्यधिकरण इत्यनेन

"तस्य प्रयोगांतरे निक्षेपः क्रियते" इति। अपि चैकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां क्रतौ तत्तन्नैमित्तिककर्तव्यतयो*र्बदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पत्तेरूपज्ञानद्वयवच्छास्त्रद्वयमपि प्रमाणमेव। उक्तं ह्यपच्छेदाधिकरणे "नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तोपजननात्प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सत्येवं कर्तव्य" इति। ततश्चार्थस्यैव बदरफलस्येव श्यामरक्तरूपेण प्राक्तथाभूतस्य पश्चादन्यथाभावात् "पूर्वशास्त्रस्य प्रामाण्यमेव"श्च पूर्वशास्त्रस्याप्रामाण्यम्। नहि बदरफले श्यामत्वविज्ञानं अनन्तरस्य रक्तत्वस्यावगत्या

संबध्यते। तस्येति। सर्ववेद(त)सदानस्येत्यर्थः। पूर्वं पाक्षिकबाधमभ्युपेत्यापच्छेदन्यायविषय-मुक्तं, सम्प्रति विषयसत्त्वेन पाक्षिकोऽपि बाधो नेति नैवंविधविषयेऽपच्छेदन्यायप्रसर इत्यभि-प्रेत्याह अपि चेति। तत्तन्निमित्तकर्तव्यतयोरिति। ननु किमिदं कर्तव्यत्वं यत्परनैमित्तिक-कर्तव्यत्वोत्पत्त्या निवर्तते ? न तावत् पूर्वनैमित्तिकस्य कृतिसाध्यत्वयोग्यत्वम्। तस्य फलोप-कारितया सन्निपातितया वा कारणत्वविशेषरूपत्वेन पश्चादप्यनपायात्। नापि फलोपधानरूपं कृतिसाध्यत्वम्। तस्य पूर्वमनुत्पत्तेः। नापि यदननुष्ठाने क्रतोर्वैकल्यं तत्त्वमङ्गत्वं वा। अननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य नियमविशेषरूपत्वेन, कर्माङ्गत्वस्य फलोपकारितया तत्सन्निपातितया वा कारणत्वविशेषरूपत्वेन च यावद्धर्मिभावितया तयोः कादाचित्कत्वायोगात्। नाप्यागमापाय-योग्यं पदार्थान्तरं मानाभावादिति चेन्न। निमित्तोपजननात् प्रागिदमित्थं कर्तव्यमासीत्। निमित्ते सत्यन्यथा कर्तव्यं जातमित्यबाधितानुभवबलेन कर्तव्यत्वस्यागमापाययोग्यपदार्थान्तर-रूपत्वसंभवात्। यद्वाङ्गत्वमेव कर्तव्यत्वम्। तच्च फलोपकारितया सन्निपातितया वा साधनत्वम्। तदपि साधनतावच्छेदकावच्छिन्नत्वरूपयोग्यत्वमेव। तदवच्छेदकं चोद्गात्रपच्छेद-निमित्तस्य कर्मणः उत्तरभाविप्रतिहर्त्रपच्छेदाभावावच्छिन्नत्वे सति उद्गात्रपच्छेदोत्तरकालावच्छिन्न-तत्कर्मकत्वम्। उद्गात्रपच्छेदरूपनिमित्ताभावस्थले उत्तरभाविप्रतिहर्त्रपच्छेदरूपनिमित्तस्थले चानुष्ठितस्योद्गात्रपच्छेदनिमित्तस्य कर्मणः क्रतुस्वरूपं प्रति तत्साध्यापूर्वं प्रति वा साधनत्वा-भावात्। तथा चोद्गात्रपच्छेदरूपनिमित्ते सति तद्घटिततत्कर्मावच्छिन्नत्वरूपयोग्यतायाः उत्पत्तिः। अनन्तरं प्रतिहर्त्रपच्छेदरूपनिमित्ते सति तत्प्रागभावापगमेन तद्घटितधर्मावच्छिन्नत्व-रूपयोग्यताया अपायः। तत्प्रतिहर्त्रपच्छेदनिमित्तकसर्ववेद(स)सदाने तद्घटितधर्मावच्छिन्नत्व-रूपयोग्यताया निष्पत्तिश्च। एवं प्रतिहर्त्रपच्छेदपूर्वकोद्गात्रपच्छेदस्थलेऽपि योग्यतायाः (ननु) उत्पत्तिविनाशौ द्रष्टव्याविति। एवमिति। नैमित्तिकशास्त्रोक्तप्रकारेणेत्यर्थः। एतावता प्रबन्धेन

* तन्नैमित्त(त) यो(लघ्वा)मोदसमतः पा

मिथ्या भवतीति। तस्मात् "पौर्वापर्ये विरोधश्च पूर्वाप्रामाण्यमेव च। नियमाच्चास्ति यत्रासावपच्छेदनयो भवेत्।" नचैवं प्रकृते प्रत्यक्षाप्रामाण्यस्यावकाशोऽस्तीति नापच्छेदन्यायः। एतेन सगुणसप्रपञ्चश्रुत्योर्निर्गुणनिष्प्रपञ्चश्रुतिभ्यामपच्छेदन्यायेन बाध इति निरस्तम्। एतेनैव "तत्परत्वात्परत्वाच्च निर्दोषत्वाच्च वैदिकम्। पूर्वस्य बाधकं नायं सर्प इत्याप्तवाक्यवदि-" त्यानन्दबोधोक्तं निरस्तम्। यतः "तत्परत्वमसिद्धत्वात्परत्वं व्यभिचारतः। निर्दोषताऽन्यथासिद्धेः प्राबल्यं नैव साधयेत्"। असिद्धं हि मानान्तरविरोधे श्रुतेः तत्परत्वम्। परत्वं तु प्रमानन्तरभ्रमे व्यभिचारि। दृश्यते च "नक्त्वासेडि"तिपरंप्रति "मृडमृदे"त्यादिपूर्वं बाधकम्। निर्दोषत्वं तु अर्थान्तरे प्रामाण्येनान्यथासिद्धमिति॥

॥ इति अपच्छेदन्यायवैषम्यम्॥ १४॥

---

फलितमर्थं दर्शयति ततश्चेति। यथा बदरफलस्य श्यामरक्तरूपेणान्यथाभावः, एवमनुष्ठेयस्यार्थस्य तत्र नैमित्तिककर्तव्यतोत्पत्त्या प्राक्तथाभूतस्यैव पश्चादन्यथाभावेन विषयसत्वान्न पूर्वशास्त्रस्याप्रामाण्यमित्यर्थः। ननु परेण पूर्वस्यात्यन्ताबाधेऽपि बाधमात्रसत्त्वात् कथं प्रकृते नापच्छेदन्यायविषयतेत्याशङ्कां उपसंहारव्याजेन परिहरति तस्मादिति। नचैवमिति। तथाच पूर्वस्य प्रत्यक्षस्य परेणागमेन बाध्यत्वे नियमेनाप्रामाण्यप्राप्तेः नापच्छेदन्यायविषयतेति भावः। एतेनेति। अपच्छेदन्यायवैषम्यव्युत्पादनेनेत्यर्थः॥ तत्परत्वादिति॥ तत्तात्पर्यकत्वादित्यर्थः। श्लोकं व्याचष्टे॥ असिद्धं हीति॥ दृश्यते चेति। समानकर्तृकयोः पूर्वकाले (पा. ३.४-२१) (क्त्वा) इति क्त्वाप्रत्यये सेडनिट्साधारण्येन विद्यमानस्यौपदेशिक(कि)त्त्वस्य सेण्मात्रे परेण 'न क्त्वा सेडि'ति सूत्रेण कित्त्वनिषेधे प्राप्ते तद्विशेषे कित्वस्य पूर्वेण मृडेत्यादिसूत्रेण प्रतिप्रसवः क्रियत इत्यर्थः।

॥ इति अपच्छेदन्यायवैषम्यम्॥ १४॥

## ॥ अथ मिथ्यात्वानुमितेरग्निशैत्यानुमितिसाम्यम् ॥

एवंचाक्षस्य लिङ्गादिबाध्यत्वे कालात्ययापदिष्टादेर्दोषता वा त्याज्या व्यवस्थापकं वा वक्तव्यम्। अत्रोक्तं खण्डने। तत्राक्षसिद्धस्पर्शनश्रुत्युष्णत्वायजमानत्वादिवल्लिङ्गशब्दग्राह्य-सर्ववेष्टनश्रुत्यनुष्णत्वयजमानत्वादिकमपि व्यावहारिकम्। इहत्वक्षसिद्धं सत्यत्वं व्याव-हारिकम्। लिङ्गशब्दग्राह्यं मिथ्यात्वं तु तात्त्विकम्। एवञ्च "पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः। विरोधादुपजीव्येन न बिभेति कदाचने"ति। तत्र किं सत्यत्वमिथ्यात्वग्राहिणो-र्व्यावहारिकतात्त्विकविषयकत्वाद्बाध्यबाधक(भावोने)तैव नेति भावः किं वा मिथ्यात्वग्राहि-तात्त्विकविषयकत्वाद्बाधकमेव न तु बाध्यमिति। आद्येऽप्यनुमित्यादिकं किमक्षसिद्धव्याव-हारिकमत्त्वस्याभावमगृहीत्वैव तदसिद्धस्य तात्त्विकसत्यत्वस्यैवाभावं गृह्णाति किंवा तत्सिद्ध-स्यैव प्रतिपन्नोपाधौ तात्त्विकमभावम्। नाद्यः मिथ्यात्वश्रु(ते)त्यादेरप्रसक्तप्रतिषेधत्यापातात्। अक्षसिद्धस्य सत्वस्य प्रतिपन्नोपाधावभावाग्रहणे तस्य तात्त्विकत्वापाताच्च। न द्वितीयः। प्रतिपन्नोपाधौ तात्त्विकतदभावग्राहिण एव तद्बाधकत्वेनाबाधोक्त्ययोगात्। नांत्यः उपजीव्य-

---

एवं चेति। उक्तरीत्या प्रत्यक्षस्य प्राबल्ये सिद्धेऽपीत्यर्थः। कालात्ययापदिष्टादेरित्यादिपदेन योग्यताविरहपरिग्रहः। अत्रोक्तमिति। अक्षस्य लिङ्गादिबाध्यत्वे व्यवस्थापकमुक्तमित्यर्थः। तत्रेति। श्रुतिस्मृत्यादिविरोधस्थल इत्यर्थः। लिङ्गशब्दग्राह्येति॥ औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिरूपेण कृतकत्वादिरूपेण च लिङ्गेन यजमानः प्रस्तरः आदित्यो यूप इत्यादिशब्देन च ग्राह्ये-त्यर्थः। शब्दग्राह्येति। यजमानत्वादिकमित्यनेन सम्बध्यते। आदिपदादादित्यत्वादिपरिग्रहः। किं वेति॥ यद्यपि द्वितीयतृतीययोरभेदः। तथापि बाधकत्वोक्त्यनुक्तिभ्यां भेदो बोध्यः। तत्सिद्धस्यैवेति॥ अक्षसिद्धस्यैवेत्यर्थः। मिथ्यात्वश्रुत्यादेरिति॥ तात्त्विकसत्त्वस्य प्रत्यक्ष-सिद्धत्वाभावादिति भावः। अप्रसक्तेति। तात्त्विकसत्त्वस्य प्रत्यक्षसिद्धत्वाभावादिति भावः। ननु तात्पर्यापरिज्ञानदशायामैतदात्म्यमिदं सर्वं तत्सत्यमितिश्रुत्या जगति तात्त्विकसत्त्वप्रसक्ति-संभवात् नाप्रसक्तप्रतिषेधत्वमित्यरुचेराह अक्षसिद्धस्येति। न बिभेतीति। निरवधिपरतयोप-जीव्यविरोधस्यैवाभावादिति भावः। अद्वैतस्यैव नामान्तरं स्यादिति। अनन्तसमानस्वभावस्य चैतन्यमात्रस्यैवानौष्ण्यमिति नाम कृतं स्यादिति भावः। द्वैतस्यैवेति। तेनप्रपञ्चस्यैव मिथ्यात्व-मिति नाम कृतं स्यादित्यर्थः। ननु न द्वैतस्यैव नामान्तरकरणम्। मिथ्यात्वलक्षणयोगित्वात्

प्रत्यक्षबाधितस्य मिथ्यात्वस्य तात्विकत्वायोगात् । योगे वाऽनौष्ण्यमपि तात्विकं स्यात् । एवञ्च "आदित्यो यूप" इत्यादावपि 'तात्विकादित्यतां यूपस्याश्रित्यशरणं श्रुतिः । विरोधादुपजीव्येन न बिभेति कदाचने'ति स्यात् । नन्विदमनौष्ण्यमतात्विकविश्वांतर्गतेन जलाद्यनौष्ण्येन तुल्यस्वभावं चेन्न तात्विकम् । नचेदद्वैतस्यैव नामांतरं स्यादिति चेत् न । विश्वमिथ्यात्वमपि घटादितुल्यतयाऽसिद्धेनाऽतात्विकेन रूप्यादिमिथ्यात्वेन समस्वभावं चेन्न तात्विकम् ॥ नचेत् द्वैतस्यैव नामांतरं स्यादिति साम्यात् । ननु तात्विकत्वमात्रेण विलक्षणमपि तन्मिथ्यात्वलक्षणयुक्तमिति चेदिदमपि तन्मात्रेण विलक्षणमपि स्पर्शत्वव्याप्यजातिविशेषवदाश्रयत्वरूपानौष्ण्यलक्षणयुक्तमिति समम् । ननु प्रातिभासिकस्यैव मिथ्यात्वं व्यावहारिकं व्यावहारिकस्य तु तात्विकमिति चेन्न । जलादिस्थस्य प्रातिभासिकौष्ण्यस्याभाव एव व्यावहारिकः अग्न्यादिस्थस्य व्यावहारिकौष्ण्यस्य तु तात्विक इत्यापातात् । तस्मान्मिथ्यात्वं तात्विकं अनौष्ण्यं तु व्यावहारिकमिति व्यवस्था न युक्ता । अस्तु वा सा, तथापि तात्विकमिथ्यात्वानुमितिबाधेन सत्यत्वस्य व्यावहारिकत्ववत् व्यावहारिकानुष्णत्वानुमितिबाधेनौष्ण्यं नभोनैल्यवत् स्वार्थक्रियया सह स्वप्नवत् प्रातिभासिकं स्यात् । तत्वप्रदीपिकायां तु औष्ण्यधीप्रामाण्ये उभयसंमतिः सत्वबुद्धौ तु नेत्युक्तं तन्न । इहाऽसंमतौ हेत्वभावात् । तत्वशुद्धौ तु मिथ्यात्वानुमितिः श्रुत्यनुगृहीतेति नाक्षबाध्या इतरातु नेतितद्बाध्येत्युक्तं, तन्न । मिथ्यात्वश्रुतेः अग्निर्हिमस्य भेषजमिति श्रुतेरनुमितहिमनिवारणशक्त्यनुवादित्ववदनुमितासत्यमिथ्यात्वानुवादित्वोपपत्तेः । मिथ्यात्वानुमितिस्तर्कानुगृहीता इतरा तु नेति चेन्न । तर्काणां

---

साध्यभूतमिथ्यात्वमपि रूप्यादिमिथ्यात्ववत् मिथ्यात्वशब्दवाच्यमेव । नचैवं तद्वैलक्षण्यानुपपत्तिः । तात्विकत्वमात्रेण तद्वैलक्षण्योपपत्तेरिति शङ्कते ननु तात्विकत्वेति । तदिति । विश्वमिथ्यात्वमित्यर्थः । इदमपि तन्मात्रेणेति । अनौष्ण्यमपि तात्विकत्वमात्रेणेत्यर्थः । नचैवमद्वैतस्यैव नामान्तरकरणम् । तस्य निरुच्यमानानौष्ण्यलक्षणयोगित्वेन अनौष्ण्यशब्दार्थत्वोपपत्तेः । तथाचोपजीव्यप्रत्यक्षबाधितस्य मिथ्यात्वस्य न तात्विकत्वमङ्गीकर्तुं शक्यमिति भावः ।

ननु मिथ्यात्वस्य धर्मिसत्ताधिकसत्ताकत्वनियमात् व्यावहारिकविश्वमिथ्यात्वं तात्विकमेव स्यादित्यभिप्रेत्य शङ्कते नन्विति । अभाव एवेति । अधिष्ठानान्यगत इति शेषः । इत्यापातादिति । त्वदुक्तनियमस्याप्रयोजकत्वेन विनिगमनाविरहादिति भावः । नन्वर्थक्रियाकारित्वात्

मिथ्यात्वानुमितिवदक्षबाधेनात्मक्षणिकत्वादितर्काणामिवाभासत्वात्। उक्तं च सुरेश्वरवार्तिके बौद्धं प्रति। "प्रत्यभिज्ञायमानेऽर्थे तदेवेदमिति ध्रुवे। लिङ्गमाभासतामेति प्रत्यक्षार्थविरुद्धगि"ति। नन्वनौष्ण्यस्यौष्ण्यनिरूप्यत्वात्तस्य चाग्रयादावेव प्राप्तत्वात्तत्र तदभावानुमा-बाधिता मिथ्यात्वं तु न सत्यत्वाभावः। किन्तु भावान्तरम्। अभावत्वेऽपि तत्प्रतियोगिसत्त्वं ब्रह्मणि प्रसिद्धमिति चेन्न। औष्ण्यतदभावयोर्व्यावहारिकत्वतात्त्विकत्वाभ्यां प्रातिभासिकत्व-व्यावहारिकत्वाभ्यां वा व्यवस्थोक्तेः। तत्र प्रतियोगिग्राहिणउपजीव्यत्वे इह च धर्म्यादि-ग्राहिणस्सुतरामुपजीव्यत्वाच्च। उष्णमात्रे शैत्यस्य उष्णविशेषे वानुष्णत्वस्य साधनेऽबाधा-पाताच्च। एतेनौष्ण्यात्यन्ताभावात्मकमनौष्ण्यं औष्ण्यमिथ्यात्वरूपमेवेति तस्य तात्त्विकतेष्टेति निरस्तम्। शैत्यस्यातद्रूपत्वात्। तस्मात् "स्वतःप्रमात्वं प्रत्यक्षे लिङ्गाद्यैः स्वोपजीविभिः। स्वविरोधान्मृत्यवस्थामापन्नैर्नैव बाध्यते"॥

॥ इति मिथ्यात्वानुमितेरग्निशैत्यानुमितिसाम्यम् ॥ १५ ॥

---

कथमौष्ण्यं नभोनैल्यवत् प्रतिभासिकंस्यादित्यत आह स्वार्थक्रिययेति। अनुमितासत्त्वेति। नचैवं श्रुतेरप्रामाण्यम्। त्वन्मते सत्यत्वश्रुतेरिव मिथ्यात्वश्रुतेरपि प्रतियोगिसमर्पकत्वेन प्रामाण्यो-पपत्तेरिति भावः। इतरा अनौष्ण्यानुमितिः। आभासत्वादिति। तथाच सत्तर्कानुगृहीतत्व-मेवानाभासत्वप्रयोजकमिति भावः। किन्तु भावान्तरमिति। प्रतिपन्नोपाधिप्रवेशेनोपाध्यन्तर-त्वादिति भावः। ननु सद्रूपत्वाभावरूपमिथ्यात्वसाधने बाधः स्यादेवेत्यत आह॥ अभावत्वे-पीति॥ ननु धर्मी सर्वथानापलप्यते व्यावहारिकसत्वस्वीकारात्। अपि तु सर्वस्य पारमार्थिकी सत्ता नास्तीत्येवोच्यते। नचैतावतोपजीव्यविरोध इत्यत आह॥ उष्णमात्र इति॥ उक्तमर्थ-मुपसंहरति तस्मादिति।

॥ इति मिथ्यात्वानुमितेरग्निशैत्यानुमितिसाम्यम् ॥ १५ ॥

## ॥ अथ प्रत्यक्षस्यलिङ्गाद्यबाध्यत्वेबाधकोद्धारः ॥

इदंरूप्यमिति प्रत्यक्षमपि नेदं रूप्यमिति सयुक्तिकबलवत्प्रत्यक्षेण बाध्यम् । न तु युक्त्यैव । गौरोऽहमित्याद्यपि मम शरीरमिति बलवत्प्रत्यक्षबाध्यं कर्दमलिप्ते वस्त्रे कृष्णं वस्त्रमितिवद्गौणं वा । उष्णंजलमित्यपि गौणमेव न तु लिङ्गादिबाध्यम् । यद्वा निश्चितद्रव्यान्तरसमभिव्यवहाररूपदोषेण शङ्किताप्रामाण्येन उष्णंजलमित्यनेनावकाशे दत्ते लिङ्गादिकं प्रवर्तते न तु तल्लिङ्गादिबाध्यम् । अहमिहैवास्मिमदनेजानान इत्यादि तु प्रमाणमेव जीवस्याणुत्वात्, न तु लिङ्गादिबाध्यम् । ज्वालैक्यप्रत्यक्षमपि निर्वापितारोपितदीपेच्छेदग्राहिप्रत्यक्षेण बाधितमेवजायते । अन्यत्रापि दीर्घोऽयं दीपो ह्रस्वो नेति प्रत्यक्षेण बाध्यते नत्वऽनुमित्या । तादृश-

---

ननु यथोक्तरीत्या प्रत्यक्षं लिङ्गाद्यबाध्यं स्यात् तदा इदंरजतमित्यादिभ्रमस्य युक्त्यादिना बाधो न स्यात् । नच भाविप्रत्यक्षेणैव तद्बाधः । प्रत्यक्षत्वाविशेषेण वैपरीत्यापत्तेरित्यत आह ॥ इदं रूप्यमिति ॥ सयुक्तिकेति ॥ विशेषदर्शनजन्येत्यर्थः । नच पूर्वप्रत्यक्षविरोधात् बाधकज्ञानस्यैवानुत्पत्तिरिति वाच्यम् । विरोधिज्ञानसामग्रीसमवहितस्य ज्ञानस्याप्रतिबन्धकत्वेन बाधकज्ञानोत्पत्तिसंभवात् ॥ बलवदिति ॥ परीक्षितेत्यर्थः । बलवत्त्वं च देहात्मैक्याध्यासभङ्गे स्पष्टीभविष्यति ॥ गौरवेति ॥ परंपरासम्बन्धावगाहीत्यर्थः । उष्णं जलमिति । विशेषदर्शनकालीनमिति शेषः ॥ गौणमेवेति ॥ केचित्तु जलादौ वह्न्यादिसम्बन्धादौष्ण्यादिकमुत्पद्यत इति उष्णं जलमितिज्ञानं साक्षात्सम्बन्धावगाहित्वेऽपि लोहितः स्फटिक इत्यादिवत् प्रमैव । नच युगपद्विरुद्धस्पर्शद्वयसमावेशानुपपत्तिः । स्फटिकादौ विरुद्धरूपद्वयसमावेशवत्तदुपपत्तेः । तत्र शौक्ल्यानुपलम्भवत्तत्रापि शैत्यानुपलम्भोपपत्तेश्च । नच यदुष्णं तत्तेज इति श्रुतिविरोधः । तस्याः स्वाभाविकौष्ण्यवद्विषयकत्वादित्याहुः ॥ नत्विति ॥ अन्यथा ततः संतापुष्णार्थिप्रवृत्त्यनुदयप्रसङ्ग इति भावः ।

ननु तथापि विशेषादर्शनकालीनस्योष्णं जलमिति प्रत्यक्षस्य लिङ्गेनैव बाधो वक्तव्यः । अन्यथा शैत्यानुमितिरेव न स्यादित्यत आह ॥ यद्वेति ॥ तथाच प्रतिबन्धकाभावादेव तत्र लिङ्गं प्रवर्तते । न तु तेन तस्य बाध इति भावः । ननु विभुर्जीव परिच्छिन्नत्वग्राहिप्रत्यक्षस्य अनुमानादन्यद्बाधकमस्तीत्यत आह ॥ अहमिति । अणुत्वादिति ॥ यथा चैतत्तथाग्रे व्यक्तम् एव स्पष्टीभविष्यति । आप्तवाक्यमूलेति । एतच्चोपलक्षणं विशेषदर्शनादिना शङ्किताप्रामाण्येन

प्रत्यक्षाभावेतु नदीपमे(दमनुपश्यामः)दः। दूरस्थस्यायंसर्प इत्याद्यपि प्रत्यक्षं न शब्दमात्रेण बाध्यं किन्तु नायं सर्प इत्याप्तवाक्यमूलपरीक्षितप्रत्यक्षगौरवादेव । राजगौरवादिव राजभृत्येनामात्यः श्रुतिगौरवादिव वा श्रुत्यनुसारिप्रकरणादिना लिङ्गादिकम्। उक्तं हि "दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा। तदापि विपरीतत्वं शिष्टाकोपे यथोदित"मिति। न हि प्रधानभूताचमनादिपदार्थविषयस्मृत्या पदार्थधर्मभूतक्रमविषया "वेदंकृत्वा वेदिं करोती"ति श्रुतिर्बाधितेत्यन्यत्रापि तया सा बाध्यते। अत एव नायं सर्प इत्युक्ते प्रतिवदंति किमेवं वदसि केवलं अपि पुनः परामृश्य पश्यसीति। ननु तथापि पीतः शङ्खः नीलं नभ इत्यादिप्रत्यक्षं श्वैत्यनीरूपत्वाद्यनुमित्यैव चन्द्रप्रादेशत्वप्रत्यक्षं चाप्रत्यक्षमूलशब्देनैव बाध्यं दृष्टमिति चेत् उच्यते। द्विविधं हि ज्ञानं संदेहरूपमेकाका(रनियतंचे)रं चेति। द्वितीयमप्यप्रामाण्यधीकलंकितं तदकलंकितं चेति द्वेधा। (अप्रामाण्यधी)कलंकितत्वमपि द्वेधा बाधकाभिमतज्ञानोदयात् प्रागेव दोषज्ञानेन वाऽर्थाभावनिश्चयेन वा। तत्राद्यं यथा चन्द्रप्रादेशत्वग्राहि। शैलाग्रस्थ-

---

सर्पभ्रमेणावकाशे दत्ते एव शब्दः प्रवर्तते। नतु तेन तस्य बाधः। अत एव नायं सर्प इति वक्तुर्भ्रान्तं प्रति सम्यक् पश्येति वचनमित्यपि बोध्यम्।

स्वतो दुर्बलस्यापि प्रबलाश्रयेण प्रबलबाधकत्वमस्तीत्यत्र पूर्वतन्त्रदृष्टान्तमाह॥ श्रुतिगौरवादिवेति॥ नच मिथ्यात्वलिङ्गस्यापि श्रुतिगौरवमस्त्येवेति वाच्यम्। यूपादित्यश्रुतेरिव त्वदभिमतमिथ्यात्वश्रुतेरप्यमुख्यार्थत्वोपपत्तेः॥ शिष्टाकोप इति॥ "शिष्टाकोपेऽ* विरुद्धमिति चेत्" "न शास्त्रपरिमाणत्वादि"त्यत्र श्रुतमाचामेदित्यादिस्मरणं वेदं कृत्वा वेदिं करोति इत्यादिश्रुतिप्रतिपन्नदार्शपौर्णमासिकादिपदार्थक्रमविरुद्धं प्रमाणमप्रमाणं वेति संशये विरोधाधिकरणन्यायेनाप्रमाणमिति प्राप्ते पदार्थगुणभूतक्रमविषयायाः श्रुतेराचमनादिपदार्थविषयिणी स्मृतिरेव बलीयसी, प्रमाणबलात् प्रमेयबलस्य प्रबलत्वात्। प्रमाणयोः स्वरूपतो विरोधाभावेन प्रमेयविरोधाधीनतया तदवगत्यर्थं प्रमेयविरोधालोचनया प्रमेयस्वरूपेऽवगम्यमाने तदैव तदीयबलाबलस्यापि स्फुरणेन तस्य प्रथमोपस्थितत्वादिति सिद्धान्त इत्युच्यत इत्यर्थः॥ अन्यत्रापीति॥ बलवदाश्रयरहितस्थलेऽपि स्मृत्या श्रुतिर्बाध्यत इत्यर्थः॥ एकाकारमिति॥ विरुद्धाप्रकारमित्यर्थः॥ दोषज्ञानेनेति॥ दोषजन्यत्वज्ञानेनेत्यर्थः। प्रागेव तत्रेति। यद्यपि परीक्षितप्रत्यक्षस्य तदानीमतीतत्वेन नाप्रामाण्यज्ञापकत्वं तथापि तज्जन्यसंस्कृतेरेव प्रामाण्यज्ञाप-

* जै. सू. अ. १ पा. ३ अधि. ४ सू. ३, ४

तत्परिमाणादिज्ञाने दूरादेर्दोषत्वनिश्चयात् । द्वितीयं यथा सवितृशङ्खादौ सुषिरपीतत्वादि ग्राहि । प्रागेव तत्र परीक्षितप्रत्यक्षेण सुषिराद्यभावनिश्चयात् । एवञ्च चन्द्रप्रादेशत्वादि-प्रत्यक्षेण प्रागेव ज्ञातदूरादिदोषेण अप्रमाणत्वेन ज्ञातेन संदेहवत्स्वार्थपरिच्छेदपराङ्मुखेन निःशङ्कप्रवृत्त्यजनकेनावकाशे दत्ते पश्चाच्छब्दादिः प्रवर्तते न तु तेन प्रत्यक्षबाधः । यथा प्रबलप्रत्यक्षबाधितस्याक्षस्यानन्तरं प्रवृत्तेन शब्दादिना न बाधस्तद्वत् । येन यस्य भ्रमत्वं ज्ञायते तत्तस्य बाधकम् । नच चन्द्रप्रादेशत्वादिप्रत्यक्षस्यागमादिना भ्रमत्वं ज्ञायते । अकलंकितं स्वार्थपरिच्छेदेऽभिनिविष्टं निःशङ्कप्रवृत्तिजननयोग्यम् । यथा अग्निरुष्ण एव प्रस्तरो यजमानो नैव घटस्सत्येवेत्यादि । नह्यत्र प्रागेव दूरादिदोषधीर्वाऽर्थाभावनिश्चयो वाऽस्ति । यदि च प्रत्यक्षे ज्ञातदूरादिदोषाभावेऽप्यन्यः कल्प्येत तर्हि श्रुतावपि शब्दे ज्ञातविप्रलंभाद्यभावेऽप्यन्यः कल्प्येत । नचाविद्यकत्वमेव दोषः मेयाविद्यकत्वस्याद्याप्यसिद्धेः । मानाविद्यकत्वस्य तु श्रुतावपि सत्त्वात् । नाप्यनादिभेदभ्रमवासनादोषः, श्रौतज्ञानस्यापि प्रकृतिप्रत्ययादिभेदवासनाजन्य-त्वात् । भेदधियोऽद्यापि भ्रांतित्वासिद्धेश्च । इदं चाकलंकितं प्रत्यक्षं साक्षिरूपं चेन्न केनापि बाध्यं न कस्याप्यवकाशदम् । बाह्यं तु प्रबलप्रत्यक्षेण बाध्यं नत्वन्येन बाध्यमन्यस्यावकाशदं वा । एवञ्चाकाशे समीपे नीरूपत्वनिश्चयाद्दूरे तद्धीर्दूरदोषजन्येति प्रागेव निश्चिता नतु नीरूपत्वानुमितिबाध्या । केचित्त्वाकाशो नीलिमोदेतीतिश्रुतेर्नभोनीलमेव समीपे तु भूसंनिकर्षस्य प्रतिबन्धकत्वान्नैल्यानुपलम्भ इत्याहुः । अन्ये तु नैल्यधीः साक्षिप्रत्यक्ष-

---

कत्वम् । नच सुषिरप्रत्यक्षेऽप्रामाण्यशङ्कां विना स्मृतिरेव न स्यादिति वाच्यम् । पूर्वोत्पन्न-स्मृत्या प्रामाण्यशङ्काकलंकितस्यैव सुषिरप्रत्यक्षस्योत्पत्तेरिति । ननु तदभावावगाहित्वाविशेषात् कथं न शब्दस्य बाधकत्वमित्यत आह ॥ येन हीति ॥ शब्दप्रवृत्तेः पूर्वमेव तस्य दूरादिदोष-जन्यत्वनिश्चयेन भ्रमत्वनिश्चयादिति भावः ।

तृतीयमुदाहरति अकलंकितमिति । श्रुतावपि सत्वादिति । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु मानाविद्यकत्वमप्यसिद्धमिति ध्येयम् । ननु बाधाबाधाभ्यां दोषतदभावकल्पना । नच श्रौतज्ञानस्य बाधोऽस्तीत्यत आह ॥ भेदधिय इति ॥ तथाच कल्पकाभावान्नात्र दोषकल्पनेति भावः । न केवलमाकाशस्य साक्षिवेद्यत्वं मयोच्यते किन्तु परेणापीत्याह ॥ परमतेऽपीति ॥ तन्मतेऽन्योन्याभावप्रत्यक्षे प्रतियोगियोग्यत्वस्यातन्त्रत्वेऽपि संसर्गाभावप्रत्यक्षे तद्योग्यत्वं तन्त्रमिति

बाधिता। अचाक्षुषपिशाचान्योन्याभावस्य स्तम्भः पिशाचो न भवतीति चक्षुषेव साध्य-योग्यरूपाभावस्यापि नीरूपत्वविशेषावकाशत्वग्राहिणा साक्षिणा ग्रहणात्। परमतेऽपि ह्याकाशं साक्षिवेद्यं निमीलितनेत्रस्य नीलं नभ इतिधीश्च साक्षिरूपेत्याहुः।

यद्वा अश्रावणे आकाशे श्रावणी शब्दाभावधीरिवाचाक्षुषेऽप्याकाशे रूपाभावधीर्वायाविव चाक्षुष्येव। दूरस्थस्य पुंसो यत्र नभःप्रदेशे नैल्यधीस्समीपस्थस्य तस्यैव तत्रैव चक्षुषैवानैल्यबुद्धेः। अन्यथाऽऽकाशस्य नीरूपत्वं न सिध्येत्। लिङ्गाभावात्। तत्पक्षे महत्त्वद्रव्यानारंभकत्वादेरसिद्धेः। निस्स्पर्शत्वस्य तमसि व्यभिचारात् पृथिव्यादित्रयेतरत्वादेश्चाप्रयोजकत्वात्। एतैरेवाशब्दत्वस्याप्यापाताच्च। पञ्चीकरणेन रूपस्यापि सत्त्वेन बाधाच्च। यद्वा व्याप्तिप्रत्यक्षेण तन्मूलानुमित्या वा तद्बाधः। अनौष्ण्यहेतोस्तु न व्याप्तिः अप्रयोजकत्वात्। मिथ्यात्वहेतौ तु घटधीवत् व्याप्तिधीरपि स्वार्थसत्त्वग्राहितयाऽनुमितिप्रतिकूलैव न तु तस्या मूलम्। अथवानीरूपत्वानुमितिरुपजीव्यव्याप्तिप्रत्यक्षाद्यविरुद्धा धर्मिग्राहकाऽबाधिता च। मिथ्यात्वाद्यनुमितिस्तूपजीव्यव्याप्तिप्रत्यक्षादिविरुद्धा धर्मिग्राहकबाधिता चेति

---

यो मन्यते तं प्रत्याह॥ निमीलितनेत्रस्येति॥ तथाच नीलरूपस्य साक्षिवेद्यत्वेन साक्षिणा निरुक्ताकाशत्वग्रहणे न काचिदनुपपत्तिरिति भावः। चाक्षुष्येवेति। ननु साक्षिरूपा, चक्षुरन्वयव्यतिरेकानुविधानानुपपत्तेरिति भावः। युक्तिमुक्त्वानुभवमपि प्रमाणयति दूरस्थस्येति। अन्यथेति। अचाक्षुषत्व इत्यर्थः। महत्त्वेति। परममहत्त्वेत्यर्थः। अशब्दत्वस्येति। अशब्दगुणकत्वस्येत्यर्थः। पञ्चीकरणेति।

यद्यपि वाचस्पतिना पञ्चीकरणं नाङ्गीकृतम्। तथापि सिद्धान्तिना तदङ्गीकारात् बाध इति भावः। ननु व्याप्तिप्रत्यक्षस्य समानप्रकारकत्वाभावात् सामान्यलक्षणानभ्युपगमेन भिन्नविषयत्वाच्च न व्याप्तिप्रत्यक्षस्य बाधकत्वमित्यत आह॥ तन्मूलानुमित्यावेति। तर्कानुगृहीतव्याप्तिप्रत्यक्षमूलानुमित्यावेत्यर्थः। नन्वेवं वह्न्यौष्ण्यप्रत्यक्षमपि तदनौष्ण्यानु(नुमिति)मानबाधितं स्यादित्यत आह॥ अनौष्ण्यहेतोरिति॥ तथाच तर्कानुगृहीतव्याप्तिप्रत्यक्षमूलकत्वाभावेन वह्न्यनौष्ण्यानुमानं तदौष्ण्यप्रत्यक्षबाधितमिति भावः। ननु तादृशव्याप्तिप्रत्यक्षमूल(क)त्वं मिथ्यात्वानुमितावप्यस्तीति तया प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य बाधः किं न स्यादित्यत आह॥ मिथ्यात्वहेतौ त्विति॥ पूर्वदूषणसमुच्चयार्थस्तुशब्दः। तस्या इति। मिथ्यात्वानुमितेरित्यर्थः।

वैषम्यम् । तस्मात् 'स्वार्थनिश्चयरूपेण निश्चला ह्यपरोक्षधीः । विजातीयप्रमाणेन केवलेन न बाध्यते'। तदुक्तं "नहि दृष्टस्य वस्तुनो बलवद्दृष्टिं विनाऽन्यद्बाधक"मिति। उक्तञ्च विवरणेपि "यत्राविचारपुरस्सरमेव प्रत्यक्षावभासमप्यनुमानादिना बाधितमुच्छिन्नव्यवहारं भवति तत्र तथा भवतु यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिंतया बाधनिश्चयस्तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धि"रिति ॥

॥ इति प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वेबाधकोद्धारः ॥ १६ ॥

---

निश्चलेति ॥ प्रबलेत्यर्थः ॥ विजातीयेति ॥ स्वातिरिक्तेत्यर्थः । परीक्षितप्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे परसम्मतिमप्याह ॥ उक्तं चेति ॥ अपरे तु गौरोऽहमिति प्रत्यक्षानन्तरं मम देह इति प्रत्यक्षदर्शनात् दूरे नभोनैल्यप्रत्यक्षानन्तरं निकटे रूपाभावप्रत्यक्षदर्शनात् चन्द्रादावुदयकाले अधिकपरिमाणदर्शनानन्तरं कालान्तरेऽन्यपरिमाणदर्शनात्, परस्परविरुद्धार्थावगाहितत्प्रतीतिद्वयोपनयानन्तरं किमनयोः प्रमाणमित्यप्रामाण्यशङ्कानन्तरमेव मानान्तरप्रवृत्तिः न तु तेन तद्बाध इत्याहुः ।

॥ इति प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे परोक्तबाधकानामुद्धारविवरणम् ॥ १६ ॥



## ॥ अथ प्रत्यक्षस्य भाविबाधकशङ्काभङ्गः ॥

नापि भाविबाधकशङ्कामात्रेणेति तृतीयः । उक्तरीत्या लिङ्गशब्दयोरबाधकत्वात् अक्षस्याप्रमाणतया शङ्क्यमानत्वात् सर्वविशेषाभावे च सामान्यस्याप्यभावेन बाधकशङ्काया अनुदयात् । किञ्च त्वन्मते जाग्रदादिज्ञानस्याप्रमाणत्वेन स्वप्नादेर्बाधासिद्धौ कथं तद्दृष्टांतेनान्यत्र तच्छङ्का । तदुक्तं वार्तिके बौद्धं प्रति "प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् । स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किंकृत" इति । अपिच भ्रमकालीनापरोक्षबुद्ध्यविषयविशेषविषयैव धीर्बाधिका, नच तव विश्वबाधिका धीस्तद्विषया । किञ्च सप्रकारैव धीर्बाधिका । निर्विकल्पिकायाः सप्रकारकभ्रमाविरोधित्वात्, नच ते(तव)विश्वबाधिका धीः सप्रकारिका । किञ्च न तावत्सा सप्रकारा नापि निष्प्रकारा शब्दजन्येति वक्ष्यते । नच त्वन्मते सा शब्दान्यजन्या । किञ्च बाधिकाधीर्भ्रमस्य तद्धेतोरज्ञानस्य तद्दोषस्याध्यस्तस्य

---

अक्षस्य चेति । भाविबाधकत्वेन शङ्क्यमानाक्षस्यापि भाविबाधकशङ्काग्रहग्रस्तत्वेन तस्याबाधकत्वादिति भावः ॥ सर्वविशेषाभावेचेति ॥ यद्यप्यर्थापत्त्यादेर्निरासो न कृतः । तथापि तस्य यथायथं लिङ्गादिष्वेवान्तर्भावं निश्चित्यैवमुक्तमिति ध्येयम् । बाधकशङ्काया अनुदयादिति । किञ्चित् प्रमाणं बाधकं भविष्यतीति सामान्यतोऽपि शङ्कानुदयादित्यर्थः । ननु भाविबाधकग्रस्तस्यापि शङ्क्यमानस्य भाविबाधकस्याक्षस्य मेवप्रत्यक्षे औचित्याद्वर्जितशङ्काबाधकत्वं भविष्यतीत्येतावताप्यप्रामाण्यशङ्काकलङ्कितत्वेन प्रत्यक्षबाधकत्वमित्यस्वरसादाह किञ्चेति । ज्ञानत्वस्य साधारणत्वाज्ज्ञानात् न कुत्राप्यप्रामाण्यशङ्केति भावः । प्रतियोगिनीति । विरोधिनीत्यर्थः । तवेति । ज्ञानमात्राप्रामाण्यस्वीकर्तुरित्यर्थः । ननु व्यावहारिकप्रमाणबाध्यस्य तात्त्विकप्रमाणबाध्यत्वेऽपि स्वप्नादिबाधकत्वं भवत्येव । स्वप्नादिज्ञानविषयसत्ताविरोधिसत्ताघटितप्रमाणबाध्यत्वात् । किञ्चिज्ज्ञानस्य विषयात्यन्तासत्त्वमिदानीं गृह्यते कस्मिंश्चिदन्यत्वेति ज्ञानत्वाच्छङ्कास्यादेवेत्यत आह अपि चेति । नचेति । विश्वबाधकत्वेन त्वदभिमतबुद्धेः निर्विशेषचिन्मात्रविषयकत्वादिति भावः । ननु विशिष्टस्योपहितस्य वा कल्पितत्वेन शुद्धस्यैवान्यस्य भ्रमकालीनापरोक्षबुद्ध्यविषयत्वमेवेत्यस्वरसादाह किञ्चेति । निर्विकल्पकाया इति । सप्रकारकत्वेनैव ज्ञानस्य विरोधित्वदर्शनादिति भावः । नचेति । अन्यथा अखण्डार्थत्वहानिरिति भावः । ननु विश्वबाधकबुद्धिः सप्रकारैव । नचैवमखण्डार्थत्वहानिः । तद्भिन्नप्रकारत्वेनैवाखण्डार्थत्वोपपत्तेरित्यत आह किञ्च न तावदिति । तदभिन्नप्रकारत्वेऽप्यखण्डार्थत्वहानिः स्यादेव । अन्यथा प्रमेयत्वे

द्रष्टुश्च न बाधिकेति न भ्रमादिबाधो युक्तः। किञ्च दोषजन्यमेव बाध्यं नच साक्षिप्रत्यक्षं तज्जन्यम्। अद्वैतज्ञाने तु श्रुतितात्पर्यभ्रमो दोषः। किञ्च बाधकतुल्यमानसंवादि न बाध्यम्। द्वैतप्रत्यक्षं चाद्वैतश्रुतितुल्यद्वैतश्रुतिसंवादि। किञ्च बाधकधीबोध्यं न बाध्यं भेदश्च बाधकधीबोध्यः तया च स्वविषयस्य भेदाभिन्नतयौदासीन्येन वा ग्रहे बाधकत्वायोगेन भिन्नतयैव ग्राह्यत्वात्। तस्माच्च बाधशङ्का युक्ता।

कथंचेयं शङ्का रूप्यादिबाधेपि बाधकशङ्कापातेनाबाधितबाधरूपकोट्यप्रसिद्धेः। बाधितबाधशङ्कायाश्चाबाध्यत्वविरोधित्वात् भाविबाधेपि बाधशङ्कापातेन स्वव्याघाताच्च। तदुक्तं वार्तिके बौद्धं प्रति "दुष्टज्ञानगृहीतार्थप्रतिषेधोऽपि युज्यते। गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यती"ति। नच धीमात्रे न बाधशङ्का किन्तु साक्षात्कार इति युक्तम्। विशेषहेत्वभावात्। वृत्तिरूपाद्वैतसाक्षात्कारे तत्प्रसङ्गाच्च। नापि शब्दाजन्यसाक्षात्कारे तच्छङ्का। मुक्तस्वरूपानंदसाक्षात्कारे तत्प्रसङ्गात्। वेदान्तजन्यधीप्रामाण्यग्राहिसाक्षिप्रत्यक्षमप्यतत्वा-

---

प्रमेयत्वं भेदो भिन्न इत्यादेर(प्य)बाध्यार्थत्वप्रसङ्ग इति भावः। नन्वेवं तर्हि निष्प्रकारिकैव सा बाधिकास्तु। बाधकत्वे विरोधिविषयत्वस्यैव तन्त्रत्वादित्यत आह॥ नापीति॥ (असौ) सा। विश्वबाधिका धीः। नन्वन्यत्र बाधकज्ञानस्य भ्रमाद्यबाधकत्वेऽपि विश्वबाधकबुद्धेर्विश्वान्तर्गतभ्रमादिबाधकत्वं स्यादेवेत्यत आह किञ्चदोषजन्यमेवेति। नच बाध्यत्वे दोषजन्यत्वमप्रयोजकं किन्त्वसद्विषयकत्वमेव तत्र प्रयोजकमिति वाच्यम्। भ्रमदोषजन्यत्वनिश्चयं विना असद्विषयत्वनिश्चयस्यैवायोगात्। नच बाधेनैवासद्विषयत्वनिश्चयः। पूर्वज्ञानस्य भ्रमदोषजन्यत्वनिश्चयं विना बाधकत्वाभिमते बाधकत्वस्यैव निश्चेतुमशक्यत्वादिति। ननु दोषजन्यत्वं न बाध्यत्वे तन्त्रम्। विरोधिश्रुतिजन्याद्वैतज्ञानस्य त्वया बाध्यत्वाभ्युपगमादित्यत आह अद्वैतज्ञाने त्विति॥ किञ्च बाधकेति। बाधकत्वाभिमतेत्यर्थः॥ बाधधीबोध्यमिति॥ बाधकज्ञानविषितमित्यर्थः॥ तयेति॥ बाधकधियेत्यर्थः॥ भेदाभिन्नतयेति॥ बाध्यत्वाभिमतेनाभिन्नतयेत्यर्थः। भेदपदं तु प्रकृताभिप्रायम्। किञ्च किंकोटिकेयं शङ्का, अबाधितबाधकोटिका वा बाधितबाधकोटिका वेति विकल्प्याद्यं निराह रूप्यादिबाधेऽपीति॥ द्वितीयं दूषयति बाधितबाधेति॥ स्वव्याघाताच्चेति॥ तथाच भाविबाधो न शङ्क्यत इति भावः। प्रतिषेधोऽपीत्यपिशब्द एवार्थः॥ नच धीमात्र इति॥ अतो न स्वव्याघात इति भावः। ननु शब्दाजन्यसाक्षात्कारमात्रे न शङ्का किन्तु यच्च तत्र तत् शब्दाजन्य [illegible]॥ नापि शब्दान्यजन्येति॥ विशेषहेत्वभावादिति।

वेदकमेव तत्वावेदकत्वेन गृह्णातीतिशङ्कया तत्वज्ञानाय वेदान्तश्रवणादिस्वक्रियाविरोधाच । शङ्काग्राहिसाक्षिप्रत्यक्षमपि अशङ्कामेव शङ्कात्वेन गृह्णातीतिशङ्कया स्वव्याघाताच । नापि शब्दान्यजन्यसाक्षात्कारे तच्छङ्का । दशमस्त्वमसीतिशब्दाभासजन्यसाक्षात्कारेऽपि बाधदर्शनेन विशेषहेत्वभावात् । विश्रान्यप्रत्यक्ष एव तच्छङ्केतिसुवचत्वाच । अद्वैतश्रुत्यनुमानादिग्राहिप्रत्यक्षमपि तात्त्विकीं व्यावहारिकीं वा अनेकमेव सद्वितीयमितिश्रुतिमेव व्यावहारिकेण प्रातिभासिकेन वा एकमेवाद्वितीयं ब्रह्मेतिश्रुतित्वेन गृह्णातीत्यादिशङ्कया मिथ्यात्वादिश्रुत्यादेरेवासिद्ध्यापत्तेश्च । शून्याद्वैतं तत्वमिति सद्वैतं तत्वमिति च श्रुतेरभावग्राहिप्रत्यक्षमपि तात्त्विक्यां व्यावहारिक्यां वा तस्यां श्रुतौ सत्यमेव व्यावहारिकं प्रातिभासिकं वा तदभावं गृह्णातीतिशङ्कया शून्याद्वैतादिसिद्ध्या(पाताच)पत्तेश्च । नचात्माद्वैतश्रुतिविरोधादुक्तशङ्कानुदयः तस्या एव संदिह्यमानत्वात् । नच तत्वतो द्वैतश्रुत्या व्यवहारदशायामद्वैतश्रुतित्वेन गृहीतया मिथ्यात्वसिद्धिः । वह्नित्वेन ज्ञाताद्गुंजापुंजाद्दाहापत्तेः । भेदश्रुतित्वेन पूर्वपक्षिणा ज्ञातेनाद्वैतवाक्येन द्वैतसिद्ध्यापत्तेश्च । नचाद्वैतश्रुतितत्प्रामाण्यादेरप्यन्यत्राद्दृष्टस्तात्त्विकसत्वविरोधी तत्वावेदकेनैव बाधः शङ्क्यः नतु स्वप्नादौ दृष्टः व्यावहारिकसत्वविरोधी अतत्वावेदकेन बाध इति राजाज्ञास्ति । अप्रातिभासिकत्वधीस्तु तात्त्विकत्वधीरिव युक्ता ।

---

वृत्तिरूपाद्वैतसाक्षात्कारेऽपि तत्प्रसङ्ग इति भावः । नन्वद्वैतसाक्षात्कारान्यजन्यसाक्षात्कारे तच्छङ्केत्यत आह विश्रान्त्येति । एवमुच्यमाने न केवलमिष्टहानिः किन्त्वनिष्टापत्तिरपीत्याह शून्याद्वैतमिति । तस्या एवेति । अद्वैतश्रुतेरेवेत्यर्थः । ननु ज्ञायमानकरणे यथाज्ञानमेव फलम् । वह्निस्तु न ज्ञायमानकरणमित्यत आह भेदश्रुतित्वेनेति । नन्वतत्वावेदकेन प्रत्यक्षादिना कथमद्वैतश्रुतितत्प्रामाण्यादिबाधशङ्का । तस्य स्वाप्नादौ व्यावहारिकसत्वविरोधित्वेन दृष्टत्वेऽपि तात्त्विकसत्वविरोधित्वेनादृष्टत्वात् । कल्पनाया अपि दृष्टानुसारित्वादित्याशङ्क्य निराकरोति नचेति । नच राजाज्ञास्तीति संबन्धः । तथाच दृष्टानुसारितया बाधः प्रत्यक्षादिनैव शक्यः । नच प्रत्यक्षादिना शङ्क्यमानबाधस्य तात्त्विकसत्वाविरोधित्वात् अद्वैतश्रुतितत्प्रामाण्यादेस्तात्त्विकत्वे जगन्मिथ्यात्वमप्रत्यूहमिति वाच्यम् । प्रत्यक्षबाधितस्याद्वैतश्रुतितत्प्रामाण्यादेस्तात्त्विकत्वायोगादिति भावः । नन्वद्वैतश्रुत्यादेरतत्वावेदकेन प्रत्यक्षादिना बाधे शुक्तिरूप्यादिवत् प्रातिभासिकत्वापत्त्या तत्र तद्वैलक्षण्यधीर्नियुक्तेत्यत आह अप्रातिभासिकत्वधीरिति । नचैवमिति ।

नन्वेवं ब्रह्मतत्त्वज्ञानात्तन्निवृत्तिश्रुतिविरोधः । अत्राप्यनिवृत्तिश्रुतिरेव निवृत्तिश्रुतितया गृहीतेति शङ्कोदयात् । किञ्चापरीक्षिते रूप्यादिप्रत्यक्षे दोषबाधयोर्दर्शनेन परीक्षिते जगत्प्रत्यक्षेऽपि तदाशङ्कायां लिङ्गशब्दाभासयोस्तद्दर्शनेनाद्वैतलिङ्गशब्दयोरपि तच्छङ्का । बाधिते अग्निलिङ्गाद्याभासेऽपि भ्रमबाधितप्रमादृष्टान्तेनाबाधशङ्कापि स्यादिति प्रमाणतदाभासव्यवस्था न स्यात् । तदुक्तं "निर्दोषानुमायास्सदोषत्वं सदोषानुमाया निर्दोषत्वमित्यव्यवस्थे"ति । श्रुतिर्नित्यत्वान्निर्दोषेति चेन्न त्वन्मते श्रुतिनित्यताया आकल्पं स्थितिमात्ररूपत्वेन आकाशादिवत्प्रतिकल्पं तस्या उत्पत्तेः । तस्याः प्रमाकरणत्वेऽपि मम द्वैत इव ब्रह्ममीमांसायां प्रत्यधिकरणं पूर्वपक्ष्यभिमतार्थ इव च त्वदद्वैते तात्पर्यधीः भ्रम इति शङ्कया तज्जन्याद्वैतधियः प्रमात्वासिद्धेश्च । उपक्रमोपसंहारतदैकरूप्यग्राहिप्रत्यक्षेऽप्युक्तन्यायेन शङ्कोदयेन तदैकरूप्यासिद्धेश्च । किञ्च प्रत्यक्षे ज्ञातदोषाणामभावोऽत्र विनिश्चितः । अन्यस्य कल्पना नित्ये वेदेऽपि न निवार्यते । स्वाप्नप्रत्यक्षेऽपि तदा दूराद्यभावनिश्चयोऽस्तीति चेन्न । स्वाप्ने शून्यमेव तत्त्वमिति वेदेऽपि तदा भ्रान्त्याद्यभावनिश्चयस्य सत्त्वात् । स्वप्नवैषम्यानुभवस्तूभयत्र समः । किञ्च न तावत्साक्षिणि बाधशङ्का तस्य नित्यानुभवरूपतया वेद इव तात्पर्यभ्रान्तेरप्ययोगेन वेदादप्यनाशङ्कितदोषत्वात् । प्रमाणाजन्यत्वमात्रेण तदप्रामाण्ये गुणाजन्यत्वमात्रेण वेदस्याप्यप्रामाण्यापातात् । नापि बाह्यप्रत्यक्षे । तत्रापि निःशङ्कं साक्षिग्राह्यसुखादिपर्यन्तपरीक्षया तन्निरासात् । उक्तं हि "न परीक्षानवस्था स्यात्साक्षिसिद्धेत्वसंशयादि"ति । "नहि बाधः क्वचिद्दृष्टो दुःखाद्यनुभवस्य त्वि"ति च ।

---

द्वैतस्य पारमार्थिकत्व इत्यर्थः । किञ्चेति । तथाच विशेषादर्शनसहितस्यैव साधारणधर्मस्य संशायकत्वं, न तु साधारणधर्ममात्रस्येति भावः । ननु मन्मते वेदस्योत्पत्तिमत्त्वेऽपि शुकवाक्यादिवाक्यवदर्थज्ञानादिपूर्वकत्वाभावेन निर्दोषत्वं किं न स्यादित्यत आह तस्या इति । उपक्रमादिसमञ्जसेऽपि च तात्पर्यज्ञानभ्रमः स्यादित्यत आह उपक्रमेति । स्वाप्नप्रत्यक्षेऽपीति । तथाच ज्ञातदोषाभावनिश्चयमात्रं नाबाध्यत्वप्रयोजकमिति भावः । गुणाजन्यत्वेति । तथाच सहकारमात्रप्रवृत्तस्याप्य स्वाधर्म्यं समन्वयादिति भावः । नापि बाह्यप्रत्यक्षेति । तत्रापि बाधशङ्कायनुपपत्तेः । तन्निरासादिति । बाधशङ्कानिरासादित्यर्थः । ननु परीक्षया तन्निरासे तत्रापि बाधशङ्कानिरासार्थं परीक्षान्तरापेक्षायामनवस्थेत्यत आह उक्तं हीति । साक्षिसिद्धेत्विति । साक्षिणः स्वप्रकाशत्वेन

ननु स्वाप्नजलप्रत्यक्षेपि स्वाप्नावगाहनपानतज्जन्यसुखपर्यन्ता परीक्षास्तीति चेन्न। स्वप्नस्य शून्यमेव तत्वमिति वेदस्याप्यपौरुषेय(त्वादिज्ञा)त्वज्ञानषड्विधतात्पर्यलिङ्गज्ञानानुग्राहक तर्कानुसंधानब्रह्माद्वैतश्रुतिप्रतियोगिकप्राबल्यनिर्णयस्वाप्नशून्यसाक्षात्कारतज्जन्यशून्यभावा - पत्तिरूपमोक्षपर्यन्ता परीक्षास्तीति फलपर्यन्ताद्वैतश्रुतावप्यनाश्वासापातात्। स्वाप्नवैषम्यानुभवेनाश्वासस्तूभयत्र सम इत्युक्तम्। अन्यथा परस्यापि प्रातिभासिकवैलक्षण्यं न सिध्येत्। एवञ्च। स्वाप्नाद्विशेषस्यासिद्धौ प्रपञ्चस्याद्वयश्रुतिः। स्वात्फलेन सह स्वाप्नी सिद्धौ शङ्काक्षजे कुतः ॥ १ ॥ नहि प्रत्यक्षशब्दत्वकृतं वैषम्यमीक्ष(क्ष्य)ते। बाधाबाधकृतस्त्वेव विशेषः संप्रदृश्यते ॥२॥ तस्मात्त्वयाप्यौत्सर्गिकस्य प्रामाण्यस्य बलवद्बाधकदर्शनैकापोद्यत्वेन सप्रमरसशङ्कातुल्येन शङ्कामात्रेणानपवादात् स्वव्याघातादिना शङ्कानुदयाच्च श्रुतेः प्रामाण्यनिश्चय इति वाच्यम्।

उक्तं हि खण्डने "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि। अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चला" मिति। (ए)तत्प्रत्यक्षेऽपि तुल्यम्। उक्तं हि सुरेश्वरेणापि "अतोऽव बोधकत्वेन दुष्टकारणवर्जनात्। अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुते"रिति। तस्मात् "अहेतुकार्यशङ्केव स्वक्रियादिविरोधतः। भाविबाधकशङ्का न युक्ताध्यक्षे श्रुताविव"। उक्तं ह्युदयनेन "तदेव ह्याशङ्क्येत यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवती"ति। उक्तञ्च वार्तिके बौद्धं प्रति "इह जन्मनि केषांचिन्नतावदुपलभ्यते। योग्यवस्थागतानां तु न विद्मः किं भविष्यती"ति। नहि संभवति शब्दानुमानाभासयोः रूप्यादिधीप्रामाण्यग्राहिप्रत्यक्षस्य च बाधं पदार्थत्वस्य च मिथ्यात्वव्यभिचारं स्वैरिण्याश्चानियमं पश्यन्नपि परीक्षितत्वाद्वेदांततदनुकूलानुमानयोः वेदांतधीप्रामाण्यग्राहिप्रत्यक्षस्य चाबाधं दृश्यत्वस्य च मिथ्यात्वाव्यभि-

---

स्वप्रामाण्यस्य स्वेनैव निश्चयादिति भावः। ननु स्वाप्नेति। तथाच न सुखपर्यन्तपरीक्षयापि तन्निरास इति भावः। अन्यथेति। स्वाप्नवैषम्यानङ्गीकार इत्यर्थः। सिद्धाविति। स्वाप्नाद्विशेष सिद्धावित्यर्थः। प्रत्यक्षशब्दत्वकृतमिति। प्रत्यक्षत्वशाब्दत्वकृतमित्यर्थः। त्वयेति। अद्वैतश्रुतेः प्रामाण्यस्थापनार्थं प्रवृत्तेनेत्यर्थः। प्रमामिति। शब्दः करोतीत्यनुषङ्गः। अहेतुकार्येति। अहेतुककार्येत्यर्थः। उपलभ्यत इति। बाध इति शेषः। योग्यवस्थेति। योगिन्यावस्थेत्यर्थः। उक्तमर्थमनिष्टोपदर्शनेन द्रढयति नहि संभवतीति। तदनुमानत्वादिति। परीक्षावसानत्वा-

चारं स्वमातुश्च नियमं निश्चिनोति, जगत्प्रत्यक्षस्य तु परीक्षितस्याप्यपरीक्षितरूप्यादिप्रत्यक्षदृष्टान्तमात्रेणाबाधं न निश्चिनोतीति। परीक्षितप्रत्यक्षेऽप्यनाश्वासे हि नैकापि व्यवस्था सिध्येत् तदवमानत्वात्सर्वस्य। नहि श्रुतेनुमिते वा दृष्टइवाश्वासः। किञ्चैवं न हिंस्यादित्यस्याग्नीषोमीये-व्यभिचारदर्शनेनान्यत्रापि तदाशङ्क्येतेत्युत्सर्गापवादन्यायो भज्येत। उक्तं हि "उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम्। व्यभिचार्यपवादेन मानमेव भविष्यती"ति। एवञ्च "बाधाभावोऽत्र निर्णीतः शशशृंगाद्यभाववत्। अन्यथा शशशृंगादिरपि शङ्क्येत बाधवत्"। तस्मात्प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वादिह चोत्पत्तिस्वतस्त्वापवादस्य दोषस्य ज्ञप्तिस्वतस्त्वापवादस्य बाधकस्य चादर्शनात् निर्मूलशंकायाश्च स्वक्रियाविरोधादिनानुत्थानात्सुस्थं प्रत्यक्षप्रामाण्यम्। किञ्च नेदं रूप्यमिति प्रत्यक्षप्रामाण्यमावश्यकं, अन्यथा इदं रूप्यमित्यस्याप्रामाण्यं न स्यादिति वृद्धिमिच्छतो मूलहान्यापत्तेः। तथाच तत्तुल्ययोगक्षेमं सन्घट इत्यादिप्रत्यक्षं कथं न प्रमाणम्। किञ्च सौषुप्तिकानंदानुभवस्याप्रामाण्ये कथमात्मन आनन्दरूपता तात्विकी। आनन्दश्रुतेरनुभूतातात्विकानन्दानुवादित्वोपपत्तेः। किञ्च "स्मृतिः प्रत्यक्ष-" मित्यादिश्रुत्या "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमा" इति मनुस्मृत्या च सिद्धं तत्प्रामाण्यम्। नच सकृत्प्रयुक्तस्य प्रमाणशब्दस्य श्रुतौ तत्वावेदकत्वमर्थः प्रत्यक्षेऽतत्वावेदकत्वमिति युक्तम्॥

॥ इति प्रत्यक्षस्य भाविबाधकशङ्काभङ्गः ॥ १७ ॥

---

रित्यर्थः। सर्वस्य व्यवस्थामात्रस्य। दृष्ट इति। परीक्षितप्रत्यक्षविषय इत्यर्थः। किञ्चैवमिति। क्वचिद्बाधदर्शनमात्रेण सर्वत्र तच्छङ्कायामित्यर्थः। व्यभिचार्यपवादेनेति। अपवादेन व्यभिचारीत्यन्वयः। नन्वप्रमाणमते श्रुत्यैवात्मनः आनन्दत्वसिद्धिरित्यत आह आनन्दश्रुतेरिति।

॥ इति प्रत्यक्षस्य भाविबाधकशङ्काभङ्गः ॥ १७ ॥

## ॥ अथ प्रत्यक्षस्य पारमार्थिकसत्त्वग्राहित्वविवरणम् ॥

नापि प्रत्यक्षं कालत्रयाबाध्यत्वग्रहाक्षममिति द्वितीयः, तद्धि न कालत्रयेऽपि सत्त्वम् मन्मतेऽप्यनित्यप्रपञ्चे तदभावात्। किन्तु कालत्रयवृत्तियदसत्त्वं तदभावः। स च कदाचित्सत्त्वे गृहीतेऽपि गृहीत एवेति प्रतिपन्नोपाधौ सत्त्वग्राहिणा प्रत्यक्षेण तदुपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावसिद्धिः। "स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम्। प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यताम्"। वेदेऽपि हि विषयस्याबाध्यत्वे ज्ञानप्रामाण्यमेव तन्त्रं न तु शब्दत्वं वा वर्तमानकालाद्यनवच्छेदेन स्वविषयसत्त्वग्राहित्वं वा सर्वकालादिसंबन्धित्वेन स्वविषयसत्त्वग्राहित्वं वा तन्त्रम्। उक्तप्रकारत्रययुक्तानामप्रवाक्यविषयस्यात्यन्ताबाध्यत्वापातात्। तच्च तत्त्वावेदनरूपं प्रामाण्यं श्रौतज्ञानस्येवाक्षजज्ञानस्यापि ज्ञानग्राहिणा साक्षिणा गृह्यते, प्रामाण्यस्य स्वतस्त्वात्। नच रूप्यादिज्ञानेष्विव बाधो वा दोषो वा निश्चितः, येन तदपोह्येत। तदुक्तम् "यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते। प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेदि"ति। इयांस्तु भेदः "तत्सत्य" मित्यादिश्रुत्या ब्रह्मणो वर्तमा(नकालाद्य)नादिकालाद्यनवच्छेदेन सत्ता गृहीतेति तत्र सा तदनवच्छिन्ना, प्रत्यक्षेण तु घटादे-

---

तद्धीति। कालत्रयाबाध्यत्वरूपसत्त्वमित्यर्थः। मन्मतेऽपीति। तथाविधसत्त्वस्य प्रत्यक्षायोग्यत्वेऽपि नास्माकं किञ्चिदनिष्टमिति भावः। यद्येति। कालमात्रसंबन्धित्वाभावरूपसामान्या-(भाव)भावस्य यत्किञ्चिद्विशेषरूपत्वादिति भावः। उक्तमर्थं संगृह्णाति स्वकाले हीति। ननु प्रत्यक्षस्य कालत्रयवृत्त्यसत्त्वाभावरूपसत्त्वग्राहकत्वेऽपि शुक्तिरूप्यस्येव घटादिप्रपञ्चस्यापि सत्यं न सेत्स्यतीत्याशङ्क्य शुक्तिरूप्यप्रत्यक्षस्येव प्रामाण्यापवादकदोषाद्यभावेन ज्ञानप्रामाण्यात्तद्विषयार्थस्य वास्तवसत्त्वसिद्धिः। अन्यथा वेदेऽप्यर्थसिद्धिर्न स्यादित्यभिप्रेत्याह वेदेऽपीत्यादिना तदपोह्येतेत्यन्तेन। उक्तप्रकारत्रयेति।* यद्यपि[1] प्रकारचतुष्टयमुक्तम्। तथाप्याद्यस्य दूषणं स्फुटमित्युपेक्ष्य तथोक्तमिति ध्येयम्। निश्चित इति। यद्यपि बाधादि[2]संशयः संभवति। तथापि न स प्रामाण्यापवादकः, अतिप्रसंजकत्वादित्युक्तमिति भावः। मर्यादा सत्त्वम्। कालत इति। व्यवहारदशाया-

* प्रकारचतुष्टयं स्पष्टं मूले नोपलभ्यते। किन्तु आमोदे श्रीनिवासमतार्थोऽपि च तत्र प्रदर्शितः। श्रीनिवासमतार्थानुसारेण शब्दत्वयत्किञ्चित्कालविशेषमात्रासंबन्धित्वमात्रविषय[illegible] [illegible] क्रमेण प्रकारचतुष्टयाभिमतानि इति भाति। मूले मतपदमेव तथा प्रस्तावात्।

1. आमोदरीत्या तथाऽपि प्रकारस्य समन्वयः।　　2. अबाधादिसंशयः इति पाठः।

स्तदवच्छिन्ना सा गृहीतेति तत्र सा तदवच्छिन्नेति । यद्देशकालप्रकारा(द्य)वच्छेदेन तु यस्य येन सत्ता गृहीता तदवच्छेदेन तस्याबाध्यत्वं प्रामाण्यप्रयुक्तं उभयसाधारणमिति प्रमाणेन प्रत्यक्षेण नित्यत्वाद्यसिद्धावपि स्वोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वरूपमात्यन्तिकाबाध्यत्वं सिध्यत्येव । कालान्तरादिस्थमपि हि बाधकं किं यत्कालाद्यवच्छेदेनानेन स्वार्थो गृहीतस्तदवच्छेदेनैव तन्निषेधति ? अन्यावच्छेदेन वा ? आद्ये कथमस्य प्रामाण्यम् ? अन्त्ये त्वनित्यत्वादिकमेव स्यान्नतु मिथ्यात्वम् । किञ्चानागतकालग्राही साक्षी स्वविषयस्य गगनादेः साक्षात्स्वाविषयस्य घटादेरपि निर्दोषतद्धीप्रामाण्यग्रहणद्वारा भाविबाधाभावं गृह्णात्येव । नहि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नाम । त्यक्तव्यं च परेणैव प्रत्यक्षस्य वर्तमानमात्रग्राहित्वम्, अन्यथा रूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं प्रत्यक्षं न स्यात् । किञ्च "प्रातिभासिकवैधर्म्यं तव येन प्रसिध्यति । घटादेः परमार्थत्वं मम तेनैव सेत्स्यति" । अस्ति हि त्वन्मतेऽपि घटादेर्व्यावहारिकसत्त्वाय तज्ज्ञाने रूप्यादिधीतो विशेषः । तथा च तेनैव विशेषेण तात्त्विकत्वसिद्धिः । किञ्च "यदध्यक्षसिद्धं विश्वस्य सत्यत्वं

---

मित्यर्थः । तन्मर्त्यमित्यादीति । यद्यपि ऐतदात्म्यमिदं सर्वं तत्सत्यमिति श्रुतेः एतदात्मजन्यं एतन्नियम्यं एतत्स्वामिकं चेदं यस्मात् तत् तस्मादिति हेतूपन्यासपूर्वकं सत्यमिति सर्वस्य जगतः सत्यत्वविधायित्वं प्रतीयत इति प्रत्यक्षवत् जगत्सत्यत्वेऽपीयं श्रुतिः प्रमाणीकर्तुं शक्यते । तथापि परैरीत्यैवमुक्तमिति ध्येयम् । तदवच्छिन्नेति । वर्तमानकालाद्यवच्छिन्नेत्यर्थः । ननु प्रत्यक्षेण घटादिप्रपञ्चस्य कालान्तरे सत्त्वाग्रहेण [illegible]स्य कथमात्यन्तिकाबाध्यत्वरूपसत्यत्वसिद्धिरित्यत आह यद्देशकालेति । तथाच प्रत्यक्षादिप्रमाणेन कालान्तरे सत्त्वाग्रहेण नित्यत्वासिद्धावपि उक्तरीत्या सत्त्वसिद्धिरविकलेति भावः । उभयसाधारणमिति । घटादिसाधारणमित्यर्थः । प्रत्यक्षेणेत्यस्यानन्तरं घटादेरिति शेषः । ननु प्रत्यक्षेणात्यन्तिकाबाध्यत्वं न सिध्यति । कालान्तरे देशान्तरे च बाधावतारसंभवादित्याशङ्क्य बाधकं विकल्प्य निराकरोति कालान्तरादिस्थमपीति । अनेनेति । प्रत्यक्षेणेत्यर्थः । कथमस्येति । तदभाववति तद्ग्राहकत्वादिति भावः । अभ्युपेत्य विकल्प्य दूषितम् । वस्तुतस्तु साक्षिविरोधाद्बाधावतार एवासंभवीत्याह किञ्चेति । साक्षिविषयेतरत् प्रकारान्तरेणानेन संबध्यते । नहीति । प्रामाण्यस्य विषयाबाधघटितमूर्तित्वादिति भावः । बाधेनान्यत्वमस्तीति शेषः । प्रत्यक्षं न स्यादिति ॥ नेदं रजतमिति बाधानन्तरं मिथ्यैव

---

1. बाधित्वादिति पाठः ।

नैव तात्त्विकम्। तत्प्रत्यक्षसिद्धं रूप्यादिमिथ्यात्वं तात्त्विकं कथम्"। नहि घटस्सन् रूप्यं मिथ्येति प्रत्यक्षयोर्मात्रयापि विशेषोऽनुभूयते। रूप्यमिथ्यात्वस्य कालान्तरबाध्यत्वे च रूप्यं तात्त्विकं स्यात्। किञ्च "पारमार्थिकसत्यत्वं न चेत्प्रत्यक्षगोचरः। तन्निषेधश्रुतीनां स्यादप्रसक्तनिषेधता"। किञ्च "अतत्त्वं तात्त्विकत्वेन प्रपञ्चं नावभासयेत्। अक्षं यदि तदा तस्याऽतत्त्वावेदकता कथम्"। नहि व्यावहारिकं तथैव गृह्णद् अतत्त्वावेदकं भवति, किन्तु पारमार्थिकत्वेन। अनुभूयते च जगति लौकिकानां पारमार्थिकत्वधीः। तस्मात्प्रत्यक्षस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावग्राहित्वात्तद्बाधिता दृश्यत्वादयः।

॥ इति प्रत्यक्षस्य पारमार्थिकसत्त्वग्राहित्वम् ॥ १८ ॥

---

रजतमभादिति मिथ्यात्वप्रत्यक्षस्यानुभवसिद्धत्वादिति भावः। ननु मिथ्यात्वं न प्रत्यक्षं किन्तु ख्यातिबाधान्यथानुपपत्तिगम्यमिति वदन्तं प्रत्याह किञ्चेति। नन्वस्तु विश्वसत्यत्वं किन्तु तत्कल्पितमेव, नतु तात्विकमित्यत आह किञ्चेति। उपसंहरति तस्मादिति। तद्बाधिता इति। प्रत्यक्षबाधिता इत्यर्थः।

॥ इति प्रत्यक्षस्य पारमार्थिकसत्त्वग्राहित्वविवरणम् ॥ १८ ॥

## ॥ अथ विश्वमिथ्यात्वस्यानुमानबाधः ॥

अनुमानबाधिताश्च दृश्यत्वादयः । तथाहि ब्रह्मप्रमान्येन वा वेदान्ततात्पर्यप्रमाजन्यज्ञानान्येन वा मोक्षहेतुज्ञानान्येन वा अबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यद्विमतं वा, सद्वा पारमा(र्थस)र्थिकसद्वा, प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात्, अनिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वात्, अनिषेध्यत्वेनेश्वरं प्रति साक्षादपरोक्षत्वात्, सप्रकारकाबाध्यार्थक्रियाकारित्वात्, आरोपितमिथ्यात्वकत्वात्, कल्पकरहितत्वाच्च, आत्मवत् । प्रातिभासिकस्य(रूप्यादेः) बाधकं हि ज्ञानं ब्रह्मप्रमान्यत् वेदान्ततात्पर्यप्रमाजन्यज्ञानान्यत्, मोक्षहेतुज्ञानान्यच्चेति तस्यापक्षत्वाय पक्षे सतीत्यन्तं वैकल्पिकमाद्यं विशेषणत्रयम् । तत्रापि ब्रह्मवृत्तिव्याप्यमितिमतेनाऽऽद्यं विशेषणं, ब्रह्म वृत्तिव्याप्यमपि नेतिमतेन तु द्वितीयतृतीये । तत्रापि शाब्दप्रमां प्रति तात्पर्यप्रमाहेतुरिति मतेन द्वितीयम् । अन्योन्याश्रयाच्च हेतुरिति मतेन तृतीयम् ।

यद्वा एतद्विशेषणस्थाने स्वबाधकाभिमताऽबाध्यदोषजन्यज्ञानाऽविषयत्वे सतीति वा स्वबाधकाभिमताबाध्यबाधाविषयत्वे सतीति वा समानाधिकरणकर्मप्रागभावसमानकालीन-

---

ब्रह्मप्रमेति । ब्रह्माकारवृत्त्यप्रकारिकेत्यर्थः । वेदान्ततात्पर्यप्रमाजन्यज्ञानान्यब्रह्मज्ञानबाध्यत्वाद्युपगमात् प्रपञ्चस्य तदाश्रयविशेषणासिद्धिः स्यात् अत उक्तं वेदान्ततात्पर्यप्रमेति । असतिव्यभिचारवारणायाह अनिषेध्यत्वेनेति । अनिषेध्यत्वप्रकारकप्रमां प्रतीत्यर्थः । व्यवसायद्वारा साक्षिविषये प्रातिभासिके व्यभिचारवारणायाह साक्षादिति । ईश्वरस्याभ्रान्तत्वेऽपि भ्रान्तिज्ञत्वात् प्रातिभासिके व्यभिचारवारणायाह साक्षादिति । धर्माधर्मादौ अस्मदाद्यपरोक्षमादाय भागासिद्धिं शुक्तिरूप्यादौ व्यभिचारं च वारयितुमाह ईश्वरं प्रतीति । सप्रकारकेति । सप्रकारकेणाबाध्या या अर्थक्रिया तत्कारित्वादित्यर्थः । एतद्विशेषणप्रयोजनं चानुपदमेव वक्ष्यति । शिष्यानुजिघृक्षया स्वयमेव पक्षविशेषणस्य प्रयोजनमाह प्रातिभासिकस्येत्यादिना । वैकल्पिकमिति । तथाच नान्यतमवैयर्थ्यमिति भावः । तत्रापीति । विशेषणत्रयेऽपीत्यर्थः । अन्योन्याश्रयादिति । शब्दात्संसर्गोपस्थितौ तत्र तात्पर्यप्रमा, तस्यां च सत्यां शब्दात्तदुपस्थितिरिति ।

एतद्विशेषणस्थान इति । ब्रह्मप्रमान्येत्याद्युक्तविशेषणत्रयस्थान इत्यर्थः । समानाधिकरणेति । बाध्यसमानाधिकरणेत्यर्थः । ननु परेणापि प्रपञ्चे व्यावहारिकसत्त्वाङ्गीकारात् सिद्धसाधनमित्यत

ज्ञानाबाध्यत्वे सतीति वा विशेषणं देयम् । प्रातिभासिकविषयकज्ञानहेतुर्दोषः तद्बाधश्च न प्रातिभासिकबाधकबाध्यौ । तथा चरमसाक्षात्कारानन्तरं समानाधिकरणकर्मान्तरानुदय(वत्)(शु)इव शुक्तिसाक्षात्कारानन्तरं तदनुदयाभावात् प्रातिभासिकं समानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाध्यमिति तद्व्यवच्छेदः । व्यावहारिकसत्त्वं सत्त्वेन व्यवहारमात्रमिति मतानुसारेणाद्यं साध्यम् । अर्थगतं मायिकं सत्त्वमिति मतानुसारेण द्वितीयम् । नच वादिनः पारमार्थिकत्वविशेषणं व्यर्थं व्यावर्त्याप्रसिद्धेरिति युक्तम् । सत्त्वेन धीमात्ररूपस्यापारमार्थिकसत्त्वस्य मन्मतेऽपि सत्त्वात् । अनिर्वाच्यलक्षणे सदसत्त्वानधिकरणत्वे सतीति विशेषणव्यावर्त्यस्य सदसत्त्वस्येव परप्रसिद्धत्वमात्रेण व्यावर्त्यत्वोपपत्तेश्च । परार्थानुमाने परं प्रति सिद्धसाधनोद्धारस्यापि सत्प्रयोजनत्वाच्च । जन्यकृत्यजन्यानीत्यत्र मीमांसकं प्रति जन्यत्वस्येवेहापि मां प्रति परमार्थत्वस्य प्रमेयत्वादिवदुपरंजकत्वेन विशेषणत्वोपपत्तेश्च । अन्यथा प्रपञ्चः परमार्थसद्विविक्त इति त्वदीयप्रयोगेऽपि परमार्थत्वविशेषणं मां प्रति व्यर्थं स्यात् । नचाऽऽद्यहेतौ वादिनं प्रति प्रातिभासिकत्वाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धिः । मतद्वयेऽप्यप्रामाणिकस्यापि निषेधप्रतियोगित्वात् । आरोपितत्वेनोभयसंमतस्वरूपस्य वा प्रतिभासमात्रशरीरत्वरूपस्य वा तस्य प्रसिद्धेश्च । अन्यथा त्वन्मतेऽपि मिथ्यात्वानुमाने प्रातिभासिकान्यस्यैव पक्षीकर्तव्यत्वाद्दोषसाम्यम् । नचाद्यहेतौ प्रातिभासिकत्वविशेषणस्याऽसिद्धिवारकत्वं दोषः । "शरीराजन्यत्वात् । अनभ्यासदशायां सांशयिकत्वात् । विमतं

---

आह ॥ व्यावहारिकेति ॥ जन्यकृत्यजन्येति ॥ नच पक्षे उपरञ्जकविशेषणदानं संभवति, न तु साध्ये । व्यापकतावच्छेदकगौरवप्रसंगादिति वाच्यम् अन्योन्याभावघटित(गर्भ)स्यापि उपरञ्जकस्य अधिकरणतावच्छेदककोटौ प्रवेशेन तद्गौरवस्याकिञ्चित्करत्वात् । अत एव साध्ये न व्यर्थविशेषणता, बीजाभावादिति वदन्तीति भावः । अन्यथेति । अन्यतरसिद्ध्यव्यावृत्तिकत्वे व्यर्थत्वमित्यर्थः । उभयसाधारणस्य अप्रसिद्धत्व इति चार्थः । मतद्वयेऽपीति । निषेधज्ञाने प्रमाणतः प्रसिद्ध्यपेक्षया लाघवेन प्रतियोगिप्रसिद्धिमात्रस्यैवापेक्षितत्वादिति (त्वमिति भावः इति पाठः) भावः ॥ प्रतिभासमात्रशरीरत्वरूपस्येति ॥ आगन्तुकदोषप्रयुक्तभानकत्वस्येत्यर्थः ॥ अन्यथा त्वन्मतेऽपीति ॥ (तत्सम्मतसिद्धेति पाठः) त्वन्मतसिद्धप्रातिभासिकत्वप्रातिभासिकसाधारणधर्मीवा इत्यर्थः ॥ नचाद्यहेतावपीति ॥ प्रातिभासिकत्वेत्युपलक्षणम् । असत्त्वेऽपि द्रष्टव्यम् । असिद्धिवारकत्वमिति ।

सौरभविशेषवद्धूमरहितं चन्दनप्रभववह्निरहितत्वात् । विमतं निर्धूमं आर्द्रेन्धनप्रभववह्निरहितत्वा"दित्यादावसिद्धिवारकविशेषणस्यापि स्वीकारात् । किञ्चानधिकरणत्वस्य दृष्टान्तेऽप्यभावेन प्रातिभासिकत्वस्य चक्षुस्तैजसत्वानुमाने रूपादीनां मध्य इत्यस्येव व्याप्तिग्रहौपयिकत्वाद् व्यभिचारवारकेऽपि तदौपयिकत्वस्यैव तन्त्रत्वाच्च दोषः । यत्किञ्चिदनधिकरणत्वस्य प्रातीतिकेऽपि सत्त्वाद्व्यभिचारवारकमेवेदं विशेषणमिति केचित् । नच व्यावहारिकसत्त्वेनाप्याद्यहेतोरुपपत्त्याऽप्रयोजकता । ब्रह्मण्यसत्प्रातिभासिकव्यावृत्तिरूपहेतुं प्रतिव्यावर्तकतया प्रयोजकत्वेन क्लृप्तपरमार्थसत्त्वत्यागस्य विश्वमिथ्यात्वसिद्धिं विनाऽयोगेनान्योन्याश्रयात् अन्यथातिप्रसङ्गात् । नच ब्रह्मणि ज्ञानत्वानन्दत्वादिरूपब्रह्मत्वमेव तत्प्रयोजकम् । अपृथिवीव्यावृत्तिं प्रति पृथिवीत्वस्येवासद्व्यावृत्तिं प्रति तद्विरुद्धसत्त्वस्यैव प्रयोजकत्वेन क्लृप्तत्वात् । अन्यथासत्यज्ञानादिवाक्ये ज्ञानपदेनैवानृतव्यावृत्तिसिद्धौ सत्यपदवैयर्थ्यं स्यात् । प्रपञ्चेऽसत्प्रातीतिकव्यावृत्तौ सत्यामपि ब्रह्मत्वाभावाच्च । नच द्वितीये तत्त्वावेदकप्रमोक्तावसिद्धिः, अतत्त्वावेदकप्रमोक्तौ त्वप्रयोजकतेति वाच्यम् । प्रामाण्यातत्त्वावेदकत्वयोर्व्याहतत्वात् । प्रत्यक्षस्य तत्त्वावेदकतोक्तेश्च । अनुमानादेश्च परेणापि मिथ्यात्वादौ

---

तथाच यथायोग्यं हेतुद्वये तत्तद्विशिष्टाभावसंपादकत्वेन विपक्षबाधकस्फोरकत्वेन वाऽवैयर्थ्यमिति भावः । चक्षुस्तैजसत्वानुमान इति । चक्षुस्तैजसं रूपादीनां मध्ये रूपस्यैवाभिव्यञ्जकत्वादालोकवदित्यनुमान इत्यर्थः । केचिदित्यस्वरसोद्भावनम् । तद्बीजं तु अविशेषितानधिकरणत्वस्य सामान्याभावोपव्यापकत्वेन व्यभिचाराप्रसक्तेरिति । ब्रह्मणीति । "क्लृप्तकल्प्याविरोधे हि लघुः-क्लृप्तपरिग्रह" इति न्यायेन व्यावहारिकसत्त्वान्तराकल्पनादिति भावः ॥ अन्यथेति ॥ कल्पनागौरवस्यादोषत्वे धूमेन वह्न्यन्तरस्यापि लिङ्गिप्रसङ्गादित्यर्थः ॥ पृथिवीत्वस्येति ॥ धर्मान्तरस्यापि व्यावृत्तिप्रतियोगिनिष्ठान्योन्याभावप्रतियोगितावच्छेदकोपजीवनेनैव व्यावर्तकत्वादिति भावः । सत्यपदवैयर्थ्यमिति ।

इदमुपलक्षणम् । शुक्तित्वादिवत् असत्येव ज्ञानानन्दत्वादि स्यादिति शङ्कायां सत्त्वं विनानृतव्यावृत्त्यसिद्धिरिति बोध्यम् । न्यूनवृत्तित्वादपि न तस्य प्रयोजकतेत्याह प्रपञ्च इति । नच तथात्वमेव व्यावृत्तिप्रयोजकम् । अनुगते संभवत्यननुगतस्याकल्पनादिति भावः ॥ द्वितीय इति ॥ हेत्वाविति शेषः । ननु व्यावहारिकसत्तामादाय प्रामाण्यातत्त्वावेदकत्वयोरुपपत्तौ न व्याहतिरित्यत आह ॥ प्रत्यक्षस्येति ॥ अनुमानादेश्चेति ॥ तथाच धर्मिसत्यत्वपक्षत्वेऽपि

प्रमाणीकरणात् । विपक्षे व्याघातात् । विषयबाधे प्रामाण्यायोगात् । नापि तृतीयेऽसिद्धिः, त्वयापीशस्य जगत्कर्तृत्वशास्त्रयोनित्वादिना कुलालपाणिन्यादिवदनिषेध्यत्वेन तद्द्रष्टृत्वोक्तेः । अन्यथेशस्य तत्पालनादौ प्रवृत्तिर्न स्यात् । विपक्षे चेशस्य भ्रान्तिः स्यात्, सा च श्रुत्यादिविरुद्धा । चतुर्थेऽर्थक्रियायाः सत्यायाः पक्षे सपक्षे च परं प्रत्यसिद्ध्या व्याप्तिपक्षधर्मतयोरयोगात्, असत्यायाश्चैन्द्रजालिकादौ व्यभिचारात्तत्प्रकारकाबाध्यत्वेन सा विशेषिता । व्यभिचारस्त्वस्य निरसिष्यते । सत्यस्य साक्षिणोऽज्ञानादिसाधकत्वाच्च दृष्टान्तः साधनहीनः । असद्वा व्यतिरेकदृष्टान्तः । असाधारण्यस्यागृह्यमाणविशेषत्वावस्थायामेव दोषत्वात् । विपक्षे व्याघातः । ब्रह्मणि हेतुत्वं प्रति अकारणासदादिव्यावृत्तस्य परमार्थसत्त्वस्यैव प्रयोजकत्वेन क्लृप्तत्वात् । नच पञ्चमेऽसिद्धिः । परमतेऽपि जगन्मिथ्यात्वस्यारोपितत्वात् । अत्र च हेत्वन्तर्गतं मिथ्यात्वं सत्त्वाभावोऽभिप्रेत इति नासत्यनैकान्त्यम् । नच षष्ठेऽसिद्धिः । चिन्मात्रस्याद्रष्टृत्वेनान्यस्य च कल्पितत्वेनाकल्पकत्वात् । अत्र चाकल्पितत्वस्य साध्यत्वान्नासति व्यभिचारः । विपक्षे व्याघातः । कल्पकं विना कल्पनाऽयोगात् । किञ्च विमतं न सद्विलक्षणं, असद्विलक्षणत्वात्, आत्मवत् । नच शुक्तिरूप्ये व्यभिचारः । तस्यासद्विलक्षण-

---

अनुमितिशाब्दप्रमाविषयत्वेन तदंशेऽसिद्धिः । नच मिथ्यात्वानुमानस्य तत्त्वावेदकत्वेऽपि अनुमानमात्रस्य तत्त्वावेदकत्वे किमायातमिति वाच्यम् । व्याप्तिपक्षधर्मत्वयोरविशेषादिति भावः । अन्यथेति । अनिषेध्यत्वेन तद्द्रष्टृत्वाभाव इत्यर्थः । प्रवृत्तिर्न स्यादिति । प्रवृत्तेः स्वसमानविषयकप्रत्यक्षसामानाधिकरण्यनियमादिति भावः । सत्यस्येति । यद्यपि विशिष्टस्योपहितस्य वा चैतन्यस्य परमते साक्षित्वात् न तस्य सत्यत्वम् । नाप्यविद्यासाधकत्वम् । अविद्यायाः तत्सिद्धस्वरूपसाक्षिणश्चानादित्वात्तयाप्यार्थक्रियाकारित्वम्, तथापि साधकत्वांशे सत्यत्वाद्-अविद्याव्यवहारजनकत्वाच्च न तस्य दृष्टान्तत्वानुपपत्तिरिति भावः ।

ननु शुद्धचैतन्यात् सत्यादसतश्च व्यावृत्तत्वेनासाधारण्य इत्यत आह ॥ असाधारण्यस्येति ॥ व्याहतिमेवाह (व्याघातमेवाहेति पाठः) ब्रह्मणीति । हेतुशरीरप्रविष्टस्यानन्यथासिद्धनियतपूर्वसत्त्वरूपकारणत्वस्य परमार्थसत्त्वघटितत्वेन ब्रह्मणि क्लृप्तत्वादित्यर्थः । ननु प्रतिपन्नोपाधिघटितं मिथ्यात्वम् असत्यम् आरोपितमेव । तस्य प्रतिपन्नोपाध्यभावादित्यत आह ॥ अत्र चेति । यद्यपि तन्मते सत्त्वाभावो जगत्यपि नारोपितः । तथापि (साध्यादौ) प्रासङ्गिकतयायं हेतुरिति द्रष्टव्यम् ॥ अकल्पकत्वादिति ॥ अन्यथा शुक्तिरूप्यादिवत् जगतः प्रातिभासिकत्वं स्यादिति

त्वेन तद्विरुद्धसद्विलक्षणत्वायोगात् । विमतं न चैतन्याज्ञानकार्यं न चैतन्याज्ञानकार्यधी-विषयो वा न चैतन्याज्ञानकार्यसत्त्ववद्वा चैतन्यज्ञानाबाध्यं वा चैतन्यज्ञानाबाध्यसत्त्ववद्वा तस्मिन्नपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानत्वात् यदेवं तदेवं यथा पटेऽपरोक्षेऽप्युक्त-मानवान् घटो न पटाज्ञानकार्यादिः । चैतन्यं चाधिष्ठानतया सुखादिसाक्षित्वेन चेदानी-मप्यपरोक्षमिति नासिद्धिः । शङ्खत्वादावपरोक्षेऽपि भासमानं पीतत्वादिकं न तदज्ञान-कार्यम् । किन्तु श्वेतत्वाज्ञानकार्यादिकमिति न व्यभिचारः । अत्राप्यापरोक्ष्यस्याज्ञान-विरोधित्वात् सति तस्मिन्नज्ञानाङ्गीकारे व्याघातः । एवमुत्तरत्रापि विपक्षे बाधकमुन्नेयम् ।

विमतं नात्मन्यध्यस्तम् । तत्त्वसाक्षात्कारवत्प्रवृत्तिविषयत्वात् यदेवं तदेवं यथा पटसाक्षात्कारवत्प्रवृत्तिविषयो घटो न तत्राध्यस्तः । नचासिद्धिः । ईशजीवन्मुक्तयोरात्म-साक्षात्कारवतोरपि जगद्रक्षणभिक्षाटनशिष्यबोधनादौ प्रवृत्तेः । शङ्खेऽध्यस्तमपि पीतत्वं न शङ्खत्वसाक्षात्कारवत्प्रवृत्तिविषय इति न व्यभिचारः । विमतं नेश्वरमायाकल्पितं तं

---

भावः । नन्वनादिर्जीवोऽकल्पित एव जीवत्वस्य कल्पितत्वेऽपि तदाश्रयचैतन्यस्याकल्पितत्वेन स एव सार्वः सर्वस्य कल्पक इति चेन्न । चैतन्यमात्रस्य जीवत्वाभावात् । अन्यथा जीवो ब्रह्म विशुद्धा-चिदिति पार्थक्येन त्वदुक्त्ययोगादिति । तस्येति । तथा च तत्र हेतुरेव नास्तीति भावः । तस्मिन्निति । अत्र विपक्षे बाधकसूचनायापिशब्दः । बाधकज्ञानविषये अपरोक्षभ्रमविषये च शुक्तिरूप्यादौ व्यभिचारवारणाय विशेषणद्वयम् । बाधानन्तरं शुक्तिरेव रजतत्वेनाभादिति परामर्शविषये तत्रैव व्यभिचारवारणाय साक्षादिति । पक्षेऽसिद्धिवारणाय भासमानत्वादिति । अपिशब्दसूचितं विपक्षे व्याघातमाह (बाधकमाहेति पाठः) अत्रापीति ।। तत्त्वसाक्षात्कारवदिति ।। अध्यासविरोधित्वाभिमतसाक्षात्कारवत्प्रवृत्तिविषयत्वादित्यर्थः । तेन शङ्खत्वस्वरूपशङ्खत्व-साक्षात्कारवतो विशेषादर्शनदशायां प्रवृत्तिविषये पीतत्वे न व्यभिचारः । सामान्येनेति । मिथ्यात्वाधिकरणतावच्छेदकपुरस्कारेणेत्यर्थः । अनात्मसत्यत्व इत्यस्यानन्तरं अनुमानानीति शेषः । अनुमानानि प्रदर्श्यानीत्यभिमतेन संबन्धः । मकरन्दरीत्या सिद्धसाधनतां वारयितुमाह परमार्थसद्भावान्य इति । अबाध्यत्वानात्मसत्तां साधयति आत्मा यावदिति ।

ननु पदार्थत्वं प्रमाणप्रतीतिविषयत्वं, तच्च निःस्वरूपे अलीके व्यभिचरति । (व्यभिचारीति पाठः) तत्र स्वरूपघटितसाध्याभावादित्यत आह भावत्वाद्वेति । भावत्वमसाधारण-धर्मवत्त्वोपाधिरिति वा सत्त्वानुपपत्तिरिति इत्यन्यम् । स्वप्रतियोगिविषयेति । स्वप्रतियोगी निवृत्तिप्रति-

प्रत्यपरोक्षत्वात्, यदेवं तदेवं यथा चैत्रं प्रत्यपरोक्षो घटो न चैत्रमायाकल्पितः। विमतं न जीवकल्पितं तस्मिन्सुषुप्तेऽप्यवस्थिततत्वात् आत्मवत्। नचाऽसिद्धिः, प्रत्यभिज्ञानात्, तस्या-त्यन्ताप्रामाण्ये च क्षणिकवादापातात्। बाधकाभावाच्च। अदृष्टादेरप्यभावेन पुनरुद्बोधा-योगाच्च। सामान्येनानात्मसत्यत्वे मिथ्यात्वं नात्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् शुक्ति-रूप्यत्ववत्। आत्मा परमार्थसदन्यः, परमार्थसद्भावान्यो वा पदार्थत्वात् अनात्मवत्। आत्मा यावत्स्वरूपमनुवर्तमानानात्मवान् यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान्वा, स्वज्ञाना बाध्यानात्मवान्वा, स्वज्ञानाबाध्यभावरूपानात्मवान्वा, पदार्थत्वाद्भावत्वाद्वा घटवत्। विमता बन्धनिवृत्तिः स्वप्रतियोगिविषयविषयकज्ञानाबाध्यानात्मसमानकालीना उक्तज्ञानाबाध्य-भावरूपानात्मसमानकालीना वा बन्धनिवृत्तित्वात् निगडबन्धनिवृत्तिवदित्यादीनि द्रष्ट-व्यानि। विशिष्यानात्मसत्यत्वे तु आत्मधीः न स्वविषयविषयकधीबाध्या धीत्वात् शुक्ति-धीवत्। आत्माधिष्ठानकभ्रमहेतुः न स्वकार्यभ्रमाधिष्ठानबाध्यः, भ्रमक(हेतु)त्वात् यदेवं तदेवं यथा शुक्त्यधिष्ठानकभ्रमहेतुः काचादिः। शुक्त्यज्ञानमपि पक्षतुल्यम्। ब्रह्मान्यदनादि

---

योगी यो बन्धः तस्य यो विषयोऽध्यस्तस्तद्विषयकं यज्ज्ञानं तदबाध्यो योऽनात्मा तत्समानकाली-नेत्यर्थः। अत्रानात्मसमानकालीनेत्येवोक्ते इदानींतनमुक्तांशतः सिद्धसाधनं स्यात्, अत उक्तं स्वप्रतियोगिविषयविषयकज्ञानाबाध्येति। निर्विषयनिवृत्तौ व्यभिचारवारणायाह बन्धेति॥ विशिष्येति॥ मिथ्यात्वाधिकरणतावच्छेदक(व्याप्य)धर्मपुरस्कारेणेत्यर्थः। शुक्त्यज्ञानमिति। तथाच पक्षे तत्र व्यभिचारसंदेहो न दोषायेति भावः। ब्रह्मान्यदनादीति॥ अत्रानुमाने अनादि-शब्देन यावत्प्रागभावावच्छिन्नसमयसम्बन्धि विवक्षितम्। तेनात्मांशे न बाधव्यभिचाराविति द्रष्टव्यम्। दोषेति। यद्यप्यनाद्यध्यस्तत्वं अनादिभ्रमप्रवाहविषयत्वम्, अत एवानादित्वमपि। लाघवेन भ्रमविषयीभूतैकाज्ञानसिद्धेः। तत्र न दोषजन्यज्ञानात् पूर्वमिति नास्त्येव। न ह्यविद्याजन्यज्ञानप्रवाहस्य पूर्वमस्ति यत्किञ्चित्। अनाद्यध्यस्तं स्यादित्यपि न सम्यक्। सोपाधेरध्यस्तत्वात्। निरुपाधेश्चाधिष्ठानाभावेन अध्यासायोगात्। तथापि यो यज्ज्ञानात् पूर्वः स तद्भ्रमत्वानापादक इति व्याप्तेः दोषजन्यज्ञानात् पूर्वमसतोऽज्ञानस्य तज्ज्ञानाध्यासत्वानापाद-

परमार्थसत् अनादित्वात् ब्रह्मवत् । दोषजन्यज्ञानात्पूर्वं सतोऽप्यनादेरनाद्यध्यस्तत्वे ब्रह्मा-प्यनाद्यनन्ताध्यस्तं स्यात् । ब्रह्म कालाद्यसंबद्धं नावतिष्ठते, पदार्थत्वात् घटवत् । ब्रह्मान्यद्वेदैक-गम्यं धर्मादि, परमार्थसत्, श्रुतितात्पर्यविषयत्वाद्ब्रह्मवत् । साक्षिवेद्यं सुखादि परमार्थसत्, अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् आत्मवत् । विमतं परमार्थसत्, स्वविषयकसाक्षात्कारात्पूर्वभावित्वात् आत्मवत् । नचाऽसिद्धिः, त्वन्मतेऽपि प्रतिकर्म-व्यवस्थार्थं स्वविषयसाक्षात्कारात्पूर्वं घटादेर्भावात् । अन्योन्याभा(वातिरि)वव्यतिरिक्तै-तद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वं एतद्घटसमानकालीनावृत्ति, अन्योन्याभाव-व्यतिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावमात्रवृत्तित्वात्, एतद्घटप्रतियोगिकप्राग-भावत्ववदित्याद्यूह्यम् । व्यधिकरणधर्मावच्छिन्नाभावपक्षे व्यधिकरणधर्मानवच्छिन्नेति विशेष-णीयम् । अनेन च स्वसमानाधिकरणः स्वसमानकालीनः अन्योन्याभावव्यतिरिक्तो

---

त्वमित्यत्र तात्पर्यम् । तथासत्यप्यध्यस्तत्वे ब्रह्माप्यध्यस्तं स्यात् । न चाधिष्ठानाभावः । अज्ञानस्यैवाधिष्ठानत्वसम्भवात् । निरुपाधौ मानाभावेन शून्यतायामेव पर्यवसानात् । निरधिष्ठानभ्रमस्य वक्ष्यमाणत्वाच्चेति दिक् । असत्प्रातिभासिकयोरंशे बाधव्यभिचारवारणाय पक्षं हेतुं च विशिनष्टि अनिषेध्यत्वेनेत्यादिना । ब्रह्मान्यदिति । पक्षांशतःसिद्धसाधन-वारणाय । असत्यंशतो बाधवारणायाह एकेति । तदैक आहुरसदेवेदमग्र आसीदित्यादिना असतो वेदगम्यत्वात् । किं तदित्यपेक्षायामुक्तं धर्मादीति । एतद्घटान्योन्याभावमादाय बाध-वारणायाह अन्योन्याभावव्यतिरिक्तेति । उभयसिद्धैतद्घटप्रतियोगिकात्यन्ताभावमादाय बाध-वारणायाह ॥ एतद्घटसमानाधिकरणेति ॥ अन्यप्रतियोगिकात्यन्ताभावमादाय बाधवारणायाह ॥ एतद्घटप्रतियोगिकेति ॥ एतद्घटान्योन्याभावत्वे व्यभिचारवारणायान्योन्येति । एतद्घटात्यन्ता-भावत्वे व्यभिचारवारणाय एतद्घटसमानाधिकरणेति । संसर्गाभावत्वे व्यभिचारवारणाय मात्रेति । अन्यप्रतियोगिकात्यन्ताभावत्वे व्यभिचारवारणाय एतद्घटप्रतियोगिकेति । इत्याद्यूह्य-मित्यादिपदात् संसर्गाभावत्वं प्रतियोगिकालान्यकालीनमात्रवृत्ति संसर्गाभावमात्रवृत्तित्वात् प्रागभावत्ववदित्यादेः परिग्रहः । व्यधिकरणेति । इदमुपलक्षणम् । व्यधिकरणसंबन्धेनाभावा-भ्युपगमपक्षे तदनवच्छिन्नेत्यपि द्रष्टव्यम् । विशेषणीयमिति । पक्षीकृतमुक्ताभावत्वं हेतूकृत-मुक्ताभावमात्रवृत्तित्वं चेति शेषः । तन्मात्र ध्वंसावधिकमात्रवृत्तित्वमुपाधिः । संसर्गाभावत्वं-

योऽभावः तदप्रतियोगित्वरूपसत्त्वसिद्धिः । अत्र चाऽनुकूलतर्का वक्ष्यन्ते इति नोपाध्याभाससाम्यादिशङ्का । तथाच "असत्प्रातीतिकान्यत्वात्प्रमाणविषयत्वतः । अर्थक्रियाकारितादेर्विश्वं सत्यमिति स्थितम्" ॥

॥ इति विश्वमिथ्यात्वस्यानुमानबाधः ॥ १९ ॥

---

घटसमानाधिकरणघटसमानकालीनघटप्रतियोगिकाभाववृत्ति साक्षादभावविभाजकोपाधित्वात् अन्योन्याभावत्ववदित्याभाससाम्यं चेत्यत आह अत्र चेति । आदिशब्देन प्रतिकूलतर्कपराहत्यादिपरिग्रहः । उक्तमर्थं संगृह्णाति तथाचेति ।

॥ इति विश्वमिथ्यात्वस्यानुमानबाधः १९ ॥

---

## ॥ अथ विश्वमिथ्यात्वस्यागमादिबाधः ॥

किञ्च "विश्वं सत्यं यच्चिकेत सत्यमित्तन्न मोघं याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्य" इत्यादिश्रुतिभिः, "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वर"मित्यादिस्मृतिभिः, "नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवदि"त्यादिसूत्रैश्च बाधिता दृश्यत्वादयः। नचायं प्रत्यक्षप्राप्तानुवादः, त्वन्मते सन्घट इत्यस्य सदर्थस्य व्यावृत्तघटाद्यन्यानुवृत्तब्रह्मत्वेन घटादि-सत्त्वस्याऽप्राप्तेः। यच्चिकेतेत्यादिवाक्यद्वये ईश्वरस्य मानान्तराप्राप्तसत्यजगत्स्रष्टृत्वस्यैवोक्तेश्च।

---

विश्वंसत्यमिति। विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम् इतिश्रुते-रयमर्थः। हे मघवानौ युवयोः संबन्धि इदं विश्वं संकोचकाभावात् प्रत्यक्षादिसिद्धं सर्वं सत्यं अबाध्यम्। अत एव तादृशविश्वान्तर्गतत्वादेव वां व्रतं कर्मविशेषं (भवदर्थे इति पाठः) आपश्चन अबभिमानिन्यो देवता अपि प्रमिनन्ति प्रमित्या विषयीकुर्वत इति। ननु "हे मघवाना-विन्द्रौ विश्वं सर्वं वां व्रतं भवदर्थे व्रतं सत्यं सफलं, आपश्चन प्रमिनन्ति अबभिमानिन्यो देवता अपि सफलत्वेन जानन्ति इति वा आचरन्ति इति वा "यद्वो वयं प्रमिनाम व्रतानीतिवत्" इत्यर्थः। युवयोरितिपदवैयर्थ्यात्। सत्यशब्दरूढ्यर्थत्यागापत्तेश्च॥ यच्चिकेत सत्यमित्तन्न मोघमिति श्रुतेरयमर्थः। पूर्ववाक्यगतसुपर्णशब्देन प्रकृतः परमात्मा यच्चकार तत्सत्यमेव। अत एव न मोघम्, स्वोचितार्थक्रियाकारीति। ननु यच्चिकेत सत्यमिदिति वाक्याच्च सत्यत्वसिद्धिः। यच्छब्दनिर्दिष्टस्य सत्यस्योद्देश्यत्वेन प्रौढत्वबत्तत्रिष्ठसत्यत्वरूपधर्मस्याविवक्षितत्वात्। तन्न मोघमिति तद्वृत्तयोगेनामोघत्वलक्षणार्थक्रियाकारित्वस्यैव विधेयत्वात्। सत्यत्वस्यापि विधाने वाक्यभेदप्रसङ्गादिति। मैवं। सत्यत्वस्य विधेयत्वेनोद्देश्यविशेषणत्वासिद्धेः, उद्देश्यविशेषणत्वेऽ-प्यसतः साधकत्वायोगेन विधेयामोघत्वनिर्वाहाय सत्यत्वस्य विवक्षणीयत्वाच्च। अत एव यस्यो-भयस्योभयवी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिरित्याहवनीयाग्निगत-द्वित्वस्योद्देश्यविशेषणत्वेऽपि (प्रायश्चित्तमित्याद्यावग्निगतस्येति पाठः) विवक्षा॥ याथातथ्यत इति। अस्याः श्रुतेरयमर्थः। कविर्मनीषीति पूर्ववाक्यप्रतिपन्नः परमात्मा बहुवर्षानन्तरं अर्थान् पुनः-पुनरवाधितांश्चकारेति। एतेन कविर्मनीषीतिश्रुत्या न विश्वसत्यत्वसिद्धिः। तत्साधकशब्दाभावात्। याथातथ्यशब्दस्य सत्येत्वेऽप्रसिद्धेः। नचात्र धाता यथापूर्वमकल्पयदिति श्रुत्यन्तरानुसारेण परमात्मा बहुवत्सरेभ्योऽनन्तरं यथापूर्वमर्थान् असृजदिति तदर्थ इति निरस्तम्। सत्यं तथ्यमृतं सम्यगिति कोशप्रसिद्धसत्यशब्दपर्यायतथ्यशब्दस्य वीप्सार्थकयथाशब्देन समासे स्वार्थिकतद्धिते

पृथिवी इतरभिन्ना, न हिंस्यात्सर्वाभूतानीत्यादाविव एकदेशे विधेयसिद्धावपि विश्वमात्रे तदसिद्ध्यानुवादकत्वाच्च । अनुवादकत्वं हि वाक्यस्य न ज्ञातज्ञापकत्वमात्रं, अतिप्रसङ्गात्, किंतु ज्ञातमात्रज्ञापकत्वम्। एकशाखास्थविधिवाक्यैकार्थशाखान्तरस्थविधिवाक्यस्य पुरुषान्तरं प्रतीव येन पुंसा वादिविप्रतिपत्त्यादिना प्रत्यक्षेण विश्वसत्यता न निर्णीता तं प्रत्यर्थवत्त्वाच्च । अनुवादकत्वं तु सर्वाविवादस्थले सावकाशम्। अत एव त्वयापि बृहदारण्यकभाष्ये

---

च सत्यादिवृद्धौ याथातथ्यशब्दस्य निष्पत्त्या तस्याबाध्यपरत्वात् । असत्यमप्रतिष्ठन्त इति स्मृतौ असत्यत्वादिवादनिन्दनेन मिथ्यात्वाभावस्यैवावगमादिति भावः । ब्रह्मनिष्ठसत्त्वस्यैव घटादौ प्रत्यक्ष विषयत्वे लाघवाख्यं पराभिमतं तर्कं सूचयन्नाह व्यावृत्तेति । परस्परव्यावृत्ता ये घटादयः तदन्यत्तत्र अनुवृत्तं यत् ब्रह्म तत्वे(ने)त्यर्थः । ननु सन् घट इति घटे सत्यत्वप्राप्तिरस्त्येव । अन्यथा सत्त्वस्य घटत्वसामानाधिकरण्यानुभवायोगात्, किन्तु सा प्राप्तिरध्यासरूपैवेति स्यादेवानुवादकत्वं श्रुतीनामित्यत आह ॥ यच्चिकेतेति ॥ ननु ऋष्टृत्वांशे श्रुतिद्वयस्याननुवादकत्वेऽपि विश्वं सत्यमिति श्रुतावत्र च सत्यत्वांशे स्यादेवानुवादकतेत्यत आह ॥ पृथिवीति । विश्वमात्र इति । अयोग्यप्रपञ्चे प्रत्यक्षस्याप्रसरादिति भावः। यद्यप्ययोग्यप्रपञ्चसिद्धौ धर्मिग्राहकमानेन सत्त्वसिद्धिः। तदसिद्धौ च तत्र सत्यत्वविधानमेवासंभवि तथापि धर्मिग्राहकमानेन विधेयस्यादिरूपेण सत्यत्व- सिद्धावपि विश्वत्वेन तस्यासिद्धेर्नानुवादकत्वमिति। अतिप्रसङ्गादिति। प्रमेयत्वेन वस्तुमात्रज्ञानस्य सुलभत्वादिति भावः । प्रकारभेदेनेव प्रमातृभेदेनापि नानुवादकत्वमित्यत्र श्रौतदृष्टान्तमाह ॥ एकशाखास्थेति ॥ एतच्च द्वितीयाध्याये चतुर्थपादे चिन्तितम् । नामरूपधर्मविशेषपुनरुक्ति- निन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् । (जै. सू. अ. २ पा. ४ सू. ८) नानाशाखास्वाम्नातमग्निहोत्रादि भिद्यते नवेति संदेहे अविशेषपुनःश्रुतिरूपाभ्यासात्, पुनरुक्तत्वलक्षणप्रकरणान्तराच्च भिद्यत इति पूर्वपक्षे पुनःश्रुत्या प्रकरणान्तराच्च कर्मविधेयमित्येतावत् सिध्यति ननु भेदः। विधिवशात्तु भेदसिद्धिः, अन्यत्र विहितस्य विधानायोगादिति । इह तु शाखा- भेदानामध्येतृभेदनियतत्वेन विहितस्यापि पुरुषान्तरं प्रति विधिः संभवतीति न ताभ्यां भिद्यत इति सिद्धान्त इति । नन्वेवमनुवादमात्रोच्छेद इत्यत आह ॥ अनुवादकत्वं त्विति ॥ सर्वाविवा- दस्थले ॥ नान्तरिक्षे न दिवीत्यादिस्थले ॥ द्वयोः प्रणयन्तीति ॥ एतच्च सप्तमेऽध्याये तृतीय- पादे विचारितम् । "सौमिकं[1] तु प्रणयनमवाच्यं हीतरत्" चातुर्मास्येषु द्वयोः प्रणयन्तीति वैश्वदेववरुणप्रघाससाकमेधशुनासीराख्यानां चतुर्णां चातुर्मास्यपर्वणां मध्ये द्वयोः पर्वणोरुच्यमानं

---

१. प्रणयनन्तु सौमिकमवाच्यं होतावदितिसूत्रपाठः बालुर्मेन दृश्यते। जै. सू. अ. ७, पा. ३, अधि. ८, सू. १९.

देहान्यात्मबोधिकायाः "अस्तीत्येवोपलब्धव्य" इतिश्रुतेः प्रत्यक्षप्राप्तानुवादित्वमाशङ्क्य वादिविप्रतिपत्तिदर्शनादित्यादिना तत्परिहृतम् । द्वयोः प्रणयन्तीतिवाक्यस्यावैयर्थ्याय चातुर्मास्यमध्यपर्वणोश्चोदकाप्राप्तप्रणयनान्तरप्रापकत्ववत् इहापि श्रुतेरवैयर्थ्याय तत्सत्यमित्यादिश्रुतिवत् वर्तमानमात्रग्राहिप्रत्यक्षाप्राप्तकालत्रयाबाध्यत्वरूपसत्यत्वप्रापकत्वाच्च । अन्यथा आत्मन आनन्दत्वश्रुतिरपि सुखं सुप्तोऽस्मीति प्रत्यक्षप्राप्ताऽतात्त्विकानन्दत्वानुवादिनी स्यात् । अनुवादकत्वं तु अप्राप्तविषयान्तराभावे सावकाशम् । निगमनवत्, तत्त्वमसीति नवकृत्वोऽभ्यासवत्, पिपासितस्य एकजलविषयकलिङ्गशब्दप्रत्यक्षरूपप्रमाणसंप्लववत्, त्व(न्मते)त्पक्षे प्रत्यक्षसिद्धभावरूपाज्ञाने "तम आसीदि"त्यादिश्रुतिवत् श्रुतेरैक्यतात्पर्ये षड्विधलिङ्गवच्च प्रत्यक्षानाश्वासनिरासेन दार्ढ्यार्थत्वाच्च । अनुवादकत्वं तु यत्र दार्ढ्यं प्रागेव सिद्धं तत्रैव । तदुक्तं "बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेवे"ति । किञ्च यथा "षड्विंशतिरस्यवंक्रय" इतिमन्त्रस्याऽश्वमेधे चोदकप्राप्तस्य "चतुस्त्रिंशद्वाजिनो देवबन्धो"रिति वैशेषिकमन्त्रेणापोदि-

---

अग्निप्रणयनं किं दार्शपौर्णमासिकधर्मकमुत सौमिकधर्मकमनेकाङ्गकलापयुक्तमुतोभयविलक्षणमपूर्वमिति विशये चातुर्मास्यानां दर्शपूर्णमासप्रकृतिकत्वेन चोदकप्राप्तत्वेन सन्निधानात् दार्शपौर्णमासिकधर्मकमित्येकः (दार्शपूर्णमासिकमित्येकः पक्षः इति पाठः) पक्षः, चोदकप्राप्तस्याविधेयत्वात्, गुणविध्यभावेनानुवादानर्थक्यात्कार्यवत्त्वाय सौमिकमिति द्वितीयः पक्षः । प्रणयन्तीत्यस्य प्रणयनसामान्यवाचिनः सौमिकप्रणयनविशेषपरत्वे लक्षणाप्रसङ्गात् । चातुर्मास्येष्वेव किञ्चित् प्रणयनमस्पृष्टसौमिकत्वाद्याकारं विधीयते । तच्च तदुभयविलक्षणमपूर्वं पर्यवस्यतीति सिद्धान्त इति । श्रुतेरिति । विश्वं सत्यमित्यादिश्रुतेरित्यर्थः । यद्यपि सिद्धान्तिना सत्त्वद्वैविध्यानङ्गीकारात् विश्वं सत्यमित्यादिश्रुतेः प्रणयनवाक्यवैषम्यम् । तथापि परेण विश्वसत्यत्वश्रुतेरनुवादकत्वं वक्तुं न शक्यत इत्यत्र तात्पर्यम् ॥ अन्यथेति ॥ यथाकथंचित्प्रत्यक्षप्राप्तप्रापकत्व इत्यर्थः । नन्वेवं प्रत्यक्षस्य त्रिकालाबाध्यत्वरूपसत्त्वाविषयकत्वे मिथ्यात्वग्राहिप्रमाणबाधकता न स्यादित्यत आह । निगमनवदिति । ननु स्वतः सिद्धप्रामाण्यभावे प्रत्यक्षे दृढदोषाभावनिश्चयात् मनाभ्यासदार्ढ्यं च बोधेतुमर्हतीति त्वयैवोक्तत्वात् कथमेवंसति तद्विरोधो न स्यादित्यत आह ॥ किञ्च यथेति ॥ एतच्च नवमेऽध्याये चतुर्थपादे विचारितम् । तत्प्रतिविषय प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाक्यत्वात् । (जै. सू. अ. ९., पा. ४, अधि. ३, सू. १८) अग्नीषोमीयपशावश्विनुप्रैषे श्रुतस्य षड्विंशतिरस्य वंक्रय इति मन्त्रस्याश्वमेधीयाश्वपशुके प्राजापत्ययागे चोदकप्राप्तस्य

तस्य प्रतिप्रसवार्थं "षड्विंशतिरित्येव ब्रूयादि"तिवचनम् तथा प्रत्यक्षप्राप्तस्य जगत्सत्त्वस्याऽद्वैतश्रुत्याऽऽपाततोऽपोदितस्य प्रतिप्रसवार्थं सत्त्वश्रुतिः किं न स्यात्? दृश्यन्ते हि मृडमृदेत्याद्याः प्रतिप्रसवार्थं विधयः। तस्मात् 'धर्मिप्रमातृधर्मादिभेदाच्च द्वैतगीर्वृथा। अहिंसावाग्भिक्षशालावाग्द्विप्रणयनादिवत्'। किञ्च प्रत्यक्षं प्रमाणं चेत्तद्बाधो मिथ्यात्वानुमानादेः, नचेत्कथं सत्त्वश्रुतिरनुवादः। श्रुतेः सदर्थत्वायाऽननुवादकत्वाय च प्रत्यक्षाऽप्राप्ततात्त्विकसत्त्वविषयत्वोपपत्तेः। नहि प्रमाभ्रमयोरेकविषयता। किञ्च 'यथानापहरेत् द्वैताभावश्रुत्यर्थमक्षधीः। तथा नोपहरेद्द्वैतश्रुत्यर्थमपि दुर्बला।' प्रत्यक्षं प्रमाणत्वेन निश्चितं चेत्तद्बाधो मिथ्यात्वानुमानादेः, अनिश्चितं चेत्प्रत्यक्षं मिथ्यात्वश्रुतिविषयापहार इव सत्त्वश्रुतिविषयापहारेऽप्यशक्तं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादापेक्षं सच्च श्रुत्यनुवादकत्वापादकम्। अप्रयोज्य-

---

चतुर्स्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रिरश्वस्य स्वधितिः समेतीतिवैशेषिकमन्त्रेण चोदितस्य सर्वथैव निवृत्तौ प्रसक्तायां तत्रैवेदमाम्नायते। न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात् इति। तत्र च संशयः किमश्वस्य पठितमेव वैशेषिकमध्रिगुवचनं कर्तव्यमिति प्राकृताध्रिगुवचनस्य सर्वथैव निवृत्तिरुत न निवृत्तिरिति। तत्र न चतुस्त्रिंशदित्यादिवचनस्य चतुस्त्रिंशद्वाजिन इत्यस्यां ऋचि चतुस्त्रिंशत्पदं प्रतिषिध्य षड्विंशतिपदनिधानार्थत्वोपपत्तेः। समस्ताया ऋचः प्रतिषेधकत्वेन प्रकरणपठितायाः तस्याः बाधोऽभ्युपगन्तुमयुक्त इति प्राकृताध्रिगुवचनस्य निवृत्तिरेवेतिप्राप्ते पठितायां ऋचि चतुस्त्रिंशत्पदप्रतिषेधे तत्र तत्स्थाने षड्विंशतिपदप्राप्तौ प्रमाणाभावेन षड्विंशतिरित्येव ब्रूयादिति तदनुवादासम्भवात् तस्यापि विधौ वाक्यभेदापत्तेः। एकवाक्यत्वनिर्वाहाय न चतुस्त्रिंशदिति वैशेषिकीं ऋचं प्रतिषिध्य षड्विंशतिरिति निरपेक्षविधिचोदकप्राप्तं प्राकृताध्रिगुवचनमनूद्यत इत्यभ्युपेयत्वात्, न तस्य निवृत्तिरिति सिद्धान्त इति॥ आपाततोऽपोदितस्येति॥ अविचारदशायामपवादविषयत्वेन प्रसक्तस्येत्यर्थः। प्रतिप्रसवार्थमिति॥ अपवादनिरासेनौत्सर्गिकस्य पुनःप्रापणार्थमित्यर्थः। उक्तमर्थमुपसंहारव्याजेन संगृह्णाति॥ तस्मादिति॥ अत्र पञ्चम्यन्तो भेदशब्दो धर्म्यादिभिः प्रत्येकं सम्बध्यते। आदिशब्दात्तत्संबन्धपरिग्रहः॥ द्वैतगीरिति॥ जगत्सत्यश्रुतिरित्यर्थः। कथं सत्त्वश्रुतिरनुवादिकेति। न कथमपीत्यर्थः॥ श्रुतेरिति॥ निरवनिर्दुष्टत्वेन प्रामाण्यनिश्चयादिति भावः। किञ्च प्रत्यक्षं प्रमाणं चेदित्यादिनोक्तमेवार्थं प्रतिवादिमुखेन (प्रतिवन्दीमुखेन) द्रढयति॥ किञ्चेति॥ न श्रुत्यनुवादकत्वापादकमिति॥ निश्चितप्रामाण्यज्ञानसमानविषयकज्ञानजनकस्यैवानुवादकत्वरूपत्वादिति भावः।

प्रत्यक्षस्य प्रामाण्यानिश्चयेऽग्निर्हिमस्य भेषजमित्यादिरप्यनुवादो न स्यादेव। अन्यथा "सत्यं ज्ञानं, नेह नाने"त्यादिश्रुतिरप्यनुवादिनी स्यात्। ब्रह्मसत्त्वस्य लोकतो भ्रमाधिष्ठानत्वादिलिङ्गेन च विश्वमिथ्यात्वस्य च दृश्यत्वाद्यनुमानेनाऽवेदमूलप्रवाहानादिविज्ञानवादादिना च प्राप्तेः। उक्ता हि मन्त्राधिकरणे मन्त्रलिङ्गप्राप्तबोधकस्यापि तदर्थशास्त्रस्याऽनुवादकता। उक्ता च त्वयैवेक्षत्यधिकरणे सदेवेत्यादिवाक्यस्य प्रधानपरत्वे सांख्यस्मृतिप्राप्तानुवादिता। किञ्च सत्त्वश्रुतेः सत्त्वप्रत्यक्षानपेक्षत्वान्न सापेक्षानुवादत्वं निरपेक्षानुवादित्वं तु धारावाहिकज्ञानइव नाप्रामाण्यहेतुः। उक्तं हि नयविवेके "सापेक्षानुवादे हि न प्रमितिः, नतु दैवादनुवादे धारावाहिकवदि"ति। उक्तञ्च वाचस्पत्ये "यत्र तु प्रमाणान्तरसंवादः तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिद्ध्यति, द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे प्रवृत्तेः प्रमात्रपेक्षया त्वनुवादत्वं, प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्योऽर्थमवगच्छति,

---

नन्वेवं तर्हि "अग्निर्हिमस्य भेषजमित्यादिः" औष्ण्यप्रत्यक्षस्य प्रामाण्यनिश्चयदशायामनुवादो न स्यादित्याशङ्क्येष्टापत्त्या समाधत्ते॥ अग्न्यौष्ण्येति॥ अन्यथेति॥ यथाकथंचित्प्राप्तार्थत्वमात्रेणानुवादकत्व इत्यर्थः॥ लोकत इति॥ प्रत्यक्षतो वा लोकप्रसिद्धितो वेत्यर्थः॥ मन्त्राधिकरण इति॥ प्रमाणलक्षणे द्वितीयपादे "तदर्थशास्त्रात्" (जै. सू. अ. १. पा. २. अधि. ४. सू. ३१) इत्यत्र "उरुप्रथा उरुप्रथस्व उरु ते यज्ञपतिः प्रथतां" इत्यादयो मन्त्राः किमुच्चारणमात्रेण दर्शपूर्णमासादिकर्मसूपकुर्वन्ति उत पुरोडाशप्रथनादितत्तत्कर्मसमवेतार्थाभिधानद्वारेणेति संशये अनुच्चारितानामनभिधायकत्वात् प्राथम्यावश्यकत्वाभ्यामुच्चारणस्यैव तद्द्वारत्वं युक्तमिति तन्मात्रेणोपकुर्वन्तीति पूर्वपक्षयित्वा कर्मप्रकरणेषु मन्त्राणामुच्चारणस्याविधानात् कर्मविध्यनपेक्षितत्वेन तैरप्यनाक्षेपात् पूर्वव्यापारस्य मन्त्रगतव्यापारलाभत्वेन मन्त्राङ्गत्वनिर्वाहकत्वेनाप्यनाक्षेपाच्च मन्त्रोच्चारणकर्तव्यतायामेवाप्रमाणमिति न तस्य द्वारत्वं युक्तम्। किन्त्वनुष्ठानाय कर्मविधेरपेक्षितत्वेन कर्माङ्गत्वमिति निर्वाहकतया चाभिधानसिद्ध्या आक्षेपसम्भवादभिधानस्य द्वारत्वं युक्तम्। तादर्थ्येन तु पश्चादुच्चारणस्य कर्तव्यतासिद्धिः। तस्मादभिधानेन मन्त्राः उपकुर्वन्तीति सिद्धान्त इत्यधिकरण इत्यर्थः॥ ईक्षत्यधिकरण इति॥ (ब्र. सू. अ. १. पा. १. अधि. ५, सू. १) ईक्षतेर्नाशब्दमित्यत्र "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयमि"ति वाक्यगतं तच्छब्दनिर्दिष्टं किं प्रधानमुत ब्रह्मेति संशये बहुभवनप्रजननादिना प्रधानं, न ब्रह्मेति पूर्वपक्षे ईक्षतिश्रवणात् ब्रह्मण्येवेक्षणयोगात् सच्छब्दवाच्यं ब्रह्मैवेति सिद्धान्त इत्यधिकरण इत्यर्थः।

न तथाऽऽम्नायतस्तत्र व्युत्पत्त्यपेक्षत्वादि"ति। किञ्च वादिविप्रतिपत्तिनिरासार्थत्वान्न निष्प्रयोजनानुवादत्वम्। सप्रयोजनानुवादत्वं तु विद्वद्वाक्य इव स्वार्थपरत्वाविरोधि। अत एव मीमांसकैर्विद्वद्वाक्यस्य समुदायद्वित्वापादनरूपप्रयोजनवत्त्वेनानुवादस्वार्थपरत्वाद्वाक्यैकवाक्यतोक्ता। स्वार्थपरत्वाभावे ह्यर्थवादवत् पदैकवाक्यतोच्येत। किञ्चानुवादत्वेऽपि नैष्फल्यमात्रं नत्वप्रामाण्यम्, याथार्थ्यमेव प्रामाण्यं नत्वनधिगतार्थत्वमित्यन्यत्रोक्तत्वात्। किञ्चायमनुवादो न तावद्वायुक्षेपिष्ठादिवाक्यवत्स्तुत्यर्थः, नापि "दध्ना जुहोती"त्यत्र जुहोति-

---

सापेक्षानुवादत्वमिति ॥ परप्रामाण्याधीनप्रामाण्यकत्वमित्यर्थः। तेन व्युत्पत्त्यादिद्वारा प्रत्यक्षापेक्षत्वमादाय न दोषावकाश इत्यवधेयम् ॥ विद्वद्वाक्य इवेति ॥ एतच्च भेदलक्षणे द्वितीये द्वितीयपादे चिन्तितम्। "प्रकरणन्तु पौर्णमास्यां रूपावचनात्"। (जै. सू. अ. २, पा. २, अधि. ३, सू. ३) आग्नेयादिवाक्यसन्निधाविदमाम्नायते। य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति। अत्र संशयः किमिमौ यजती प्रकृतानामाग्नेयादीनां पौर्णमास्यमावास्याकालसंयुक्तानामनुवदितारौ, उत एवंसंज्ञकयोरपूर्वयोः कर्मणोर्विधाताराविति। अनुवादमात्रस्यानर्थक्यात् विधिपुनः श्रुत्याऽपूर्वकर्मविधायकाविति पूर्वःपक्षः। सिद्धान्तस्तु कर्मान्तरविधिपक्षे प्रौढाज्यस्य द्रव्यस्य लाभेऽपि देवतायाः कुतोऽप्यलाभेनारूपत्वापत्त्या कर्मान्तरविधायकत्वानुपपत्तेरनुवादचिन्ह [1]यत्पदसमभिव्याहाराच्चानुवाद एव। नचानुवादवैयर्थ्यम्। तस्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्याग्नेयादीनां फलसम्बन्धबोधके वाक्ये द्विवचनोपपत्तये दर्शत्रिकस्य पौर्णमासत्रिकस्य च समुदायद्वित्वापादनप्रयोजनकत्वात्। अन्यथा तेषां बहुत्वेन बहुवचनापत्तेरिति ॥ स्वार्थपरत्वाभावे हीति ॥ यथाश्रुतार्थपरत्वाभावे हीत्यर्थः।

यथा अर्थवादानां विध्यपेक्षितप्राशस्त्यमात्रपरत्वेन निश्चितानां मुख्यवृत्त्या प्राशस्त्यप्रतिपादकत्वासम्भवेन तेषां प्राशस्त्यपरत्वोपपत्तये वृत्तिमत्त्वेन कल्पितानामर्थवादगतपदानामेव लक्षणया जलेकपोतन्यायेन प्राशस्त्यसमर्पणद्वारा विधिवाक्येन सह एकवाक्यता मीमांसकैरुच्यते, न तु पदार्थसंसर्गसमर्पणद्वारा वाक्यैकवाक्यता, तथा विद्वद्वाक्यस्यापि अनुवादस्वार्थपरत्वाभावे वाक्यैकवाक्यता नोच्येत। किन्तूक्तरीत्या पदैकवाक्यतैवोच्येतेत्यर्थः ॥ याथार्थ्यमिति ॥ यद्यपि विप्रतिपत्तिविषयप्रत्यक्षसमानविषयकानुवादरूपत्वेनास्य वाक्यस्य याथार्थ्यमेव सन्दिग्धम्। तथापि क्लृप्तदोषाभावेन प्रवृत्त्यादिसंभवेन च प्रत्यक्षं याथार्थ्यरूपप्रामाण्यनिश्चयसंभवात्, कदाचिद्विप्रतिपत्तिविषयत्वेऽपि न किञ्चिदनिष्टमिति भावः। किञ्चायमनुवाद इति ॥ नाप्यर्थविधि-

1. यदनन्तर इति पाठान्तरम्।

रिवान्यविधानार्थः, विधानाय प्रमाणानूदितस्य तात्त्विकत्वनियमात्। नहि "व्रीहीन् प्रोक्षती"-त्यादावारोपितव्रीह्यादेर्धीः, अनुवाद्यस्यासत्त्वे ह्याश्रयासिद्धौ धर्मिधर्मसंसर्गरूपानुमितिवेद्य इवाऽनुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात्। नापि नेह नानेति निषेधार्थः। तत्रैव किञ्चनेत्यनुवादकांशस्य सत्त्वात्। नहि "न सुरां पिबेदि"ति निषेधाय सुरां पिबेदिति वाक्यान्तरमपेक्षितम्। अत्र च 'आपश्च न प्रमिनन्ती'त्यलौकिकस्य प्रमाणस्य विधेयस्य सत्त्वाच्च। यत्तत्रेत्यादिनिषेधार्थानुवादलिङ्गाभावाच्च। तदभावेऽपि निषेधायानुवादे "तत्सत्य"मित्याद्यपि "न सत्तन्नासदुच्यते, असद्वा इदमग्र आसीदि"ति निषेधाय ब्रह्म-सत्तानुवादकं स्यात्। "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते। प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यत" इति मण्डनोक्त्या सन्घट इत्यत्रापि ब्रह्मसत्ताप्रतीतेः। "परागर्थप्रमेयेषु या फलत्वेन संमता। संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणत" इति सुरेश्वरोक्त्या सद्घटज्ञान-मित्यत्रापि तत्प्रतीतेश्च। सत्सुखस्फुरणं अज्ञोऽस्मीत्यादौ तु तत्प्रतीतौ न विवादः। शुद्धचित एव सुखस्फुरणत्वात्, अज्ञानाद्यध्यासाधिष्ठानत्वाच्च। अधिकस्फुरणेऽपि चिदस्फुरणाभावात्। ब्रह्मशब्दानुल्लेखेऽपि अखण्डार्थनिष्ठवाक्यबोध्यं यद् ब्रह्म तत्सत्त्वप्रतीतेः। एवमानन्दश्रुतिरपि अदुःखमसुखं ममेत्यादिनिषेधाय प्रत्यक्षप्राप्तानन्दानुवादिनी स्यात्। किञ्चैवं नेहनानेति-

---

सन्निधानादर्शनादिति भावः। निषेधायानूदिते व्यभिचारवारणायाह ॥ विधानायेति ॥ ननु विश्वं सत्यमित्यादिवाक्ये सन्निहितविधिनिषेधयोरन्यतरस्यानुपलम्भादध्ययनविध्यापादितपुरुषार्थ-पर्यवसायित्वनिर्वाहाय. नेहनानेतिनिषेधाय तदसन्निहितस्यापि अगत्यानुवादकत्वं कल्पनीयमित्या-शङ्क्याह ॥ तत्रेति ॥ विश्वं सत्यमित्यादिवाक्य इत्यर्थः ॥ यत्तत्रेत्यादीति ॥

यद्यपि न कलञ्जं भक्षयेदित्यादावुक्तलिङ्गाभावेऽपि तादृशानुवादकत्वमस्ति। तथापि तत्रैवात्र निषेधसमभिव्याहाराभावेन न तादृशानुवादित्वसिद्धिरिति भावः। अत्रादिपदान्निषेध-व्यापकनिरासायाः परिग्रहः ॥ असद्वा इदमग्र आसीदिति ॥ यद्यपीदं वाक्यं सृष्टेः प्राक् इदं-शब्दार्थस्य प्रपञ्चस्याव्याकृतनामरूपत्वमाहेति शक्यते वक्तुम्। तथाप्यलक्षणमसिद्धमसत्यमेवेदमस्य-मिति निषेधो वा, 'तदाहुः। किं तदासीत् तस्मै स्मोवाच न सत्तन्नासत्सदसदि'त्यादिनिषेधो वा द्रष्टव्यः। ननु ब्रह्मसत्त्वस्य मानान्तरेणाप्राप्तत्वात्कथं तत्सदित्यादेरनुवादकतेत्यत आह ॥ सर्वप्रत्ययेत्यादिना ॥ तत्प्रतीतेश्चेति ॥ ब्रह्मसत्त्वप्रतीतेरित्यर्थः।

श्रुतिरेव विश्वं सत्यमित्यबाध्यत्वरूपबाधनिषेधाय विज्ञानवादादिप्राप्तविश्वबाधानुवादिनी किं न स्यात् ? किञ्च धर्माधर्मस्वर्गनरकादेर्न प्रत्यक्षादिना प्राप्तिः, शब्दप्राप्तस्य शब्देन निषेधायानुवादे एतच्छाखास्थाग्नीषोमीयवाक्यस्य न हिंस्यादिति निषेधाय शाखान्तरोक्ताग्नीषोमीयहिंसानुवादित्वं स्यात् । सत्यं ज्ञानमित्यादेरपि इदं वा अग्रे नैव किञ्चनासीदिति निषेधाय तत्सत्यमित्यादिवाक्योक्तब्रह्मसत्तानुवादित्वं स्यात् । तस्मान्नानुवादिनी श्रुतिः । नापि व्यावहारिकसत्त्वपरा, वैयर्थ्यात्, नहि कोऽपि प्रपञ्चे व्यावहारिकसत्यतां नोपैति । अप्राप्ते च शास्त्रमर्थवत् । किञ्च व्यावहारिकशब्देनाबाध्योक्ताविष्टापत्तिः । बाध्योक्तौ श्रुतिश्चिरानुवृत्तदृढभ्रान्तिहेतुत्वेनात्यन्ताप्रमाणं स्यात् । नच मिथ्यात्वश्रुतिविरोधात्तदिष्टम् । त्वत्पक्षे तस्या लक्षणया अखण्डचिन्मात्रपरत्वेन जगत्सत्त्वाविरोधित्वात् । असद्वा इत्यादिश्रुतिविरोधेन

---

ननु ब्रह्मसत्वप्रतीतौ ब्रह्मशब्दोल्लेखप्रसङ्ग इत्यत आह ॥ ब्रह्मशब्देति ॥ अन्यथा वह्निमूकस्य दाहादिप्रतीत्यभावप्रसङ्ग इति भावः ॥ आनन्दानुवादिनी स्यादिति ॥ यद्यपि ब्रह्मणः प्रणयन्तीत्यस्येवानन्दश्रुतेरपि प्रत्यक्षाद्यप्राप्तापूर्वानन्दपरत्वमिति शक्यते वक्तुम् । तथापि परेणानन्दद्वैविध्यानङ्गीकारान्न तन्न्यायावतार इति भावः ॥ विश्वं सत्यमिति ॥ यद्यपीयं श्रुतिः निषेधार्था न । तथापि न्यायमते तमःशब्दवत् सर्वमते प्रलयाविषय अर्थगत्या भवत्येव निषेधार्था इति भावः ॥ किञ्च धर्माधर्मेति ॥ यद्यपि धर्माधर्मादेः 'सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः । प्रत्यात्मनियमाद्भुक्तेरस्तिहेतुरलौकिकः' ॥ (इति न्यायकुसुमाञ्जलौ प्रथमस्तबके श्लोकः) इत्यनुमानतः प्राप्तिरस्ति । तथापि नेहनानेति यत्र तन्निषेधः न तत्र प्राप्तिः । नचानुमानविशेषेण ब्रह्मण्यपि प्रसक्तिः सम्भवतीति वाच्यम् । अनुमानमात्रस्य प्रसञ्जकत्वे अप्रसक्तस्य प्रतिषेधत्वस्योच्छेदप्रसङ्गः । नचैवं तव केवलो निर्गुणश्चेत्यादिना ब्रह्मणि हेयगुणादेर्निषेधो न स्यादिति वाच्यम् । सर्वकर्मेत्यादिश्रुतित एवापाततः हेयपापादिरूपकर्मप्राप्तिसम्भवादिति ।

नन्वत्रापि यस्मिन् द्यौः, अतो धर्माणि धारयन् इत्यादिश्रुतित एव प्राप्तिः सम्भवतीत्यत आह शब्दप्राप्तस्येति ॥ तात्पर्यतः शब्दप्राप्तस्य चेत्यर्थः । (तात्पर्यतश्शब्दप्राप्तस्येत्यर्थः इति पाठः) नानुवादिनीति ॥ न निष्प्रयोजनानुवादिनीत्यर्थः ॥ व्यावहारिकेति ॥ व्यवहारविषयेत्यर्थः ॥ श्रुतिरिति ॥ जगत्सत्यत्वश्रुतिः । चिरानुवृत्तजगत्सत्यत्वप्रतिभ्रमरूपप्रपञ्चप्रवाहसमानविषयकविजातीयशाब्दज्ञानजनकत्वेन सम्वादितया प्रत्यक्षादिप्रामाण्यभ्रमापादकत्वेनात्यन्ताप्रामाण्यमित्यर्थः ॥ तत्पक्षे तस्या इति ॥ यद्यपि लक्षणाबीजानुपपत्तिप्रयोजनप्राप्तमिक

तत्सत्यमित्यादेरपि प्रातिभासिकसत्त्वपरत्वापाताच्च । सत्त्वश्रुतिविरोधेन मिथ्यात्वश्रुतिरेवाप्रमाणमित्यपि सुवचत्वाच्च । नच षड्विधतात्पर्यलिङ्गवत्त्वादद्वैतवाक्यं प्रबलम्, लिङ्गानि हि तात्पर्यज्ञापकानि, नत्वर्थतथात्वस्य । अस्ति चात्रापि वाक्यशेषे आपश्च न प्रमिनन्तीति प्रामाणिकत्वरूपा । न मोघमित्यर्थक्रियाकारित्वरूपा चोपपत्तिस्तात्पर्यलिङ्गम् । लिङ्गबहुत्वं तु त्वत्पक्षे प्रमाणबाहुल्यवद्व्यर्थमित्युक्तम् ।

यदि च सत्त्वश्रुतिः प्रत्यक्षप्राप्तार्थत्वान्न स्वार्थपरा तर्हि मिथ्यात्वश्रुतिरपि तद्विरुद्धार्थत्वात्तथा स्यात्, मानान्तरप्राप्तिवत्तद्विरोधस्याप्यतात्पर्यहेतुत्वात् । यदि तु मिथ्यात्वश्रुतिः प्रत्यक्षागृहीतत्रिकालाबाध्यत्वनिषेधपरा तर्हि सत्त्वश्रुतिरपि तदगृहीततद्विधिपरास्तु । नच सुषुप्तौ निष्प्रपञ्चतायाः पुरुषार्थत्वदर्शनात्, फलवत्संनिधावफलं तदङ्गमितिन्यायेन निष्प्रपञ्चवाक्यानुसारेण सप्रपञ्चवाक्यं नेयमिति विवरणोक्तं युक्तम् । तस्या मूर्च्छायामपुरुषार्थत्वस्यापि दर्शनात् । मूर्च्छायां प्रपञ्चस्याज्ञानमेव नत्वभाव इति चेत् समं सुषुप्तावपि । यदि च मूर्च्छा दुःखयोगेनैवापुरुषार्थः, तर्हि सुषुप्तिरपि सुखयोगेनैव पुरुषार्थः । अस्ति च "द्वितीयाद्वै भयं भवती"तिश्रुतिरिव "तस्मादेकाकी न रमत" इत्यपि श्रुतिः । सन्ति च भेदज्ञानस्य

---

शास्त्रबोधे न सत्त्वश्रुतेर्विरोधोऽस्ति । तथापि तस्य मिथ्यात्वश्रुतिविषयत्वाभावेन तद्विरोधोऽकिञ्चित्कर इति भावः । आपाततोऽपि विरोधस्य बाधकत्वे दूषणमाह ॥ अप्रमा इत्यादीति ॥ लिङ्गबहुत्वमिति ॥ शतमप्यन्धानां न पश्यतीति न्यायादिति भावः ॥ तद्विरोधस्यापीति ॥ एतच्चोपलक्षणम् । ननु घटः सन्नित्यादिप्रत्यक्षेण सत्तादात्म्यग्राहिणा सद्भिन्नत्वरूपमिथ्यात्वस्याप्राप्तेरित्यपि द्रष्टव्यम् ॥ तदगृहीतेति ॥ अभ्युपेत्यवादेनेदमुदितम् । वस्तुतस्तु प्रत्यक्षं त्रिकालाबाध्यत्वग्राहीत्युपपादितमिति ध्येयम् ॥ अफलमिति ॥ पृथक् फलसम्बन्धित्वेनाज्ञातमित्यर्थः । समं सुषुप्तावपीति ॥ नच सुषुप्तिकाले "सकलो विलीनः" इति श्रुत्या सकलस्य विलयः प्रतीयत इति वाच्यम् । तत्र सकलशब्दस्य योग्यमनोवृत्तिपरत्वात् । अन्यथा बहुप्रमाणविप्लवापत्तेः ।

ननु तथापि द्वितीयस्य भयापादकत्वश्रवणेन तदभावस्य पुरुषार्थत्वं त्वयाप्येष्टव्यमित्याशङ्क्य तस्यापुरुषार्थत्वावेदकश्रुतेरपि सत्त्वान्न तस्य पुरुषार्थत्वमित्यभिप्रेत्याह ॥ अस्ति चेति ॥ ननु "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" "यो वेदाहं ब्रह्मास्मीति" "स इदं सर्वं भवती"त्यादिश्रुत्याऽऽद्वैतज्ञानस्य मोक्षसाधनत्वावगमादद्वैतवाक्यानुसारेणैव द्वैतवाक्यं नेयमित्यत आह ॥ संतिचेति ॥ अपवर्गः । स्वात्मानं, प्रेरितारं

मोक्षसाधनत्वे "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्याद्याः श्रुतयः। यदि चाद्वैतवाक्यस्य निषेधवाक्यत्वात्प्राबल्यं, तर्हि "किति च" इतिसूत्रस्थात "क्ङिति च" इतितन्निषेधसूत्रस्य, अग्नीषोमीयवाक्यादहिंसावाक्यस्य, षोडशिग्रहणवाक्यादग्रहणवाक्यस्य, सत्यज्ञानादिवाक्यादसद्वा इत्यादिवाक्यस्य प्राबल्यापातेनाहिंसा पारमार्थिको धर्मः, अग्नीषोमीयहिंसा तु व्यावहारिको धर्म इत्यादि स्यात्। प्रत्यक्षप्राबल्यप्रस्तावे उक्तप्रकारेणाऽद्वैतवाक्याद् द्वैतवाक्यस्यानुपसंजातविरोधित्वशीघ्रगामित्वविशेषविषयत्वनिरवकाशत्वादिना प्राबल्याच्च। नच स्मृतिसूत्रे शून्यवादिनिरासार्थे, तन्मते जगतोऽत्यन्तासत्त्वात्, मन्मते असद्विलक्षणत्वादिति वाच्यम्। अर्थक्रियाकारित्वादिना शशशृङ्गादिवैलक्षण्यस्य तन्मतेऽपि सत्त्वात् प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेन तद्वैलक्षण्यस्य त्वन्मतेऽप्यभावात्। सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्च। व्यावहारिकसत्त्वेन स्वप्नवैलक्षण्यस्य तन्मतेऽपि सत्वात्। "द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना। लोके संवृतिसत्यत्वं सत्त्वं च परमार्थतः॥ सत्त्वं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम्। सांवृतं व्यावहार्ये स्यान्निवृत्तौ पारमार्थिक"मिति बौद्धोक्तेः। तस्माच्छ्रुत्यादिबाधो दुर्वारः। किञ्च त्वयापि तत्तत्प्रमाणसिद्धा एवार्थाः पक्षीकर्तव्याः। तैश्च ते सत्त्वेनैव सिद्धा इति तत्तन्मानबाधः। अग्निरासीद्वृष्टिर्भविष्यति रूप्यं मिथ्येत्यादिधीरपि स्वविषयसत्त्वं गृह्णाति, अन्यथा तदुचितप्रवृत्त्याद्ययोगादिति॥

॥ इति विश्वमिथ्यात्वस्यागमादिबाधः ॥ २० ॥

---

परमात्मानं च भिन्नत्वेन ज्ञात्वा ततो ज्ञानात् भगवत्प्रीतिविषयः सन् तेन प्रीणनेन मोक्षं प्राप्नोतीति। यद्वा गुहाद्यधिकरणन्यायेनात्मशब्दमुख्यार्थं परमात्मानं पृथक् स्वस्माद्भिन्नं प्रेरयितृत्वादिगुणविशिष्टं च ज्ञात्वेति। नच स्वात्मानं कार्यकारणसंघातात् भिन्नं प्रेरितारं परमात्मानं च ज्ञात्वेत्यर्थः किं न स्यादिति वाच्यम्। तथापि भेदज्ञानस्य मोक्षहेतुत्वानपायेन तद्विषयभेदस्यात्मवत् सत्यत्वानपायात्। मुख्यार्थे बाधकं विना त्यागायोगाच्चेति॥ अत्रादिपदात् "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" "अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः" इत्यादिश्रुतिपरिग्रहः। क्ङितिचेति॥ (पा. सू. १-१-५) अत्र निषेधकत्वं "न धातुलोप आर्धधातुके" (पा. सू. १-१-४) इति सूत्रस्थनञनुवर्तनेन ज्ञातव्यम्।

ननु श्रुत्योः साम्येऽपि विपरीतार्थत्वेन न श्रुतिबाधितत्वं (बाधकत्वमिति पाठः) इत्याशङ्क्य भेदश्रुतेः प्राबल्यमाह॥ प्रत्यक्षेति॥ सूत्रे इति॥ वैधर्म्याच्च न स्वप्नादिवदिति सूत्र इत्यर्थः। श्रुत्यादिबाध इति। मिथ्यात्वहेतूनामिति शेषः॥ ॥ इति विश्वमिथ्यात्वस्यागमादिबाधः॥ २०॥

## ॥ अथ असतः साधकत्वे बाधकविवरणम् ॥

किञ्चैतैरेव प्रयोगैः स्वप्रतिज्ञाहेतूदाहरणादिप्रापितानां साध्यसाधनव्याप्त्यादीनां मिथ्यात्वं न बोध्यते चेत् सर्वमिथ्यात्वासिद्धिः, बोध्यते चेत् परस्परव्याहतिः बाधस्वरूपासिद्धिव्याप्यत्वासिद्ध्यादिकं च स्यात् । परमार्थसत्त्वस्यैव साधकत्वे तन्त्रत्वात् । तथाहि न तावद्धीमात्रं तत्र तन्त्रम् । तुच्छस्यापि तत्प्रसङ्गात् । नाप्यपरोक्षधीः अपरोक्षसत्त्वधीर्वा तन्त्रम् । नित्यातीन्द्रिये तदभावात् । हृदं प्रपञ्चे चापरोक्षभ्रान्तिसिद्धेन धूमेनात्यन्ताबाधेन च वह्नेः पारमार्थिकसत्त्वस्य चासिद्धेश्च । वह्नित्वेनाज्ञातस्यापि वह्नेर्दाहकत्वाच्च । अमृतत्वेन ज्ञातस्यापि विषस्यासञ्जीवकत्वाच्च । अत एव न त्रिचतुरकक्ष्यास्वबाधिता सत्त्वधीस्तन्त्रम् । गौरोऽहं नीलं नभ इत्यादिभ्रान्तिसिद्धेन नीलत्वादिना आत्माकाशादेरपि अनित्यत्वस्पर्शवत्त्वाद्यापाताच्च । गौरोऽहमित्यादावपि तत्कक्ष्यासु प्रत्यक्षाबाधात् । यौक्तिकादिबाधस्य च त्वन्मते प्रकृतेऽपि भावात् । एतेन लोकप्रसिद्धिस्तन्त्रमितीष्टसिद्ध्युक्तं निरस्तम् । एतेनैव त्रिचतुरकक्ष्यास्वबाधिता वादिप्रतिवादिप्राश्निकानां सत्त्वधीस्तन्त्रमिति निरस्तम् ।

---

बोध्यते चेदिति ॥ यद्यपि न बोधन(बोध) मात्रेण व्याहतिः । सतोऽप्यसत्त्वेन बोधनसम्भवात् । तथापि प्रमारूपबोधमादाय व्याहतिर्द्रष्टव्या । असतः साधकत्वायोगात् , असन्दनिश्चायकत्वेन तादृशबोधनस्यैव मिथ्यात्वानुमानफलत्वेन त्वया स्वीकर्तव्यत्वादिति भावः ।

ननु पक्षादेः मिथ्यात्वबोधनेऽपि सत्यत्वस्याप्यङ्गीकारेण न व्याहत्यादिदोष इत्यत आह ॥ परमार्थेति ॥ साधकत्व इति ॥ परमार्थज्ञापकत्वे तदुत्पादकत्वे चेत्यर्थः ।

ननु व्यवसायद्वाराऽपरोक्षधीविषयत्वमसतोऽपीत्यत आह ॥ अपरोक्षेति ॥ उपनायकसामग्रीं विनैव स्वप्रकारकापरोक्षधीरित्यर्थः । उत्पादकत्वं साधकत्वमिति पक्षे दोषमाह ॥ वह्नित्वेनेत्यादिना सञ्जीवकत्वाच्चेत्यन्तेन ।

ननु वह्नित्वेन दाहबुद्ध्यभावेऽपि सत्त्वबुद्धिसामान्याभावो नास्त्येव, अततो योगिनामेव तत्र तथा बुद्धिसम्भवादित्यत आह ॥ अमृतत्वेनेति ॥ ननु संसारकालीनबाधकाबाध्यधीस्तत्र तन्त्रमित्याशङ्क्याह ॥ अत एवेति ॥ अनित्यत्वेति ॥ स्पर्शरूपवत्त्वस्यानित्यत्वस्पर्शवत्त्वव्याप्यत्वात् । न च तमसि व्यभिचारात् तस्य स्पर्शवत्त्वव्याप्यतेति वाच्यम् । तमसस्तेजोऽभावत्वपक्षे रूपवत्त्वोक्त्यसम्भवात् । न च दीपप्रभायां व्यभिचारः । तस्याः गुरुत्वोपगमादिति भावः ॥ एतेनेति ॥

निपुणेन बौद्धेनोक्तधीविषयत्व्याप्यादिमत्त्वेन व्युत्पादितैः शून्याद्वैतादिहेतुभिस्तत्सिद्ध्यापातात् । एतेनैव यादृश्या तव सत्त्वसिद्धिस्तादृशी धीर्मम तन्त्रमिति खण्डनोक्तं निरस्तम् । यादृश्या शब्दे भ्रमदोषहीनया तव ब्रह्मणि सत्त्वसिद्धिस्तादृश्या प्रत्यक्षे भ्रमदोषरहितया मम जगति सत्त्वसिद्धेः । अन्यथा शुक्तिरूप्यादिप्रत्यक्षदृष्टान्तेन जगत्प्रत्यक्ष इव पूर्वपक्षिप्रतिपन्नश्रुत्यर्थदृष्टान्तेन त्वत्प्रतिपन्नेऽपि श्रुत्यर्थे दोषान्तरशङ्का कालान्तरभाविबाधशङ्का च स्यात् । नापि परप्रसिद्धं सत्त्वं तन्त्रम् । तेन स्वार्थानुमानायोगात् । परार्थप्रयोगस्य च तत्पूर्वकत्वात् । परप्रसिद्धमात्रेण हेतुना वास्तवसाध्यासिद्धेश्च ।

न च मिथ्यात्वमपि पररीत्यैव न तु वास्तवमिति वाच्यम् । बौद्धरीत्या मिथ्याभूतस्यात्मन इव जगतो वस्तुतस्सत्त्वापातात् । मिथ्यात्वस्य तत्त्वावेदकश्रुतिवेद्यत्वाच्च । तदुक्तं वार्तिके बौद्धं प्रति "योऽपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते । भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिये"ति । नापि व्यावहारिकं सत्त्वं तन्त्रम् । प्रपञ्चमिथ्यात्वसिद्धेः प्राक् तदसिद्ध्याऽन्योन्याश्रयापातात् । प्रातिभासिकेन हेतुव्याप्यादिना व्याव-

---

गौरोऽहमित्यादिप्रतीतेः अनित्यत्वादिसाधकत्वापातेनेत्यर्थः । लोकप्रसिद्धिरिति ॥ अबाधितत्वेन पृथग्जनप्रसिद्धिरित्यर्थः ॥ एतेनैवेति ॥ अतिप्रसङ्गेनैवेत्यर्थः । अतिप्रसङ्गमेवोपपादयति ॥ निपुणेनेति ॥ यादृश्येति ॥ अत्र धियेति शेषः ॥ अन्यथेति ॥ भ्रमदोषाभावनिश्चयेऽपि दोषान्तरशङ्कामात्रेण सत्त्वसिद्ध्यनङ्गीकार इत्यर्थः ॥ बाधशङ्का स्यादिति ॥ तथा च ब्रह्मण्यपि सत्त्वसिद्धिः न स्यादिति भावः ।

ननु इदमनुमानं परार्थम् । तत्र चास्त्येव सत्त्वाभ्युपगम इत्याशङ्क्याह ॥ नापीति ॥ तेनेति ॥ त्वयापि साधकत्वेन एकं प्रयोजकमुक्तमिति भावः । ननु स्वार्थानुमानाभावे का क्षतिरित्यत आह ॥ परार्थेति ॥ प्रयोगस्य ज्ञानपूर्वकत्वात् जगन्मिथ्यात्वे च प्रत्यक्षाभावात् तत्रानुमानमेव वाच्यमिति स्वार्थानुमानाभावे परार्थानुमानमपि न स्यादिति भावः । किञ्च ध्वान्त्यादि किं सत्यं वा । सच्चेत् तत्त्वेनानभ्युपगतमपि तथापि जनयेत् । असच्चेत् तत्त्वेनाभ्युपगतमपि परस्यापि न जनयेत् इति, अभ्युपगमानभ्युपगमयोः तत्रानङ्गत्वादित्यभिप्रेत्याह ॥ परप्रसिद्धिमात्रेणेति ॥ तथा च अस्मत्पक्षे बाधकस्य त्वत्पक्षे साधकस्य वा कस्यचित् त्वया अनुपन्यासात् त्वां प्रति नास्माकं किञ्चित्प्रतिकर्तव्यमस्तीति भावः । यक्षानुरूपो बलिरिति न्यायेन आशङ्क्याह ॥ नचेति ॥ मिथ्यात्वस्येति ॥ यथा चैतन्यस्योपपादितमधस्तात् ॥ का क्रियेति ॥ का प्रतिक्रियेत्यर्थः ।

हारिकसाध्यसिद्ध्यदर्शनेन हेतुव्याप्त्यादेरनुमितिविषयसमसत्ताकत्वनियमेन व्यावहारिकेण पारमार्थिकासिद्धेश्च । किञ्च व्यावहारिकसत्त्वस्याबाध्यत्वरूपसत्त्वविशेषत्वेऽस्मदिष्टसिद्धिः । सत्त्वेन व्यवहारमात्रत्वे चोक्तदोषाः । भ्रान्तेर्बहुकालानुवृत्तिश्चाप्रयोजिका । तथाच "व्यावहार्ये यदा सत्त्वमस्माकं तर्हि का क्षतिः । नचेदसत् साधकत्वं नास्तीत्यत्र किमागतम् ।" तदुक्तं वार्तिके बौद्धं प्रति "तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः । तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ॥ तुल्यार्थत्वेऽपि तेनैव मिथ्यासंवृतिशब्दयोः । वञ्चनार्थमुपन्यासो लालावक्त्रासवादिवत्" इति । अज्ञानादेः सिद्धिपर्यन्तसाधके स्वरूपेण परमार्थसति साक्षिणि व्यावहारिकसत्त्वाभावाच्च । न च साक्ष्यप्यविद्यावृत्तिप्रतिबिम्बित एवाज्ञानादिसाधकः । त्वयैव "चैत्ररागः स्वविषयानित्यज्ञानातिरेकिणा । तदध्यक्षेण संवेद्यः प्रत्यक्षत्वाद्घटादिवदि"ति सुखादेर्नित्यधीवेद्यत्वोक्तेः । अज्ञानसुखादेर्ज्ञातैकसत्त्वाभावापाताच्च । अविद्यावृत्तिं प्रति तदप्रतिबिम्बितस्यैव साधकत्वाच्च । साक्षिगतसाधकताया अज्ञानाधीनत्वेऽपारमार्थिकतया प्रातीतिकस्याज्ञानसत्त्वस्य साक्षिणा सिद्धिं विनाऽयोगेनान्योन्याश्रयाच्च । एतेन

---

ननु घस्त्वन्योन्याश्रयो नास्त्येव । ज्ञप्तौ तु व्यावहारिकसत्त्वस्य अज्ञातस्यैव प्रयोजकत्वात् नान्योन्याश्रय इत्यत आह ॥ प्रातिभासिकेनेति ॥ यद्यपि कूटलिङ्गजन्यानुमितिस्थले यादृच्छिकसंवाददर्शनात् तत्र प्रातिभासिकेनापि व्याप्त्यादिना व्यावहारिकसाध्यसिद्धिर्दृश्यत इति हेतुव्याप्त्यादेरनुमितिविषयसमसत्ताकत्वनियमोऽसिद्धः । तथापि प्रामाणिकविभाजकोपाध्यवच्छिन्नानुमितिविषयसमसत्ताकत्वनियमो हेतुव्याप्त्यादेरसिद्ध इति द्रष्टव्यम् ॥ उक्तदोषा इति ॥ बुद्धिसत्त्वपक्षे उक्तदोषा अत्रानुसंधेया इत्यर्थः ।

ननु बहुकालानुवृत्ता सा साधिका न स्वल्पकालीनेत्यत आह ॥ भ्रान्तेरिति ॥ क्वचित् प्रातिभासिकेऽपि तथा संभवादिति भावः ॥ असत्साधकत्वमिति ॥ असतः साधकत्वमित्यर्थः ॥ तेनेति ॥ मिथ्यार्थत्वेनेत्यर्थः ॥ वञ्चनार्थ उपन्यास इति संबन्धः ॥ लालावक्त्रासवादिवदिति ॥ लालावक्त्रासवशब्दयोरिवेत्यर्थः । न्यूनवृत्तित्वाच्च व्यावहारिकसत्त्वं न साधकत्वे तन्त्रम् इत्याह ॥ अज्ञानादेरिति ॥ अत्र आदिपदग्राह्यसुखादेरन्यस्य साधकत्वमप्यस्तीति पर्यन्तेत्युक्तम् । अविद्यावृत्तिप्रतिबिम्बित इति ॥ स च व्यावहारिक एवेति भावः ॥ स्वविषयेति ॥ अत्र स्वशब्दः चैत्ररागपरः । अन्यथाऽप्रत्यक्षवेद्यत्वेन बाधः स्यादित्यत उक्तम् ॥ तदध्यक्षेणेति ॥ चैत्राध्यक्षेणेत्यर्थः । दृष्टान्ते साध्यवैकल्यपरिहाराय स्वविषयेति । चैत्रवृत्तिवेद्यत्वमादाय सिद्धसाधनवारणायाह ॥

तवासत इव मम सतोऽपि साधकत्वे विमतिरित्यानन्दबोधाद्युक्तं निरस्तम् । नापि सत्तात्रयं द्वयं वा तन्त्रम् । अननुगमात् । प्रयोज्यवैजात्याभावेन तृणारणिमणिन्यायासंभवाच्च । नापि सत्त्रयानुगतं सद्द्वयानुगतं वा सत्त्वसामान्यं तन्त्रम् । अपरमार्थसतोऽसत्त्वेन तत्र सत्त्वस्य विरुद्धत्वात् । तदुक्तं वार्तिके बौद्धं प्रति । "सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः । विरोधाचहि सिंहत्वं सामान्यं वृषसिंहयोः" इति । अपरमार्थसतः अबाध्यत्वरूपसद्विशेषत्वे च शाबलेयस्य गोविशेषत्ववत् प्रपञ्चस्यापि ब्रह्मवत् सद्विशेषत्वात् सद्वैलक्षण्यं न स्यात् । किञ्च यद्यारोपितानारोपितानुगतं सामान्यं स्यात्तर्हि ब्राह्मणो यजेतेत्यादिसामान्यविधिं प्रति ब्राह्मण्यामब्राह्मणाज्जात आरोपितब्राह्मण्यादिरपि नियोज्यः स्यात् । निषेधस्य तु

---

अनित्यज्ञानानिरेकेणेति ॥ घटादिवदिति ॥ चैत्रप्रत्यक्षवेद्यघटवदित्यर्थः ॥ अज्ञानसुखादेरिति ॥ वृत्तेः सामग्रीवैकल्येन विलम्बसम्भवादिति भावः । नन्वविद्योपहितचैतन्यस्यैव साक्षित्वाङ्गीकारे नोक्तदोष इत्यत आह ॥ साक्षिगतेति ॥ अपारमार्थिकाविद्याविशिष्टस्य तदुपहितस्य वा साक्षित्वे साक्षिणोऽपारमार्थिकत्वम् । अपारमार्थिकसाक्षिभास्यत्वेन अविद्यायाः अपारमार्थिकत्वमिति अन्योन्याश्रय इत्यर्थः ॥ एतेनैवेति ॥ साक्षिणः स्वत एव साधकत्वाङ्गीकारेणेत्यर्थः ।

नन्वस्तु (तर्हि) साक्षिणि पारमार्थिकी सत्ता (पारमार्थिक्येव सत्ता) साधिका तथापि प्रपञ्चस्य मिथ्यात्वमक्षतमेवेत्याशङ्क्याह ॥ नापीति ॥ प्रातिभासिकस्यासाधकत्वमेवेत्यभिप्रेत्याह ॥ द्वयं वेति ॥ इदमुपलक्षणम् ॥ सत्तानेकत्वे मानाभाव इत्यपि बोध्यम् ॥ सत्त्वस्येति ॥ अबाध्यत्वरूपस्येत्यर्थः । नियोज्यः स्यादिति ॥ नचेष्टापत्तिः । "चातुर्वर्ण्यमविशेषात्" (जै. सू. अ. ६ पा. १ अधि. ७ सू. २५) इत्यधिकरणविरोधापत्तेः । तत्र ह्येवं विचारितम् । अग्निहोत्रादिषु किं चतुर्णां वर्णानामधिकारः उतापशूद्रमिति संशये विधिवाक्येषु विशेषाश्रवणाच्चतुर्णामिति पूर्वपक्षे अग्निहोत्रादिकर्मणामग्निविद्यासापेक्षत्वादग्निविद्यायाश्चाधानोपनयनपूर्वकाध्ययनसाध्यत्वात् तयोश्च वसन्ते ब्राह्मणो ऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यमिति त्रिष्वेव दर्शनात्, अन्यतो लब्धाग्निविद्यानां त्रैवर्णिकानां अधिकारिणां सत्त्वेन कर्मविधिभिः शूद्रेष्वपि तयोराक्षेपकल्पनायां प्रमाणाभावात् अपशूद्रमेवाधिकार इति सिद्धान्त इति ॥ ननु व्यावहारिकब्राह्मण्यवत एव नियोज्यत्वाङ्गीकारात् नापशूद्राधिकरण-

आरोपितेनापि ब्राह्मण्येन हीनो विषयः स्यात् । अस्तु वा तदनुगतं सामान्यं तथापि तस्य तन्त्रत्वे स्वाप्नेनाद्वैतसाक्षात्कारेणाश्वमेधादिना च तत्फलस्य द्वैतश्रुत्यादिना च द्वैतस्य धूमाभासेन च वह्नेर्व्यावहारिकेण च विरुद्धधर्मेण पारमार्थिकस्य जीवेश्वरभेदस्य सिद्धिः स्यात् । अत एव धर्मितुल्यसत्त्वं वा असद्विलक्षणत्वं वा न तन्त्रम् । गौरवाच्च ।

ननु धूमाभासस्यासाधकत्वं नासत्त्वात्, किन्तु व्याप्त्यभावात्, बहुलोर्ध्वतादिवदाभासविवेकस्यापि व्याप्त्यर्थत्वादिति चेन्न । अस्याः कल्पनाया असतः साधकत्वसिद्धिसापेक्षत्वेनान्योन्याश्रयात् । आभासेऽप्यारोपितव्याप्तेरारोपिताभासविवेकस्य च सत्त्वाच्च । प्रकृतेऽपि दृश्यत्वस्यारोपितस्य ब्रह्मण्यपि सत्त्वेन व्याप्त्यर्थमेव हेत्वादिमत्त्वस्यापेक्षितत्वाच्च । हेत्वाद्यारोपस्य सर्वत्र सौलभ्येनासिद्ध्यादेरदोषत्वाच्च । आश्रयादेस्सत्त्वनियमाभावेऽपि व्याप्त्यादेस्तन्नियमाच्च । नाप्यप्रातिभासिकत्वं तन्त्रम्, तुच्छेऽतिप्रसक्तेः । नाप्यप्रातिभासिकसत्त्वं तन्त्रम्, गौरवात् । व्यावहारिकतात्त्विकानुगतसत्त्वसामान्यस्याभावाच्च । नाप्यसद्विलक्षणत्वे सति प्रातिभासिकवैलक्षण्यं तन्त्रम्, अतिगौरवात् । अन्यथा प्रवृत्तौ न संसर्गग्रहो

---

विरोध इत्यन्वयेनाह ॥ अस्तु वेति ॥ अश्वमेधादिना चेति ॥ अत्रापि स्वाप्नेनेत्यनुषज्यते ॥ सिद्धिः स्यादिति ॥ एतच्च षष्ठ्यन्तपदे सर्वत्र सम्बध्यते ॥ अत एवेति ॥ स्वाप्नेनेत्याद्युक्तदूषणप्रसादेवेत्यर्थः ॥ गौरवाच्चेति ॥ धर्मिसमसत्त्वस्य गुरुशरीरत्वेन सद्विलक्षणत्वस्य चाभावघटितत्वेन सत्त्वस्यैव लाघवेन तन्त्रत्वादिति भावः । यद्यप्यसद्वैलक्षण्यवत् सत्त्वमप्यभावघटितं, तथापि असद्वैलक्षण्यज्ञानार्थं सत्त्वरूपव्यावर्तकधर्मज्ञानस्यावश्यकत्वादनुपस्थितिलाघवमिति ॥

नन्वेकहेत्वपेक्षयोभयं सिध्यति । नत्वेकसिद्धिमपरमपेक्षते । येनान्योन्याश्रयः स्यात् । यथाशांशु क्रमेण वादी पदं बोध्यते, तत्त्वतः क्रमभावित्वादित्यत्रेवेत्याह ॥ आभासेऽपीति ॥

नन्वसिद्धेर्न दोषत्वम् । वन्ध्यासुतो न वक्ता अचेतनत्वात् इत्यादावाश्रयस्यासत्त्वेऽपि अनुमानस्य निष्पन्नत्वादित्यत आह ॥ आश्रयादेरिति ॥ अन्यथेति ॥ गौरवस्यादोषत्व इत्यर्थः ॥ नतावदिति ॥ अनभ्युपगमात् । अभ्युपगमे वा (च) विचारपर्यवसानादिति भावः ॥ अनवस्थानादिति ॥ तत्राप्यसत्त्वान्तरेण साधकत्वस्य साधनीयत्वादिति भावः । सिद्धिमिति ॥ अज्ञानान्तःकरणादेरिति शेषः ॥ अविशेषस्येति ॥ असत्त्व इत्यर्थः ॥ सिद्धत्वाच्चेति ॥ सम्बन्धेति शेषः । तथाच

हेतुः, किन्तूपस्थितासंसर्गाग्रह इति भ्रान्तिर्न सिद्ध्येत् । किञ्चासतः साधकत्वं विप्रतिपन्नत्वात्साध्यम् । तत्साधकत्वं च न तावत्त्वन्मते सत् । अपसिद्धान्तात् । नाप्यसत्, प्रतिवादिनस्तत्साधकत्वे विप्रतिपत्त्याऽनवस्थानात् । नच सतः साधकत्वेऽप्ययं दोषः । त्वन्मते सतः साक्षिणः साधकत्वात् । उक्तं हि "साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता । स्वीकृतं ह्यविशेषस्य साध्यासाधकता पुनः" इति । औत्सर्गिकप्रामाण्येन सिद्धत्वाच्च । तथापि व्यवहारे उपायान्तराभावेन स्वच्छायावदुर्लङ्घ्यलोकमर्यादासिद्धत्वाच्च । नच सिद्धिरप्यसतीत्युक्ते निस्तारः । अन्योन्याश्रयात् । अन्यथा प्रतीतिरप्यत्यन्तासतीति सुवचत्वेन प्रतीत्या असद्वैलक्षण्यं न सिद्ध्येत् । एतेन सल्लक्षणयोगित्वायोगित्वे एव साधकत्वासाधकत्वयोस्तन्त्रे, नतु सत्त्वासत्त्वे इति खण्डनोक्तं निरस्तम् । हेतुव्याप्त्यादेरसत्त्वेऽसिद्धव्याप्त्याद्यसल्लक्षणापाताच्च । एतेन मिथ्यात्वाविशेषेऽपि स्वप्नवद्धेतुतदाभासव्यवस्थेति निरस्तम् । तद्वदेव वास्तवसाध्यासिद्ध्यापातात् । तस्मान्नासत्यात् सत्यसिद्धिः । तदुक्तं वार्तिके बौद्धं प्रति "साधकं चेदवश्यं च परमार्थास्तिता भवेत् । सिद्धिर्नापारमार्थेन परमार्थस्य युज्यते" इति । उक्तं च बौद्धाधिकारे "लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकवाङ्मात्रत्वापत्तेः" इति ॥

॥ इत्यसतः साधकत्वे बाधकविवरणम् ॥ २१ ॥

---

साधकत्वञ्च त्वयाप्यभ्युपगतं स्वतः प्रामाण्यबलाच्च तस्य सत्त्वमपि सिध्यतीति न तत्र प्रमाणान्तरमन्वेषणीयमिति भावः ॥ व्यवहार इति ॥ अबाधितव्यवहार इत्यर्थः ॥ सिद्धत्वाच्चेति ॥ अत्रापि सत्त्वस्येति शेषः ।

ननु यादृशो यक्षः तादृशो बलिरिति न्यायेन सिद्धिरप्यसत्येवास्तु इत्याशङ्क्याह ॥ नचेति ॥ अन्योन्याश्रयादिति ॥ सिद्धेरसत्त्वे सिद्धे तदनुरूपतया साधकस्यासत्त्वसिद्धिः, तत्सिद्धौ च तदनुरूपतया सिद्धेरसत्त्वसिद्धिरिति ॥ अन्यथेति ॥ सिद्धेरसत्त्वसिद्धावित्यर्थः । प्रतीतिरित्यस्यानन्तरं प्रपञ्चस्येति शेषः । असद्विलक्षणत्वं न सिद्ध्येदिति । तदुक्तन्यायेनैव सत्त्वप्रतीतिसिद्धप्रपञ्चस्यासत्त्वावश्यंभावादिति भावः ॥ सल्लक्षणेति ॥ सत्त्वतुल्यलक्षणेत्यर्थः । न तु सत्त्वासत्त्वे इति ॥ सत्त्वसिद्धेः पूर्वमसत्त्वव्यापकतया सल्लक्षणयोग्यस्य सत्त्वस्य वा व्याप्यत्वेन तदेव तत्त्वमिति भावः । तद्वदेवेति ॥ नचेष्टापत्तिः । मिथ्यात्वादेर्वास्तवत्वे एव सिद्धपक्षीकारादिति भावः ॥ अवश्यं चेति ॥ साधनस्येति शेषः । यादृच्छिकेति । प्रवृत्तिपूर्वकार्थशून्यवाङ्मात्रत्वापत्तेरित्यर्थः ।

॥ इत्यसतः साधकत्वे बाधकविवरणम् ॥ २१ ॥

## ॥ अथ असतः साधकत्वाभावे बाधकोद्धारः ॥

नन्वसत्यमपि प्रतिबिम्बं बिम्बस्य स्वाप्नार्थश्च शुभाशुभयोः स्फटिकलौहित्यं चोपाधिसंनिधानस्य रेखारोपितवर्णश्चार्थस्य वर्णदैर्घ्यादिकं च नगो नाग इत्यादावर्थभेदस्य शङ्काविषं च मरणस्य सवितृसुषिरादि चारिष्टादेः साधकं दृष्टमिति चेन्न। प्रतिबिम्बस्वरूपस्य त्वन्मतेऽपि सत्यत्वात्। स्वाप्नस्य च मन्मते सत्यत्वात्। त्वन्मतेऽपि पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादिश्रुत्या ज्ञानमेव सूचकम्। अन्वयव्यतिरेकाभ्यां च स्वाप्नकामिन्यादिज्ञानमेवार्थक्रियाकारीत्युपपत्तेः। स्फटिकलौहित्यस्यापि प्रतिबिम्बत्वात्। रेखायाश्च वर्णे पदस्यार्थ इव सङ्केतितत्वेन रेखास्मारितवर्णस्यैवार्थबोधकत्वात्। अत एव रेखां दृष्ट्वा वर्णमुच्चारयन्ति। नगो नाग इत्यादौ दीर्घत्वादिकं स्वरूपसदेवार्थविशेषधीहेतुः। दीर्घध्वनिसाहित्यरूपं वा तद्व्यञ्जकत्वरूपं वा दीर्घत्वं वर्णगतं सत्यमेव हेतुः। न ध्वनिगतं वर्णेष्वारोपितं हेतुः। ज्ञातं सद्धेतुर्वक्ष्यमाणरीत्या सवितृसुषिरादिज्ञानमिवार्थानवच्छिन्नं सत्यं ज्ञानमेव हेतुः। एतेन "यथा सत्यत्वाविशेषेऽपि चक्षुषा रूपज्ञानमेव जायते नतु रसज्ञानं तथैवासत्त्वाविशेषेऽपि वर्णदैर्घ्यादिना सत्यं ज्ञायते नतु धूमाभासादिना" इति वाचस्पत्युक्तं निरस्तम्।

---

असत्यमिति शब्दस्य क्वचित्पुल्लिङ्गतयापि संबन्धः। त्वन्मतेऽपीति। अपिरत्र स्वमत समुच्चयार्थः। यद्यप्यत्र ज्ञानमादाय एकहेलयैव परिहारस्सुवचः। तथापि शिष्यबुद्धिवैशद्याय समाधानान्तरमपि क्रियत इति द्रष्टव्यम्। इत्यादिश्रुत्येति। 'अथादिपवात्' यथा कर्मसु काम्येषु स्त्रियं स्वप्नेषु (स्वप्नेऽपि) पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्न स्वप्न) निदर्शन' इति श्रुतिपरिग्रहः। प्रतिबिंबत्वादिति। मन्मत इति शेषः। अत एवेति। रेखायाः वर्णे संकेतितत्वादेवेत्यर्थः। ननु वर्णानां नित्यविभुद्रव्यत्वपक्षे गुणत्वपक्षे वा दैर्घ्यादिः परिमाणस्यासंभवेन आरोपितमेव तदर्थविशेषसाधकमिति आशंक्याह। नगो नाग इत्यादाविति। ननु ज्ञायमानकरणनिष्ठतया ज्ञानोपयोगित्वेन दैर्घ्यादिज्ञानमावश्यकम्। तादृशज्ञानस्यैव उपयोगित्वनियमात्। तथा च उक्तस्य भानाभावेन ध्वनिगतमेव दैर्घ्यादिकमारोप्यत इति असतस्साधकत्वं तथापि दुर्निवारमिति चेन्मतं प्रत्याह। ज्ञानमिति। एतेनेति। उभयथापि सत एव हेतुत्वव्यवस्थापनेनेत्यर्थः। तज्ज्ञानमात्रस्येति। ध्वन्यवच्छिन्नमात्रस्य आभासेऽपि

शङ्काविषेऽपि शङ्कानिमित्तभयजन्या धातुव्याकुलतैव मरणहेतुः नतु विषम्। स्वाप्नमन्त्रोऽपि फलसंवादी चेत् स्वप्नप्रतीतत्वेऽप्यात्मवत्सत्य एव स्वयंप्रतिभातवेदवद्दृष्टवद् भासते। भारतयुद्धादौ घटोत्कचादिभिः शक्तिविशेषात्सृष्टमर्थक्रियाकारिगजादिकं सत्यमेव। सवितृसुषिररज्जुसर्पादिज्ञानमेव चारिष्टभयादिहेतुर्नत्वर्थः। सत्यप्यर्थे तदज्ञाने भयाद्यभावात्। नचैवमनुमितिं प्रत्यपि हेतुव्याप्त्यादिज्ञानमेव कारणं नतु हेत्वादीति वाच्यम्। तज्ज्ञानमात्रस्य हेत्वाभासेऽपि सत्त्वात्। त्वन्मते वृत्तिरूपस्य तत्प्रतिबिम्बितचैतन्यरूपस्य वा ज्ञानस्यापि मिथ्यात्वाच्च। सत्यसर्पादेस्त्वभिसर्पणदंशनादिरेवार्थक्रिया नतु भयादिः। नन्वर्थानवच्छिन्नस्य ज्ञानस्य हेतुत्वेऽतिप्रसंगः। अवच्छिन्नस्य हेतुत्वेऽर्थोऽपि हेतुः स्यादिति चेन्न। घटावच्छिन्नस्य घटात्यन्ताभावध्वंसादेर्घटदेशकालभिन्नदेशकालादित्वेऽपि अवच्छेदकस्य घटस्य तदभाववत् घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदान्तसाध्यत्वेऽपि घटब्रह्मणोस्तदभाववत्, घटप्रागभावस्य घटं प्रति विशेषदर्शनाभावस्य च भ्रमं प्रति विहितनिषिद्धकरणाभावयोः प्रत्यवायादिं प्रति स्वर्गकामनायाश्च यागं प्रति अतीतादिस्मृत्यादेर्दुःखादिकं प्रति असद्विषयकपरोक्षज्ञानस्य च तद्व्यवहारं प्रति हेतुत्वेऽपि अवच्छेदकस्य घटस्य विशेषदर्शनस्य विहितनिषिद्धकरणयोः स्वर्गस्यातीतादेरत्यन्तासतश्च तदभाववत् चिकीर्षितघटबुद्धेर्घटहेतुत्वेऽपि घटस्य तदभाववत् ब्रह्मज्ञानस्य तदज्ञाननिवर्तकत्वेऽप्युदासीनस्वभावस्य ब्रह्मणस्तदभाववत्, ब्रह्मज्ञानस्य जगत्प्रति परिणामिकारणत्वेऽपि ब्रह्मणस्तदभाववच्च अर्थावच्छिन्नस्य हेतुत्वेऽपि अवच्छेदकार्थस्य कुरूणां क्षेत्रे वसतीत्यत्र कुरूणामिव ताटस्थ्येनाहेतुत्वोपपत्तेः। तथाच "रज्जुसर्पादिधीसाध्यभयादौ सर्पपूर्वकम्। फलेच्छासाध्ययागादौ फलवत्तैवकारणम्।"

---

सत्त्वात् ततोऽपि वास्तवार्थसिद्धिप्रसंग इति भावः। मिथ्यात्वाच्चेति। तथापि[1] नास्मत्प्रतिबन्दीति भावः।

ननु सर्पज्ञानमेव चेद् भयादिहेतुः, तर्हि सर्पस्य कथापि सत्यत्वं न स्यात्। अर्थक्रियाकारित्वाभावादित्यत आह। सत्यसर्पादेस्त्विति। अतिप्रसंग इति। उदासीनतृणादिज्ञानादपि भयकम्पाद्यापत्तिरूप इत्यर्थः। विहितनिषिद्धेति। विहितनिषिद्धयोः ये करणं तदभावयोरित्यर्थः। ताटस्थ्येनेति। क्रियाऽनन्वयित्वेऽपि व्यावर्तकत्वेनेत्यर्थः। सर्पपूर्वकमिति। सर्पादिपूर्वकमित्यर्थः। ननु कादाचित्कपदार्थघटितोपाधेः कादाचित्कत्वेन, मिथ्यात्वावच्छिन्नस्य

1. तथाचेति पाठान्तरम्

नन्वथापि मिथ्यार्थे ज्ञानं प्रति व्यावृत्तिधीहेतुत्वरूपव्यावर्तकत्वमस्तीत्यसतोऽपि हेतुतेति चेन्न । यतो व्यावृत्तिधीहेतुधीविषयत्वमेव व्यावर्तकत्वम् । सत्यपि दण्डे तदज्ञाने व्यावृत्त्यज्ञानात् । नन्वथाप्यवच्छेदकस्य मिथ्यात्वेऽवच्छिन्नस्यापि तन्नियमादसत्यस्य हेतुतेति चेन्न । तुच्छस्य ज्ञाने तुच्छाद्वैलक्षण्ये च तुच्छत्वस्य प्रातिभासिकाद्वैलक्षण्ये च प्रातिभासिकत्वस्य पञ्चमप्रकारायामात्मस्वरूपभूतायां वा अनिर्वचनीयाज्ञाननिवृत्तौ च चतुर्थप्रकाररूपानिर्वचनीयत्वस्य पारमार्थिकात्मस्वरूपे तद्भिन्ने वाऽनृतद्वैतस्याभावे ततो व्यावृत्तौ चानृतत्वस्यादर्शनात् । तत्रावच्छेदकानामसदादीनां ताटस्थ्येऽत्रापि विषयस्तथास्तु । वस्तुतस्त्वर्थानवच्छिन्नमेव ज्ञानं हेतुः । न चातिप्रसंगः । विषयावच्छेदमनपेक्ष्य स्वत एव सर्पज्ञानस्यासर्पज्ञानाद्व्यावृत्तेः । तथाहि । सर्पज्ञानमसर्पज्ञानात्तावद्व्यावृत्तं, व्यावृत्तिश्च व्यावर्तकाधीना । नच विषयस्तत्संम्बन्धो वा व्यावर्तकः । स्वरूपातिरिक्तद्विष्ठसम्बन्धाभावात् । असंबद्धस्य चाव्यावर्तकत्वात् । अथ संबंधांतरमंतरेण विशिष्टव्यहारजननयोग्यं स्वरूपमेव वा ज्ञानमात्रनिष्ठधर्मो वा संबंधः । तर्हि विषयमनन्तर्भाव्य ज्ञान एव विशेषः सिद्धः । किंच सर्पज्ञानमसर्पज्ञानाद्धर्म्यंतरसंबंधमनपेक्ष्य विलक्षणम् । तज्जनकविलक्षणजन्यत्वात् ।

---

मिथ्यात्वमेवेत्यभिप्रेत्य मिथ्यात्वमेव किन्न स्यादिति शङ्कते । नन्वथापीति । अदर्शनादिति । एतच्च पञ्चम्यन्तपदैः सर्वत्र संबध्यते । ननु असतोऽपि व्यावृत्तिधीहेतुज्ञानविषयत्वेन व्यावर्तकत्वे असज्ज्ञानमसज्ज्ञानव्यावर्तकमित्युक्तं स्यात् । एवञ्च व्यावर्तकासज्ज्ञानस्यापि व्यावर्तकासज्ज्ञानान्तरापेक्षत्वेन अनवस्था स्यादिति विषयस्यैव व्यावृत्तिधीहेतुत्वं वक्तव्यमिति असतः साधकत्वं दुर्वारमित्यपरितोषादाह । वस्तुतस्त्विति । स्वत एवेति । स्वनिष्ठवैलक्षण्यादेवेत्यर्थः । ननु विषयमनन्तर्भाव्य सम्बन्धः, परव्यावर्तकत्वं तु तेन संबन्धेन विषयस्यैवेत्यरुचेराह । किञ्चेति । सिद्धसाधनवारणायाह । धर्म्यन्तरेति । यथाङ्कुरादिति । अत्र यत्कार्यं यत्कार्यजनकविजातीयकारणजन्यं तत् तत्कार्यतो विजातीयम् इति सामान्यव्याप्तिर्बोध्या । तज्जन्येति । असर्पज्ञानजन्यकार्यविजातीयकार्यजनकत्वादित्यर्थः । अत्रापि सामान्यव्याप्तिरभिमता । ननु यवायवादि व्यावृत्तिबोधे यवत्वमेव प्रयोजकम् । न तु बीजसम्बन्धित्वम् , तस्य अयवेऽपि सत्त्वात् , अयवेऽपि क्वचिदसत्त्वात् । बीजसम्बन्धित्वाज्ञानेऽपि यवत्वज्ञाने अयवादिव्यावृत्तिबुद्धेश्च । सर्पज्ञाने तु सर्प एव प्रयोजकः । अन्यथा सर्पज्ञानान्वयव्यतिरेकानुविधानं न स्यादिति यो ब्रूयात् तं प्रत्याह । अपि चेति ।

यवांकुरात्कलमांकुरवत् । तज्जन्यविलक्षणजनकत्वात् । यवबीजात्कलमबीजवत् । नच विलक्षणविषयसंबंधेनैव हेत्वोरुपपत्तेरप्रयोजकत्वम् । तथात्वे हि यवबीजतदंकुरविलक्षणजन्यजनके कलमांकुरतद्बीजे अपि कदाचिद्यवांकुरतद्बीजाभ्यां कलमांकुरत्वतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विनोपलक्षणभूतचैत्रादिसंबंधित्वमात्रेण विलक्षणे स्याताम् । साक्षात्कारोऽपि परोक्षज्ञानादन्यसंबंधित्वमात्रेण विलक्षणः स्यात् । गृहमपि संस्थानविशेषं विना विचित्रकाकहंसोपलक्षणत्वमात्रेण विचित्रकारणजं विचित्रकार्यकारि च स्यात् । अपिच ज्ञानस्य स्वकारणादुत्पत्तौ स्वकार्यकरणे च विषयः अभावस्य प्रतियोगीवोपलक्षणम् । अतीतादिज्ञाने असद्विषयकपरोक्षज्ञाने च तथा दर्शनात् । नहि तत्रार्थः अनिर्वाच्योऽप्यस्ति । उपलक्षणेन चान्यो व्यावर्तक उपस्थाप्यः काकेन संस्थानविशेष इवेति स्वतो विशेषसिद्धिः । एवं च यथा प्रतियोगिनमनंतर्भाव्यैव घटस्याभावः अभावांतरात्, यथा च विषयमनंतर्भाव्यैव शिलोद्धरणकृतिर्माषोद्धरणकृतितः, यथा चातीतादिज्ञानमसद्विषयकपरोक्षज्ञानांतरादितः, यथा च घटस्मृतिर्घटानुभवात्, यथा च घटस्य परोक्षज्ञानं तदपरोक्षज्ञानाद्विलक्षणम्[1] अन्यथा तत्तत्कार्यसंकरः स्यात् । नचाभावाद्यवच्छेदकप्रतियोग्यादिविशेषादसंकरः । ध्वंसादेः

---

ननु उपलक्षणं द्विविधम् । प्रत्याय्यव्यावृत्त्यन्यूनानतिरिक्तवृत्ति, तन्न्यूनवृत्तिचेति । तदुभयमपि विद्यमानाविद्यमानभेदेन द्विविधम् । तत्र प्रथमे न व्यावर्तकान्तरोपस्थापकत्वम् स्वत एव स्वज्ञानद्वारा व्यावृत्तिबोधसमर्थत्वात् । नहि दण्डो घटकारणमित्यत्रापि दण्डत्वेन व्यावर्तकान्तरमुपस्थाप्यते । तथा स्वज्ञानं विनैव व्यावृत्तिर्बोध्यते । ज्ञानान्वयव्यतिरेकानुविधानस्य आनुभाविकत्वात् । द्वितीये तु व्यावर्तकान्तरोपस्थापकत्वनियमः । स्वाभाववत्यधिकरणे कदापि स्वसम्बन्धज्ञानाभावेन व्यावृत्त्यबोधकत्वात् । अन्यथाऽतिप्रसङ्गात् । अत एव सुरभिरपि प्रथमे उपलक्षणप्रकारिकैव । द्वितीये तु उपलक्ष्यप्रकारिका । प्रकारसम्बन्धश्च क्वचिद्विद्यमानः । क्वचिदविद्यमान इत्यन्यदेतत् । नचैवं प्रथमस्य विशेषणाभेदः । विशेष्यान्वयितानन्वयितत्वेन भेदात् । तथाच येन केनचित् सम्बन्धेन उपलक्षणस्यैव प्रकारत्वात् न स्वतः विशेषसिद्धिरित्याशङ्कानिरासपूर्वकमुपसंहारव्याजेन दृष्टान्तान्तरमुखेन युक्त्यन्तरमित्यमर्थमाह । एवञ्चेति । ननु नोपलक्षणस्य कारणत्वं अपितु उपलक्ष्यधर्मिण एवेत्यत आह ॥ उपलक्षणेति ॥ तत्तदुपलक्षणस्य अकारणत्वे धर्मिण एकत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः ॥ अन्यन्नामतथेति ॥ तथाचासतीति सत्यगर्भकारणत्वाशंकामेव नार्हतीति भावः ॥ शिलोद्धरणार्थमिति ॥ तथा च द्वयोः समानविषयत्वेऽपि

2. आनभाविकत्वात् इति पाठान्तरम्

कृतेरतीतादिज्ञानस्य च काले प्रतियोगिविषययोरसत्त्वात् । पूर्वक्षणेऽसतश्च नियतपूर्ववृत्तित्वरूपकारणत्वव्याघातात् । उपलक्षणभेदमात्रेण च विलक्षणकार्याद्ययोगात् । अत्यंतासतश्च कदाप्यभावात् । शिलोद्धरणार्थं माषोद्धारप्रयत्ने कृतेऽपि तदनिष्पत्तेश्च । तथा सर्पज्ञानमपि विषयमनंतर्भाव्यैव असर्पज्ञानाद्विलक्षणम् । उक्तप्रमाणैरनुभवेन च सिद्धस्य तस्य जातिरूपस्य विशेषस्याख्यातुमशक्यत्वात् । घटज्ञानमिति व्यवहारः क्षीरमाधुर्यं चाक्षुषज्ञानमितिवद्युक्तः ।

किंच त्वन्मते तत्तद्वृत्तेस्तत्तदाकारत्वेन चैतन्यस्य च तत्तत्प्रतिबिंबितत्वेन वा तदभिव्यक्तत्वेन वा, मम तु तत्तज्ज्ञानस्य तत्तदीयस्वभावत्वेन वा तत्तव्यवहारजननशक्तत्वेन वा स्वत एव वैलक्षण्यम् । नहि गवयाकाररेखाया घटीयस्वभावस्य तदभावस्य वा दाहशक्तेर्वा यत्कार्यं तद्धेतुकोटौ गवयादेर्निवेशः । तस्माद्रज्जौ सर्पज्ञानस्य भ्रमत्वेनाधिकजन्यत्वेपि सर्पज्ञानत्वेन तद्धेतुजन्यत्वात् स्वत एवासर्पज्ञानात् वैलक्षण्यमिति न कोऽपि दोषः । तदुक्तम् ।

"सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकम्" इति ॥

"अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः । नांतर्भावितसत्त्वं चेत्कारणं तदसत्त्वत"

---

कार्यनिष्पत्तेः कृतिगत एव विशेष आदरणीय इति भावः । ॥ असर्पज्ञानाद्विलक्षणमिति ॥ यद्यपि सर्पज्ञानस्यासर्पज्ञानाद्वैजात्ये सर्पासर्पविषयकसमूहालम्बनजातिसाङ्कर्यापत्तिः सर्पासर्पज्ञानहेतुद्वयप्रयोज्यजातिद्वयस्यावश्यंभावात् । तथाप्युपाधिसाङ्कर्यवज्जातिसांकर्यं न दोष इति भावः ।

नतु तादृग्वैलक्षण्यसत्त्वे कथं घटज्ञानमित्येव व्यवहारः न तु तद्वैलक्षण्यपुरस्कारेणेन्यत आह ॥ उक्तप्रमाणैरिति ॥ आख्यातुमिति ॥ स्वमात्रप्रवृत्तिनिमित्तकपदेनेति शेषः । किञ्चान्यं प्रति साधने यथा तथास्तु । आवयोस्तु सिद्धमेव स्वस्वमतानुसारेणेन्यत आह ॥ किंचेति ॥ घटीयस्वभावस्येति ॥ पूर्वोक्तयुक्तयवष्टंभेन प्रसाध्याङ्कक पदार्थं दृष्टान्त इति मंतव्यम् । दाहशक्तेरिति ॥ शक्तेरतीन्द्रियत्वेन दाहानुमेयत्वेऽपि तदनुमितशक्तेरेव प्रयोजनत्वम् । अन्यथा आत्माश्रयादिति भावः । ननु सर्पभ्रमयोः भवतु नाम यथाकथञ्चिद्वैजात्यम् । सर्पभ्रमे तु अधिकहेतुजन्यत्वेनैव इतरव्यावृत्त्युपपत्तौ स्वतो विशेषो नाङ्गीकार्य इत्याशङ्कामुपसंहारव्याजेन परिहरति ॥

इत्यादिखंडनोक्ताऽसत्कारणतायैव श्लोकस्याकारप्र(क्षेपे)श्लेषेण पठितुं शक्यत्वात् ,

"अंतर्भावितसत्त्वं चेदधिष्ठानमसत्ततः। नांतर्भावितसत्त्वं चेदधिष्ठानमसत्तत"॥ इत्यपि पठितुं शक्यत्वाच्च स्वव्याहता। कथमसतः सज्जायेतेत्यादिश्रुत्या नासतोऽदृष्टत्वादित्यादिसूत्रेण असद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादित्यादिस्वीयभाष्येण च विरुद्धाऽन्यत्र निरस्ता च। तस्माद्धेतुव्याप्त्यादीनामसत्त्वेऽसिद्ध्यादि दुर्वारमिति ॥

इति असतः साधकत्वाभावे बाधकोद्धारविवरणम् ॥२२॥

---

तस्मादिति॥ असत्पक्षानाद्विलक्षणमित्यर्थः॥ तत्मदेवेति॥ अत्र तच्छब्दो हेत्वर्थः॥ अन्तर्भावितसत्त्वंचेदिति॥ अत्र कारणं कारणत्वं, तदन्तर्भावितसत्त्वं चेत् सत्ताविशिष्टे वर्तते यदि तदा कारणत्वपर्याप्त्यधिकरणमसदेव प्राप्तम्। विशिष्टस्यासत्त्वात्। अंशतः आत्माश्रयः (आत्माश्रयादिति पाठः) नचेत् तथापि कारणमसदेव प्राप्तम्। सत्तायाः उपलक्षणत्वादित्यर्थः। यद्वा कारणत्वं यदि सत्ताघटितं तर्ह्यसदेव कारणं प्राप्तम्। विशिष्टे सत्ताघटितवृत्त्यभावात्। पूर्ववदात्माश्रयात्। नचेत्कारणत्वं सत्ताघटितं तदा कारणमसत्प्राप्तम्। सत्ताघटितकारणत्वास्यासति प्रवृत्तौ दोषाभावादित्यर्थः। अथवा कारणं सत्ताघटितं चेत् तदा तत्कारणत्वमसत्प्राप्तम्। स्वघटिते स्वावृत्तेः। शेषं पूर्ववत्। यद्वा कारणत्वं यदि सत्तायामस्ति तदा असतः कारणत्वापत्तिः। सत्तायास्तत्राभावात्। न चेत् तदा सत्त्वमसत्प्राप्तम्। अर्थक्रियाकारित्वाभावादित्यर्थः। तथाच तदलीकत्वे असदेव कारणत्वं प्राप्तमित्यर्थः। अस्यैव श्लोकस्येति। अन्तर्भावितसत्त्वं चेदकारणमसत्ततः। नान्तर्भावितसत्त्वं चेदकारणमसत्ततः॥ इति पठितुं शक्यत्वादित्यर्थः। ननु अस्माभिः सतः साधकत्वं खंडनीयम्। नत्वसतः साधकत्वमपि साधनीयम्[1], इत्यत आह॥ अन्तर्भावितेति। ननु प्रतिबंदीमात्रं न दूषणमित्यत आह। अन्यत्रेति॥ किमतो यद्येवम् अत आह॥ तस्मादिति॥

इति असतः साधकत्वाभावे बाधकोद्धारविवरणम् ॥२२॥

1. स्थापनीयम् इति पाठान्तरम्

## ॥ अथ दृग्दृश्यसम्बन्धानुपपत्तिभङ्गः ॥

अनुकूलतर्कहीनाश्च मिथ्यात्वहेतवः । अत्र केचिन्मायिभिक्षवः "अन्यथेत्संविदो नीलं न तद्भासेत संविदि । भासते चेत् कुतः सर्वा न भासेतैकसंविदि ॥ नियामकं न संबंधं पश्यामो नीलतद्धियोः" । इत्यादिवदद्भिरात्मख्यातिवादिभिरुक्तं ग्राह्यलक्षणाभावाख्यं तर्कं भिक्षित्वाहुः। दृश्यस्य सत्यत्वे न तावज्ज्ञानं तदसंबद्धं प्रकाशकं अतिप्रसंगात्, नापि संबद्धम्, आत्मगुणस्य ज्ञानस्य ज्ञेयेन संयोगसमवाययोरयोगात् । अन्यस्य च संबंधस्याऽभावात्, विषयविषयिभावस्य चाऽद्विष्ठत्वेनासंबंधत्वात्, दुर्निरूपत्वाच्च । तथाहि, विषयत्वं किं ज्ञानजन्यफलाधारत्वं ज्ञानजन्यहानादिबुद्धिगोचरत्वं वा ज्ञानकर्मत्वं वा ज्ञानाकारार्पकत्वं वा दृश्यमानत्वे सति तत्त्वं वा ज्ञानजन्यव्यवहारयोग्यत्वं वा यत्संनिकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति वा यस्यां संविदि योऽर्थोऽवभासते स तस्य विषय इति वा संबंधांतरमंतरेण यो यज्ज्ञानावच्छेदकः स तस्य विषय इति वा । आद्येऽपि फलं न तावज्ज्ञातता, अनंगीकारात्, अतीतादावसंभवाच्च । नापि हानादिः गगनादौ तदयोगात् कलधौतमलादेरपि तज्ज्ञानविषयत्वापाताच्च । नाप्यभिज्ञाभिलपने । तयोर्ज्ञेयानिष्ठत्वात् । न द्वितीयः । हानादिबुद्धीनां तदजन्यत्वात् । गोचरताया एवाद्याप्यनिरूपणाच्च । न तृतीयः । ईश्वरज्ञानस्यातीतादिज्ञानस्य च कर्मकारकाजन्यत्वात् । न चतुर्थः । ज्ञानतदाकारयोरभेदेन सर्वेषां ज्ञानहेतूनां विषयत्वापातात् । न पंचमः । दृश्यमानताया एवाद्याप्यनिरूपणात् । न षष्ठः । योग्यतायां योग्यतांतराभावात् । न सप्तमः । नित्येश्वरज्ञानस्य निर्विषयत्वापातात् । अष्टमेऽपि संविदीति न तावदधिकरणसप्तमी । ज्ञानस्य ज्ञेयं प्रत्यनधिकरणत्वात् । नापि विषयसप्तमी । तस्यैव निरूप्यमानत्वात् । संविदो विषयत्वम्, अर्थस्य विषयित्वमिति

---

॥ भिक्षित्वेति ॥ युक्त्याभासोपन्यासेऽपि न परस्य स्वात्मलाभ इति भावः । प्रकाशकमिति ॥ प्रकाशकरूपमित्यर्थः । नन्वयमुत्कर्षसम इत्यत आह ॥ दुर्निरूपत्वाच्चेति ॥ संबन्धांतरमंतरेणेति ॥ यतश्च देवदत्तस्य घटज्ञानमित्यत्र देवदत्तस्यापि विषयत्ववारणाय ॥ तदजनकत्वादिति ॥ हानादिबुद्ध्यजनकत्वादित्यर्थः । गोचरताया इति । विषयतातिरिक्ताया इति शेषः । ज्ञानतदाकारयोरित्यर्थः । इदमुपलक्षणम् । अतीतघटादेरविषयत्वं स्यादित्यपि बोध्यम् । योग्यतायामिति । अत्यन्ताभावादन्यस्याप्रसक्तेरिति भावः । मुख्यविभक्त्यर्थगतः प्रकृत्यर्थगतस्वार्थबोधकत्व-

वैपरीत्यापाताच्च। नापि सति सप्तमी। भासमानताया एवाद्याप्यनिरूपणात्। न नवमः। यत्समवेतं रूपज्ञानमित्यत्र रूपज्ञानात्मसमवायस्य संबंधांतरं विनैव रूपज्ञानावच्छेदकस्य तद्विषयत्वापातात्। तस्मात् सत्यत्वे दृश्यत्वानुपपत्तेर्दृग्दृश्ययोराध्यासिक एव संबंध इति।

अत्रोच्यते। सर्वस्यापि दृश्यस्य ब्रह्मात्मैकदृगध्यस्तत्वेऽपि कस्यचित्कदाचित्कचित्प्रति प्रकाशाय त्वयापि तत्तत्संनिकृष्टेंद्रियजन्यतत्तदाकारवृत्तिद्वारक एवाऽनावृतदृक्संबंधः स्वीकृतः। तथाच सत्यत्वेऽपि तद्द्वारक एव संबंधोऽस्तु किमाध्यासिकसंबंधदुर्व्यसनेन। नहि त्वन्मते विज्ञानवादिमत इव तत्तदर्थास्तत्तज्ज्ञानेऽध्यस्ताः। सत्यायाः शुद्धदृशः स्वतो भेदाभावादुपाधिविशिष्टाया भेदेऽपि घटादिवन्मिथ्यात्वेन तदधिष्ठानत्वायोगात्। उपाध्युपलक्षितायास्सत्यत्वेऽप्यभेदात्। कथंचिद्भेदेऽपि वृत्तिद्वारकसंबंधात्प्रागध्यस्तत्वरूपे संबंधे सत्यपि दृश्याप्रतीतेः।

किंच किं घटाकारवृत्तिप्रतिबिंबितं चैतन्यं घटप्रकाशकं किंवा तदभिव्यक्तं घटाधिष्ठानचैतन्यम्। नाद्यः। आध्यासिकसंबंधस्याऽतंत्रत्वापातात्। नांत्यः। आवश्यकेन वृत्तिप्रतिबिंबितेनैव प्रकाशोपपत्तौ तेनाधिष्ठानचिदभिव्यक्त्यादिकल्पनायोगात्।

किंच घटाधिष्ठानस्य सत्यस्य चिन्मात्रस्य चरमसाक्षात्कारात्पूर्वं नाभिव्यक्तिः। अभिव्यक्तस्य तु घटाधिष्ठानचैतन्यस्य न तदधिष्ठानत्वम्। आत्माश्रयात्।

किंच घटप्रकाशिकाया दृशो घटवन्मिथ्यात्वे न तदधिष्ठानत्वं सत्यत्वे दोषजन्यत्वेन प्रमात्वात् सत्यं स्वविषयं प्रति नाधिष्ठानत्वमित्युभयतःपाशा रज्जुः। यत्तूक्तं ज्ञानज्ञेययो-

---

नियमादिति भावः। भासमानताया इति। सप्तमीप्रयुक्तदोषापगमेऽपि योऽर्थोऽवभासते इत्यत्र भासमानताया विषयतारूपत्वेन आत्माश्रयावितिि भावः। ज्ञातो घट इति विशिष्टबुद्धेः कदाचित्कत्वकादाचित्कत्वयोर्निर्वाहाय स्वरूपसम्बन्धभिन्नः कश्चिदागन्तुकः सम्बन्धः उभाभ्यामवश्यं वाच्यः। अधिष्ठानदृशः सनातनत्वात् सार्वत्रिकत्वाच्च। स च नाध्यासिकः। स्वतः सिद्ध-प्रमात्वानुपपत्तेः। किंतु सत्य एव। स्वरूपसम्बन्धधर्मिकल्पनायाः उभयपक्षेऽपि समानत्वादित्यभिप्रेत्य सिद्धान्तयति। सर्वस्यापीति। ननु घटाद्यधिष्ठानस्यापि भिन्नभिन्नत्वात् न वृत्तिद्वारकसम्बन्धापेक्षेत्यत आह। सत्याया इति। अधिष्ठानभूताया इति शेषः। ननु उपलक्षणस्यापि व्यावर्तकत्वेन भेदकत्वमस्त्येव। विशेषणस्यापि सत्त्वं सत्येव मूलमित्यत आह। कथंचिदिति।

ननु वृत्तेरावरणभङ्गार्थत्वेन वृत्तेः प्राक् तद्भावेन दृश्याध्यस्तत्वेऽपि न सर्वदा दृश्यस्य भानमिति नागन्तुकसम्बन्धापेक्षेत्यरुचेराह। किंचेति। ननु वृत्तिप्रतिबिम्बितचैतन्यस्य विषयाधिना सम्बन्धाभाव एवाधिष्ठानचिदभिव्यक्त्यादिकल्पक इत्यनुपपत्तेराह। किंचेति। न च चरम-

र्नसंबंध इति तन्न। गुणगुण्यादेस्संयोगासंभवे समवायवत् ज्ञानज्ञेययोरुभयासंभवेऽन्यस्य संभवात्। अभावधर्म्मतलं ज्ञातो घटः दृष्टो घटः घटस्याभाव इत्यादिका परस्परासंयुक्तासमवेतविशेषणविशेष्यविषयकविशिष्टधीः विशेषणविशेष्यतत्संबंधविषयिका, विशिष्टधीत्वात् दंडीति विशिष्टधीवत्। उक्ता जन्यप्रमा विशेषणविशेष्यसंबंधनिमित्तिका अबाधितविशिष्टजन्यधीत्वात्, संमतवत्। विमता धीः अबाधितविशेषणविशेष्यसंबंधविषयिका, अबाधितविशिष्टधीत्वात्, दंडीतिप्रमावदित्यनुमानात्तत्सिद्धेः। गोमांश्चैत्र इत्यादिधीरपि पक्ष एव। उक्तं हि 'षष्ठी स्थानेयोगे"त्यत्र महाभाष्ये "एकशतं षष्ठ्यर्था" इति, ते च स्वस्वामिभावादयः संबंधाः, षष्ठीदंडके पठिता इत्युक्तं कैयटे। प्रमितवस्त्वनुसारेण हि प्रक्रिया कल्प्या न तु स्वकल्पितप्रक्रियानुरोधेन प्रमितत्यागः। न च संबधठित्वमेव बाधकम्। अन्योन्याश्रयात्। अन्यथा संबंधैक्यं समवायबाधकं स्यात्। नाप्यतीतादौ संबंध्यभावो वा ज्ञानज्ञेययोर्विप्रकर्षो वा बाधकः। अस्य संबंधस्य समवायवत् संबंध्यभावविप्रकर्षाद्यविरुद्धत्वेनैव धर्मिग्राहकेण सिद्धेः। अन्यथा हि पृथक्सिद्धयोरेव संयोगसंबंधदर्शनात् अपृथक्सिद्धिः समवायसंबंधस्य बाधिका स्यात्। ध्वंसादेश्चातीतादिना मिथ्यात्वलक्षणांतर्गतस्यात्यंताभावस्य च प्रतियोगिना वेदांतनिष्ठशक्तितात्पर्ययोश्च ब्रह्मणा (ज्ञात्राश्रि) जीवाश्रिताज्ञानस्य चाऽज्ञेयेन ब्रह्मणा व्यवहारस्य च व्यवहर्तव्येन ब्रह्मणा मुमुक्षायाश्च मोक्षेण त्वदुक्तदूषणस्य च दूष्येण त्वद्वाक्यस्य चार्थेन ज्ञानस्य ज्ञेयेन संबंधो नेति त्वद्वाक्योक्तसंबंधाभावस्य स्वज्ञानेनाऽसंबंधात् स्वन्यायस्वक्रियास्ववचनविरोधाः स्युः। नहि ज्ञेयं ज्ञान इव प्रतियोगिशक्याज्ञेयेष्यमाणव्यवहर्तव्यादयः अभावशक्त्यज्ञानेच्छाव्यवहारादावप्यन्ताः। एतेन

---

साक्षात्कारात् पूर्वं चिन्मात्रस्य अनभिव्यक्तत्वे जगदान्ध्यं स्यादिति वाच्यम्। प्रमाणाधीनज्ञानेनापि तत्परिहारसम्भवादिति। इत्यादिकेति। अत्र आदिपदेन गोमांश्चैत्र इत्यादिधीपरिग्रहः। अत एव वक्ष्यति गोमांश्चैत्र इत्यादिधीरपि पक्ष एवेति। बाधस्फोरणाय परस्परासंयुक्तेत्यादि विशेषणम्। विशिष्टधीत्वादिति। विशेषणविषयकधीत्वादित्यर्थः। ईश्वरप्रमायां च अंशतो भ्रमे बाधवारणाय॥ जन्यप्रमेति॥ साक्षात्काररूपेत्यपि विशेषणीयम्। अतो नानुमित्यादावंशतो बाधः। अबाधितेति। ईश्वरज्ञाने भ्रमे च व्यभिचारवारणाय॥ अबाधितजन्येति। धीपदं च साक्षात्कारपरम्। तेनानुमित्यादौ न व्यभिचारः॥ विशिष्टेति निर्विकल्पके व्यभिचारवारणाय। द्विरवबंधेति॥ इभयज्ञानीत्वमंबेत्यर्थः। अन्योन्याश्रयादिति। एककारान्तर्भावे न बाधकता। तदर्थज्ञानापि न सिद्धिन इति भावः। अस्येति। यथा समवायस्य नीलाद्यभावसत्तायामपि

* "न्याये दृढेऽन्यसामान्यात्किं दृढेऽन्यदपि बाध्यताम् ।
न ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्"

इति निरस्तम् । स्वव्याहतस्य न्यायाभासतया दार्ढ्याभावात् । अन्यथा जातिवाद्यपीत्थं वदेत् । नचेच्छायास्तज्ज्ञानजन्यत्वादन्यस्तत्संबंधो नेति युक्तम् । ज्ञाने संनिकर्षाधीनस्येव स्मृतावनुभवाधीनस्येव च इच्छायां ज्ञानाधीनस्य विषयसंबंधस्यानुभवात् । अन्यथा घटपटाविति ज्ञानजन्यायाः पटेच्छाया घटीयत्वापातात् । नित्येश्वरेच्छाया विषयाऽसंबंधापाताच्च । पुत्रादिधीजन्यसुखादेस्तद्विषयत्वापाताच्च । अज्ञानस्य च तज्ज्ञाननिवर्त्यत्वातिरिक्ततद्विषयत्वाभावे तन्निवर्त्यत्वमेव न स्यात्, तस्य समानविषयकज्ञाननिवर्त्यत्वात् । अज्ञानस्यांधकारवत् आश्रयाच्छादकत्वेऽपि सविषयत्वस्य स्वीकृतत्वाच्च । यदि च भावाभावादेः संबंधांतरमंतरेण तद्विशिष्टव्यवहारजननयोग्यस्वरूपात्मकः स्वभावसंबंधो वा असंबंधरूपं प्रतियोगित्वादिकं वा नियामकं सत्संबंधकार्यकारि तर्हीहापि विषयत्वं तथैवास्तु । भावाभावादेरपि संबंधो मिथ्यैवेति चेन्न । प्रपंचमिथ्यात्वसिद्धेः प्राक् तदसिद्ध्याऽन्योन्याश्रयात् । घटस्याभाव इत्यादावभावसम-

---

तत्सम्बन्धत्वं नापैति यथा वा सम्बन्धिविप्रकर्षे तत्सम्बन्धत्वं नापैति तथा ज्ञानज्ञेययोः सम्बन्धस्यापि सम्बन्ध्यभावेऽपि तत्सम्बन्धत्वं नापैतीत्यर्थः । उक्तेषु क्वचिद्बाधमाशंक्य निराकरोति ॥ नचेति ॥ घटीयत्वापातादिति । ननु तद्विषयकज्ञानजन्यत्वमात्रेण तद्विषयकत्वे तथापि तस्याः घटीयत्वापत्तिः, अंशभेदविवक्षायां च नास्मत्पक्षे दोषः । न, घटं जानामीत्यनुभवात् (अनुभववत्) घटमिच्छामीत्यनुभवेन इच्छायाः घटीयत्वसिद्ध्या उक्तदोषाप्रसरादिति । नित्येश्वरेच्छाया इति ॥ न च जन्येच्छायामेव सविषयकत्वे[1] ज्ञानजन्यत्वं प्रयोजकमिति वाच्यम् । अननुगमापत्तेः ॥ पुत्रादीति ॥ अत्र प्रथमादिपदात् हितादिपरिग्रहः ॥ द्वितीयादिपदात् अन्यदुःखादिपरिग्रहः ॥ नचारोपे सति निमित्तानुसरणं ननु निमित्तमस्तीत्यारोप इति न्यायेन जनकीभूतज्ञानस्येच्छासंबन्धरूपत्वमस्तु । इष्टो घट इतीच्छाविशिष्टबुद्धिमत्त्वेन संबन्धकल्पनावश्यकत्वात् । नचैवंमुखे तत्र विशिष्टबुद्ध्यभावेन संबन्धस्य विचारपथानारोहादिति वाच्यं । तर्हि ज्ञानवदेवेच्छायामपि साक्षादेव सविषयत्वमस्तु । नन्वुक्तं प्रयोजकमतिप्रसक्तत्वादिति भावः । नन्वन्धकारवदाश्रयाच्छादकस्याज्ञानस्य न तद्विषयकत्वमित्याशङ्क्याह ॥ अज्ञानस्येति ॥ तथा च प्रमाणाभावेनांधकारस्य निर्विषयत्वेऽपि शास्त्रार्थं न जानामीत्यनुभवबलेनाज्ञानस्य सविषयत्वं दुर्निवारमिति भावः ॥ नियामकमिति ॥ अस्यैव विवरणं संबन्धकार्यकारीति ॥ अन्योन्याश्रयादिति ॥ प्रपञ्चमिथ्यात्वे सिद्धे तदन्तःपातिभावाभावसंबन्धादिमिथ्यात्वसिद्धिः । तत्सिद्धौ च तदृष्टान्तेन दृग्दृश्यसंबन्धमिथ्यात्वसिद्धिरिति ।

* न्याये दृढे न्यायसाम्यात् किमन्यदपि बाध्यताम इति पाठान्तरम्　　1. सविषयकत्वमिति पाठान्तरम्

सत्ताकसंबंधवत् घटस्य ज्ञानमित्यत्रापि ज्ञानसमसत्ताकसंबंधस्य स्वीकार्यत्वाच्च। अस्तु वा संयोगादिवत् विषयत्वमपि मिथ्यैव। न च तावता प्रस्तुतदृश्यमिथ्यात्वसिद्धिः। ज्ञानस्येव ज्ञेयस्य सत्यत्वेऽपि तत्संबंधमिथ्यात्वोपपत्तेः। नच संयोगादिरपि त्वन्मते तात्विकः। नच तावता दंडे चैत्रोऽध्यस्तः। नचाध्यासिकसंबंधोऽपि तात्विकः येनेच्छादौ क्लृप्तसंबंधत्यागेन ज्ञाने स आश्रीयेत। नचाभावादेः प्रतियोग्यादिना संबंधोऽस्ति न तु ज्ञानस्य ज्ञेयेनेति युक्तम्। नियामकाभावात्। दृग्दृश्ययोस्संबंधो नेत्येतद्वाक्यजज्ञानस्य स्वज्ञेयेन श्रवणमननादीनां च श्रोतव्यादिरूपेण ब्रह्मणा चरमसाक्षात्कारस्य च साक्षात्कर्तव्येन ब्रह्मणा असंबंधेन स्वक्रियादिविरोधापाताच्च। नहि दृग्दृश्यसंबंधो नेति वाक्यज(न्य)ज्ञाने दृग्दृश्यसंबंधाभाव-चरमसाक्षात्कारादौ च ब्रह्माध्यस्तम्। ब्रह्मणि अध्यस्तस्य तत्साक्षात्कारत्वे घटसाक्षा-त्कारस्यापि तत्त्वापातात्। धर्मादौ तत्तात्पर्यादिरनध्यासाच्च। इहापि ज्ञेये ज्ञानाध्यासा-पाताच्च। एवं च,

---

ननु तद्दृष्टान्तेन दृग्दृश्यसम्बन्धमिथ्यात्वं न मया साध्यते येनान्योन्याश्रयः स्यात्। किंतु तद्दृष्टान्तेन त्वया दृग्दृश्ययोः सम्बन्धस्य अनध्यस्तत्वात् न साधयितुं शक्यत इत्युच्यते इत्यपरितुष्यन्नाह ॥ घटस्याभावेति ॥ अस्तुवेति । न चाध्यस्तसम्बन्धनिरूपकत्वेन मिथ्यात्वसिद्धिः। दृश्येन व्यभिचारादिति भावः।

ननु मिथ्याभूतसम्बन्धप्रतियोगिनोर्मध्ये एकमपरस्मिन्नध्यस्तमिति व्याप्तिः। तत्र च ब्रह्मणि व्यभिचारो न दोष इत्यत आह ॥ नचेति ॥ मिथ्याभूतसंयोगप्रतियोगिनोः ब्रह्मण्यध्यस्तत्वेऽपि परस्परमनध्यासादित्यर्थः।

ननु मिथ्याभूतसम्बन्धप्रतियोगित्वेन नाध्यस्तत्वनियमः, किंतु आध्यासिकसम्बन्धप्रति-योगित्वेन अन्यतरस्य अध्यस्तत्वनियमः स्यादित्यत आह ॥ नचाध्यासिक इति ॥ तथा च विशेषाभावात् (विशेषणाभावात्) क्लृप्तपरित्यागे गौरवाच्च तस्य क्वापि असिद्धेरेवेति भावः।

ननु दृग्दृश्ययोः सम्बन्धान्तराविरूपणात् आध्यासिकसम्बन्ध एव वाच्य इत्याशङ्कय निराकरोति ॥ नचाभावादेरिति ॥ सम्बन्धसाधकविशिष्टप्रतीतेरुभयत्राविशेषादिति भावः। यद्यपि एतत् प्रागेव आशंक्य निराकृतम्, तथापि उदाहरणोत्तरमुखेन तस्यैव दृढीकरणा-र्थत्वमिति ध्येयम्। ब्रह्मणीति। एवमपि त्वदभिमताध्यासिकसम्बन्धानपाय इति भावः।

"दृग्दृश्ययोर्नसंबंध इति वाक्योत्थसंविदि ।
अनभ्यासात्तदर्थस्य संबंधोऽन्यत्तयोर्मतः" ॥

यद्यपि ज्ञानं प्रकाशस्तथापीच्छादिवदांतरत्वेन प्रदीपवैलक्षण्यात् परोक्षवृत्तौ दर्शनाच्च विप्रकृष्टेनापि प्रकाश्येन संबंधो युक्तः। अन्यथा दीपवदेवाध्यासिकसंबंधो न स्यात्। किंच तवापि मते ज्ञेयस्य न स्वज्ञानेऽध्यस्तत्वनियमः। अनध्यस्तस्य तुच्छस्याविद्यानिवृत्तिः पंचमप्रकारेतिमतेऽविद्यानिवृत्ते(रभावाद्वैतमते)र्भावाद्वैतमते अभावस्य चात्मरूपत्वेऽपि स्वज्ञानेऽनध्यासात्। अपरोक्षानुभवैकरसे ब्रह्मण्यध्यस्तस्य व्यावहारिकस्यातीतादेर्नित्यातींद्रियस्य च परोक्षानुभवरूपे स्वज्ञानेऽनध्यासात्। स्मर्यमाणस्य च स्मृतिरूपे वृत्त्यात्मके स्वज्ञानेऽनध्यासात्। प्रातिभासिकस्य च प्रातिभासिके स्वज्ञाने व्यावहारिकस्य च वर्तमानघटादेर्व्यावहारिके स्वज्ञानेऽनध्यासात्। त्वन्मतेऽर्थवद् भ्रमरूपज्ञानस्यापि कल्पितत्वात्। अध्यस्ततुल्यत्वेन कल्पितस्य चानधिष्ठानत्वात् प्रातिभासिकात् पूर्वमसत्यास्तत्प्रतीतेरधिष्ठानत्वायोगाच्च । त्वयापि रूप्यादिकमिदमंशावच्छिन्नचैतन्येऽध्यस्तम्, रूप्याकाराविद्यावृत्तिप्रतिबिंबितेन तु चैतन्येन प्रकाशत इत्यंगीकाराच्च, रूप्यादेः स्वज्ञानेऽध्यस्तत्वेऽधिष्ठानज्ञानाज्ञानाभ्यामध्यासजन्मनि वृत्त्योर्नियतत्वाद्रूप्यज्ञानस्याज्ञानज्ञानाभ्यां रूप्यभ्रमजन्मनिवृत्त्योः प्रसंगाच्च। ज्ञानं रूप्यमिति धीप्रसंगाच्च । घटादेः स्वसन्निकृष्टेंद्रियजन्यात् स्वज्ञानात्पूर्वं सत्त्वेन स्वज्ञानेऽध्यासायोगाच्च ।

ननु या घटसन्निकर्षजा वृत्तिर्न तया घटः प्रकाश्यः, येन च प्रकाश्यः घटाधिष्ठानचैतन्येन न तद्घटसन्निकर्षजन्यमिति चेन्न। त्वन्मतेऽपि वृत्तेरेवाज्ञानविरोधित्वात्। अज्ञाननिवर्तकादन्यस्य च ज्ञानस्यानुपलंभात्। त्वयापि,

---

ननु ब्रह्मणि तत्साक्षात्कारोऽध्यस्त इति वदता यो यत्साक्षात्कारः स तत्राध्यस्त इति विवक्षितम्। उत यद्यद्विषयकम् तत् तत्राध्यस्तमिति विकल्प्य आद्यं निराकरोति ॥ ब्रह्मण्यध्यस्तस्येति॥ द्वितीयं निराह ॥ धर्मादाविति ॥ इहापीति ॥ घटादावपीत्यर्थः ।

ननु ज्ञानस्यापि प्रकाशत्वेन दीपादिवत् विप्रकर्षे प्रकाश्येन कथं सम्बन्ध इति शंकते ॥ यद्यपीति ॥ तथापीति ॥ शब्दानुगमो नत्वर्थानुगम इति भावः ॥ परोक्षवृत्ताविति ॥ यद्यपि परोक्षवृत्तेः तदाकारत्वमात्रं न तद्विषयत्वं वक्तुं शक्यम्, तथापि परोक्षवृत्त्यनन्तरं वह्निमनुमिनोमीत्यनुभवबलेन सविषयत्वमावश्यकमिति भावः। ॥ विप्रकृष्टेनेति ॥ स्वमध्ये मूर्त-

"घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः । विज्ञातो घटइत्युक्तिर्ब्रह्मानुभवतो भवेत्"। इतिवदता वृत्तिप्रतिबिंबितस्य घटानधिष्ठानस्य चैतन्यस्यैव घटानुभवत्वोक्तेश्च ।

किंच दृश्यत्वान्यथानुपपत्त्या मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता किंवा सत्यत्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रम् । नाद्यः । तत्सामग्र्यभावात् । आक्षेप्यस्योपपादकत्वं प्रमाणाविरुद्धत्वं चाक्षेपकस्यानुपपद्यमानत्वं प्रमितत्वं चेतिह्यर्थापत्तिसामग्री । नचाक्षेप्यं संबंधिमिथ्यात्वमाक्षेपकस्य संबंधस्योपपादकम् । किंतु प्रतिकूलमेव । नचाध्यस्तत्वरूपसंबंधस्य न तत्प्रतिकूलम् । तस्याधाप्यसिद्ध्यनाक्षेपकत्वात् । नच मिथ्याभूतसंबंधस्य न तत्प्रतिकूलम् । स्वतःप्रमाणप्रत्यक्षसिद्धसंबंधस्य विनैव बाधकं मिथ्यात्वायोगात् । नच दृश्यमिथ्यात्वमेव बाधकम् । अन्योन्याश्रयात् । प्रत्यक्षादिविरुद्धं चाक्षेप्यमिथ्यात्वम् । नच प्रत्यक्षाद्यविरुद्धसंबंधांतरकल्पनेनैव दृश्यत्वोपपत्तौ प्रत्यक्षस्य स्वतःप्राप्ततत्वावेदकत्वत्यागो युक्तः । नाप्येकस्य दृश्यत्वस्योपपत्तये प्रमितानेकवस्तुत्यागो युक्तः । आक्षेपकं च नतावद्दृगध्यस्तत्वम् । तस्याक्षेप्याभिन्नत्वेन मां प्रत्यसिद्धेः । नापि दृग्विषयत्वरूपो दृक्संबंधः । तथासिद्धेः । सिद्धौ वा तेनैव संबंधेन प्रकाशोपपत्त्याध्यस्तत्वं विनाऽनुपपत्त्यभावात् । नापि दृगधीनसिद्धिकत्वं, दृग्विषयत्वातिरिक्तसिद्ध्यसंमतेः । नच दृक्संबंधसामान्यमाक्षेपकम् । तस्य प्रसक्तविशेषप्रति-

---

षतेत्यर्थः । अन्यथेति । प्रतिपन्नधर्म्यानंगीकार इत्यर्थः । अज्ञाननिवर्तकादन्यस्येति । नच तमेव मान्तमिति श्रुत्या उपलभ्यत इति वाच्यम् । तच्छ्रुतेरन्यार्थत्वस्य वक्ष्यमाणत्वादिति भावः । आभासस्येति । वृत्तिप्रतिबिम्बितचैतन्यस्येत्यर्थः । किंतु प्रतिकूलमेवेति । सम्बन्धस्यापि किंचित् प्रतिबन्धित्वेन मिथ्यात्वस्य तदभावरूपत्वादिति भावः । अनाक्षेपकत्वादिति । । मिथ्यात्वस्येति शेषः । मिथ्याभूतसम्बन्धस्येति । अध्यस्तत्वापेक्षया मिथ्यात्वं भिन्नमिति शंकितुरिदयम् । अन्योन्याश्रयादिति ॥ एतावतानुकूलतर्कस्य मिथ्यात्वानुमित्यधीनसिद्धिकत्वेन पूर्वमनवतारादित्यर्थः । आक्षेप्यमिथ्यात्वस्य अनुपपादकत्वमुक्त्वा अर्थापत्तिसामग्रीप्रविष्टं प्रमाणविरुद्धत्वं च नेत्याह ॥ प्रत्यक्षादीति ॥ नाप्येकस्येति । यद्यपि दृश्यत्वानुपपत्तौ मिथ्यात्वमपि (प्रतीतत्वमपि) अनुपपन्नम्, तथापि सम्बन्धान्तरकल्पने तदुपपन्नमेवेति पूर्वोक्तार्थावष्टम्भेन एतदुक्तमिति । अर्थापत्तिसामग्र्येकदेशमाक्षेपकमिति दूषयति । आक्षेपकं चेति ॥

ननु दृक्सम्बन्धत्वं क्रमविशेषवृत्तितया स्वात्मानमलभमानं स्वाश्रयस्याध्यस्तत्वमाक्षिपतीत्यवांतरविशेषरोति ॥ नचेति ॥ तस्येति । अनध्यस्तत्वरूपसम्बन्धवृत्तित्वेनापि दृक्सम्बन्धित्व-

षेवेऽध्यस्तत्वरूपविशेषे पर्यवस्यतीति युक्तम् । तस्य घटस्य ज्ञानमिति धीसिद्धसंबंधसामान्यं प्रत्यविशेषत्वात् । नहि रूप्यस्य शुक्तिरित्यस्ति । नान्त्यः । सत्त्वेऽप्युक्तरीत्या संबंधान्तरेणैव दृश्यत्वोपपत्त्याऽप्रयोजकत्वात् । किंच न तावदनिर्वाच्यत्वाभाव आपादकः । तद्वतोऽपि तुच्छस्य परोक्षधीवेद्यत्वेन दृश्यत्वात् । नापि सत्त्वम् । सत्त्वेऽपि ब्रह्मणस्त्वन्मतवद्घटस्येव घटस्यापि स्वज्ञानेन संबंधोपपत्तेः । किंचाध्यासिकसंबंध इति कोऽर्थः । किं यःकश्चित्संबंध एवाध्यस्त इति किं वा तदध्यस्तमेव संबंध इति । आद्ये न दृश्यमिथ्यात्वसिद्धिरित्युक्तम् । नान्त्यः । त्वन्मते ज्ञेयवस्तज्ज्ञानस्याप्यध्यस्तत्वेन तत्र तस्यानध्यासादित्युक्तत्वात् । एवंच—

"शाब्दवृत्तेर्हि विषयो ब्रह्म तत्र न कल्पितम् । यथा तथा दृग्विषयो दृश्यं न दृशि कल्पितम् ॥ अविद्याविषयो ब्रह्म ह्यविद्यायां न कल्पितम् । यथा तथा दृशा ग्राह्यं न विश्वं दृशि कल्पितम् ॥"

तस्माद्दृग्दृश्येच्छेप्यमाणादेर्नाध्यासिकस्संबंधः । किंत्वन्य एव । कोऽसाविति चेत् ,न । संबंधेनैवातिप्रसंगे निरस्ते विशेषजिज्ञासाया विशेषगतविशेषजिज्ञासाया इवानर्थकत्वात् । प्रमाणस्य चोक्तत्वात् । संयोगसमवायांतर्भावे च तल्लक्षणस्यैव बहिर्भावे तु तदितरत्वे सति संबंधत्वादेर्लक्षणत्वात्, विशेषसंज्ञायाश्च यथारुचि कल्प्यत्वात् । यत्तु संबंधस्य

---

मुपपन्नं नाक्षेपकमिति प्रसक्तेरिति भावः । ननु घटस्य ज्ञानमित्यत्रापि ज्ञानघटयोः आध्यासिक एव सम्बन्धोऽस्तु, इत्यत आह ॥ नहीति ॥ तथाच नैतादृशप्रतीतिराध्यासिकसम्बन्धविषयिणी भवितुमर्हतीति भावः । अनुकूलतर्कमात्रमिति द्वितीयं निराकरोति नांत्य इति । तदध्यस्तमिति । तत्र अध्यस्तत्वमित्यर्थः । उक्तमिति । अस्तु वेत्यादिनेति शेषः । तत्रेति ॥ ज्ञान इत्यर्थः । उक्तत्वादिति । त्वन्मते अर्थवदित्यादिनेति शेषः । उक्तमर्थं स्मारयन्नुपसंहरति । एवंचेति ॥ ननु कोऽसाविति किं लक्षणं पृच्छ्यते (पृच्छति इति पाठः) उत प्रमाणम् , आहोस्विन्नामेति विकल्प्य तत्र नाद्य इत्याह ॥ सम्बन्धेनैवेति । अनर्थकादिति ॥ (अनर्थकत्वादिति पाठः) नाति प्रयोजनकत्वादित्यर्थः । द्वितीयं निराह ॥ प्रमाणस्य चेति ॥ विशिष्टबुद्ध्यादिरूपस्येत्यर्थः (विशिष्टबुद्ध्या निरूप्यस्य चेत्यर्थः इति पाठान्तरम् )

ननु विशेषजिज्ञासावैयर्थ्यम् । तस्याः लक्षणजिज्ञासात्वेन लक्षणज्ञानस्य च व्यावृत्तिव्यवहारप्रयोजनकत्वादित्याशंक्याह ॥ संयोगेति । द्वितीयं निराह ॥ विशेषजिज्ञासायाश्चेति । (विशेषसंज्ञायांचेतिपाठः) सम्बन्धासिद्धिरिति । सम्बन्धस्य सम्बन्धिभिन्नत्वनियमादिति भावः । स्वव्याहतमिति । अध्यस्तत्वेऽपि एवं स्वपक्षेनाबाधनादिति भावः । ननु न स्वव्याहतम् ।

संबंधिभिन्नत्वेऽनवस्था, नचेत्संबंधासिद्धिरिति संबंधसामान्यखण्डनं, तत् उक्तरीत्या स्वव्याहतम्। युक्तं च दृश्यत्वाद्यंतरहीनस्यापि दृश्यत्वादेरिव संबंधस्यापि क्वचित्स्वनिर्वाहकत्वम्। यदपि ज्ञानविषयत्वनिरुक्तिखण्डनं, तत् प्रकृतानुपयुक्तम्। अनतिप्रसंगाय हि दृग्दृश्ययोस्संबंधो वाच्यः। न तु ज्ञानविषयत्वं निर्वक्तव्यम्। न च विषयत्वस्यानिरुक्तिमात्रेण विषयस्य मिथ्यात्वम्। विषयित्वस्यानिरुक्तावपि विषयीभूतदृग्वत् सत्त्वोपपत्तेः, स्वव्याहतं च। त्वयैव प्रमाणज्ञानं स्वविषयावरणेत्याद्युक्तेः। दृग्विषयत्वस्य हेतूकृतत्वाच्च। नच प्रमाणज्ञाने विषयोऽध्यस्तः। तदज्ञानजन्यं तज्ज्ञाननिवर्त्यं वाऽध्यासं प्रति विषयत्वाद्वा तदनुविद्धतया प्रतीयमानत्वविशेषाद्वाऽन्यस्य तत्राध्यस्तत्वस्याभावाच्च। न ह्यनिर्वाच्यत्वादिरूपं साधारणमध्यस्तत्वं दृग्विविशेषप्रकाश्यत्वे तन्त्रम्। किंच—

> यादृशं विषयत्वं ते वृत्तिं प्रति चिदात्मनः।
> तादृशं विषयत्वं मे दृश्यस्यापि दृशं प्रति॥

नन्वनिर्वाच्यमेव विषयत्वं मया व्यवहृतमिति चेन्न। विषयत्वस्यानिर्वाच्यत्वेऽपि तव ब्रह्मवन्ममापि जगतस्सत्त्वोपपत्तेः। त्वयापि व्यावहारिकसत्त्वस्यासंकीर्णव्यवहारस्य च सिद्ध्यर्थं व्यवहाराविसंवादिनो लक्षणस्यापि प्रमाणवदविवादादाविव वक्तव्यत्वाच्च। कथं च त्वया साध्यं मिथ्यात्वं निर्ब्रुवता साधनं दृग्विषयत्वं न निर्वक्तव्यम्। नच तथापि

---

आध्यासिकसम्बन्धस्यापि अनिर्वचनीयत्वांगीकारात् इत्यत आह ॥ युक्तं च दृश्यत्वादीति। अनादिपक्षात् हेत्वन्तरपरिग्रहः। दृश्यत्वान्तरांगीकारेऽनवस्थापत्तिः, अविशिष्टधीव्यावृत्तविशिष्टधीविषयस्यैव सम्बन्धत्वेन सम्बन्धस्य सम्बन्धिभिन्नत्वनियमोऽसिद्ध एवेति भावः।

ननु ज्ञानविषययोराध्यासिकसम्बन्धस्यैव मया स्वीकारात् न स्वव्याहतिरित्याशंक्य निराकरोति ॥ न चेति॥ त्वयाऽनभ्युपगमादिति भावः। तदज्ञानजन्यमिति ॥ तथाच अध्यस्तत्वसम्बन्ध इति वदतापि त्वया विषयत्वं स्वीकृतमेवेति भावः। ननु तत्राध्यस्तत्वं तत्प्रकाश्यत्वे न तन्त्रम्, किंतु अध्यस्तत्वसामान्यम्, अतो न स्वव्याहतिरित्याशंक्याह ॥ नहीति ॥ अतिप्रसंगादिति भावः। ननु अनिर्वचनीये विषयत्वे अनिर्वचनीयमेव लक्षणप्रमाणादि वक्तव्यमिति को दोष इत्यत आह ॥ कथंचेति॥ अन्यथा पदार्थाज्ञाने (पदार्थज्ञाने इति पाठः) अज्ञानरूपासिद्धिरिति भावः ॥ न च तथापीति ॥ तथाचासंकीर्णव्यवहारसिद्ध्यर्थं त्वयापि लक्षणं निर्वक्तव्यमिति भावः।

घटादौ पटाद्यसंकीर्णव्यावहारिकपृथुबुध्नोदराद्याकाराद्यज्ञाने असंकीर्णघटादिव्यवहारः। नन्वसंकीर्णाकारज्ञानमात्रेण तदुपपत्तौ किं तन्निर्वचनेनेति चेत् समं ममापि। इयांस्तु विशेषः। तव स आकारस्सद्विलक्षणः, मम तु सन्निति। अनिरूप्यमाणोऽपि स तव येन मानेनाप्रातिभासिकः, तेनैव मम तात्त्विकोऽस्तु। नच लक्षणोक्त्ययुक्तिभ्यां सदसद्वैलक्षण्य-रूपानिर्वचनीयत्वहानिलाभौ, ब्रह्मण्यपि श्रौतस्यापि जगत्कारणत्वादिलक्षणस्य कारणत्वादि-खण्डनरीत्या असम्भवात्। त्वयैव

"कीदृक्तत्प्रत्यगिति चेत्तादृगीदृगिति द्वयम्।
यत्र न प्रसरत्येतत्प्रत्यगित्यवधारय॥"

इति ब्रह्मण्यपि दुर्निरूपत्वस्योक्तत्वाच्च। प्रपञ्चादावपि त्वदुक्तानिर्वाच्यत्वादिलक्षण-सम्भवाच्च। "यत्कठिनं सा पृथिवी"त्यादिश्रुत्या पृथिव्यादीनामपि लक्षणोक्तेश्च। तस्मात्प्र-मितस्येत्थमिति निर्वक्तुमशक्यत्वं प्रतिपुरुषमुखं स्पष्टाबाधितदृष्टिदृष्टविलक्षणसंस्थानविशेषस्येव सत्त्वेऽप्यद्भुतत्वादेव युक्तम्। उक्तं हि "अद्भुतत्वादनिर्वाच्य"मिति। नहि शुक्तिरूप्यस्येतर-भेदकं रूप्यत्वं प्रातीतिकजातिरूपतया सुवचमिति तद्व्यावहारिकम्। न वा मुखसंस्थानविशेषो दुर्वच इति स प्रातिभासिकः, न वा ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादिकं खण्ड-नोक्तरीत्या दुर्वचमिति ब्रह्म तत्त्वतो नानन्दाद्यात्मकम्। तस्मान्निर्वचनायोग्यस्यापि विश्वस्ये-क्षुक्षीरादिमाधुर्यवत् ब्रह्मवच्च प्रामाणिकत्वादेव सत्त्वसिद्धेः सदसद्वैलक्षण्यरूपानिर्वाच्यत्वाय

---

नन्वनिरूप्यमाणत्वे तस्य तात्त्विकत्वं न स्यात् इत्याशंक्याह॥ अनिरूप्यमाणोऽपीति॥ ननु मास्तु प्रातिभासिकवैलक्षण्यं प्रपञ्चे। तथाच लक्षणानिर्वचने तात्त्विकमेव न सिध्येदि-त्याशंक्य निराकरोति॥ न च लक्षणोक्तीति॥ ब्रह्मण्यपीति॥ लक्षणानिर्वचनमात्रेणासत्त्वे ब्रह्मणोऽपि सत्त्वं न सिध्येदिति भावः॥ त्वयैवेति॥ तथा च दुर्निरूपत्वमात्रेण सत्यासिद्धिर्न-वक्तव्या स्ववचनविरोधादिति भावः॥ प्रपञ्चादाविति॥ तथाच त्वदीय लक्षणवत्तया निरूप्यत्वेन नासत्त्वमिति भावः।

ननु यतो वेत्यादिश्रुत्या ब्रह्मणो लक्षणाभिधानात् तस्य अनिर्वचनीयत्वेऽपि ब्रह्मणो न सत्त्वक्षतिः। प्रकृते तु नैवमित्यत आह॥ यत्कठिनमिति॥ किन्तर्हि सत्त्वप्रयोजकमित्यपेक्षायां तद्वदेव उपसंहरति। तस्मादिति॥ प्रामाणिकत्वादेवेति॥ स्वस्वरूपत्वेनेति शेषः।

निरुक्तिखण्डनं शब्दसाम्याद् भ्रान्तिमूलम् । नच केषाञ्चिन्निर्वचनाशक्तिमात्रेण वस्तूनां तद्योग्यत्वम् । उक्तं हि बौद्धाधिकारे "नहि ज्ञात्यन्तरेण नीलं द्रष्टुं वक्तुं च न शक्यत इति अज्ञेयमनिर्वाच्यमेव तत्, दुरवगाहत्वेनापि तदुपपत्तेः" इति । नच तदनिर्वचनं यथा मन्त्रस्य "मन्त्र" इत्यभियुक्तप्रयोग एव लक्षणं तथा ज्ञानविषयस्यापि "ज्ञानविषय" इत्यभियुक्तप्रयोग एव लक्षणम् । नचान्योन्याश्रयः, पूर्वपूर्वप्रयोगस्य ज्ञानेनोत्तरोत्तरप्रयोगोपपत्तेः । अथवा यज्ज्ञानं यदभिलपनरूपव्यवहारकारणं स तस्य विषयः । करणपाटवाद्यभावेन व्यवहारानुदयेऽपि सहकारिवैकल्यप्रयुक्तकार्याभावकत्वरूपं कारणत्वमस्त्येव । कदापि व्यवहाराजनकं तु निर्विकल्पकं नोपेयत इति नाव्याप्तिः । नच यत्त्वतत्त्वजात्योरभावेनाननुगमः, कस्य को विषय इत्यननुगतप्रश्ने अस्यायं विषय इत्यननुगतस्यैव वक्तव्यत्वात् । घटज्ञानानन्तरं प्रामादिके पट इति व्यवहारे न घटज्ञानं हेतुरिति नातिव्याप्तिः । अत एव ज्ञानकर्मत्वं विषयत्वमित्यत्रापि न दोषः, ज्ञानकर्मशब्देन ज्ञानाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वस्य विवक्षितत्वात् । नहि क्रियाजनकत्वविशेषः कर्मत्वम् । (पटं)घटं करोतीत्यादावभावात् । नह्यसिद्धं जनकम्, नापि सिद्धं कृतिकर्म । अत एव यस्यां संविदीत्यादिलक्षणेऽपि न दोषः ।

---

ननु यदि प्रामाणिकत्वादेव सत्त्वसिद्धिः, तर्हि परः प्रमाणमेव (परप्रमाणमेव) न तु लक्षणमिति शिष्यशंकायामाह । सदसदिति । शब्दसाम्यादिति (शब्दसामान्यादिति पाठः) श्रुत्यादिषु जगति प्रयुज्यमानस्य अनिर्वचनीयशब्दस्य अद्भुतत्वादनिर्वाच्यमित्यादिप्रमाणबलात् अद्भुतत्वप्रवृत्तिनिमित्तकस्य मदाद्यनिर्वचनत्वार्थकयौगिकानिर्वचनीयशब्देन साम्यादित्यर्थः (सामान्यादित्यर्थः इति पाठान्तरम् )

ननु निर्वचनायोग्यत्वेन शब्दाप्रवृत्तेः कथं स विशेषः परं प्रति बोधनीयः । परार्थानुमानस्यापि शब्दाधीनप्रवृत्तिकत्वात् इत्यत आह ॥ न च केषाञ्चिदिति ॥ अन्योन्याश्रय इति ॥ प्रयोगे ज्ञाते प्रयोगघटितलक्षणज्ञानम्, लक्षणे च ज्ञाते प्रवृत्तिनिमित्तज्ञानात् प्रयोगः इत्यन्योन्याश्रय इत्यर्थः ॥ यदभिलपनेति ॥ यद्यपि अभिलापकारणतावच्छेदकं ज्ञाने तद्विषयत्वमेवेत्यात्माश्रयः । अवच्छेदकापरिज्ञाने (कारणत्वाज्ञाने इति पाठः) लक्षणाज्ञानदोषः । तथाप्यनेकविषयत्वे लक्षणस्योक्तत्वादेकस्य लक्षणत्वे लक्षणान्तरस्य कारणतावच्छेदकत्वसम्भवात् नात्माश्रय इति ॥ घटज्ञानानन्तरमिति ॥ घटज्ञानं भिन्नविषयत्वात् तत्र न कारणम् । अभिलापस्तु पटाधीनज्ञानमात्रात् (पटावलीज्ञानमात्रात् इति पाठान्तरम् ) युक्तमिति भावः ।

यतस्संविदीति सति सप्तमी । भासमानत्वं च व्यवहारयोग्यत्वम् । योग्यत्वं च सति कारणान्तरे व्यवहारावश्यंभावः। योग्यत्वे च दृश्यत्वे दृश्यत्ववदाध्यासिकसम्बन्धे आध्यासिकसम्बन्धवच्च तदेव वाऽन्यद्वा योग्यत्वमस्ति । आत्माश्रयादिकं तु तद्वदेवोत्पत्त्याद्यप्रतिबन्धकत्वाददोष इति नाव्याप्तिः ।

अन्ये तु यस्सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च स तस्य विषयः। यद्यप्यात्मा स्वविषयकज्ञानेन समवायवान्, तथापि न तस्य तदवच्छेदे तदपेक्षा स्वज्ञानासमवायिनोऽपि घटादेस्स्वज्ञानावच्छेदकत्वदर्शनात् । यथात्मनः स्वानुमितिविषयत्वेऽपि न विषयत्वेन तत्र हेतुता, तद्वत् । यद्यपि च रूपज्ञानं मत्समवेतम्, रूपज्ञानमिष्टम्, रूपज्ञानं ध्वस्तमित्यादौ रूपज्ञानाविषया अप्यात्मसमवायेच्छाध्वंसादयस्सम्बन्धान्तरमनपेक्ष्य रूपज्ञानावच्छेदकाः, तथापि ते समवेतेष्यमाणाद्यात्मकरूपज्ञानावच्छिन्नस्वभावाः, सम्बन्धेच्छादीनां सम्बन्धीष्यमाणाद्यवच्छिन्नस्वभावत्वादिति नातिव्याप्तिः । ज्ञानविषयस्तु न ज्ञानावच्छिन्नस्वभावः । ज्ञानस्य घटावच्छिन्नस्वभावत्ववत् घटादेर्ज्ञानावच्छिन्नस्वभावत्वस्यादर्शनात् ।

---

ननु कारकविशेषत्वं कर्तृत्वं, तत्कथम् अन्यथा वर्ण्यत इत्यत आह ॥ नहीति ॥ नह्यसिद्धमिति । सिद्धत्वसाध्यत्वयोः विरोधादिति भावः ॥ नापि सिद्धमिति ॥ यद्यपि सिद्धमेव कपालादिकृतिकर्म, साक्षात्कारवत् कृतेरपि स्वविषयजन्यत्वात्, अत एव घटं करोतीत्यादौ अवयवलक्षणा परैरंगीक्रियते, तथापि उक्तक्रमेणैवोपपत्तौ लक्षणायां मानाभावादिति भावः।

ननु विषयतातिरिक्तभासमानताया अनिरूपणात् आत्माश्रय इत्यत आह ॥ भासमानत्वं चेति ॥ ननु योग्यत्वमेव बाधितम्, योग्यत्वस्य स्वरूपबुद्धिव्यवहारादिघटितत्वात् इत्यत आह ॥ अन्यद्वेति । आत्माश्रयादिकं त्विति । तदेवेत्यत्र आत्माश्रयः (तद्वदेवेति पाठान्तरम्) अन्यदेवेत्यत्र अविपदोक्तानवस्था ॥ तद्वदेवेति ॥ दृश्यत्वादाविवेत्यर्थः ॥ सम्बन्धान्तरमिति ॥ स्वभिन्नसम्बन्धान्तरमित्यर्थः । यद्यपीति । तथाच आत्मनि अव्याप्तिरिति भावः । अनपेक्ष्येति विशेषणादेव न तत्राव्याप्तिरित्याह । तथापीति । उत्तरदलस्य प्रयोजनं वक्तुं तन्निवर्त्याशङ्कां दर्शयति । नातिव्याप्तिरिति । तेष्विति शेषः । अदर्शनादिति । अन्यथा घटस्य ज्ञानमित्यादिवत् ज्ञानस्य घट इत्यादिधीप्रसङ्ग इति भावः । तदवच्छेदकत्वं तदवच्छिन्नप्रत्ययजनकज्ञानविषयत्वम्, तथा च आत्माश्रय इत्यरुचेराह ॥ अथवेति ॥

यद्यपि स्वग्राहकज्ञानविषयभूतं ज्ञानविषयकानुमित्यनुव्यवसायादिकं ज्ञानावच्छिन्नस्वभावम्, तथापि स्वयं यज्ज्ञानं प्रति विषयः तदवच्छिन्नस्वभावं नेति नाव्याप्तिः। अथवा यज्ज्ञानं यदीयस्वभावं स तस्य विषयः । मत्समवेतं रूपज्ञानमित्यत्र तु समवाय एव रूपज्ञानावच्छिन्नस्वभावः, नतु रूपज्ञानं तदवच्छिन्नस्वभावम् । प्रकृतस्य ज्ञानविषयत्वस्यैवेयं निरुक्तिर्नत्विच्छादिविषयत्वस्यापीति न तत्राव्याप्तिदोष इत्याहुः ।

अथवा यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते, स तस्य विषयः। नचैवमाकाशसन्निकृष्टेन चक्षुरादिना शब्देन च जन्यं रूपादिज्ञानं प्रति आकाशस्य विषयतापत्तिः, सन्निकर्षस्यापि हेतुत्वेन विवक्षितत्वात् । नच चक्षुरादिनाऽऽकाशस्य सन्निकर्षो रूपादिज्ञानहेतुः। ननु तथापि पक्षसन्निकृष्टलिङ्गजानुमितिं प्रति पक्षः, श्रोत्रसन्निकृष्टवाक्यजशाब्दज्ञानं च प्रति श्रोत्रं विषयः स्यादिति चेन्न । अतीतादिलिङ्गादेर्ज्ञानेनानुमित्यादिदर्शनेन लिङ्गज्ञानवाक्यज्ञानयोरेव करणत्वात् । लिङ्गादिज्ञानस्य चात्मसन्निकर्षो नानुमित्यादिहेतुः। किन्त्ववर्जनीयसन्निधिः ।

ननु तथापि रूपादिज्ञानस्यात्मा विषयः स्यात् । तत्र मनसः करणत्वादात्ममनस्सन्निकर्षस्य च रूपादिधी(ज्ञानहे)हेतुत्वादिति चेन्न । असाधारणकरणत्वस्य विवक्षितत्वात्,

---

ननु लक्षणे ज्ञानपदानन्तर्भावे परकीयस्वभावे ससम्बन्धिकपदार्थमात्रेऽतिव्याप्तिः। तदन्तर्भावे तु इच्छाविषयतायामव्याप्तिरित्यत आह ॥ प्रकृतस्येति ॥ अत्र यदीयस्वभावमित्यस्य यदवच्छिन्नस्वभावमित्यर्थकत्वे उक्त दोषास्माभय इत्यनभिमतिरन्येत्वित्यनेन दर्शितेति द्रष्टव्यम् । न च चक्षुरादिना आकाशस्येति ॥ यद्यपि यदा आकाशे उद्भूतरूपाद्यभावः प्रत्यक्षः तदा संयुक्तविशेषणताघटकत्वेन आकाशचक्षुःसन्निकर्षोऽपि प्रविष्ट इति तत्रातिव्याप्तिः, तथापि सन्निकर्षत्वेन हेतुत्वस्य विवक्षितत्वात् नातिव्याप्तिरिति भावः ॥ पक्ष इति ॥ यद्यपि पक्षस्याप्यनुमितिविषयत्वमिति तत्र तदापादानमिष्टमेव, तथापि यद्विषयकज्ञानजनकत्वेन अनुमानस्य सफलत्वं स एवानुमितिविषय इत्यभिप्रेत्य तथोक्तम् । यद्वा पक्षस्वरसादेव उदाहरणान्तरमिति ध्येयम् (बोध्यमिति पाठान्तरम् ।)

ननु तथापि आत्मसन्निकृष्टलिङ्गादिज्ञानजन्यानुमित्यादेरात्मा विषयः स्यादित्यत आह । लिङ्गादिज्ञानस्य चेति ॥ कारणतावच्छेदकप्रमाणाभावादिति भावः । करणपदं कारणपदपर्यायं मत्वा (मन्वानः इति पाठान्तरम्) शंकते ॥ ननु तथापीति ॥ सन्निकर्षस्यापीति ॥ यद्यपि

मनसश्च साधारण्यात् । तर्हि मनस्सन्निकृष्टचक्षुर्जन्यं रूपज्ञानं मनोविषयं स्यादिति चेन्न । सन्निकर्षस्याप्यसाधारणहेतुत्वेन विवक्षितत्वात् । चक्षुर्मनस्सन्निकर्षस्य च द्रव्यादिज्ञानसाधारणत्वात् । प्रत्यभिज्ञायामिन्द्रियस्य तत्तया संस्कारः, लिङ्गज्ञानस्य च लिङ्गिना तथात्मलिङ्गसम्बन्धः, वाक्यज्ञानस्य च तत्परवाक्यसन्निकर्षः । एवमन्यत्रापि सन्निकर्ष ऊह्यः । नहि संयोगादिरेव सन्निकर्षः । किंतु प्रत्यासत्तिमात्रम् । तथानतिप्रसङ्गाय तत्तादिना सह वक्तव्यमिति नाव्याप्तिः । यद्यपि लिङ्गज्ञानादेर्लिङ्गादिना विषयित्वमेव सम्बन्धः, तथापि स इदानीमुभयसंमतेन सम्बन्धत्वेनैव ज्ञेयः, नतु विषयित्वेनेति नात्माश्रयः । इदं च नियतविषयकजन्यज्ञानविषयलक्षणम् । अथवा यथा पाकजरूपवती पृथवीत्यत्र पाकजरूपसमानाधिकरणद्रव्यत्व (साक्षाद्या)व्याप्यजातिमत्त्वं विवक्षितम् , तथा ज्ञानकरणसन्निकर्षसमानाधिकरणः ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो विषयत्वमिति नाव्याप्तिरिति ॥

इति दृग्दृश्यसम्बन्धानुपपत्तिभङ्गः ॥ २३ ॥

---

सन्निकर्षस्यासाधारण्यविवक्षायां असाधारणकारणत्वविवक्षा व्यर्था । तथापि अस्यां सत्यन्तं न विवक्षणीयमेवेति भावः । नन्वेतल्लक्षणं योगिप्रत्यक्षविषयादावव्याप्तम् । तत्र एकस्यैव सकलसाधारणस्य योगजधर्मस्य सन्निकर्षत्वेन असाधारण्याभावात् । ईश्वरप्रत्यक्षविषयाव्याप्तिश्च । तत्प्रत्यक्षस्याजन्यत्वादित्यत आह ॥ इदञ्चेति ॥ तथा ज्ञानकरणेति ॥ अत्र धर्मो विषयतेत्युक्ते घटज्ञानविषयता द्रव्यत्वं स्यात् । अत उक्तम् —ज्ञानावच्छेदकत्वव्याप्येति ॥ तावत्युक्ते सामान्यप्रकारकज्ञानविषयत्वमनुल्लिखितं (चेति) विशेषधर्मः तद्घटितत्वमपि स्यादत आह ॥ साक्षादिति ॥ विशेषधर्मस्तु न तथा, अवच्छेदकत्वव्याप्यघटत्वादिन्यूनवृत्तित्वात् , तद्व्याप्यान्यूनवृत्तित्वस्य साक्षात्पदार्थत्वात् । तावत्युक्ते द्रव्यत्वादावतिव्याप्तिः स्यादत उक्तम् ॥ व्याप्येति ॥ धर्मपदं तु स्वरूपकथनपरम् ।

ननु ज्ञानावच्छेदकत्वमेव ज्ञानविषयत्वमस्तु । घटत्वादौ ज्ञानावच्छेदकत्वरूपत्वाभावेन तावतैव तत्रातिव्याप्तिपरिहारादिति चेत्तथापि ज्ञानावच्छेदकत्वस्य घटज्ञानत्वादावपि सत्त्वेन अतिप्रसक्ततया अविषयतारूपत्वात् , विषयमात्रवृत्तिधर्मविशेषस्यैव विषयतारूपत्वौचित्यात् । तावत्युक्ते घटज्ञानावच्छेदकत्वसाक्षाद्व्याप्ये तद्घटकज्ञानत्वादावतिव्याप्तिः । घटपद घटज्ञानत्वव्यापि तज्ज्ञानावच्छेदकत्वादित्यत आह ॥ ज्ञानकारणसन्निकर्षसमानाधिकरणेति ॥ ननु ज्ञानकरणसन्निकर्षसमानाधिकरणं ज्ञानावच्छेदकत्वमेव ज्ञानविषयत्वमस्तु, घटज्ञानत्वोभयसाधारणत्व

घटज्ञानावच्छेदकत्वस्य एकत्वेन तावन्मात्रस्य अतिप्रसक्तत्वेऽपि नीलत्वसमानाधिकरणघटत्वस्येव ज्ञानकरणसन्निकर्षे सामानाधिकरण्यविशेषितस्य घटज्ञानत्वाद्यावभावेन अतिप्रसंगादिति चेन्न । तस्य लक्षणान्तरत्वेन यथोक्तविशेषणविशेष्यभावे वैयर्थ्यानवकाशात् । न च सर्वस्यैव धर्मस्य क्वचिद्विषयतात्वात् (विषयतावत्त्वात् इति पाठान्तरम् ।) धर्मो विषयता इत्येव सामान्यलक्षणमस्तु इति वाच्यम् । विशेषविषयलक्षणप्रस्तावे सामान्यलक्षणाभिधानस्य अर्थान्तरत्वात् । अत एव सम्बन्धो व्याप्तिरिति व्याप्तिलक्षणं परिहृत्य नियतसामानाधिकरण्यं तल्लक्षणमाचक्षते । तेन घटज्ञानकरणसन्निकर्षसमानाधिकरणो घटज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो घटज्ञानविषयतेति पर्यवस्यति । न च घटज्ञानमित्यत्र षष्ठ्यर्थः सम्बन्धो विषयतेत्यात्माश्रय इति वाच्यम् । सम्बन्धत्वेनैव तस्य तत्र प्रवेशादित्याकर एव स्फुटत्वात् । नन्वेवमपि घटज्ञानविषयता कम्बुग्रीवादिमत्त्वं स्यात् । तस्यापि घटज्ञानकरणसन्निकर्षसमानाधिकरणघटज्ञानावच्छेदकत्वव्याप्यघटत्वान्यूनधर्मत्वादिति चेन्न, इष्टापादनात् । यद्वा साक्षात्पदसमभिव्याहारेण ज्ञानावच्छेदकधर्मो विषयतेत्यत्र तात्पर्यम्, न तथातिप्रसङ्ग इति दिक् ।

इति दृग्दृश्यसम्बन्धानुपपत्तिभङ्गः ॥ २३ ॥

# ॥ अथ प्रतिकर्मव्यवस्थाभङ्गः ॥

यच्चोक्तं–यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथा विषयेन्द्रियसंप्रयोगादिके सति सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारेण निर्गत्य ध्रुवादिविषयपर्यन्तं चक्षुर्वत् शीघ्रं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति, सेयं वृत्तिरित्युच्यते । तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतम्, अन्तःकरणोपाधिकं सत् परिच्छिन्नं चेति मतद्वयम् । तत्राद्ये विषयप्रकाशकं जीवचैतन्यं द्वितीये ब्रह्मचैतन्यम् । सर्वगतत्वपक्षेऽपि जीवचैतन्यमविद्यानावृतमावृतं चेति मतद्वयम् । तत्राद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था । द्वितीये त्वावरणाभिभवार्था । परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्था । अनावृतत्वपक्षे-ऽनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः, असङ्गत्वात् । यथा गोत्वादिकं सर्वगतमपि सास्नादिमद्व्यक्त्यैवोपरज्यते न तु केसरादिमद्व्यक्त्या, यथा वा प्रदीपप्रभा आकाशगन्धरसादिप्रदेशव्यापिन्यपि तान्न प्रकाशयति, रूपिसंसर्गितया तदेव प्रकाशयति तद्वत्, केवलाग्न्यदाह्यस्यापि अयःपिंडसमारूढाग्निदाह्यत्ववत् केवलचैतन्याप्रकाश्य-स्यापि घटादेस्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम् । एवं चानावृतत्वपक्षे तत्तदाकार-वृत्तिद्वारा चैतन्यस्य च तत्तदुपरागे तत्तत्प्रकाशः । आवृतत्वपक्षेऽपि तत्तदाकारवृत्त्या तत्तदव-च्छिन्नचैतन्यावरणाभिभवे तत्तत्प्रकाशः । परिच्छिन्नत्वपक्षेऽपि तत्तज्जीवावच्छेदकान्तःकरणीय-तत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नब्रह्मचैतन्याभिव्यक्तौ तत्तत्प्रकाश इति नातिप्रसङ्गः ।

---

पक्षद्वयेऽपि यथा नातिप्रसङ्गस्तथैवोपपादयति ॥ अनावृतत्वपक्षे इति ॥ असङ्गत्वादिति ॥ असम्बन्धस्वभावत्वादित्यर्थः । ननु वृत्तिं प्रत्यपि तदसंसर्गमेवेति विषयस्यैव तदुपरञ्जकत्वमङ्गीक्रियत आह ॥ यथा गोत्वादिकमिति ॥ तत्र कथञ्चित्कानुभवबलेन तथाप्रतीतिनियमस्वीकारादिति भावः ।

ननु भवत्वेतावता वृत्त्युपरक्तमेव तत्प्रकाशकम्, तथाप्येकदैव तत्तद्विषयगतरूपमिव रसादीनपि कुतो न प्रकाशयतीत्याशंकां दृष्टान्तमुखेन परिहरति ॥ यथा वेति ॥ तदाकारवृत्त्युपरक्तं तदेव प्रकाशयतीत्यनुभवबलेनैव स्वभावकल्पनादिति भावः । ननु तत्समर्थं चेत्पूर्वमपि विषयं प्रकाशयेत् । असमर्थं चेत् किमाधेयं वृत्त्योपरक्तमित्याशंकां दृष्टान्तमुखेन निराचष्टे ॥ केवलाग्न्यदाह्यस्यापीति ॥ तथा च नेयमप्रसङ्गमुक्तप्रकल्पनेति भावः ।

विषयानुभवस्य ब्रह्मचित्त्वेऽपि वृत्त्या जीवचैतन्याभेदेनाभिव्यक्तत्वात्, जीवचित्त्वमविरुद्धमिति प्रतिकर्मव्यवस्था युक्तेति ।

तन्न, स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात्पूर्वं घटादेस्सत्त्वे प्रतीतिमात्रशरीरत्वव्याप्यकल्पितत्वायोगात् । नच कल्पितत्वविशेषः प्रातिभासिकत्वमेव तद्व्याप्यम् । गौरवात् । वह्निं प्रत्यपर्वतीयधूमस्य अप्रामाणिकत्वादिकं च प्रति प्रातिभासिकत्वस्यैव व्याप्यत्वापाताच्च । नच प्रतीतिमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वादिना कल्पितत्वोपपत्तिः। प्रतीतिमात्रशरीरत्वाभावेनैव ज्ञाननिवर्त्यत्वाद्यभावस्याप्यापादनात् । प्रतीतेश्च विश्वस्य सत्यत्वेन वा मिथ्यात्वेऽपि स्वप्नवदिन्द्रियसन्निकर्षानपेक्षतयैवोपपत्तेश्च । व्यावहारिकत्वस्य च भ्रान्तिदैर्घ्यमात्रेणोपपत्तेश्च । तत्तदाकारपरोक्षवृत्तेरिवापरोक्षवृत्तेरेव तत्तत्प्रकाशकत्वोपपत्तावपरोक्षवृत्त्युपरागादिमतश्चैतन्यस्य तत्तत्प्रकाशत्वकल्पनायोगाच्च । विषयापरोक्ष्यं त्वावश्यकेन वृत्तिगतविशेषेणैवेत्युक्तम् । नच परोक्षवृत्तिविषयस्यापि चैतन्योपरागाद्यस्ति, अभिव्यक्तापरोक्षैकरसचिदुपरागेण विषयस्याप्यापरोक्ष्यापातात् । वृत्तेरेवापरोक्षानुभवत्वे तत्प्रयुक्तं स्वप्रकाशत्वमपीच्छात्वज्ञानत्वादिकमिवान्तःकरणनिष्ठमपि तदुपादेयवृत्तिनिष्ठमस्तु ।

---

ननु यदि ब्रह्मचैतन्यं विषयानुभवः तदा अनुभवामीति स्ववृत्तितया न प्रतीयेतेत्यत आह ॥ विषयानुभवस्येति ॥ इन्द्रियसम्प्रयोगादिनाऽस्य न वृत्तेरतिप्रसङ्गनियामकत्वं तदा स्यात्, यदीन्द्रियसम्प्रयोगकाले विषयस्त्वन्मते स्यात्, स एव नास्तीति सिद्धान्तयति ॥ स्वसन्निकृष्टेति ।

ननु प्रतीतत्वान्यथानुपपत्त्यैव जगतः कल्पितत्वे सिद्धे प्रतिभासमात्रशरीरत्वं प्रातिभासिकत्वमेव प्रतिभासमात्रशरीरत्वव्याप्यं कल्प्यताम्, गौरवस्य प्रामाणिकत्वादित्यत आह । प्रतीतेस्त्विति । यथा चैतत्तथोपपादितमधस्तादिति भावः ॥ स्वप्नवदिति ॥ तथा चैवमपि त्वत्कल्पना बाधितैवेति भावः । ननु स्वप्नवत्कल्पितं चेत् तदा किञ्चित् प्रातिभासिकं किञ्चिद्व्यावहारिकमिति व्यवस्था कथमुपपादनीयेत्यत आह ॥ व्यावहारिकत्वस्येति ॥ ननु स्वप्नवत्कल्पना प्रकृते बाधितैव । तथाप्यस्यानुभवसिद्धत्वादित्याशङ्क्य यद्यनुभवादरस्तर्हि अन्वयव्यतिरेकसिद्धं वृत्तेरेव प्रकाशकत्वं इत्याह ॥ तत्तदाकारेति ॥ नन्वभिव्यक्तापरोक्षचिदुपरागाभावे विषयापरोक्ष्यमेव न स्यादित्यत आह ॥ विषयापरोक्ष्यं त्विति ॥ उक्तमिति । स्वाभिमतकार्यस्य विषयत्वरूपतद्व्याप्यत्वहेतुभङ्ग इति शेषः । ननु परोक्षवृत्तिमात्रेण न विषयप्रकाशः, किन्तु तदुपरक्तचैतन्येनैवेत्याशङ्क्य निराकरोति ॥ नचेति ॥ ननु प्रकाशत्वे स्वप्रकाशत्वं स्यात् । न च तत्संभवति । जडान्तःकरणपरिणामत्वादित्यत आह ॥ वृत्तेरेवेति ॥ तत्प्रयुक्तमिति ॥ अनुभवत्वप्रयुक्तमित्यर्थः । अन्यथेति ॥

अन्यथा अपरोक्षानुभवस्यापि तन्न स्यात् । नच घटं जानामीति सकर्मकज्ञानरूप-वृत्त्यन्या घटः प्रकाशत इत्यकर्मकप्रकाशरूपा चिदनुभवसिद्धेति वाच्यम् । क्रियैक्येऽपि करोति प्रयतते गच्छति चलतीत्यादाविव धात्वोः कर्मोपरागवाचित्वतदभावस्वभावत्वोप-पत्तेः । अन्यथा त्वत्पक्षेऽपि परिणतेरकर्मकत्वात्परिणतिविशेषस्य वृत्तेस्सकर्मकज्ञानत्वं न स्यात् । अतीतं प्रकाशत इति धीश्च न स्यात् । एवं चेष्यमाणे इच्छादेरिवानुभाव्ये स्वतः प्रवणस्यानुभवस्यान्यद्वारा तदुपरक्तत्वं घटाज्ञानविरोधिन्या वृत्तेर्न घटानुभवत्वं तदविरोधि-चैतन्यस्य तु तदित्यादिकं दृष्टविरुद्धं न कल्प्यम् । अन्यथा द्वेषविरोधिन्या वृत्तेर्नेच्छात्वम्, किन्त्वन्यस्यैवेत्यादि स्यात् । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति श्रुतिस्तु सूर्यादिप्रकाशस्येशाधीनत्वमेवाह, नत्वस्मदादिगतघटादिज्ञानस्य ब्रह्मत्वम् । सर्व-शब्दस्य "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ"इत्यादाविव "न तत्र सूर्यो भाति न चन्द्रतारकम्," इति प्रकृतसूर्यादिपरत्वात् । त्वन्मतेऽपि नित्यातीन्द्रियस्य चित्प्रकाश्यत्वाभावेन सर्वशब्द-संकोचाच्च । प्रकृतपरेदंशब्दसमभिव्याहाराच्च । एतद्वाक्यनिर्णायके "अपि स्मर्यते" इति सूत्रे त्वद्भाष्येऽपि "यदादित्यगतं तेज"इत्यादिस्मृतेरेवोदाहृतत्वाच्च । त्वन्मते ब्रह्मणो भानमात्रत्वेन भांतमिति शतृप्रत्ययस्य तस्य भासेति षष्ठ्याः प्रपंचे ब्रह्मभानान्यभानाभावेनाऽनुशब्दस्य चायोगाच्च । गच्छन्तमनुगच्छतीत्यादौ गमनादिभेदे सत्येवानुशब्दो दृष्टः ।

---

वृत्तेरपरोक्षानुभवत्वप्रयुक्तस्वप्रकाशत्वानङ्गीकारे चिद्रूपानुभवस्याप्यनुभवत्वप्रयुक्तस्वप्रकाशत्वं न स्यादित्यर्थः ॥ धात्वोरिति ॥ जानाति प्रकाशतेत्योरित्यर्थः ॥ अन्यथेति ॥ तादृशस्वभावानङ्गीकार इत्यर्थः । अतीत इति । वृत्तेः कर्मोपपदधातुप्रतिपाद्यत्वनियमानङ्गीकारेऽपि चिदभिव्यक्तेः अनङ्गी-कारादित्यर्थः । स्वतः प्रमाणस्येति प्रकृताभिप्रायम् । इच्छादेर्दृष्टान्तता तु स्वतोविशेषणीभवन-समर्थस्वभावांशेनेत्यवधेयम् । ननु द्वेषविरोधिवृत्तेरिच्छात्वे बाधकाभावः । प्रकृते तु तमेव भान्त-मित्यादिश्रुत्या चैतन्यस्यैव सर्वप्रकाशकत्वं बोधितं चिदुपरागार्थत्वं कल्प्यत इत्यत आह । तमेवेति । त्वन्मते ब्रह्मण इति । भवद्घटत्वलक्षणस्वप्रकाशत्वानङ्गीकर्तुर्मत इत्यर्थः । भानमात्रत्वेनेत्यत्र मात्रपदात् नविषयत्वस्य व्यवच्छेदः ॥ आपरोक्ष्यापातादिति ॥

यद्यपि परमाण्वादेः अयोग्यत्वात्, मेघच्छन्नसूर्यस्य अनित्यामीत्यादिलक्षणदोषसत्त्वाच्च नापरोक्ष्यमापादयितुं शक्यम्, अन्यथा सिद्धान्तेऽप्यगतेः, तथापि सिद्धान्ताभिमतविषयविषयि-भावस्थाने आध्यासिकसंबन्धस्य त्वया स्वीकारेण वृत्त्या निवृत्तावरणापरोक्षभानजनकेन संबन्धे सति योग्यत्वस्य अनुपयोगात्, दोषेण प्रतिबन्धस्याभावाच्च । न च सिद्धान्तेऽप्यगतिः । विषयस्य

अस्तु वा चैतन्यस्य विषयप्रकाशत्वम्, तथापि अन्तःकरणस्य न देहान्निर्गतिः कल्प्या, परो(क्षधीवैलक्षण्या)क्षाद्धि वैलक्षण्याय विषयस्याभिव्यक्तापरोक्षचिदुपराग एव वक्तव्यः। चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रम्। ननु प्रभाया इव वृत्तेस्तदावरणनिवर्तकत्वादौ तत्संश्लेषस्तन्त्रम्। नेत्रान्निर्गच्छद्ध्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्जलादेर्देहध्रुवमध्यवर्तिनः परमाण्वाकाशादेर्ब्रह्मणश्चापरोक्ष्यापातात्। द्वयोस्तन्त्रत्वे च गौरवात्, तदाकारत्वस्य च तत्संश्लेषं विनापि परोक्षवृत्ताविव तत्सन्निकृष्टकरणजन्यत्वेनैवोपपत्तेः। न च स्वेतरहेतुसाकल्ये सत्यपि घटचक्षुस्सन्निकर्षाभावेनेव घटमनस्सन्निकर्षाभावेन घटानुभवाभावो दृष्टः। एवं च स्पार्शनज्ञानमप्यनुकूलितं स्यात्। चक्षुरादेरिव स्पर्शनस्य नियतगोलकद्वारा भावेनान्तःकरणनिर्गत्ययोगात्। अन्यथेच्छाद्वेषादिरूपवृत्तयोऽपि देहान्निर्गत्य विषयान् गच्छेयुः।

अस्तु वा देहान्निर्गतिस्तथापि विषयप्रकाशकं चैतन्यं किम्

"घटैकाकारधीस्था चिद्घटमेवावभासयेत्।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥"

इत्युपदेशसाहस्र्यनुसारिभारतीतीर्थादिरीत्या वृत्तिप्रतिबिंबितचैतन्यं, किं वा

"परागर्थप्रमेयेषु या फलत्वेन संमता।
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥"

इति सुरेश्वररीत्या वृत्तिप्रतिबिंबितचैतन्याभिव्यक्तं विषयविवर्ताधिष्ठानं चैतन्यम्। नाद्यः। आध्यासिकसंबन्धस्यातन्त्रत्वापातात्। नान्त्यः। आवश्यकेन विषयसंश्लिष्टवृत्तिप्रतिबिंबितचैतन्येनैव तदज्ञाननिवृत्तिवत्प्रकाशस्याप्युपपत्तौ तदधिष्ठानचैतन्याभिव्यक्त्यादिकल्पनायोगादित्युक्तत्वात्।

किंच वृत्तेस्तदाकारत्वं न तावत्तद्विषयत्वम्। त्वयैव निरासात्। नापि तस्मिन् चैतन्योपरागयोग्यतापादकत्वं वा, तदज्ञानाभिभावकत्वं वा, तयोस्तदाकारत्वप्रयोज्य-

---

मयोग्यत्वे योग्यसन्निकर्षाभावेन ज्ञानस्यैव अनुत्पत्तेः, दोषस्य ज्ञानोत्पत्तिप्रतिबन्धकत्वाचेत्यत्र तात्पर्यम्। द्वयोरिति। तदाकारत्वतत्संश्लेषयोरित्यर्थः। तथापि विषयप्रकाशकमिति॥ यद्यपि प्रथमपक्षो दृग्दृश्यसम्बन्धानुपपत्तिभङ्गे 'किंच घटप्रकारकम्' इत्यादिना भागांश्य निराकृतः, तथापि न एव प्रमाणमागांस्य विशाक्रियत इत्यपौनरुक्त्यम्। निराकृतत्वादिति। पूर्वभङ्गे विषयत्वं किमित्यत्रविनेति शेषः। तस्यायोगादिति। प्रमेवे प्रयोज्यप्रयोजकभावानुपपत्तेरिति

त्वेन तत्त्वायोगात्। नापि घटादिवत् पृथुबुध्नोदराद्याकारत्वम्, साकारवादापातात्, संस्थानहीनगुणकर्मजात्यभावादिवृत्तेस्तदाकारत्वायोगाच्च। घटपटौ पटतद्रूपे घटतदभावा-वित्यादिसमूहालम्बनवृत्तेस्सर्वविषयकयोगिनिष्ठवृत्तेश्च युगपद्विरुद्धनानाकारत्वायोगाच्च। चरमसाक्षात्कारस्य निराकारब्रह्माकारत्वायोगाच्च, तस्मात्पक्षत्रयमप्ययुक्तम्।

किंच न तावत् विषयदृग्जीवचैतन्यमिति पक्षो युक्तः। तथाहि – तत्र विषयाध्यासो न तावद्विशिष्टे ब्रह्मणि चिन्मात्रे वा, दृग्दृश्ययोराध्यासिकसम्बन्धासिद्धेः। नापि जीवे, तस्यावच्छिन्नस्य स्वयंकल्पितत्वात्। अत एव विषयदृग्ब्रह्मचैतन्यमितिपक्षो न युक्तः। सविशेषस्य ब्रह्मणोऽपि कल्पितत्वात्। शुद्धस्य चासंसारमावृतत्वेन जगदान्ध्यापातात्। अनवच्छिन्नस्यावृतत्वेऽपि घटाद्यवच्छिन्नं वृत्त्या प्रकाश्यत इति चेन्न। अवच्छिन्नस्य कल्पित-त्वेनात्माश्रयापातेन च घटाद्यनधिष्ठानत्वेनाध्यासिकसंबन्धस्यातन्त्रत्वात्। विशिष्टज्ञानेऽधिक-प्रकाशेऽपि चरमवृत्तिविषयस्य विशेष्यस्य प्रकाशेन तद्वैयर्थ्याच्च। नाखण्डार्थपरवेदान्त-जन्यायां तस्यां भावोऽभावो वा विशेषणमुपलक्षणं वा प्रकारः प्रकाशते। अन्तःकरणाव-च्छिन्नस्य जीवत्वे त्वन्मते तस्य सुषुप्त्यादावभावेन कृतहान्याद्यापाताच्च।

किंचोपरागार्थत्वपक्षेऽपि चितः स्वतो वृत्तिमात्रोपरक्तत्वं न तावद्दर्पणे मुखस्येव प्रतिबिंबितत्वम्, अनुद्भूतरूपान्तःकरणे शब्दान्यप्रतिबिंबनोपाधितया अचाक्षुषे च चैतन्ये

---

भावः। ननु तैजसान्तःकरणपरिणामविशेषरूपवृत्तेः मूषास्थद्रुतसुवर्णवत् तदाकारपरिणामादि-योगित्वेऽपि न साकारवादापातः। वृत्तिरूपज्ञाने घटाकारस्य घटत्वादेः स्वीकारे एव तस्यापत्ते-रित्यत आह॥ संस्थानहीनेति॥

ननु अवच्छेदकभेदेन आकारयोर्न विरोध इत्यत आह। चरमसाक्षात्कारस्येति। तस्मा-त्पक्षत्रयमपीति। पक्षत्रयस्यापि तदाकारवृत्त्यधीनत्वादिति भावः॥ तत्रेति॥ जीवचैतन्यस्य दृक्त्वपक्ष इत्यर्थः॥ कल्पितत्वादिति॥ स्वत एव अधिष्ठानत्वादिति भावः॥ जगदान्ध्यापाता-दिति॥ अनावृतचैतन्यस्यैव भासकत्वोपगमादिति भावः॥ आत्माश्रयापातेनेति॥ घटाद्यव-च्छिन्नस्य घटाद्यधिष्ठानत्वे आत्माश्रयापातेनेत्यर्थः। किंच अवच्छिन्नचैतन्यस्यापि न वृत्त्या अभिव्यक्तिः, चरमवृत्तिवैयर्थ्यापत्तेरित्याह॥ विशिष्टज्ञान इति॥ ननु विशिष्टज्ञाने विशेष्यस्य भानेऽपि चरमवृत्तिविषयस्य प्रकारस्याभानान्न तद्वैयर्थ्यमित्यत आह॥ नहीति॥ कृतहान्या-दीति। यद्यपि आगामिसंसारार्थं यथाकथञ्चिदन्तःकरणानुवृत्तिः तैरपि स्वीक्रियत एव। तथापि तथा-विधा व्यक्तिः (वृत्तिः) (कृताश्रयः) तस्या नाशेन कृतहानिः स्यादेवेति भावः। अनुद्भूतरूपेति।

प्रतिबिंबनस्य चायोगात्। नापि मृपास्थद्रुतसुवर्णादिवत् तदात्मना विकृतत्वम्, चितो निर्विकारत्वात्। नापि गोत्वादिवत् तदाश्रितत्वं तत्राभिव्यक्तत्वं वा, चित आकाशवत् अनाश्रितत्वात्। उपरागार्थत्वपक्षे चितोऽनावृतत्वेन सर्वत्राभिव्यक्तत्वाच्च। नापि घटाकाशादिवत् तदन्तस्थत्वम्, आकाशादिवत् सर्वगता चित् स्वतो वृत्त्यन्तस्था नतु घटाद्यन्तस्थेत्यस्यायोगात्। नापि प्रभाया रूपं प्रतीव प्रकाशकत्वम्, प्रभायास्तमोविरोधित्वस्य रूपं प्रतीव गन्धादीन्प्रत्यपि सत्त्वात्। नहि सा गन्धदेशस्थं तमो न निवर्तयति, प्रभायामज्ञानविरोधित्वस्य रूपं प्रत्यप्यभावात्। प्रभाया रूपग्राहिचक्षुस्सहकारित्ववद् गन्धादिग्राहिघ्राणादिसहकारित्वस्याभावेऽपि चितो ग्राहकान्तरासहकारित्वेन दार्ष्टान्तिकाननुगुण्यात्। तस्माच्चितस्सर्वगतत्वेन सर्वसम्बन्धाद्रूपादेरिव गुरुत्वादेरप्याश्रयद्वारा साक्षाद्वा चित्सम्बन्धित्वात् चित्सम्बन्धित्वस्यैव च प्रकाशकत्वात् सर्वप्रकाशो दुर्वारः। "असङ्गो ह्यय"मिति श्रुतिरीश्वरस्य तत्तत्कृतलेपाभावपरा, "स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवती"ति पूर्ववाक्यात्, "यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महानि" त्यादिस्मृतेश्च। अपिच वृत्तितः पूर्वमाध्यासिकसम्बन्धोऽस्त्येव। अन्यस्त्वुपरागो न दृश्यत्वे तन्त्रमिति किं तदर्थया वृत्त्या। किञ्च जीवचैतन्यमसङ्गं चेद्ब्रह्मचैतन्यं सुतरां तथेति मानोपाधिकविषयोपरागत्वात् स्वतस्सार्वज्ञ्यं न स्यात्।

ननु ब्रह्म सर्वोपादानत्वादुपाधिं विनैव स्वस्वरूपवत् स्वाभिन्नं जगद्भासयतीति चेत्। उपादानत्वं हि न तावद्विशिष्टनिष्ठं परिणामित्वम्, आध्यासिकसम्बन्धस्यातन्त्रत्वापातात्। अनाद्यविद्यादिकं प्रति तदभावाच्च। नापि शुद्धनिष्ठमधिष्ठानत्वम्, सार्वज्ञ्यादेर्विशिष्टनिष्ठत्वात्।

आवरणाभिभवार्थत्वपक्षोऽप्ययुक्तः। विवर्ताधिष्ठानचिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशनात्, अन्यस्य चाज्ञानकल्पितस्याभावात्। किञ्चाज्ञानस्य नयनपटलवत्पुंगतत्वे चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशादप्रकाशो युक्तः। विषयगतत्वे तु चैत्रगतया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यात्।

---

अथ अन्तःकरण इति प्रकृताभिप्रायम्। अनुद्भूतत्वमात्रमेव प्रतिबिम्बत्वेन उपाधित्वाभावव्याप्यत्वेन ममाभिमतम्। अत एव तावन्मात्रं (तन्मात्रमिति पाठान्तरम्) शब्दप्रतिबिम्बनोपाधौ व्यभिचारीति विनिगमनाभावेन अव्यभिचारं समर्थयितुं विविनक्ति॥ शब्दान्येति॥ यत्रानुद्भूतत्वमिन्द्रियायोग्यत्वम्, अचाक्षुषत्वमित्यवधेयम्॥ अचाक्षुष इति॥ न च अचाक्षुषनभसोऽभादिसाहित्येन (जले) प्रतिबिम्बितत्वं दृष्टमिति वाच्यम्। प्रभामण्डलस्यैव तथा प्रतिबिम्बितत्वात्। आकाशवदिति॥ तथा च वृत्तिवैयर्थ्यमिति भावः।

अपिच किं "आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे मानाभावादिति" विवरणोक्तरीत्याऽज्ञानमेकम्? किंवा "अनन्तान्येव शुक्त्यज्ञानानि यद्यनन्तानि शुक्तिज्ञानानी"ति इष्टसिद्धिरीत्या प्रतिविषयमनेकानि? नाद्यः। शुक्तिज्ञानेनाज्ञाननिवृत्तौ सद्य एव मोक्षापातात्। अनिवृत्तौ रूप्यादेस्सविलासाविद्यानिवृत्तिरूपबाधायोगात्। नन्वस्मिन्पक्षे शुक्तिज्ञानेन रूप्यादेः स्वकारणे प्रविलयमात्रं क्रियते मुद्गरप्रहारेणेव घटस्य, नत्वज्ञानं निवर्तते, ब्रह्मज्ञानेन तु विरोधित्वादज्ञानमेव निवर्तत इति चेन्न। ज्ञानस्याज्ञानद्वारैवान्यविरोधित्वेनाज्ञानमनिवर्त्य रूप्यादिनिवर्तकत्वायोगात्। शुक्तिज्ञानेनाज्ञाननिवृत्तावभिव्यक्तचैतन्यासम्बन्धेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापाताच्च। नच खद्योतादिप्रकाशैर्महान्धकारस्येवाज्ञानस्यैकदेशेन नाशाद्वा भीरुभटवदपसरणाद्वा कटवत्संवेष्टनाद्वा चैतन्यस्याप्येकदेशेन प्रकाश इति युक्तम्। अनाद्यज्ञानचैतन्ययोर्निरवयवत्वात्। नच मण्यादिना वह्न्यादिगतदाहादिशक्तेरिव शुक्त्यादिज्ञानेनाऽविद्यागतावरणशक्तेरभिभवात् तत्प्रकाशः। वृत्त्या च स्वोपादानभूताया अप्यविद्याया अभिभवो वृश्चिकवृक्षादिना गोमयमृदादेरिव युक्त इति वाच्यम्। चक्षुरादिजन्यशुक्तिवृत्ते रूपादिहीन-

---

ननु प्रभायाः रूपप्रकाशकत्वं तद्देशस्थतमोनिवर्तकत्वम्, किंवा तदज्ञानविरोधित्वम्, आहोस्वित् तद्ग्राहकसहकारित्वम् इति त्रेधा विकल्प्य आद्यं निराकरोति ॥ प्रभाया इति ॥ द्वितीयं निराह ॥ प्रभायामज्ञानविरोधित्वस्येति ॥ तृतीयमाशंक्य निराकरोति ॥ प्रभायां रूपग्राहीति ॥ ग्राहकान्तरासहकारित्वेनेति ॥ ग्राहकान्तरस्यैव अभावादिति भावः ॥ चित्सम्बन्धस्यैवेति ॥ अस्मिन् पक्षे अयोग्यस्य अकिञ्चित्करत्वादिति भावः। ननु असंगो ह्ययं पुरुष इति श्रवणात् चितः सर्वगतत्वमेव नास्तीति नातिप्रसंग इत्यत आह ॥ असंगो ह्ययमिति ॥ अन्यस्य चेति ॥ कल्पितस्य च अधिष्ठानायोग्यत्वस्य चोक्तत्वादिति भावः। एकस्यैव वृत्त्या अज्ञाने नाशिते सर्वस्य सर्वप्रकाशापत्तिरिति दूषणे सत्येव दूषणान्तरमाह ॥ शुक्तिज्ञानेनेति ॥ अज्ञानस्येति ॥ ज्ञानाज्ञानयोर्विरोधावश्यकत्वे कारणोच्छेदक्रमेणैव इतरोच्छेदोपपत्तौ साक्षाद्विरोधकल्पने मानाभावादिति भावः। अप्रकाशापाताच्चेति ॥ तथाच तन्निर्वाहाय अज्ञाननिवृत्त्यवश्यंभावे सद्यो मोक्षप्रसंगो दुर्निवार इति भावः। अनादीति हेतुगर्भविशेषणम्। तथाच यदनादि तन्निरवयवमेव। सावयवत्वे जन्यत्वनियमेन अनादित्वाभावप्रसंगादिति भावः। ननु अविद्योपादेया वृत्तिः कथं तदभिभाविका स्यादित्यत आह ॥ वृत्त्या चेति ॥ ननु शुक्तिवृत्तिः किं शुद्धात्मविषयतया अज्ञानाभिभाविका, किंवा शुक्त्यवच्छिन्नचिद्विषयतया इति विकल्प्य आद्यं निराह (निराकरोतीति पाठान्तरम्) ॥ चक्षुरादिजन्येति ॥

शब्दैकगम्यशुद्धात्माविषयतया तदावरणशक्त्यप्रतिबन्धकत्वात् । शुक्तिवृत्तेस्तदवच्छिन्नचिद्विषयत्वेन तत्प्रतिबन्धकत्वे च तयैव तदा शुद्धात्मप्रकाशापातात् । अविद्याकल्पितमप्रमक्तप्रकाशं च जडं प्रति चाविद्याया इवाविद्यागतावरणशक्तेरप्ययोगात् । अस्वीकाराच्च जडविशिष्टात्मानं प्रति, तत्स्वीकारे च विशेषणानावरकविशिष्टावरकशक्त्यभिभवस्य विशेष्यावरकशक्त्यभिभवं विनाऽयोगेन शुक्तिवृत्त्यैव तदा शुद्धात्मप्रकाशापातात् । प्रत्युतगोमयत्वाद्यवस्था एव पार्थिवावयवा वृश्चिकाद्युपादानानीति न वृश्चिकादिनोपादानस्वभावाभिभवः । शिष्टमविद्यानिवर्तकभंगे वक्ष्यते ।

नच मूलाज्ञानस्यैवावस्थाविशेषा रजताद्युपादानानि शुक्तिज्ञानेन साध्यास्तं निवर्तन्त इति वाच्यम् । तेषामज्ञानविशेषत्वेऽनेकाज्ञानवादापातात् । नचेत् साक्षाज्ज्ञानेन निवृत्तेर्भ्रमोपादानतायाश्चायोगात्, तेषामिव रूप्यस्यैवोपादाननिवृत्तिं विना निवृत्तिप्रसंगाच्च । शुक्त्यज्ञानं नष्टमित्यनुभवविरोधाच्च ।

द्वितीयेऽप्येकया वृत्त्या किं सर्वतदज्ञानानां निवृत्तिः ? उतैकतदज्ञानस्य ? आद्ये शुक्तेः पुनःकदाप्यप्रकाशो न स्यात् । अन्त्ये तदापि प्रकाशो न स्यात्, एकस्यावरणस्य निवृत्तावपि

---

ननु यथा दाह्यप्रत्यासन्नो दाहकमात्रनिष्ठो मण्यादिः दाहकशक्तिमभिभवति । एवमावरणीयाविषयिण्येव वृत्तिरावरकनिष्ठशक्त्यभिभाविकास्त्विति चेत्, एवं हि मणेरिव वृत्तेरपि सकलशक्त्यभिभवप्रसङ्गेन सकलावच्छिन्नचैतन्यप्रकाशापत्तिः । नहि मणौ सति कस्यापि दाहो भवति । नच मन्त्रेण प्रतिनियतदाहकशक्तिप्रतिबन्धवदेव तत् स्यादिति वाच्यम् । तत्र प्रतिनियतोद्देश्यत्वस्यैव नियामकत्वात् । प्रकृते च तादृशस्य नियामकस्य प्रमाणाभावेन अस्वीकार्यत्वादिति । समानविषयाया एव अभिभावकत्वादिति भावः । (त)द्वितीयं निराह । शुक्तिवृत्तेरिति ॥ शुक्त्याकारवृत्तेरित्यर्थः । तत्प्रतिबन्धकत्वे चेति ॥ आवरणशक्तिप्रतिबन्धकत्वे चेत्यर्थः । किञ्च आवरणमपि किं जडविषयम्, किंवा जडविशिष्टात्मविषयमिति विकल्प्य नाद्य इत्याह — अविद्याकल्पितमिति ॥ द्वितीयमनूद्य निराकरोति । जडविशिष्टात्मानमिति ॥ तस्य उपादानाभिभावकत्वे (स्वोपादानाभिभावकत्वे इति पाठान्तरम्) यः परेण दृष्टान्त उक्तः सोऽपि असंप्रतिपन्न इत्याह । प्रत्युतेति ॥ शिष्टमिति ॥ वृत्तेर्निवर्तकत्वे बाधकमित्यर्थः । अज्ञानस्यापि परंपरया अज्ञाननिवर्तकत्वस्वीकारादाह । साक्षादिति ॥ तेषामिवेति ॥ यथा ज्ञानभिन्नावस्थाविशेषाणामेव साक्षाज्ज्ञानेन निवृत्तिः, एवं शुक्तिरूप्यस्यापि साक्षाज्ज्ञानेनैव निवृत्तिरस्तु । एवं च तन्निवृत्त्युपपादनाय मध्ये अवस्थाविशेषः तन्निवृत्त्यादिकं न कल्प्यमिति भावः । एवं तर्हि तथैवास्तु इत्यत

अन्यस्य सत्त्वात्। अयं च दोषः अवस्थाविशेषपक्षेऽपि योज्यः। कथं च सादिशुक्त्यादेस्तदवच्छिन्नचैतन्यस्य वानाद्यज्ञानविषयत्वम्? निर्विषयस्यावरणस्यानवस्थानात्। नच पूर्वमनवच्छिन्नावरणमिदानीमवच्छिन्नावरणं जातम्। शुक्तिज्ञानेनैव मोक्षापातात्। एतेन व्यक्तितः पूर्वं जातिरिव विषयात् पूर्वमज्ञानमस्तीति निरस्तम्। प्रतिविषयमनेकाज्ञानाङ्गीकारायोगात्।

यत्तूक्तं कौमुद्यां ज्ञानेन तत्प्रागभावनिवृत्तावप्ययं विकल्पः समः। ततश्च सत्स्वप्यनन्तेष्वज्ञानेषु बहुजनसंकीर्णदेशे वैद्युतनिपातवत् त्रिदोषहरौषधवच्च ज्ञानमितराज्ञानापसारणेनैकमज्ञानं नाशयतीति, तन्न। नहि मन्मते ज्ञानप्रागभावाः आवरणानि, किन्तु दण्डप्रागभाववत् हेत्वभावरूपाः। नापि ज्ञानं तन्निवर्तकत्वेन हेतुः, किन्तु दण्डादिवत् स्वरूपेणैव। एवंच एको दण्ड इवैकं ज्ञानं स्वसजातीयान्तरप्रागभावे सत्यपि स्वकार्यं जनयेदेव। कार्योत्पत्तौ हि कारणसत्ता तन्त्रं नतु कारणजातीयसर्वप्रागभावनिवृत्तिः, असम्भवात्। त्वन्मते तु वृत्तेरावरणनिवर्तकत्वादेकस्मिन्नज्ञाने निवृत्तेऽप्यन्यस्य यवनिकान्तरवत् सत्त्वात् कालान्तर इव वृत्तिकालेऽप्यप्रकाशः स्यात्। नचालोकाभावस्तम इति मते तमः कुड्यादिवदावरणम्, हेत्वभावरूपत्वात्। नाप्यालोकस्तन्निवर्तकत्वेन ज्ञानहेतुः किन्तु स्वरूपेणैव।

---

आह। शुक्त्यज्ञानमिति॥ तथाच अनुभवानुरोधेन एकाज्ञानपक्ष एव त्याज्य इति भावः। द्वितीयेऽपीति॥ यावन्ति ज्ञानानि तावन्त्यज्ञानानीति द्वितीयपक्षेऽपीत्यर्थः। कदापीति॥ वृत्तिकालेऽपीत्यर्थः। योज्य इति॥ किं एकया वृत्त्या सर्वावस्थाविशेषाणां निवृत्तिः, उत एकस्याः। आद्ये कदापि अप्रकाशो न स्यादिति। अन्त्ये वृत्तिकालेऽपि प्रकाशो न स्यात्। अवस्थाविशेषरूपावरणान्तरसत्त्वादिति योज्य इत्यर्थः। एकानेकाज्ञानोभयसाधारणदोषमाह। कथं चेति॥ निर्विषयस्येति॥ ज्ञानवत् सविषयत्वस्वभावत्वादिति भावः। अवच्छिन्नावरणमिति॥ प्रागावृतमेव पश्चादवच्छिन्नं जातमित्यर्थः। एकाज्ञानमभिप्रेत्य दोषमाह। शुक्तिज्ञानेनेति॥ शुक्तिज्ञानेनैव मोक्षापातेनेत्यर्थः। अंगीकारायोगादिति॥ अंगीकारायोगस्योक्तत्वादित्यर्थः। अयं विकल्पः सम इति॥ ज्ञानेन किं सर्वे प्रागभावा निवर्त्यन्ते, उत एक एव प्रागभावो निवर्त्यते। नाद्यः। सकलज्ञानोत्पत्त्यापत्तेः। न द्वितीयः इतरज्ञानप्रागभावे सति ज्ञानकालेऽपि कार्याभावापातादित्येवंरूप इत्यर्थः। अथ एक एव प्रागभावो ज्ञानेन निवर्त्यते। न चोक्तदोषः। अज्ञानवत् प्रागभावस्य अनावरणत्वादित्यत आह। नहीति॥ हेत्वभावरूपा इति॥ व्यवहारहेत्वभावरूपा इत्यर्थः॥ नापि ज्ञानं तन्निवर्तकत्वेनेति॥ तथा च न प्रागभावान्तरसत्त्वे कार्याभावः आपा-

नाप्येकैकालोकाभावस्तमः किंत्वाऽऽलोकत्वावच्छिन्नतदभावः। नचैकस्मिन्नप्यालोके सति सोऽस्ति। भाविज्ञाननिवर्त्यमज्ञानं त्वेतज्ज्ञानकालेऽप्यस्तीति वैषम्यम्। नचेहाप्यज्ञान-समुदाय एवावरणं, एकेन च ज्ञानेनैकस्मिन्नज्ञाने निवृत्ते स नास्तीति प्रकाशोपपत्तिरिति वाच्यम्। वृत्तिनाशेऽपि समुदायाभावस्य सत्त्वेन सदा प्रकाशापातात्। अयुक्तं चामूर्ताना-मज्ञानानामपसरणम्। तस्मादनुकूलतर्कहीना मिथ्यात्वहेतवः॥

॥इति प्रतिकर्मव्यवस्थाभङ्गः॥ २४॥

---

दयितुं शक्यः। तन्निवर्तकत्वेनैव व्यवहारादिति हेतुत्वे एव तत्प्रसंग इति भावः॥ स्वरूपेणैवेति॥ ज्ञानत्वादिनैवेत्यर्थः। ननु आलोकाभावस्य तमस्त्ववादिनां मते आलोककाले घटादिप्रत्यक्षं न स्यात्। भाव्यालोकप्रागभावस्य तमोरूपस्यावरकस्य सत्त्वादित्याशंक्याह॥ न च आलोकाभाव इति॥ किञ्च तुष्यतु दुर्जन इति न्यायेन भवतु तमः प्रतिबन्धकम्, तथापि एकस्मिन्नालोके सति तमो नास्त्येव। नहि एकैकाभावः तमः। आलोककालेऽपि तमोव्यवहारापत्तेः। अपितु समय विशेषसंसर्गिसंसर्गविशेषावच्छिन्नालोकत्वावच्छिन्नसामान्याभावः। सच यत्किञ्चिद्विशेषविरोधि-त्वात् तदा नास्त्येवेत्याह॥ नाप्येकैकालोकाभावस्तम इति॥ न च सामान्याभावस्य प्राग-भावविरोधित्वात् कथं प्रागभाववति सत्वम्, प्रागभावे आरोप्यसम्बन्धान्यसम्बन्धेन अविरोधात्। यद्वा आलोकत्वाश्रययावदभाव एव आलोकत्वावच्छिन्नाभावत्वेन विवक्षितः। सोऽपि यत्किञ्चि-द्विशेषविरोध्येव। अत एवाकर एव शंकां करिष्यति॥ नचेहापि अज्ञानसमुदाय एवेत्यादिना॥ अन्यथा समुच्चयान्तराभावेनापिरयुक्तः स्यादिति भावः॥ भावीति॥ अज्ञाननिष्ठावरकत्वस्य प्रत्येकं पर्यवसितत्वादिति भावः। ननु वृत्तिरेकमज्ञानं नाशयति। इतराणि अपसारयति। यद्वा सर्वाण्यपि अपसारयत्येवेति मते न कोऽपि दोष इत्यत आह॥ अयुक्तं चेति॥ मूर्तत्वस्य क्रियाजनकत्वावच्छेदकत्वादिति भावः। परमप्रकृतमुपसंहरति॥ तस्मादिति॥

॥ इति प्रतिकर्मव्यवस्थाभङ्गः॥ २४॥

## ॥ अथ मिथ्यात्वहेतूनां प्रतिकूलतर्कविवरणम् ॥

प्रतिकूलतर्कहताश्चैते। तथाहि। यदि विश्वं कल्पितं स्यात् तदा साधिष्ठानादिकं स्यात्। भ्रान्तेस्सदृशं सत्यं चाधिष्ठानं प्रधानं दोषमज्ञानं बाधकज्ञानं द्रष्टारं देहेन्द्रियादिकं च विनाऽयोगात्। निस्सामान्ये निर्विशेषे चात्मनि अधिष्ठानत्वे तन्त्रस्य सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषत्वस्याभावात्। उक्तं हि —

"अधिष्ठानस्य कार्त्स्न्येन ज्ञानेऽज्ञाने च न भ्रमः।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ॥" इति

ननु न सामान्यज्ञानं सद्विशेषाज्ञानं च तत्र तन्त्रम् गौरवात्। किन्तु स्वरूपाज्ञानं विशेषज्ञानं च। लाघवात्। तच्च स्वप्रकाशे निर्विशेषे चात्मन्यस्तीति चेन्न। त्वन्मतेऽपि भ्रान्तेस्संस्कारादित्रयजन्यत्वात्। सामान्याकाराज्ञाने च संस्कारानुद्बोधात्। असद्विशेषाज्ञानस्य च बाधकालेऽपि सत्त्वात्। वल्मीके स्थाणुत्वभ्रमनिवर्तकस्यापि पुंस्त्वभ्रमस्य वल्मीकत्वप्रमानिवर्त्यत्वेनांततो भ्रमकालाज्ञाताधिष्ठानविशेषप्रमां विना भ्रमानिवृत्तेश्च। (ननु) अथ भ्रमविरोधिज्ञानाभावस्तत्र तन्त्रम्, नतु विशेषाज्ञानम्। विश्वभ्रमोपादानाज्ञानस्य च श्रवणादिजन्यमात्ममात्रविषयं वृत्तिज्ञानं विरोधि नतु चिद्रूपज्ञानमिति चेन्न। अस्याविद्याविषयभङ्गे निरसिष्यमाणत्वात्।

---

॥ अथ मिथ्यात्वहेतूनां प्रतिकूलतर्कविवरणम् ॥

एते दृश्यत्वादिहेतवः। साधिष्ठानादिकं स्यादित्यत्र परस्येष्टापत्तिमाशङ्क्याधिष्ठानाद्यभावापादनावच्छेदकोपदर्शनेन तां वारयति ॥ भ्रान्तेरिति ॥ भ्रान्तेरयोगादित्यन्वयः ॥ सत्यमिति ॥ एतच्चाधिष्ठानादिषु सर्वत्र सम्बध्यते ॥ प्रधानमिति ॥ अधिष्ठाननिष्ठसादृश्यप्रतियोगीत्यर्थः ॥ निर्विशेष इति ॥ धर्ममात्रशून्य इत्यर्थः ॥ सामान्यज्ञानमिति ॥ सामान्यधर्मप्रकारकधर्मिज्ञानमित्यर्थः ॥ सद्विशेषेति ॥ आरोप्यधर्मिणि विद्यमानव्यावर्तकेत्यर्थः ॥ गौरवादिति ॥ सामान्यधर्मप्रकारकत्वधर्मिविद्यमानत्वयोः प्रवेशादिति भावः। संस्कारादीत्यादिपदेन दोषसंप्रयोगयोर्ग्रहणम्। असद्विशेषेति ॥ तथा च बाधकालाविद्यमानविशेषादर्शनस्यैव भ्रमहेतुत्वं वाच्यम्। अन्यथा बाधकालेऽपि भ्रमः स्यादिति भावः। ननु सद्विशेषाज्ञानस्य भ्रमहेतुत्वे सद्विशेषज्ञानं भ्रमनिवर्तकं स्यादिति वल्मीके स्थाणुत्वभ्रमनिवर्तकः पुंस्त्वभ्रमो न स्यात्, सद्विशेषाज्ञानत्वादित्यत आह ॥ वल्मीक इति ॥ वल्मीके पुंस्त्वभ्रमस्य तत्र स्थाणुत्वभ्रमनिवर्तकत्वेऽपि यावद्भ्रम-

किञ्चात्मानात्मनोर्दृग्दृश्यत्वात्मत्वानात्मत्वादिना भेदज्ञानाच्चाधिष्ठानाध्यस्तभावः। उक्तं हि त्वयैव।

" तत्तेदंते स्वतान्यत्वे त्वत्ताहन्ते* परस्परम्।
प्रतिद्वंद्वितया लोके प्रसिद्धे नास्ति संशयः॥ "

इति। " स्वयमात्मेतिपर्यया "विति च । अपि चाधिष्ठानतिरोधानं विनाध्यासासंभवस्य त्वयापि संमतत्वात् प्रकाशमात्रस्वभावस्य चात्मनः तिरोधाने प्रकाशनिह्नवत्वेन कथं तदधीनप्रकाशस्याविद्यादेरध्यस्तस्य प्रकाशः। किञ्च घटाद्यनुविद्धत्वेनाप्रतीतस्यात्मनः कथं तदधिष्ठानत्वम् । नच सन् घट इति स्फुरति घट इति चात्मा तदनुविद्धतया भातीति युक्तम् । चाक्षुषादिज्ञाने रूपादिहीनात्माप्रतीतेरित्युक्तत्वात्। नच स्वप्रकाशसदर्थभूतं घटाधिष्ठानं चैतन्यं स्वत एव भातीति युक्तम्। घटस्यापि तत्संबन्धेन स्फुरणसंभवे वृत्तिवैयर्थ्यात्। घटः स्फुरतीत्यस्य च स्फुरणानुभवत्वेन घटानुभवत्वायोगात्। नन्वथापि न प्रधानं भ्रमहेतुः किंतु तत्संस्कारः सच तत्प्रमयेव तद्भ्रमेणापि। अत्र च पूर्वपूर्वप्रपञ्चभ्रम अनादिः । नच

---

निवृत्तेरधिष्ठानविशेषप्रमां विनाऽयोगेन ब्रह्मणो निर्विशेषत्वे तज्ज्ञानस्य यावद्भ्रमनिवर्तकत्वमेव न स्यादित्यर्थः॥ तत्रेति॥ अधिष्ठानस्य इत्यर्थः॥ विश्वभ्रमोपादानेति॥ विश्वभ्रमस्येति वक्तव्ये उपादानग्रहणं तु उपादानविरोधादेव उपादेयविरोध इति सूचयितुमिति द्रष्टव्यम् । निरस्यमाणत्वादिति॥ वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते तस्य ज्ञाननिवर्तकत्वादित्यादिनेति शेषः। किञ्च भ्रमविरोधिवक्ष्किञ्चिज्ज्ञानाभावो न हेतुत्वेन वाच्यः, अतिप्रसङ्गात्। सामान्याभावस्तु व्यावर्तकधर्मज्ञानस्यापि भ्रमविरोधितया नास्तीत्याह। किञ्चेति॥

ननु आत्मत्वं दृक्त्वावच्छिन्नचैतन्याभिन्नम् अध्यासस्तु चिन्मात्रे, तत्र च व्यावर्तकधर्मज्ञानमस्त्येवेत्यस्वरसादाह। अपिचेति॥ किञ्चेति॥ अन्यत्र इदमर्थस्य आरोप्यानुविद्धतया प्रतीतिदर्शनादिति भावः। वृत्तिवैयर्थ्यादिति॥ न च प्रतिबन्धकापगमार्थं सेतिवाच्यम्। वृत्तिहेतोरेव तदुपपत्तेः। न चैवं स्वपक्षमतेऽपि ज्ञानापलापः। जानामीत्यनुव्यवसायानुरोधेन ज्ञानस्य अवश्यं स्वीकारात्। ज्ञानहेतुना च तस्योपपादयितुमशक्यत्वादिति भावः॥ घटः स्फुरतीति॥ यद्यपि घटानुभवः स्वप्रकाशतया स्फुरणानुभवरूप एव। अत एव घटमहं जानामीत्याकारा एव सर्वा वित्तय एवोत्पद्यन्त इति प्राभाकराणामप्यभ्युपगमः। तथापि अधिष्ठानानुवेधस्य नाय-माकारः। इदं रजतमिति हि तदनुभवादिति भावः॥ तद्भ्रमेणापीति॥ विशिष्टज्ञानस्यस्यैव

* मते इति पाठान्तरम्

प्रमाजन्य एव संस्कारो भ्रमहेतुः । सत्यपि संस्कारे प्रमाजन्यत्वाभावेन भ्रमाभावादर्शनात् । नच तार्किकस्येवाप्यस्तमेव देशान्तरादौ सदित्याद्ययोर्मतम् । मैवम् । एवं सत्याधिष्ठानधीरेव भ्रमहेतुः तद्धीश्च भ्रमरूपानादिरिति शून्यवादिरीत्याधिष्ठानस्याप्यसत्त्वापातेनाधिष्ठानत्वेन ब्रह्म सदिति त्वदुक्त्ययोगात् । अधिष्ठानवत्प्रधानस्याप्यबाधात् । तथाच

" प्रधानमिव धीमात्रादधिष्ठानमपि भ्रमे ।
हेतुस्सुगतरीत्या स्यादबाधस्तु द्वयोस्समः ॥ "

एतत्प्रपञ्चासाध्यार्थक्रियाकारिणश्च तात्त्विकप्रपञ्चान्तरस्याभावे स्वोचितार्थक्रियाकारिणः श्रुत्यादिसिद्धोत्पत्त्यादिकस्याप्यस्यैवात्मन इव स्वोपाधौ निषेधायोगेन तत्र तात्त्विकत्वापाताच्च । त्वन्मते प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य व्यावहारिकरूप्यविषयत्ववत् व्यावहारिकप्रपञ्चेऽपि नेह नानेति त्रैकालिकनिषेधस्य पारमार्थिकप्रपञ्चान्तरविषयत्वावश्यंभावाच्च । प्रातिभासिकस्यैव पारमार्थिकत्वाकारेण त्रैकालिकनिषेध इति तु निरस्तम् । कल्पाद्यभ्रमायोगाच्च कल्पान्तरीयसंस्काराद्भ्रमोत्पत्तौ च नारिकेरद्वीपवासिनो गुंजापुंजादावग्न्यारोपः स्यात् । एतज्जन्मन्यननुभूततिक्तरसस्यापि बालस्य गुडादावास्यगतपित्तद्रव्यनिष्ठतिक्तत्वारोपस्तु अनन्यगतिकत्वाज्जन्मांतरीयसंस्कारजन्यः । यद्वा माषराशिस्थमष्यां माषाभेदारोप इव गृह्यमाणारोपोऽयं नतु संस्कारजन्यः । किञ्च चैत्रेण मैत्रे संस्काराध्यासोऽपि मैत्रस्य भ्रमादर्शनात् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारम् । नच स्वेनाध्यस्तसंस्कारादेव भ्रमः, भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावात् ।

---

लाघवेन संस्कारजनकतावच्छेदकत्वादिति भावः ॥ आद्ययोरिति ॥ अनिर्वचनीयासत्ख्यातिवादिनोरित्यर्थः । नन्वबाधादेव अधिष्ठानस्य सत्त्वसिद्धिरित्यत आह ॥ अधिष्ठानवदिति ॥

ननु नेह नानेत्यादिश्रुत्या प्रपञ्चस्य निषिद्धत्वेन बाधितत्वमसिद्धमित्यत आह ॥ एतत्प्रपञ्चेति ॥ तथाचोदाहृतश्रुतिः नैतत्प्रपञ्चविषया । तथात्वे तत्तुल्यत्यादिश्रुतेरप्रामाण्यं स्यादिति भावः । एवं तर्हि निषेधो निर्विषयः स्यादित्यत आह ॥ त्वन्मत इति ॥ ननु निषेधप्रतियोगित्वं प्रकृतं तु उक्तप्रपञ्चस्य (तथाचैतत्प्रपञ्चस्येतिपाठान्तरम्) पूर्वप्रपञ्चः प्रधानमिति सर्वस्यैव निषेधप्रतियोगित्वम् । न त्वारोप्यभिन्नस्यापि निषेधप्रतियोगित्वं तत्त्वम् । अतः कुतः प्रपञ्चान्तरविषयत्वम् । अस्तु वा प्रातिभासिकस्यैव बाधनिषेधोऽपीत्यत आह ॥ कल्पाद्येति ॥ अनन्यगतिकत्वादिति । प्रकृतं तु अकल्पितत्वेनाप्युपपत्तेः नानन्यगतिकत्वमिति भावः । अयमिति ॥ तिक्तत्वारोप इत्यर्थः । प्रपञ्चभ्रमश्च गृह्यमाणारोप इति भावः ॥

यत्तूक्तं विवरणे गुणादिहीने ब्रह्मणि गुणादिकृतसादृश्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इति धीबलात् गन्ध इवेहापि सादृश्यान्तरं वा रक्तस्फटिक इत्यादिवत् सादृश्यं विनैवाध्यासोऽस्त्विति। तन्न। इह कल्पितस्यासादृश्यस्याप्यविद्याध्यासाधीनत्वेनान्योन्याश्रयात्। रक्तस्फटिक इत्यस्य सोपाधिकभ्रमत्वेन निरुपाधिके सादृश्यनियमाच्च, रक्तद्रव्यस्फटिकयोरपि द्रव्यत्वादिना सदृशत्वाच्च। नच दोषादिकं विना भ्रमश्शंक्यः, अप्रामाण्यस्य स्वतस्त्वाद्यापातात्। एवं द्रष्टृभावेऽपि न भ्रमश्शंक्यः, भ्रमस्य समानाश्रयप्रमानिवर्त्यत्वेन ज्ञानस्य ज्ञातृसापेक्षत्वेन च द्रष्टुरवश्यंभावात्। एवं देहेन्द्रियाद्यभावेऽपि न भ्रमश्शंक्यः। प्रलये सत्यप्यज्ञानादौ देहादेरभावेन प्रमाया इव करणजन्यभ्रमस्याप्यदर्शनात्। नच रूप्याद्यध्यासे दोषादीनां देहेन्द्रियान्तानां व्यावहारिकं वा करणादिसमं वा सत्त्वं तन्त्रमिति जगदध्यासेऽपि तथेति वाच्यम्। दोषादीनां व्यावहारिकसत्त्वस्याप्यसिद्ध्यान्योन्याश्रयात्। परमार्थ (पारमार्थिक) सत्त्वस्य त्वौत्सर्गिकप्रामाण्येन सिद्धत्वात्। इह साक्षिरूपाज्ञानादिप्रतीतौ करणाभावाच्च रूप्याद्यध्यासे करणादेरप्यधिष्ठानसमम(त्ताकत्वे)त्वेनेहापि तथात्वापाताच्च, दोषादेरध्यस्तत्वे तदभावस्य तात्विकत्वापातेनातात्विकेन च तात्विककार्यप्रतिबन्धायोगेन दुष्टतया बौद्धकल्पितवेदजन्यज्ञानस्येव जगज्ज्ञानस्य प्रामाण्यापाताच्च। दोषाद्यध्यासस्यापि दोषान्तरापेक्षत्वेनानवस्थाद्यापाताच्च, कस्यचिद्दोषाभावेऽप्यारोपे अप्रामाण्यस्य स्वतस्त्वं स्यात्।

---

गुणादिकृतेति ॥

सामान्यान्येव भूयांसि गुणावयवकर्मणाम्। भिन्नप्रधानसामान्यवर्तिसादृश्यमुच्यते ॥ इति लक्षणाक्रान्तसादृश्याभावेऽपीत्यर्थः ॥ सादृश्यान्तरमिति ॥ पदार्थान्तरमित्यर्थः। कल्पितस्येति ॥ कल्पितस्य च सादृश्यस्यानभ्युपगमादिति भावः। अन्योन्याश्रयादिति ॥ न चानादित्वाददोष इति वाच्यम्। अनादित्वे ब्रह्मवत् अध्यस्तत्वमेव न स्यादिति भावः ॥ दोषादिकमिति ॥ अनादिपदात् अज्ञानबाधकज्ञानयोः परिग्रहः। स्वतस्त्वाद्यापातादित्यादिपदात् तद्विषयदशायामपि भ्रमः स्यात्। पूर्वज्ञानस्य भ्रमत्वमेव न सिध्येदिति दूषणयोः परिग्रहः ॥ भ्रमस्येति ॥ भ्रममात्रस्येत्यर्थः ॥ अन्योन्याश्रयादिति ॥ विश्वस्य कल्पितत्वे सिद्धे तदन्तःपातिनां रूप्याद्यध्यासहेतुदोषादीनां व्यावहारिकत्वसिद्धिः। तत्सिद्धौ च तद्दृष्टान्तेन जगदध्यासहेत्वज्ञानादीनां व्यावहारिकत्वेत्यनुपपत्त्यभावेन विश्वस्य कल्पितत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः।

नन्वेवं ज्ञानस्य प्रमात्वे सिद्धे तद्विषयस्य सत्त्वसिद्धिः। तत्सिद्धौ च ज्ञानस्य प्रमात्वसिद्धिरित्यन्योन्याश्रयात् जगतस्सत्त्वमित्यतःपरमार्थसत्त्वमपि न सिध्येदित्यत आह ॥ परमार्थ-

न चानादित्वेन वा भेदवत् स्वनिर्वाहकत्वेन वाऽविद्याख्यदोषस्य तदनपेक्षा। तत एवाधिष्ठानानपेक्षापातात्। विषयस्यानादित्वेऽपि प्रतीतेर्दोषाजन्यत्वे अप्रामाण्यायोगाच्च। "अविद्यारोपे तस्या एव दोषत्वे लाघवेन जगदारोपेऽपि तस्या एव दोषत्वापाताच्च" स्वनिर्वाहकत्वे भेदो भिन्न इतिवदज्ञानमज्ञातमिति व्यवहारसंभवेऽपि प्रतीतिमात्रशरीरस्वविषयधीहेतुत्वेन स्वस्य स्वस्मात्पूर्वभावित्वायोगाच्च, बाधकज्ञानस्यापि बाध्यत्वे बाधपरम्परयाऽनवस्था(दे)या वक्ष्यमाणत्वाच्च। रूप्याद्यध्यासेऽधिष्ठानस्यापि तदेव सत्त्वं तन्त्रमितीहाप्यधिष्ठानस्यापि तथात्वापत्तेश्च। नच तत्राधिष्ठानज्ञानाबाध्यं सत्त्वं तन्त्रं दोषादीनां तु व्यावहारिकं तन्त्रमिति वैरूप्यकल्पनमसति बाधके युक्तम्। नचेह दोषादीनां मिथ्यात्वमेव बाधकम्। अन्योन्याश्रयात्। नच कतिपयाध्यासे प्रातिभासिकाध्यासे साद्यध्यासे वा दोषादिसत्त्वं तन्त्रम्, नत्वधिष्ठानेतरसर्वाध्यासे व्यावहारिकाध्यासे वा अनाद्यध्यासे वेति युक्तम्, अधिष्ठानेतरसर्वाध्यास एवायुक्त इत्युच्यमानत्वात्। लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रधूममात्रे प्रति संसर्गधीवह्न्योरिवाध्यासमात्रं प्रति तस्य तन्त्रत्वाच्च। अन्यथा

---

मन्त्रस्येति ॥ कारणं समसत्त्वं तन्त्रमिति द्वितीयं प्रयोजकं दूषयति॥ इद साक्षिरूपेति ॥ दोषादेरिति ॥ अत्र दोषपदमागन्तुकदोषपरम्। आदिपदादज्ञानपरिग्रहः। अनवस्थादीत्यादिपदेनान्योन्याश्रयादिपरिग्रहः॥ तदनपेक्षेति ॥ दोषानपेक्षेत्यर्थः॥ तत एवेति॥ अनादित्वादेवेत्यर्थः॥ प्रतीतिमात्रशरीरेति॥ सव्येतरविषाणवत् स्वस्वप्रतीत्योः समसमयत्वेन स्वं प्रति स्वप्रतीतिं प्रति वा हेतुत्वनिर्वाहार्थमपेक्षितस्य स्वस्मिन् स्वपूर्ववर्तित्वस्य स्वप्रतीतिं प्रति वा पूर्ववर्तित्वस्यायोगादित्यर्थः। ननु चरमवृत्तेर्बाध आत्मरूप एवेति नानवस्थेत्यरुचेराह॥ रूप्याद्यध्यास इति॥ अधिष्ठानस्य शुक्त्यादेः तदेव बाध्यमेव। ननु सर्वत्राधिष्ठानस्य स्वज्ञानबाध्यमेव सत्त्वं तन्त्रम्। दोषादीनान्तु व्यावहारिकसत्त्वदर्शनात्। एवञ्च रूप्याधिष्ठानशुक्त्यादेः बाध्यत्वेऽपि जगदध्यासाधिष्ठानत्वेन ब्रह्मणैवान्यस्य निरधिष्ठानत्वेन स्वज्ञानाबाध्यत्वं सत्त्वं पारमार्थिकत्वरूपमेव पर्यवस्यतीत्याशङ्क्य निराकरोतीति॥ नचेति॥ तथा च सर्वत्राधिष्ठानज्ञानाबाध्यमेव सत्त्वं तन्त्रमिति भावः॥ अन्योन्याश्रयादिति॥ दृश्यत्वादिहेतुभिर्मिथ्यात्वे सिद्धे वैरूप्यकल्पनेन प्रतिकूलतर्कपराहत्यभावसिद्धिः। तत्सिद्धौ च तैरेव हेतुभिः मिथ्यात्वसिद्धिरिति अन्योन्याश्रयादित्यर्थः॥ कतिपयाध्यास इति॥ अध्यासविशेष इत्यर्थः। तमेव विशेषं दर्शयति॥ प्रातिभासिकेत्यादिना। अधिष्ठानेतरसर्वाध्यास इति उक्तमेव दर्शयति॥ व्यावहारिकेत्यादिना। लाघवेनेति। प्रातिभासिकाध्यासत्वाद्यपेक्षया अध्यासत्वस्य लघुशरीरत्वेनेत्यर्थः॥ प्रथमोपस्थितत्वेन चेति॥ बाध्यमानत्वादिनाऽनन्तरं प्रातिभासिकत्वाद्युपस्थितिं विनाप्यध्यासत्वस्य उपस्थितिसंभवादिति भावः। तस्येति; दोषादिसत्त्वस्येत्यर्थः।

संसर्गधीवह्नी अपि संवादिप्रवृत्त्यपर्वतीयधूमौ प्रति हेतू स्यातामित्यनुमानमात्रोच्छेदः । एवं साधिष्ठानेऽध्यासे प्रातिभासिकाध्यासे वा सावध्यासे वाऽधिष्ठानसत्त्वं तन्त्रं नतु सर्वाध्यासे व्यावहारिकाध्यासे वा अनाद्यध्यासे वेति च स्यात् । तस्मादध्यासमात्रेऽधिष्ठानस्य दोषादीनां चाधिष्ठानज्ञानबाध्यं सत्त्वं तन्त्रमिति जगदध्यासहेतुदोषादयो ब्रह्मज्ञानाबाध्याः स्युः । एवंच

"लोकेऽधिष्ठानवत्सत्यो दोषादिर्भ्रमकारणम् ।
दृष्टोऽतो ब्रह्मवत्सत्यो दोषादिस्स्याज्जगद्भ्रमे ॥"

किञ्चार्थस्यासत्यत्वेऽपि ज्ञानं सदेवेति वक्ष्यमाणत्वाद्वृत्तिरूपं तद्विशिष्टचिद्रूपं वा घटादिज्ञानं सत्यं स्यात् । किञ्च बन्धस्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्ववत्त्वे तदभावार्थं यत्नो न स्यात् । अत्यन्ताभावस्यासाध्यत्वात् । नच पारमार्थिकत्वाकारेणात्यन्ताभावः स्वरूपेण तु निवृत्तिरिति युक्तम् । तस्य निराकारे ब्रह्मणीव स्वरूपाबाधेनाप्युपपत्तेः । गौरनाद्यन्तवतीत्यादिश्रुत्यनुसरणाय पारमार्थिकत्वाकारेण निवृत्तिः स्वरूपेण त्वनुवृत्तिरित्यापाताच्च । नच तत्प्रतीत्युच्छेदार्थं यत्नः, तस्या अपि मिथ्यात्वात् । अन्यथा मोक्षेऽपि बन्धप्रतीत्यापत्त्या प्रातीतिकबन्धापातात् ।

---

अन्यथेति । बाधकं विना लाघवप्रथमोपस्थित्योरनादर इत्यर्थः ॥ अनुमानमात्रेति ॥ कार्यकारणभावमूलकानुमानमात्रेत्यर्थः । असत्त्वेऽपीति ॥ मिथ्यात्वेऽपीत्यर्थः । अभ्युपगमवादोऽयम् । दृश्यत्वादिहेतूनामुक्तदूषणग्रस्तत्वेन मिथ्यात्वासिद्धेरिति ॥ अत्यन्ताभावस्येति ॥ अत्यन्ताभावप्रतियोगिनश्च निःस्वरूपत्वेन तस्य निवृत्त्ययोगेन अत्यन्ताभावस्यैव साध्यत्वं वक्तव्यमिति भावः ॥ तस्येति ॥ पारमार्थिकत्वाकारेण अत्यन्ताभावस्येत्यर्थः । गौरनाद्यन्तवती आद्यन्तवती न भवतीति तच्छ्रुत्यर्थः । नत्वनादिरन्तवती चेति । एषोऽश्वत्थः सनातन इति श्रुत्या स तत्र पर्येतीति मुक्तौ विशेषप्रतिपादकश्रुत्या च विरोधापत्तेः । नचैवं विश्वमायानिवृत्तिरिति श्रुतिविरोधः । उदाहृतानेकश्रुत्यनुसारेण तस्याः मायाकार्यदुःखादिनिवृत्तिपरत्वात् । प्रपञ्चितश्चायमर्थः तत्त्वमाणिक्यपेटिकायाम् । न च त्वन्मते बन्धनिवृत्त्यर्थं यत्नो न स्यादिति वाच्यम् । अस्माभिः प्रकृतिसम्बन्धविशेषस्यैव बन्धत्वोपगमेन प्रकृतेर्नित्यत्वेऽपि तत्सम्बन्धनिवृत्तौ विरोधाभावादिति ॥ मिथ्यात्वादिति ॥ तथा च पूर्वोक्त एव दोष इति भावः ॥ अन्यथा मोक्षेऽपीति ॥ तथा सत्यस्य निवृत्तेरनभ्युपगमादिति भावः । बन्धो यदि ब्रह्मणि अध्यस्तः स्यात् तर्हि तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यो न स्यात् , देवतानिदिध्यासन-

किञ्च बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं श्रवणादिनियमादृष्टसापेक्षज्ञाननिवर्त्यत्वं च न स्यात्। नहि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तं न वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तम्। नच नियमादृष्टं न बन्धनिवृत्तौ हेतुः किन्तु ब्रह्मापरोक्ष एवेति युक्तम्। अवघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणसाध्यापरोक्षान्यमुक्तेरेव तत्साध्यत्वात्। अन्यथा श्रवणनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमविध्ययोगात्। नच परोक्षज्ञानमेव श्रवणादपरोक्षज्ञानं तु नियमादृष्टादिति युक्तम्। श्रवणविधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षज्ञानस्यैव दर्शिनोद्देशात्, साक्षात्कर्तव्य इति श्रुत्यन्तराच्च, त्वन्मते परोक्षज्ञाने कामनायोगेन तस्योद्देश्यत्वायोगाच्च। आपरोक्ष्यस्यैव

---

साध्यतत्साक्षात्कारनिवर्त्यदुरितविशेषवत्। बन्धो यदि तथा स्यात्तर्हि श्रवणादिनियमादृष्टसापेक्षब्रह्मसाक्षात्कारनिवर्त्यो न स्यात्। दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यदुरितविशेषवदिति प्रतिकूलतर्कान्तरं आह ॥ किञ्चेति ॥ ननु न बन्धस्य नियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यता येन ब्रह्मण्यध्यस्तत्वं न स्यात्। किन्तु ब्रह्मापरोक्षज्ञानमात्रनिवर्त्यत्वं नियमादृष्टन्तु तत्रैवोपयुज्यत इत्याशङ्क्य निराकरोति ॥ नचेति ॥ अन्यथेति ॥ श्रवणनियमादृष्टस्य साक्षात्कारान्यफलानभ्युपगमे श्रवणे नियमविधिर्न स्यात्। तत्रैव हि नियमविधिः यत्र साधनान्तरप्राप्तिकृता विधित्सितसाधनस्य पाक्षिकी प्राप्तिर्निवारयितुं शक्यते। प्रकृते च नियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षसाधनान्तरप्रसक्तिरेव नास्तीति न तत्र नियमविधिः संभवतीति भावः। परोक्षज्ञानमेवेति ॥ तथाच श्रवणफलाभ्यापरोक्षज्ञानस्यैव नियमादृष्टसाध्यत्वोपगमात् श्रवणसाध्ये च परोक्षज्ञाने साधनान्तरप्राप्तिसंभवात् न श्रवणे नियमविध्युपपत्तिरिति भावः। परोक्षज्ञानप्रवाहरूपेति।

यद्यपि निदिध्यासनं ज्ञानान्यमानसक्रियारूपमिति पराभ्युपगमः। तथापि ज्ञानातिरिक्तमानसक्रियारूपत्वे मानाभावः। न च विधेयत्वानुपपत्तिरेव मानम्। पत्न्यवेक्षणादिवत् ज्ञानविशेषस्य विधेयत्वसंभवात्। यथा चैतत् तथा तृतीयपरिच्छेदे ज्ञानविधिसमर्थने स्फुटं भविष्यति। दर्शिनोद्देशादिति। यद्यपि दृशेः पदार्थज्ञानालोचने इत्यादिपाठात् ज्ञानार्थतया परोक्षज्ञानार्थकत्वमपि संभवति। तथापि बाधकं विना प्रचुरप्रयोगसिद्ध एवार्थो ग्राह्य इति दृशेः साक्षात्कारार्थकत्वमेव युक्तमिति भावः। श्रुत्यन्तराच्चेति। तथाच अत्र दृशेः साक्षात्कारपरत्वं सुगममिति भावः। त्वन्मत इति। अज्ञाते ज्ञाने कामनायोगात् ज्ञात एव परोक्षज्ञाने कामना वाच्या।

नियमादृष्टसाध्यत्वेऽपि तत्साध्यदेवतापरोक्ष्यनिवर्त्यदुरितवदध्यस्तत्वायोगाच्च । किञ्च कल्पितत्वे स्वधीहेत्विन्द्रियासन्निकर्षात् प्रतिकर्मव्यवस्था न युक्ता स्यात् ।

किञ्च यदि जगत्कल्पितं स्यात्तदा त्वन्मतेऽपि "जन्माद्यस्य यत" इति सूत्रे "यतो वे" त्यादि श्रुतौ च जन्माद्युक्तिः "ईक्षतेर्नाशब्दं" इति सूत्रे "तदैक्षत" इत्यादिश्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः "लोकवत्तु लीलाकैवल्यं" इति सूत्रे "आप्तकामस्य का स्पृहे" ति श्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति सूत्रे "पुण्येन पुण्यं लोकं नयती" त्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, "तेजोऽतस्तथाह्याह" इति सूत्रे "वायोरग्नि" रित्यादिश्रुतौ च तेज आदेर्वाय्वादिजन्यत्वोक्तिः "विपर्ययेण तु क्रम" इति सूत्रे "पृथिव्यप्सु प्रलीयत" इति श्रुतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात् । न हि कल्पितस्य रूप्यादेर्जन्मादिकमीक्षापूर्वं सृष्टत्वं वा तद्भ्रान्तेः प्रयोजनापेक्षा वा जीवस्य सुखदुःखेश्वरादिविषयभ्रान्त्येश्वरस्य वैषम्यादिप्रसक्तिर्वा एकस्य कल्पितस्य

---

तज्ज्ञानं च स्वविषयीभूतज्ञानविषयतावच्छेदकभूतस्यार्थस्य ज्ञाने सत्येव भवति, नान्यथेति प्रागर्थज्ञानस्यावश्यकत्वेन तस्मिंश्चासति सिद्धे इच्छाविरहात् तत्कामनैव नोपपद्यत इति अध्ययनविधेरर्थज्ञानफलत्वं निराकुर्वतस्तव मत इत्यर्थः । अभ्युपेत्याह ॥ आपरोक्ष्यस्यैवेति ॥ तत्साध्येति ॥ नियमादृष्टसाध्येत्यर्थः ।

यतश्च "कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
व्रती भूत्वा भवेत्तेन तत्पापस्य प्रणाशनम् ॥

इत्यादिवाक्यादवगन्तव्यम् । दुरितवदित्यस्यानन्तरं बन्धस्येति शेषः ॥ किञ्चेति ॥ घटादिप्रपञ्चस्य कल्पितत्वे(न) शुक्तिरूप्यादिवत् प्रातिभासिकत्वावश्यंभावेन अज्ञायमानावस्थाया एवाभावेन तद्धीहेतुसन्निकर्षादेरनपेक्षितत्वापत्त्या त्वदभ्युपगतप्रतिकर्मव्यवस्थैव न स्यादित्यर्थः ।

यद्यप्यसत्ख्यातिपक्षे यथा इन्द्रियासन्निकृष्टत्वाविशेषेऽपि दोषमहिम्ना शुक्तिरूप्यकर्मरोमादिर्धीव्यवस्था तथैव दोषभ्रमसंस्काराधिष्ठानेनेन्द्रियसम्प्रयोगरूपसामग्रीमहिम्नैव प्रपञ्चस्य कल्पितत्वेऽपि स्वधीहेत्विन्द्रियसन्निकृष्टत्वं विनैव विलक्षणप्रतिनियतविषयधीरूपकार्यस्य व्यवस्थोपपत्स्यते । तथाप्युक्तसामग्र्या अपि कल्पितत्वेन प्रातिभासिकत्वावश्यंभावात् । तत्काले कार्यत्वाभिमतस्याभावेन दृष्टिसृष्टिपक्षसमर्थनापत्त्या सर्वैव त्वदुक्तव्यवस्थैवानुपपन्ना स्यादित्यत्र तात्पर्यम् ॥ त्वन्मतेऽपीति ॥ अत्रापिशब्देन वक्ष्यमाणस्वीकारणाय जन्मादीनामुभयसम्मति

कल्पितान्तरादुत्पत्तिर्वा तत्र लयो वा दृष्टः युक्तो वा । रूप्यादौ च जन्मेक्षापूर्वसृष्टत्वाभावेऽप्यसत्त्वमेव तन्त्रम्, नतु तद्विशेषः प्रातिभासिकत्वं तन्त्रम्, ज्ञाननिवर्त्यत्वेऽपि तस्यैव तन्त्रत्वापातात्, अनुमानमात्रोच्छेदस्योक्तत्वाच्च ।

नचेश्वरस्य मायाविवद्भ्रामयितृत्वात्प्रयोजनादिप्रसक्तिः । भ्रामयितुरीश्वरस्यापि सपरिकरस्य जीवैरध्यस्तत्वात् । नहीश्वरः स्वेन वा चिन्मात्रेण वाध्यस्तः । नच कल्पकं विना कल्पना । नच जीवानां वाय्वादिभ्योऽन्याद्युत्पत्तिक्रमो वास्ति यः श्रुतेरालंबनं स्यात् ।

---

पन्नत्वं सूचयति ॥ पृथिव्यप्सु प्रलीयत इति श्रुतौ चेति ॥ यद्यपि "विपर्ययेण क्रमोऽत उपपद्यते चेति" सूत्रे शाङ्करभाष्ये

"जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते"

इति स्मृतिरेवोदाहृता । तथापि तत्स्मृतिसमानार्थिकेयं श्रुतिरिति नैतदुदाहरणेऽपि दोष इति भावः ॥ अयुक्तं स्यादिति ॥ असदर्थविषयत्वेन अप्रमाणं स्यादित्यर्थः । असत्त्वमेवोपपादयति ॥ नहीत्यादिना ॥ युक्तो वेति(वि) कल्पितस्य स्वरूपेण त्रैकालिकनिषेधप्रतियोगिनो नृशृङ्गादिवन्निःस्वरूपत्वादिति भावः । नन्वीक्षापूर्वकसृष्टत्वाद्यभावेऽप्यसत्त्वमात्रं न तन्त्रं किन्तु प्रातिभासिकत्वम् । एवञ्च रूप्यादौ च तदभावेऽपि वियदादिप्रपञ्चे तदङ्गीकारे नानुपपत्तिरित्याशङ्क्याह ॥ रूप्यादौ चेति ॥ नतु तद्विशेष इति ॥ गौरवादिति भावः । गौरवस्यादोषत्वे बाधकमाह ॥ ज्ञाननिवर्त्यत्वेऽपीति ॥ तस्यैव प्रातिभासिकत्वस्यैव ॥ अनुमानमात्रेति ॥ कार्यकारणभावमूलानुमानमात्रेत्यर्थः ॥ उक्तत्वादिति ॥ संसर्गधीवत्ती अपि संवादिप्रवृत्त्यपर्यवसानीयभ्रमौ प्रति हेतू स्यातामित्युक्तत्वादित्यर्थः । भ्रामयितुरीश्वरस्यापीति ॥ तथाच जीवस्येश्वरो भ्रामक इति भ्रममात्रेण तत्र प्रयोजनादिप्रसक्तेरसंभवादिति भावः । इतरपर्युदासेनेश्वरस्य जीवकल्पितत्वमेवोपपादयति ॥ नहीति ॥ आत्माश्रयादिप्रसङ्गोऽशरीरानन्यभावस्याक्षेपादिति भावः ॥ नच कल्पकं विनेति ॥ भ्रमवत्पुरुषं विना भ्रान्तेरयोगात् । अन्यथा भोक्तृरहितमपि भुजिक्रिया स्यादिति भावः ॥ नच जीवानामिति ॥ श्रुतिप्रवृत्तेः पूर्वमिति शेषः । यः श्रुतेरालम्बनमिति । यः श्रुतेर्विषय इत्यर्थः । तथा च निर्विषयत्वेनाप्रामाण्यं दुर्निवारमिति भावः ॥ वीद्धागमस्यापीति ॥ तस्यापि तद्वाक्यजन्यभ्रमिमिथ्यार्थविषयत्वेन प्रामाण्यापत्तेरिति भावः ।

नच भ्रान्तिं विना कल्पितमस्ति। न चैतद्वाक्यजभ्रान्तिसिद्धालंबनेनैव एतद्वाक्यस्य प्रामाण्यम्। बौद्धागमस्यापि तत्प्रसङ्गात्। त्वन्मते भ्रान्तिहेतूनां देहेन्द्रियादीनां पृथिव्यादिकार्यत्वात्। ईश्वरस्य चाभ्रान्तत्वात्। भ्रान्तत्वे वा तद्भ्रान्तेरपि देहादिकार्यत्वादिति दिक्। तस्मान्नानुमानं विश्वमिथ्यात्वे मानम्। इमे मिथ्यात्वहेतूनां प्रतिकूलतर्काः॥

॥ इति मिथ्यात्वहेतूनां प्रतिकूलतर्कविवरणम् ॥ २५॥

---

किञ्च भ्रान्तिसिद्धार्थपरतया श्रुतेर्या त्वया सालम्बनता उच्यते तत्र किं सा भ्रान्तिर्जीवानाम् किंवा परमेश्वरस्येति विकल्प्य आद्ये दोषमाह। त्वन्मत इति। तथाच सामग्रीबाधात् न पृथिव्यादेः जीवभ्रान्तिसिद्धत्वम् इति भावः॥ द्वितीयं निराह॥ ईश्वरस्य चेति॥ परमप्रकृतमुपसंहरति॥ तस्मादिति॥

॥ इति मिथ्यात्वहेतूनां प्रतिकूलतर्कविवरणम् ॥२५॥

## ॥ अथ सामान्येन मिथ्यात्वश्रुतिनिरासः ॥

नापि श्रुतिः । श्रुत्या स्वस्वरूपस्वप्रामाण्यतद्धेतुयोग्यतादेर्मिथ्यात्वाबोधने प्रत्यक्षादिसिद्धतत्सत्यत्वोपजीवने ब्रह्मेतरसर्वमिथ्यात्वासिद्धेः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति महाभाष्योक्तन्यायेन प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धेश्च । बोधने श्रुतिबोध्यार्थस्य तात्विकत्वासिद्धेः। शब्दबोध्यस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमादित्युक्तत्वात् । मदर्थे स्वाप्नदेवतादिवाक्येऽपि योग्यताप्रामाण्ये अपि सती एव, शब्दस्वरूपमपि मम सत्यम् । तव तु न तच्छब्दत्वेन मानम् । आप्त्यपौरुषेयत्वयोरभावात् । किन्तु यादृच्छिकसंवादि वा उपश्रुतिवत्तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणं वा । नच तात्त्विकसर्वमिथ्यात्वपरश्रुतिबलादिह समसत्ताकत्वनियमभङ्गः । "स्वर्गकामो यजेत" त्यादिविधेरुपजीव्याग्निविद्यावद्विषयकत्वेनेव द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयकत्वेन

---

॥ अथ सामान्येन मिथ्यात्वश्रुतिनिरासः ॥ २६ ॥

ननु मास्तु मिथ्यात्वे अनुमानं मानम् । एकमेवाद्वितीयमित्यादिश्रुतिरस्तु इत्याशङ्क्याह ॥ नापि श्रुतिरिति ॥ मिथ्यात्वे मानमिति शेषः । ननु विश्वमिथ्यात्वे श्रुतिर्मानमिति वदन् प्रष्टव्यः । किं स्वस्वरूपस्वप्रामाण्यादेः मिथ्यात्वं न बोधयति वा बोधयति वेति विकल्प्य तत्राद्यमनूद्य दूषयति ॥ श्रुत्या स्वस्वरूपेति ॥ सन्निपातलक्षण इति ॥ यो विधिर्यत्सन्निपातलक्षणो भवति । यद्वस्तुस्वरूपप्रत्यासत्तिनिमित्तको भवतीति यावत् । स विधिस्तद्विघाताय न भवति । यत्स्वरूपोपजीवनेन यस्य वस्तुनः स्वरूपलाभो भवति तद्वस्तुस्वरूपविघाताय तद्वस्तु कारणं न भवति इति न्यायार्थः । यद्यपि घटादिसत्त्वग्राहि प्रत्यक्षं न श्रुतेरुपजीव्यम् । तथापि तदुपजीव्यजातीयत्वात् श्रुतिर्न तद्विषयमिथ्यात्वसाधनक्षमेति इति भावः ॥ द्वितीयं निराह ॥ बोधन इति ॥ उक्तत्वादिति ॥ प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यसमर्थनावसर इति शेषः ।

ननु शब्दबोध्यस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमोऽसिद्धः । मदर्थकं स्वाप्नदेवतावाक्ये व्यभिचारादित्याशङ्क्याह ॥ मदर्थ इति ॥ ननु तथापि शब्दार्थस्य न शब्दस्वरूपसमसत्ताकत्वं, स्वाप्नवाक्य एव व्यभिचारादित्याशङ्क्य व्यभिचारः किमस्मन्मते उत त्वन्मत एवेति विकल्प्य नाद्य इत्याह ॥ शब्दस्वरूपमपीति ॥ द्वितीयं निराह ॥ तव त्विति ॥ ननु यादृच्छिकसंवादित्वेऽपि व्यभिचारस्तदवस्थ एवेत्यत आह ॥ उपश्रुतिवदिति ॥ यादृशशब्दस्वरूपं

संकोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वस्य वोपपत्तौ श्रुतेस्तात्विकसर्वमिथ्यात्वपरत्वकल्पनेऽन्योन्याश्रयात् । तस्मात्

"शब्दार्थतद्योग्यतयोस्तुल्यत्वाद्योग्यता सती ।
न चेद्वेदोऽप्रमाणं स्याद्वृषलोद्वाहमन्त्रवत् ॥ "

एवं श्रुतिः स्वबोध्यं द्वितीयाभावमपि निषेधति चेत् स्वव्याघातः । न चेत्सर्वमिथ्यात्वासिद्धिरिति । किञ्चोक्तरीत्या श्रुत्याप्यविद्याकार्यस्य विश्वस्य न स्वरूपेण त्रैकालिकनिषेधः । पारमार्थिकत्वेन निषेधस्तु निर्धर्मकस्यात्मनोऽपि। अपिच "तत्वमसी"त्यनेन प्रत्यक्षाविरोधाय

---

च ( शब्दज्ञानस्वरूपं च इति पाठान्तरम् ) सत्यमेवेति न व्यभिचार इति भावः । ननु शब्दबोध्यस्य शब्दस्वरूपतत्प्रामाण्यादिना समसत्ताकत्वनियमो नास्त्येव । अन्यथा तात्विकसर्वमिथ्यात्वश्रुतेरप्रामाण्यं स्यात् इत्याशंक्य निराकरोतीति ॥ नचेति ॥ उपजीव्याग्निविद्यावद्विषयकत्वेनैवेति ॥ एतच्च अपशूद्राधिकरणे निर्णीतम् । तच्च अस्माभिः असतः साधकबाधकग्रन्थव्याख्यानावसर एव निरूपितमिति तत्रैवानुसन्धेयम् । अन्योन्याश्रयादिति । श्रुतेः तात्विकसर्वमिथ्यात्वपरत्वे सिद्धे तुल्यसत्ताकत्वनियमभङ्गः । भङ्गे च तस्मिन् बाधकाभावेन श्रुतेः तात्विकसर्वमिथ्यात्वपरत्वमित्यन्योन्याश्रयादित्यर्थः । तथाच सर्वमिथ्यात्वे श्रुतेरतात्पर्याभावादेव नाप्रामाण्यप्रसक्तिः । तात्पर्यविषयार्थाभाव एव तथात्वादिति भावः ॥ तुल्यत्वादिति ॥ तुल्यसत्ताकत्वनियमादित्यर्थः । नचेदिति । योग्यतावती नचेदित्यर्थः । वृषलोद्वाहमन्त्रवदिति । मन्त्रानुकरणभूतपदसन्दर्भवदित्यर्थः । श्रुतिर्हि एकमेवाद्वितीयमित्यादिश्रुतिः । स्वव्याघात इति । स्वविहितनिषेधस्यापि द्वितीयत्वाक्रान्ततया स्वनिषेध्यत्वे मे माता वन्ध्येतिवत् श्रुतेर्व्याहतभाषित्वेन अप्रामाण्यप्रसङ्ग इत्यर्थः । सर्वमिथ्यात्वासिद्धिरिति । यद्यपि द्वितीयाभावस्य ब्रह्ममात्रत्वेन तदनिषेधेऽपि ब्रह्मेतरसर्वमिथ्यात्वं सिध्यति । तथापि ब्रह्मरूपस्य द्वितीयाविरोधितया न तदभावत्वं युज्यते । अन्यथा स्वदेशकालयोरपि स्वाभावत्वापत्तेः । किञ्च जगदविरोधिब्रह्मण एव जगदभावरूपत्वे जगन्मिथ्यात्वं न सिध्येत् । अविरोधिविशिष्टाभावादिप्रतियोगिनि मिथ्यात्वादर्शनात् । अपि च द्वितीयनिषेधस्य जगत्कारणब्रह्मरूपत्वे ब्रह्मणः जगत्प्रागभावापत्त्या जगदाश्रयत्वादिप्रसङ्गादिति भावः ॥ न स्वरूपेणेति ॥ नृशृङ्गादिवदत्यन्तासत्त्वापत्तेरिति भावः । प्रत्यक्षाविरोधायेति । तत्त्वंपदार्थभूतयोः जीवेशयोः वेदप्राक्तनया उपजीव्यं यद्भेदग्राहकं प्रत्यक्षं तदविरोधायेत्यर्थः ॥ तदविरोधाय ॥

तत्त्वंपदलक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तदविरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यमिति न तत्सिद्धविश्वमिथ्यात्वसिद्धिः । अन्यथा "नेहनाने" ति निषेधाद्विश्वस्यात्यन्तासत्त्वं तात्त्विकं स्यात्यन्यथानुपपत्तिसिद्धमसद्वैलक्षण्यं त्वतात्त्विकं स्यात् । किञ्च श्रुतेस्तात्पर्यं चैतन्यमात्रे वा? द्वितीयाभावविशिष्टे वा? तदुपलक्षिते वा? नाद्यः, विश्वमिथ्यात्वासिद्ध्या इष्टापत्तेः । तस्य स्वप्रकाशस्य नित्यसिद्धत्वेन श्रुतेर्वैयर्थ्याच्च । न द्वितीयः, श्रुतेरखण्डार्थत्वहानेः । अत एव न तृतीयः, काकवदितिवद् द्वितीयाभाववदिति सप्रकारज्ञानहेतुत्वे अखण्डार्थत्वायोगात् । चिन्मात्रस्य नित्यसिद्धत्वेनान्यस्य च मुमुक्ष्वद्वेयत्वेन काकेन संस्थानविशेषस्येव द्वितीयाभावेनोपलक्ष्यस्यान्यस्याभावेन तस्योपलक्षणत्वायोगाच्च । किञ्च श्रुतिबोध्यस्य विशेषणस्य वोपलक्षणस्य वा द्वितीयाभावस्य सत्त्वे अद्वैतहानिः । मिथ्यात्वे च दण्डहीने दण्डीतिवाक्यवत् काकहीने काकवदित्यादिवाक्यवच्चाद्वैतवाक्यस्यातत्त्वावेदकता स्यात् । नच तत्रातात्पर्यान्नातत्त्वावेदकता । आद्यपक्षान्तर्भावापाताच्च । किञ्चातात्पर्यं हि मानान्तरप्राप्त्या वा, यथा वायुक्षेपिष्ठत्वादौ, तद्विरोधाद्वा

---

प्रत्यक्षाविरोधाय । प्रत्यक्षादिसिद्धादन्यस्यैवेति ॥ परीक्षितप्रत्यक्षतदुपजीव्यनुमानश्रुतिसिद्धादन्यस्यैव प्रातिभासिकप्रपञ्चस्यैवेत्यर्थः । तत्सिद्धेति । तादृशप्रत्यक्षादिसिद्धेत्यर्थः ॥ अन्यथेति ॥ तादृशप्रत्यक्षादिविरोधस्य अपरिहर्तव्यत्व इत्यर्थः । श्रुतेरिति । अद्वैतश्रुतेरित्यर्थः । तात्पर्यमिति ॥ तत्प्रतीतिप्रयोजनत्वरूपमित्यर्थः । अपौरुषेये वेदे तत्प्रतीतीच्छया उच्चरितत्वरूपतात्पर्यासंभवादिति । नित्यसिद्धत्वेनेति । स्वरूपांशे सता संशयादिविरोधिज्ञानस्वभावत्वेनेत्यर्थः । अखण्डार्थत्वहानेरिति । द्वितीयाभावसंसर्गसंसर्गिधीहेतुत्वापत्तेरिति भावः । अत एवेत्यनेन उक्तहेतुमेव सदृष्टान्तं विवृणोति । काकवदिति । किञ्च द्वितीयाभावस्य उपलक्षणत्वाङ्गीकारे न कुलधर्मार्थः । किन्तु ज्ञानार्थः । तच्च ज्ञेयं किंचिन्मात्रम् उत तदितरत् इति विकल्प्य आद्यं प्रत्याह ॥ चिन्मात्रस्य नित्यसिद्धत्वेनेति ॥ द्वितीयं निराह ॥ अन्यस्य च मुमुक्षुद्वेयत्वेनेति ॥ अन्यथा मोक्षो विमुक्तार्थ इति चैतन्यमात्रात् अन्यज्ञानस्य पुरुषार्थसम्बन्धित्वाभावादिति भावः । किञ्च चिन्मात्रान्यस्य द्वितीयत्वरूपप्रतियोगितावच्छेदकाक्रान्ततया विरोधेन द्वितीयाभावोपलक्ष्यत्वार्हत्वमेव असंभवि इत्यभिप्रेत्य द्वितीये पक्षे एव सदृष्टान्तं उपलक्ष्याभावरूपं दोषान्तरमाह ॥ काकेनेति ॥ उपलक्ष्यस्य कल्प्यस्यान्यत्र सत्त्वविशेष इत्यध्याहुः । तत्र अतात्पर्यादिति । तात्पर्यं विषयीभूतसत्त्वासत्त्वाभ्यामेव शब्दप्रामाण्याप्रामाण्ययोः सर्वैः व्यवस्थितत्वादिति भावः । आद्यपक्षेति ।

हादापातप्रतीतधर्मेण पुंसा तत्प्रकारविशेषस्येव वेदान्तादापातप्रतीतब्रह्मणा मुमुक्षुणापि अद्वितीयत्वादितत्प्रकारस्यैव जिज्ञासितत्वाच्च, शुद्धाद्वैतस्यापि द्वितीयाभावस्य तात्पर्याविषयत्वेन द्वैतमानविरोधेन चात्मवपोत्खननादेरिव व्यावहारिकसत्त्वासिद्धेश्च । अवांतरतात्पर्यविषयत्वापत्तिसिद्धिरिति चेन्न । द्वितीयाभावस्योपक्रमे उपसंहारे च प्रतीतस्य प्राकरणिकत्वेन मुमुक्षौ फलवत्त्वदर्शनेन चान्यशेषत्वायोगेनावांतरतात्पर्याविषयत्वात् । स्वप्रकाशचैतन्यस्य चोक्तरीत्या प्राप्ततया महातात्पर्याविषयत्वाच्च, प्रमाणावांतरतात्पर्यविषयस्यान्यशेषत्वेऽपि महातात्पर्यविषयसमसत्ताकत्वनियमाच्च । अवांतरतात्पर्यविषयस्य द्वितीयाभावस्य द्वितीयवत् व्यावहारिकत्वे श्रुत्या प्रत्यक्षादिबाधायोगाच्च । नहि कदापि तदभावे तत्प्रमिते तत्रारोपितम् । तस्माद् द्वितीयाभावस्य मिथ्यात्वे श्रुतेरतत्त्वावेदकत्वप्रसंगो दुर्वारः । तस्मान्न मिथ्यात्वे श्रुतिर्मानम् ॥

॥ इति सामान्येन मिथ्यात्वश्रुतिनिरासः ॥ २६ ॥

---

तत्प्रकारविशेषस्येत्यर्थः । शास्त्रगम्यस्येति ॥ शब्दप्रमाणगम्यस्येत्यर्थः । एतदपि हेतुगर्भविशेषणम् । उद्देश्यविशेषणत्वाद्विधेयत्वादिपरोपात्तनिर्ज्ञातविशेषणत्वपक्षं दूषयति ॥ अद्वितीयत्वादीति ॥ तथाच श्रुतेः द्वितीयाभावेऽतात्पर्यं दुर्निवारमिति भावः । द्वितीयाभावस्य तात्पर्याविषयत्वे तत्प्रामाण्यानुपपत्तेः ॥ शुद्धाद्वैतस्यापीति ॥ तत्सिद्धिरिति ॥ व्यावहारिकसत्त्वसिद्धिरित्यर्थः । उपक्रम इति ॥ सदेव सोम्येदमग्र आसीदित्युपक्रमे बाधायां सामानाधिकरण्यपरे 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहारे चेत्यर्थः ॥ उक्तरीत्येति ॥ नित्यसिद्धत्वेनेत्युक्तरीत्येत्यर्थः । अन्यथा प्रमाणे शास्त्रसमर्थपरितिष्ठायविरोधः स्यादिति भावः ॥ महातात्पर्येति ॥ दर्शपूर्णमासप्रयाजादौ तथा दर्शनादिति भावः । बाधायोगाच्चेति । व्यावहारिकविषयकस्यैव त्वया बाधकत्वाभ्युपगमादिति भावः । प्रत्यक्षादेरारोपितविषयत्वेनैव बाध्यत्वस्वीकारादिति भावः । प्रत्यक्षादिप्रमितस्य आरोपितत्वाभावादेवोपपादयति ॥ नहीति ॥ तदभावमुपसंहरति ॥ तस्मान्न मिथ्यात्वेति ॥

॥ इति सामान्येन मिथ्यात्वश्रुतिनिरासः ॥ २६ ॥

निषेधे त्विष्टापत्तिरप्रसक्तप्रतिषेधश्च । किंच घटपटौ भिन्नाविति ज्ञानं स्वस्याद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमाक्षिपतीति नाद्वयश्रुतेरवकाशः । यथोक्तम् इयमर्थापत्तिर्न स्वविषयेति सैव द्वारमद्वयश्रुतेः । तदुक्तम्—

"आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानोपेक्षणादंते बाधते नाद्वयश्रुतिम् ।" इति

तन्न । अर्थापत्तेरितरस्माद्भेदाभावे त्वदुक्तरीत्या घटपटभेदासिद्ध्या तद्भेदस्यापि घटपटभेदोपपादकत्वेनार्थापत्तिविषयत्वात् । उपपादकत्वं ह्यर्थापत्तिविषयत्वे तंत्रं नत्वर्थापत्त्यसंबंधित्वम् । अन्यथा दग्धदहनसंबंधान्यथानुपपत्तिर्ज्ञाननिवर्त्यत्वान्यथानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात् । नेह नानेति श्रुतिरपि भेदमात्रनिषेधान्यथानुपपत्तिश्च स्वाभेदविषया न स्यात् । नहि सर्वं सर्वस्मादभिन्नमिति काचित् श्रुतिरस्ति । अस्ति चेदपि सापि स्वाभेदविषया न स्यात् । तथाच तत्रार्थापत्त्यंतरं श्रुत्यंतरं च वाच्यमिति तत्राप्यनवस्था स्यात् । एवंच

---

[illegible]योः भेदबुद्धिपरंपरां विनैव अर्थापत्तिप्रसूताभेदज्ञानस्यैव विरोधिनः सत्त्वात् अद्वैतश्रुतेरवकाश एव नेत्याह ॥ किंचेति ॥ अनुपपत्तेरिति ॥ स्वस्य भेदज्ञानत्वानुपपत्तेरित्यर्थः ॥ इयमर्थापत्तिरिति ॥ घटपटभेदज्ञानस्य भेदज्ञानत्वान्यथानुपपत्तिः, अद्वैतज्ञानस्य घटपटभेदज्ञानस्य च भेदविषयतापि न स्वस्य अद्वैतज्ञानाद्भेदमवगाहत इति श्रुतिः तथैव लब्धपदा सती सर्वाद्वैतं बोधयेदित्यर्थः ॥ आद्यधीवेद्येति ॥ घटपटौ भिन्नौ इति ज्ञाने श्रौताद्वैतज्ञानात् भेदं पृथक् अद्वैतज्ञानं तत् तत्र आद्यधीः, तद्वेद्यो यो भेदः तद्विषया अनुपपत्तिः स्वज्ञानोपेक्षणात् स्वजन्यज्ञाने अद्वैतज्ञानात् भेदग्रहणे औदासीन्यात् स्वस्य स्वविषयत्वाभावेन स्वनिष्ठाभेदग्रहणे सामर्थ्यविधुरत्वात् अन्ते अर्थापत्त्यवसानानन्तरम् अर्थापत्तिजन्यज्ञानस्य अद्वैतज्ञानस्य च अभेदबोधनाय प्रवृत्ताम् अद्वैतश्रुतिं न बाधत इत्यर्थः ॥ त्वदुक्तरीत्येति ॥ अर्थापत्तिजन्यस्य ज्ञानस्य श्रौताद्वैतज्ञानेन श्रुत्या अभेदे बोधिते अर्थापत्तिजन्यज्ञानस्य अभेदज्ञानत्वमिथ्या घटपटभेदज्ञानस्य अद्वैतज्ञानाद्भेदसिद्ध्यापत्त्या घटपटयोः भेदासिद्ध्येत्यर्थः ॥ तद्भेदस्यापीति ॥ अर्थापत्तेः अद्वैतज्ञानाद्भेदस्यापीत्यर्थः । ननु अर्थापत्त्यसंबन्धित्वे सति उपपादकत्वम् अर्थापत्तिविषयत्वे तन्त्रम्, [illegible] भोक्तारौ तथा दृष्टत्वात्, एवं चार्थापत्तिसिद्धो भेदः कथं तद्विषयः स्यादित्यत आह ॥ उपपादकत्वं हीति ॥ तथाच प्रमाणबलेन स्वस्य स्वविषयत्वं न विरुद्धमिति भावः ॥ अर्थापत्त्यसंबन्धित्वमिति ॥ अर्थापत्त्यसंबन्धित्वमपीत्यर्थः । ननु अर्थापत्तिजन्यज्ञानसिद्धावपि श्रुतेन तत्र

किंच शब्दबुद्धयोर्विरम्य व्यापारायोगाच्च क्रमेणाभेदग्रहो युक्तः । ननु युगपदेव श्रुत्या सर्वाद्वैतविषयतया जातायां बुद्धावस्माकं तत्तद्विषयेषु प्रामाण्यबुद्धय एव क्रमिका इति चेन्नैवम् । श्रुत्यापि सर्वाभेदस्यैव श्रुतत्वात्तदन्यथानुपपत्त्या च घटपटाद्यभेदस्य कल्प्यत्वात् । प्रथमोपस्थिते भेदप्रसक्तिमति च कल्पकाभेद एव प्रथमं प्रामाण्यधीर्न्याय्या । स एव च प्रत्यक्षबाधित इति कथं चरमबुद्धितद्विषयाद्यभेदकल्पना येन तद्द्वारा सर्वाभेदस्सिद्ध्येदिति दुर्वारः प्रत्यक्षबाधः । विस्तरस्तु खंडनखंडने द्रष्टव्यः । तस्मात्प्रत्यक्षबाधाच्छ्रुतयोऽन्यपरा इति ॥

॥ इति द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखंडनभङ्गः ॥ २७ ॥

---

एव नेति नेतीत्यात्मेति श्रुतिर्विवक्षिता ॥ तस्याः तथात्वस्य परेण अभ्युपगमात् । तथाच समन्वयसूत्रे तद्भाष्यं "यो ऽसावुपनिषत्स्वेवाधिगतः पुरुषो ऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थो ऽनन्यशेषो नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम् । स एष नेति नेत्यात्मेत्यात्मशब्दात् आत्मनश्च प्रत्याख्यातुमशक्यत्वात्" इति । किंच यदुक्तं, अनवस्थाभयात् यत्र परंपराविच्छेदः तज्ज्ञानस्य श्रौतात्मैक्यज्ञानेन अभेदं गृहीत्वा अद्वैतश्रुतिः निर्बाधं सर्वाद्वैतं बोधयेदिति । तत्र । शब्दबुद्ध्योर्विरम्यव्यापारायोगादित्याह ॥ किंचेति ॥ ननु युगपदेवेति ॥ श्रुतौ न विरम्य व्यापार इति भावः । तत्रास्तु प्रामाण्यबुद्धीनां क्रमिकत्वं तथापि सर्वाभेदस्य प्रत्यक्षबाधो दुर्वार इत्याह ॥ नैवमिति ॥ तदन्यथानुपपत्त्या चेति ॥ श्रौत (श्रुतितः इति पाठः) सर्वाभेदान्यथानुपपत्तेरित्यर्थः । प्रथमं प्रामाण्यधीर्नैवेत्यत्रोपपत्तिमाह ॥ प्रथमोपस्थिते भेदप्रसक्तिमति चेति ॥ स एव चेति ॥ कल्पकाभेद एव चेत्यर्थः । उपसंहरति ॥ तस्मादिति ॥

॥ इति द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखण्डनभङ्गः ॥ २७ ॥

किंच शब्दबुद्ध्योर्विरम्य व्यापारायोगाच्च क्रमेणाभेदग्रहो युक्तः । ननु युगपदेव श्रुत्या सर्वाद्वैतविषयतया जातायां बुद्धावस्माकं तत्तद्विषयेषु प्रामाण्यबुद्धय एव क्रमिका इति चेन्नैवम् । ब्रह्मणि सर्वाभेदस्यैव श्रुतत्वात्तदन्यथानुपपत्त्या च घटपटाद्यभेदस्य कल्प्यत्वात् । प्रथमोपस्थिते भेदप्रसक्तिमति च कल्पकाभेद एव प्रथमं प्रामाण्यधीर्न्याय्या । स एव च प्रत्यक्षबाधित इति कथं चरमबुद्धितद्विषयाद्यभेदकल्पना येन तद्द्वारा सर्वाभेदस्सिद्ध्येदिति दुर्वारः प्रत्यक्षबाधः । विस्तरस्तु खंडनखंडने द्रष्टव्यः । तस्मात्प्रत्यक्षबाधाच्छ्रुतयोऽन्यपरा इति ॥

॥ इति द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखंडनभङ्गः ॥ २७ ॥

---

एव नेति नेतीत्यात्मेति श्रुतिर्विवक्षिता ॥ तस्याः तथात्वस्य परेण अभ्युपगमात् । तथाच समन्वयसूत्रे तद्भाष्यं "योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारिब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थो निर्विशेषो नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम् । स एष नेति नेत्यात्मेत्यात्मशब्दात् आत्मनश्च प्रत्याख्यानस्याशक्यत्वात्" इति । किंच यदुक्तं, अनवस्थाभयात् यत्र परंपराविच्छेदः तज्ज्ञानस्य श्रीतात्मैक्यज्ञानेन अभेदं गृहीत्वा अद्वैतश्रुतिः निर्बाधं सर्वाद्वैतं बोधयेदिति । तन्न । शब्दबुद्ध्योर्विरम्यव्यापारायोगादित्याह ॥ किंचेति ॥ ननु युगपदेवेति ॥ अतो न विरम्य व्यापार इति भावः । नन्वस्तु प्रामाण्यबुद्धीनां क्रमिकत्वं तथापि सर्वाभेदस्य प्रत्यक्षबाधो दुर्वार इत्याह ॥ नैवमिति ॥ तदन्यथानुपपत्त्या चेति ॥ श्रौत (श्रुतितः इति पाठः) सर्वाभेदान्यथानुपपत्तेरित्यर्थः । प्रथमं प्रामाण्यधीर्नैवेत्यत्रोपपत्तिमाह ॥ प्रथमोपस्थिते भेदप्रसक्तिमति चेति ॥ स एव चेति ॥ कल्पकाभेद एव चेत्यर्थः । उपसंहरति ॥ तस्मादिति ॥

॥ इति द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखण्डनभङ्गः ॥ २७ ॥

## ॥ अथ एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम् ॥ २८ ॥

किंच "सलिल एको द्रष्टाऽद्वैतो भवति" इत्यत्र सलिलादिपदेन "सदेव सोम्येदमग्र आसीत्" इत्यत्र कालप्रापकेण पूर्वेणाग्रपदेन "तदैक्षत नामरूपे व्याकरोत्" इतीक्षणनामरूपात्मकप्रपंचप्रापकेणोत्तरेण च द्वैतवाक्येन विरोधः, प्रामाण्यस्य स्वतस्त्वेनाद्वैतवाक्येनाद्वैतस्येव द्वैतवाक्येनैव द्वैतस्य स(त्य)त्वसिद्धेः । यदि चाविरोधाय द्वैतवाक्यस्य लक्षणादिनाऽद्वैतपरत्वं वाऽतात्विकविषयत्वेन व्यवस्था वा तद्विरोधेनाप्रामाण्यं वा तदा विपरीतं किं न स्यात् । अपच्छेदन्यायादेर्निरासात् । तेन पूर्वस्य द्वैतवाक्यस्य बाधेऽपि परस्याबाधाच ।

---

॥ अथ एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम् ॥ २८ ॥

ननु केवलमद्वैतश्रुतेः मानान्तरेण विरोधः किन्तु पूर्वोत्तरवाक्याभ्यां चेत्याह ॥ किञ्च सलिल इति ॥ यद्यपि एकमेवाद्वितीयमितिश्रुतिः मिथ्यात्वे मानमिति समर्थनावसरे 'सलिल एको द्रष्टाऽद्वैतो भवती'ति श्रुत्यन्तरस्य प्रामाण्यनिराकरणमयुक्तमिव । तथापि तुल्यन्यायतया तदनुग्राहस्य दूषणाभिधानमिति द्रष्टव्यम् । अत एव तत्समाख्यया एतच्छ्रुतिरद्वैतपरेत्यपि निरस्तम् ॥ सलिलादिपदेनेति ॥ सलिलादिपदेन 'एषाऽस्य परमा गतिः, एषाऽस्य परमा संपत्, एषोऽस्य परमो लोकः, एषोऽस्य परम आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्युत्तरवाक्यस्थेदंभूतादिपदपरिग्रहः ॥ विरोध इति ॥ एतच्च पूर्ववाक्यगततृतीयान्तपदेन सर्वेण सम्बध्यते । ननु द्वैतवाक्येन द्वैतस्य प्रतिपादनेऽपि तस्य सत्त्वेन अप्रतिपादनतया न सत्याद्वैतपरश्रुतिविरोध इत्याशंक्याह ॥ प्रामाण्यस्येति ॥ अन्यथा अद्वैतस्यापि सत्त्वं न सिध्येत् । न ह्यद्वैतं सत्यमित्यपि श्रुतिरस्ति । नन्वद्वैतं परमार्थतः इति श्रुतिरस्तीति वाच्यम् । तस्या अद्वैतपरतायाः निरसिष्यमाणत्वात् । द्वैतस्यापि सत्यत्वे श्रुत्यन्तरसत्त्वाच्चेति भावः । ननु न वैपरीत्यम्, अपच्छेदन्यायेन परस्याद्वैतवाक्यस्य प्रबलत्वादित्यत आह ॥ अपच्छेदन्यायादेरिति ॥ आदिपदेन अनन्यथासिद्धत्वादिपरिग्रहः ॥ तेनेति ॥ अपच्छेदन्यायेन पूर्वस्य सदेवेत्यस्य एकमेवाद्वितीयमित्यनेन बाधेऽपि ततोऽप्युत्तरस्य तदैक्षतेत्यादिवाक्यस्य तेन बाधायोगादित्यर्थः ॥ उक्तन्यायेति ॥ प्रत्यक्षप्राबल्यसमर्थनावसर इति शेषः ।

ननु तात्पर्यविषयीभूतार्थेन विरोधो वाच्यः । नहि द्वैतवाक्यस्य द्वैते तात्पर्यम्, प्रामाण्यमित्याशङ्क्य निराकरोति ॥ नचेति ॥ तस्मादिति ॥ मानान्तरेण पूर्वोत्तरेण च विरुद्धत्वा-

पूर्वस्याप्यनुपसंजातविरोधित्वादिना प्राबल्यस्योक्तत्वाच्च । न च सलिलसृष्टिकालेक्षणनाम-रूपव्याकर्तृत्वादिकं मानांतरप्राप्तम्, येन तद्वाक्यमनुवादकं स्यात् । तस्माद्द्वैतवाक्यमभ्यस्त-मद्वैतवाक्यमुपांशुयाजवाक्यमभ्यस्यविष्ण्वादिवाक्यवत् पूर्वोत्तरद्वैतवाक्यानुसारेण नेयम् । किं च त्वया

"यावत् किंचित् भवेदेतदिदंशब्दोदितं जगत् ।
इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ॥

सदेवासीत्"इति व्याख्यातत्वात् सदभेदेन सत्त्वमुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः ।

---

वित्यर्थः । उपांशुयाजवाक्यमभ्यस्यविष्ण्वादिवाक्यवदिति ॥ एतच्च द्वितीयेऽध्याये द्वितीयपादे विचारितम् * । पौर्णमासीवदुपांशुयाजः स्यात् । (जै. सू. अ २. पा २. अधि ४ सू. ९.) दर्श-पूर्णमासयोः श्रूयते । "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमंतरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यौ अजामित्वाये"ति । तत्र संशयः किं विष्ण्वादिवाक्येषु त्रिषु यागविधयः । उपांशुयाजवाक्यमनु तत्समुदायानुवादः उतोपांशुयाजवाक्ये यागविधिर्विष्ण्वादिवाक्यत्रयं तदर्थवाद इति । तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात् विष्ण्वादिश्रवणेन च द्रव्यदेवतात्मकरूपलाभाच्च तेष्वेव विधयो न तु उपांशुयाजवाक्ये वर्तमानोपदेशात् सर्वयज्ञसाधारणाज्यरूपद्रव्यलाभेऽपि देवताया अलाभाच्च तथा च त्रयसमुदायानुवाद इति पूर्वः पक्षः । जामि वा एतदित्याद्युपक्रमे पुरोडाशद्वय-नैरन्तर्यप्रयुक्तजामितादोषसङ्कीर्तनेन तन्निर्हरणाय तदन्तराले पुरोडाशद्रव्यकं भिन्नं किंचित्कर्म विधित्सितमिति प्रथममेव अवगमात् जामितादोषोपक्रमाजामित्वोपसंहारैकरूप्यप्रतीतेरेकवाक्यत्व-संपादनलाभाच्च । पंचमलकारकल्पनया उपांशुयाजवाक्य एव अन्तरालसंयुक्तयागविधिः । तस्य या-ज्यानुवाक्याकाङ्क्षायामाग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलद्वयमध्याम्नानरूपक्रमप्रमाणावगमनन्तरभा-वि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलत्रयरूपमंत्रवर्णप्रामाणिकविकल्पितविष्ण्वादिदेवताकत्वेन रूपस्याभ्यासानुवादात् , न तु विष्ण्वादिवाक्येषु यागविधयः । उपक्रान्तजामितादोषस्य अन्तराल-संयुक्तयागविधिनैव विष्ण्वादिसंयुक्तयागविधिभिरपरिहारात् , प्रतीतैकवाक्यताभङ्गप्रसंगाच्च । तस्माद्विष्ण्वादिवाक्यत्रयं मंत्रवर्णप्राप्तविष्ण्वाद्यनुवादेन तदेकवाक्यतया उपांशुयाजस्तावकमिति सिद्धान्त इति ।

* विचिन्तितमिति पाठान्तरम्

न हि सदेवासीदित्यस्यासदासीदित्यर्थः । सदतिरेकेण नासीदित्यर्थोक्तौ तु सविशेषणे हीतिन्यायेन सदात्मकत्वं स्यात् । किं च न तावदेकशब्देन मिथ्यात्वसिद्धिः । तस्य मानान्तराविरुद्धानेकार्थत्वात् ,"एके मुख्यान्यकेवलाः" इत्यमरोक्तेः । "एको गोत्रे" इत्यत्रैकशब्दोऽयमन्यप्रधानासहायसंख्याप्राथम्यसमानवाचीति कैयटोक्तेश्च । "ष्णांता षड्"तिसूत्रे महाभाष्ये एकशब्दोऽयं बह्वर्थः । अस्ति संख्यार्थः एको द्वौ बहव इति । अस्त्यसहायवाची एकाग्नय एकहलानीति, अस्त्यन्यार्थे प्रजामेका रक्षत्यूर्जमेका इत्याद्युक्तेश्च । "एको बहूनां यो विदधाति कामान्"इत्यादौ संख्यादौ प्रयोगाच्च । संभवंति च ब्रह्मणि जीवादितोऽन्यत्वप्राधान्यप्राथम्यानि । सृष्ट्यादौ सहायानपेक्षत्वं कुसमयप्राप्तनिर्गुणत्वनिषेधायैकत्वसंख्याविधिः । नानारूपेषु निर्दोषत्वेन समानत्वं च । मन्मते एकं रूपमेको भाव इत्यादावपि संख्यार्थ एव । अत एवोत्तरत्र जीवादिष्वसंभावितजगत्स्रष्टृत्वादिनान्यत्वादिसमर्थनम् । किं च त्वयापि–

---

किंच त्वयेति ॥ यच्च यावच्च इदंशब्दोदितं जगदस्ति तदिदं सर्वं सृष्टेः प्राक् एकमेवाद्वितीयकं यत् तत् सत् सदेवासीदिति मिथ्यात्वाव्याख्यानत्वादित्यर्थः ॥ सविशेषणे हीतिन्यायेनेति ॥ इतरथा प्रपंचस्यापि सत्त्वमिथ्या सविशेषणायोगात् । सद्व्यतिरिक्तस्वरूपविशेषणनिषेधेन सदभिन्नत्वं स्यादित्यर्थः । एकमेवाद्वितीयमिति श्रुतेः पूर्वोत्तरविरोधात् मिथ्यात्वपरत्वं निराकृत्य संप्रति पदार्थपर्यालोचनयापि न तन्मिथ्यात्वसिद्धिरित्याह ॥ किञ्च न तावदिति ॥ तावच्छब्दः क्रमार्थः । अनेकार्थत्वमेवोपपादयति ॥ एके मुख्यान्यकेवला इत्यादिना ॥ प्राथम्येति ॥ प्रागभावावच्छिन्नसमयवर्तित्वरूपप्राथम्येत्यर्थः । ष्णांत इत्यस्यानन्तरं इतीति शेषः । मानान्तराविरोधमुपपादयति ॥ संभवन्ति चेति ॥ नचैवमनेकार्थत्वे वाक्यभेदः । एकवाक्यत्वसम्भवस्थल एव तस्य दोषत्वात् प्रकृते च विभिन्नमानविरुद्धैकस्यैव विधेयत्वासिद्ध्या एकवाक्यत्वासंभवादिति भावः ॥ सहायानपेक्षत्वमिति ॥ स्वसमानजातीयसजातीयान्तरानपेक्षत्वमित्यर्थः ॥ नानारूपेष्विति ॥ बहुरूपेष्वित्यर्थः ॥ कथमेकं रूपं एको भावः इत्यादिष्वद्वैतान्तरत्वेऽपि एकत्वसंख्यायाः गुणत्वेन गुणस्य द्रव्यमात्रधर्मत्वात् बाधकात् रूपादौ यथा तथा, एवं ब्रह्मण्यपि तस्यान प्रयोजितः । निर्गुणत्वावेदकश्रुतिविरोधात् इत्याशंक्य संख्यायाः गुणत्वानंगीकारात् दृष्टान्त यथासंभवमिति च इत्याह ॥ मन्मत इति ॥ निर्गुणत्वश्रुतेश्च हेयधर्मनिषेधपरत्वेन तद्बाधकत्वादिति भावः ॥ अत एवेति ॥ एकशब्दस्य नानार्थत्वोऽभ्युपगमादेव ॥ उत्तरत्रेति ॥ नामकरणप्रकरणे, यत्र सर्वज्ञतां इत्यादावित्यर्थः ॥ किञ्च त्वयापीति ॥ अपिशब्देन मयापि सिद्धान्तिना

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयश्शिलादितः ॥ १ ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ २ ॥"

इतिवदेकशब्दस्य स्वगतभेदनिषेधकत्वेन व्याख्यातत्वाच्च तेन मिथ्यात्वसिद्धिः । अद्वितीयशब्दोऽपि कर्मधारयो बहुव्रीहिर्वा । आद्ये ब्रह्म द्वितीयं न चेत् तृतीयं प्रथमं वा स्यात् । नान्त्यः । प्राथम्येन कर्मधारये संभवति जघन्यस्य बहुव्रीहेरयोगात् । द्वितीयादन्यदद्वितीयमिति "अनपुंसकस्ये"त्यादाविव "नार्षेयं वृणीत" इत्यादाविव च पर्युदासार्थत्वे नैक-

---

एकशब्दस्य स्वगतभेदनिषेधपरत्वमाश्रितमिति ज्ञापयति ॥ सजातीय इति ॥ सजातीयप्रतियोगिक इत्यर्थः । एतच्च स्वरूपकथनार्थम् । एवं विजातीयशब्दस्यापि व्याख्यानं द्रष्टव्यम् । अद्वितीयशब्दोऽपीति ॥ यद्यपि अद्वितीयशब्दे परेण न कर्मधारयोऽङ्गीकृतः इष्टासिद्धेः । तथापि संभवमात्रेण एवं विकल्प इति द्रष्टव्यम् ॥ जघन्यस्येति ॥ अन्यपदार्थप्रधानत्वेन विलम्ब्य तदुपस्थापकत्वेत्यर्थः । न च कर्मधारयपक्षेऽपि संसर्गाभावे शक्तस्य नञोऽन्योन्याभावलक्षणया जघन्यत्वं तुल्यमिति वाच्यम् । बहुव्रीहौ विनिगमनाविरहेण पदद्वयेऽपि लक्षणा ॥ कर्मधारये तु नञमात्र इति ज्ञातव्यात् । नञस्तदन्यत्वाभावावपि शक्तत्वेन जघन्यत्वशंकानवकाशाच्च । नच ब्रह्मणोऽद्वितीयत्वस्य स्वदभिमतत्वेन न तन्निषेधो युक्त इति वाच्यम् । अस्माभिः पूर्वकालासंबन्धित्वे सति पश्चात्कालसंबन्धित्वरूपद्वितीयत्वस्य सदात्मने ब्रह्मण्यनङ्गीकारेण तन्निषेधोपपत्तेः । किञ्चाद्वितीयमिति न बहुव्रीहिः । वाक्यभेदापत्तेः । न विद्यते द्वितीयं यस्य तत् तयोक्तमिति बहुव्रीहौ क्रियान्वितस्य नञः प्रसज्यप्रतिषेधार्थत्वावश्यंभावात् । किन्तु तत्पुरुष एवाश्रयणीयः द्वितीयादन्यत् अद्वितीयमिति । तत्र नञः पर्युदासार्थत्वेन एकवाक्यत्वसिद्धेः । नचैवं नञोऽमुख्यार्थत्वापादनं दोषः । तस्य वाक्यभेदापेक्षया प्रबलदोषत्वाभावादित्याह । द्वितीयादन्यदिति ॥ अनपुंसकस्येत्यादाविवेति ॥ सुडनपुंसकस्येति सूत्रे नपुंसकभिन्नस्य सुट्सर्वनामसंज्ञः स्यादित्येकवाक्यत्वसिद्धये नञः पर्युदासार्थत्वं यथा आश्रितं तथेत्यर्थः ॥ नार्षेयं वृणीत इत्यादाविवेति ॥ एतच्च दशमाध्यायेऽष्टमपादे विचारितम् (विचारितम्) 'प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात्' । (जै. सू. अ. १०. पा. ८ अधि. ४. सू. १.) चातुर्मास्येषु महापितृयज्ञे इत्यादिविशेषेण दर्शपूर्णमासविकृतिप्रमाणादिमात्रायणे । नार्षेयं वृणीते न होतार-

आसीन्नान्यत्किंचनमिषत्'इति श्रुत्यंतरेऽन्यस्य सविशेषणे हीतिन्यायेन मिषत्त्वेनैव निषिद्धत्वेन "छागो वा मन्त्रवर्णात्"इति न्यायेनेहापि मिषत्त्वेनैव निषेद्धव्यतया स्वरूपेणैव निषेधासिद्धेश्च। किंच नञा द्वितीयात्यंताभावोक्तौ अग्रइति व्यर्थम्। नापि प्रागभावोक्तिर्मिथ्यात्वासिद्धेः। त्वन्मतेऽप्यविद्याकर्मादेस्तदा सत्त्वाच्च। किंच द्वितीयशब्दस्सहायवाची। "असिद्वितीयोऽनुससार पांडव"मितिप्रयोगात् "असिद्वितीयः असिसहाय इतिगम्यत" इति महाभाष्योक्तेश्च। तथाचाद्वितीयमसहायमित्यर्थोऽस्तु। यद्वा द्वितीयशब्दः प्रकृतसमान एव द्वितीये व्युत्पन्नः। न तु तत्र तस्य संकोचः। लोके "अस्मिन्ग्रामेऽयमेक एवाद्वितीय"इति, स्मृतौ च

"एक एवाद्वितीयोऽसावश्वमेधः क्रतुष्वपि।

एक एवाद्वितीयोऽसौ प्रणवो मंत्र उच्यत" इतिप्रयोगात्।

महाभाष्ये च "अस्य गोर्द्वितीयेन भाव्यमित्युक्ते सदृशो गौरेवोपादीयते नाश्वो न गर्दभ" इत्युक्तेश्च। शांकरभाष्ये च "अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषो वे"त्युक्तेश्च। "समे द्वितीयशब्दः स्यादि"ति स्मृतेश्च। द्वितीयशब्देन द्वितीयमात्रोक्तौ

---

व्यर्थमिति ॥ निष्प्रयोजनं विरुद्धश्चेत्यर्थः। अग्रपदसमभिव्याहारेण नञः प्रागभाव एव व्युत्पत्तेरिति। तर्हि तत एव नञः प्रागभावपरत्वमस्त्वित्याशंक्याह ॥ नापीति ॥ मिथ्यात्वासिद्धेरिति ॥ त्रैकालिकनिषेधस्यैव मिथ्यात्वापादकत्वादिति भावः। यद्यपि प्रागभावानभ्युपगन्तृमतेऽप्यत्यन्ताभावविशेष एव प्रागभावस्थानाभिषिक्तः, तथापि सोऽत्यन्ताभावः समयविशेषसंसर्गीति नञस्तत्परत्वेऽपि न मिथ्यात्वसिद्धिरिति ज्ञातव्यम्। अविद्याकर्माद्यंशे सर्गाद्यकाले विद्यमाने वाक्यार्थस्य बाधितत्वात् मिथ्यात्वासिद्धिश्चेत्याह ॥ त्वन्मत इति ॥ भवतु वा नञोऽत्यंताभावार्थपरत्वं तथापि द्वितीयशब्दार्थपर्यालोचनायां परस्य नेष्टसिद्धिरित्याह ॥ किंच द्वितीयशब्द इति ॥ किंच द्वितीयशब्दस्य सहायवाचित्वे प्रमाणमाह ॥ असिद्वितीय इति प्रयोगादिति ॥ अविगीताभियुक्तप्रयोगादित्यर्थः। ननु असिद्वितीय इत्यस्य नासिसहायत्वमर्थः। किन्त्वसिलक्षणद्वितीयसहित इत्येवार्थोऽस्तु इत्यत आह ॥ असिद्वितीय इति ॥ ननु असिद्वितीयः असिसहाय इति गम्यत महाभाष्योक्तेः शक्तिलक्षणयोरनिर्धारणेन द्वितीयशब्दस्य न सहायवाचित्वसिद्धिः। कथञ्चित्सिद्धावप्येकशब्देन पौनरुक्त्यं चेत्यस्वरसादाह ॥ यद्वेति ॥

ननु समासे द्वितीयशब्दस्य न व्युत्पत्तिः। क्वचित्तु द्वितीयत्वावच्छिन्नवाचित्वस्यासमासद्वितीयप्रतीतिस्तु संकोचकप्रमाणाभावादित्याशंक्य तस्य द्वितीयत्वावच्छिन्न इव समानद्वितीयत्वावच्छिन्नेऽपि व्युत्पत्तिरस्तीत्यत्र लोकवेदयोरविगीताभियुक्तबहुल (प्रतीति) प्रयोगं प्रदर्शयति ॥ तस्य संकोच इति ॥ किंच द्वितीयशब्दस्य समद्वितीये व्युत्पत्त्यभावेऽपि आवयोर्द्वितीयविशेष

अद्वितीयशब्देनैव स्वेतरसर्वनिषेधसंभवेन सजातीयनिषेधकैवशब्दादिवैयर्थ्याच्च । तदवैयर्थ्याय द्वितीयशब्दस्य विजातीयपरत्वेन संकोचे चात्र इत्यनेनाविरोधाय समद्वितीयपरत्वेन संकोचः स्यात् । तथाच समाभ्यधिकराहित्यमेवाद्वितीयशब्दार्थः । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः "नत्वत्समोऽस्त्यभ्यधिकः" इतिस्मृतेश्च । "एक एवाद्वितीयो भगवांस्तत्सदृशः परो नास्ती"ति श्रुतौ

ज्ञानानंदाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ॥
भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः"

इति स्मृतौ च व्याख्यातत्वाच्च । द्वितीयाभावस्य भावाभावाभ्यां व्याघातेनाद्वितीयशब्दस्य तत्परत्वासंभवाच्च । उक्तं च

"यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूपतिः ।
इति तत्तुल्यनृपतिनिवारणपरं वचः ।
न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारकम्" इति ।

तस्मात् 'एक एवाद्वितीयोऽभावाकाशे सवितेतिवत् ।
एकमेवाद्वितीयं सद्ब्रह्म इत्यपि योज्यताम्' ॥ किंच—
'अधिकं हि विजातीयं सजातीयं समं भवेत् ।
गुणादिकं तु स्वगतं तद्भेदोऽत्र निषिध्यते' ॥

इत्येकमेवेतिश्रुत्यर्थः ।

॥ इति एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम् ॥ २८ ॥

---

संकोचकस्य आवश्यकत्वात् तथापि मध्ये त्विव्यर्थकत्वमित्याह ॥ द्वितीयशब्देनेति ॥ एवं च श्रुतिस्मृती अपि अनुकूलिते भवत इत्याह ॥ न तत्समश्चेति ॥ न चात्रसकलप्रतिषेधकत्वम् । श्रुतितात्पर्यापरिज्ञानवशात् तत्समाभ्यधिकयोः सङ्कुचित एव प्रसक्तिसंभवात् । न च सम-त्वं निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिविरोधः । तदा विद्वान् पुण्यपापे विधूयेति पूर्व-वाक्ये श्रवणात् पुण्यपापराहित्यादिना किञ्चित्साम्यसम्भवेऽपि सर्वात्मना साम्यस्य न तत्सम-श्चेति श्रुत्या निषेधोपपत्तेरिति भावः । श्रुतिस्मृतिरूपव्याख्यानविरोधादपि नाद्वितीयशब्दस्य सर्वनिषेधोऽर्थ इत्याह ॥ एक एवेति ॥ उक्तमेवार्थं सदृष्टान्तमुपसंहरति ॥ तस्मादिति ॥

॥ इति एकमेवाद्वितीयमिति श्रुत्यर्थविवरणम् ॥ २८ ॥

## ॥ अथ नेहनानेतिश्रुत्यर्थविवरणम् ॥ २९ ॥

नापि "नेह नानास्ति किंचन" इति(कठो.४.११.)श्रुतिस्तत्र मानम् । अत्र स्वगतभेदनिषेधात्, नानाशब्दो हि नानात्वार्थः द्व्येकयोरित्यादिवद्भावप्रधानत्वात्, लोके च नानाशब्दस्य पृथग्भाववाचित्वादिति कैयटोक्तेश्च । "यदेवेह तदमुत्र यदमुत्र तदन्विह"(कठो.४.१०.) इति पूर्ववाक्ये इदमाद्यर्थांगीकारेण तद्भिन्नब्रह्माभेदस्यैव उक्तेश्च । अन्यथा इदं चादश्चेति श्रूयेत । न च स्वगतभेदस्याप्रसक्तिः । जगज्जन्मादिकारणे ब्रह्मणि गुरुतरविचित्रकार्यभेदेन अंतर्या-

---

॥ अथ नेहनानेतिश्रुत्यर्थविवरणम् ॥ २९ ॥

ननु मास्तु एकमेवेतिश्रुत्या मिथ्यात्वसिद्धिः नेहनानेत्यादिश्रुत्या तु स्यात् । तत्र इहशब्दार्थे ब्रह्मणि प्रतिपन्नोपाधौ नानाकिंचनशब्दितभेदविशिष्टप्रपञ्चमात्रस्य निषेधावगमादित्याशङ्क्य निराकरोति ॥ नापीति ॥ अत्रेति ॥ नेहनानेतिश्रुतौ स्वगतस्वप्रतियोगिकभेदनिषेधावगमादित्यर्थः ।

ननु नानाशब्दस्य भिन्नवाचित्वात्कथमत्र स्वगतभेदनिषेध इत्यत आह ॥ नानाशब्दो हीति ॥ ननु द्व्येकयोर्द्विवचनैकवचने इत्यत्र द्व्येकशब्दयोर्द्वित्वैकत्वसंख्याविशिष्टपरत्वे द्व्येकेषामिति बहुवचनापत्तेरस्तु तयोर्भावप्रधानत्वम् । प्रकृते तु तादृशबाधकाभावाच्च भावप्रधानतेत्यत आह ॥ लोकेचेति ॥ ननु तथापि नानाशब्दः प्रकृते नानात्वपर इत्यत्र किमायातमित्यत आह ॥ यदेवेहेति ॥ इदमदःशब्दार्थयोर्विद्यमानस्य ब्रह्मणः पूर्ववाक्येनैक्यावेदनबलात् तद्गतत्वप्रतियोगिकभेदनिषेध एवास्याः श्रुतेस्तात्पर्यमवसीयत इति भावः ॥ अन्यथेति ॥ इदमदःशब्दार्थस्य यदेवेहेत्यादिश्रुतितात्पर्यागोचरत्वे, इत्यर्थः ॥ श्रूयेतेति ॥ यद्यप्यपौरुषेयवाक्यं आनुपूर्वीविशेषनियमनमयुक्तम् । तथापि यथाश्रुतानुपूर्वीकश्रुतेर्नैतदर्थसमर्पणे सामर्थ्यमित्यत्र तात्पर्यम् ॥ स्वगतभेदस्येति ॥ स्वगतस्वप्रतियोगिकभेदस्येत्यर्थः । जगज्जन्मादिकारणे ब्रह्मणीत्यादिसप्तम्यन्तस्य तत्प्रसक्तेरिति पञ्चम्यन्तेन सम्बन्धः । तत्प्रसक्तेरित्यत्र तच्छब्दो भेदपरः ॥ गुरुतरविचित्रकार्यभेदेनेति ॥ पृथ्वीपृथ्वीभृच्चराचरादिरूपविचित्रकार्यरूपलिङ्गेनेत्यर्थः ॥ नियम्यानन्त्येनेति ॥ पृथिव्यादिरूपनियम्यानन्त्येनेत्यर्थः ॥ स्थानभेदेनेति ॥ पृथिव्यादिस्थानभेदेनेत्यर्थः । यद्यप्येकस्यैव समर्थस्य गुरुतरविचित्रकार्यकारित्वं लोके दृश्यते । तथा सौभर्यादेरात्मन एकस्यैवानेकशरीरनियामकत्वमनेकस्थलनियन्तृत्वं च प्रसिद्धम् । तथापि विशेषादर्शनदशायां तस्यानुमितिरूपप्रसक्तिजनकत्वं संभवति । नहि प्रसक्तिरपि

"ब्रह्मादयो हि भूतानि तेषामन्तर्गतो हरिः ।
समस्स सर्वभूतेषु य एवं वेद तत्ववित्" ॥

इति महाभारते च निषेधः । अन्यथा परपक्षेऽप्यखंडवादानारंभः स्यात् । अनुभूतिर्न नाना अनुभूतित्वादुपाधिभेदमंतरेणाविभाव्यमानभेदत्वादित्याद्यनुमानैः स्वगतभेदनिषेधश्च न स्यात् । "एकमेवाद्वितीय"मित्यादावेकपदेन स्वगतभेदनिषेधोक्तिश्च न स्यात् । प्रत्युत परमत एव धर्माधर्मस्वर्गनरकाद्यंशे अप्रसक्तप्रतिषेधः। इहेतिच विशेषणाच्च नानात्वमात्रनिषेधः। इमौ स्निग्धावस्मिन् ग्रामे न विरोध इत्यादाविवेदंशब्दोपात्तस्य ब्रह्मण एव धर्मित्वेन प्रतियोगित्वेन च संबंधसंभवे तदनुपात्तस्य धर्मित्वेन वा प्रतियोगित्वेन वा संबंधायोगात् । विधेयो-

---

भारतवचने च एकसमशब्दौ न निषेधवाचकौ । तथापि एकशब्दतत्पर्यायसमशब्दाभ्यां एकत्व-विधानसामर्थ्यात् निषेधार्थत्वे पर्यवसानमभिप्रेतमिति बोध्यम् । (ध्येयम् ।) यद्वा एको देवः सर्वभूतेषु इत्यादिश्रुतावित्थंभूततद्गुणसंविज्ञानबहुव्रीहिणा नात्र काचन भिदास्ति, नैवात्र काचन भिदास्तीत्यादिश्रुतिर्विवक्षितेति बोध्यम् ॥ अन्यथेति ॥ प्रत्यक्षमात्रस्य प्रसञ्जकत्वास्वीकार इत्यर्थः ॥ अखण्डवादेति ॥ अखण्डार्थवादेत्यर्थः ॥ अनुभूतिरिति ॥ एकत्वनानात्वाभ्यां विमता अनु-भूतिरित्यर्थः ॥ न नानेति ॥ वस्तुत इति शेषः ॥ उपाधिभेदमन्तरेणेति ॥ विषयमेवानुसंधान-मंतरेणेत्यर्थः ॥ इत्याद्यनुमानैरित्यादिशब्दार्थश्च अनुभूतित्वं वस्तुतो न स्वाश्रयप्रतियोगिकान्यो-न्याभावसमानाधिकरणं अनुभूतित्वसम्प्रत्वे इति प्रतीतिविशेष्यत्वात् । सम्प्रत्ववदित्याद्यनुमानानि । ननु नाहमीश्वरः घटानुभवः पटानुभवो नेत्यादिप्रत्यक्षेण च भेदप्रसक्तिसंभवात् प्रत्यक्षमात्रस्य प्रसञ्जकत्वास्वीकारेऽपि न काप्यनुपपत्तिरित्यत आह ॥ एकमेवाद्वितीयमित्यादाविति ॥ स्वगत-भेदनिषेधोक्तिश्च न स्यादिति ॥ वृक्षस्य स्वगतो भेद इत्यादिरूपोक्तिश्च न स्यादित्यर्थः ॥ प्रत्युत परमत एवेति ॥ प्रत्यक्षादिमात्रेण प्रसक्तस्य प्रतिषेध इत्यभ्युपगन्तृमत एवेत्यर्थः । सिद्धान्ते रामकृष्णाद्यवतारे प्रतिविम्बं प्रत्यक्षतोऽपि भेदप्रसक्तेरुपपत्तिरित्यादिरितिभावः ॥ धर्माधर्मेति ॥ धर्माधर्मशब्दौ अग्निहोत्रादिकलञ्जभक्षणादिजन्यातिशयपरौ सुखालौकिकसंबंधसाधनत्वानिष्टसाध-नत्वपरौ वा ग्राह्यौ । प्रतिषेध इत्यस्यानन्तरं स्यादिति शेषः । नन्वेवमपि नाना भेदयुक्तं भेदमात्र-निषेध एव लभ्यते ननु स्वगतभेदनिषेध इत्यत आह ॥ इहेति च विशेषणादिति ॥

ननु इहेति विशेषणबलात् निषेध्यनानात्वस्य स्वधर्मिकत्वमेव लभ्यते, न स्वप्रतियोगिक-त्वमिति शङ्कामनुरूपदृष्टान्तोक्त्या परिहरति ॥ इमौ स्निग्धाविति ॥ धर्मित्वेन प्रतियोगित्वेन चेति ॥ निषेध्यं प्रतीतिशेषः ॥ तदनुपात्तस्येति ॥ इहशब्दानुपात्तस्येत्यर्थः । नास्तीत्यत्रापि नेह नानेतिश्रुत्या स्वगतस्वप्रतियोगिकभेदमात्रनिषेध एव लभ्यत इत्याह ॥ विधेयोदाहरणेति ॥

"वाक्यशेषस्थधर्माख्यविशेषे पर्यवस्यति ।
किंचनेतिहिशब्दोऽयमक्ताशब्दो घृते यथा" ॥

तथाचेह ब्रह्मणि किंचन धर्मादिकं नाना नास्तीत्युक्ते धर्माणां नानात्वमेव निषिद्धं स्यात् । सविशेषणे हीतिन्यायात् । "लोहितोष्णीषा ऋत्विजः प्रचरन्ति, न जीर्णमलवद्वासाः स्नातकः

---

एतच्च पूर्वतन्त्रे तृतीयाध्याये द्वितीयपादे विचारितम् । अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्' (अ. ३ पा. २ अधि. ८ सू. २०) ज्योतिष्टोमे काश्चित् 'अग्न आयाहि वीतये' इत्याद्या आग्नेय्यः ऋचः समाम्नाताः । तत्रैव श्रुतम्, 'आग्नेय्या आग्नीध्रमुपतिष्ठत' इति । तत्र संशयः किं यया कयाचिदृचा आग्नेयो(आग्नीध्रो)पस्थानं कर्तव्यम्, उत प्रकृतानां मध्ये एव कयाचिदिति । तत्र यथा व्रीहीनवहन्तीत्यादौ व्रीह्यादीनुद्दिश्य प्रोक्षणादिसंस्कारा विधीयन्ते, तथापूर्वासंबन्धिनां संस्कारस्य वैयर्थ्यात्, व्रीहिभिर्यजेतेत्यादिभिः अपूर्वसंबन्धित्वेन प्रकृता एव ग्राह्या इति युक्तम् । इह तु न आग्नेयीमुद्दिश्योपस्थानं विधीयते । किन्तु उपस्थाने करणतया आग्नेय्युपादीयते । तृतीयादिनिर्देशात् । तत्र च शब्दार्थमात्रस्यांगत्वात्, न प्रकृतनियम इति पूर्वपक्षे यौगिकत्वादाग्नेयीशब्दः सन्निहितामेव व्यक्तिमालम्बते, विग्रहवाक्यसमानशीलत्वात्, विग्रहवाक्यस्य च अग्निर्देवता अस्य इति सर्वनामघटितत्वेन सन्निहितविषयत्वात् प्रकृतयैवोपस्थानमिति ॥ विशेषशब्दसन्निहितसामान्यशब्दत्वाच्चेत्यस्यानन्तरं किञ्चनशब्दो वाक्यशेषस्थधर्माख्यविशेषपर इति शेषः । घृतशब्दसन्निहिताक्ताशब्दवदिति । एतच्च नामधेयपादे निर्णीतम् । 'संदिग्धेषु(तु) वाक्यशेषात्' (अ. १ पा. ४ सू. २९. अधि. १९.) इत्यत्र अक्ताः शर्करा उपदधाति तेजो वै घृतम् इत्यत्र शर्कराणामञ्जनं घृततैलवसानामन्यतमेन द्रव्येण कर्तव्यमुत वाक्यशेषोपात्तेन घृतेनैवेति संशये विधौ विशेषाश्रवणात्, अर्थवादानुसारेण प्रधानस्य विधेः नयनायोगात् येन केनचिदञ्जनम्, अर्थवादस्थघृतशब्दस्तु विध्यनुरोधात् द्रव्यद्रव्यमात्रलक्षकोऽस्तु इति पूर्वपक्षे विधावञ्जनक्रियाक्षिप्तद्रव्यसामान्यस्य घृतेऽपि सत्त्वात् निर्विशेषसामान्यानुष्ठानासंभवेन क्वचिद्विशेषपर्यवसानस्य विधिनैवाभिमतत्वात् वाक्यशेषोपात्ते विशेषे स्थिते विशेषान्तरकल्पनानौचित्याच्च विधेयस्तावकवाक्यशेषानुसारात् घृतेनैवाञ्जनमिति सिद्धान्त इति । यद्यपि किञ्चनशब्दोऽनिर्धारितैकविशेषवचनस्तथापि फलतः सामान्यशब्दतुल्य इत्युक्ताक्ताशब्दवदित्युक्तिर्न विरुध्यते इति द्रष्टव्यम् । ननु तथापि न सर्वैक्यसिद्धिः । ब्रह्मधर्मादीनामेव निषिद्धतया मिथ्यात्वप्रसङ्ग इत्यत आह ॥ तथाचेति ॥ नानात्वमेवेति ॥ तन्मिथ्यात्वमेवेष्टमिति भावः ॥ सविशेषणे हीति न्यायादिति ॥ सविशेषणं विशेषणविशिष्टं विषयं प्रवर्तमानो विधिर्निषेधो वा विशेष्यबाधे विशेषणं विशेषणबाधे तु विशेष्यं उभयबाधे विशिष्टमुपसंक्रामती-

शब्दस्य संबंधिशब्दतया ब्रह्मण एव प्रतिसंबंधित्वेनान्वयोपपत्तेश्च । नच भूमोऽपि विना नेत्युक्ते मिथ्येति सिद्ध्यति । एवंच

"नानेत्यस्य विनार्थत्वाद्विनाभूतं निषिध्यते ।
अविनाभूतमस्तीति सत्यैवार्थात्तु लभ्यते ॥

किंच विश्वं ब्रह्मणि नास्तीत्युक्तेऽपि न मिथ्यात्वसिद्धिः । ब्रह्मणोऽन्यत्र स्वोपादाने प्रकृत्यादौ सत्त्वसंभवात् । ब्रह्म च नोपादानमिति वक्ष्यते । अन्यथेहेति व्यर्थम् । अथ "यस्मिन्द्यौः पृथिवी चे"त्यादिश्रुतेर्ब्रह्मण्यप्यस्ति विश्वं तर्हि तद्विरोधादेव न तत्र तन्निषेधः । एतद्वाक्यस्य मिथ्यात्वाभिप्रायत्वे च बृहदारण्यके "यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठित" इति पूर्वेण, "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानां संभेदाये"त्युत्तरेण, काठके

---

इत्यादिना उपाहृतत्वाच्चेत्यन्तेन । स्मृतेश्चेति ॥ तथाच एतदुपबृंहणानुरोधेन एतच्छ्रुतेरविनाभूतमस्तीत्यर्थपरत्वं युक्तमिति भावः । ननु प्रतियोगिनोऽश्रवणात् नानाशब्दस्य विनार्थकत्ववर्णनं कथम् इत्यत आह ॥ विनार्थस्य चेति ॥ ब्रह्मण एवेति ॥ इहशब्दार्थभूतब्रह्मण एवेत्यर्थः । न च इहेतीहशब्दस्य विरुद्धविभक्त्यन्तत्वेन तेनोपस्थितस्य ब्रह्मणो न प्रतिसम्बन्धित्वेनान्वयोपपत्तिरिति वाच्यम् । अन्यत्र धर्मादन्यत्राधर्मादित्यादावन्यशब्दस्येव अभेदान्वये सुपां सुलुगित्यादिना द्वितीयास्थानविहितसप्तम्यन्तत्वेन विरुद्धविभक्त्यन्तत्वासिद्धेरिति ।

नञ्ञेनानया विनाभावनिषेधोऽपि विश्वस्य स्वरूपेण असत्त्वेऽपि सम्भवतीत्याशङ्कामर्थान्तरन्यासेन निराकरोतीति ॥ नचेति ॥ न केवलं जगतो ब्रह्माविनाभावनिषेधे विश्वमिथ्यात्वासिद्धिः, प्रत्युत तद्विरुद्धसत्यत्वमेव सिध्यतीत्याह ॥ एवंचेति ॥ अर्थादिति ॥ विनार्थत्वाद्यानुपपत्तेरित्यर्थः । किञ्च त्वद्रीत्या नानाशब्दस्य भेदविशिष्टार्थत्वेऽपि न त्वदिष्टसिद्धिरित्याह ॥ किंच विश्वमिति ॥ महदहङ्कारात्मकमित्यर्थः । नेत्यस्यानन्तरं विश्वस्येति शेषः । प्रकृत्यादौ इत्यादिपदेन महदादिपरिग्रहः । ननु ब्रह्मण एवोपादानत्वेन तत्र विश्वस्य निषेधे मिथ्यात्वसिद्धिरविकलेत्यत आह ॥ ब्रह्म चेति ॥ अन्यथेति ॥ प्रकृत्यादावसत्त्वेन इहनानेतिश्रुतौ अधिकरणविशेषप्रत्यायकेहपदं विगतप्रयोजनमित्यर्थः ॥ अथेति ॥ अविद्योपाधिभूतब्रह्मण्येव निषिद्धत्वेन विश्वमिथ्यात्वमविरुद्धमिति भावः ॥ तद्विरोधादेवेति ॥ यस्मिन् द्यौरित्यादिश्रुतिविरोधादेवेत्यर्थः । एतद्वाक्यस्य नेहनानेतिवाक्यस्य ॥ पूर्वेणेति ॥ प्रथमवाक्यः प्रथमपदोपन्यासानन्तरम् अभ्याहृतेति-

च "ईशानं भूतभव्यस्ये"ति पूर्वेण "ईशानो भूतभव्यस्ये"त्युत्तरेण च वाक्येन विरोधः स्यात्। एवंच

"अनन्या राघवेणाहं भास्करेण प्रभा यथा ।
व्याख्यात्र यादृशी तादृक् नेहनानेति च श्रुतेः"

एतेन "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती"ति पूर्ववाक्यमपि व्याख्यातम् । तत्र चेवशब्दो भेदाभेदपरः ।

भवेदेकत्र संयोगइवशब्दो विरुद्धयोः ।
धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते" ॥

इति वचनात् । अन्यथा यो नानेव पश्यति न तु वस्तुतो नानेति परानिष्टार्थः स्यात् । केचित्तु सर्वस्यापि जडाजडस्य ब्रह्मशरीरत्वेन तद्विशेषणत्वाद्विशिष्टं ब्रह्म द्वितीयरहितमिति "एकमेवाद्वितीयं नेहनाने"त्यादिश्रुतेरर्थ इत्याहुः । अन्येतु परमते "सर्वगंधस्सर्वरस" इत्यादिश्रुतिरिवाद्वितीयमित्यादिकमपि नास्ति ब्रह्मत्वस्यैवाविद्यमानस्योपासनार्थं नत्वर्थतत्त्वनिष्ठमित्याहुः । इतरे तु प्रपंचेऽभिनिवेशनिषेधपरा तन्मिथ्यात्वश्रुतिरित्याहुः ।

॥ इति नेहनानेतिश्रुत्यर्थविवरणम् ॥ २९ ॥

---

शब्देन सम्बध्यते । तादृगित्यस्यानन्तरमुचितेति शेषः ॥ एतेनेति ॥ नानाशब्दस्य भावप्रधानत्वादित्यनुपपत्तेरित्यर्थः । पूर्ववाक्यमपीत्यपिशब्देन काठके पूर्वमुत्तरं च बृहदारण्यके उत्तरमेवेति सूचयति । ननु पूर्ववाक्ये व्यवहारमात्रिकत्वपरेवशब्दसमभिव्याहारेण नानाशब्दार्थस्य(अ) असत्त्वमेव कल्प्यत इत्यत आह ॥ तत्रेवेति ॥ भेदाभेदपर इति ॥ प्रकृताभिप्रायेण भवेदिति ॥ विरुद्धयोर्धर्मयोरेकत्रापि क्वचित् संयोगे सम्बन्धे इवशब्दोऽभियुक्तप्रयोगविषयो भवेदित्यर्थः ॥ अन्यथेति ॥ इवशब्दस्य व्यवहारमात्रिकत्व इत्यर्थः ॥ परानिष्टार्थःस्यादिति ॥ परेण वास्तवभेदानभ्युपगमादिति भावः । केचित्त्वित्यस्य स्वरसोद्भावनम् । तद्वीजन्तु ब्रह्मणि शरीरेषु सर्वेषामपृथक्सिद्धविशेषणमिति श्रुत्या उपचितापचितविविधवस्तुविशेषणात् नानात्वमेवेत्युच्यते ततो ब्रह्मशरीरत्वं युक्तम् । तादृशाद्वितीयत्वाप्रसक्त्या ब्रह्मत्वप्रतिषेधनं चेति । अन्येत्त्वित्यस्य स्वरसोद्भावनम् । तद्वीजन्तु श्रुतिप्रमाणादिवाक्यानामपि उपासनार्थत्वापत्त्या वैदिकार्थस्य न कस्यापि सिद्धिः स्यादिति । इतरे त्वित्यस्य स्वरसोद्भावनम् । तद्वीजन्तु प्रपञ्चमिथ्यात्वश्रुतिकथनं विनापि एतस्य व्यवहारत्वाभिप्रायपुरःसरत्वाद्बन्धप्रतिपादनेनापि तदर्थसिद्धिसंभवादिति ॥

॥ इति नेहनानेतिश्रुत्यर्थविवरणम् ॥ २९ ॥

## ॥ अथ यत्रत्वस्येतिश्रुत्यर्थविवरणम् ॥ ३० ॥

नापि "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति श्रुतिस्तत्र मानम् । अत्र हि पूर्वत्र "स यथा सैंधवखिल्य" इत्यादिना सैंधवखिल्यस्य समुद्र इव विज्ञानघनजीवस्य ब्रह्मणि स्थितिर्मोक्ष इति स्वमतमुक्तम् । न चात्रोदकराशिस्समुद्रः, किंतु तटाकादिवत्तदाश्रयः खातो वरुणो वा, पूर्वत्र "स यथा सर्वासामपां समुद्र एकायनम्" इत्युक्तेः । न चाऽऽप एवाऽपामयनम् । न चेश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैंधवखिल्यस्याभेदः । नापि पूर्वमुक्तस्थानीयाभिरद्भिः । एतच्च जीवेशभेदवादे वक्ष्यते । उक्तं च– "समुद्रजलस्थानीया मुक्ता बहवः

---

॥ अथ यत्रत्वस्येतिश्रुत्यर्थविवरणम् ॥ ३० ॥

ननु तथापि मिथ्यात्वसिद्धिरविकला । यत्रत्वस्य सर्वमात्मैवाभूदितिश्रुत्या मोक्षे अद्वितीयात्ममात्रावशेषस्यावेदनादित्याशङ्कां निराकरोति ॥ नापीति ॥ यत्रत्वस्येति श्रुतिरद्वितीयात्ममात्रावशेषो मुक्तिरितिमतं निराकर्तुमेव प्रवृत्तेति व्यवस्थापयितुं प्रथमं श्रुतिमतं दर्शयति ॥ अत्र हि पूर्वत्रेति ॥ यद्यपि यत्रत्वस्येति वाक्यं षष्ठे मैत्रेयीब्राह्मणे आम्नातम् । सैन्धवखिल्य इत्यादि तु चतुर्थ इति न तयोरव्यवधानेन पौर्वापर्यमस्ति । तथापि विरुद्धार्थविजातीयव्यवधानाभावेन पूर्वस्थानपाठादेवमुक्तमिति द्रष्टव्यम् । यद्यपि स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत इति वाक्ये समुद्रशब्दो नास्ति, तथापि उदके प्रास्त उदकमेवानुविलीयेत इत्यत्र उदके न्यस्तस्य सैन्धवखिल्यस्य उदकेन सहावस्थानप्रतीतेरवस्थानस्य च आधारसापेक्षत्वेन तदाधारः समुद्र इति ध्येयम् । ननु उदकराश्यतिरिक्तसमुद्रशब्दार्थस्य अभावात् समुद्रोदकसहितस्य सैन्धवखिल्यस्य समुद्रे स्थितिप्रतिपादनमयुक्तम् । सैन्धवखिल्यस्य उदकेन एकतापत्त्या अभेदे तस्य दृष्टान्तत्वानुपपत्तिरित्याशङ्क्याह ॥ न हीति ॥ ननु 'समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः' इत्यादिप्रयोगदर्शनात् समुद्रशब्दो जलराशिविशेषवाच्येव, न तु खातविशेषवाची, तस्य शोषणासंभवादित्याशङ्क्याह । पूर्वत्रेति ॥ तथा-शोषणादिप्रयोगो जलराशिविशेषे लाक्षणिकः, पूर्ववाक्यानुसारात् । न च 'स यथा सर्वासामपाम्' इति पूर्ववाक्यमपि यथा नद्यः स्यन्दमानाः समुद्रं प्राप्यास्तं यान्ति इत्यादिवत् नदीजलाद्यभिप्रायमिति वाच्यम् । तथापि (तत्रापि) समुद्रशब्दस्य खातविशेषपरत्वात् अत एव नदीनां सागरे गतिरित्यादिप्रयोगः । न च सागरादिशब्दानामेव लाक्षणिकत्वमिति वाच्यम् । लाघवेन एकस्य समुद्रशब्दस्यैव लाक्षणिकत्वौचित्यादिति भावः ॥ न चेति ॥ अनुभवविरोधादिति भावः ॥ एतच्चेति ॥

अनुच्छित्तिर्धर्मो यस्येति विग्रहे च अविनाशीत्यनेन पुनरुक्तिः । अनुच्छित्तिरित्येतावतैव पूर्णत्वेन धर्मशब्दवैयर्थ्यं च । यत्र हि द्वैतमिवेत्यत्र इवशब्दस्तु द्वैतस्य परमते मिथ्यात्वात् परदीत्या चापादनीयत्वादल्पत्वाद्वा पुराणे "दशरात्रैर्भुक्तमिव न सम्यक्स्वल्पभोजनात्" इति लोके च अल्पाह्ने अयं विद्वानिवेति प्रयोगाच्च, "इवोपमायां स्वल्पार्थे" इत्यमरोक्तेः, "उपमार्थे तथाल्पत्वे इवशब्दः प्रयुज्यते" इति वचनाच्च । अन्यथा वाक्यशेषे सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदेतिसर्वाधारत्वोक्तिः स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दानिति स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा इति च भिन्नानां समसत्ताकानां च दुंदुभितच्छब्दाग्निधूमादीनां दृष्टांतानामुक्तिश्चायुक्ता स्यात् । न हि दुंदुभ्यादौ तच्छब्दादिरध्यस्तः किंतु तदधीनः । अन्ये तु मोक्षे देहेंद्रियादिहीनस्य केवलस्यात्मन एव भावात् सर्वविषयज्ञाननिषेधकमिदं वाक्यं न तु प्रपंचमिथ्यात्वपरमित्याहुः ॥

॥ इति यत्रत्वस्येतिश्रुत्यर्थविवरणम् ॥ ३० ॥

---

रीत्या गत्यन्तरसंभवात्। एतेनोच्छित्तिधर्मा न भवतीत्यनुच्छित्तिधर्मेति विग्रहोऽपि प्रत्यूढ इति । ननु यत्र त्वस्येति श्रुतेर्यद्यात्ममात्रावशेषे तात्पर्यं न स्यात् तर्हि यत्र हि द्वैतमिवेति पूर्ववाक्ये अलीकार्थकेवशब्दो न स्यात् इत्यत आह ॥ यत्र हीति ॥ ननु तथापि सिद्धान्ते इवशब्दवैयर्थ्यं स्यादित्याशङ्क्याह ॥ *अल्पत्वाद्वेति ॥ द्वैतस्य भिन्नप्रपञ्चस्य ब्रह्मापेक्षया अल्पत्वात्तत्र इवशब्दः । न तु मिथ्यात्वादिति भावः ॥ अन्यथेति ॥ द्वैतमिवेत्यत्रेवशब्दस्य द्वैतप्रपञ्चस्य मिथ्यात्वतात्पर्यकत्वे, इत्यर्थः ॥ वाक्यशेष इति ॥ यद्यपि सर्वं तं परादादित्यादिवाक्यं यत्र हि द्वैतमिव भवतीति वाक्यापेक्षया पूर्वमेवाम्नातमिति न तस्य तेजो वै घृतमित्यादिवद्वाक्यशेषत्वम् । तथापि यत्र हि द्वैतमिव भवतीति वाक्यार्थनिर्णयोपयुक्तत्वेन **एकप्रकाराम्नातत्वेन तद्वाक्यशेषत्वोक्तिरविरुद्धेति बोध्यम् । ननु सर्वस्य ब्रह्माध्यस्तत्वेऽपि तस्य तदाधारत्वोक्तिरविरुद्धेत्यत आह ॥ स यथेति ॥ बाह्यानित्यस्य स्वरूपोद्भावनम् । तद्बीजं तु स तत्र पर्येति एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यं नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा रूपो मति पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यतीति मुक्तौ देहेन्द्रियादिसाधकश्रुतिविरोध इति ॥

॥ इति यत्रत्वस्येतिश्रुत्यर्थविवरणम् ॥ ३० ॥

* अल्पत्वाद्वा इति पा.

** एकप्रकारेणेति पा.

## ॥ अथ नतुतद्द्वितीयमस्तीति श्रुत्यर्थविचारः ॥ ३१ ॥

नापि "यद्वैतं न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" (बृ. उ. ४. ३.२३) इति श्रुतिस्तत्र मानम्। पूर्वत्र हि "शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा" इति नाडीस्थभगवन्मूर्तीनां विलक्षणरूपत्वमुक्तं, तेन तद्रूपाणामभेदः प्राप्तः, तथा "तद्वा अस्यैतदाप्तकाममात्मकाममकाममरूपम्" इति श्रुत्या रूपरूपिभेदश्च, तन्निरासार्थं भगवद्रूपादीनामभेदोऽत्रोच्यते । "हृदयं ब्रह्म" इति श्रुत्या "तस्मात्तदेव निरुक्तं हृदयम्" इत्यादिश्रुत्या च ब्रह्मणि प्रसिद्धेन हृदयनिमित्तकेन "हृदयस्य भवति" इति पूर्वत्र हृदयशब्देन निर्दिष्टं ब्रह्म यत्स्वगुणादिकं द्वैतं

---

॥ अथ ननुतद्द्वितीयमस्तीतिश्रुत्यर्थविचारः ॥ ३१ ॥

ननु यद्वैतं न पश्यतीति श्रुतिरेव जगन्मिथ्यात्वे मानम् । तत्र हि पूर्वत्र 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' इत्युक्तेः ज्ञानाभावशंकायां तत्परिहारायेयं श्रुतिः प्रवृत्ता । अस्यां [illegible] समभिव्याहारात् यत्तत्र पश्यत्येव तत्पश्यन्वै पश्यत्येव न पश्यति । तत्र पश्यत्येवेति परिहारः । तत्र हेत्वाकांक्षायां ॥ न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति द्रष्टृस्वरूपभूताया दृष्टेर्विपरिलोपाभाव उच्यते, तथापि हेत्वाकांक्षायां अविनाशित्वादुक्तम् । विशेषविज्ञानाभावेऽपि स्वरूपविज्ञानसत्त्वमेतावता लब्धम् । अनन्तरं न पश्यतीत्यंशे व्याहततांकायां तत्परिहाराय न तु द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्युच्यते । ततश्च [illegible] पश्यतीत्यर्थो लभ्यते । तथा चैतद्वाक्यबलादेव जगन्मिथ्यात्वसिद्धिरित्याशंकां निराकरोति॥ नापीति॥ नेयं श्रुतिर्जगन्मिथ्यात्वे मानम् । किन्तु भगवद्रूपाणां भेदनिषेध इति वक्तुं तेषु भेदप्रसक्तिं दर्शयति ॥ पूर्वत्रेति ॥ पश्यतिक्रियायाः कर्मसापेक्षत्वेन तत्र पूर्ववाक्यस्थहृदयशब्दितब्रह्मैव कर्मेति वक्तुं हृदयशब्दस्य ब्रह्मपरत्वे प्रमाणमाह ॥ हृदयं ब्रह्मेति ॥ द्वैतमिति ॥ न च यद्वैतमिति पदच्छेदः, न तु तद्द्वितीयमस्तीत्युत्तरवाक्यविरोधात् । [illegible] गौरवात् , [illegible] यद्वैतमित्येव [illegible] भावः । [illegible] द्वितीयत्वेनेति ॥ [illegible] द्वितीय[illegible] निषेध इति भावः । [illegible] संकोचे [illegible] ॥ सर्वज्ञ एवेति ॥ न तत्पश्यतीति ॥ [illegible]
[illegible] ।

स्वस्माद्भिन्नं न पश्यति तद्द्वितीयं नास्ति द्वितीयत्वेन नास्ति, कुतःपश्यन्सर्वज्ञ एव सन्नी-श्वरो न पश्यति । न हि द्रष्टुरीश्वरस्य दृष्टेर्विपरिलोपो बाधो विद्यते नित्यत्वात् । यत्तु जीव-जडादिकं स्वस्माद्विभक्तं पश्येत्ततोऽन्यदिति श्रुत्यर्थप्रतीतेः पश्यतीतिदर्शनकर्तुरेव पदि-न्यायेन यद्द्वैतमित्यत्र प्रतियोगित्वेनान्वयात् यद्द्वैतमितियच्छब्दस्य न तु तदितिव्यवहित-तच्छब्दान्वयस्तु "यत्तदोस्साकांक्षत्वादाकांक्षायाश्च सन्निधानाद्बलीयस्त्वात्" युक्तः । उक्तं हि जैमिनिसूत्रे "आनन्तर्यमचोदना" इति, वार्तिके च

"यस्य येनार्थसंबंधो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानंतर्यमकारणम्" । इति

---

ननु नास्तीति ईश्वरज्ञानं भ्रम एव किं न स्यादित्यत आह ॥ न हीति ॥ भ्रमस्य बाधकल्प्यत्वादिति भावः ॥ नित्यत्वादिति ॥ दोषजन्यज्ञानस्यैव बाध्यत्वादिति भावः । यद्वा तत्र पश्यतीत्येतद् यथाश्रुतमेव । नहि दृष्टेरित्यादि च ततोऽन्यद्विभक्तं यत्पश्येदित्यत्र संबध्यते । एतच्च यदीश्वरः पश्येत् तद् द्वितीयमस्तीत्युक्ते भ्रांत्या तद्दृष्टस्य कथं सत्त्वमित्याशंकानिवारणायेति द्रष्टव्यम् । ननु यद्द्वैतमित्यत्र स्वस्य प्रतियोगित्वोपस्थापकत्वाभावात् कथं स्वस्माद्भिन्नमित्यर्थ-लाभः इत्यत आह ॥ पदिन्यायेनेति ॥ एतच्चतुर्थाध्याये प्रथमपादे विचारितम् । पदकर्मा-प्रयोजकं नयनस्य परार्थत्वात् , (जै. मी. अ. ४ अधि. १०. सू. २५) ज्योतिष्टोमे एकहायन्या सोमं क्रीणाति इति एकहायन्या गत्वा सोमक्रयणं प्रकृत्य षट्पदान्यनुनिष्क्रामति, सप्तमं पदमध्व-र्युरञ्जलिना गृह्णाति इति षट्पदनयनानन्तरं सप्तमपांसुग्रहणं विधाय यर्हि हविर्धाने प्राञ्ची प्रवर्त-येयुः तर्हि तेनाक्षमुपाञ्ज्यात् इति हविर्धानशकटप्रवर्तनकाले तदक्षाञ्जनं तेन पदपांसुना कर्तव्यमा-म्नायते । तत्र संशयः सोमक्रयणवत् पदपांसुसाध्यमपि अक्षाञ्जनमपि एकहायनीनयनस्य प्रयो-जकमिति अक्षाञ्जनार्थसंगृहीतपदपांसुविनाशादौ तत्सिद्ध्यर्थं पुनरप्येकहायनीनयनं कर्तव्य उत न तस्य प्रयोजकमिति न कर्तव्यमिति । उभयोरपि एकहायनीनयनसाध्यत्वात् उभयं प्रयोजक-मितिपूर्वपक्षे एकहायन्या क्रीणातीति एकहायन्याः क्रयणार्थत्वेनैव विधानात् यदर्थं द्रव्यं तदर्थे तत्संस्कारः इति एकहायन्याः सोमक्रयणदेशं प्रति नयनरूपस्य संस्कारस्यापि क्रयणार्थत्वात् क्रयणमेव नयने प्रयोजकम् । अन्यदनुनिष्पादीति सिद्धान्त इति । एतदधिकरणं सप्तमं पद-मित्यत्र पदशब्दस्य संनिधानात् एकहायनीपदविषयकत्वं सिद्धं कृत्वा प्रवृत्तमिति पदिन्याये-नेत्युक्तमिति ॥ युक्त इति ॥ न च सन्निहितस्य यच्छब्दस्य असम्भव एव व्यवहितान्वय-

अन्यथा यद्विभक्तं तन्नास्तीत्येतावता पूर्णत्वेन शेषवैयर्थ्यं, कथं च त्वत्पक्षे नित्ये चैतन्यमात्रे "नहि द्रष्टुर्दृष्टेर्विपरिलोपः, नहि घ्रातुर्घ्रातेर्विपरिलोपः, नहि स्प्रष्टुःस्पृष्टेर्विपरिलोप" इत्यादिनोक्तं दृष्टिघ्रातिस्पृष्टित्वादिकं द्रष्टृत्वादिसंबंधश्च । किंच पूर्वत्र "यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतस्संहत्य पक्षौ संलयायैव ध्रियते एवमेवायं पुरुष" इति, "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नांतरं एवमेवायं पुरुष" इति भिन्नस्य नीडश्येनस्त्रीपुरुषादिदृष्टांतोक्तिः "प्राज्ञेनात्मना संपरिष्वक्त" इति जीवेशभेदोक्तिश्चायुक्ता स्यादिति ॥

॥ इति नतुतद्द्वितीयमस्तीतिश्रुत्यर्थविचारः ॥ ३१ ॥

---

कल्पनम् । अत्र च यत्तत्पश्यतीति तत्पश्यन्नेव न पश्यतीति सन्निहितान्वयस्य उक्तत्वादिति वाच्यम् । उक्तपक्षच्छेदस्य निरस्तत्वेन अन्वययोग्यस्य सन्निहितस्याभावादिति ॥ अन्यथेति ॥ तस्याः श्रुतेः स्वरूपेण ब्रह्मेतरद्वितीयनिषेधपरत्व इत्यर्थः । द्वितीयमात्रनिषेधेन चिन्मात्रस्यैव श्रुतितात्पर्यगोचरत्वे दोषान्तरमाह ॥ कथं चेति ॥ दृष्टित्वादिकं हि चक्षुरादिजन्यज्ञानत्वेन वा सविशेषत्वेन वा उपपाद्यम् । न च तदुभयं त्वया स्वीकृतमिति भावः । किंच तस्याः श्रुतेः सर्वमिथ्यात्वप्रतिपादनपरत्वे भिन्नसमस्तनीडश्येनादिदृष्टान्तोक्तिः जीवेशाभेदोक्तिश्च न स्यात् ॥ किंचेति ॥ न च व्यावहारिकभेदमादाय तदुपपत्तिः, तस्य मिथ्यात्वसिद्ध्यधीनत्वादिति ।

॥ इति नतुतद्द्वितीयमस्तीतिश्रुत्यर्थः ॥ ३१ ॥

## ॥ अथ वाचारंभणश्रुत्यर्थविवरणम् ॥ ३२ ॥

नापि "वाचारंभणं विकारो नामधेयम्" इति श्रुतिस्तत्र मानम् । वाचारंभणशब्दस्य मिथ्यात्वे रूढेरभावात् । आरभ्यत इत्यारंभणमिति योगेऽपि कृद्योगे तृतीयाया अप्रयोगात् , वाचारब्धकाव्यादेरिव मिथ्यात्वालाभाच्च । वागालंबनमात्रमिति व्याख्याने अश्रुतकल्पनात्, अक्षरसाम्येन निर्वचनेऽपि मात्रशब्दाश्रवणात् । तथा नामधेयमित्यस्यापि नाममात्रं धेत-

---

### ॥ अथ वाचारंभणश्रुत्यर्थविवरणम् ॥ ३२ ॥

ननु वाचारंभणमिति श्रुतिरेव मिथ्यात्वे मानमस्तु, विकारो घटशरावादिरूपो वाचारम्भणम् , आरभ्यत इत्यारम्भणम् , वाचा आरम्भणम् वाचा व्यवहारमात्रम् , नामधेयं , नाममात्रम् , शब्दव्यतिरेकेण वस्तुतो विकारः कोऽपि नास्ति, मिथ्येति यावत् । किन्तर्हि सत्यम् । मृत्तिकैव, उपादानभूतं ब्रह्मैवेति तदर्थप्रतीतेरित्याशंक्य निराकरोति ॥ नापीति ॥ ननु वाचारम्भणमित्येकं पदमनेकं वा इति विकल्प्य नाद्य इत्याह ॥ वाचेति ॥ द्वितीयेऽपि आरम्भणपदं रूढं यौगिकं वेति विकल्प्य तत्राद्यं प्रमाणाभावेन वहिरेव निराकृत्य द्वितीयमनूद्य निराकरोति ॥ आरभ्यत इति ॥ कर्तृकर्मणोः कृतीति कृद्योगे षष्ठ्या एवानुशासनादिति भावः । एतच्चोपलक्षणम् । ल्युडन्तस्यारम्भणशब्दस्य कर्मार्थत्वमप्यसम्भवि, ल्युटः कर्मण्यननुशासनादिति मिथ्यात्वालाभाच्चेति । इदमुपलक्षणम् । घटशरावादिरूपमृत्तिकाविकारस्य वागिन्द्रियारब्धत्वाभावाच्चेत्यपि बोध्यम् । ननु वाचारम्भणमित्येकं पदम् । वाचाशब्दश्च शब्दपरः, तथाच वाचायाः आरम्भणम् , आलम्बनमात्रमिति मिथ्यात्वसिद्धिरिति विकल्पेऽप्यत आह ॥ वागिति ॥ अश्रुतकल्पनादिति ॥ वागालम्बनमात्रमित्यस्य अश्रुतस्य कल्पनादित्यर्थः ॥ पौनरुक्त्याच्चेति ॥ नच व्याख्यानव्याख्येयभावेन अपौनरुक्त्यम् । अस्य अनन्यगतिकत्वादिति भावः ।

ननु मास्तु वाचारम्भणशब्देन (पदेन) मिथ्यात्वसिद्धिः, मृत्तिकेत्येव सत्यमिति उपादानमात्रसत्यत्वावेदकवाक्येन तु स्यादित्याशंक्याह ॥ मृत्तिकेत्यत्रेति ॥ तथाच उपादानमात्रसत्यत्वासिद्ध्या नोपादेयमिथ्यात्वसिद्धिरिति भावः । इतिशब्दस्य अवधारणार्थसमर्थनाय प्रकृते तस्यैविभ्यादर्शितमर्थमाह ॥ पदार्थविपर्यासे त्वाविति ॥ मृत्तिकाशब्दात्परमितिशब्दस्य समाप्त्यर्थत्वासम्भवात् । न च भिन्नक्रमेण तेन समाप्तिः प्रतिपादयितुं शक्यत इति वाच्यम् । यथाश्रुतान्वयासंभव एव हि भिन्नक्रमस्य आश्रयणीयत्वात् । समाप्त्यर्थत्वाश्रयणस्य नातिप्रयोजनत्वा-

दिति व्याख्यातत्वेन पौनरुक्त्यात् । मृत्तिकेत्यत्रार्थविवक्षायामितिशब्दवैयर्थ्याच्च । पदार्थविपर्यासे खल्वत्रेतिशब्दः, स च शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं निवार्यार्थपदार्थकत्वं व्यवस्थापयति, यथा "नवेतिविभाषा" इति । अर्थप्रकरणे तु शब्दपदार्थकत्वं यथा गौरित्ययमाहेति । उक्तं हि महाभाष्ये– "नवेतिविभाषेत्यत्रइतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति तद्यथा गौरित्ययमाहेति गोशब्दादितिकरणः प्रयुज्यमानः गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति सोऽस्मात्प्रच्युतश्शब्दपदार्थकस्संपद्यत" इति । अत्र चार्थप्रकरणादेवार्थपदार्थकत्वे सिद्धे किमितिशब्देन । नचात्रेतिशब्दः प्रकारार्थः । प्रकारस्यानुपादानत्वात् । तदुक्तम्–

"वाचारंभणमित्युक्ते मिथ्यैवेत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता" । इति

तस्माद्वाचया वागिन्द्रियेणारंभणं उत्पादनं यस्य सांकेतिकस्य भाषाशब्दस्य तन्नामधेयं विकारः 'कर्मणि घञ्' विकृतं, संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । मृत्तिकेत्यादिसंस्कृतं नामधेयं तु सत्यं नित्यम् । "नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरम्" इति एतच्छ्रुतावेवोत्तरत्र सत्यशब्दस्य नित्ये प्रयोगात् । सदाशब्दात्, "अव्ययात्त्यप्" इतित्य-

---

वेति भावः ॥ यथेति ॥ नवेतिशब्दो यथेत्यर्थः ॥ शब्दपदार्थकत्वमिति ॥ अत्र व्यवस्थापयतीत्यनुषङ्गः ॥ यथा गौरिति ॥ गौरित्ययमाहेत्यत्र गौरितिशब्दो यथेत्यर्थः ॥ गोशब्दादितिकरणः प्रयुज्यमान इति ॥ गोशब्दात्परः प्रयुज्यमानः इतिकरण इत्यर्थः ॥ अत्रचेति ॥ मृत्तिकेत्येव सत्यमित्यत्रेत्यर्थः ॥ प्रकारस्य अनुपादानत्वादिति ॥ तथाच उपादानगतधर्मस्यैव सत्यत्वापत्त्या तद्भिन्नस्योपादानस्य सत्यत्वासिद्धिरिति भावः ॥ पुनरुक्तिर्नामधेयमितीत्यस्येति ॥ श्रुतिगतेतिशब्दस्येत्यर्थः । एवं परव्याख्यानस्य दुष्टत्वात् श्रुतेः स्वाभिमतमर्थमाह ॥ तस्मादिति ॥ वाचा वागिन्द्रियेण आरम्भणमित्यादि [illegible] नामधेयमित्यन्तम् । विग्रहस्तु वाचा वागिन्द्रियम्, आरभ्यते उत्पाद्यते अनेनेति आरम्भणम् । करणे ल्युट्, उत्पादकम् यस्य नामधेयस्य तदिति । एवंच [illegible] इति [illegible] भवतीत्यवधेयम् । सांकेतिकं भाषाशब्दरूपं नामधेयं विकार इत्युक्ते विकारशब्दस्य सम्बन्धिशब्दत्वात् कस्येत्याकांक्षायां प्रतिसम्बन्धिनमाह ॥ संस्कृतेति ॥ यद्यपि संस्कृतनामधेयस्य [illegible] सांकेतिकभाषाशब्दरूपं नामधेयं न तद्विकारः, तथापि तेष्वभियुक्तप्रसिद्धिमिदं [illegible]

न्तस्य सत्यशब्दस्य नित्ये प्रयोगसंभवाच, "सनातनं सत्यमिति नित्यमेवोच्यते बुधैः" इति वचनाच । इह विकृतत्वप्रतियोगिन एव सत्यशब्देन विवक्षणीयत्वाच । "टापं चापि हलंतानां यथा वाचा निशा दिशा" इति वचनाद्वाचारंभणमिति समासस्साधुः । तस्मात्तत्सादृश्यादेकविज्ञानेन सर्वविज्ञाने मृत्पिंडमृण्मयादिदृष्टांताः प्रधानज्ञानादप्रधानज्ञाने संस्कृतापभ्रंशदृष्टांतः भाषाशब्दज्ञानाद्धि यत्फलं तदधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद्भवतीति तज्ज्ञो विद्वानित्युच्यते । तदर्थे "यथा सोम्य" इत्यादिकं "तनूर्वर्षिष्ठा" इत्यादिवदनुषंजनीयम् ।

---

विकारित्वं विकारशब्दस्यालंबनमित्यवबोधः ॥ एतच्छ्रुतावेवेति ॥ छांदोग्यश्रुतावेवाहम इत्यर्थः । सत्यशब्दस्य वस्तुतो नित्ये निमित्तांतरभावादपि प्रयोगसंभवात् न नित्यशब्दपर्यायतेत्यत आह ॥ सदाशब्दादिति ॥ सदाशब्दाकारलोपः छान्दस इति भावः । यद्वा एतदस्वारस्यादाह ॥ सनातनमिति ॥

ननु तथापि प्रकृते तस्य नित्यत्वपरत्वे किं मानम् अत आह ॥ इहेति ॥ विकृतत्वप्रतियोगिन इति ॥ तद्विरोधिन इत्यर्थः । ननु वाचारम्भणमित्यस्य समासत्वे वागारम्भणमित्येव निर्देशः स्यादित्यत आह ॥ टापंचापीति ॥ टापं भागुरिराचार्यो वष्टीति पूर्वेणान्वयः । ननु भवतु वाचारम्भणवाक्यस्य त्वदुक्त एवार्थः, तथापि प्रकृते का संगतिः । न च दृष्टान्तप्रतिपादनपरतया संगतिः संभवति । एकविज्ञानेन सर्वविज्ञाने तस्य दृष्टान्तत्वायोगात् इत्याशंक्याह ॥ तस्मादिति ॥ ननु कथमेकविज्ञानेन सर्वविज्ञानम् । अन्यज्ञानेन अन्यज्ञानादर्शनात् इत्यत आह ॥ सादृश्यादिति ॥ परस्परसदृशवस्तुषु एकस्मिन् ज्ञाते तत्सदृशत्वेन ज्ञाने तत्सदृशत्वेन तेनैतत् सर्वं ज्ञातं भवतीति भावः । ननु प्रधानज्ञानादप्रधानं ज्ञातं न भवति, राजज्ञानेऽपि अमात्याद्यज्ञानात् इत्यत आह ॥ भाषेति ॥ तथाच प्रधानज्ञानेन अप्रधानज्ञानं भवतीत्यस्य प्रधानज्ञानात् अप्रधानं ज्ञानफलं भवतीत्यर्थः । एवंच नोक्तानुपपत्तिरिति भावः । व्यवहारादिकमित्यादिपदेन एकशब्दे सम्यग्ज्ञात इति श्रुत्युक्तफलपरिग्रहः ।

ननु वाचारम्भणमित्यादौ यथेत्यादिशब्दाभावात् कथं दृष्टान्तत्वमित्यत आह ॥ तदर्थमिति ॥ दृष्टान्तार्थमित्यर्थः ॥ तनूर्वर्षिष्ठेत्यादि ॥ तमस्य द्वितीयेऽध्याये प्रथमपादे विचारितम् । अनुषंगो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् (जै. मी. अ. २, पा. १, अधि. १७, सू. ४८) यास्ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा. या ते अग्ने रजाशया

साध्यस्य जलाहरणादिसमर्थस्य चावस्थाविशेषरूपस्य घटादेरपि सत्त्वात् । तात्विकविवक्षायां तु मृदोऽपि सत्त्वोक्त्ययोगाच्च । शुक्त्यादितत्वज्ञानेन रूप्यादिज्ञानादर्शनाच्च । यत्तूक्तं वाचस्पतिना– "शुक्तौ ज्ञातायां रूप्यं तत्वतो ज्ञातं भवति । सा हि तस्य तत्त्वम् । एवं ब्रह्मज्ञानात्सर्वं तत्वतो ज्ञातं भवति" इति । तन्न । एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात् । तच्च न युक्तम् । सर्वसाधारण्यात् । स्वस्य स्वहेतुत्वायोगाच्च । "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति श्रुतिगताश्रुतादिपदायोगाच्च । किंच, असाधारणं स्वरूपमसाधारणधर्मो वा तत्त्वम् । नतु भ्रमाधिष्ठानम् । तथात्वे हि ब्रह्माद्यनधिष्ठानमानंदः शुक्तित्वादिकं ब्रह्मशुक्त्यादितत्वं न स्यात् । नच शुक्तिः शुक्तिज्ञाननिवर्त्यस्य रूप्यस्य स्वरूपं धर्मो वा । नचानेकारोप्यानुगतमधिष्ठानमेकैकस्यारोपितस्याऽसाधारणम् । किंचैवं शुक्तौ रूप्यधीरानंदादौ ब्रह्मादिधीरिव प्रमा स्यात् । तत्तत्वे तद्धीत्वात् । तस्मात्परमते एकविज्ञानेन सर्वविज्ञानमयुक्तम् । अस्मत्पक्षे तु प्रधानपुरुषज्ञानाह्वानपूजनादौ लोके जनपदस्सर्वोऽपि ज्ञात आहूत इत्यादेः, पुराणादौ च

"शशास पृथिवीं सर्वां सशैलवनकाननाम् ।
नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः" ॥

इत्यादेश्च व्यवहारस्य दर्शनात्प्रधानभूतब्रह्मज्ञानादप्रधानभूतदेवतादिज्ञानफलसिद्धेस्तद्युक्तम् ।

---

दशायामिति ॥ एवं च मृत्तिकेत्येवेति अवधारणविरोध इति भावः । द्वितीयमनूद्य दूषयति ॥ तत्त्वविवक्षायामिति ॥ शुक्त्यादीति ॥ तथाच जगतो ब्रह्मविवर्तत्वपक्षेऽपि नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिरिति भावः ॥ एवंहीति ॥ ब्रह्मणो जगदध्यासाधिष्ठानत्वेन जगत्स्वरूपत्व इत्यर्थः ॥ येनाश्रुतमिति ॥ जगत्स्वरूपस्य ब्रह्मणः श्रुतत्वादिति भावः ॥ ब्रह्माद्यनधिष्ठानमिति ॥ ब्रह्मादेरनधिष्ठानमित्यर्थः । आदिपदात् शुक्तिपरिग्रहः । तत्त्वंतु उक्त एव तत्त्वशब्दार्थः । ततः प्रकृते किमित्यत आह ॥ न चेति ॥ किंचैवमिति ॥ अधिष्ठानस्यैव तत्स्वरूपत्व इत्यर्थः । आनन्दादावित्यादिपदात् पृथुदुर्योधनाद्यर्थपरिग्रहः । ब्रह्मादीत्यादिपदेन तु घटादिपरिग्रहः । तत्तत्व इति ॥ तत्तत्त्वविषयकत्वादित्यर्थः । पूर्वमिति ॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं युक्तमित्यर्थः ॥ तावानिति ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥

"ज्ञानादेव सर्वे कामाः संपद्यंत" इतिश्रुतेः। "तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानत" इतिस्मृतेश्च।

"यथा मृत्पिण्डविज्ञानात्सारूप्यादेवमृण्मयाः। विज्ञायंते तथा विष्णोस्सादृश्याज्जगदेव च। अनन्याधीनविज्ञानादन्याधीनं तथैव च। मृदयोलोहनाम्नां हि ज्ञानात्सांकेतिकं यथा" इत्यादिस्मृतेश्च। एतेन एकविज्ञाने सर्वविज्ञानान्यथानुपपत्तिर्मिथ्यात्वे प्रमाणमिति निरस्तम्। केचित्तु सूक्ष्माव्यक्तादिविशिष्टब्रह्मणो महदादिविशिष्टात्मना परिणामात् कार्यकारणयोश्चाभेदात् कार्यस्य कारणातिरेकेणासत्त्वपरेयं श्रुतिर्नतु मिथ्यात्वपरेत्याहुः।

॥ इति वाचारंभणश्रुत्यर्थविवरणम् ॥ ३२ ॥

---

इति गीतावचनस्यायमर्थः। अत्र यथातथाशब्दौ अध्याहार्यौ यावान् तावान् इत्येतयोरावृत्तिः। यथा यावानर्थः प्रयोजनं उदपाने कूपे भवति, तावान् सर्वतः संप्लुतोदके अन्तर्भवत्येव, तथा सर्वेषु वेदेषु काम्यकर्मिणां यत्फलं, तद्विजानतो ज्ञानिनः फले अन्तर्भवतीति॥ श्लोकसमग्रवाक्यार्थे स्मृतिसंवादमाह॥ यथा मृत्पिण्डेति॥ एतेनेति॥ वाचारम्भणश्रुतेः अस्मदभिप्रेतार्थपरत्वसमर्थनेनेत्यर्थः।

केचित्तु इत्यस्याशयोद्घाटनम्। तद्बीजं तु सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः स्थूलचिदचिद्रूपमहदादिविशिष्टाकारेण परिणाम इत्ययुक्तम्। विशेष्यस्य ब्रह्मणः परिणामित्वाभावात्। अवस्थारूपविशेषणपरिणामस्य अन्यपरिणामत्वात्। नहि कुण्डलरूपविशेषणपरिणाममादाय कुण्डली देवदत्तः परिणमत इत्युच्यते। तथ बाल्यं शरीररूपविशेषणस्थौल्यमादाय देवदत्त इदानीं स्थूलो जात इति व्यवहारो दृष्ट इति। तस्य देहात्माभेदाध्यासमूलकत्वेन भ्रान्तत्वात्। विशेषणदर्शनकाले तथा व्यवहारस्य गौणत्वात्। नहि श्रौतो व्यवहारो भ्रान्त इति वक्तुम् अभ्युपगन्तुम्। चिदचिद्रूपविशेषणमादाय तद्विशिष्टब्रह्मणः परिणामित्वमसंभवमेव। नहि जीवचितः परिणामित्वे मानमस्ति। तथ च अचेतनपरिणाममादाय तद्विशिष्टब्रह्मणः परिणामित्वं मुख्यम्। किञ्च कार्यकारणयोर्भिन्नतोपादानोपसंगयोः अभेदो न युज्यते। अवस्थारूपकार्याणि कारणस्याव्यक्तस्य तद्विशिष्टब्रह्मणश्च अत्यन्तभेदात्। अवस्थावतश्च तत्कार्यत्वाभावादिति।

॥ इति वाचारम्भणश्रुत्यर्थविवरणम् ॥ ३२ ॥

## ॥ अथ इदं सर्वं यदयमात्मेत्यादिश्रुत्यर्थविचारः ॥ ३३ ॥

नापि "इदं सर्वं यदयमात्मा" इत्यादिश्रुतिस्तत्र मानम्, जडाजडयोरैक्यासंभवेन ब्रह्मव्यतिरेकेणासत्त्वस्यात्राभिप्रेतत्वादितियुक्तम्, "सर्वेषु भूतेष्वेतम्" इतिश्रुतेः सर्वं जलं लवणमितिवत् सर्वव्याप्त्या वा, स हि सर्वस्य कर्तेतिश्रुतेः "आयुर्वै घृतं, ब्राह्मणोऽस्य मुखम्" इतिवत् निमित्तत्वेन वा, "यस्मिन्द्यौः पृथिवीच" इत्यादिश्रुतेः "राजा राष्ट्रं, ब्राह्मणो वै सर्वा देवता" इतिवत् सर्वाधारत्वेन वा, "न ऋते त्वत्क्रियते किंचन" इत्यादि श्रुतेः "यजमानः प्रस्तरः" इतिवत् "तत्सिद्ध्या वा" (तत्कार्यकारित्वेन वा) "आदित्यो यूपः" इतिवत् सारूप्येण वा, सामानाधिकरण्योपपत्तौ सर्वप्रमाणबाधितायाः यः पुरुषः स स्थाणुरितिवत् यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणाया अयोगात् । उक्तं हि महाभाष्ये "अंतरेणापि निमित्तं निमित्तार्थोऽवगम्यते । तद्यथा, आयुर्वै घृतं, दधित्रपुसं प्रत्यक्षो ज्वर इति । अंतरेणापि वतिमतिदेशोऽवगम्यते । अब्रह्मदत्तं ब्रह्मदत्त इत्याह ब्रह्मदत्तवदिति गम्यते" इति । "पुरुष एवेदं सर्वं पुरुषेणैवेदं सर्वं व्याप्तमातृणादाकरीषात" इतिश्रुतौ ।

असतश्च सतश्चैव सर्वस्य प्रभवोऽव्ययः । सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ॥
पुरुषएवेदं सर्वं भूतं भव्यं भवच्च यत् । इत्युच्यते तदीयत्वात्तु सर्वस्वरूपतः" ॥

---

॥ अथ इदं सर्वं यदयमात्मा इति श्रुत्यर्थविवरणम् ॥ ३३ ॥

नापीति ॥ एतच्च युक्तमित्यनेन सम्बध्यते । यद्यपि यत्र त्वस्येति श्रुतिनिरासेनैवेदमपि निरस्तम् । न्यायसाम्यात् । तथापि परैः स्वग्रन्थे इदमपि वाक्यं मिथ्यात्वे प्रमाणत्वेनोपात्तमिति पृथक् निराकरणमिति द्रष्टव्यम् । इदं सर्वं यदयमात्मेत्यादिपदात्पुरुष एवेदमित्यादिवाक्यपरिग्रहः ॥ तत्सिद्ध्येति ॥ तत्कार्यकारित्वेनेत्यर्थः । त्वदृते किंचन केनापि न क्रियत इति तच्छ्रुतौ तत्कार्यकारित्वप्रतीतेरिति ॥ सारूप्येण वेति ॥ आदित्योऽपि सत्त्वादिना ब्रह्मसदृशत्वादिति भावः ॥ सामानाधिकरण्येति ॥ सामानाधिकरण्यनिर्देशेनेत्यर्थः । यः पुरुषत्वेन प्रतीतः सः स्थाणावध्यस्त इतिवदित्यर्थः । निमित्तवाचकशब्दाभावात् सादृश्यवाचकशब्दा(शब्दा)भावे च निमित्तनैमित्तिकभावः सादृश्यं चावगम्यते इत्यत्र सम्मतिमाह ॥ उक्तं हीति ॥ निमित्तमिति ॥

इति भारते "सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतायां चान्यथा व्याख्यातत्वाच्च । अन्यथा "इदं सर्वम्" इत्यस्य "सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद" इति पूर्वेण "स यथा दुंदुभेः" इत्यादिनोत्तरेण, "पुरुष एवेदं सर्वम्" इत्यस्य "स भूमिं विश्वतो वृत्वा" इति पूर्वेण "उतामृतत्वस्येशान" इत्युत्तरेण, "ब्रह्मैवेदं सर्वम्" इत्यस्य "अस्यां पृथिव्यां तेजोमयोऽमृतमयस्स यश्चायमप्सु तेजोमयोऽमृतमयः" इत्यादिना पूर्वेण, "सर्वं खल्विदं ब्रह्म" इत्यस्य "ज्यायान्पृथिव्या ज्यायानन्तरिक्षात्" इत्यादिनोत्तरेण "सर्वाणि भूतान्यात्मैव" इत्यस्य "सर्वभूतेषु चात्मानम्" इत्यादिना पूर्वेण "याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः" इत्युत्तरेण च विरोधः ।

॥ इति इदं सर्वं यदयमात्मेत्यादिश्रुत्यर्थविचारः ॥ ३३ ॥

---

निमित्तत्वकथनाच्च इत्यर्थः ॥ व्याख्यातत्वाच्चेति ॥ पुरुष एवेदं सर्वमित्यादिसामानाधिकरण्य-विशेषस्येति शेषः ॥ अन्यथेति ॥ इदं सर्वमित्यादेः मिथ्यात्वार्थकत्व इत्यर्थः ॥ विरोध इति ॥ सर्वं तं परादादित्याद्युदाहृतपूर्ववाक्येषु सर्वपदार्थसत्त्वमङ्गीकृत्य ब्रह्मणः तदाधारत्वाद्युक्तिविरोध इति ।

॥ इति इदं सर्वं यदयमात्मा इति श्रुत्यर्थविवरणम् ॥ ३३ ॥

## ॥ अथ यस्मात्परं नेतिश्रुत्यर्थविवरणम् ॥ ३४ ॥

"यस्मात्परं नापरमस्ति" (श्वेता.३.९.) इतिश्रुतेरपि यस्मात्परं न अपरं त्वस्ति तत्र किंचिदल्पमित्यर्थः। "पुरुषान्न परं किंचित्" "पादोऽस्य विश्वा भूतानि" इत्यादिश्रुतेः "वासुदेवात्परं नास्ति" इत्यादिस्मृतेश्च। नञोऽनुषंगस्याकल्प्यत्वाच्च। "तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरम्" इति वाक्यशेषाच्च। विश्वसंबंधाभावे हि किं तेन पूर्णं कस्माच्च तदुत्तरतरं स्यात्। "यस्मान्नाणीयो न ज्यायोऽस्ति" इत्यत्र "अणोरणीयान्महतो महीयान्" इत्यादि श्रुत्यंतराद्वाक्यशेषविरोधादुभयत्रापि नञः श्रवणाच्चोभयनिषेधः।

॥ इति यस्मात्परं नेतिश्रुत्यर्थविवरणम् ॥ ३४ ॥

---

॥ अथ यस्मात्परं नेति श्रुत्यर्थविवरणम् ॥ ३४ ॥

ननु यस्मात्परमिति श्वेताश्वतरश्रुतौ परापरवस्तुमात्रनिषेधात् मिथ्यात्वं सेत्स्यतीत्यत आह ॥ यस्मादिति ॥ ननु देहलीदीपन्यायेन नञः परापरपदाभ्यां संबन्धेन सर्वनिषेधपरत्वमेव किं न स्यादित्यत आह ॥ पुरुषादिति ॥ अनुषङ्गस्येति ॥ नञ इति शेषः। तथाच वाक्यान्तरानुरोधेन अनुषङ्गं विनैवोपपत्तावनुषङ्गकल्पने प्रमाणाभावादिति भावः। न केवलमनुषङ्गे प्रमाणभावः। किंतु वाक्यशेषविरोधादपीत्याह ॥ तेनेदमिति ॥ ननु यस्मान्नाणीय इत्युत्तरत्र अणीयसो निषेधात् पूर्वत्राप्यनुषङ्गेणापरनिषेधो दुर्वार इत्यत आह ॥ यस्मान्नाणीय इति ॥ वाक्यशेष इति ॥ तेनेदं पूर्णमित्युक्तात्तद्वाक्यशेष इत्यर्थः ॥ उभयनिषेध इति ॥ तदपेक्षयोत्कृष्टपरिमाणवतो न्यूनपरिमाणवतश्चेत्यर्थः।

॥ इति यस्मात्परं नेतिश्रुत्यर्थविवरणम् ॥ ३४ ॥

## ॥ अथ मायामात्रमिदमिति श्रुत्यर्थविचारः ॥ ३५ ॥

"प्रपंचो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते" ॥माण्डू.१.१७.१८. इत्यत्राप्याद्यश्लोके भेदस्य भास्करादिमतप्राप्तं सत्योपाधिकृतत्वं निरस्य द्वितीये मायावाद-प्राप्तमारोपितत्वं निरस्यानादिसत्यत्वमेवोच्यते । यथा "तद्धैक आहुः" इतिश्रुतौ बौद्धमत-प्राप्तमसत्कारणत्वं निरस्य "सदेव" इत्यत्र सत्कारणत्वम् । तथाहि । भेदप्रपंचो यदि विद्येत उत्पद्येत तर्हि निवर्तेत नच निवर्तते मोक्षेऽपि भेदश्रुतेः । तस्मादनादिरित्यर्थः । विद सत्ताया-मिति हि धातुः । उत्पत्तिरपि च सत्तायोग एव । अस्ति च सत्तार्थस्यापि भवतेः–

"तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः" ॥

इत्यादावुत्पत्तौ प्रयोगः । विदॢ लाभ इति वा धातुः । तथाच विद्येत लभ्येत उत्पद्येतेत्यर्थः ।

---

अथ मायामात्रमिदमिति श्रुत्यर्थविचारः ॥ ३५ ॥

ननु मायामात्रमिति श्रुतौ द्वैतप्रपञ्चस्य मायिकत्वम् ( अपरमार्थत्वम् ) अद्वैतस्य परमार्थत्वं च कण्ठरवेण उच्यत इति कथं न जगन्मिथ्यात्वे प्रमाणाभाव इत्यत आह ॥ प्रपंचो यदि विद्येतेति ॥ भास्करादिमतप्राप्तमिति ॥ तत्प्रसंजितमित्यर्थः । ननु श्रुत्या निषेधः प्रत्यक्षादिभिः प्रसक्तस्यैव । ननु [illegible] इत्यत आह ॥ यथेति ॥ निरस्येति ॥ कथमसतः [illegible] ॥ भेदप्रपञ्च इति ॥ अन्योन्याभावप्रपञ्चमित्यर्थः । यद्यपि प्रपञ्चशब्दो विस्तारवाची । [illegible] पंचानां वर्गः पञ्चः, प्रकृष्टत्वात्[illegible] पंचत्वेति योगबलेऽपि सामान्यतः पञ्चानां वर्गो गम्यते । ननु पंचभेदाः, तथापि मायामात्र-मिदं द्वैतमिति [illegible] प्रकृष्टत्वोक्त्या प्रकृष्टत्वस्य च मोक्ष[illegible] भेदस्यैव [illegible] प्रपञ्चशब्देन भेदपञ्चकं ग्राह्यमिति द्रष्टव्यम् ॥ भेदश्रुतेरिति ॥ सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता । [illegible] इत्यादिभेद-श्रुतेरित्यर्थः । ननु विद्येतेत्यस्य उत्पद्येतेत्यर्थः कथमित्यत आह ॥ विद सत्तायामितिहीति ॥ तथापि सत्तासम्बन्ध एव तदर्थः स्यात्, न तु उत्पत्तिरित्यत आह ॥ उत्पत्तिरपीति ॥

उत्पत्तिरपि हि स्वात्मनो लाभ एव । अस्तित्वार्थत्वे तु यद्यदस्ति तत्तन्निवर्तेत इतिव्याप्त्यभावात् श्रौतस्तर्क आभासः स्यात् । अत एव "नह्यप्रानूयाजा" इति श्रौतहेतौ राणके व्याप्तिरुक्ता । ननूपाधिकृतं न चेत् किं तर्हि स्वतंत्रम्, नेत्याह । मायामात्रमीश्वरेच्छाधीनम्, मायेतीश्वरेच्छोच्यत इति वक्ष्यमाणत्वात् । "विष्णोरिच्छावशत्वात्तु मायामात्रम्" इत्यादिस्मृतेश्च । पूर्वत्र "स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता" इत्यैन्द्रजालिकत्वं मतांतरत्वेनोक्त्वा "इच्छामात्रं प्रभोस्सृष्टिः" इतीश्वरेच्छाधीनत्वस्य स्वमतत्वेनोक्तेश्च । "प्रभवस्सर्वभावानां सतामिति विनिश्चय" इति पूर्वत्र "कल्पितो यदि केनचित्" इत्युत्तरत्र च सत्त्वोक्तेश्च । निवर्तेतेति तर्कस्य विपर्ययपर्यवसानलब्धानिवर्त्यत्वाविरुद्धार्थस्यैवेह वक्तव्यत्वाच्च । तर्ह्यद्वैतस्सर्वभावानामितिश्रुतमद्वैतं कथमित्यत आह । अद्वैतंपरमार्थत इति । ल्यब्लोपनिमित्ता पंचमी । परमं स्वतंत्रमर्थमपेक्ष्य तत् । "स्वतंत्रं परमार्थाख्यम्" इति स्मृतेः । परिभाषायाश्च कार्यार्थत्वेन "आण्नद्या" इत्यादाविवासति बाधे "कृत्रिमाकृत्रिमयोःकृत्रिमे कार्यसंप्रत्यय" इतिन्यायेन पारिभाषिकस्यैव ग्राह्यत्वात् । यववराहाद्यधिकरणन्यायेन शास्त्रे शास्त्रीयार्थस्यैव

---

भूतिष्विति ॥ उत्पत्तिषु कर्तृत्वं प्राप्तस्येत्यर्थः । ननु निवर्तेतेत्यस्य अस्तित्वार्थकस्यापि सत्त्वात् निर्णयासम्भव इत्यत आह ॥ अस्तित्वार्थत्वे त्विति ॥ व्याप्त्यभावादिति ॥ ब्रह्मण्येव व्यभिचारादिति भावः ।

ननु व्याप्तिहीनोऽपि तर्कः श्रौतत्वादेव अनाभासः स्यादित्याशंकां संमतिमुखेन निराचष्टे॥ अत एवेति ॥ तर्कस्यापि हेतुविशेषत्वादिति भावः ॥ व्याप्तिरुक्तेति ॥ 'चतुर्गृहीतान्याज्यानि भवन्ति । नह्यप्रानूयाजा इज्यन्ते' इति । एवञ्चात्र नह्यंतेति श्रौतार्थभूतहेतौ यत्रानूयाजाभावः तत्र चतुर्गृहीतत्वाभावः इतिव्याप्तिरुक्तेत्यर्थः । मायाशब्दस्येश्वरेच्छावाचित्वे प्रमाणाभावमाशङ्क्याह ॥ मायेति ॥ ननु तथापि प्रकृते तदर्थाश्रयणे किं मानमित्यत आह ॥ विष्णोरिति ॥ स्मृतौ मायामात्रमिति प्रतीकग्रहणपूर्वकं मायामात्रशब्दस्य व्याख्यातत्वादिति भावः ॥ स्वप्नमायासरूपेति ॥ स्वप्नसरूपा मायासरूपा चेत्यर्थः ॥ सत्त्वोक्तेश्चेति ॥ पूर्वं सत्तार्थकभावपदेनोत्तरत्र तर्कस्य विपर्यये पर्यवसानेन सत्त्वोक्तेरित्यर्थः ॥ इहेति ॥ मायामात्रमिति श्लोक इत्यर्थः ॥ श्रुतमिति ॥ हेतुतयैव श्रुतमित्यर्थः । अत आहेति शङ्कां प्रति स्वाभिमतमर्थमाहेत्यर्थः ॥ आण्नद्या इत्यादाविवेति ॥ यथा आहारागमलक्षणकार्ये वर्तमानेऽपि पुंसि स्त्र्याख्यौ नदीतिपारिभाषिकस्यैव ग्रहणम् ॥ न्यायेनेति ॥ यववराहाद्यधिकरणन्यायेनेति ॥ अयं च न्यायः

स्वतंत्र एव च परमत्वं मुख्यम् । नच मुख्ये संभवत्यमुख्यं युक्तम् । परमार्थशब्दस्य तात्त्विके योगरूढ्यंगीकारेऽपि मानांतरैः पूर्वोत्तरवाक्यैश्चाविरोधाय योगेन स्वतंत्रपरत्वमेव युक्तम् । तथाच सर्वभावानां मध्येऽयमद्वितीय इत्युक्ते स्वातंत्र्यमेव सिद्ध्यति न तु सर्वभावासत्त्वमित्यर्थः ।

केचित्तु "अनाशी परमार्थः स्यात्" इति वचनादद्वैतं परमार्थत इत्यस्याद्वितीयं ब्रह्माविनाशीत्यर्थ इत्याहुः । एवं भेदस्योपाधिकृतत्वं निरस्य कल्पितत्वं निरस्यति ॥ विकल्प इति । तर्कत्वाच्च च निवर्तते तस्माच्च कल्पित इति विपर्यये पर्यवसातव्यम् । तत्त्वे ज्ञाते तु द्वैतं न विद्यत इत्यर्थः । श्लोकयोरतर्करूपत्वे यदिशब्दद्वयं लिङ्प्रत्ययचतुष्टयं च व्यर्थं स्यात् । तदुक्तम् ।

"इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयं ।
विश्वस्य सत्यतामाहुः विद्येतोत्पत्तिमेव च" ॥ इति

स्पष्टीकृतश्चायमर्थः श्रुत्यंतरे ।

---

ततः प्रकृते किं सिद्धम् इत्यत आह ॥ स्वतन्त्र एव चेति ॥ परमस्वतन्त्र एव चेत्यर्थः ॥ अमुख्यमिति ॥ गृहीतमिति शेषः । ननु परमार्थमेव असौ वदति इत्यादौ परमार्थशब्दात् अबाधितार्थप्रतीतेः सर्वानुभवसिद्धत्वात् इहापि परमार्थशब्दस्य तदर्थकत्वमेव युक्तमित्याशंक्याह ॥ परमार्थशब्दस्येति ॥ स्वतन्त्रपरत्वमेवेति ॥ परमार्थशब्दस्येतिशेषः । एवं श्रुत्या स्वाभिप्रेतार्थे कथिते पूर्ववाक्यस्याप्ययमेवार्थः सिध्यतीत्युपसंहरति ॥ तथाचेति ॥ केचित्त्वित्य-स्वरसोद्भावनम् । तदीजन्तु तुरीयं तत्सर्वदृक्सदेति पूर्ववाक्येनैव ब्रह्मणो नित्यत्वलाभात्पुनरविनाशित्वप्रतिपादनेऽर्थपौनरुक्त्यं परमार्थत इत्यस्यौत्सर्गिकप्रत्यगन्वयस्यागः इत्यादि बोध्यम् । नन्वत्र कल्पितत्वनिरासो न प्रतीयते तत्कथमुच्यते कल्पितत्वं निरस्यतीत्यत आह ॥ तर्कत्वादिति ॥ अन्यथा तर्काभासःस्यादितिभावः । उपदेशादयंवाद इत्यस्यायमर्थः । अयं प्रपञ्चसत्यत्वविषयो वादः सतामुपदेशत्वात् श्रुत्याद्यनुसारीति । द्वैतं न विद्यत इत्यस्यानन्तरं इति वाद इति शेषः । अतर्करूपत्व इति तर्कोपयोगप्रतिपादकत्व इत्यर्थः ॥ लिङ्प्रत्ययचतुष्टयं चेति ॥ अत्र चतुष्टुं कल्पितो यदि स्यादित्यत्राप्यनेनलिङ्कोति द्रष्टव्यम् ॥ विद्येतेति ॥ विद्येतेत्यस्य उत्पत्तिमाह । न त्वसत्त्वमित्यर्थः । केचित्त्वित्यस्वरसोद्भावनं । तदीजन्तु देहमेवेन यथोऽहं मनुष्योऽहं

वस्त्वपरिच्छेदमात्रं सिध्येत् । न तु वस्तुनो मिथ्यात्वम् । जीवस्वरूपं सत्यं विश्वं तु मिथ्येति विभागस्त्वद्याप्यसिद्धः । वस्तुतस्तु भेदो नापरिच्छेदः । परिच्छिन्नाद्भेदाभावे अपरिच्छिन्नत्वायोगात् । कालापरिच्छिन्नेऽपि परमाण्वादौ देशपरिच्छेदेन परिच्छिन्नत्वबुद्धिवत् उभयापरिच्छिन्ने गगनादौ भेदमात्रेण परिच्छिन्नत्वबुद्धेरभावाच्च । अनंतपदेनैव परिच्छिन्नाद्व्यावृत्तेस्तवयैवोक्तत्वाच्च भिन्न इत्यर्थे परिच्छिन्नइत्यप्रयोगाच्च । तस्माद्देशकालगुणापरिच्छेद एवानंतशब्दार्थः ।

॥ इति अनंतमितिश्रुत्यर्थविवरणम् ॥ ३६ ॥

---

ब्रह्मणोरभेदः, तथा इहापि ब्रह्मजगतोरभेद एव सिध्येत् इत्यर्थः । ननु जीवस्वरूपस्य सत्यत्वेन भेदयोग्यत्वेऽपि विश्वस्वरूपस्य मिथ्यात्वेन तदयोग्यत्वात् विरुद्धांशत्यागेनापि कथं तस्य ब्रह्माभेद इत्यत आह ॥ जीवस्वरूपमिति ॥ पूर्वं अनन्तशब्दोक्तापरिच्छेदोऽभेद इत्यंगीकृत्य दूषणमभिहितम्, इदानीं तदेव अप्रामाणिकम् इत्याह ॥ वस्तुतस्तु इति ॥ ब्रह्म अपरिच्छिन्नमिति वदन् प्रष्टव्यः किं तत् परिच्छिन्नाद्भिन्नं नवेति । नाद्यः त्वया भेदस्यैव परिच्छेदरूपत्वांगीकारेण परिच्छिन्नत्वापातात् इत्याद्यं निराचष्टे ॥ परिच्छिन्नादिति ॥ सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यज्ञानपदाभ्यां अनृतजडव्यावृत्तिवत्, अनन्तपदेन परिच्छिन्नात् व्यावृत्तेरपि त्वयैवोक्तत्वात् अनन्तपदेनाभेदोक्तौ स्ववचनविरोधश्चेत्याह ॥ अनन्तपदेनैवेति ॥ न च ब्रह्मपदेन परिच्छिन्नव्यावृत्तिसिद्धिः । तस्य लक्ष्यनिर्देशार्थत्वात् अत एव अनन्तपदेनैवेत्येवकार इति । उपसंहारेण स्वविवक्षितार्थं दर्शयति ॥ तस्मादिति ॥ अपरिच्छेदः इत्यानन्त्यत्वम् ।

॥ इति अनन्तमितिश्रुत्यर्थविवरणम् ॥ ३६ ॥

## ॥ अथ इन्द्रो मायाभिरित्यादिश्रुत्यर्थविवरणम् ॥ ३७ ॥

"इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापीश्वरस्य विचित्रशक्तिभिर्मत्स्याद्यनेकरूपत्वमेवोच्यते। न त्वज्ञानेन घटादिरूपत्वम्। "रूपं रूपं प्रतिरूपो बभूव" इति पूर्वोक्तानां जीवाख्यप्रतिबिंबानि प्रति बिंबभूतभगवद्रूपाणामेवेह रूपशब्देन प्रत्यभिज्ञानात् उत्तरत्र च "अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानंतानि च" इति हरिशब्दवाच्यविष्णुरूपाणां दशत्वादिना बहुत्वोक्तेः। "तदेतद्ब्रह्मापूर्वमनपरम्" इत्यादिना तेषां रूपाणां ब्रह्मत्वोक्तेश्च। चिन्मात्रस्यैव नानारूपप्रपंचाधिष्ठानत्वेन परमैश्वर्यवाचीन्द्र

---

॥ अथ इन्द्रो मायाभिरित्यादिश्रुत्यर्थविवरणम् ॥ ३७ ॥

ननु इन्द्रो मायाभिरिति बृहदारण्यकश्रुतौ ब्रह्मणः प्रपञ्चाख्यबहुरूपत्वस्य मायिकत्वप्रतीतेः मिथ्यात्वसिद्धिरित्यत आह ॥ इन्द्रो मायाभिरिति ॥ विचित्रशक्तिभिरिति ॥ न च मायाशब्दस्य शक्तिपरत्वे मानाभावः। तान् पश्यस्य मायया इत्यादिश्रौतप्रयोगस्यैव प्रमाणत्वादिति भावः। ननु पुरुरूप ईयत इत्यत्र रूपशब्दस्य नामरूपे व्याकरोत् इत्यादाविव घटादिरूपत्वं किन्न स्यादित्यत आह ॥ रूपं रूपमिति ॥ तेषामिति ॥ पूर्ववाक्यप्रतिपन्नानामित्यर्थः। परमैश्वर्यवाचीन्द्रशब्द इति ॥ यद्यपि ऋज्रेन्द्राग्रवज्रविप्रकुब्जचुब्जक्षुरखुरभद्रोग्रभेरभेलशुक्लशुक्लगौरवप्रेरामालाः (उणादि १८६) इत्यादिसूत्रेण इन्द्रशब्दः इन्धी दीप्ताविति धातोः इन्धते तेजोभिरित्यर्थे पूर्वानुवृत्तरन्प्रत्ययान्तो निपातितः। न तु इदि परमैश्वर्ये इति धातोः इन्दति इत्यर्थे, ततो रन् प्रत्ययविधानेनैव रूपसिद्धिसंभवे निपातनप्रयोजनाभावात्। अत एव एतत्सूत्रवृत्तौ इन्धतिधातोरिन्द्रशब्दनिपातनमुक्त्वा ऋधिवधिभ्यां रन् (उणादि १८५) इति पूर्वसूत्रे इन्दति धातोरपि प्रत्ययेन रूपसिद्धिसंभवे निपातनप्रयोजनं नास्तीत्युक्तत्वाच्च, इन्धते तेजोभिरिति इन्द्र इति इन्धीधातोर्निपातनमाश्रितम्। तथापि दीप्तिविशिष्टस्यापीन्द्रशब्दार्थत्वात् (अतः) इन्द्रशब्दस्य इदि परमैश्वर्ये इति धातुनिष्पन्नत्वमपि संभवति। न चोक्तरीत्या निपातनवैयर्थ्यम्। तस्य प्रतिपत्तिगौरवपरिहारार्थत्वेन सार्थक्यात्। अत एव "यस्मिन्निन्द्रशब्दार्थनिरूपणं हरेः" इत्यादौ परमैश्वर्यार्थे इन्द्रशब्दप्रयोग इति ध्येयम्। ननु मायां तु प्रकृतिं विद्यात् इत्यत्र प्रकृतेर्जगदुपादानस्य मायाशब्देन निरूपणोक्तेः तदुपादेयस्य सर्वस्य मिथ्यात्वं सिध्यतीत्यत आह ॥ मायांत्विति ॥

शब्दास्वारस्याच्च । "मायां तु प्रकृतिं विद्यात्" इत्यस्यापि मायया सन्निरुद्ध इतिपूर्वोक्ता या माया सा प्रकृतिः त्रिगुणात्मकं प्रधानमित्यर्थः । न तु या प्रकृतिर्जगदुपादानं सा माया मिथ्येति पूर्वनिर्दिष्टस्य मायाशब्दार्थस्य बुभुत्सितत्वात् प्राथम्येन मायाया एवोद्देश्यत्वाच्च । प्रकृतिशब्दस्य श्रुतिषु प्रधाने प्रसिद्धत्वाच्च । मायाशब्दस्य सत्येऽपि प्रयोगाच्च ।

॥ इति इन्द्रो मायाभिरित्यादिश्रुत्यर्थविवरणम् ॥ ३७ ॥

---

प्राथम्येनेति ॥ प्रथमनिर्दिष्टस्य उद्देश्यत्वमौत्सर्गिकमिति ॥ श्रुतिष्विति ॥ अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः इत्यादि श्रुतिष्वित्यर्थः । परीत्या प्रकृतेरुद्देश्यत्वांगीकारेऽपि न मिथ्यात्वसिद्धिरित्याह ॥ मायाशब्दस्येति ॥ मणिमन्त्रादिप्रयोक्तरि मायाविशब्दप्रयोग-दर्शनादिति भावः ।

॥ इति इन्द्रो मायाभिरित्यादिश्रुत्यर्थविवरणम् ॥ ३७ ॥

## ॥ अथ अतोऽन्यदार्तमितिश्रुत्यर्थविवरणम् ॥ ३८ ॥

यत्तु कौमुद्याम् "अतोऽन्यदार्तम्" इतिवाक्यं तत्र मानमित्युक्तम् । तत्त्वावितुच्छम् । अत्रान्तर्यामिणः प्रकृतत्वादेतच्छब्दस्य प्रकृतपरत्वात् । अन्यशब्दस्य च "एतद्ब्राह्मणादन्यमानय, समानमितरच्छ्येनेन" इत्यादाविव प्रकृतसमानजातीयान्यपरत्वात् ब्रह्मणोऽन्यज्जीवजातमार्तं दुःखीति जीवभेदस्यैवोक्तेः, नहि जीवादन्यस्यार्तिः ।

॥ इति अतोऽन्यदार्तमितिश्रुत्यर्थविवरणम् ॥ ३८ ॥

---

॥ अथ अतोऽन्यदार्तमितिश्रुत्यर्थविवरणम् ॥ ३८ ॥

तत्र मानमिति ॥ यस्योभयं हविरार्तिमार्च्छतीत्यादाविव आर्तिशब्दस्य निवृत्तिपरत्वात् ब्रह्मव्यतिरिक्तस्य सर्वस्य निवृत्तिप्रतीतेः मिथ्यात्वसिद्धिरिति भावः । आर्तिः पीडाधनुष्कोट्यो-रिति कोशप्रसिद्धेरार्तिशब्दस्य आर्तो जिज्ञासुरर्थार्थीत्यादौ दुःखिन्यपि प्रयुक्तत्वं (अस्ति)(अभियुक्ता-विगीतप्रयोगदर्शनात् इति पाठान्तरम्) गीताप्रयोगदर्शनात् । यस्योभयं हविरार्तिमार्च्छतीति आर्तिशब्दप्रयोगस्य नाशे लक्षणयाप्युपपत्तेः, नाशप्रतियोगित्वमात्रस्य मिथ्यात्वरूपत्वाभावाच्च नैतच्छ्रुत्या मिथ्यात्वसिद्धिरित्यभिप्रेत्य दूषयति ॥ तत्तुच्छमिति ॥ तर्हि तच्छ्रुतेः कोऽर्थ इत्यपेक्षायां तस्यान्यर्थविषयीभूतार्थं दर्शयितुमाह ॥ अत्रेति ॥ प्रकृतत्वं चान्तर्यामिणः "एष त आत्मा सर्वान्तर" इति पूर्ववाक्येनेति द्रष्टव्यम् । ननु तथाप्यन्यदित्युक्ते संकोचकाभावेन ब्रह्म-व्यतिरिक्तसर्वप्राप्तेः सर्वस्मिन्नार्तत्वविधानमसंभवीत्यत आह ॥ अन्यशब्दस्येति ॥ एतेन आर्तमित्यस्य आ समन्तात् ऋतमिति ईषत्सत्यमिति यौगिकार्थकल्पनादीनामसत्त्वं च मिथ्यात्व एव पर्यवस्यतीति निरस्तम् । योगस्य रूढेर्बलवत्त्वात् ॥ आर्तमितिप्रयोगापत्तेश्चेति ॥

॥ इति अतोऽन्यदार्तमितिश्रुत्यर्थविवरणम् ॥ ३८ ॥

## ॥ अथ जगदसत्त्वादिवाचिपुराणार्थविवरणम् ॥ ३९ ॥

पुराणादिषु क्वचित् जगतोऽसत्त्वोक्तिरसाधुत्वात्, "नासत्पुरुषमाभषेत्" इत्यादिवत् । "सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत" इति । "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इति च गीतोक्तेः "सच्छब्दः साधुवाचक" इति विष्णुपुराणोक्तेश्च । अस्वातंत्र्याद्वा "सत्त्वं स्वातंत्र्यमुद्दिष्टं तच्च* कृष्णे नचापरे । अस्वातंत्र्यात्तदन्येषामसत्त्वं विद्धि भारत" इति भारतोक्तेः । अन्यथा अत्यंतासत्त्वापातात् । अवस्तुत्वोक्तिः, अपरमार्थिकत्वोक्तिश्च परिणामित्वाद्विनाशित्वाच्च । "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् । अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते" इति विष्णुपुराणोक्तेः । मिथ्यात्वोक्तिस्तु वृथात्वात् "मिथ्यैव व्यवसायस्त" इत्यादिवत्सदोषत्वाद्वा । मिथ्योपपदात्कृञोऽभ्यास इति सूत्रे वृत्तौ पदं मिथ्या कारयते

---

॥ अथ जगदसत्त्वादिवाचिपुराणार्थः ॥ ३९ ॥

ननु मास्तु श्रुतिभिर्मिथ्यात्वसिद्धिः । पुराणादितः स्यात् । तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभम् ।

"प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥

ज्ञानं यथा सत्यमसत्यमन्यत्" इत्यादिभागवतविष्णुपुराणादिषु कण्ठत एव सद्विलक्षणत्वरूपमिथ्यात्वप्रतीतेरित्याशङ्क्य निराकरोति ॥ पुराणादिष्विति ॥ असाधुत्वादिति ॥ दुष्टत्वादित्यर्थः । अस्वातंत्र्याद्वेत्यस्यानन्तरमसत्त्वोक्तिरित्यनुषज्यते ॥ अन्यथेति ॥ असच्छब्दस्य सत्त्वाभावार्थकत्वे लोकसिद्धव्युत्पत्त्यनुसारेणात्यन्तासत्त्वमेवार्थः स्यादित्यर्थः । अवस्तुत्वोक्तिरिति ॥

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
यथा यथा न परिकल्पितमासते परमार्थतः ॥

इति च भागवतस्कान्दादिषु अवस्तुत्वोक्तिरपारमार्थिकत्वोक्तिश्चेत्यर्थः ॥ परिणामादिसंभूतमिति ॥ परिणामादिनिमित्तिकामित्यर्थः ॥ तद्वस्त्विति ॥ तथा च परिणामादिरहितस्य वस्तुत्वोक्त्या जगदवस्तुत्वोक्तिः (अपरिणामिपरमिति भावः) अपरिणामित्वपरेति भावः । अपारमार्थि-

* मच्चेति पाठः

इत्युदाहृत्य स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थ इत्युक्तत्वात्, न्यासे पदमंजर्यां च एतेन मिथ्याशब्दस्यार्थमाचष्ट इत्युक्तत्वात् । अतात्त्विकत्वोक्तिस्तु जीवसंबंधित्वेनाविद्यमानत्वात् । "अनित्यत्वविकारित्वपारतंत्र्यादिरूपतः । स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता" इतिवचनात् । मायामयत्वोक्तिस्तु प्राकृतत्वात् । "मायां तु प्रकृतिं विद्यात्" इतिश्रुतेः । "त्रिगुणा प्रकृतिर्माया तज्ज्ञत्वाद्विश्वमीदृशम् । अनाद्यनंतकालेषु मायेत्याहुर्विपश्चित" इति स्मृतेश्च । अन्यथा "स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता" इत्यादिश्रुतिभिः, न मायेत्यव-धार्यताम्" इतिस्मृतिभिः, "वैधर्म्याच्च नस्वप्नादिवत्" इति सूत्रैस्तत्रैव पूर्वोत्तरवाक्यैश्च विरोधात् ।

॥ इति जगदसत्त्वादिवाचिपुराणार्थविवरणम् ॥ ३९ ॥

---

कल्पोक्तेः कारणमाह । अनाद्यी परमार्थेति ॥ मिथ्यात्वोक्तिस्त्विति ॥ "लोकस्य मिथ्याभिरते-रचक्षुषः" इति भागवतादौ मिथ्यात्वोक्तिरित्यर्थः । इत्यादिवदिति ॥ "यदहंकारमाश्रित्य न योत्स्य इति मन्यसे । मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति" इत्यादिवदित्यर्थः । मिथ्याशब्दस्य दुरर्थकत्वमुपपादयति । मिथ्योपपदादित्यादिना ॥ एतेनेति ॥ स्वरादिदुष्टत्वमित्यर्थकथने-नेत्यर्थः । अविद्यमानत्वोक्तिस्त्विति ॥

सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वगं शिवम् ।
तदेवेदमिदं विश्वं तस्मादन्यन्न विद्यते ॥
सत्त्येव परमं तत्त्वं प्रथमं सकलस्य तु ।
तत्स्वरूपातिरेकेण न किञ्चिदिह विद्यते ॥

इत्याद्यनित्यपुराणसूतसंहितादिष्वविद्यमानत्वोक्तिरित्यर्थः । स्वप्नादिसाम्योक्तिस्त्विति ॥

यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ।
स्वात्मनोऽन्यतया भातं समस्तं स्वप्नोपमम् (स्वप्नसाम्यमात्र) ॥

इति भागवतवाराहपुराणादिषु स्वप्नादिसाम्योक्तिरित्यर्थः । मायामयत्वोक्तिरिति ॥ सर्वं मायामयं साक्षादात्मा सर्वविभ्रमलक्षणमित्यादिपद्मपुराणादिषु मायामयत्वोक्तिरित्यर्थः । तत्रैवेति ॥ माण्डूक्य-श्रुतौ "प्रभवः सर्वभावानां सतामिति विनिश्चयः । विकल्पो विनिवर्तेत" इत्यादि पूर्वोत्तरवाक्यै-र्विरोध इत्यर्थः ।

॥ इति जगन्मिथ्यात्ववादिपुराणार्थः ॥ ३९ ॥

## ॥ अथ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गः ॥ ४० ॥

नापि ज्ञाननिवर्त्यत्वान्यथानुपपत्तिस्तत्र मानम्। नहि ज्ञानमज्ञानस्यैव मिथ्याभूतस्यैव वा निवर्तकमिति नियमः। ज्ञानमात्रेण ज्ञानसमानविषयकाज्ञानानुपादानकस्य सत्यस्य तत्प्रागभावस्येश्वरज्ञानेन घटादेरुत्तरज्ञानेन पूर्वज्ञानस्य प्रत्यभिज्ञानादिना संस्कारस्य विषये दोषदर्शनेन रागादेः सुहृद्दर्शनेन दुःखादेर्गरुडध्यानादिना विषादेः अग्निचित्कपिलादिदर्शनेन दुरितादेः सेत्वादिदर्शनेन ब्रह्महत्यादेश्च निवृत्तेः। ननु सेत्वादिदर्शनमज्ञान-

---

### ॥ अथ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गः ॥ ४० ॥

ननु "तरति शोकमात्मवित् तथा विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुत्या जगतो ज्ञाननिवर्त्यत्वावेदनात्। सत्यस्य च ज्ञाननिवर्त्यत्वायोगात् तदन्यथानुपपत्त्या तस्य मिथ्यात्वं सेत्स्यतीत्याशङ्क्याह ॥ नापीति ॥ यद्यपि ज्ञानमज्ञानस्यैव निवर्तकमिति नियमेऽपि नाज्ञानस्य मिथ्यात्वसिद्धिः। मार्जारनिवृत्त्या मूषकस्येव तस्य सत्यत्वेऽपि ज्ञानान्निवृत्त्युपपत्तेः। न च ज्ञानान्निवृत्तौ शुक्तिरूप्यादिविषयज्ञानस्य मिथ्यात्वमावश्यकमिति वाच्यम्। शुक्तिरूप्यस्य स्वोपादानभूताज्ञाननिवृत्त्यैव निवृत्तत्वेन ज्ञाननिवर्त्यत्वासिद्धेः। (ज्ञाननिवर्त्यासिद्धिरिति पाठान्तरम्) तथापि नियम एवायमसिद्ध इत्याह ॥ नहीति ॥ ज्ञानसमानविषयेति ॥ निवर्तकज्ञानसमानविषयेत्यर्थः। एतच्च विशेषणं षष्ठ्यन्तपदनिर्दिष्टस्य सर्वस्य सत्यत्वोपपादनार्थम्। निवर्तकज्ञानसमानविषयत्वेन ज्ञानविशेषणं तु घटादावज्ञानानुपादानकत्वस्यासिद्धिवारणायेति द्रष्टव्यम्। तत्प्रागभावस्येति ॥ निवर्तकज्ञानप्रागभावस्येत्यर्थः। एतच्च प्रागभावादिनिवृत्तिः प्रतियोग्यतिरिक्तेति मतेन ॥ सुहृद्दर्शनेनेति ॥ सुहृद्दर्शनेन सुखं तेन च दुःखं निवर्तते इति शक्यते वक्तुम्, तथापि दुःखनिवृत्तेः सुखानन्तरभावित्वे मानाभावेन सुखोत्पत्तिसमसमये एव (समयमेव पा.) दुःखनिवृत्तिसम्भवेन व्यभिचार इति भावः ॥ गरुडध्यानादिनेति ॥ यद्यपि ध्यानं ज्ञानातिरिक्तं मानसक्रियेति पराभ्युपगमः तथापि अविच्छिन्नस्मृतिसन्तानस्यैव ध्यानत्वसम्भवेन ज्ञानातिरिक्तमानसक्रियाविशेषरूपत्वे मानाभाव इति भावः ॥ दुरितादेरिति ॥

अग्निचित् कपिला सत्रं (सत्री) राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत तान् सदा ॥

(पश्येत नित्यशः इति पाठान्तरम्) इति कपिलादिदर्शनस्य दुरितनिवर्तकत्वस्मरणादिति

वेदान्तजन्येनाप्यसंभावनाविपरीतभावनाप्रबलारब्धकर्मादिना प्रतिबद्धेन तेन तदनिवृत्तेः, अन्यथा वेदांताध्ययनश्रवणादिनियमस्यासंभावनादिनिवर्तकमननादेश्च वैयर्थ्यं स्यात् । प्रारब्धकर्मवशाज्जीवन्मुक्तस्य संसारानुवृत्तिश्च न स्यात् । किंच लोके अदृष्टत्वेऽपि विपक्षे बाधकाभावात् श्रुतिबलात्सत्यस्यापि बंधस्य निवृत्तिः किं न स्यात् । अन्यथा लोके अधिष्ठानतत्त्वे साक्षात्कृते कर्मवशादपि निरुपाधिकभ्रमानुवृत्तेर्जीवन्मुक्तिदशायां कर्मवशादनुवृत्तस्य जगतः सत्यतैव स्यात् । अपिच लोके कल्पितस्य नित्यनैमित्तिककर्मसाध्यांतःकरणशुद्ध्य-जन्यज्ञाननिवर्त्यत्वनियमात्तज्जन्यज्ञाननिवर्त्यस्य प्रपंचस्य तज्जन्यदेवतादर्शननिवर्त्यदुरितवत् सत्यतैव स्यात् । अपिच कल्पिते संस्कारनिरपेक्षज्ञाननिवर्त्यतायाः संस्कारसापेक्षगरुड-भ्रमरादिज्ञानसंताननिवर्त्ये विषकीटत्वादौ च सत्यताया दर्शनेन श्रवणादिजनितसंस्कार-सापेक्षज्ञाननिवर्त्यस्य प्रपंचस्य सत्यतैव स्यात् । किंच लोके निवृत्तिनिवर्त्ययोः समान-सत्ताकत्वनियमादज्ञाननिवृत्तिवदज्ञानमपि तात्त्विकं स्यात् । प्रातिभासिकस्य रूप्यस्य प्रध्वंसो

---

श्रवणफलम्, प्रमेयासंभावनानिवृत्तिस्तु मननफलमिति विवेकः । विपरीतभावनानिवृत्तिश्च निदि-ध्यासनफलमिति विवेकः ॥ तेनेति ॥ ब्रह्मज्ञानेनेत्यर्थः ॥ तदनिवृत्तेरिति ॥ नामरूपात्मक-प्रपञ्चानिवृत्तेरित्यर्थः ॥ अन्यथेति ॥ ब्रह्मज्ञानमात्रस्य तन्निवर्तकत्वे त्वसंभावनादेरप्रतिबन्धकत्वे-नेत्यर्थः । ननु शुक्तिरूप्यादेर्मिथ्याभूतस्यैव ज्ञानान्निवृत्तिदर्शनात् सत्यस्य ज्ञाननिवृत्तिकल्पने दृष्टहानिरदृष्टकल्पनाप्रसङ्गश्च इत्याशङ्कामनूद्य निराकरोति ॥ किंचेति ॥ अन्यथेति ॥ दर्शनानु-सारेणैव सर्वत्र कल्पने ब्रह्मतत्त्वसाक्षात्कारानन्तरं जीवन्मुक्तिदशायां संसारानुवृत्तिर्न स्यात् । तत्त्वसाक्षात्कारानन्तरं लोके सोपाधिकभ्रमस्थलेऽनुवृत्तेर्दृष्टत्वेऽपि अन्यत्र मिथ्याभूतस्य अनु-वृत्त्यदर्शनात्, कर्मवशादनुवृत्तेरन्यत्र दर्शनात् तथा च तद्दशायामनुवर्तमानस्य संसारस्य ब्रह्मवत् सत्यत्वमेव स्यादित्यर्थः । पूर्वमर्थापत्तेरन्यथाप्युपपत्तिः समर्थिता । संप्रति त्वन्यथैवोपपत्तिदोषमाह - अपिचेति ॥ तज्जन्येति ॥ तथाविधान्तःकरणशुद्धिजन्येत्यर्थः ॥ अपिच लोके कल्पित इति ॥ यद्यपि कल्पितस्य सर्पस्य सोऽयमिति संस्कारसापेक्षप्रत्यभिज्ञानिवर्त्यत्वमस्ति, तथापि प्रत्य-भिज्ञायाः तत्तांशस्मृतिरेव कारणम्, न संस्कार इति मतेनैवमुक्तमिति ध्येयम् । यद्वा [illegible] ॥ किंचेति ॥ ननु निवृत्तिनिवर्त्ययोः न समानसत्ताकत्वनियमः, प्रातिभासिकरजत-ध्वंसस्य व्यावहारिकत्वदर्शनादित्यत आह ॥ प्रातिभासिकस्येति ॥ अनादिभावरूपस्येति ॥

शुक्त्यज्ञानस्य रूप्यस्य वा ज्ञानकरणेन निवृत्तेरसंमतेः । न जानामीत्यज्ञानस्य ज्ञप्तिविरोधित्वेनैव प्रतीतेश्च । एवमज्ञानं नाम यदि ज्ञानविरोधिभावरूपं सत्यं न तर्हि विश्वमिथ्यात्वसिद्धिः । यदि तु मिथ्या तर्हि न व्याप्तिः । शुक्तिज्ञाननिवर्त्यस्याज्ञानस्य शुक्तिवत्सत्यत्वात् । नहि बाधज्ञाने रूप्यमिथ्यात्ववत् शुक्त्यज्ञानमिथ्यात्वं भाति । प्रत्युतैतावंतं कालं शुक्त्यज्ञानमासीदिति सत्यमेव । एवं यदि निवृत्तिर्नाम विनाशः तदा विरोधः । लोके ज्ञाननाश्ये अज्ञानादौ सत्यताया एव मिथ्याभूते रूप्यादौ च ज्ञाननाश्यत्वाभावस्यैवानुभवात् । नहि रूप्यं ज्ञानेन नष्टमिति बाधोऽस्ति । यदि तु निवृत्तिर्नाम प्रतिपन्नोपाधौ निषेधस्तदासिद्धिः । "क्षीयंते चाऽस्य कर्माणि तस्मिन् दृष्टे" इत्यादिश्रुत्या "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते(ऽर्जुन) तथा" इत्यादिस्मृत्या "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इत्यादिसूत्रैश्च बंधनाशस्यैवोक्तेः ।

अत्र यदुक्तं विवरणे ज्ञानेन सत्यस्य निवृत्तिश्चेत् किं विषयेण संबद्धस्य निवृत्तिः ।

---

चैतन्ये वृत्तिप्रतिबिम्बितचैतन्ये च व्यभिचार इति भावः । यतो ज्ञानमज्ञानस्यैव निवर्तकमित्यत्र ज्ञानशब्दः किं भावसाधनः उत करणसाधन इति विकल्प्य तत्राद्यं ज्ञानं नाम यदीत्यादिना निरस्य द्वितीयमनूद्य निराचष्टे ॥ ज्ञानकरणं चेदित्यादिना ॥ अनुभवविरोधादपि न तत्र ज्ञानशब्दः करणसाधन इत्याह ॥ न जानामीति ॥ न तर्हीति ॥ तथाच अज्ञानवदेव प्रपञ्चस्य सत्यत्वेऽपि ज्ञाननिवर्त्यत्वमुपपद्यत इति भावः ॥ न व्याप्तिरिति ॥ यद्ज्ञानं तन्मिथ्याभूताज्ञाननिवर्तकमिति न व्याप्तिरस्तीत्यर्थः ॥ सत्यमेवेति ॥ अत्र भातीत्यनुषज्यते । यतो ज्ञानमज्ञानस्यैव निवर्तकमित्यत्र निवृत्तिशब्दार्थं विकल्प्य दूषयति ॥ एवं यदीति ॥ विरोध इति ॥ ज्ञाननिवर्त्यत्व सत्यत्वयोरेव व्याप्तत्वादिति भावः ॥ रूप्यादौ चेति ॥ चकारः समुच्चयार्थः ॥ नहीति ॥ तथाच तत्र मिथ्याभूतरूप्यादेर्ज्ञाननाश्यत्वे प्रमाणं नेति सिध्यति ॥ ज्ञाननाश्यत्वाभावे किमायातमिति वाच्यम् । बाधानन्तरमुपनीतरूप्यादौ योग्यानुपलब्ध्या ज्ञाननाश्यत्वाभावानुभवसंभवादिति भावः ॥ तदासिद्धिरिति ॥ क्षीयन्ते चास्य कर्माणीत्यादिप्रमाणैः ज्ञाननाश्यत्वस्यैवावेदनात् । प्रतिपन्नोपाधौ निषिद्धत्वे प्रमाणाभावात् तद्रूपोपाध्यसिद्धेरित्यर्थः । अत्र पक्षे उपादानकर्मध्वंसस्य सर्वज्ञविज्ञानस्वाविरूपमिति ध्येयम् ॥ इत्यादिसूत्रैश्चेति ॥ अधिकरणस्थानि 'इतरस्याप्येवमसंश्लेषः पाते तु', 'अनारब्धकार्ये एव तु पूर्वे तदवधेः', 'अतोऽन्यापीत्येकेषामुभयोः' इतिसूत्राण्यत्र ग्राह्याणि ॥

किंवाश्रयेण यद्वोभाभ्याम्। नाद्यः। चित्रावयविनि नीलविशिष्टद्रव्यज्ञानेन तद्गतपीतिमादेरनिवृत्तेः। न द्वितीयः। आत्मज्ञानेन तद्गतधर्माधर्मादेरनिवृत्तेः। न तृतीयः। शरीरज्ञानेन देहात्मसंबंधानिवृत्तेरिति।

तत्र ब्रूमः। ज्ञानेनाज्ञानस्यारोपितस्य वा कस्य निवृत्तिः। न तावद्विषयेण संबन्धस्य, चैत्रनिष्ठमैत्रविषयकज्ञानेन मैत्रनिष्ठघटविषयकाज्ञानस्य इदमंशज्ञानेन तत्रारोपितरूप्यस्य चाप्यनिवृत्तेः। नाप्याश्रयेण संबंधस्य, चैत्रस्य घटज्ञानेन तदीयपटाज्ञानस्यात्मन्यारोपितदेहतादात्म्यस्य चानिवृत्तेः। नाप्युभाभ्यां संबंधस्य। चैत्रनिष्ठमैत्रविषयकज्ञानेन मैत्रनिष्ठचैत्रविषयकाज्ञानस्य आत्मनिष्ठदेहविषयकज्ञानेन देहात्मतादात्म्यादेश्चानिवृत्तेः।

ननु ज्ञानेन समानाश्रयविषयकस्याज्ञानस्य निवृत्तिर्निवृत्ते चाज्ञाने तत्कार्यं स्वयमेव निवर्तेत इति चेन्न। चैत्रस्य शंखे श्वेतत्वानुमित्या तदीयश्वेतत्वविषयकाज्ञानस्यारोपितपीतत्वस्य वा त्वन्मतेऽपि बिंबप्रतिबिंबयोरैक्यसाक्षात्कारेणैक्याज्ञानस्यारोपितभेदस्य वा अनिवृत्तेः। श्वेतत्वानुमित्यादिना तदज्ञाननिवृत्तौ अज्ञानकार्यस्यारोपितपीतत्वादेरनुवृत्तिर्न स्यात्। भ्रमस्य सोपाधिकत्वेऽपि उपादाननिवृत्तौ कार्यानुवृत्त्ययोगात्। किंच चैत्रस्येदानींतनेन

---

उभाभ्यामिति ॥ आश्रयविषयाभ्यामित्यर्थः। प्रतिबन्द्या समाधत्ते ॥ तत्र ब्रूम इति ॥

ननु भवेदियं प्रतिबन्दी यदि प्रपञ्चस्य साक्षात्ज्ञाननिवर्त्यत्वं ब्रूमः, किन्तु (किन्तु) ज्ञानस्यैव, तत्र च समानविषयकसमानाश्रयकमेव ज्ञानं निवर्तकमिति, नात्र विकल्पावकाशः। सामान्यपक्षे तु प्रपञ्चस्य साक्षात्ज्ञाननिवर्त्यत्वस्य प्राप्त्या, उक्तविकल्पावकाश इत्यभिप्रेत्य शङ्कते ॥ नन्विति ॥ समानविषयकसमानाश्रयज्ञानं निवर्तकमित्यत्र किं साक्षात्ज्ञानमात्रं विवक्षितं, किंवा साक्षात्परोक्षज्ञानमिति विकल्प्य आद्यं दूषयति ॥ चैत्रस्येति ॥ द्वितीयं प्रत्याह ॥ त्वन्मत इति ॥ ऐक्यसाक्षात्कारेणेति ॥ दर्पणे प्रतीयमानं मुखबिम्बैक्यसाक्षात्कारेणेत्यर्थः। ननु उभयत्रापि अज्ञाननिवृत्तिरस्त्येवेत्याशङ्क्याह ॥ श्वेतत्वेति ॥ यथाविषयेण उक्तसाक्षात्कारपरिग्रहः। पीतत्वादेरित्यादिपदादारोपितभेदपरिग्रहः। ननु साक्षाद्भ्रमस्य सोपाधिकत्वेन यावदुपाधितदनुवृत्तिरस्त्वित्याशङ्क्याह ॥ भ्रमस्येति ॥ भविष्यत्साक्षात्कारनिवर्त्येति ॥ इदानींतनसाक्षात्कारनिवर्त्यत्वप्रयोजकस्य स्वरूपस्य तत्रापि सत्त्वादिति भावः।

ननु यदि [illegible], तथाप्ये [illegible], संस्काराद्यज्ञान-

घटसाक्षात्कारेण भविष्यद्घटसाक्षात्कारनिवर्त्याविद्यानिवृत्त्यापत्त्या सकृत्साक्षात्कृतस्य घटादेः सदा आपरोक्ष्यं स्यात् ।

नन्वज्ञानस्यैकत्वात् जडानावरकत्वाच्च घटादिज्ञानमज्ञाननिवर्तकमेव नेतिचेत् तर्हि बंधस्य ज्ञाननिवर्त्यत्वेन दृष्टानुसारादज्ञानमयत्वमिति न स्यात् । ननु ज्ञाननिवर्त्यस्य भ्रांत्यादेर्ज्ञानविरोधित्वं दृष्टमितिचेत् तर्हि बंधस्य दृष्टानुसारात् ज्ञानविरोधित्वं कल्प्यताम् । न भावरूपाज्ञानत्वं नवा मिथ्यात्वम् । नहि भ्रांतिः स्वरूपेण मिथ्येत्यविद्यावादे वक्ष्यते । मिथ्याभूतस्य च रूप्यस्य ज्ञाननिवर्त्यत्वमसंमतमित्युक्तम् । अपिच चरमसाक्षात्कारेण जीवन्मुक्तिदशानुवृत्तस्याप्यविद्यालेशस्य वाऽज्ञानसंस्कारस्य वाऽऽरब्धकर्मादेर्वा निवृत्तिः किं न स्यात् । ज्ञानस्य प्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽप्यन्यानपेक्षत्वात् । तस्मात्त्वया-प्यज्ञानस्यारोपितस्य वा ज्ञानविरोधिन एव ज्ञानेन निवृत्तिर्विरोधश्च कार्योन्नेय इति वाच्यम् । सममेतन्ममापि । वस्तुतस्त्वीश्वरप्रसादादेव बंधनिवृत्तिः । "यस्य प्रसादात्परमार्तिरूपा-

---

स्वीकृत्वात् । ज्ञानस्य घटादिविषयत्वेऽपि अज्ञानस्य तदविषयत्वाच्च । घटादेस्तदीयपक्षेऽपि शक्तिविषयत्वेऽपि जडत्वेनाप्रसक्तप्रकाशतया तदीयावरणशक्त्यविषयत्वादित्यभिप्रेत्य शङ्कते ॥ नन्वज्ञानस्येति ॥ ननु ज्ञानेनाज्ञानस्यानिवृत्तावपि तत्कार्यस्य भ्रमस्य ज्ञाननिवर्त्यत्वेन तद्विरोधित्वदर्शनात् तद्दृष्टान्तेन बन्धस्यापि ज्ञाननिवर्त्यत्वेन विरोधित्वेऽज्ञानमयत्वं स्यादेवेति शङ्कते ॥ तर्हीति ॥ तथाच दृष्टमेव स्वीकार्यमिति एवं ज्ञानविरोधित्वमेव स्वीक्रियताम्, नतु अज्ञानमयत्वादिकम्, असंप्रतिपत्तेरिति भावः । ननु ज्ञाननिवर्त्यस्य भ्रमस्य मिथ्यात्वदर्शनात् बन्धस्य स्यादेव मिथ्यात्वमित्याशङ्क्य तत्र भ्रमशब्देन भावव्युत्पत्त्या ज्ञानं विवक्षितं उत कर्मव्युत्पत्त्या तद्विषय इति विकल्प्याद्ये दोषमाह ॥ नहीति ॥ द्वितीयं आह ॥ मिथ्याभूतस्येति ॥ ज्ञानमज्ञानस्यैव मिथ्याभूतस्यैव वा निवर्तकमिति नियमे प्रतिकूलतर्कपराहतिमाह ॥ अपिचेति ॥ ननु ज्ञानेऽपि कुतश्चित् प्रतिबन्धादनुवृत्तिर्भविष्यतीत्यत आह ॥ ज्ञानस्येति ॥ ज्ञानविरोधिन एवेति ॥ तथाच ज्ञाननिवर्त्यतायां नाज्ञानत्वं वारोपितत्वं वा तंत्रमिति भावः । एतदिति ॥ ज्ञानेन विरोधिन एव निवृत्तिरित्येतदित्यर्थः । इयता प्रबन्धेन बन्धस्य ज्ञाननिवर्त्यत्वेऽपि न मिथ्यात्वसिद्धिरित्युक्तम् । संप्रति ज्ञानस्य तन्निवर्तकत्वमेव नेत्याह ॥ वस्तुतस्त्विति ॥ इत्यादिश्रुतेरित्यादिपदात् यमेवैष वृणुते तेन लभ्यः, तत्प्रीणनान्मोक्षमाप्नोति

दस्मात्संसारान्मुच्यते नापरेण" इत्यादिश्रुतेः "मत्प्रसादात्तरिष्यसि" इत्यादिस्मृतेश्च । ज्ञानं तु प्रसादहेतुः । तदुक्तम् । "यथा दृष्टया प्रसन्नः सम्राजा बंधापनोदकृत् । एवं दृष्टः स भगवान्कुर्याद्बंधविभेदनम्" इति । "दृष्ट्वैव तं मुच्यते" इत्यवधारणमयोगव्यवच्छेदपरम् । मोक्षहेतुप्रसादेऽन्ययोगव्यवच्छेदपरं वा । उक्तं हि विष्णुपुराणे । "एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः । प्रसीदति ततस्तस्मिन्प्रसन्ने क्लेशसंक्षयः" इति ।

॥ इति ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गः ॥ ४० ॥

---

सर्वे इत्यादिश्रुतिपरिग्रहः । नन्वेवं ब्रह्मविदाप्नोति परमित्यादिश्रुत्या ज्ञानस्य मोक्षसाधनत्वोक्तिः कथमित्यत आह ॥ ज्ञानं त्विति ॥ तथाच ज्ञानस्य तस्य प्रसादद्वारा हेतुत्वेऽपि उदाहृतश्रुती तयोश्चोपपद्यत इति भावः । नन्वेवं दृष्ट्वैव तं मुच्यत इत्यवधारणविरोध इत्यत आह ॥ दृष्ट्वैवेति ॥ अन्यथा प्रसादस्य साक्षान्मोक्षहेतुत्वाभावे उदाहृतानेकश्रुतिस्मृतिविरोध इतिभावः ॥ अन्ययोगव्यवच्छेदपरं वेति ॥ उदाहृतश्रुत्यनुसारेण दृष्ट्वैव प्रसादः तेन मुच्यत इतिश्रुत्यर्थे स्थिते एवकारस्तत्रान्ययोगव्यवच्छेदपरः सम्पद्यत इत्यर्थः । उपबृंहणादप्ययमेव श्रुत्यर्थोऽङ्गीकार्य इत्याह ॥ उक्तं हीति ॥

॥ इति ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गः ॥ ४० ॥

## ॥ अथ सत्यस्य सत्यइत्यादिश्रुतार्थापत्तिभङ्गः ॥ ४१ ॥

नापि "प्राणा वै सत्यं तेषामेष सत्यः" इति श्रुतार्थापत्तिस्तत्र मानम् । राजराजः, देवदेवः, मन्मथमन्मथः, "पवित्राणां पवित्रं यो मंगलानां च मंगलम्" इत्यादौ राजत्वदेवत्वादीनामिव प्राणादिसत्यत्वस्य ज्ञानाबाध्यत्वे सत्येवापकृष्टत्वमात्रेण तदुपपत्तेः । नापि "सत्यं ज्ञानम्" इत्यादौ ब्रह्मणः सत्यत्वलक्षणोक्त्यन्यथानुपपत्तिर्मानम् । छांदोग्ये (८-३-७) "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तान्येतानि त्रीण्यक्षराणि सत्-ति-यमिति तद्यत्सत्तदमृतम्, अथ यत्ति तन्मर्त्यम्, अथ यद्यं तेनोभे यच्छति" इति मुक्तामुक्तनियंतृत्वं सत्यत्वमित्युक्तेः ।

> "सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन्प्रतिष्ठितम् ।
> सत्तासत्ते च गोविंदस्तस्मात्सत्यः सतां मतः" ॥

---

### ॥ अथ सत्यस्य सत्यइत्यादिश्रुतार्थापत्तिभङ्गः ॥ ४१ ॥

ननु सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य इत्येतच्छ्रुत्यर्थस्य ब्रह्मणः सत्यभूतप्राणानां मध्ये सत्यत्वोक्तेः ततः तदपेक्षया अधिकसत्यत्वप्रतीतेः, प्राणादिसत्यत्वे न्यूनत्वस्य च ब्रह्मज्ञानबाध्यत्वलक्षणव्यावहारिकत्वादन्यस्याभावात् श्रौतार्थान्यथानुपपत्त्या प्राणोपलक्षितब्रह्मेतरसर्वप्रपञ्चमिथ्यात्वसिद्धिरविकलेत्याशङ्क्य निराकरोति ॥ नापीति ॥ अपकृष्टत्वमात्रेणेति ॥ अपकर्षसामानाधिकरण्यमात्रेणेत्यर्थः । तेन सत्त्वमबाध्यत्वं बाधाभावः । तदाभावे प्रकर्षाप्रकर्षौ संभवत इति शङ्का परास्ता ॥ तदुपपत्तेरिति ॥ अन्यथा राजराज इत्यादौ प्रथमराजादिशब्दनिर्दिष्टराजत्वादीनां प्रातिभासिकत्वरूपन्यूनत्वप्रसङ्ग इति भावः ॥ सत्यत्वलक्षणेति ॥ सत्यत्वस्य ब्रह्मान्यधर्मत्वं नेतिव्याप्त्या तस्य लक्षणत्वमेवानुपपन्नमिति भावः । सत्यज्ञानादिलक्षणवाक्योक्तं सत्यत्वं न अबाध्यत्वं, येन तल्लक्षणत्वान्यथानुपपत्त्या मिथ्यात्वं सिध्येत्, किन्तु मुक्तामुक्तनियामकत्वं, सत्यज्ञानियामकत्वं वा, श्रुत्यन्तरानुसारात्, भागवतवाक्यानुसाराच्चेत्याह ॥ तस्य-इवेति ॥ बृहदारण्यक इति क्वचित्पाठो लेखकभ्रममूलम्, तस्य इत्यादेस्तद्वाक्यस्य तत्रादर्शनात् । छान्दोग्य एव दर्शनादिति ध्येयम् ।

ननु सत्यशब्दस्य अबाध्यत्वे रूढत्वात्, श्रौतसत्यपदेन तद्ग्रहणमेव युक्तमित्याशंक्य

इति भारतोक्तेश्च । नच रूढ्यर्थं श्रौतयोगत्यागः "यदाज्रिमीयुस्तदाज्यानामाज्यत्वम्" इत्यादाविव निरवकाशश्रौतयोगबाधायोगात् । शाखस्था वेतिन्यायेनासतिबाधके वेदे वैदिकार्थस्यैव प्राबल्याच्च । उक्तं च वार्तिके ।

"गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्" ॥ इति

किंच "विज्ञानमानंदं ब्रह्म" इत्यत्र "सैषानंदस्य" इत्यादिश्रुत्युक्तमानुषाद्यानंदव्यावृत्तापरिच्छिन्नानंदत्ववदिहापि अन्यव्यावृत्तमनन्याधीनसत्यत्वं लक्षणमस्तु । नापि "विमुक्तश्च विमुच्यते" इति श्रुतार्थापत्तिर्मानं । मज्जनस्यासत्संगाद्दौर्जन्यस्य ताम्रद्रवत्वादिवत् सत्यत्वेऽपि "मज्जनः मज्जनो जात" इतिवत् संसारस्य सत्यत्वेऽपि अस्वाभाविकत्वेन तदुपपत्तेः । भारते–

---

निराकरोति ॥ नचेति ॥ यदाज्रिमीयुरिति ॥ तथाच योगमात्रस्य रूढ्यपेक्षया दुर्बलत्वेऽपि, अनन्यथासिद्धश्रौतयोगस्य रूढ्यपेक्षया प्रबलतया श्रौतयौगिकार्थ एव ग्राह्यः । अन्यथा पङ्कजनाज्यानीत्यादावपि प्रसिद्धाज्यादिग्रहणमेव स्यादिति भावः । सत्यत्वस्याबाध्यत्वरूपप्रसिद्धार्थपरत्वेऽपि नास्य लक्षणत्वानुपपत्तिः । नचातिप्रसक्तस्य कथं लक्षणत्वमिति वाच्यम् । तावन्मात्रस्यातिप्रसक्तत्वेऽपि निरतिशयानन्दत्ववत्, अनन्याधीनसत्त्वस्य अनतिप्रसक्तत्वादित्याह ॥ किञ्चेति ॥ ननु विमुक्तश्च विमुच्यत इति श्रुत्या संसारदशायामपि विमुक्तत्वसंवेदनात्, तस्य च संसारस्य कल्पितत्वं विना (अनुपपत्त्या मिथ्यात्वसिद्धिरित्याह. पा.) मिथ्यात्वानुपपत्तिरित्याशंक्याह ॥ नापीति ॥ अर्थापत्तेरन्यथोपपत्तिमाह ॥ मज्जनस्येति ॥ संसारस्य ताम्रद्रवत्वादिवत् सत्यत्वेऽप्यस्वाभाविकत्वेन 'मज्जनः मज्जनो जातः' इत्यविगीतलौकिकव्यवहारवत् विमुक्तश्च विमुच्यत इति श्रौतव्यवहारोपपत्तेर्न तद्बलेन मिथ्यात्वसिद्धिः । नच संसारस्य सत्यत्वे निवृत्त्यभावप्रसङ्गः, ताम्रद्रवत्वादिवदेव तस्य निवृत्तेरप्युपपत्तेरिति भावः । भारतसंवादेनापि उक्तमर्थं द्रढयति ॥ भारत इति ॥ उभे मृत्य्वमृतत्वे, मोहान् वा प्रवृत्तिः मन्त्यः सत्यतात् मृत्युमेवमीत्यर्थः । कार्यकारणयोरभेदोपचारात्तयोः प्रमादत्वोक्तिः । प्रमादं मोहम्, अप्रमादम्मोहापायात् । ननु असंगो ह्ययं पुरुष इत्यादिश्रुत्या आत्मनः संगराहित्यमुच्यमानं प्रत्यक्षादिसिद्धदेहादिसंबन्धस्य मिथ्यात्वं विनानुपपद्यमानं तत्कल्पकमित्याशंक्य तथापि अन्यथासिद्धि-

"उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः संमतोऽयं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादादमृतत्वं ब्रवीमि"

इति संसारः सत्योऽप्यज्ञानाधीन इत्युक्तेः । एवमन्यदपि योज्यमिति सत्यमेव जगदिति ॥

॥ इति सत्यस्य सत्यइत्यादिश्रुतार्थापत्तिभङ्गः ॥ ४१ ॥

---

मतिदिशति ॥ एवमिति ॥ योज्यमिति ॥ तद्वाक्यमपि परमात्मनः पुण्यपापप्रयुक्तलेपाभाव-प्रतिपादनपरतया योज्यमित्यर्थः । परमप्रकृतमुपसंहरति ॥ इति सत्यमेव जगदिति ॥ इति उक्तप्रकारेणेत्यर्थः ।

॥ इति सत्यस्य सत्यइत्यादिश्रुतार्थापत्तिभङ्गः ॥ ४१ ॥

तूक्तश्रुत्यादिकमपि स्वाप्नश्रुत्यादितुल्यमिति न पर्यनुयोज्यम्, तर्ह्यद्वैतश्रुतितन्मीमांसादिकमपि तथेति न तेनाद्वैतसिद्धिः । दृष्टिसृष्टिपक्षे घटादेः ज्ञानात्पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तेश्च । शुक्तीदमंशस्यापि रूप्यवदिदं रूप्यमितिज्ञानात्प्रागसत्त्वेन संप्रयोगादिहेतुत्रयजन्यत्वरूपस्याध्यासतटस्थलक्षणस्य, सत्यस्य मिथ्यावस्तुसंभेदावभासत्वरूपस्वरूपलक्षणस्य चायोगाच्च । इदं रूप्यमितिज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोधाच्च । इदं रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तेश्च, रूप्यादिबाधस्यापि दृष्टिसृष्टित्वेन तेन रूप्यादेर्मिथ्यात्वासिद्धेश्च, सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रत्यहं प्रतिप्रलयं च मुक्तस्य पुनरावृत्त्यापाताच्च, सुप्तं प्रति

---

कार्यस्य प्रतिनियतकारणजन्यत्वासंभवादिति भावः ।

ननु यथा स्वप्ने ज्योतिष्टोमादिवाक्यात् साध्यसाधनभावं जानतः स्वर्गाद्यर्थज्योतिष्टोमादौ प्रवृत्तिः तेन च फलं, यथा वा तृप्त्याद्यर्थं भोजनादौ प्रवृत्तिः, तेन च तृप्त्यादिफलं, तथा जाग्रत्पदार्थस्य प्रतीतिमात्रशरीरत्वेऽपि नोक्तव्यवस्थानुपपत्तिरित्याशङ्कते ॥ यदि त्विति ॥ तर्हीति ॥ तथाच स्वप्नप्रतिबन्द्या जाग्रद्दशायां व्यवस्थासमर्थनं त्वया न कर्तव्यमिति भावः ॥ दृष्टिसृष्टिपक्ष इति ॥ तथाच तत्तदिन्द्रियसन्निकर्षजन्यत्वादिरूपनियामकाभावेन जायमानज्ञानस्य सर्वविषयत्वापत्त्या पटज्ञाने पट एव भासते, न तु घटादिरिति प्रतिकर्मव्यवस्थानुपपत्तेरित्यर्थः । किञ्च दृष्टिसृष्टिपक्षे शुक्तिरूप्यादेरपि अध्यस्तत्वं न सिध्येत्, तल्लक्षणरहितत्वादित्याह ॥ शुक्तीति ॥ तथाच न तद्दृष्टान्तेन विश्वमिथ्यात्वसाधनं युक्तमिति भावः ॥ मिथ्यावस्तुसंभेदेति ॥ मिथ्यावस्त्वमेवेत्यर्थः ॥ इदंरूप्यमितिज्ञानकाल इति ॥ आवरकस्याज्ञानस्य आव्रियमाणेन व्याप्ततया आव्रियमाणस्य शुक्तित्वादेरविद्यमानत्वात्, तदज्ञानस्यासंभवेन शुक्तिरूप्यं तदज्ञानकार्यमिति परस्वीकृतप्रक्रियाद्यनुपपत्तिरित्यर्थः ॥ इदंरूप्यमिति ॥ प्रतिदृष्टि विषयभेदस्वीकारेण नेदं रजतमिति बाध(क)ज्ञानेन रजतदृष्टिविषये तदभावानवगाहनेन तयोर्बाध्यबाधकभावायोगादित्यर्थः ॥ रूप्यादिबाधकस्यापीति ॥ रूप्यतदभावयोरपि अस्मिन् पक्षे तुल्यसत्त्वेन तज्ज्ञानयोर्बाध्यबाधकभावायोगेन न तेन रूप्यमिथ्यात्वसिद्धिरिति भावः । प्रलयादावित्यादिपदान्मूर्छावस्थादिपरिग्रहः ॥ मुक्तस्येति ॥ त्वया ब्रह्मांशस्यैव मुक्तिरूपत्वाङ्गीकारेण सुप्तस्य पुनरुद्बोधाङ्गीकारे मुक्तस्यैव पुनरावृत्तिरित्यङ्गीकृतं स्यात् । सुप्तिमुक्त्योरविशेषादिति भावः ।

किञ्च दृष्टिसृष्टिपक्षे सुप्तस्य पुनरुद्बोधो न स्यात् । उद्बोधकाभावादित्याह ॥ सुप्तं प्रतीति ॥ सुप्तस्य संस्कारगोचरदृष्ट्यभावेन तन्मात्रशरीरकसंस्कारस्यैव तदा असम्भवादिति भावः ॥

संस्कारादेरप्यभावेन तस्य पुनरुक्तदोषायोगाच्च । मोक्षस्यापि दृगन्यत्वेन स्वाप्नमोक्षवद्दृष्टिसृष्टिमात्रत्वापाताच्च, चिन्मात्रस्यैव घटादिदृष्टित्वे तस्य सदा प्रतीत्यापत्त्या विशिष्टस्य तत्त्वे वाच्ये तस्यापि विशिष्टस्य दृष्टिसृष्टित्वेऽनवस्थादिप्रसंगाच्च । उक्तन्यायेन दोषाज्ञानद्रष्टृदेहेंद्रियादीनामभावे भ्रांत्ययोगेन तेषामपि दृष्टिसृष्टित्वेऽनवस्थापाताच्च, घटादेर्दृष्टिसृष्टिरित्यस्यापि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्ट्यापाताच्च, प्रत्यभिज्ञाविरोधाच्च । दीपादौ परिमाणादिभेदकस्येवेह बाधकस्याभावात्, तदभावेऽपि भ्रांतित्वे च घटादेरप्येकस्मिन्नपि क्षणे भेदस्यात्मनोऽपि प्रतिक्षणं भेदस्य च प्रसंगात्, सोऽयं देवदत्त इत्यादिदृष्टांतेन तत्त्वमस्यादौ जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोगाच्च । अत्र भेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य

---

मोक्षस्यापीति ॥ अविद्यानिवृत्तिश्चैतन्यमात्ररूपा नेतिमतेनेदं बोध्यम् । तथाच पराभिमतमोक्षस्य नित्यपुरुषार्थत्वाभावप्रसङ्ग इति भावः । ननु चिन्मात्रस्य दृष्टित्वेन दृष्टिसृष्टिपक्षेऽपि मोक्षस्य नित्यपुरुषार्थत्वमविकलमित्याशङ्क्याह ॥ चिन्मात्रस्यैवेति ॥ तथाच विनिगमनाविरहेण मोक्षस्येव घटादेरपि चिन्मात्ररूपदृष्टिसृष्टित्वापत्त्या तस्यापि सदा प्रतीत्यापत्त्या विशिष्टस्योपहितस्य वा चैतन्यस्य दृष्टित्वे वाच्ये विशेषणस्योपाधेर्वा दृष्टिवत् सदातनत्वे उक्तदोषानिस्तारात् । तस्यापि दृष्टिसृष्टित्वे आवश्यके तस्याप्येवं तस्याप्येवमित्यनवस्थाप्रसङ्ग इत्यर्थः । एतच्चोपलक्षणम् । चिन्मात्रस्यैव मोक्षदृष्टित्वे इदानीमपि संसारो न स्यादित्यपि दूषणं बोध्यम् । फलमुखीमनवस्थामुक्त्वा कारणमुखीमनवस्थामाह ॥ उक्तन्यायेनेति ॥ दृश्याभावकाले दृश्यं नेत्युक्तन्यायेनेत्यर्थः । भ्रान्त्ययोगेनेत्यस्यानन्तरं तदर्थमिति शेषः । दृश्ययोगेनेति वक्तव्ये भ्रान्त्ययोगेनेत्युक्तिः दृष्टिमात्रस्य भ्रान्तित्वज्ञापनार्थमिति द्रष्टव्यम् ॥ इत्यस्यापीति ॥ घटादिर्दृष्टिसृष्टिः इति वाक्यार्थः किं दृष्टिसृष्टः उत न । न द्वितीयः । तुल्यन्यायेन घटादेरपि तथात्वापत्तेः । न प्रथमः । घटादिर्दृष्टिसृष्टिरिति दृष्टेः भ्रान्तित्वेन घटादेः दृष्टिसृष्टत्वानापत्तेरित्यभिप्रेत्याह ॥ घटादेरिति ॥ ननु सोऽयं दीप इत्यादिप्रत्यभिज्ञावत् सोऽयं घट इत्यादिप्रत्यभिज्ञा भ्रान्तिः किं न स्यादित्यत आह ॥ दीपादाविति ॥ जहदजहदिति ॥ तत्त्वमसीति वाक्ये विशिष्टवाचकयोः तत्त्वंपदयोः लक्षणया (लक्षणायाः इति पा.) विशेष्यभूतचिन्मात्रोपस्थापकत्वेन जहत्त्वं सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धविशेषणांशत्यागेन अजहत्त्वं चेति बोध्यम् । किञ्च विश्वस्य दृष्टिसृष्टित्वे तत्त्वमसीत्यत्र ऐक्यमेव न स्यात्, मुख्यार्थभेदबाधकस्य नाहमीश्वर इत्यादिभेदप्रत्यक्षस्य भ्रमत्वेन बाधकत्वायोगात् ॥ भ्रांतीति ॥ दृष्टिसृष्टिपक्ष इत्यर्थः । किञ्च घटादौ भिन्नौ, सोऽयं घटः इत्यादिप्रतीतीनां

बाधकत्वायोगाच्च । "ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगत्" इत्यादिश्रुतिविरोधाच्च, भिन्नत्वेन प्रतीतस्य घटपटादेरभेदः अभिन्नत्वेन प्रतीतस्य घटस्य प्रतिक्षणं भेद इति दृष्टहानादृष्टकल्पनापाताच्च । तस्मात्

"निर्बाधप्रत्यभिज्ञानाद्ध्रुवं विश्वमितिश्रुतेः ।
स्वक्रियादिविरोधाच्च दृष्टिसृष्टिर्न युज्यते" ॥

"अस्मादात्मनःसर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि व्युच्चरंति" इति श्रुतावपि पूर्ववाक्ये "यत्रैष एतत्सुप्तोऽभूत्" इतिसुप्ताधारत्वेनोक्तस्य ब्रह्मणः सर्वस्रष्टृतोच्यते । न तु सुप्तोत्थिताज्जीवात्प्राणादिसृष्टिः, येनेयं दृष्टिसृष्टौ मानं स्यात् । अन्यथा वाक्यशेषे "नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततम्" इत्यादिना सुषुप्तौ नाड्याद्युक्तिः, "यथोर्णनाभिः" "यथाग्नेः क्षुद्रा विष्फुलिंगाः" इत्याद्युक्तिः, अत्रापि वाक्ये "सर्वे लोका" इत्याद्युक्तिश्चायुक्ता स्यात्; नहि दृष्टिसृष्टिपक्षे सुषुप्तौ नाड्यादिकमूर्णनाभ्यग्न्यादितः तंतुविष्फुलिंगजन्म वा सुप्तोत्थितस्य सर्वलोकादिदृष्टिर्वास्ति । न चोर्णनाभितंत्वग्निविष्फुलिंगदृष्टांतो दृष्टिसृष्ट्यनुगुण इति न कल्पितं जगदिति ।

॥ इति दृष्टिसृष्टिभङ्गः ॥ ४२ ॥

---

दृष्टिसृष्टिपक्षे भ्रमत्वेन घटपटयोः क्लृप्तभेदपरित्यागः परस्परविरोधे तु (टि-पा.) न प्रकारान्तर-स्थितिः इति न्यायेनाक्लृप्ताभेदकल्पनं तथा एकस्मिन्नेव घटे क्लृप्ताभेदपरित्यागः, अक्लृप्तभेदकल्पनं चापद्यत इत्याह ॥ भिन्नत्वेनेति ॥ उक्तमर्थमुपसंहरति ॥ तस्मादिति ॥ नन्वस्मादात्मन-स्सर्वे प्राणा इति श्रुतौ सुप्तोत्थितात् जीवात् प्राणादिसृष्टिप्रतीतेः सैव श्रुतिर्दृष्टिसृष्टौ मान-मित्याशंक्याह ॥ अस्मादिति ॥ अन्यथेति ॥ यत्रैवैष एतच्छेत इत्युक्तिमत्पूर्ववाक्ये प्रति-पन्नसुप्तोत्थितजीवादेः सृष्ट्यभ्युपगमे इत्यर्थः । वाक्यशेष इति ॥ पूर्ववाक्य इत्यर्थः ॥ नहीति ॥ सुप्तिकाले तत्तद्विषयकदृष्टेरेवाभावेनाप्राणादिसत्त्वस्यैव असम्भवादितिभावः । किञ्च दृष्टिसृष्टिपक्षे ऊर्णनाभ्यादिदृष्टान्तानानुगुण्यमित्याह ॥ नचेति ॥ सर्वस्यापि दृष्टिकल्पितत्वेन ऊर्णनाभ्यादि-जन्यत्वाभावात् ।

॥ इति दृष्टिसृष्टिभङ्गः ॥ ४२ ॥

## ॥ अथ एकजीवाज्ञानकल्पितत्वभङ्गः ॥ ४२ ॥

यच्चेदमुच्यते "एकमेव च शरीरं सजीवमन्यानि तु स्वाप्नशरीरवन्निर्जीवानि कृत्स्नं च जगत्तदज्ञानकल्पितम्, बद्धमुक्तव्यवस्था तु नास्त्येव, जीवस्यैकत्वात्, गुरुशिष्यादिव्यवस्था तु यावदविद्यं स्वप्नवदुक्ता, निवृत्तायां तु तस्यां नास्त्येव" इति । तन्न । तस्मिन् एकस्मिन् जीवे सुप्ते जगदप्रतीत्यापातात्, दृष्टिसृष्टिपक्षे तस्य सुषुप्तावुद्बोधकस्य संस्कारादेरप्यभावेन पुनरुद्बोधायोगाच्च । मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगेन तवैव कल्पकत्वे वाच्येऽस्मदादिबोधार्थं तव शब्दप्रयोगरूपस्वक्रियाविरोधाच्च । परमार्थतो मया नोच्यत इति चेन्न । व्यवहारत उक्तावपि मुक्तोऽहमित्यादाविव स्वक्रियाविरोधात् । न च स्वाप्नपुरुषवत्त्वत्कल्पितत्वादहं न पर्यनुयोज्य इति वाच्यम् । अपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारापातात्, सजीवशरीर इवान्यत्रापि प्रतिशरीरमहं दुःखी अहं संसारी अह-

---

॥ अथ एकजीवाज्ञानकल्पितत्वभङ्गः ॥ ४२ ॥

ननु तथापि स्यादेव कृत्स्नस्य जगतः कल्पितत्वं, तथाहि जीवस्तावदेकः, जीवत्वोपाधेरज्ञानस्य एकत्वात्, बिम्बचैतन्यस्याप्येकत्वाच्च 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इतिश्रुतौ जीवस्यैकत्वोक्तेश्च । तथा च तद्भिन्नतया उपलभ्यमानं सर्वं तदज्ञानकल्पितं, यथा स्वप्नद्रष्टुरेकत्वेन तद्भिन्नत्वेनोपलभ्यमानतुरगादिकं तदज्ञानकल्पितमित्येकजीववादिमतं दूषयितुमनुवदति ॥ यच्चेदमुच्यत इति ॥ बद्धमुक्तव्यवस्थेति ॥ वसिष्ठादिः मुक्तः इतरस्तु बद्धः इति व्यवस्थेत्यर्थः, ननु बद्धस्यैव मुक्तिरिति व्यवस्थेति ॥ एकजीववादेऽपि तदभ्युपगमादिति ॥ किं एकजीववादिनापि दृष्टिसृष्टिर्नोपेयते किं वा उपेयत इति विकल्प्य तत्राद्य आह ॥ तस्मिन्निति ॥ द्वितीयं प्रत्याह (द्वितीये आह पा.) ॥ दृष्टिसृष्टिपक्ष इति ॥ अस्मदादीति ॥ त्वद्व्यतिरिक्तस्य सर्वस्यापि त्वत्कल्पितत्वेन बोध्यत्वाभावादिति भावः ॥ स्वक्रियाविरोधादिति ॥ स्वक्रियाविरोधादित्यादावित्यर्थः । अन्यथा मुक्तोऽहमित्यादावपि परमार्थतो नोच्यत इति वक्तव्यत्वेन स्वक्रियाविरोधो न स्यादिति भावः ।

ननु त्वमेव कल्पकः, तथैव मोक्षार्थं प्रवृत्त्यनुपपत्तिः । मम नाट्यप्रवृत्तिविशिष्टस्यापि त्वत्कल्पितत्वात् । तथा च न मम मते स्वक्रियाविरोधरूपपर्यनुयोगः इत्याशङ्क्य

मस्त्वाप्तमिति संसाराद्याधारजीवात्मानुभवाच । न चेयं धीर्भ्रांतित्वादेव निर्जीवेष्वेव शरीरेषु युक्ता, तेषामयं दुःखीत्यादिभ्रांतिविषयत्वेऽप्यहं दुःखीत्यादिभ्रांत्याधारत्वायोगात् । न हि खाप्नादिशरीराणि तथा भ्राम्यंति । नचेयं धीः सर्वदेहानुगतचिन्मात्रस्यैव न तु जीवस्येतियुक्तम् । प्रतिबिंबरूपे जीव एव तदौचित्यात् ।

ननु जीवो न ब्रह्मप्रतिबिंबादिः किंतु कौंतेयस्यैव राधेयत्ववत् ब्रह्मण एव जीवत्वं तच्च सर्वदेहगतमितिचेत्, कथं तर्हि शरीरांतराणां निर्जीवत्वम् । वक्ष्यते च कल्पितेनापि संसारेण कदाप्यस्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुतिविरोधः । नापीयं धीः कल्पकजीवकल्पित-जीवांतरस्य, कल्पितस्य भ्रांत्याधारत्वायोगात् । अन्यथा अज्ञानभ्रांतिसम्यग्ज्ञानमोक्षाणा-मैकाधिकरण्यनियमेन बहुजीववादः स्यात् । कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वा-योगाच । अप्रत्यक्त्वेन भासमाने च प्रत्यक्त्वारोपायोगात् । अन्यस्य च प्रत्यक्त्वेनानु-

---

निराकरोति ॥ नचेति ॥ ननु कथाधिकार (तथाधिकार इति पाठान्तरम्) विशिष्टत्वेनापि त्वत्कल्पितत्वात् नाहं पर्यनुयोज्य इत्यत आह ॥ किञ्चेति ॥ प्रतिबिम्बादिरिति ॥ चिन्मात्रस्य असंगैकस्वभावत्वेन तस्य तादृशभ्रमासम्भवादिति भावः ॥ किन्त्विति ॥ यथा कुन्तीतनयस्यैव कर्णस्य राधायास्तनयत्वं तद्वदित्यर्थः ॥ तच्चेति ॥ ब्रह्म चेत्यर्थः । तथाच न प्रतिशरीरं अहं सुखीत्याद्यनुसंधानानुपपत्तिरिति भावः । किञ्च न ब्रह्मण एव जीवत्वांगी-कारो युक्तः, निरनिष्टो निरवद्यः इति, शोकं मोहमत्येतीति, नित्यमुक्तः इत्यादिश्रुतिविरोधात् इत्याह ॥ वक्ष्यते चेति ॥ अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्ग इति शेषः । यद्यपि संसारस्य कल्पितत्वेन वस्तुतः संसाराभावात्, न नित्यमुक्त(नित्यमुक्तत्व पा.)श्रुतिविरोधः । तथापि त्वन्मते अकल्पितसंसारस्याप्रसिद्ध्या कल्पितसंसारेणैव संसारित्वे वाच्ये नित्यमुक्तत्व-श्रुतिविरोधनाशवश्यमिति ध्येयम ॥ इयं धीरिति ॥ अहं दुःखीत्यादिधीरित्यर्थः । तथा च न प्रतिशरीरं दुःखाद्यनुसंधानानुपपत्तिरिति भावः ॥ कल्पितस्येति ॥ कल्पितस्य जडत्वादिति भावः ॥ ऐकाधिकरण्यनियमेनेति ॥ अन्यथा कृतहानादिप्रसंग इति भावः ॥ कल्पितस्येति ॥ किञ्च प्रतिशरीरमहमित्यनुसंधानृत्वमस्तीत्यविवादम्, तच्च किं कल्पकस्य वा कल्पित-जीवान्तरस्य वा इति विकल्प्य आद्यं दूषयति ॥ कल्पितस्येति ॥ कल्पकजीवस्य कल्पित-जीवविषयकाहमित्यनुसंधानवस्वरूपप्रत्यक्त्वायोगादित्यर्थः ॥ ननु कल्पितजीवस्य कल्पकजीवं

भवितुश्चेतनत्वाभावात् । तथानुभवापलापे च तस्याप्येकस्य जीवत्वाद्वैतश्रुतेश्चासिद्धेः । ननु प्रोक्ता दोषा एकशरीरैकजीववादे, नत्वनेकशरीरैकजीववादे, तस्य सर्वत्रापि सत्त्वादिति चेन्न । तथात्वेऽननुसंधाने तंत्रस्य व्यावहारिकजीवभेदस्याप्यभावेन योगिनोऽनेकशरीरेष्विव तस्य सर्वशरीरगतदुःखाद्यनुसंधानापातात् । तस्य शुकादिदेहस्थस्य तत्त्वज्ञानमोक्षावन्यदेहस्थस्य तु न तावितिबंधमोक्षादिसंकरापाताच्च । तस्यैव तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगेन मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य तमेव प्रत्यहमितिधीविषयत्वायोगाच्च । किंच श्रुतिषु "अविद्यायामंतरे वर्तमाना" इत्यादावविद्या, "रमणीयचरणा" इत्यादौ कर्मबंधः, "सति संपद्य न विदुः" इत्यादौ सुषुप्तिः, "वेदांतविज्ञानसुनिश्चितार्थाः" इत्यादौ तत्त्वज्ञानम्, "परामृतात्परिमुच्यंति सर्वे" इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्येत । नह्यस्मिन्मते चेतनबहुत्वं व्यावहारिकमप्यस्ति । नच मुक्तादिबहुत्वं प्राप्तम्, येन श्रुतिरतत्परा स्यात्; किंचैकस्यैव जीवस्येश्वरादिसर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्येश्वरस्य कारणत्वविधायकैर-

---

प्रति वास्तवप्रत्यक्त्वाभावेऽपि आरोपितं तत् किं न स्यादित्यत आह ॥ अप्रत्यक्त्वेनेति ॥ द्वितीयं दूषयति ॥ अन्यस्य चेति ॥ तथानुभवेति ॥ प्रतिशरीरमहं दुःखीत्याद्यनुभवेत्यर्थः ॥ तस्यापीति ॥ कल्पितस्यापीत्यर्थः ॥ असिद्धेरिति ॥ असिद्ध्यापत्तेरित्यर्थः ॥ तथात्व इति ॥ एकस्यैव जीवस्य सर्वशरीरस्थत्व इत्यर्थः । व्यावहारिकजीवभेदस्यापीत्यपिशब्देन वस्तुतः सोऽपि नानुसंधानप्रयोजक इति सूचयति ॥ ताविति ॥ बन्धमोक्षावित्यर्थः ॥ नन्वेकजीववादे शुकादिमुक्तिरसिद्धैव, क्वचित् तत्प्रतिपादनं त्वर्थवाद इति यो ब्रूयात् तं प्रति दूषणान्तरमाह ॥ तस्यैवेति ॥ श्रुतिविरुद्धत्वाच्च न जीवैक्यमित्याह ॥ किंचेति ॥ रमणीयचरणा इति ॥ शुभकर्माण इत्यर्थः ।

ननु जीवस्य एकत्वेऽपि अन्तःकरणभेदेन प्रमातृभेदात् चेतनधर्माविद्यादीनां बहुत्वोक्तिरुपपन्नेत्यनुशयमाह ॥ परामृतादिति ॥ मुक्तावन्तःकरणस्यैवाभावेन तत्प्रयुक्तबहुत्वं नच वक्तुमशक्यमपीति भावः ॥ नहीति ॥ अन्यथा एकजीव इति मतस्य बहवो जीवा इति मताविशेषप्रसङ्ग इति भावः । ननु [illegible] परिमुच्यन्तीत्यादिश्रुतिः न मुक्तादिबहुत्वपरेति न तया तद्बहुत्वसिद्धिरित्याशंक्याह ॥ नचेति ॥ जीवस्य कारणत्वं निषिध्येति ॥ आत्माप्यनीशः सुखदुःखयोरिति जीवस्य कारणत्वं निषिध्य 'अस्मान्मायी सृजते विश्वमेतत्', द्यावाभूमी

विद्यायाश्चिन्मात्राश्रितत्वभंगे वक्ष्यमाणैः श्रुतिस्मृतिसूत्रैर्विरोधः । किंचैवं सर्वज्ञत्वसर्वकर्तृत्वादिश्रुतीनां निर्विषयत्वं स्यात् । चिन्मात्रे ज्ञत्वस्यैवाभावात् ईश्वरस्य च अयं सर्वज्ञ इति जीवेन कल्पितत्वेऽप्यहं सर्वज्ञ इति ज्ञातृत्वाभावेन, "तान्यहं वेद सर्वाणि" इत्याद्ययोगात् । जीवस्य चासार्वज्ञ्यादिनैवानुभवात् । अपि च यः कल्पको जीवस्तस्यापि भावितत्त्वज्ञानमुपदेशसाध्यम्, "आचार्यवान्पुरुषो वेद" इतिश्रुतेः । नचान्यस्तत्वविद्गुरुरस्ति । ननु स्वप्नवत्तत्वविन्त्वेनैवान्यो गुरुः कल्पित इति चेन्न । तत्वविद्गुरुः शिष्यायाद्वैतमुपदिशतीति भ्रांतेः कल्पके जीवे प्रागेव जातत्वेनाद्वैतस्य ज्ञाततया तदैव मोक्षापातात् । तत्त्वविशेषविश्त्वेन गुरुकल्पनाकाल एव तत्वस्य ज्ञाततया पुनरुपदेशवैयर्थ्याच्च । गुरोः कल्पितत्वस्यापि तत्वांतर्गतत्वेन कल्पनाकाल एव गुरोः कल्पितत्वस्य निश्चिततया ततःश्रवणे प्रवृत्त्ययोगाच्च । स्वप्ने तु शब्दविशेषवक्तृत्वेनैव गुरुकल्पना न तूपदेशसाध्यज्ञानविषयतत्वविशेषविश्त्वेन, न च प्रकृतेऽपि तथा, "यदेव भगवान्वेद तदेव मे ब्रूहि" इत्यादिश्रुतेः, "उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः" इत्यादिस्मृतेश्चायोगात् । किंच "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्" इत्यादिविधिरपि भावितत्वज्ञानं कल्पकं चेतनं प्रत्येव । नच तस्य शिष्यः स्वाज्ञान-

---

जनयन् देव एकः, तत्कारणं सांख्ययोगाधिगम्यम्' इतीश्वरस्य जगत्कारणत्वविधायकश्रुतिवाक्यैरित्यर्थः ॥ वक्ष्यमाणैरिति ॥ द्वा सुपर्णा, य आत्मनि तिष्ठन्, अन्यश्च परमो राजन्, तथान्यः पञ्चविंशकः, तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते', 'भेदव्यपदेशाच्चान्यः,' इत्यादिजीवेशभेदप्रतिपादकश्रुतिस्मृतिसूत्रैश्च विरोध इत्यर्थः ॥ किंचैवमिति ॥ एकस्यैव जीवस्येश्वरादिसर्वकल्पकत्व इत्यर्थः । सर्वज्ञत्वादिश्रुतेः सर्वविषयत्वं वदन् प्रष्टव्यः किं चिन्मात्रमादाय सर्वविषयत्वम्, उतेश्वरम्, आहोस्विज्जीवमिति । तत्र नाद्य इत्याह ॥ चिन्मात्र इति ॥ तथाच सर्वज्ञत्वसर्वकर्तृत्वादिकं दुरापास्तमिति भावः । द्वितीयं निराह ॥ ईश्वरस्य चेति ॥ तृतीयं प्रत्याह ॥ जीवस्य चेति ॥ किंच एकजीवः तदा गुरुशिष्यव्यवस्थापि न स्यादित्याह ॥ अपि चेति ॥ प्रागेवेति ॥ उपदेशात् प्रागेव भ्रान्तेर्जातत्वेनेत्यर्थः ॥ पुनरुपदेशेति ॥ पुनरुपदेशो वाक्यालङ्कारे । स्वप्नप्रतिबन्दीमुद्धरति ॥ स्वप्ने त्विति ॥ तथेति ॥ शब्दविशेषवक्तृत्वेनेत्यर्थः । तथाच न तद्योमोक्षत्यादिप्रसङ्ग इति भावः । तथात्वीकारे बाधकमाह ॥ यदेवेति ॥ भावितत्वज्ञानमिति ॥ भावि तत्त्वज्ञानं यस्य त इत्यर्थः चेतनमिति ॥ अन्यस्य विधिवाक्यान्वायोगादिति भावः ।

कल्पित इति ज्ञानतत्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता, स्वप्ने तु कल्पितत्वाज्ञानात्प्रवृत्तिः। नचापरोक्षज्ञानाभावात्प्रवृत्तिः। दिङ्मोहादौ परोक्षज्ञानेनापि तत्प्रतिबंधात् । नच संस्कारवशात्प्रवृत्तिः। नह्ययं वेगादिवद्बलात्प्रवर्तकः किंतु तत्त्वनिश्चयप्रतिबंधद्वारा, ततश्च भिक्षाटनादौ कथंचित्प्रवर्ततां नाम, अद्वैतं बोधयंस्तु कथं तदनुसंधानहीनः स्यात्। नचायं स्वाप्नगुरुवत् कल्पितत्वादपर्यनुयोज्यः, कल्पकस्यैव गुरुत्वोक्तेः, कल्पितत्वेऽपि तत्त्वज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववत् गुरोरपि पर्यनुयोज्यत्वाच्च। अन्यथा कथासु मदुत्तराप्रतीतावहं त्वत्कल्पितो न पर्यनुयोज्य इत्येवोत्तरं स्यात्। एतेन यावदविद्यं स्वप्नवद्व्यवस्थेति निरस्तम्। इह कल्पक-

---

ननु स्वप्नवदेव प्रवचने प्रवृत्तिर्युज्येतेत्यत आह ॥ स्वप्ने त्विति ॥ नच कल्पकत्वादेव गुरोरपि शिष्यकल्पितत्वाज्ञानमावश्यकमिति वाच्यम् । तत्त्वविद एव गुरुत्वेन शिष्यकल्पितत्वस्यापि तत्त्वरूपतया तज्ज्ञानावश्यम्भावादितिभावः । ननु कल्पितत्वविषयकपरोक्षज्ञानसत्त्वेऽपि प्रवृत्तिप्रतिबन्धकतद्गोचरापरोक्षतत्त्वज्ञानाभावात् प्रवृत्तिर्युक्तेत्याशंक्याह ॥ नचेति ॥ तत्प्रतिबन्धादिति ॥ प्रवृत्तिप्रतिबन्धदर्शनादित्यर्थः । ननु सत्यपि तत्त्वज्ञाने यथा मिथ्याज्ञानोपहितसंस्कारवशादेव जीवन्मुक्ते भिक्षाटनादौ प्रवृत्तिः, एवं शिष्ये कल्पितत्वगोचरतत्त्वज्ञानसत्त्वेऽपि संस्कारवशादेव प्रवचने प्रवृत्तिः स्यादित्याशंक्य निराकरोति ॥ नचेति ॥ अयमिति ॥ संस्कार इत्यर्थः ॥ तत्त्वनिश्चयप्रतिबन्धेति ॥ तत्त्वनिश्चयकार्यप्रतिबन्धेत्यर्थः । कथंचिदित्यनेन तत्त्वज्ञानेन अज्ञाननाशादेव तदुपादेयसंस्कारस्यापि नाशावश्यंभावात्, न तद्वशादपि प्रवृत्तिसंभवतीति सूचयति ॥ कल्पकस्यैवेति ॥ अस्तु कल्पितत्वम्, तथापि स्यादेव पर्यनुयोज्यत्वम् । कल्पितत्वेऽपि स्वाप्नवैलक्षण्यस्य अनुभवसिद्धत्वेन दुरपह्नवत्वात् । अन्यथा कल्पितत्वमात्रेण स्वाप्नगुरुवत्, अप्रगुरोरप्यपर्यनुयोज्यत्वे तत्त्वज्ञानहेतुत्वाविशेषवत्त्वेन तथाभूतआम्नायस्यापि मीमांस्यत्वं न स्यात् । नहि तस्यामीमांस्यत्वमदर्शनात्, तद्वदेव आम्नायस्यापि मीमांस्यत्वं युक्तम् । तथासति तद्वदेव मीमांसितवाक्यजन्यज्ञानस्यापि नैष्फल्यप्रसङ्गात् । नचैवं, तत्त्वज्ञानफलस्य मोक्षस्य स्वप्नवदपि वास्तवत्वोपगमादित्यभिप्रेत्याह ॥ कल्पितत्वेऽपीति ॥ अन्यथेति ॥ तथाच कल्पितत्वाकल्पितत्वे पर्यनुयोज्यापर्यनुयोज्ययोरतन्त्रे इति भावः । यद्यपि कल्पितेन जीवेन स्वस्मिन् कल्पितत्वाज्ञानात् नैष्फल्यं संभवति । तथापि अधीतशास्त्रयोरेव कथाप्रवेशात् तत्रापि कल्पितत्वज्ञानस्यावश्यकत्वेपेति बोध्यम् ॥ व्यवस्थेति ॥ गुरुशिष्यव्यवस्थेत्यर्थः ॥ इहेति ॥ एक एव जीवः सर्वशरीरे इति पक्षे इत्यर्थः । अज्ञानदशायां वा कल्पित एवेति स्वप्नावस्थायां

एव शिष्यत्वगुरुत्वयोरुक्तत्वेन स्वात्मवैषम्यात् । किंच स कल्पको जीव इदानीं निश्चिताद्वैतो न वा । आद्ये इदानीं संशयाद्यभावेनाद्वैतशास्त्रप्रणयनादि व्यर्थं स्यात् । अंत्ये त्वद्वैतशास्त्रं प्रमामूलं न स्यात् । अपिच सोऽमुक इत्यनिश्चितो निश्चितो वा । नाद्यः । बह्वायाससाध्यमोक्षार्थं प्रवृत्त्ययोगात् । नचाभिसंधिपूर्विकापीयं प्रवृत्तिः कल्पितत्वादपर्यनुयोज्या । कथासु स्वकीयाविरोधादेरप्यनुद्भाव्यतापातात् । न द्वितीयः । त्वया जीवन्मुक्तत्वेन निश्चितेष्वद्वैतिषु मृतेष्वपि विभ्रमानुवृत्तिदर्शनेन स गुरुश्शिष्यो वा, गुरुत्वेऽपि चैत्रो मैत्रो वेति निश्चेतुमशक्यत्वात् ।

ननु गुरुशिष्यादिशब्दैः केनचित्क्रोडीकृतं चैतन्यमुच्यते निरस्तसमस्तभेदं वा । नाद्यः । तस्य मिथ्यात्वेनाकल्पकत्वात् । अंत्ये कथमनिश्चयः ? तस्यैकत्वादिति चेन्मैवम्, भ्रमाधिष्ठानस्य चिन्मात्रस्यैकत्वेऽपि तस्य मुखमात्रस्थानीयस्यासंसारित्वेनाकल्पकत्वात् । तस्य मोक्षार्थं प्रवृत्त्ययोगाच्च । कल्पकानां च संसारिणामनेकेषामुपलंभेनायं मत्यः संसारीत्यनिश्चयेन मुमुक्षुप्रवृत्त्ययोगात् ।

---

तु स्वप्नद्रष्टरि स्वस्मिन् यदा शिष्यत्वकल्पनं तदा तेन गुरुत्वेन अन्य एव कल्प्यते, यदा च गुरुत्वं स्वस्मिन् कल्प्यते तदा अन्य एव शिष्यः कल्प्यते इति गुरुत्वशिष्यत्वयोः नैकस्मिन् कल्पनेति स्वात्मवैषम्यसत्त्वात् स्यादेव पर्यनुयोज्यत्वमितिभावः ॥ उक्तत्वेनेति ॥ एतदंगीकारेणेत्यर्थः ॥ संशयाद्यभावेनेति ॥ अद्वैतविषयसंशयविपर्ययाभावापत्तेरित्यर्थः । अद्वैतशास्त्रप्रणयनादीत्यादिपदेन प्रवचनादिपरिग्रहः ॥ प्रमामूलं न स्यादिति ॥ यद्यपि अपौरुषेयवेदवत् संवादिशुकबाल्यादिवाक्यवच्च प्रमामूलत्वाभावेऽपि स्यादेव प्रामाण्यम्, तथापि शास्त्रप्रणेतृत्वान्यथानुपपत्त्या तत्प्रणेतुः शास्त्रमूलभूतज्ञानवत्त्वान्यथानुपपत्त्या शास्त्रार्थज्ञानावश्यंभावेन कल्पकस्य कल्पभ्रान्तत्वान्यथानुपपत्त्या च तज्ज्ञानस्य भ्रमत्वं दुर्वारमिति तत्प्रणीतशास्त्रस्याप्रामाण्यं दुर्निरसमितिभावः ॥ स इति ॥ कल्पक इत्यर्थः ॥ बह्वायासेति ॥ एतच्च निष्कम्पप्रवृत्तिकार्यगोचरप्रवृत्त्यंगं निश्चय इति ज्ञापनार्थम् ॥ अभिसन्धिपूर्विकेति ॥ उपादेयत्वादिनिश्चयपूर्विकेत्यर्थः । स्वक्रियाविरोधादेरित्यस्यानन्तरं त्वयेति शेषः ॥ स इति ॥ कल्पक इत्यर्थः । द्वितीयपक्षे दूषणोद्धारं शङ्कते ।

नन्विति ॥ मुखमात्रस्थानीयस्येति ॥ बिम्बत्वाभिमतस्थानीयस्येत्यर्थः ॥ असंसारित्वेनेति ॥

अपि चानादौ संसारे कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभून्न वा । आद्ये इदानीं संसारोपलब्धिर्न स्यात्, जीवान्तराभावात् । नान्त्यः । संप्रदायाभावेनोत्तरत्रापि तत्त्वज्ञानासंभवात् । तत्त्ववित्त्वेन कल्पितगुरुसंप्रदायस्य च निरासात् । तत्त्ववित्त्वेन श्रुत्यादिसिद्धानां शुकादीनां त्वदभिमतानां गौडपादादीनां चाभूता मुक्तिरन्यस्य भविष्यतीत्याश्वासायोगाच्च । मोक्षशास्त्रप्रामाण्यात् सा युक्तेति चेदेवं यदि शास्त्रे श्रद्धा तर्हि "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, बहवो ज्ञानतपसा पूता मद्भावमागताः" इत्यादिश्रुतिस्मृतिप्रामाण्यात् पूर्वमपि केषांचिन्मुक्तिः किं न स्यात् । नहि प्रत्यक्षेण सुखदुःखाद्यनुसंधानाननुसंधानादिलिंगेन "चेतनश्चेतनानाम्" इत्यादिश्रुत्या "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इत्यादिस्मृत्या च सिद्धे जीवभेदे बाधकमस्ति । "अनादिमायया सुप्तो यदा जीवः" इत्यादि-

---

उपाधेः प्रतिबिम्बपक्षपातित्वेन अविद्योपाधिकसंसारस्य प्रतिबिम्बे जीव एवोचितत्वादिति भावः ॥ तस्य चेति ॥ बिम्बस्थानीयासंसारिचिन्मात्रस्य चेत्यर्थः ॥ अयं सत्य इति ॥ अत्र अयमिति ग्रन्थकृदुक्तिः, अहं सत्यः संसारीत्यभिप्रायेणेत्यर्थः ॥ संप्रदायाभावेनेति ॥ चिन्मात्रस्योदासीनत्वात्, जीवस्य च मम अज्ञत्वात् (अतत्त्वज्ञानित्वात् पा.), एतदुभयव्यतिरेकेण तत्त्वविदः तृतीयस्य त्वयैव अनभ्युपगमात् । संप्रदायाभावप्रसंगेन उत्तरत्रापि तत्त्वज्ञानासंभवप्रसंगादित्यर्थः । ननु तत्त्ववित्त्वेन मज्जीवकल्पितगुरुपरम्परया संप्रदायप्रवृत्तिसंभवेन तत्त्वज्ञानसंभवप्रसंग इत्यत आह ॥ तत्त्ववित्त्वेनेति ॥ गुरुकल्पनाकाल एव कल्पकजीवस्य तत्त्वज्ञानत्वेन सद्योमोक्षादिप्रसंगेन कल्पितगुरुसंप्रदायस्य च निरासादित्यर्थः ॥ श्रुत्यादिसिद्धानामिति ॥ तथर्षीणां तथा मनुष्याणां तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च इत्यादिश्रुतिस्मृतिसिद्धानामित्यर्थः ॥ सेति ॥ मोक्षेत्यर्थः ॥ केषांचिन्मुक्तिः किं न स्यादिति । तथा च जीवबहुमुक्तव्यवस्थानुरोधेन जीवानेकत्वमेवापतितमिति भावः ॥ प्रत्यक्षेणेति ॥ नाहं चैत्र इत्यादिप्रत्यक्षेणेत्यर्थः ॥ सुखदुःखाद्यनुसन्धानाननुसन्धानेनेति ॥ विमतौ भिन्नौ सुखदुःखाद्यनुसंधानाननुसंधानरूपविरुद्धधर्मवत्त्वात्, इत्यनुमानेनेत्यर्थः । अननुसंधानादीत्यादिपदेन विरुद्धप्रवृत्त्यादिर्विवक्षितः ॥ इत्यादिश्रुत्येति ॥ आदिपदात् अनुनेन हि प्रत्यूहाः इत्यादिश्रुतिपरिग्रहः । इत्यादिस्मृत्येत्यादिपदात् 'ममैव ये प्रपद्यन्ते' इत्यादिस्मृतिपरिग्रहः ।

ननु 'अनादिमाययेति' श्रुतिर्जीवैकत्वमेव प्रत्यक्षादिबाधकमित्याशंक्याह ॥ अनादि-

श्रुतावेकवचनं तु "यथा नीतिपरो राजा" इत्यादिवत् "स्वर्गकामो यजेत" इत्यादिवच्च युक्तम् । अन्यथा "इति सृष्टौ विनिश्चिता" इति पूर्वेण, "स पूज्यः सर्वभूतानाम्" इत्युत्तरेण जीवभेदवाक्येन विरोधात् । नचाविद्यैक्येन तदुपहितजीवस्यैकत्वेऽप्यंतःकरणोपहितानामनेकत्वात् बद्धमुक्तव्यवस्थेतिवाच्यम् । जीवभावेऽन्तःकरणोपाधेरपि तंत्रत्वे बहुजीववादापातात् । अननुगमाच्च । अतंत्रत्वे देहादिनिवृत्तिवदन्तःकरणनिवृत्तेरप्यमुक्तित्वेनोक्तव्यवस्थायोगात् ।

एतेनैव हिरण्यगर्भ एव ब्रह्मप्रतिबिंबो मुख्यो जीवः । अन्ये तु तत्प्रतिबिंबभूता जीवाभासाः संसारादिभाज इति निरस्तम् । हिरण्यगर्भमुक्तितः प्राक्सर्वस्याप्यमुक्त्यापातात् । अतीतहिरण्यगर्भमुक्तेः श्रुत्यादिसिद्धत्वेनेदानीं संसारानुपलंभायोगाच्च । सादिहिरण्यगर्भप्रतिबिंबस्य संसारस्य सादित्वापाताच्च । नचातीतकल्पानामानंत्येनैकैकस्मिन्कल्पे एकैकस्य मुक्तावपि एकैकमाषापचये माषराश्यपचयवत् क्रमेण सर्वजीवमुक्तेरिदानीं संसारोपलंभो न स्यादिति बाधकम् , कल्पानंत्यात्क्षणानंत्य इव क्षणानंत्याज्जीवानंत्येऽतिशयस्य "अतीता-

---

मायये.ति ॥ यथा नीतिपरो राजेत्यादौ प्रत्येकमेकत्वाभिप्रायेण एकवचनमिव यथा जीव इत्येकवचनमपि प्रत्येकमेकत्वादुपपन्नमिति न बहुत्वव्यवच्छेदकमिति भावः ॥ अन्यथेति ॥ यथा जीव इत्येकवचनस्य बहुत्वव्यवच्छेदकत्व इत्यर्थः । ननु न अनेकजीवत्वं, जीवोपाधेरविद्याया एकत्वात् , नचैवं बद्धमुक्तव्यवस्थानुपपत्तिः । तस्यैकस्यैव जीवस्य नानान्तःकरणोपाधिप्रयुक्तभेदसत्त्वेन तदुपपत्तेरित्याशंक्य निराकरोति ॥ नचेति ॥ जीवभावे अन्तःकरणमपि तन्त्रं न वा, आद्येऽप्यविद्यया समुच्चितं तन्त्रम् उत प्रत्येकमिति विकल्प्य आद्यं दूषयति ॥ जीवभाव इति ॥ अविद्याया एकत्वेऽपि अन्तःकरणभेदप्रयुक्तभेदस्यावश्यकत्वादिति भावः । द्वितीयं दूषयति ॥ अननुगमाच्चेति ॥ अविद्यान्तःकरणयोरनुगतधर्माभावेन स्वानुगमरूपेण द्वयोरपि जीवत्वोपाधित्वे जीवशब्दस्य नानार्थत्वप्रसंगादिति भावः । नान्त्य इत्याह ॥ अतंत्रत्व इति ॥ श्रुत्यादिसिद्धत्वेनेति ॥ यत्र ब्रह्मा पवमानच्छन्दस्यां वाचं वदन् , ब्रह्मा स्वो भवति ज्ञानविद्यां यजस्य मायां विमिमीत उ त्वः । मुक्तः स्वपापैः पूर्वैः ब्रह्मादिभिरेव संयुतम् । ब्रह्मा ददर्श तपसा भगवन्तं हरिं प्रभुम् ॥ इत्यादिश्रुतिस्मृतिसिद्धत्वेनेत्यर्थः ॥ सादिहिरण्यगर्भप्रतिबिंबस्येति ॥ सादिहिरण्यगर्भप्रतिबिम्बभूतजीवस्य संबंधी यस्संसारस्तस्येत्यर्थः । पूर्वमपि

नागतार्थैव यावंतः सहिताः क्षणाः । अतोऽप्यनंतगुणिता जीवानां राशयः पृथक्” इत्यादिश्रुतिसिद्धत्वेन प्रतिक्षणमेकैकमुक्तावपीदानीं संसारोपलंभसंभवात् । तस्मात्

“एकजीवमतं शब्दयुक्तिप्रत्यक्षबाधितम् ।
तदप्रमाणतायां तु सोऽपि जीवे न सिद्ध्यति” ॥

तस्याजगन्नाविद्यकमिति ।

॥ इति एकजीवाज्ञानकल्पितत्वभङ्गः ॥ ४३ ॥

---

केषाञ्चिन्मुक्त्यभ्युपगमे बाधकमाशंक्य निराकरोति ॥ नचेति ॥ नच बाधकमिति सम्बन्धः । उपसंहारमनुक्तमर्थं संगृह्णाति ॥ तस्मादिति ॥ परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥ उक्तरीत्या जीवस्य कल्पकत्वासंभवादित्यर्थः ।

॥ इति एकजीवाज्ञानकल्पितत्वभङ्गः ॥ ४३ ॥

## ॥ अथ अविद्यालक्षणभङ्गः ॥ ४४ ॥

यथोक्तमनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं भ्रमोपादानत्वं वाऽविद्यालक्षणम् । प्रमाणं त्वहमज्ञो मामन्यं च न जानामि त्वदुक्तमर्थं न जानामीत्यादिप्रत्यक्षम्, तथा एतावंतं कालं न किंचिदहमवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवः । तथा प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकम् । अप्रकाशितार्थ-

---

॥ अथ अविद्यालक्षणभङ्गः ॥ ४४ ॥

ननु जगत आविद्यकत्वं दुर्निवारम् (दुर्वारमिति पा.) अविद्यालक्षणप्रमाणस्वरूपपर्यालोचनायां तस्यानिर्वचनीयाविद्याकार्यत्वसिद्धेरित्याशङ्क्य निरासाय परोक्तानि तल्लक्षणप्रमाणान्यनुवदति ॥ यथोक्तमिति ॥ अनादीति ॥ अत्र सति सप्तमीमहिम्ना अनादिभावरूपत्वज्ञाननिवर्त्यत्वयोः सामानाधिकरण्यं लभ्यते तेनानादित्वभावरूपत्वोभयसमानाधिकरणं ज्ञाननिवर्त्यत्वं तल्लक्षणमित्युक्तं भवति । तत्र भ्रमप्रागभावयोरतिव्याप्तिवारणाय सत्यन्तम् । ब्रह्मणि तद्वारणाय ज्ञाननिवर्त्यत्वमिति । एतच्च लक्षणं प्रागभावनिवृत्तिर्ज्ञानातिरिक्तेतिमतेनेति बोध्यम् । अत्रानादिभावत्वे सतीति वक्तव्ये तस्याः भावरूपत्वोक्तिर्वस्तुतो भावत्वमपि नेति (ख्यापनाय पा) ख्यापनाय । साक्षाज्ज्ञाननिवर्त्यत्वमत्र विवक्षितमिति न जीवब्रह्मविभागादावतिव्याप्तिरिति द्रष्टव्यम् ॥ भ्रमोपादनत्वमिति ॥ भ्रमोपादानत्वं परिणामितयैव विवक्षितम् । तेन न ब्रह्मण्यतिव्याप्तिः ॥ भ्रमेति ॥ मृत्पिण्डादावतिव्याप्तिवारणाय ॥ अहमज्ञ इति ॥ यद्यप्यहमज्ञ इति वा मामन्यं च न जानामीति वा विषयविशेषपुरस्कारेण नाज्ञानप्रत्यक्षमस्ति । तथापि ज्ञानातिरिक्तार्थविषयाज्ञानप्रत्यक्षाकारप्रदर्शनपरमिति द्रष्टव्यम् । न किञ्चिदहमवेदिषमिति किञ्चिच्छब्दोऽपि ज्ञानान्यपर एव द्रष्टव्यः ॥ इतिपरामर्शसिद्धेति ॥ एवमाकारस्मृतिरूपकार्यान्यथानुपपत्तिकल्प्येत्यर्थः । यद्यप्यहमज्ञ इत्याद्यनुभववत् सौषुप्तिकानुभवोऽपि साक्षिरूप एव । तथापि वादिभेदेन तथातथानुभवविशेषोपन्यासो नाधिक इति भावः । यद्वा अहमज्ञ इति जाग्रद्दशायामनुभवस्य ज्ञानाभावविषयत्वेनान्यथासिद्धिशङ्का सम्भवतीति. अनन्यथासिद्धसौषुप्तिकानुभवस्य प्रमाणत्वेनोपन्यास इति द्रष्टव्यम् ।

प्रमाणज्ञानमिति ॥ अत्र प्रमाणेतिविशेषणं आत्माश्रयाद्यो बाधवारणाय । ज्ञानमिति प्रमाणशब्दस्य भावसाधनत्वज्ञापनाय । तत्फलं चात्र करणसाधनत्वादिभ्रमनिरासः । स्वपूर्वमित्यत्र मिति ॥ स्वप्रागभावमादायार्थान्तरतां वारयितुमित्यर्थः ॥ अप्रकाशितेति हेतुविशेषणं

धर्मिण्यात्मनि प्रतियोगिनि च ज्ञानेऽज्ञाते तस्य विषयनिरूप्यत्वेन विषयस्यापि ज्ञाततया तज्ज्ञानाभावायोगात् । अज्ञाते तु हेत्वभावेन ज्ञानाभावज्ञानायोगात् । न च विषयोऽपि सामान्यतो ज्ञायत इति युक्तम् । सामान्यस्य ज्ञातत्वादेव तज्ज्ञानाभावायोगात् । विशेषज्ञानाभावे सत्यपि निरूपकविशेषज्ञानाभावेन तन्निरूपितविशेषज्ञानायोगादिति । तत्र ब्रूमः । आद्यलक्षणे अव्याप्तिः । सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानानामनादित्वायोगस्योक्तत्वात् आरोपिताभावोपादानाज्ञाने भावत्वाभावाच्च । अभावस्य भावोपादानकत्वे असत्यस्य

---

पादानं विना तादृशकार्यानिर्वाहादित्यर्थापत्तिश्चेत्यर्थः । अज्ञानविषयत्वेन वस्तुतो निर्विकारत्वेन उपादानत्वेन च श्रुतिप्रतिपन्नस्य ब्रह्मणः श्रुतोभयरूपत्वनिर्वाहाय तद्विशेषणत्वेन विकारि मिथ्याभूताज्ञानं कल्पनीयमित्याद्यर्थापत्त्यन्तरपरिग्रहः । ननु विवक्षितभावरूपाज्ञाने मामन्यं च न जानामीति प्रत्यक्षं न मानम् । तस्योभयवादिसिद्धज्ञानाभावविषयत्वेनाप्युपपत्तेरित्याशङ्क्य निराकरोति ॥ नचेति ॥ न जानामीत्यनुभवो ज्ञानाभावविषय इति वदता तज्ज्ञानात् पूर्वं धर्मिप्रतियोगिज्ञानमङ्गीक्रियते नवेति विकल्प्याद्ये आह ॥ धर्मिणीति ॥ तस्येति ॥ प्रतियोगिभूतज्ञानस्येत्यर्थः । तज्ज्ञानाभावायोगादिति ॥ स्वस्वान्यविषयकज्ञानयोः सत्त्वेन स्वस्मिन् विरोधेन तदभावासंभवादिति भावः । द्वितीये दोषमाह ॥ अज्ञातेत्विति ॥ धर्मिप्रतियोगिज्ञानस्याभावप्रत्यक्षहेतुत्वेन तदभावे तस्यैवायोगादित्यर्थः । ननु प्रतियोगिभूतज्ञानस्य विषयनिरूप्यत्वेन विषयज्ञानसत्त्वेऽपि तत्सामान्याकारमेवेति न तस्य विशेषाकारज्ञानाभावेन विरोध इत्याशङ्क्य तर्हि न जानामीति प्रत्यक्षस्य सामान्याकारज्ञानाभावविषयत्वं त्वयैव नाङ्गीकृतमित्यनुवादपूर्वकं विशेषाकारज्ञानाभावविषयत्वमपि तस्य न संभवति । सामग्रीबाधादित्याह ॥ विशेषेति ॥ अव्याप्तिमेवोपपादयति ॥ सादीति ॥ सादिशुक्त्याद्युपहितचैतन्यस्य सादित्वावश्यंभावेन तस्य च विषयोल्लिखित्स्वभावत्वेन अज्ञानविषयत्वायोगेन (अनाद्यज्ञानविषयत्वायोगेन इति पाठः) विषयोल्लिखित्स्वभावेषु ज्ञानेच्छादिषु चितस्य विषयीकरणरूपव्यापारादर्शनेन च युक्तिं न जानामीत्याद्यनुभवसिद्धतद्विषयकाज्ञानस्य सादित्वस्योक्तत्वादित्यर्थः । भावत्वविशेषणविरहादप्यव्याप्तिरित्याह ॥ आरोपितेति ॥ उपादानस्योपादेयानुरूपत्वनियमादिति भावः । तथानङ्गीकारे बाधकमाह ॥ अभावस्येति ॥ ननु आरोपिताभावं प्रति नाज्ञानमुपादानं किन्तु तदनुरूपमन्यदेवेत्यत आह ॥ तस्येति ॥ आरोपिताभावस्येत्यर्थः । अज्ञानतत्कार्ययोरेव ज्ञाननिवृत्त्यभ्युपगमादिति

सत्योपादानकत्वापातात् । तस्याज्ञानानुपादानकत्वे ज्ञानानिवृत्तिर्न स्यात् । शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेतिमते तदज्ञाने चरमसाक्षात्कारानंतरभाविजीवन्मुक्त्यनुवृत्ते अज्ञाने ऊर्ध्वाग्रत्वाद्यधिष्ठानत्वसाक्षात्कारानिवर्तिजलस्थवृक्षाधोऽग्रत्वादिसोपाधिकभ्रमोपादानाज्ञाने च ज्ञाननिवर्त्यत्वाभावाच्च । न च ब्रह्मज्ञानेन ब्रह्माज्ञाननिवृत्तिः जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञाननिवर्त्यत्वे च स्वकार्यैरारब्धकर्मभिः सह पूर्वेणैव साक्षात्कारेण निवृत्तिः स्यात् । न च सोपाधिकभ्रमोपादानमज्ञानमुपाधिनिवृत्तिसचिवतत्त्वज्ञाननिवर्त्यम् । तस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यनिरपेक्षस्यैव निवर्तकत्वात् । न हि ज्ञाते कश्चिदपि न जानामीति धीरस्ति, चैतन्याविद्यासंबंधेऽतिव्याप्तिश्च । साक्षाज्ज्ञाननिवर्त्यत्वविवक्षायां चानादिपदवैयर्थ्यमसंभवश्च ।

---

भावः । अज्ञानविशेषे ज्ञाननिवर्त्यत्वविरहादव्याप्तिरित्याह ॥ शुद्धमिति ॥ मतान्तरसाधारणमपि दूषणमाह ॥ ब्रह्मेति ॥

नवु शुद्धब्रह्म वृत्तिव्याप्य(प्य. इति पा.)मपि नेति मते न तदज्ञानेऽव्याप्तिः तस्य ब्रह्मेतरविषयकज्ञानेन निवृत्तिसंभवादित्याशङ्क्याह ॥ नहीति ॥ ब्रह्मज्ञानेनेति ॥ ब्रह्मविषयकज्ञानेनेत्यर्थः । न च तदितरविषयत्वं तन्त्रम् । लाघवेन तदज्ञाननिवृत्तौ तद्विषयकज्ञानत्वस्यैव तन्त्रत्वात् । अन्यथा निर्विकल्पकज्ञानस्य निर्विषयत्वेन घटादिवत् ज्ञानत्वाभावप्रसङ्गात् । घटादेरपि वृत्तिव्याप्यत्वाभावप्रसङ्गाच्चेति भावः । आरब्धकर्मभिः सहेत्युक्त्या उपादाननिवृत्तौ तदुपादेयनिवृत्त्यवश्यंभावं सूचयति ॥ पूर्वेणैवेति ॥ अन्यथा उत्तरेणापि निवृत्तिर्न स्यादिति भावः ॥ अन्यनिरपेक्षेति ॥ स्वविषयेतरासाधारणकारणानपेक्षस्येत्यर्थः ॥ नहीति ॥ अन्यथा ज्ञातेऽपि ज्ञाने कारणान्तरविलम्बेनाज्ञाननिवृत्तिविलम्बेन न जानामीति धीप्रसङ्गादिति भावः । न च न जानामीत्यनुभवे नाज्ञानमेव प्रतिबन्धकमिति वाच्यम् । तथासत्यज्ञानस्य सुखादिवत् पराभ्युपगतज्ञातैकसत्त्वनियमभङ्गप्रसङ्गात् । नैवं सोपाधिकभ्रमस्थले अव्याप्त्युद्भावनमसङ्गतम् । तत्रापि न जानामीत्यनुभवप्रसङ्गेनाज्ञानविनिवृत्त्यवश्यंभावादिति वाच्यम् । पराभ्युपगममात्रादेव तत्राव्याप्त्युद्भावनादिति ॥ चैतन्येति ॥ न च चैतन्याविद्यासंबन्धोऽविद्यारूपसंबन्धिनिवृत्त्यैव निवर्त्यो न तु ज्ञानेनेति वाच्यम् । चैतन्यातिरिक्तस्य सर्वस्यापि परेण ज्ञाननिवर्त्यत्वाङ्गीकारादिति भावः । ननु चैतन्याविद्यासंबन्धस्याविद्यानिवृत्तिद्वारा ज्ञाननिवर्त्यत्वेऽपि न साक्षाज्ज्ञाननिवर्त्यत्वम् । अतो न तत्रातिव्याप्तिरित्यत आह ॥ साक्षादिति ॥ अनादिपदवैयर्थ्यमिति ॥ शुक्तिरजतादेः साक्षाज्ज्ञाननिवर्त्यत्वाभावादिति भावः ॥ अनादित्वायोगश्चेति ॥ अज्ञानस्य

कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्यानादित्वायोगस्योक्तत्वात्, ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादित्वायोगाच्च। अज्ञानसंबंधोऽपि पक्षतुल्यः। नचाज्ञानत्वानधिकरणत्वमुपाधिः, पक्षेतरत्वात्। अवच्छिन्नाज्ञाने साध्याव्याप्तेश्च। व्यतिरेकासिद्धेश्च। त्वन्मते अज्ञानस्य भावाभावविलक्षणत्वेन भावत्वाभावाच्च। भावविलक्षणस्याभावत्वनियमेन भावविलक्षणे अभाववैलक्षण्यस्याप्ययोगाच्च। अपिचानादेरभावविलक्षणस्यात्मवदनिवर्त्यत्वम्। नच भावत्वमात्मत्वं वोपाधिः। अत्यंताभावे असति च साध्याव्याप्तेः। त्वन्मते

---

कल्पितत्वेन शुक्तिरूप्यादिवत् दोषजन्यधीमात्र(शरीरत्वापत्त्या इति पा.)स्वरूपत्वापत्त्या प्रतीत्यभावकालेऽभावादित्यर्थः। किञ्च विमतमज्ञानं सादि ज्ञाननिवर्त्यत्वे सति अभावविलक्षणत्वात् शुक्तिरूप्यादिवदित्यनुमानेन ज्ञानस्य सादित्वसिद्धेरनादित्वाभाव इत्याह॥ ज्ञाननिवर्त्यस्येति॥ अत्र च ब्रह्मणि प्रागभावे च व्यभिचारवारणाय विशेषणद्वयम्। नन्वज्ञानसंबन्धे व्यभिचार इत्याशंक्याह॥ अज्ञानसंबन्धोऽपीति॥ एतच्चोपलक्षणम्। जीवत्वादिकमपि पक्षतुल्यमिति बोध्यम्॥ पक्षेतरत्वादिति॥ बाधानुपनीतपक्षेतरत्वस्यापि दूषकत्वे अनुमानमात्रोच्छेदप्रसङ्गादिति भावः। अवच्छिन्नेति॥ घटाद्यवच्छिन्नचैतन्यस्य सादित्वेन तद्विषयकाज्ञानस्यापि सादित्वेन तत्रोपाध्यभावात्साध्याव्याप्तेरित्यर्थः॥ व्यतिरेकेति॥ यत्राज्ञानत्वानधिकरणत्वाभावोऽज्ञानत्वाधिकरणं तत्राज्ञाने सादित्वाभावस्य संदिग्धतया व्यतिरेकव्याप्तिसिद्धेरुपाधिरप्रयोजक इत्यर्थः। अज्ञानस्य भावत्वासंभवादपि असंभवमाह॥ त्वन्मत इति॥ नन्वभाववैलक्षण्यमेव भावत्वं विवक्षितमिति नासंभव इत्यत आह॥ भावविलक्षणस्येति॥ अभावत्वं हि भाववैलक्षण्यमेव नत्वन्यदिति भावः। विलक्षणेऽज्ञानेऽभाववैलक्षण्यस्याप्यभावादित्यर्थः।

किञ्च विमतं न ज्ञाननिवर्त्यं अनादित्वे सति अभावविलक्षणत्वात् आत्मवदित्यनुमानेनाज्ञानस्य ज्ञाननिवर्त्यत्वाभाव(ज्ञाननिवर्त्यत्वासिद्धेरिति पाठः)सिद्धेरप्यसंभव इत्याह॥ अपिचेति॥ अत्र च शुक्तिरूप्ये प्रागभावे च व्यभिचारवारणाय विशेषणद्वयम॥ भावत्वमिति॥ अज्ञानस्य भावाभावविलक्षणत्वेन तत्र साधनाव्यापकत्वं साध्यव्यापकत्वं चात्मनीति भावः॥ अत्यन्ताभाव इति॥ एतच्च मिथ्यात्वघटकीभूतविशिष्टात्यन्ताभावोऽधिकरणातिरिक्तः सत्यश्चेति मतेनेति बोध्यम्॥ त्वन्मत इति॥ तथाचात्मनि यादृशं भावत्वं तादृशमज्ञानेऽपीति तत्र न साधनाव्याप्तिरिति भावः। तथाभावत्ववत् भावत्वमखण्डोपाधिः। तथासति त्वन्मते निर्धर्मकत्वात्मनो भावत्वाभावप्रसङ्गादिति भावः। उक्तानुमाने विवरणोक्तप्रयोजकत्वमुपाध्यन्तरं च

आत्मन्यप्यभाववैलक्षण्यातिरेकेण भावत्वाभावाच्च । यदत्रोक्तं विवरणे न सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम्, किंतु विरोधिसन्निपातासन्निपातौ । किंचानादिभावो न निवर्तत इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलीयसी, अपि चाभाववैलक्षण्यादात्मवदनिवृत्तौ भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यादिति ।

तन्न । अनादिभावत्वेनैव विरोध्यसन्निपातस्याप्यनुमानात् । यः पर्वतः सोऽनग्निक इति विशेषव्याप्तिरित्यतिप्रसंगाच्च । त्वदभिमतानाद्यज्ञानस्य ज्ञाननिवर्त्यत्वे दृष्टांताभावेनाज्ञानशब्देन सादिभ्रांत्यादिसाधारणज्ञानविरोधिमात्रस्य विवक्षणीयत्वेन विशेषव्याप्तित्वायोगाच्च । भाववैलक्षण्येन निवृत्तावत्यंताभावस्य ध्वंसस्य च निवृत्त्यापाताच्च । अविद्यानिवृत्तिरूपमोक्षाभावोऽपि मयैवापाद्यते । प्रतीतिमात्रशरीरस्याज्ञानस्य यावत्स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियम-

---

रूपयितुमनुवदति ॥ यदत्रेति ॥ निमित्तमिति ॥ प्रयोजकमित्यर्थः ॥ किन्त्विति ॥ तथा चानिवृत्तौ विरोध्यसन्निपात एव प्रयोजक इति स एवोपाधिरिति भावः ॥ बलीयसीति ॥ अन्यथा यदजन्यं तद्विनाशीति सामान्यव्याप्तेरविनाशी ध्वंस इति विशेषव्याप्तिर्बाधिका न स्यादिति भावः ।

किञ्च विमतमज्ञानं निवर्तते अनादित्वे सत्यभावविलक्षणत्वादात्मवदित्यनुमाने, विमतं ज्ञाननिवर्त्यं भावविलक्षणत्वात् प्रागभाववदिति प्रतिपक्षमाह ॥ अपि चेति ॥ अनुमानादिति ॥ विमतमज्ञानं विरोधिसन्निपातरहितं अनादित्वे सत्यभावविलक्षणत्वादात्मवदित्यनुमानात् पक्षे विरोध्यसन्निपातरूपोपाधिसिद्धेर्न तस्य साधनाव्यापकत्वमिति । ननु यः पर्वतः सोऽनग्निक इति विशेषव्याप्तिरेव न, धूमवति पर्वत एव प्रवृत्तस्य प्रत्यक्षेण बाधदुपलब्धेरित्यरुचेराह ॥ त्वदभिमतेति ॥ दृष्टान्ताभावेनेति ॥ यत्र यत्र निवर्तते तत्र ज्ञानमेव न भवतीति विशेषव्याप्तिरेवास्तीति वाच्यम् । विपक्षे बाधकाभावेन तस्याप्रयोजकत्वादिति भावः । किञ्च विमतं ज्ञाननिवर्त्यं भाववैलक्षण्यादित्यत्र किमनादित्वे सति भाववैलक्षण्यं हेतुः उत भाववैलक्षण्यमात्रमिति विकल्प्य तत्राद्यं प्रत्याह ॥ अत्यन्ताभावस्येति ॥ द्वितीयं प्रत्याह ॥ ध्वंसस्य चेति ॥ अज्ञानस्यानिवृत्तौ मोक्ष एव न स्यात् तस्याविद्यानिवृत्तिरूपत्वादिति तस्याः निवृत्तिरवश्यमभ्युपेयेति नोक्तदोष इत्यत आह ॥ अविद्येति ॥ तथा चाविद्यानिवृत्तिरूपत्वे मोक्षस्योक्तदोषः स्यादेव कैवल्यमेव मोक्ष इति भावः ।

किञ्च यदज्ञानं निवर्तेत तर्हि त्वदभ्युपगतप्रातिभासिकत्वमेव न स्यात् । प्रातिभासिकस्य

मेन निवृत्त्ययोगाच्च, अज्ञानस्यात्यंताभावप्रतियोगित्वरूपमिथ्यात्ववतो निवृत्त्ययोगस्योक्तत्वाच्च। द्वितीयलक्षणेऽपि यावंति ज्ञानानि तावंत्यज्ञानानीतिमते अभ्रमपूर्वकप्रमानिवर्त्याज्ञाने अभावारोपनिवर्तकप्रमानिवर्त्याज्ञाने चाव्याप्तिः । अभावस्य निरुपादानकत्वात् । सोपादानकत्वेऽपि भावरूपाज्ञानोपादानकत्वायोगात् । किंच ब्रह्म जगदुपादानमायाधिष्ठानमितिपक्षे दोषाभावेऽपि मायावच्छिन्नं ब्रह्मोपादानमितिपक्षे असंभवः । रज्ज्वाः सूत्रद्वयमिव मायाब्रह्मणी उपादाने इतिपक्षे अतिव्याप्तिः । अपिचार्थज्ञानरूपस्य भ्रमस्य भावविलक्षणत्वेन

---

यावत्प्रतीतिसत्त्वमनुवृत्तिनियमात् । अविद्याप्रतीतेश्च नित्यसाक्षिरूपत्वादिति बाधकान्तरमाह ॥ प्रतीतिमात्रेति ॥ निवृत्त्ययोगस्येति ॥ अन्यथा तुच्छशशादेरपि निवृत्तिः किं न स्यादिति भावः ॥ द्वितीयलक्षणेऽपीति ॥ भ्रमोपादानत्वं वेत्युक्तद्वितीयलक्षणेऽपीत्यर्थः ॥ अभ्रमपूर्वकेति ॥ नचानादौ संसारे सर्वस्यापि शुक्त्यादितत्त्वज्ञानस्य यत्किञ्चिद्भ्रमजनकत्वसंभवाद्विनिगमनाविरहेणैकभ्रमजनकत्वाद्वा अभ्रमपूर्वकप्रमानिवर्त्यमज्ञानमेव नास्तीति नाव्याप्तिरिति वाच्यम् । सर्वज्ञानेऽपि भ्रमरूपफलोपादानत्वानिश्चयेन सन्दिग्धाव्याप्तेः । विषयावरणं विनैकभ्रमजनकत्वायोगेन पूर्वेणाप्यज्ञानेनैकदैव तद्विषयावरणावश्यंभावे विनिगमनाविरहादेव तद्विषयैकैकप्रमयैव तद्विषयकसर्वाज्ञानस्यापि निवृत्त्यापाताच्च ।

नचैवं, तत्रैव शुक्त्यादौ तस्यैव पुंसः कालान्तरे रूप्यभ्रमानापत्तेः । नच भ्रमोपादानयोग्यत्वमेव लक्षणम् । योग्यत्वस्योपादानत्वावच्छेदकपर्यवसिततस्य तदभिमताज्ञानत्वातिरिक्तस्यासिद्धेः । अज्ञानत्वस्य चाद्याप्यनिरुक्तेरिति भावः ॥ अभावारोपेति ॥ आरोप्यत इत्यारोपो भावात्मको य आरोपः तन्निवर्तकेत्यर्थः ॥ अभावस्येति ॥ अन्यथा घटादिध्वंसस्यापि सोपादानत्वापत्त्या तन्निवृत्त्या निवृत्तौ घटाद्युन्मज्जनप्रसङ्गः । नच घटनिवृत्तेर्निवृत्तिर्घटादन्यैव घटविरोधिनीति युक्तम् । तथासति निवृत्त्युपादानानवस्थाप्रसङ्गात् । तथाच भावारोपनिवर्तकप्रमानिवर्त्याज्ञानं तदारोपनिमित्तमेवेति भावः ॥ सोपादानत्वेऽपीति ॥ इदं चाभ्युपगमवाद इति द्रष्टव्यम् । भावरूपेति ॥ अन्यथा उपादानोपादेययोः समानस्वभावत्वानियमेन उपादेयस्य भावत्वं उपादानस्य अभावत्वं स्यात् । नच गोमयवृश्चिकादौ व्यभिचारः । तयोः पृथक्सिद्धतया उपादानोपादेयभावस्यैवासिद्धेरिति भावः ॥ दोषाभावेऽपीति ॥ वक्ष्यमाणदोषाभावेऽपीत्यर्थः ॥ मायावच्छिन्नमिति ॥ मायावच्छिन्नताज्ञानस्य मृत्त्वादिवदुपादानत्वावच्छेदकत्वेन भ्रमोपादानत्वाभावादिति भावः । अतिव्याप्तिरिति ॥ ब्रह्मणीतिशेषः ॥ अर्थज्ञानरूपस्येति ॥ अर्थरूपस्य ज्ञानरूपस्य चेत्यर्थः ॥

निरुपादानत्वादसंभवः । नच भावविलक्षणाज्ञानोपादेयस्य भ्रमस्य भावत्वं युक्तम् । कार्यकारणयोरभेदात् । सोपादानत्वे च भावत्वमेव तन्त्रम् , नत्वभावविलक्षणत्वं, गौरवात् । अपिचार्थस्य मन्मते असत्त्वेन त्वन्मते च सद्विलक्षणत्वेन निरुपादानत्वात् । ज्ञानस्य तु त्वन्मते सद्विलक्षणत्वेन निरुपादानत्वात् । मन्मते तु सत्त्वेन तत्रत्यात्मनोऽन्तःकरणस्य वोपादानत्वात् नाज्ञानमुपादानम् । सोपादानत्वे कदाचित्सत्त्वमेव तंत्रम् , न त्वसद्विलक्षणत्वम् , कदाचिदेव सत्त्वेन प्रतीयमानत्वं वा, गौरवात् , तुच्छस्यापि शब्दाभासादिना सत्त्वेन प्रतीतिसंभवाच्च । नच ज्ञानस्य सत्त्वेऽर्थस्यापि सत्त्वप्रसंगः । मिथ्याभूतमज्ञानं वेदांततात्पर्यं चरमसाक्षात्कारं च प्रति विषयस्य ब्रह्मणः सत्त्ववत् संतं व्यवहारं परोक्षज्ञानं च

---

भ्रमस्येति ॥ भावरूपया भ्रमशब्दोऽयं कर्मसाधनो भावसाधनश्चेति द्रष्टव्यम् ॥ भावविलक्षणत्वेनेति ॥ परांगीकृतेनेतिशेषः ॥ निरुपादानत्वादिति ॥ निरुपादानत्वप्रसंगादित्यर्थः । नच भावविलक्षणत्वमेवासिद्धमित्याशंक्याह ॥ नच भावविलक्षणेति ॥ भावविलक्षणतया परांगीकृतेत्यर्थः ॥ कार्यकारणयोरिति ॥ उपादानोपादेययोरेकस्वभावत्वादित्यर्थः । नन्वभावविलक्षणत्वाद्भ्रमस्य सोपादानत्वं भविष्यतीत्याशंक्याह ॥ सोपादानत्वे चेति ॥ गौरवादिति ॥ नच भावत्वस्यापि नञर्थानुल्लिखितधीविषयत्वादिरूपत्वेन गौरवमिति वाच्यम् । तस्य मयाऽखण्डधर्मत्वोपगमादिति भावः ॥ अर्थस्येति ॥ शुक्तिरूप्यादिक(शुक्तिरूप्यादिरूपस्येति पाठः)स्येत्यर्थः । त्वन्मतेचेति ॥ शुक्तिरूप्यादेरनिर्वचनीयत्वाभ्युपगन्तुर्मत इत्यर्थः ॥ ज्ञानस्येति ॥ शुक्तिरूप्यादिज्ञानस्येत्यर्थः । तस्य परैरविद्यानिवृत्तिरूपत्वाभ्युपगमादितिभावः । मन्मते त्वित्यस्यानंतरं ज्ञानस्येत्यनुषज्यते ॥ आत्मन इति न्यायरीत्या, अन्तःकरणस्य वेति सिद्धान्तरीत्येति द्रष्टव्यम् ।

ननु सोपादानत्वे असद्विलक्षणत्वस्य सत्त्वेन प्रतीयमानत्वस्य वा तन्त्रत्वमुपादानाजन्यत्वेऽर्थस्य ज्ञानस्य वा अनिर्वचनीयत्वेनाज्ञानोपादानकत्वं दुर्निरसमित्याशंक्याह ॥ सोपादानत्वे चेति ॥ गौरवादिति ॥ उपस्थितिगौरवाच्छरीरगौरवाच्चेत्यर्थः । अतिप्रसक्तत्वादपि सत्त्वेन प्रतीयमानत्वं न तन्त्रमित्याह ॥ तुच्छस्यापीति ॥ ननु यदि शुक्तिरूप्यादिज्ञानं सत्यम् तर्हि रूप्याद्यर्थोऽपि सत् स्यात् । सत्यज्ञानविषयस्य घटादेस्सत्यत्वनियमात् । नचैवं, तस्य ज्ञानमसत्त्विति शंकायां व्यभिचारेण नियम एवासिद्ध इत्याह ॥ नचेति ॥ मिथ्याभूतमित्यज्ञानादिविशिष्टविशेषणं, संतमिति सिद्धान्तरित्योक्तम् । ज्ञानासत्त्वस्य सत्त्वानुभवबाधितत्वाच्च-

प्रति विषयस्य खपुष्पादेरसत्त्ववत् सत्यसाक्षिवेद्याज्ञानादेर्मिथ्यात्ववचोपपत्तेः । एतावंतं कालं रजतज्ञानमासीदितिज्ञानस्य सत्त्वानुसंधानाच्च, असद्वैलक्षण्यमात्रेण सत्त्वानुसंधाने च सद्वैलक्षण्येन नासीदित्यनुसंधानापातात् । अर्थेऽप्यासीदित्यनुसंधानापाताच्च । एतावंतं कालमिहादर्शे मुखमासीदित्यनुसंधानं तु प्रतिबिंबस्य छायादिवत्सत्यत्वात् । किंच अज्ञानस्य भावविलक्षणत्वात् सद्विलक्षणत्वाच्च नोपादानत्वम् । अन्यथा तत्त्वज्ञानप्रागभाव एव भ्रमोपादानं स्यात् । उपादानत्वे च भावत्वं सत्त्वं च तंत्रम्, न त्वभावविलक्षणत्वमसद्विलक्षणत्वं वा गौरवात् । किंच यद्यदनुविद्धतया भाति तत्तदुपादानकम् । नच रूप्यं तज्ज्ञानं वा अज्ञानमिति भाति ।

यत्तु ज्ञाननिवर्त्यत्वमज्ञानलक्षणम् । नच प्रपंचेऽतिव्याप्तिः । तस्याज्ञानपरिणामत्वात् । नहि पृथिवीलक्षणस्य घटादावतिव्याप्तिरिति । तन्न । जीवन्मुक्त्यनुवृत्ताज्ञानादावव्याप्त्यादे-

---

विपर्यये पर्यवसानमित्याह ॥ एतावन्तमिति ॥ नच तदनुसंधानं भ्रमः । बाधकाभावादिति भावः । ज्ञाने सत्त्वानुभवस्यान्यथासिद्धिमाशंक्याह ॥ असद्वैलक्षण्येति ॥ तथाच सत्त्वानुसंधाने सत्त्वमेव प्रयोजकम् । असत्त्वानुसंधाने चासत्त्वमेव प्रयोजकमितिभावः । ननु सत्त्वानुसंधाने सत्त्वस्य प्रयोजकत्वेऽसति प्रतिबन्धे सत्त्वानुसंधानमेव न स्यादित्याशङ्क्य निराकरोति ॥ एतावन्तमिति ॥ सत्यत्वादित्यस्यानंतरं युक्तमिति शेषः । पूर्वमर्थज्ञानरूपस्य भ्रमस्य भावविलक्षणत्वादसद्विलक्षणत्वाच्च मिथ्योपादानत्वमभिधाय सम्प्रति तत एवाज्ञानस्य नोपादानत्वमित्याह ॥ किंचाज्ञानस्येति ॥ अन्यथेति ॥ भावविलक्षणस्याप्युपादानत्व इत्यर्थः । (सति भावत्वं सत्त्वं भावत्वमिति अधिकपाठः) ॥ तन्त्रमिति ॥ उपादानत्वावच्छेदकमित्यर्थः । एतत्परीत्या, सिद्धान्ते अज्ञानादेरनुपादानत्वेन तत्र तत्त्वातिप्रसक्तत्वादित्यवधेयम् ॥ यद्यदनुविद्धतयेति ॥ यदभिन्नतयेत्यर्थः । जडत्वमेवाज्ञानत्वमिति तदवच्छिन्नस्यैव लक्षणत्वेनातिव्याप्त्यादिदोषाभावात् ज्ञाननिवर्त्यत्वमेव तल्लक्षणम् । नहि पृथिवीत्वावच्छिन्नस्य लक्ष्यत्वे गन्धवत्त्वस्य घटादावतिव्याप्तिरिति वक्तुं शक्यमिति यन्मतं तन्मतं दूषयितुमनुवदति । यत्त्विति ॥

अज्ञानपरिणामत्वायुक्तिः प्रपञ्चस्यापि जडत्वरूपलक्ष्यतावच्छेदकावच्छिन्नत्वज्ञापनायेति द्रष्टव्यम् । अज्ञानादावित्यादिपदात् सोपाधिकभ्रमोपादानाज्ञानपरिग्रहः । अव्याप्त्यादेरित्यादिपदेनासम्भवपरिग्रहः ॥ विप्रतिपन्नमिति ॥ विषयावरकत्वानिर्वचनीयत्वरूपत्वादिना

रूकत्वात् । यद्वावरूपाज्ञानं विप्रतिपन्नं तस्य शुक्तिरूप्यादिव्यावृत्तस्य कारणावस्थानाद्य-ज्ञानस्यैव लक्षणीयत्वेन रूपित्वस्य तेजोलक्षणत्वे तत्परिणामेऽप्यवादाविवास्यापि प्रपंचेऽति-व्याप्तेश्च । पृथिवीलक्षणेऽपि कारणावस्थस्यैव लिलक्षयिषितत्वे घटादावतिव्याप्तिरेव, साक्षा-त्वद्ग्रहोपेक्षोपादाननिवृत्तिद्वारेण ज्ञानेन निवर्त्ये प्रपंचेऽतिव्याप्तिपरिहारेऽपि "अभावाभावो भावव्याप्य" इतिमते ज्ञानप्रागभावस्यापि साक्षात्तन्निवर्त्यत्वाच्च । अन्यथाविवरणाविद्यानु-माने आद्यविशेषणवैयर्थ्यम् ।

॥ इति अविद्यालक्षणभङ्गः ॥ ४४ ॥

---

विप्रतिपन्नमित्यर्थः ॥ कारणावस्थानाद्यज्ञानस्यैवेति ॥ अन्यथाभूतकार्यसाधारण्येनापि लक्षण-कथने विप्रतिपत्तिनिरासकत्वेन वैयर्थ्यमेव स्यादिति भावः । ननु कारणावस्थस्य लक्षणीयत्वेऽपि कार्ये अतिव्याप्तिर्नैनदोषः । कार्यकारणयोरभेदादित्याशंक्याह ॥ रूपित्वस्येति ॥ अन्यथा रूपित्व-मेव तेजोलक्षणं स्यादिति भावः । एतच्चोपलक्षणम् । रूपान्तरेणाभेदस्य सर्वत्र सुलभतयाति-व्याप्तिः अपि दोषो न स्यादित्यपि बोध्यम् ।

नन्वेवं कार्यकारणसाधारणतया गन्धवत्वं पृथिवीलक्षणं (न) स्यादित्याशङ्कय कार्यकारण-साधारण्येन लक्षणीयत्वेऽतिव्याप्त्यभावेऽपि कारणावस्थस्यैव लक्षणीयत्वे अतिव्याप्तिरस्त्येवे-त्याह ॥ पृथिवीलक्षण इति ॥ ज्ञानप्रागभावस्यापीति ॥ तथाच तत्रातिव्याप्तिरिति भावः ॥ अन्यथेति ॥ अभावाभावो भावव्याप्य इति मतस्यैवाभाव इत्यर्थः ॥ आद्येति ॥ स्वप्रागभाव-व्यतिरिक्त इत्यर्थः ।

॥ इति अविद्यालक्षणभङ्गः ॥ ४४ ॥

## ॥ अथ भावरूपाज्ञानप्रत्यक्षभङ्गः ॥ ४५ ॥

यच्चाज्ञाने प्रत्यक्षं मानमित्युक्तम् । तन्न । त्वन्मतेऽप्यहमर्थस्य भावरूपाज्ञानाश्रयत्वेनाहमज्ञोऽहं न जानामीत्यादेः प्रामाण्याय ज्ञानाभावविषयत्वावश्यंभावात्, साक्षिवेद्यसुखदुःखाज्ञानादौ प्रातिभासिके च भावरूपाज्ञानाभावेन सुखं न जानामि शुक्तिरूप्यं न जानामीत्यादेः ज्ञानाभावविषयत्वे वक्तव्ये त्वदुक्तमर्थं न जानामीत्यादेरपि तथात्वाच्च । त्वन्मते परोक्षवृत्तेर्विषयावरकाज्ञानानिवर्तकत्वेन परोक्षतो ज्ञातेऽपि न जानामीत्यनुभवापाताच्च । त्वन्मते जडावरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीत्यादेरपि प्रामाण्याय ज्ञानाभावविषयत्वाच्च । नच जडे आवरणरूपातिशयाभावेऽपि विक्षेपरूपातिशयस्य सत्त्वा-

---

॥ अथ भावरूपाज्ञानप्रत्यक्षभङ्गः ॥ ४५ ॥

त्वन्मत इति ॥ अज्ञानस्य चिन्मात्राश्रितत्वाभ्युपगमेनाहमर्थस्य चातथात्वात् । तन्निष्ठतया प्रतीयमानमज्ञानमभावरूपमेव । अन्यथा तत्प्रतीतेः प्रमात्वमेव न स्यादिति भावः । नच घटे रूपमित्यत्र घटत्वस्योपाधित्वेन यथा न रूपाश्रयतानुकोटि (कोटि) निवेशः तथाहमज्ञ इत्यत्राप्यहंकारस्योपाधित्वेन नाज्ञानाश्रयकोटिनिवेश इति तत्प्रतीतेर्भावरूपाज्ञानविषयत्वेऽपि न प्रमात्वक्षतिरिति वाच्यम् । तथाप्युपहितस्यानुपहितादन्यत्वेनाज्ञानस्य तदाश्रितत्वे त्वदभ्युपगतानुपहितचैतन्यमात्राश्रितत्वासिद्धेः । चिदचिद्ग्रन्थेरहमर्थत्वस्वीकारेण तन्निष्ठधर्मस्योपाधित्वेऽपि चिदंशवदचिदंशस्याज्ञानाश्रयत्वस्य दुर्निरसतया तत्प्रतीतेः प्रमात्वनिर्वाहाय तद्विषयाज्ञानस्य ज्ञानाभावरूपत्वावश्यंभावाच्चेति, क्लृप्तज्ञानाभावविषयत्वस्यैवोचितत्वादित्यर्थः ॥ न जानामीत्यादेः ॥ सुखदुःखाज्ञानादाविति ॥ सुखदुःखाज्ञानविषयादावित्यर्थः । अत्रादिपदेन इच्छाद्वेषादिपरिग्रहः । भावरूपेति ॥ भावरूपाज्ञानस्यानभ्युपगमेनेत्यर्थः ॥ तथात्वाच्चेति ॥ तन्न्यायेन क्लृप्तज्ञानाभावविषयत्वस्यैवोचितत्वादित्यर्थः । न जानामीतिप्रतीतेः भावरूपाज्ञानविषयत्वे बाधकमप्याह ॥ त्वन्मत इति ॥ विक्षेपरूपातिशयस्येति ॥ तज्जन्यातिशयशालित्वस्यैव तद्विषयत्वादित्यर्थः ॥ विक्षेपसद्भावेऽपीति ॥ घटत्वपटत्वयोः परस्परविरहव्याप्यत्वाप्रतिसंधानदशायां शब्दाभासस्य बोधकत्वेन तज्जन्यभ्रान्तेरनिर्वचनीयत्वस्यावश्यकत्वात् । अन्यथा क्वापि तन्न स्यादिति भावः ।

ननु मास्तु जडावरकमज्ञानम् । नच त्वदुक्तमर्थं न जानामीत्यस्य ज्ञानाभावविषयत्वप्रसक्तिः तस्य तदवच्छिन्नचैतन्याज्ञानविषयत्वादिति शङ्कते ॥ नन्विति ॥ दूषयति ॥ विषया-

दज्ञानविषयतास्तीति न जानामीत्यनुभव इति वाच्यम् । अपरोक्षतो घटत्वेन ज्ञातेऽपि घटेऽयं घट इति वाक्याभासादिविक्षेपसद्भावेऽपि घटं न जानामीत्यनुभवाभावात् । ननु जडे न जानामीत्यनुभवस्य जडावच्छिन्नं चैतन्यं विषय इति चेन्न । निरसिष्यमाणत्वात् । वृत्तिः चिदुपरागार्थेतिमते जडावच्छिन्नचैतन्यावरकाज्ञानस्याप्यभावाच्च । भावरूपाज्ञानविषयत्वेनाभिमतस्याहमज्ञ इति ज्ञानस्य ज्ञानाभावविषयत्वेनाभिमतात् मयि ज्ञानं नास्तीति ज्ञानादघटं भूतलमिति ज्ञानस्य भूतले घटो नास्तीति ज्ञानादिवद्विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतेश्च । प्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानाभावज्ञानदूषणं तु समव्याहतम् । भावरूपाज्ञानवादेऽपि इदानीं वेदान्तश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानस्य त्वयापि वक्तव्यत्वात् । नच भावरूपाज्ञानेन लिंगेन ज्ञानाभावानुमेति वाच्यम् । वृत्तिज्ञानस्य साक्षिवेद्यत्वेन तदभावस्यापि दुःखाद्यभाव-

---

वच्छिन्नचैतन्यस्यावरणाभावेऽपि संबन्धाभावेनैव घटाद्यप्रकाशोपपत्तौ तदर्थं तदवच्छिन्नचैतन्यावरकाज्ञानं न कल्पनीयमिति भावः ॥ इच्छाद्वेषाभावज्ञानयोरिवेति ॥ तथाहि नेच्छाम्यहम्, मयीच्छा नास्ति, तथा नाहं द्विट् (द्वेष्मि पा.) मयि द्वेषो नास्तीति प्रतीत्योर्विशेषणविशेष्यभावव्यत्यासमात्रं तथा अहमज्ञो मयि ज्ञानं नास्तीत्यत्रापि विशेषणविशेष्यभावव्यत्यासमात्रमेवेति न तादृशानुभवो भावरूपाज्ञाने प्रमाणम् । अन्यथा भावरूपाविच्छादिकमपि सिध्येदिति भावः । ननु धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां तादृशानुभवस्य न ज्ञानाभावविषयत्वं संभवतीति तस्याः भावरूपाज्ञानविषयत्वमेव कल्पनीयम् । नेच्छामीत्यादौ बाधकाभावात् कल्प्यभावविषयत्वमेवेत्याशङ्क्याह ॥ प्रतियोगीति ॥ व्याहतिमेवोपपादयति ॥ भावरूपेति ॥ परेणापि तत्त्वज्ञानप्रागभावोऽवश्यं स्वीकर्तव्यः [illegible] प्रवृत्तिविषयस्य प्रागसत्त्वनिश्चयं विना तत्साधने तदर्थिनः तादृशप्रवृत्त्यनुपपत्तेः । तथा च तत्प्रतियोगिभूततत्त्वज्ञानं ज्ञानाभावेन तत्प्रागभावज्ञानं, तज्ज्ञाने च प्रतियोगिज्ञानावश्यम्भावेन [illegible] तत्त्वस्यापरोक्षीकरणाच्च तदपरोक्षज्ञानप्रागभाव इति तत्प्रागभावः संभवतीति दोषसाम्यात् समव्याहतिः । नच यत्किञ्चिदपरोक्षज्ञानसत्त्वेऽपि मोक्षहेत्वपरोक्षज्ञानप्रागभावसत्त्वाविरोध इति वाच्यम् । तथासति न जानामीत्यत्रापि ज्ञानविशेषाभावमादायाविरोधः संभवतीति भावः । (अविरोधसंभवात् इति पा.) ज्ञानाभावानुमितिरिति ॥ प्रतियोगि[illegible] एव कारणं नान्यनुमितावपीति नोक्तदोष इति भावः । ज्ञानाभावस्य योग्यप्रतियोगिकत्वेन योग्यत्वा[illegible] विनापि प्रतीयमानत्वाच्च न तज्ज्ञानमनुमितिरूपमित्याह ॥ वृत्तिज्ञानस्येति ॥ किञ्च यदि ज्ञानाभावज्ञानं भावरूप-

वत् साक्षिणा अनुपलब्ध्या वा झडिति प्रतीतेः । त्वन्मते जडे भावरूपाज्ञानरूपलिंगाभावाच । अपरोक्षतो ज्ञाते भावरूपाज्ञानाभावेन तत्र परोक्षज्ञानाभावासिद्ध्यापाताच । दुःखादौ प्रातिभासिके च भावरूपाज्ञानाभावेन दुःखादिज्ञानाभावप्रतीत्ययोगाच । प्रतियोग्यादिज्ञाना-ज्ञानाभ्यामनुमित्यापि ज्ञानाभावस्य दुर्ग्रहत्वाच । अपिच भावरूपाज्ञानमपि न जानामीति ज्ञानविरोधित्वेनैव भाति । मुग्धोऽस्मीत्यादौ तु प्रलयादिशब्देष्विव नञनुल्लेखमात्रम् । अत एव ज्ञानाभावाभिप्रायेणापि मुग्धोऽस्मीत्युच्यते । उक्तं च विवरणे 'अज्ञानमिति द्वयसापेक्ष-ज्ञानपर्युदासेनाभिधानात्' इति । अन्यथा अज्ञानस्य ज्ञानविरोधोऽप्रामाणिकः स्यात् । तथाच विरोधनिरूपकभूतज्ञानस्य ज्ञानाज्ञानाभ्यामज्ञानस्यापि ज्ञानं दुर्घटं स्यात् । ज्ञानाभावोऽपि हि प्रमेयत्वादिना ज्ञाने प्रतियोग्यादिज्ञानानपेक्षः । एतेन निपुणे कुशलादिशब्दवत्

---

ज्ञानलिङ्गकमेव स्यात्तथा जडविषयकज्ञानप्रागभावो न सिध्येत् । जडावरकाज्ञानाभावादित्याह ॥ त्वन्मत इति ॥ ननु जडविषयकज्ञानं वस्त्ववच्छिन्नचैतन्यविषयकाज्ञानलिङ्गेन सिद्ध्यतीत्यत आह ॥ अपरोक्षत इति ॥

अस्तु वा ज्ञानाभावज्ञानमनुमितिरूपं तथापि नोक्तदोषनिस्तारः । अनुमितेर्व्यापक-तावच्छेदकप्रकारकत्वनैयत्येन प्रतियोगिभूतज्ञानावच्छेदकप्रकारकज्ञानावश्यंभावात् तदभावे च तादृशानुमितेरेवायोग्यत्वादित्यभिप्रेत्याह ॥ प्रतियोग्यादीति ॥ किञ्च धर्म्यादिज्ञानाज्ञानाभ्यां ज्ञाना-भावज्ञानदूषणं भावरूपाज्ञानज्ञानेऽपि समं तस्यापि धर्म्यादिज्ञानसापेक्षत्वादित्याह ॥ अपिचेति ॥ ननु भावरूपाज्ञाने न ज्ञानविरोधित्वेन प्रतीतिनियमः । मुग्धोऽस्मीति स्वरूपेणापि तत्प्रतीति-दर्शनात् । अन्यथा नञुल्लेखप्रसङ्ग इत्याशङ्क्य नञनुल्लेखेऽपि मुग्धोऽस्मीत्यादिव्यवहारहेतुभूत-ज्ञाने ज्ञानविरोधित्वेनैवाज्ञानं भासत इत्यभ्युपगमः । अन्यथा ज्ञानस्य ज्ञानविरोधित्वाभावे मुग्धशब्देनानुवादो न स्यादिति परिहारमाह ॥ मुग्धोऽस्मीत्यादाविति ॥ अत एव मुग्ध-शब्दस्य ज्ञानविरोधित्वोपस्थापकत्वादेव अज्ञानं ज्ञानविरोधितयैव भासत इत्यत्र विवरणस्य सम्मतिमाह ॥ उक्तञ्चेति ॥ द्वयसापेक्षज्ञानपर्युदासेनेति ॥ आश्रयविषयसापेक्षं यज्ज्ञानं तद्विरोधेनेत्यर्थः ॥ अन्यथेति ॥ अज्ञानस्य ज्ञानविरोधित्वेन भानानभ्युपगमादित्यर्थः ॥ तथा-चेति ॥ विरोधिनिरूपकज्ञानस्य ज्ञाने तदवच्छेदकविषयस्यापि ज्ञाततया तद्विषयकाज्ञानस्यैवा-संभवात् तदज्ञाने च निरूपकस्य ज्ञानाभावाज्ञानज्ञानं दुर्घटमित्यर्थः । ननु अज्ञानज्ञानस्य न प्रति-

साक्षिरूपम् । न जानामीतिधीस्तु वृत्तिज्ञानाभावविषयेति सुवचत्वात् । तस्मात्त्वयाप्यवच्छेदकस्य विषयस्य सामान्यतो ज्ञानेऽपि विशेषे भावरूपाज्ञानमितिवाच्यम् । तत्सत्त्वे ज्ञानाभावेऽपि तद्विशेषज्ञानाभावज्ञानं प्रति च तत्सामान्यज्ञानमेवान्वयव्यतिरेकाभ्यां हेतुः, न तु तद्विशेषज्ञानमित्यविद्याविषयभंगे वक्ष्यते । अपरे तु विशेषस्य स्वरूपेण ज्ञानेऽपि विशेषप्रकारकज्ञानं निषिध्यते तस्यैव संशयादिविरोधित्वात् । संभवति हि सर्वत्र प्रमेयत्वाद्याकारेण विशेषज्ञानमित्याहुः ।

केचित्तु करतलामलकादिज्ञाने स्वविषयेतरप्रतियोगिकव्यावृत्त्यधिकरणतावच्छेदकधर्मविषयत्वादिकं प्रसिद्धमिह ज्ञाने निषिध्यत इत्याहुः ।

---

स्यात् तदभावे कथं विशेषाभावधीरित्यत आह ॥ तद्विशेषेति ॥ अयमाशयः—घटं न जानामीत्याद्याकारकं भावरूपस्याभावरूपस्य वाज्ञानस्य प्रत्यक्षं घटपटाद्यर्थस्य घटपटादिशब्दार्थः कश्चिदस्तीत्यादिसामान्याकारेण ज्ञानाभावे न दृश्यते, सति च तस्मिन् दृश्यत इत्यन्वयव्यतिरेकाभ्यां सामान्येन रूपेण उभयविधाज्ञानविषयसजातीयस्य ज्ञानं हेतुः । नहि घटशब्दार्थत्वादिनापि घटादिज्ञानाभावे घटं न जानामीत्याद्यभिलापहेत्वज्ञानानुभवः कदाप्यनुभूयते । तथाच सामान्यतः तद्विषयसजातीययत्किंचिद्विषयज्ञानसत्त्वेऽपि विशेषतः तद्विषयविशेषगोचरज्ञानाभावो न विरुद्ध इति उभयवादिसंप्रतिपन्नतदभावविषयमेव घटं न जानामीत्यादिप्रत्यक्षम् । नन्वेवं सामान्याकारेणापि ज्ञातं घटादिविषयकं ज्ञानं तद्विशेषाविषयं तद्विशेषज्ञानाभावप्रत्यक्षे कथं हेतुरतिप्रसंगादिति वाच्यम् । उक्तरीत्या सिद्धे, हेतुमत्त्वसामान्यविशेषाभावस्यैव अतिप्रसंगभंजकत्वकल्पनादिति । न जानामीत्यनुभवस्य सामान्यलक्षणानभ्युपगन्तृस्वमतेन विषयविशेषगोचरज्ञानविशेषाभावविषयत्वमुपपाद्य तदभ्युपगन्तृमतेऽपि तस्य उभयवादिसम्प्रतिपन्नज्ञानविशेषाभावविषयत्वमुपपादयितुमाह ॥

अपरे त्विति ॥ विशेषस्येति ॥ वस्तुनो विषयगतविशेषस्य प्रमेयत्वादिसामान्याकारेण ज्ञानसत्त्वेऽपीत्यर्थः । तर्हि विषयविशेषज्ञानसत्त्वे कथं न जानामीत्यनुभवस्य तदभावविषयत्वनिर्वाह इत्यत आह ॥ विशेषप्रकारकेति ॥ तस्यैवेति ॥ अन्यथा स्वरूपेण विशेषगोचरज्ञानस्यापि विशेषप्रकारकज्ञानवत् संशयविपर्ययविरोधित्वे क्वापि संशयविपर्ययौ न स्यातामिति भावः । न जानामीत्यनुभवस्य ज्ञानविशेषाभावविषयत्वेन अन्यथासिद्धतया न भावरूपाज्ञानसाधकत्वमित्युपपाद्य धर्मविशेषविषयत्वाभावविषयतया अन्यथासिद्धत्वेन न भावरूपाज्ञानसाधकत्वमिति ये मन्यन्ते तन्मतमुपन्यस्यति ॥ केचित्त्विति ॥ धर्मविषयत्वादिकमित्यादिपदेन

च धर्माद्यज्ञानं निवृत्तमित्यनुभवाच्च । तस्य ज्ञानाभावविषयत्वे च भावरूपाज्ञानं न सिद्ध्येत् । परोक्षतो ज्ञातेऽप्यपरोक्षभ्रमोऽस्मन्मते उपाध्यादिदोषाद्युक्तः । त्वन्मते तु भ्रमस्याज्ञानोपादानकत्वात् स न स्यादेव । अंत्ये तद्वदेव विषयाग्रहणेऽपि ज्ञानाभावावच्छेदकस्य ज्ञानस्य ग्रहणसिद्धिः । न किंचिदहमवेदिषमिति परामर्शोऽपि एतावंतं कालं दुःखं नावेदिषं शुक्तिरूप्यं नावेदिषमित्यादिवत् ज्ञानाभावविषयः । नच तदा धर्म्यादिज्ञानाभावाद्भावज्ञानायोगः । भावरूपाज्ञानस्याप्यज्ञानत्वेन प्रतीतौ तदपेक्षणात् । यदि च विषयसामान्यविशेषितमेव ज्ञानं सुषुप्तावज्ञाननिरूपकम्, तर्हि तदेव तदा ज्ञानाभावनिरूपकमस्तु । ननु तदा स्वरूपेणानुभूतमज्ञानमिदानीं प्रतियोगिविशेषावच्छेदेनानुभूयत इति चेत्, समं ज्ञानाभावेऽपि । अभावस्यापि प्रमेयत्वादिना ज्ञाने तदनपेक्षणात् । यद्वा नायं परामर्शः किंत्वानुमानिको ज्ञानाभावानुभवः । अवस्थाविशेषस्य वा इंद्रियसंप्रसादेन तदुपरमानु-

---

अज्ञाननिवृत्तिं विना तदुपादेयभ्रमनिवृत्त्ययोगादिति भावः ।

ननु परोक्षज्ञानस्यापि अज्ञाननिवर्तकत्वे त्वन्मतेऽपि परोक्षतो ज्ञातेऽपरोक्षभ्रमो न स्यात् इत्याशङ्क्याह ॥ परोक्षत इति ॥ अस्मन्मते भ्रमस्याज्ञानानुपादानकत्वेनाज्ञाननिवृत्तावपि प्रबलदोषांतरवशात् भ्रमः संभवतीति भावः । प्रत्युत त्वय्येवायं दोषः, इत्यत आह ॥ त्वन्मते त्विति ॥ अंत्य इति ॥ अज्ञानविषयस्य वृत्त्यप्राप्तत्वेऽपि यथाज्ञानज्ञानं तद्वदेव विषयस्याज्ञानेऽपि प्रतियोगिभूतज्ञानज्ञानसम्भवात् ज्ञानाभावः सुग्रह इति भावः । अहमज्ञ इत्यादिप्रत्यक्षस्य ज्ञानाभावविषयत्वेनान्यथासिद्धिमुपपाद्य परामर्शसिद्धसौषुप्तिकप्रत्यक्षमप्यन्यथयति ॥ न किञ्चिदहमवेदिषमितीति ॥ धर्म्यादिज्ञानाभावादिति ॥ तत्काले च सर्वज्ञानोपरमरूपसुषुप्तिरेव न सिध्येदिति भावः ॥ अज्ञानत्वेनेति ॥ ज्ञानविरोधित्वेनेत्यर्थः ॥ विषयेति ॥ सामान्याकारेण विषयविषयकं साक्षिज्ञानमित्यर्थः ॥ स्वरूपेणेति ॥ ज्ञानविरोधित्वादिप्रकारीभूतधर्माग्रहेणेत्यर्थः । नन्वभावप्रत्यक्षमात्रे धर्म्यादिज्ञानस्य कारणत्वात् तदभावे कथं ज्ञानाभावधीरित्यत आह ॥ अभावस्यापीति ॥ अभावत्वादिप्रकारकज्ञान एव तदपेक्षेति भावः । न्यायमतानुसारेण पक्षान्तरमाह ॥ यद्वेति ॥ ननु व्याप्तलिङ्गाभावात् कथं न किञ्चिदवेदिषमित्यनुभवस्यानुमानिकत्वमित्यत आह ॥ अवस्थाविशेषस्य वेति ॥ जाग्रत्स्वप्नादिकालान्यत्वरूपसुषुप्त्यवस्थाविशेषस्य वेत्यर्थः । सामग्र्यभावस्य लिङ्गत्वं वक्तुं तस्य कार्याभावे नैयत्येन कथं ज्ञानाभावलिङ्गत्वमित्याशङ्कावारणायाह ॥ इन्द्रियसंप्रसा-

तदा ज्ञानाभावासिद्ध्यापाताच्च । किंचैवं सुषुप्तिकालीनो रागाद्यभावो न सिद्ध्येत् । नहि तदा रागादिविरोधी द्वेषोऽस्ति येनाज्ञानेन ज्ञानाभाव इव द्वेषेण रागाभावोऽनुमीयेत । नच ज्ञानाभावादेव रागाद्यभावसिद्धिः । प्रकाशमान आत्मादौ तदभावासिद्धेः । तस्मात्प्रत्यक्षं भावरूपाज्ञाने मानम् ।

॥ इति भावरूपाज्ञानप्रत्यक्षभङ्गः ॥ ४५ ॥

---

अतीतादिज्ञान इव तदुल्लेखापातात् इति भावः ॥ किञ्चैवमिति ॥ तद्विरुद्धपदार्थसत्त्वेनैव तदभावानुमान इत्यर्थः ॥ प्रकाशमान इति ॥ तथाचात्मादिविषयकरागाद्यभावो न सिध्येदिति भावः । उपसंहरति ॥ तस्मादिति ॥ उक्तानुभवस्यान्यविषयत्वसमर्थनादित्यर्थः ॥

॥ इति भावरूपाज्ञाने प्रत्यक्षभङ्गः ॥ ४५ ॥

## ॥ अथ अविद्यानुमानभङ्गः ॥ ४६ ॥

यच्चाद्यानुमानं तत्र सुखादिप्रमायां बाधः। तस्याः साक्षिरूपत्वेनाज्ञानानिवर्तकत्वात्। वृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ बाधः। तस्याः स्वविषये अज्ञाननिवर्तकत्वे तद्विषयस्याभिव्यक्तापरोक्षैकरसचैतन्यसंभेदेनापरोक्षत्वापाताच्च। उक्तं च विवरणे। "विषयत्वं नानुमेयादौ सुषुप्तिव्यावृत्तिः" इति। अपरोक्षवृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ व्यभिचारः। तद्व्यावृत्त्यर्थं हेतुविशेषणे अप्रयोजकत्वम्। सर्वभ्रमेष्वधिष्ठानत्वेनानुगतसदर्थविषयापरोक्षवृत्तौ बाधश्च। तन्निवर्त्याज्ञानसद्भावे भ्रमोपादानत्वलक्षणस्य तत्राव्याप्तिः स्यात्। नहि सदर्थरूपाधिष्ठानाज्ञाने कश्चिद्भ्रमः। तदन्यस्य पक्षत्वे धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च। स-

---

### ॥ अथ अविद्यानुमानभङ्गः ॥ ४६ ॥

यच्चेति ॥ विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वात्। अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति यदाद्यानुमानं तत्रेत्यर्थः। किमत्र प्रमाणज्ञानपदेन चैतन्यं विवक्षितं उत वृत्तिरिति विकल्प्य नाद्य इत्याह ॥ सुखादीति ॥ तस्या इति ॥ साक्षिभास्ये अज्ञानस्यैवाभावादिति भावः। द्वितीयेऽपि किं वृत्तिमात्रं विवक्षितं उतापरोक्षवृत्तिरिति विकल्प्याद्यं निराह ॥ परोक्षेति ॥ बाधमेवोपपादयति ॥ तस्या इति ॥ चैतन्यसंभेदेनेति ॥ चैतन्यतादात्म्येनेत्यर्थः। परोक्षवृत्तेरज्ञाननिवर्तकत्वे विषयस्याविरोधश्च स्यादित्यभिप्रेत्याह ॥ उक्तं चेति ॥ द्वितीयेऽपि किमपरोक्षवृत्तिमात्रं पक्षः उत विशेषाकारवृत्तिरिति। तत्राद्यं निराचष्टे ॥ अपरोक्षेति ॥ ननु परोक्षवृत्त्यन्यत्वेन हेतुविशेषणान्न व्यभिचार इत्याशङ्क्याह ॥ तद्व्यावृत्त्यर्थमिति ॥ किञ्चापरोक्षवृत्तिमात्रं पक्ष इति वदता इदमाकारवृत्तिनिवर्त्याज्ञानं स्वीक्रियते न वेति वक्तव्यम्। तत्र नान्त्य इत्याह ॥ सर्वभ्रमेष्विति ॥ अनुगतेति ॥ अधिष्ठानसामान्यज्ञानरूपेदमाकारवृत्तावित्यर्थः। आद्यं निराचष्टे ॥ तन्निवर्त्येति ॥ तस्य भ्रमोपादानत्वासंभवादिति भावः ॥ तस्य हि तदुपादानत्वे अधिष्ठानसामान्यज्ञानमस्ति न वा। आद्ये तेनैव निवृत्तत्वादनुपादानत्वम् द्वितीये कारणाभावादेव तदसंभव इत्यभिप्रेत्याह ॥ नहीति ॥ विशेषाकारापरोक्षवृत्तिरिति द्वितीयेऽपि किं धारावाहिकद्वितीयादिवृत्तेरपि पक्षत्वमुत प्राथमिकवृत्तेरेवेति विकल्प्याद्यं दूषयति ॥ तदन्यस्येति ॥ ननु द्वितीयादिवृत्तिसमवहिताया एव प्राथमिकवृत्तेरज्ञाननिवर्तकत्वात्तत्र बाध इत्यत आह ॥

निवर्त्यप्रथमप्रभाव्यवहितायास्तस्याः द्वितीयादिप्रभायाः तमः प्रतीवाज्ञानं प्रत्यनिवर्तकत्वात् । सूक्ष्मतत्तत्क्षणानामप्रत्यक्षत्वेन प्रकाशितप्रकाशकत्वाच्च । तदन्यस्य पक्षत्वेऽपि अनात्मविषयापरोक्षवृत्तौ बाधः । त्वन्मते जडावरकाज्ञानाभावात् । ननु घटोऽयमित्यादिवृत्तिरपि तदवच्छिन्नचैतन्यविषया अज्ञानमपि तथेति न बाध इतिचेन्न । एकाज्ञानपक्षे तदभावात्, अवच्छिन्नस्याप्यस्वप्रकाशत्वेनाप्रसक्तप्रकाशतयावरणायोगाच्च । रूपादिहीनस्यात्मन आकाशादिवद्घटाद्यवच्छिन्नस्यापि चाक्षुषत्वाद्ययोगस्योक्तत्वाच्च । अयं घट इति शब्दजन्येन घटमात्रविषयकज्ञानेनायं घट इत्यपरोक्षवृत्तेः विषयभेदाप्रतीतेश्च । आत्मविषयापरोक्षवृत्तेः पक्षत्वेऽप्यनात्मज्ञाने व्यभिचारः । आत्मविषयत्वेन हेतुविशेषणे दृष्टांतस्य साधनवैकल्यमितिदिक् । साध्येऽप्याद्यं विशेषणं व्यर्थम् । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति त्वन्मते अभावनिवृत्तिरेव भाव इति मन्मते च स्वनिवर्त्यविशेषणेनैव प्रागभावव्यावृत्तिसिद्धेरभाव-

---

स्वनिवर्त्येति ॥ स्वशब्देनात्र द्वितीयादिभ्रमोच्यते । तत्राद्यप्राथमिकवृत्तेस्तु (न) तत्साहित्ये-नाज्ञाननिवर्तकत्वमिति बाध एवेति भावः । ननु नासिद्धिः तत्तत्क्षणावच्छिन्नघटादीनां पूर्वमप्रकाशितत्वेन द्वितीयादिवृत्तेरप्यप्रकाशितार्थप्रकाशकत्वादित्यत आह ॥ सूक्ष्मेति ॥ तथा च क्षणादीनामतीन्द्रियत्वेन तद्विशिष्टस्याप्यतीन्द्रियत्वापत्त्या प्रत्यक्षायोग्यतया केवलघटस्यैव प्रत्यक्षविषयतया द्वितीयादिवृत्तेः प्रकाशितार्थप्रकाशकत्वेनासिद्धिरेवेति भावः । द्वितीये च किमनात्मज्ञानं पक्षः उतात्मज्ञानमिति विकल्प्य तत्राद्ये दोषमाह ॥ तदन्यस्य पक्षत्वेऽपीति ॥ एकाज्ञानपक्ष इति ॥ तत्पक्षेऽज्ञानस्य चिन्मात्रविषयत्वेन तदवच्छिन्नचैतन्यविषयाज्ञानाभावादिति भावः । नानाज्ञानपक्षेऽपि दोषमाह ॥ अवच्छिन्नेति ॥ यथाहि जडस्य प्रकाशाप्रसक्त्या न तदावरकमज्ञानम् । एवं तदवच्छिन्नचैतन्यस्यापीति भावः । अज्ञानस्य घटाद्यवच्छिन्नचैतन्यविषयत्वं निराकृत्य चाक्षुषादिप्रतीतेरपि न तद्विषयकत्वं तत्प्रयोजकरूपादिहीनत्वादित्याह ॥ रूपादिहीनस्येति ॥ रूपादिहीनद्रव्यस्येत्यर्थः ।

ननु यथा मीमांसकमते रूपादिहीनस्यापि कालस्य बहिरिन्द्रियवेद्यत्वं तद्वदात्मनोऽपि स्यादित्यत आह ॥ अयं घट इतीति ॥ तथा चानुभवानुरोधेन प्रत्यक्षप्रतीतेर्घटमात्रविषयत्वेन तत्राज्ञानाभावेन बाध एवेति भावः । द्वितीये आह ॥ आत्मविषयेति ॥ अभावनिवृत्तिरेवेति ॥ प्रागभावनिवृत्तिः प्रतियोग्येवेति मन्मते चेत्यर्थः ॥ व्यावृत्तिरिति ॥ प्रागभावध्वंसस्य प्रति-

व्यतिरिक्तपदेनैव तद्व्यावृत्तिसिद्ध्या शेषवैयर्थ्याच्च । द्वितीयं चायुक्तम् । जडे अज्ञानस्यानंगीकृतत्वात् । निर्विशेषचितश्चाज्ञानादिसाक्षितया प्रकाशमानत्वेनाज्ञानस्यावरणत्वायोगात् । स्वोत्पादकादृष्टव्यावृत्तेरावरणपदेनैव सिद्ध्या शेषवैयर्थ्याच्च । ज्ञानमज्ञानस्यैव निवर्तकमिति त्वन्मते स्वोत्पादकादृष्टस्य स्वनिवर्त्यपदेनैव व्यावृत्तिसिद्धेः । तृतीयं चायुक्तम् । वृत्ति-

---

योगित्वेन तत्साम्यत्वाभावादिति भावः । न च प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तैव, अन्यथा प्रतियोगिध्वंसे प्रागभावोन्मज्जनप्रसङ्ग इति वाच्यम् । मानाभावात् । अभावमात्रप्रतियोगिकाभावानङ्गीकारापत्तेः । प्रतियोगिध्वंसस्यैव प्रतियोगितत्प्रागभावोभयविरोधित्वोपपत्तेश्च, विशेषणवैयर्थ्याच्चेति । न च न विशेषणवैयर्थ्यम् । अन्यथाभावेन वैयर्थ्यशंकानवकाशादिति वाच्यम् । एवमप्यनेकविशेषणविशिष्टप्रतियोगिकाभावापेक्षया विशेष्यमात्रप्रतियोगिकाभावस्य लघूपस्थितिकत्वेन तादृशाभावघटितधर्मस्यैव व्यापकतावच्छेदकत्वौचित्यात् ॥ द्वितीयमिति ॥ स्वविषयावरणद्वितीयविशेषणं चेत्यर्थः । ननु विषयावरणेत्यत्र विषयपदेन किं घटादिकं विवक्षितं उत चैतन्यम् । नाद्य इत्याह ॥ जड इति ॥ द्वितीयं निराह ॥ निर्विशेषचितश्चेति ॥ शुक्त्यादौ भासमाने रजतविशेषस्यावृतत्ववत् चैतन्यमात्रभानेऽपि तद्विशेषस्य आवरणमस्त्विति शंकानिरासार्थं निर्विशेषेत्युक्तम् ॥ आवरणत्वायोगादिति ॥ आवरकत्वायोगादित्यर्थः । न च यथा प्रकाशमानस्यैव रवेर्मेघावृतत्वं तद्वदत्रापि स्यादिति वाच्यम् । अज्ञानेन साक्षिण आवृतत्वे तत्प्रतीतिरेव न स्यात् । अनावृतचित एव भासकत्वाभ्युपगमादिति भावः । शेषवैयर्थ्यादिति ॥ स्वविषयेत्यंशवैयर्थ्याच्चेत्यर्थः । किञ्च विशेष्यभागोऽपि व्यर्थः । तत्प्रयोजनस्यान्यत एव सिद्धेरित्याह ॥ ज्ञानमज्ञानस्यैवेति ॥ यद्यपि परैरविद्यातत्कार्ययोर्ज्ञाननिवर्त्यत्वाभ्युपगमाददृष्टस्यापि ज्ञाननिवर्त्यत्वमस्त्येव । तथापि तस्याज्ञाननिवर्तकत्वेनान्यथासिद्धेर्न तत्कार्यनिवर्तकत्वम्, उपादाननाशद्वारेणोपपत्त्या तदसंभवात् ॥ वृत्तिरिति ॥ एतन्मते घटाधिष्ठान (चैतन्येऽज्ञानावरणयोरभिभवेन इति पा.) चैतन्यस्यावरणाभिभवकाभिव्यक्तेर्जातत्वेन पक्षीभूतघटादिज्ञानस्य अविद्यानिवर्तकत्वमेव नास्तीति बाध इति भावः ॥ घटाकारवृत्त्येति ॥ एतन्मते च पक्षीभूतघटादिप्रकाशकस्याधिष्ठानचैतन्यस्याविद्यानिवर्तकत्वाभावात्, अविद्यानिवर्तकवृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य च घटप्रकाशकत्वाभावात् बाध इति भावः ।

ननु वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य च अज्ञाननिवर्तकस्यैव घटादिप्रकाशकत्वाङ्गीकारात् नोक्त-

परागार्थेतिमते घटाकारवृत्त्या तत्प्रतिबिंबितचैतन्येन वाभिव्यक्तं घटा(विषया)धिष्ठान-
न्यं घटप्रकाशकमितिमते च घटप्रकाशकज्ञानस्य घटाज्ञानानिवर्तकत्वात् । घटाकारवृत्तिः
तिबिंबितचैतन्यं वा घटप्रकाशकमितिमतस्य चाध्यासिकसंबंधस्यातंत्रत्वापातेनायोगा-
साक्षात्कारोत्पत्तिप्रतिबंधकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्ध्या स्वनिवर्त्यपदेन
वृष्यसिद्धेश्च । चतुर्थं चायुक्तम् । अज्ञानस्य चिन्मात्राश्रितत्वाद्वृत्तेः तत्प्रतिबिंबितचैतन्यस्य
द्भिव्यक्ताधिष्ठानचैतन्यस्य वा प्रमाणज्ञानस्य तदनाश्रितत्वात् । त्वन्मतेऽपि विषयस्था-
स्यैवावरणत्वाच्च । अज्ञातत्वस्य तद्विषयकज्ञानाभावरूपत्वे आद्यविशेषणेनैव व्यावृत्ति-
रविद्याविषयत्वरूपत्वे चाऽविद्याऽसिद्ध्या चतुर्थवैयर्थ्याच्च । किञ्च स्वविषयावरणपूर्वक-
तावतैवालम्, अन्यद्व्यर्थम् । नहि प्रमाप्रागभावः प्रमोत्पत्तिप्रतिबंधकादृष्टं वा अज्ञा-
रिक्तमन्यत्किंचिद्वा आवरणम् । तथात्वे तेनैव स्वप्रकाशमप्यावरणसंभवेन हेतोरप्रयो-

इति मतमनूद्य दूषयति ॥ घटाकारवृत्तिरिति ॥ आध्यासिकेति ॥ आध्यासिकसंबंध-
विषयविषयिभावप्रयोजकतया घटाद्यधिष्ठानचैतन्यस्यैव घटप्रकाशकत्वं वक्तव्यम् । ननु
तत्प्रतिबिंबितचैतन्यस्य वा । तयोस्तदधिष्ठानत्वाभावात् । अन्यथा घटादेरध्यस्तत्वमेव
स्येदिति भावः । एतेऽपि स्वनिवर्त्यपदे चरमसाक्षात्कारोत्पत्तिप्रतिबंधकादृष्टमादायपौनर-
त्यम् । तस्यापि ज्ञाननिवर्त्यत्वादित्याह ॥ चरमसाक्षात्कारेति ॥ मिथ्यात्वासिद्ध्येति ॥
नेवर्त्यत्वलक्षणमिथ्यात्वासिद्ध्यापत्त्येत्यर्थः । तदनाश्रितत्वादिति ॥ चिन्मात्रानाश्रितत्वा-
दज्ञानसमानदेशत्वाभावेन बाध एवेति भावः ॥ विषयस्थाज्ञानस्यैवेति ॥ तमोवदज्ञानस्य
यावरकतायाः एवोचितत्वादिति भावः । किञ्च स्वविषयेति विशेषणवैयर्थ्यमज्ञातत्वं-
रूपमभावरूपं वा । आद्ये तत्किमत्यंताभावादिरूपं उत प्रागभावरूपम् । नाद्यः । स्वनिवर्त्यपदे-
तद्व्यावृत्तेः । न द्वितीयः । स्वप्रागभावव्यतिरिक्तेतिविशेषणादेव तद्व्यावृत्तेरित्याह । अज्ञा-
स्येति ॥ (द्वितीयेऽपि) नाद्य इत्याह । अविद्याविषयत्वेति ॥ अविद्याविषयत्वस्याविद्या-
धीनत्वोक्तविशेषणाभावेऽप्यभिमतमिथ्या अर्थान्तराभावान्न विशेषणवैयर्थ्यमित्यर्थः । किञ्चा-
तिरिक्तं स्वविषयावरकमस्ति न वा । नाद्यः । इतरविशेषणानां वैयर्थ्यमित्याह ॥ किञ्चेति ॥
द्यमः । स्वरूपेण तेनैव प्रकाशावरणसंभवे अज्ञानरूपावरककल्पनावैयर्थ्यात् गौरवाच्चेत्यभिप्रेत्याह ।
न्य इति ॥
न्यस्ति स्वविषयावरकं तमः । तच्च तेनैव प्रकाशावरणसिद्धिः । तस्य स्वात्मत्वेन अनादिप्रकाशाव-

जकत्वापातात् । नच तमोव्युदासाय तृतीयम्, तस्य प्रमामात्रविषयावरणत्वाभावात् । नच व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वाद्वैयर्थ्यमिति वाच्यम् । यत्राविशेषितं साध्यं प्रति हेतोरप्रयोजकता विमतं भिन्नाभिन्नं समानाधिकृतत्वादित्यादौ तत्रैव विशिष्टप्रतीतेरुद्देश्य-त्वात्, अन्यथा अतिप्रसंगात् । नीलधूमकरणिका वह्निप्रमोद्देश्येत्यपि सुवचत्वेन हेतावपि व्यर्थ-विशेषणत्वस्यादोषत्वापाताच्च । हेतौ च प्रकाशकत्वं ज्ञानत्वं वा ज्ञानहेतुत्वं वा साक्षात्परं-परया व्यवहारहेतुत्वमात्रं वा तमोनिवर्तकत्वं वा आवरणनिवर्तकत्वं वा अज्ञानांधकारा-न्यतरनिवर्तकत्वं वा प्रकाशकशब्दवाच्यत्वमात्रं वा । नाद्यः । दृष्टांते अभावात् । न द्वितीयः । असिद्धेरिंद्रियादौ व्यभिचाराच्च । अत एव न तृतीयः । न चतुर्थः । अज्ञानांध-कारानुगततमस्त्वाभावात् साध्यावैशिष्ट्याच्च । अत एव न पंचमः । कुद्दालादौ व्यभि-चाराच्च । न षष्ठः । साध्यावैशिष्ट्यादेव । न सप्तमः । शब्दसाम्येनैकसाध्यसाधने पृथिव्यादे-रपि गोत्वेन शृंगित्वसाधनापातात् । उक्तं च विवरणे । ज्ञानप्रकाश्यत्वादज्ञानविरोधि-

---

कत्वायोगात् । तथाच तेनैव घटाद्यावरकेणार्थान्तरव्यावृत्तये स्वनिवर्त्यपदमित्याशंक्य निराकरोति ॥ नच तम इति ॥ प्रमामात्रेति ॥ सर्वस्यापि प्रमाणज्ञानस्य पक्षत्वेन न तमसार्थान्तरताशङ्का, तस्य चाक्षुषज्ञानमात्रविषयावरकतया सिषाधयिषितसाध्यापर्यवसानादिति भावः ॥ यत्राविशेषितेति ॥ एतच्चोपलक्षणम् । विशेषितसाध्यं प्रति न तत्प्रयोजकमित्यपि द्रष्टव्यम् ॥ समानाधिकृतत्वादित्या-दाविति ॥ विमतौ गुणगुणिनौ भिन्नाभिन्नौ समानाधिकृतत्वादित्यादावित्यर्थः । अतिप्रसंगादिति ॥ व्यापकविशेषणमात्रवैयर्थ्याभावादतिप्रसङ्गादित्यर्थः । किंचैवं हेतावपि व्यर्थविशेषणत्वं न स्यात्, व्याप्यतौल्यादित्याह ॥ नीलेति ॥ अप्रकाशितार्थप्रकाशकत्वात् इति हेतुमपि विकल्प्य दूषयति ॥ हेतौ चेति ॥ व्यवहारहेतुत्वमात्रमित्यस्यैव विवरणं साक्षात् परम्परया चेति ॥ प्रकाशशब्द-वाच्यत्वमात्रं वेति ॥ मात्रपदा प्रकाशत्वं व्यवच्छिद्यते यद्विवक्षायामनुगतस्य तस्याभावेन दृष्टान्ते साधनवैकल्यादिदोषः स्यात् ॥ अत एवेति ॥ इन्द्रियादौ व्यभिचारादेवेत्यर्थः ॥ साध्यावैशि-ष्ट्याच्चेति ॥ अन्धकारात्मकतमोनिवर्तकत्वस्याद्याप्यसिद्धत्वेन साध्यावैशिष्ट्यादित्यर्थः ॥ अत-एवेति ॥ साध्यावैशिष्ट्यादेवेत्यर्थः ॥ कुद्दालादाविति ॥ तस्यापि कुड्याद्यावरणनिवर्तकत्वादिति भावः ॥ साध्यावैशिष्ट्यादेवेति ॥ पराभिमताज्ञानस्याद्याप्यसिद्ध्या साध्यवदज्ञानान्धकारान्यतर-निवर्तकत्वहेतोरपि संदिग्धत्वादित्यर्थः । तथाचाभासत्वस्याविशेषसाधकमिति भावः । (न तत् साधकमिति पाठः) शब्दानुगमस्यैव मार्गानुगम इत्यत्र विवरणसंमतिमाह ॥ उक्तंचेति ॥

नोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधित्वं नामेति । एवं च–

"पक्षदृष्टांतानुगतं प्रकाशत्वं न विद्यते ।
शब्दसाम्येन चेत्पृथ्व्या गोत्वाच्छृंगं समापतेत्" ॥

किंच प्रमाणस्य च प्रमाज्ञानस्य चिदन्याप्रकाशकत्वात् स्वप्रकाशचितश्चाध्यासाधिष्ठानत्वादिना सदा प्रकाशमानत्वेनाप्रकाशितत्वाभावात् तत्र हेतोरसिद्धिः । किंचास्या अनुमितेरप्रकाशितप्रकाशित्वाभावे प्रकाशितप्रकाशकत्वं वा अप्रकाशकत्वं वा स्यादुभयथाप्यनुमितिर्व्यर्था । तत्प्रकाशकत्वे चात्रैव बाधो व्यभिचारो वा । अस्यास्स्वविषयावरणानिवर्तकत्वात् । नह्यज्ञानावरणमज्ञानमस्ति । दृष्टांतेऽपि द्वितीयादिप्रभायाः अंधकारानुत्पन्नत्वेन प्रथमपदं व्यर्थम् । दृष्टिसृष्टिपक्षे दृष्टांते उभयवैकल्यं च । अनादित्वे सति भावत्वमभावविलक्षणत्वं वा न निवर्त्यनिष्ठमनादिभावमात्रवृत्तित्वात् । अनाद्यभावविलक्षणमात्रवृत्तित्वाद्वा आत्मवत् । निवर्त्यत्वं वा नानादिभावनिष्ठं नानाद्यभावाविलक्षणनिष्ठं वा निवर्त्यमात्रवृत्तित्वात् प्रागभावत्ववत् । अनादित्वं वा नावरणनिष्ठमनादिमात्रवृत्तित्वात् प्रागभावत्ववत् । प्रमाण-

---

अन्यपक्षोक्तदूषणकारिकां तां निबध्नाति ॥ एवं चेति ॥ किंचेति ॥ किंच वृत्तिप्रकाशावच्छिन्नस्य स्वप्रकाशतया तत्पूर्वमपि प्रकाशमानत्वेन अप्रकाशितार्थप्रकाशकत्वाभावाद्धेतोरसिद्धेरित्याह ॥ (सिद्धिरित्याह) किंचेति ॥ किंचास्या अनुमितेरप्रकाशितार्थप्रकाशकत्वमस्ति न वा । नान्त्यः । उक्ताभावो हि विशेषणाभावाद्विशेष्याभावाद्वा सिध्येत् । उभयथापि व्यर्थेयमनुमितिः । आद्ये अनुमितिर्व्यर्था अन्यत एव तत्सिद्धेः । अन्त्ये च अज्ञानमेव न सिध्येत् । अनुमितेरप्रकाशत्वादित्याह ॥ किंचेति ॥ द्वितीयेऽपीयमनुमितिः पक्षो न वा । अन्त्ये व्यभिचारः । आद्ये बाध इत्याह ॥ तत्प्रकाशकत्वे चेति ॥ अप्रकाशितार्थप्रकाशकत्वे चेत्यर्थः ॥ दृष्टिसृष्टिपक्ष इति ॥ तत्पक्षे अज्ञानवस्त्वभावेन साध्यसाधनोभयविकलो दृष्टान्त इत्यर्थः । सम्प्रतिपन्नत्वाच्च नेदमनुमानमित्याह ॥ अनादित्वे सतीति ॥ पक्षधर्माभावत्वस्य निवर्त्यघटादिनिष्ठत्वेन बाधवारणाय । अनादित्वमात्रस्य निवर्त्यप्रागभावनिष्ठतया बाध इत्यत उक्तम् ॥ भावत्वमभावविलक्षणत्वं चेति ॥ अत्र हेतुद्वयेऽपि घटत्वप्रागभावत्वद्रव्यत्वादौ व्यभिचारवारणाय क्रमेण विशेषणानि । वृत्तिपदं च घटत्वे व्यभिचारवारणाय । नानादिभावनिष्ठमिति ॥ अत्र प्रागभावनिष्ठतया घटादिनिष्ठतया च बाधवारणाय अनादिभावेति विशेषणद्वयम् । हेतौ च मात्रपदं द्रव्यत्वादौ व्यभिचारसिद्धसाधनवारणाय ॥ प्रमाणज्ञानमिति ॥ तत्र प्रमाणपदं भ्रांतांशेन सिद्धसाधनवारणाय

ज्ञानं वा प्रमाप्रागभावान्यानादिनिवर्तकं ज्ञानत्वाद्भ्रमवदित्यादिना सत्प्रतिपक्षता च । पूर्वं कृत्यभावमात्रेणाकृतस्य कृतिवत् स्मृत्यभावमात्रेणास्मृतस्य स्मृतिवच्च पूर्वं प्रकाशाभावमात्रेणाप्रकाशितप्रकाशोपपत्तेरप्रयोजकत्वं च । किञ्च घटादिविषय आलोकप्रकाशस्तमोविरोधीति तन्निवर्तकोऽस्तु । ज्ञानप्रकाशस्तु नाज्ञानविरोधी घटाद्यधिष्ठानचैतन्यस्याज्ञानाविरोधित्वाद्वृत्तेस्त्वनधिष्ठानत्वेन तज्ज्ञानत्वाभावात् । त्वन्मते हि ज्ञानज्ञेययोराध्यासिकस्संबंधः । द्वितीयानुमानेऽप्युक्तरीत्या सुखादिप्रमासु बाधः । किंच साध्ये चैत्रगतत्वं किं प्रमातत्प्रागभावयोरन्यतरविशेषणम्, तदतिरिक्तानादेर्वा । नाद्यः । वृत्तेस्तत्प्रतिबिंबितचैतन्यस्य वाधिष्ठानचैतन्यस्य वा प्रमाया आत्मगतत्वाभावात् प्रमाप्रागभावस्य च प्रतियोगिसामानाधिकर-

---

साध्ये च प्रागभावनिवर्तकत्वेन स्वजनकादृष्टादिनिवर्तकत्वेन च बाधवारणाय क्रमेण विशेषणद्वयम् । नन्वेवं प्रागभावातिरिक्तानादिनिवर्तकत्वस्याप्रसिद्ध्या तदभावरूपसाध्यमप्रसिद्धमिति चेन्न । स्वजन्यध्वंसप्रतियोगिमूलप्रागभावान्यानादिकत्वस्य साध्यत्वात् । नचैवमाकाशाद्यनिवर्तकत्वेनार्थान्तरता । प्रागभावातिरिक्तानादित्वावच्छिन्ने स्वजन्यध्वंसादिप्रतियोगित्वस्य विवक्षितत्वादिति ॥ भ्रमवदित्यादिनेति ॥ अथानित्यत्वं यावदनादिभावजन्यवृत्ति नित्येतरावृत्तित्वात् । अन्यत्राभावध्वंसत्वं प्रागभावातिरिक्तानादिप्रतियोगिकयावद्वृत्त्यनादिभावप्रतियोगिकयावद्वृत्ति वा ध्वंसान्यावृत्तित्वात् घटध्वंसवत्, अभावत्वं वा यावदनादिनिवर्त्यवृत्ति प्रागभावव्यापकत्वात् प्रमेयत्वादित्याद्यनुमानमपि द्रष्टव्यमित्यर्थः ॥ अप्रयोजकत्वं चेति ॥ अन्यथा स्मृत्यादिकमपि भावरूपं सिध्येदिति भावः । नन्विच्छादेरप्रकाशात्मत्वात् भावानिवर्तकत्वेऽपि प्रकाशात्मत्यालोकादेर्भावरूपतमोनिवर्तकत्ववत् प्रकाशरूपज्ञानस्यापि भावरूपाज्ञाननिवर्तकत्वमावश्यकम् । अन्यथाऽऽलोकस्यापि तम आदित्वं तथापि तन्निवर्तकत्वं तद्विरोधित्वमेव तन्त्रम् । नतु प्रकाशात्मत्वम् । तथाच तमोविरोधिनः आलोकस्य तन्निवर्तकत्वेऽपि घटादिप्रकाशस्यातद्विरोधित्वात् । वृत्त्यधीनसंबन्धाभावेन तत्प्रकाशत्वाच्च न ज्ञानप्रकाशस्याज्ञाननिवर्तकत्वमित्याह ॥ किंचेति ॥ द्वितीयानुमानेऽपीति ॥ चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका प्रमात्वात् मैत्रप्रमावदिति द्वितीयानुमानेऽपीत्यर्थः ॥ उक्तरीत्येति ॥ सुखादिविषयकाज्ञानाभावेन तत्प्रमायां बाधः । परोक्षवृत्तेरज्ञानानिवर्तकतया तत्रापि बाधः । तन्मतेन पक्षत्वे तत्रैव व्यभिचारस्तत्रोक्तरीत्येत्यर्थः ॥ आत्मगतत्वाभावादिति ॥ वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य चान्तःकरणनिष्ठत्वेनाधिष्ठानचैतन्यस्य चावृत्तित्वेनात्मवृत्तित्वाभावादिति भावः । चैत्रगतत्वस्याप्रविशेषणमित्यपि वृत्त्यमाह ॥ प्रागभावस्य चेति ॥

व्यात् । न द्वितीयः । दृष्टांते साध्याभावात् । मैत्रप्रमायाः स्वसमानाधिकरणं स्वप्रागभाव-मज्ञानं च प्रति निवर्तकत्वेऽपि चैत्रगतानाद्यनिवर्तकत्वात् साध्ये प्रमापदवैयर्थ्यं च । चैत्र प्रमा चैत्रगतस्वाभावातिरिक्तस्यानादेः निवर्तिका न प्रमात्वान्मैत्रप्रमावदिति प्रकरणसमता च । नचात्रोपाध्याभाससाम्ये शंक्ये । उक्तसाध्यानंगीकारे गौरवेण लाघवतर्कानुग्रहाच्चैत्रगत-प्रमाभावातिरिक्ताभावनिवर्तकत्वं समव्याप्तोपाधिश्च व्यतिरेकोपसंहारस्थलं च प्रागभावः चैत्रप्रमा स्वप्रागभावातिरिक्ताभावनिवर्तिका प्रमात्वान्मैत्रप्रमावत् । घटः चैत्रेच्छा वा चैत्र-प्रमा वा स्वप्रागभावातिरिक्तानादिनिवर्तिका घटत्वात् इच्छात्वाद्वा अप्रमात्वाद्वा घटांतरवत् मैत्रेच्छावद्वा मैत्राप्रमावद्वेत्याद्याभाससाम्यं च । किंचैवं विशिष्टव्यतिरेकिणः चैत्रप्रमा चैत्र-

---

तथाच तस्यापि न चैत्रात्मगतत्वमिति भावः । दृष्टान्ते साध्यवैकल्यमुपपादयति ॥ मैत्रप्रमाया इति ॥ चैत्रप्रमेति ॥ प्रागभावातिरिक्तानादिनिवर्तकत्वस्याप्रसिध्या तदभावसाधनमवाक्यमित्यत उक्तम् ॥ चैत्रगतस्येति ॥ प्रागभावनिवर्तकत्वेन बाधवारणायाह ॥ अभावातिरिक्तस्येति ॥ अन्यकालदृष्टादिनिवर्तकत्वेन बाधवारणायाह ॥ अनादेरिति ॥ नन्वत्र मैत्रगतत्वमुपाधिः । न चाकाशादौ साध्याव्याप्तिः । साधनावच्छिन्नसाध्यव्यापकत्वात् । किंच चैत्रप्रमा चैत्रगताभाव-निवर्तिका न, प्रमात्वान्मैत्रप्रमावदित्याभाससाम्याच्च "अतो दुर्बलत्वाच्च प्रकरणसमते" त्याशंक्य निराकरोति ॥ नचेति ॥

" अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्याप्यकताभंगात् पक्षे नोपाधिसम्भवः ॥ "

इत्युक्तरीत्या अनुकूलतर्कसत्वान्नायमुपाधिर्नवाऽऽभाससाम्यं चेत्याह ॥ उक्तसाध्येति ॥ गौरवेणाति-रिक्ताज्ञानकल्पनागौरवेण ॥ चैत्रगतेति ॥ एतच्च प्रमाभावविशेषणम् । ननूपाधेः स्वव्यतिरेकेण स्वव्यभिचारेण वा साध्याभावस्य साध्यव्यभिचारित्वस्य वा साधने व्याप्तिग्रहस्थलाभावेन दृष्टान्ताभावात् साध्यव्यतिरेकस्य साधकत्वाभावान्नोपाधित्वमित्याशंक्याह ॥ व्यतिरेकेति ॥ इत्या-द्याभाससाम्यंचेति ॥ चैत्रद्वेषः स्वप्रागभावातिरिक्तानादिनिवर्तकः द्वेषत्वान्मैत्रद्वेषवदित्याद्यनुमान-मभिप्रायस्यार्थः । (इत्यनुमानादिगणनिराप्यार्थः इति पा.) किंचायं हेतुर्विरुद्धः विशिष्टव्यतिरेक-माश्रितस्य हेतोः साध्याभावव्याप्यत्वस्य वक्तुं शक्यत्वादित्याह ॥ किंचैवमिति ॥ विशेषणा-द्यभावेन विशिष्टाभावसिध्या साध्यमिद्धाविन्त्यर्थः ।

नन्वस्य चैत्रनिष्ठत्वविशिष्ट (विशेषणस्य) चैत्रज्ञान्यत्वरूपोपाधिप्रसक्त्वाच्च साध्यव्यापकत्वम्

करणाज्ञानविरोधी एवं चाज्ञानमित्यादिनवीनानुमानं निरस्तम् । अप्रयोजकत्वाद्यनिस्तारात् ।

॥ इति अविद्यानुमानभङ्गः ॥ ४६ ॥

---

अप्रयोजकत्वादीत्यादिपदेन विमता अनित्यप्रमा अभावातिरिक्तानादिनिवर्तिका न, प्रमात्वादीश्वरप्रमावत् । भ्रमानुत्तरप्रमा, स्वाभावातिरिक्तस्वविरोधिनिवर्तिका न, अभ्रमपूर्वकप्रमात्वात् प्रमोत्तरप्रमावत् । ज्ञानत्वं, न स्वविषयावरणनिष्ठं, ज्ञानवृत्तित्वात् । द्वितीयादिज्ञानत्वात् । अनित्यप्रमा, अभावत्वानधिकरण–स्वविरोधि-समानाधिकरणं न, भ्रमान्यत्वात् । घटवदित्यादि सत्प्रतिपक्षस्याद्यानुमानद्वये भ्रमान्यत्वावच्छिन्नसाध्यव्यापकस्य दोषाजन्यत्वोपाधेस्तृतीयानुमाने साधनावच्छिन्नसाध्यव्यापकस्य भ्रमसमानकालीनसामग्रीजन्यत्वोपाधेः, चतुर्थानुमाने अनात्माश्रितवृत्तित्वोपाधेः, पञ्चमे च विषयाजन्यत्वरूपोपाधेश्च, अनित्यप्रमा प्रमाभावातिरिक्तानाद्यभावनिवर्तिका कार्यत्वात् घटवदित्याद्याभाससाम्यादेश्च परिग्रहः ।

॥ इति अविद्यानुमानभङ्गः ॥ ४६ ॥

## ॥ अथ श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः ॥ ४७ ॥

"अनृतेन हि प्रत्यूढा" इत्यत्रानृतशब्दो दुष्कर्मपरः । परिणामिप्रधानपरो वा । "ऋतं पिबंतौ" इत्यादौ सत्कर्मणि ऋतशब्ददर्शनात् । "ऋतं सत्यं तथा धर्मः" इति स्मृतेश्च । "अनृतं परिणामतः" इति स्मृतेश्च । अज्ञानाविद्यानीहारादिशब्दा अपि प्रकृतिपराः । नच सा मिथ्या । "तम आसीत्" "गौरनाद्यंतवती नित्या सततविक्रिया" इत्यादिश्रुतिभिस्तस्या नित्यत्वाच्च । नचास्याः श्रुतेः अपूर्वपारमार्थिकसत्त्वपरत्वसंभवे व्यावहारिकसत्त्वपरत्वं वा असद्वैलक्षण्यपरत्वं वा युक्तम् । मायाशब्दोऽपि क्वचित्प्रकृतिपरः । क्वचिच्च विचित्रेश्वरशक्त्यादिपरः "त्रिगुणात्मिका" इत्यादिस्मृतेः । "विश्वमायानिवृत्तिः" इत्यादौ निवृत्तिस्तरणमेव । "मायामेतां तरंति ते" इति स्मृतेः । नचाज्ञानं मायाशब्दार्थः । मायिनो

---

॥ अथ श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः ॥ ४७ ॥

एवमज्ञाने प्रत्यक्षानुमानयोः प्रमाणत्वं निरस्य तत्प्रमाणत्वेन परोदाहृतश्रुतीरप्यन्यथयति । अनृतेन हीति ॥ अनृतशब्दस्य दुष्कर्मपरत्वं परिणामिपरत्वं च क्रमेणोपपादयति ॥ ऋतं पिबंताविति ॥ तथाच नञिवयुक्तन्यायेनानृतशब्दस्य दुष्कर्मपरत्वमावश्यकमिति भावः । ननु "अजामेकां, अविद्यायाः परं पारं तारयसि, माया चाविद्या च स्वयमेव भवति । नीहारेण प्रावृताः, अविद्यायामंतरे वर्तमानाः, नान्यच्छ्रेयो वेदयन्ते प्रमूढाः" इति श्रुतिः अज्ञानेनावृतं ज्ञानं इति, 'तम आसीत्तमसा गूढमग्रे' इत्यादिश्रुतिस्मृतिभिरेवाज्ञानसिद्धिरित्यत आह ॥ [1]अजेति ॥ ननु मिथ्याभूतजगदुपादानप्रकृतिरेवास्त्वनभिमताज्ञानमित्याशङ्क्य निराकरोति ॥ नचेति ॥ नित्यत्वाच्चेति ॥ मिथ्याभूतस्य ज्ञाननिवर्त्यतया नित्यस्य सत्यत्वमावश्यकमिति भावः ।

ननु तम आसीदित्यनया श्रुत्या व्यावहारिकं सत्त्वं वा असद्वैलक्षण्यं वा बोध्यत इत्याशङ्क्य प्रमाणान्तराविरोधे पारमार्थिकसत्त्वपरत्वमेव तस्याः वक्तव्यम् । ननु प्रत्यक्षप्रामाण्याद्व्यावहारिकसत्त्वपरत्वमित्यत आह ॥ नचेति ॥ क्वचिदिति ॥ माया चाविद्या च स्वयमेव भवति, "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यादिश्रुतिस्मृत्यादावित्यर्थः ॥ क्वचिच्चेति ॥ "इन्द्रो मायाभिः पुरुरूप ईयते, संभवाम्यात्ममायया" इत्यादावित्यर्थः । ननु मायाशब्दो न नित्यप्रकृतिपरः मायाशब्दार्थस्य निवृत्तिश्रवणादित्याशङ्क्याह ॥ विश्वमायेति ॥ किञ्च नाज्ञानं माया-

१. मूले अज्ञानाविद्या इत्यत्र अजाविद्येति पाठः समीचीनः ।

ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधात् । मायाशब्दस्य मय ज्ञान इति धातुजत्वाच्च । वेदनिघंटौ माया वयुनं ज्ञानमिति पाठाच्च । मायाविशब्दस्य विचित्रशक्तियुक्तत्वाज्ञानिन्यप्रयोगाच्च । "योगमायां समादिशत्" इति भागवते "श्रुते मायां विशालाक्षीम्" इति रामायणे च चेतने, "जलं संस्तम्भ्य मायया" इति भारते जलस्तंभनशक्तौ च प्रयोगाच्च । हरिवंशे

"मयश्च शंबरश्चैव महामायाधरौ तथा ।
पार्जन्यवारुणीमाये व्यधत्तां वारिविक्षरे" ॥

इति पार्जन्यवरुणास्त्रयोर्मायाशब्दप्रयोगाच्च । तत्रैव "मायामास्थाय पुष्यस्व" इति प्रकृतमायायां "आस्थाय तामर्मी विद्याम्" इति विद्याशब्दप्रयोगाच्च । "एकस्त्वमेव भगवानिदमात्मशक्त्या मायाख्यया" इति भागवते शक्तिर्मायेति व्याख्यातत्वाच्च । अत एव न मिथ्याभूतं मायाशब्दार्थः । शुक्तिरूप्यादौ तदप्रयोगात् । सत्यमंत्रौषधादिमत्येव मायाविशब्दप्रयोगाच्च । मायामृगस्यापि मारीचस्य कामरूपित्वेन रामशरवेध्यत्वेन च सत्यत्वात् ।

---

शब्दार्थः । तथात्वे मायिनमित्यादौ मायित्वेन निर्दिष्टस्य ब्रह्मणोऽज्ञत्वप्रसङ्गात् । न चेष्टापत्तिः । "यः सर्वज्ञः स सर्ववित्, निरवद्यं निरञ्जनम्" इत्यादिश्रुतिविरोधादित्याशङ्क्याह ॥ नहीति ॥ किंच मायाशब्दोऽज्ञाने यौगिको रूढो वा । तत्र नाद्य इत्याह ॥ मायाशब्दस्येति ॥ द्वितीयं निराह ॥ वेदनिघंटाविति ॥ नन्वेवं मायाशब्दस्य त्वदभिमतविचित्रशक्त्यादिपरत्वमपि न स्यात् । योगरूढ्योरन्यथैव दर्शनात् । यदि च प्रयोगबलात्तत्परत्वं तर्हि तत एवाज्ञानपरत्वमपि स्यादित्याशङ्क्याह ॥ मायाशब्दस्येति ॥ विचित्रशक्त्यादौ प्रयोगमेव दर्शयति ॥ योगमायां समादिशदित्यादिना व्याख्यातत्वाच्चेत्यन्तेन ॥ ननु मिथ्याभूतैन्द्रजालिकगजतुरगादौ मायाशब्दप्रयोगदर्शनात् मिथ्याभूतमेव श्रौतमायाशब्दार्थः । ननु सत्येश्वरेच्छादिरित्यत आह ॥ अत एवेति ॥ ननु मायाशब्दस्यासत्य एव प्रयोगः सिद्धः । मारीचस्य मायामये मृगरूपे, देवासुरसंग्रामे तत्तद्बलसृष्टादौ च तस्य प्रयोगदर्शनादित्याशङ्क्याह ॥ मायामृगस्यापीत्यादिना ॥ कथं तर्हीन्द्रजालिकादौ मायाशब्दप्रयोग इत्यत आह ॥ मिथ्याभूत इति ॥ नन्वेवं विश्वमायानिवृत्तिरित्यादौ मायायाः ज्ञाननिवर्त्यत्वोक्तिर्नस्यादित्याशङ्क्य निराकरोति ॥ नचेति ॥ यद्यपि निवृत्तिस्तत्त्वजमेवेत्युक्तम् । तथापि निवृत्तिश्रवणं एवमभ्युपगम्योक्तम् ॥ अत एवेति ॥ सत्य-

देवासुरसंग्रामादौ च मायास्त्रादेः छेदाद्यर्थक्रियाकारित्वेन सत्यत्वात् । मिथ्याभूते ऐन्द्रजालिकादौ मायाधीनप्रतीतिकत्वेन मायाशब्दस्यामुख्यत्वात् । न च मायायाः सत्यत्वे ज्ञाननिवर्त्यत्वोक्तिविरोधः । सत्यस्यैव तन्निवर्त्यत्वात् । अत एव नाविद्यात्वोक्तिविरोधः । विद्यानिवर्त्यत्वात् । "दैवी ह्येषा गुणमयी मम माया" इत्यादौ गुणमयत्वाद्युक्तिरपि सत्त्वानुगुण्यैव शुक्त्याद्यज्ञाने रूप्यादौ त्रिगुणत्वादर्शनात् । तस्माच्च श्रुतिः सत्यप्रकृतीश्वरशक्त्याद्यतिरिक्तपराभिप्रेतानिर्वाच्याविद्यापरा ।

॥ इति श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः ॥ ४७ ॥

---

स्यापि ज्ञाननिवर्त्यत्वसंभवादित्यर्थः । किञ्च मायाशब्दो नाज्ञानपरः । नवा मिथ्याभूतार्थपरः । "दैवी ह्येषेति" स्मृतौ मायायाः गुणमयत्वावेदनात् । त्वदभिमताज्ञाने रूप्यादौ च तददर्शनादित्याह ॥ दैवीति ॥ उक्तमुपसंहरति ॥ तस्मादिति ॥

॥ इति श्रुतेरनिर्वाच्याविद्यापरत्वभङ्गः ॥ ४७ ॥

## ॥ अथ अविद्यार्थापत्तिभङ्गः ॥ ४८ ॥

भ्रमोपादानत्वेनाविद्याकल्पनं तु द्वितीयलक्षणनिरासेनैव निरस्तम् । किंच शुक्तिरूप्यमुपादानसहितं चेत् सकर्तृकं भवेत् । नचेशो जीवो वा तस्य कर्तेतियुज्यते । नापि निर्विकारस्य ब्रह्मणः श्रौतजगदुपादानत्वनिर्वाहाय तत्कल्पनम् । सत्यस्य त्रिगुणस्य प्रधानस्यैव तदुपादानत्वेन श्रुत्यादिसिद्धत्वात् । अविद्याया अपि अनादित्वेन निरवयवतया ब्रह्मवदेव विकारायोगाच्च । किंच ब्रह्मण उपादानत्वेऽपि नाविद्या कल्प्या । त्वद्रीत्या ब्रह्मण एव तात्विकाविकाराविरुद्धेनातात्विकविकारेण शुक्त्यादिवत् विवर्ताधिष्ठानत्वरूपोपादानत्वोपपत्तेः । अन्यथा अविद्यादेराश्रयसापेक्षस्य तत्वतोऽद्वितीयात् ब्रह्मणोऽन्यदधिकरणं कल्प्यं स्यात् । नच परिणामित्वेनाविद्याकल्पनम् । असत्यस्य सत्यरूपांतरापत्तिरूपपरिणाम्यन-

---

॥ अथ अविद्यार्थापत्तिभङ्गः ॥ ४८ ॥

ननु तथाप्यर्थापत्त्याऽज्ञानं सिध्यतीति चेत्तत्र प्रष्टव्यम् । किं शुक्तिरूप्यादिभ्रमस्य सोपादानत्वान्यथानुपपत्त्या तत्कल्पनम् । किं वा निर्विकारब्रह्मणः श्रुतजगदुपादानत्वान्यथानुपपत्त्या तत्कल्पनं उत जगतः परिणामित्वान्यथानुपपत्त्या आहोस्वित् मिथ्याभूतस्य स्वसमानसत्ताकोपादानत्वान्यथानुपपत्त्या । अथवा जीवस्यापरिच्छिन्नानंदाप्रकाशान्यथानुपपत्त्येति । तत्र नाद्य इत्याह ॥ भ्रमोपादानत्वेनेति ॥ किंच शुक्तिरूप्यस्य सोपादानत्वे सकर्तृकत्वं स्यात् । कर्ता च किमीश्वरो जीवो वा । नाद्यः कालत्रयेऽपि शुक्तिरूप्यं नास्तीति ज्ञानेन ईश्वरस्य तत्कर्तृत्वायोगात् । न द्वितीयः अननुभवादित्याह ॥ किंचेति ॥ द्वितीयमाशङ्क्य निषेधति ॥ नापीति ॥ निर्विकारस्येति ॥ विकारिकारणस्यैवोपादानत्वेन ब्रह्मणश्च स्वतो विकाराभावेन विकारप्रयोजकतयाज्ञानं कल्प्यमिति भावः ॥ सत्यस्येति ॥ तथाच प्रधान एव जगदुपादानत्वस्य श्रुत्यादिसिद्धत्वेन ब्रह्मण उपादानत्वे प्रमाणाभावाच्च तदन्यथानुपपत्त्याऽज्ञानं सिध्यतीति भावः । किंच निरवयवत्वेन निर्विकारस्याज्ञानस्य ब्रह्मोपादानकत्वानुपपादकत्वात्तदुपपादकस्यैव चार्थापत्तिविषयत्वाच्च तदन्यथानुपपत्त्याऽज्ञानं सिध्यतीत्याह ॥ अविद्याया अपीति ॥ अन्यथेति ॥ तात्विकाविकारस्य कल्पिततद्विकारेणापि (विकारेणापि इति पाठः) विरोधे वस्तुतो द्वितीयस्य कल्पितद्वितीयेनापि विरोधादज्ञानाश्रयत्वमपि न संभवतीति तदधिष्ठानतया द्वितीयं ब्रह्मातिरिक्तमधिकरणांतरं कल्प्येतेत्यर्थः । तृतीयमाशङ्क्य निराकरोति ॥ नचेति ॥ असत्येति ॥ असत्यस्य

पेक्षत्वात् । नच कार्यापेक्षितस्वसत्तासमानसत्ताकोपादानत्वेन तत्कल्पनम् । विवर्ताधिष्ठानरूपोपादानेन निवृत्तोपादानाकांक्षस्यापि घटादिदृष्टांतेनोक्तोपादानकल्पने घटादेः कार्यस्य स्वासमानसत्ताकोपादानानपेक्षत्वेनासमानसत्ताकस्य ब्रह्मणो वियदादावनुपादानत्वापातात् । रूप्येस्वसमानसत्ताकनिमित्तस्यापि कल्पनापाताच्च । नच जीवस्यानवच्छिन्नब्रह्मानंदाप्रकाशाय तत्कल्पना । भेदेनैव तदुपपत्तेः । अनवच्छिन्नानंदस्यापि प्रकाशमानप्रत्यग्मात्रत्वेनाप्रकाशानुपपत्तेश्च ।

॥ इति अविद्यार्थापत्तिभङ्गः ॥ ४८ ॥

---

प्रागतः स्वस्वरूपस्वरूपोपपत्तिरूपो यः परिणामस्त(तद्वदिति पा.)दनपेक्षणादित्यर्थः । चतुर्थमाशङ्क्य निषेधति ॥ नचेति ॥ कार्यं हि उपादानमपेक्षते । नतु स्वसमानसत्ताकं गौरवात् । यदि च घटादौ दर्शनात् तथा कल्प्येत तर्हि तत एव तात्त्विकस्य ब्रह्मणोऽतात्त्विकवियदाद्युपादानत्वं न स्यात् । प्रातिभासिकरूप्यादेश्च (रूप्यादेश्च इति पा.) तत्सदृशनिमित्तान्तरमपि कल्प्येतेत्याह ॥ विवर्तेत्यादिना ॥ नापि पञ्चम इत्याह ॥ नचेति ॥ जीवस्येति ॥ अयमात्मेत्यादिश्रुत्या जीवाभिन्नत्वेनावगतब्रह्मानन्दप्रकाशस्याविद्याधीनत्वं विनानुपपत्तेरिति भावः ॥ भेदेनैवेति ॥ भेदेनैव समर्थयिष्यत इति शेषः ॥ अनवच्छिन्नेति ॥ अपरिच्छिन्नब्रह्मानन्दस्य प्रकाशमानजीवाभिन्नतया अप्रकाशमानत्वस्यैवाप्रामाणिकत्वेन न तदन्यथानुपपत्त्याऽज्ञानं सिध्यतीत्यर्थः ॥

॥ इति अविद्यार्थापत्तिभङ्गः ॥ ४८ ॥

## ॥ अथ सामान्येनाविद्याप्रमाणभङ्गः ॥ ४९ ॥

किंच त्वन्मते अज्ञानस्याप्रामाणिकत्वात्कथं तत्र प्रमाणोक्तिः ।

" अविद्याया अविद्यात्व इदमेव (हिल) तु लक्षणम् ।
मानापातासहिष्णुत्वमसाधारणमिष्यते "

इति सुरेश्वरोक्तेः । नचाज्ञानस्य व्यावहारिकत्वात्तत्र तत्प्रमाणोक्तिः । प्रातिभासिकोपादाने प्रातिभासिके अज्ञाने तदुक्त्ययुक्तेः । नहि व्यावहारिकं प्रातिभासिकं प्रत्युपादानम् । नच प्रातिभासिके मानमस्ति । नच साक्षिसिद्धेऽज्ञाने प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यत इति वाच्यम् । नित्यनिर्दोषसाक्षिवेद्यत्वे सुतरां प्रामाणिकत्वापातात् । तम आसीदित्यादौ सत्त्व-

---

॥ अथ सामान्येनाविद्याप्रमाणभङ्गः ॥ ४९ ॥

पूर्वमज्ञानस्य प्रत्यक्षादिप्रमाणगम्यत्वं(मपि) न संभवतीत्युक्तम् । इदानीं तद्गम्यत्वे वचनविरोधमप्याह ॥ किंचेति ॥ अप्रामाणिकत्वादिति ॥ अज्ञानस्य तद्भासकसाक्षिणश्चाप्रमाणत्वात् । अन्यथा प्रामाणिकत्वे पारमार्थिकत्वमेवाज्ञानस्य स्यादिति भावः ॥ अविद्याया इति ॥ अविद्याया मानापातासहिष्णुत्वमेव अविद्यात्वं नाम । इदमेव तस्या असाधारणं लक्षणं बोध्यत इति योजना ॥ अविद्याया इति ॥ नन्वज्ञानस्य घटादिवद्व्यावहारिकत्वेन प्रमाणोक्तावपि न तस्य पारमार्थिकत्वमित्याशङ्क्य, विमतमज्ञानं प्रातिभासिकं प्रातिभासिकोपादानत्वात् । यद्यत्सत्ताकोपादानं तत्तत्समान सत्ताकं यथा घटोपादानभूता मृत् घटसमानसत्ताका । नच ब्रह्मणि व्यभिचारः । उपादानशब्देन विकारिकारण(त्व)स्यैव विवक्षितत्वात् । तथाच प्रातिभासिके तस्मिन् प्रमाणोक्तिर्विरुद्धेत्याह ॥ नचेति ॥ उक्तहेतोरप्रयोजकत्वमाशङ्क्याह ॥ नहीति ॥ अन्यथा कार्यस्य स्वसमानसत्ताकोपादानत्वान्यथानुपपत्त्याऽज्ञानमेव न कल्प्यं स्यादिति भावः । ननु "यक्षानुरूपो बलिः" इति न्यायेन तद्बोधकमानमपि प्रातिभासिकमेवेत्याशङ्क्य तथात्वे प्रमाणाप्रमाणविभाग एव न सिध्येदित्यभिप्रेत्याह ॥ नचेति ॥ निर्दोषेति ॥ तथाच प्रमाणशिखामणिना साक्षिणा असद्व्यावृत्तस्वरूपमेव अज्ञानं विषयीक्रियत इति नासद्व्यावृत्त्यर्थं प्रमाणान्तरमन्वेषणीयमिति भावः । किंच प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यत इति कोऽर्थः । किं सत्त्वं न बोध्यते असद्व्यावृत्तिरेव बोध्यत इति वा, किंवा ज्ञानस्वरूपं न बोध्यते असद्व्यावृत्तिरेव बोध्यते (इति) । तत्र नाद्य इत्याह ॥ तम आसीदिति ॥ तदप्रतीतेश्चेति ॥ असद्व्यावृत्त्यप्रतीतेश्चेत्यर्थः ॥ द्वितीयं निराचष्टे ॥ प्रमाणे-

स्यैव बोधनाच्च । उक्तानुमानेषु तदप्रतीतेश्च । नह्यनुमानं विवक्षापरतन्त्रम् । प्रमाणैरज्ञान-स्वरूपाग्रहे तत्रासम्प्रतिपत्तेर्दुर्बोधत्वाच्च । नच प्रमाणानि साक्षिवेद्यत्वेनाविद्यां बोधयन्ति । येन भ्रमविषयत्वेनानुव्यवसायबोध्यस्य रूप्यादेरिव प्रामाणिकत्वं न स्यात् । नच प्रमाणानि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनाविद्यां बोधयन्ति, येन तथाबाधगोचरस्य रूप्यादेरिव प्रामाणिकत्वं न स्यात् । ज्ञाननिवर्त्यत्वेन प्रकाशनिवर्त्यान्धकारवदनित्यत्वस्यैव बोधनात् ।

॥ इति सामान्येनाविद्याप्रमाणभङ्गः ॥ ४९ ॥

---

रिति ॥ ननु प्रमाणैरज्ञानस्वरूपं बोध्यते । नच प्रामाणिकत्वापत्तिः । अन्यविषयस्यैव प्रमाणेन बोधनादित्याशङ्क्य अन्यविषयकबोधजनकत्वमात्रेण न तत्राप्रामाण्यम्, किं त्वन्यविषयत्वेनैव तद्बोधने निषेधप्रतियोगित्वेन तद्बोधने वा, अन्यथा प्रमाणसंप्लवमात्रोच्छेदप्रसंग इत्यभिप्रेत्याह ॥ नचेति ॥ ननु प्रमाणैरुक्तरूपेणाबोधनेऽपि ज्ञाननिवर्त्यस्वरूपमिथ्यात्वाकारेणाबोधनादप्रामाणिकत्वं दुर्वारमित्याह ॥ ज्ञाननिवर्त्यत्वेनेति ॥ ज्ञाननिवर्त्यत्वमात्रं मिथ्यात्वमिति भावः ॥

॥ इति सामान्येनाविद्याप्रमाणभङ्गः ॥ ४९ ॥

## ॥ अथ अविद्याप्रतीतिभङ्गः ॥ ५० ॥

किंचाविद्या किं शुद्धसाक्षिचैतन्येनैव भाति किं वा वृत्तिप्रतिबिंबितेन तेन । नाद्यः । निर्दोषचित्प्रकाश्यत्वेनाज्ञानस्य पारमार्थिकत्वापातात् । मोक्षेऽपि तत्प्रतीत्यापत्तेश्च । तदा सा निवृत्तत्वान्न भातीति चेन्न । प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगात् । एतेनाज्ञानस्य राहुवत्स्वावृतप्रकाशेनैव स्फुरणमिति निरस्तम् । नांत्यः । अज्ञानस्य कदाचिदप्रतीत्यापातात् । अंतःकरणाविद्यावृत्त्योः प्रमाणदोषाभ्यां जन्यतयेहोभयाभावेन वृत्त्ययोगाच्च । प्रतिबिंबनोपाधित्वप्रयोजकस्य सत्त्वस्य अपारमार्थिकत्वेन प्रातीतिकया वृत्तेः प्रतीत्यधीनत्वेनान्योन्याश्रयाच्च ।

॥ इति अविद्याप्रतीतिभङ्गः ॥ ५० ॥

---

## ॥ अथ अविद्याप्रतीतिभङ्गः ॥ ५० ॥

किंचाज्ञानविषयकप्रतीतेश्च दुर्वचत्वात् नाज्ञानमङ्गीकर्तुं शक्यमित्याह ॥ किंचेति ॥ मोक्षेऽपीति ॥ अन्यथा तस्य तत्प्रकाशि(त)त्वमेव न स्यादिति भावः । ननु प्रतीतिसत्त्वं विषयभावे न तंत्रं, अपितु विषयसत्त्वमपीति शङ्कते ॥ तदेति ॥ प्रतीतिमात्रशरीरस्येति ॥ एतेनेति ॥ उक्तरीत्या बिम्बमात्रस्याज्ञानभानत्वनिरासेनेत्यर्थः ॥ अज्ञानस्येति ॥ वृत्तेः कादाचित्कत्वेन तत्प्रतिबिम्बितचैतन्यस्यापि कादाचित्कत्वादिति भावः । किञ्चाविद्यायां प्रमाणदोषयोरभावेन न वृत्तिप्रतिबिम्बितचैतन्यं अज्ञानभासकमित्यभिप्रेत्याह ॥ अन्तःकरणेति ॥ वृत्तेरपीति ॥ किंच वृत्तिप्रतीतेरपि दुर्वचत्वेन वृत्तिसिध्या न तत्प्रतिबिम्बितचैतन्यं अज्ञानभासकमित्यभिप्रेत्याह ॥ वृत्तेरपीति ॥ किंच वृत्तेः प्रतिबिम्बनोपाधित्वसंभवायोगात् नाज्ञानं तत्प्रतिबिम्बितचिद्ग्राह्यमित्याह ॥ प्रतिबिम्बनेति ॥ अन्योन्याश्रयाच्चेति ॥ प्रातीतिकी वृत्तिः प्रतिबिम्बनोपाधित्वाप्रयोजिका अपारमार्थिकसत्त्वसिध्यर्थं चैतन्यरूपप्रतीतिमपेक्षते । चैतन्यं च स्वस्याविद्याप्रकाशसिध्यर्थं वृत्तिमपेक्षत इत्यन्योन्याश्रय इत्यर्थः ।

॥ इति अविद्याप्रतीतिभङ्गः ॥ ५० ॥

## ॥ अथ अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गः ॥ ५१ ॥

अविद्याश्रयश्च दुर्वचः । यदत्रोक्तं विवरणे । चिन्मात्रमेवाज्ञानाश्रयः । तदन्यस्याज्ञानकल्पितत्वेन तदाश्रयत्वायोगात् । तदुक्तम् । (आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर) इति । दर्पणस्य मुखमात्रसंबंधेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिंबे जीवे संसारो नतु बिंबे ब्रह्मणि । उपाधेः प्रतिबिंबपक्षपातित्वादिति । अत्र ब्रूमः ।

विरोधाद्धर्मिमानेन बाधाच्छ्रुतिविरोधतः ।
भ्रांत्यैकाधिकरण्याच्च नाज्ञानं शुद्धचिद्गतम् ॥

तथाहि । एकविषयज्ञानभावरूपाज्ञानयोः तमःप्रकाशयोरिव विरुद्धत्वात् नाश्रयाश्रयित्वम् । नहि ज्ञानानिवर्त्यमज्ञानं भवति । नच वृत्तिज्ञाननिवर्त्यं तत् । विवरणेऽन्तःकरणपरिणामे ज्ञानत्वोपचारादित्युक्तत्वेनौपचारिकज्ञानविरोधिनो मुख्याज्ञानत्वायोगात् । अज्ञानाविरोधित्वे चैतन्यस्य घटादिवज्ज्ञानत्वायोगाच्च । ज्ञानाज्ञाने हि ज्ञातुरर्थप्रकाशाप्रकाशौ । नच

---

॥ अथ अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गः ॥ ५१ ॥

तदाश्रयत्वायोगादिति ॥ तस्यैव कल्पिताधिष्ठानत्वात् । पूर्वकालीनाज्ञानस्य तदनंतरभाविकल्पिताश्रयत्वायोगाच्चेत्यर्थः । अस्यानुपपत्तिपरिहाराय ॥ तदुक्तमिति ॥ नन्वेवं तस्य शुद्धत्वमेव न स्यात् । अज्ञानाश्रयत्वेन तस्य तत्प्रयुक्तसंसारित्वापत्तेरित्याशंक्य दृष्टांतमुखेन बिम्बत्वे संसाराभावमुपपादयति ॥ दर्पणस्येति ॥ उक्तहेतून् यथाक्रमं व्याचष्टे ॥ तथाहीत्यादिना ॥ एकविषयेति ॥ समानविषये ज्ञानाज्ञाने, तयोस्तमःप्रकाशयोरिव निवर्त्यनिवर्तकभावलक्षणविरोधवत्त्वेनेत्यर्थः । यद्यप्येतन्मते ज्ञानस्य स्वप्रकाशत्वमङ्गीकुर्वता न स्वकर्मत्वरूपस्वविषयत्वमङ्गीकृतम् । तथापि स्वव्यवहारप्रवर्तकत्वरूपं स्वविषयत्वमस्त्येव । अन्यथा तद्ज्ञाननिवृत्तिः कदापि न स्यादिति भावः । ज्ञानाज्ञानयोर्विरोधाभावे बाधकमाह ॥ नहि ज्ञानानिवर्त्यमिति ॥ नहि चैतन्यानिवर्त्यमित्यर्थः । ननु चैतन्यानिवर्त्यत्वेऽपि वृत्तिज्ञाननिवर्त्यत्वादज्ञानत्वं संभवतीत्याशंक्य तथापि मुख्याज्ञानत्वं न स्यान्मुख्यज्ञानविरोधिन एव तत्त्वादित्यभिप्रेत्याह ॥ नचेति ॥ किंचाज्ञानं चैतन्यविरोध्येवेति वक्तव्यम् । अन्यथा तस्याज्ञानत्वमेव न स्यात् । तथाचाज्ञानस्य

तदविरोधित्वेऽपि व्यवहारादिहेतुत्वात् ज्ञानत्वम् । अज्ञाननिवर्तकस्यैव तद्धेतुत्वानुभवात् । नच विवरणे करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानमित्युक्तत्वेनाज्ञानं ज्ञानकरणविरोध्येव, नतु ज्ञप्तिविरोधीति वाच्यम् । न जानामीति ज्ञप्तिविरोधित्वेनानुभूयमानस्याज्ञानांतरत्वापातात् । साक्षिवेद्ये सुखादावज्ञानादर्शनाच । नच चैतन्याज्ञानयोः सौरप्रकाशदिवाभीतांधकारयोरिव तत्सत्यत्वमिथ्यात्वाभ्यामविरोधादाश्रयाश्रयितेति वाच्यम् । सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरस्येव चैतन्यप्रकाशविरुद्धतत्समसत्ताकाज्ञानांतरस्याभावेनातात्विकाज्ञानविरोधस्यैव वाच्यत्वात् । अन्यथा तात्विकसुखरूपस्यात्मनो व्यावहारिकदुःखरूपता स्यात् ।

किंचाहमज्ञ इति धर्मिग्राहकसाक्षिबाधः । नचात्मनि स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इतिवदहंकारे अज्ञानाश्रयचिदैक्याध्यासाद्वा दग्धृत्वायसोरेकाग्निसंबंधादयो दहतीतिवदज्ञानाहंकारयोरेकचि (ताच) दध्यासाद्वाहमज्ञ इति धीर्भ्रांतिरिति वाच्यम् । अद्यापि चितोऽज्ञानाश्रयत्वासिद्ध्यान्योन्याश्रयात् । दोषाजन्यस्याहमज्ञ इति साक्षिज्ञानस्य भ्रांतित्वा-

---

न चैतन्याश्रितत्वमित्याह ॥ अज्ञानेति ॥ ज्ञानाज्ञाने हीति ॥ तथाच प्रकाशाप्रकाशयोः सामानाधिकरण्येऽपि नाश्रयत्वमिति भावः ॥ तदविरोधित्वेऽपीति ॥ अज्ञानाविरोधित्वेऽपीत्यर्थः ॥ अज्ञाननिवर्तकस्यैवेति ॥ अन्यथा अज्ञानानिवर्तकस्यापि व्यवहारहेतुत्वमात्रेण ज्ञानत्वाभ्युपगमेऽतिप्रसङ्ग इति भावः ॥ बुद्धिवृत्तिरिति ॥ अन्तःकरणवृत्तिरित्यर्थः ॥ नतु ज्ञप्तिविरोधीति ॥ तथाच चैतन्याज्ञानयोर्नाश्रयाश्रयित्वे विरोध इति भावः ॥ न जानामीति ॥ तथाच ज्ञप्तिविरोध्येवाज्ञानं न करणविरोधीति भावः ।

नन्वस्तु चैतन्यस्यैवाज्ञानाश्रयत्वं, नच विरोधः समानसत्ताकयोरेव तयोर्विरोधात् दृश्यते हि भिन्नसत्ताकयोः [1]सौरप्रकाशदिवाभीतांधकारयोराश्रयाश्रयित्वमित्याशंक्य निराकरोति ॥ नचेति ॥ अन्यथेति ॥ भिन्नसत्ताकयोरविरोधाभ्युपगम इत्यर्थः । किञ्च नाज्ञानं चिन्मात्राश्रयं धर्मिग्राहकमानाभावा( द्बाधादित्याह इति पाठान्तरम् )दित्याह ॥ किंचेति ॥ अन्योन्याश्रयादिति ॥ अज्ञानस्य चिन्मात्राश्रितत्वे सिद्धेऽहमज्ञ इति प्रतीतेर्भ्रमत्वकल्पनं, सिद्धे च भ्रमत्वेऽज्ञानस्य चिन्मात्राश्रयत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । किञ्च बाधाभावादपि नैतज्ज्ञानं भ्रमः । न च

१. दिवाभीतः=घूकः । दिवाभीतः [illegible] प्रकाशमाने पर्याय । [illegible] । सत्यानृततोः प्रकाशाश्रित इत्यर्थः ।

योगाच । बाधकाभिमतस्यैव धर्मिग्राहकैतद्बाधितत्वेनैतद्बाधकाभावाच । मिथ्यारूप्ये-दमंशसंबंधवद्व्यस्ताज्ञानसंबंधस्यापि तद्ग्राहकेणैव ग्राह्यत्वाच । अज्ञानाश्रयत्वधीबलादेवाह-मर्थोऽकल्पितो वाऽविद्यायामनुपपत्तिरलंकारो वाऽस्तु ।

किंच "निरञ्जनो निरवद्यः शोकं मोहमत्येति नित्यमुक्त" इत्यादिश्रुतिविरोधः । नहि मौ(स्त्ये)ख्यं न दोषः । नापि बंधकाज्ञानाश्रयो मुक्तः । नच तात्त्विकाविद्यादेरेव निषेधः । त्वन्मते तस्याप्रसक्तेः । जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वादि व्यवस्थाश्रुतिविरोधाच । मुक्त्यन्वयिनि चिन्मात्रे जीव इव शोकस्य तात्त्विकस्याभावेऽपि मोहवद्व्यावहारिकत्वापाताच । नच श्रुतौ मोहशब्दस्तत्कार्यपरः । मुख्यार्थहानेः, तत्कार्य-शोकादेः पृथगुक्तेश्च । नचेयं श्रुतिः बिंबस्थानीयब्रह्मपरा । जीवेऽप्यज्ञानाभावेन ज्ञाज्ञावी-शानीशावित्यादिश्रुतिषु जीवे अज्ञत्वोक्त्य (अज्ञानीशत्वोक्त्य) योगात् । यद्भावो मुक्ति-स्तच्चिन्मात्रं सावद्यमन्यन्निरवद्यमित्यस्य विरोधाच । नच जीवस्यैव शुद्धस्याज्ञत्वे श्रुत्याद्यत्ति।

---

चिन्मात्रस्य सर्वव्यापि अज्ञानकल्पितत्वेन तदाश्रयत्वान्यथानुपपत्तिरेव बाधिकेति वाच्यम् । कल्पितत्वस्याद्याप्यसिद्धेः, सिद्धौ वा निर्दोषसाक्षिसिद्धाज्ञानाश्रयभिन्नस्यैव तत्सिद्धिरिति न तेनैतत्प्रत्ययस्य बाध इत्यभिप्रेत्याह ॥ बाधकाभिमतस्यैवेति ॥ नन्वहमज्ञ इति न धर्मिग्राहक-मानं, किंतु तम आसीदित्यादिश्रुतिसिद्धाज्ञानस्याश्रयविषयम् । अतो न धर्मिग्राहकमानबाधः । तेन स्वरूपमात्रसिद्धेरित्याशंक्य संबंधग्राहकप्रत्यक्षस्य संबन्धिग्राहकत्वनियमात्तस्य स्यात्तद्वदे-वाज्ञानग्राहकत्वसंभवात् धर्मिग्राहकत्वमिति तद्बाधो दुर्वार इत्याह ॥ मिथ्यारूप्येति ॥ नन्वह-मर्थस्य कल्पितत्वेन नानाश्रयाज्ञानाश्रयत्वमनुपपन्नम् इत्याशंक्याह ॥ अज्ञानाश्रयत्वधीबलादेवेति ॥ अप्रसक्तेरिति ॥ तथाभासस्य प्रसक्तस्याभासस्य निषेधः । तथासति निषेधप्रतियोगित्वेनान्यत्र पारमार्थिकाविद्यासिद्धिप्रसङ्गः । नचैवं श्रुतिरपि पारमार्थिकत्वनिषेधपरेति वाच्यम् । स्वरूपेणैव निषेधसंभवादिति । तदभावेन तात्त्विकाविद्याभावेन ॥ व्यवस्थाश्रुतीति ॥ ज्ञाज्ञौ द्वावजावीशा-नीशौ अनीशया शोचति मुह्यमानः, वीतशोकोऽपि निर्विचिकित्सः, इत्यादिश्रुतीत्यर्थः । यदि मुक्त्यन्वयि-चिन्मात्र एवाज्ञानं तदा जीव इव व्यावहारिकदुःखादिकं स्यात् । नचेष्टापत्तिः । जीवभाव इव तदभावेऽपि मुक्तिर्व्यर्थाभिप्रायेणाह ॥ मुक्त्यन्वयिनीति ॥ नच "मोहमत्येति" इत्यादिश्रुति-मोहकार्यशोकाद्यभावपरत्वावगतेरिति न तच्छ्रुतिविरोध इत्याशंक्य निराकरोति ॥ नचेति ॥

किंच शुक्त्याद्यज्ञानवत् ज्ञातुरर्थाप्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रांतिसंसारादिना स्वनिवर्तकेन तत्त्वज्ञानेन स्वसमानयोगक्षेमेण ज्ञानप्रागभावेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठम्, नतु ज्ञानमात्राश्रितम्। उक्तंहि विवरणेऽपि–जडस्य चाज्ञानाश्रयत्वे भ्रांतिसम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसंगादिति। चिन्मात्रेऽपि ज्ञातृत्वाध्यासोऽस्तीति चेन्न। तस्याविद्याधीनत्वेनान्योऽन्याश्रयात्। चैतन्ये बुद्धिस्थकर्तृत्वाध्यासेन तत्स्थभोक्तृत्वाध्यासवद्बुद्धिस्थज्ञातृत्वाध्यासेन तत्स्थाज्ञत्वाध्यासापत्त्या बुद्धेरेवाज्ञानाश्रयत्वापाताच्च। देहादावपि ज्ञातृत्वाध्याससद्भावाच्च। बुद्ध्यवच्छिन्न एव तद्धर्माणां ज्ञातृत्वकर्तृत्वभोक्तृत्वादीनामध्यासेन चिन्मात्रे तदभावाच्च। तेषां चिन्मात्र एवाध्यासे तु ज्ञातृत्वादिमत्येवाज्ञानांगीकारेण जीवाज्ञानमतं स्यात्। नच शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यस्थमेव। अहं जानामीतिवदहं न जानामीति ज्ञातृस्थ-

---

ननु निरवद्यत्वादिश्रुतिर्न चिन्मात्रपरा, किंतु ज्ञानाश्रयबिम्बभूतब्रह्मपरेति अविरोध इत्याशंक्याज्ञानाश्रयचिन्मात्रस्यानुस्यूततया तथापि तत्प्रसक्त्या श्रुतिविरोधो दुर्वारः। अन्यथा प्रतिबिम्बभूतजीवस्य ज्ञानाश्रयत्वेन तत्र स्यात्। श्रुतिष्वज्ञानोक्तिश्च न स्यादित्यभिप्रेत्याह॥ नचेयमिति॥ अज्ञानभ्रान्तिसम्यग्ज्ञानानामैकाधिकरण्यनियमे विवरणसंमतिमाह॥ उक्तं हीति॥ अन्योन्याश्रयादिति॥ अविद्यायाश्चिन्मात्राश्रितत्वे (श्रयत्वेति पाठान्तरम्) सिद्धे तदधीनज्ञातृत्वाध्याससिद्धिः। सिद्धे चैतस्मिन् भ्रान्त्यैकाधिकरण्यनियमेन तथाज्ञानसिद्धिरित्यन्योन्याश्रयादित्यर्थः। किञ्च यथा कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यनियमात् बुद्धिनिष्ठकर्तृत्वाध्यासेन तन्निष्ठभोक्तृत्वाध्यासो यथा चैतन्येऽङ्गीक्रियते तद्वदेवाज्ञातृत्वमपि तन्निष्ठमेव तत्राध्यस्यते इत्यज्ञानं बुद्धिनिष्ठमेव किं न स्यादित्याशंक्याह॥ बुद्धिस्थेति॥ किंच नाध्यस्तं ज्ञातृत्वमज्ञानाश्रयत्वप्रयोजकम्। देहादेरपि तदाश्रयत्वापातादित्याह॥ देहादावपीति॥ तदभावादिति॥ ज्ञातृत्वाद्यनुभवस्य बुद्ध्यवच्छिन्नचैतन्यविषयत्वेनैवोपपत्तौ चिन्मात्रे तत्कल्पने मानाभावादिति भावः। चिन्मात्र एव ज्ञातृत्वाध्यासे बाधकमप्याह॥ तेषामिति॥ जीवाज्ञानमतं स्यादिति॥ तच्चाग्रे निरसिष्यत इति भावः। नन्वज्ञानं न ज्ञातृनिष्ठं शुक्त्यज्ञाने तदभावादित्याशंक्य तदपि ज्ञानादिवत् ज्ञातृनिष्ठमेवानुभवसाम्यादित्याह॥ नचेति॥ नन्वज्ञानस्य भ्रान्त्यादिना तत्त्वज्ञानेन च सामानाधिकरण्यावश्यकता। तथाज्ञानस्य भ्रान्त्यादिप्रसङ्गः। विशेष्यविशिष्टभावव्यत्ययेन नियामकत्वादित्याशंक्य निराकरोति॥ नचेति॥ विशेष्यनिष्ठं प्रयोजकं विशिष्टे प्रयोज्यमात्रधर्माश्रयं नियमः

त्वानुभवात् । नच विशेष्यविशिष्टभावस्यैव तंत्रत्वाद्विशेष्यस्थमज्ञानं विशिष्टे जीवे संसार-हेतुर्विशिष्टस्य(स्व)तत्वधीविरुद्धं चेति वाच्यम् । विशिष्टे ब्रह्मण्यपि संसारापातात् । देहं प्रति विशेष्याहंकारस्यकर्तृत्वेन देहविशिष्टे भोक्तृत्वापाताच्च । विशेष्यस्थमुक्तेर्विशिष्टस्थसंसार-विरोधापाताच्च । एतेन विशेष्यविशिष्टयोरप्यत्यंतमैक्यं तंत्रमिति निरस्तम् । नचोपाधेः प्रति-बिंबपक्षपातित्वस्वाभाव्यात् जीवे संसार इति वाच्यम् । श्रुत्यादिविरोधसाम्ये अर्धजरतीया-योगेन चिन्मात्र एवाज्ञानस्येव संसारस्याप्यंगीकार्यत्वात्, प्रतिबिंबस्य च्छायादिवद्वस्त्वंतर-त्वाच्च । अचाक्षुषस्य चैतन्यस्य गंधरसादिवत्प्रतिबिंबनानर्हत्वाच्च । प्रतिबिंबत्वे जीवस्य सादित्वाद्यापाताच्च । सूर्यस्य जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमसत्ताकस्याज्ञानस्य चितं प्रत्युपाधित्वायोगाच्च । अस्वच्छद्रव्यस्याज्ञानस्य प्रतिबिंबनोपाधित्वायोगाच्च । अवि-द्यायाश्चिन्मात्राभिमुख्याभावाच्च । उपाधेरज्ञानस्याकाशाद्यात्मना परिणामे प्रतिबिंबापाया-पाताच्च । मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्रत्वरूपव्यक्त्यंतरस्येव जीवब्रह्मानुगत-चित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रयत्वयोग्यव्यक्त्यंतरस्य चाभावाच्च । अनादिभावो न

---

अज्ञानरूपप्रयोजक एव उत प्रयोजकसामान्ये इति विकल्प्याद्यं निराह ॥ विशिष्ट इति ॥ चिन्मात्रविशिष्ट इत्यर्थः । द्वितीयं प्रत्याह (देहं प्रत्यपीति पा.) देहंप्रतीति ॥ किंचैवं विशेष्य-निष्ठमुक्तिरपि विशिष्टे संसारं निरुंध्यात् । विशेष्यविशिष्टभावस्यातिप्रसङ्गभंजकत्वस्याप्य-विशेषाद्बाधकसाम्यमित्याह ॥ विशेष्यस्येति ॥ एतेनेति ॥ विशेष्याहंकारस्यकर्तृत्वेन देह-विशिष्टे भोक्तृत्वापातेनेत्यर्थः ।

ननु विशेष्यस्य प्रयोजकं विशिष्टे प्रयोज्यमादधातीत्ययं नियमो ज्ञान एवाङ्गीक्रियते । नच जीव इव ब्रह्मण्यपि संसारापातः । उपाधेः प्रतिबिम्बपक्षपातित्वादित्याशंक्य निराकरोति ॥ नचेति ॥ श्रुत्यादीति ॥ विरोधस्य त्वत्पक्षेऽपि श्रुतिविरोधसाम्येऽपीत्यर्थः ॥ अर्धजरतीया-योगेनेति ॥ चिन्मात्रे अज्ञानमङ्गीकृत्य संसारानङ्गीकाररूपार्धजरतीयायोगेनेत्यर्थः ॥ प्रतिबिम्ब-स्येति ॥ नचास्य प्रतिबिम्बजीवस्य चिन्मात्रस्य च विशेष्यविशिष्टभावस्यैवाभावात्, चिन्मात्र-निष्ठाज्ञानस्य प्रतिबिम्बजीवे संसारापादकत्वे अत्यातिप्रसङ्गो दुर्वार इति भावः । अस्तु वा बिम्बप्रतिबिम्बयोरैक्यम् । तथापि जीवो न चैतन्यप्रतिबिम्बः । नीरूपस्य प्रतिबिम्बनानर्ह-त्वात् । अन्यथा गंधरसादेरपि प्रतिबिम्बनं स्यादित्याह ॥ अचाक्षुषस्येति ॥ अस्वच्छद्रव्यस्येति ॥

निवर्तेत इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्त्यैवोपाधिः प्रतिबिंबपक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रांत्यादिहेतुरिति विशेषव्याप्त्या बाधाच्च । बंधस्य चिन्मात्राश्रितमोक्षसामानाधिकरण्याच्च । नच व्यक्त्यंतराभावेऽपि जीवाश्रितमेवाज्ञानम् । चिदाश्रयत्वोक्तिस्तु चित्त्वस्याधिकरणतावच्छेदकत्वादिति युक्तम् । अन्योन्याश्रयादेर्वक्ष्यमाणत्वात् । ब्रह्मण्यतिप्रसक्तस्य चित्त्वस्याधिकरणतानवच्छेदकत्वाच्च । चिन्मात्ररूपविशेष्यस्याज्ञानेन विशिष्टे संसारइति च निरस्तम् ।

किंचोपाधेः प्रतिबिंबपक्षपातित्वं किं तत्र स्वधर्मप्रतिभासकत्वम्, स्वकार्यप्रतिभासकत्वं वा, स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा, प्रतिबिंबं प्रति स्वविषयाच्छादकत्वं वा । नाद्यः । मालिन्यादेर्दर्पणादिनिष्ठत्ववत् सुषुप्त्याद्यनुवृत्तस्याविद्यारूपस्य वा अविद्यावच्छिन्नत्वरूपस्य वा तत्प्रतिबिंबितत्वरूपस्य वा सुषुप्त्याद्यननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात् । ज्ञानक्रियासंस्काराणां च त्वन्मते अज्ञानस्थत्वेऽपि नित्यातींद्रियाणां तेषामात्मनि कदाप्यप्रतीतेः । "अविद्यास्तमयो मोक्षः सा संसरउदाहृत" इति त्वन्मतेऽपि

---

अज्ञानस्य स्वच्छत्वे चैतन्यावरकत्वायोगादिति भावः ॥ आभिमुख्याभावाच्चेति ॥ तस्याचैतन्यवृत्तित्वादिति भावः ॥ उपाधेरिति ॥ अज्ञानस्योपाधेर्जगदाकारेण परिणामे पूर्वप्रतिबिम्बस्य बाधापत्तिर्दर्पणाद्युपाधौ तथा दर्शनादिति भावः । किंच नाज्ञानं बिम्बाश्रितं प्रतिबिम्बाश्रितं वा, अनभ्युपगमात् । नचोभयानुगतचैतन्याश्रितम्, तादृशस्य बिम्बातिरिक्तस्य बिम्बव्यक्त्यंतरस्याभावात् । अन्यथा मुखप्रतिमुखातिरिक्तमुखव्यक्त्यन्तरमपि स्यादित्याह ॥ मुखेति ॥ बाधादिति ॥ जीवे संसारमिच्छता तत्रैवाज्ञानमङ्गीकर्तव्यमिति भावः ॥ बन्धस्येति ॥ मोक्षस्य चिन्मात्रनिष्ठत्वेन तत्रैव संसारो न जीवे, बन्धमोक्षयोः सामानाधिकरण्यनियमादिति भावः ॥ जीवाश्रितमेवेति ॥ तथाच न ब्रह्मणि संसारापात इति भावः ॥ अन्योन्याश्रयादेरिति ॥ निराश्रयाविद्यायोगेन जीवसिद्धिः । तत्सिद्धौ च तदुपलक्षिताज्ञानाश्रयजीवसिद्धिरित्यन्योन्याश्रयित्वादित्यर्थः ॥ सुषुप्त्याद्यनुवृत्तस्येति ॥ तथाच तदानीं स्वधर्माभिव्यंजकत्वाभावेन तस्योपाधित्वमेव न स्यादिति भावः ।

ननु ज्ञानक्रियाशक्तिसंस्काराणामपि अविद्यानिष्ठत्वेन तद्गुणसंसाराश्रयकत्वमस्त्वित्याशङ्क्य निराकरोति ॥ ज्ञानेति ॥ अप्रतीतेरिति ॥ प्रत्यक्षेणाप्रतीयमानधर्मस्याप्यधिकरणाधिकत्वा-

अविद्या बंधिका बंधो वा, नतु ब्रह्म। न द्वितीयः। विच्छेदादेरुपाधिकार्यस्य बिंबे महाकाशे च दर्शनान्मुखस्य बिंबत्वादेः ब्रह्मणस्सार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च । प्रतिमुखगत-स्थौल्यादेरुपाधिकार्यत्वेऽपीह जीवगतस्य संसारस्यानादित्वेनाकार्यत्वाच्च। न तृतीयचतुर्थौ। दर्पणघटादावदृष्टेः। एवं बुद्धिरूपोपाधेरपि न प्रतिबिंबपक्षपातित्वम्। तस्या प्रतिबिंबपक्षपाति-जपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानीयत्वाभावात्।

नन्वस्तु तर्हि चिन्मात्रस्यैवाज्ञानं संसारश्च, तदन्यस्य मिथ्यात्वेन मोक्षसमानाधिकरण्य-बंधायोगात्। नित्यमुक्तत्वश्रुतिस्तु बिंबस्थानीयब्रह्मपरेति चेन्न। घटदर्पणोपाधिकयोः परि-च्छिन्नत्वमालिन्ययोरवच्छिन्नाकाशप्रतिबिंबयोरिवाकाशमात्रमुखमात्रयोरदर्शनेन अवच्छेदपक्षे प्रतिबिंबपक्षे चास्यायोगात्। बिंबे ब्रह्मणीव प्रतिबिंबे जीवेऽपि संसाराभावेन जीवब्रह्मणोः संसारासंसारव्यवस्थाश्रुत्ययोगाच्च । नच तार्किकमते आत्मनि दुःखाश्रयता देहादिने-वेहापि चिन्मात्रे संसाराश्रयता जीवत्वेनावच्छिन्ना तदभिप्राया च श्रुतिरिति वाच्यम्। त्वन्मते आत्मन इवात्रापि चित एवानर्थान्वयेन तद्भावरूपमुक्तेरपुमर्थत्वापातात्। नित्य-मुक्तत्वश्रुतेर्निर्विषयत्वापाताच्च। नहि सा कल्पितविशिष्टविषया।

अथ नावच्छेदो नापि प्रतिबिंबनम्। किंत्वविद्यया ब्रह्मण एव जीवत्वम्।

"राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः" ॥

---

पर्यन्तमिति भावः। किंच जीवनिष्ठकल्पव्याविद्याधर्मत्वेन तस्य अपि बन्धत्वं स्यादित्याह ॥ अविद्येति ॥ विच्छेदादेरिति ॥ तथाच स्वकार्यप्रतिभासकत्वं न प्रतिबिंबपक्षपातित्वं, तस्य बिम्ब-साधारणत्वादिति भावः। किंच स्वकार्यप्रतिभासकत्वं किं स्वाधीनप्रतिभासकत्वमात्रं स्वजन्य-प्रतिभासकत्वमात्रं वा तत्र नाद्य इत्याह ॥ मुखस्येति ॥ द्वितीयं निराह ॥ प्रतिमुखगतेति ॥ तस्या इति ॥ तथाच तस्याः स्वसंसर्गिणि धर्मासंजकत्वरूपोपाधित्वमात्रम्। ननु प्रतिबिम्बपक्ष-पातित्वमस्तीति भावः ॥ अवच्छेदपक्ष इति ॥ अवच्छेदकत्वपक्षे प्रतिबिम्बोपाधित्वपक्षे च चिन्मात्रे संसारायोगः, ... परिच्छिन्नत्वादिप्रसङ्ग इति भावः ॥ व्यवस्था-श्रुतेति ॥ ... जीवात्मा शोचति, शोकं मोहं ... इत्यादिश्रुत्ययोगश्चेत्यर्थः। नित्यमुक्तत्व-श्रुतिः बिम्बस्थानीय... विषयेति ॥ नहीति ॥ नित्यमुक्तत्वश्रुतिर्न बिम्बत्वविशिष्ट-... ॥ यथैवमिति ॥ ... ऽपि तत्त्वमस्यादि

इति वार्तिके। "कश्चित्तु किल राजपुत्रो व्याधगृहे संवर्धित" इत्यादिबृहदारण्यकभाष्ये च व्याधवर्धितराजपुत्रदृष्टांतोक्त्या ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च मुच्यत इति स्वीकारात्। नित्यमुक्तत्वश्रुतिस्तु तत्रैव तत्त्वतः कदापि संसाराभावाभिप्रायेति चेन्न। यादृशः कल्पितोऽप्यनर्थरूपः ज्ञानेनोच्छेत्तव्यो बंधः सदा तदभावस्यैव तच्छ्रुत्यर्थत्वेन कल्पितेनापि संसारेणास्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुतेर्निर्विषयत्वापातात्। अन्यथा मुक्तौ शोकाभावश्रुतिरपि शोकस्य तात्त्विकनिषेधपरा[1] स्यात्। असर्वज्ञत्वेनानुभवसिद्धाज्जीवादन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतेर्निर्विषयत्वापाताच्च। बहुजीववादे ब्रह्मभावरूपमुक्तेरपुमर्थत्वापाताच्च। एकजीववादेऽपि जीवब्रह्मणोः संसारासंसारादिव्यवस्थाश्रुतिविरोधाच्च। तयोर्व्यावहारिकभेदस्याप्यभावेन त्वन्मतेऽपि तत्पराभिः "द्वा सुपर्णा, य आत्मनि तिष्ठन्" इत्यादिश्रुतिभिः, "अन्यश्च परमो राजन् तथान्यः पंचविंशकः। तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप" इत्यादिस्मृतिभिः, "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, भेदव्यपदेशाच्चान्यः" इत्यादिसूत्रैः, "तस्माच्छारीरादन्य एवेश्वरः, आत्मानौ हि तावुभौ चेतनौ। एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः" इत्यादित्वद्भाष्यैस्तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवत् नेतरेतरत्रावतिष्ठेते इत्यादिविवरणादिग्रंथैश्च विरोधाच्च।

किंच चिन्मात्रस्याज्ञानं स्वाभाविकं चेदानंदादिवन्न निवर्तेत। औपाधिकत्वे उपाधिः स एव चेदात्माश्रयः। अन्यश्चेदन्योन्याश्रयचक्रकमनवस्था वेति।

॥ इति अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गः ॥ ५१ ॥

---

वाक्यात् स्वरूपज्ञाने सति जीवभावो निवर्तत इत्यर्थः ॥ तत्त्वत इति ॥ संसारे तात्त्विकत्वाभावाभिप्रायेत्यर्थः ॥ अन्यथेति ॥ नित्यमुक्तत्वश्रुतेः संसारे तात्त्विकत्वाभिप्रायकत्व इत्यर्थः। चिन्मात्रस्याज्ञानाश्रयत्वे न केवलं नित्यमुक्तत्वश्रुतिविरोधोऽपितु सर्वज्ञत्वादिश्रुतिविरोधोऽपीत्याह ॥ असर्वज्ञत्वेनेति ॥ अपुमर्थत्वापाताच्चेति ॥ ब्रह्मण पुमनर्थाश्रयत्वादिति भावः। किंच श्रुतिस्मृतिसूत्रैः स्वभाष्यादिग्रन्थैश्च विरोधात् ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इति पक्षो न युक्त इत्याह ॥ तयोरिति ॥ तत्त्वज्ञानेति ॥ यथा अवदातत्वश्यामत्वयोर्न परस्पराधिकरणत्वं तद्वत्सर्वज्ञत्वसंसारावपि न परस्पराधिकरणवृत्ती इत्यर्थः।

॥ इति अज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गः ॥ ५१ ॥

१ परतया इति पाठः।

## ॥ अथ सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः ॥ ५२ ॥

किंच त्वन्मते शुद्धब्रह्मणश्चिन्मात्रत्वेऽपि श्रुत्यादौ तस्य सर्वज्ञत्वात् कथमज्ञानम् ।

"सर्वं हि यो विजानीते तस्य क्वापि नाज्ञता ।
नहि यो यद्विजानीते स तत्राज्ञानवान्भवेत्" ॥

सविशेषमेव ब्रह्म सर्वज्ञमिति चेन्न । "तुरीयं तत्सर्वदृक्सदा" इति शुद्धे तच्छ्रुतेः ।

एतेन सर्वज्ञत्वं भ्रांत्या प्रमाणतो वा स्वरूपज्ञप्त्या वा त्रेधाप्यविद्यासिद्धिः । भ्रांतेः प्रमातृत्वादेश्चाविद्यामूलत्वात् । असंगस्वरूपज्ञप्तेश्चाविद्यां विना विषयासंगतेः । उक्तं हि

"स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् ।
नचोभयं विनाऽविद्यासंबंधं नैव सिद्ध्यति ॥"

इति निरस्तम् । अविद्यारहिते तुरीयेऽपि सार्वज्ञ्यश्रुतेः । एकाश्रयैकविषयकज्ञानाज्ञानयोर्विरोधस्यानुभवाराच्च । स्वरूपज्ञप्तेः स्वतः सर्वकालाद्यसंबंधे असत्त्वापातेन स्वतःसर्वसंबंधाभावे अमर्यगतत्वापातेन चाविद्ययेव स्वत एवान्येनापि संबंधोपपत्तेश्च । असंगत्वश्रुतेस्तु गतिरुक्ता । एतेन ब्रह्मणो ज्ञातृत्वमुपेत्याज्ञानं वदंतो निरस्ताः । तदुक्तम् । "अज्ञाताखिलसंवेत्तुर्घटते न कुत्रचन" इति ।

॥ इति सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः ॥ ५२ ॥

---

॥ अथ सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः ॥ ५२ ॥

पूर्वं चिन्मात्रस्याज्ञानाश्रयत्वे तत्र संसारप्रसक्तिर्विरोध उक्तः । इदानीं तस्य सर्वज्ञत्वेन "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिसिद्धत्वात् तदाश्रयत्वं न संभवति, समानविषयज्ञानाज्ञानयोर्विरोधसिद्धत्वाद् ॥ किंचेति ॥ ननु सर्वज्ञत्वश्रुतिः सगुणब्रह्मपरेति शङ्कते ॥ सविशेषमेवेति ॥ तुरीयमिति ॥ तथा चैतच्छ्रुत्यनुरोधेनोदाहृतश्रुतिरपि शुद्धब्रह्मपरैवेति विरोधो दुर्वार इति भावः । एतेनेत्येतदेव विवृणोति ॥ अविद्यारहित इति ॥ एकाश्रयेति ॥ नच सर्ववित्त्वमविद्यां विनर्ते । स्वपरप्रमातृत्वादेरविद्यामूलत्वेन तस्योपजीव्यत्वादिति वाच्यम् । स्वरूपज्ञानेनैव सार्वज्ञ्यसंभवादिति भावः । नन्वसंगस्वरूपज्ञप्तेरविद्यां विना विषयसंबंधायोगात्तथाप्यविद्यासिद्धिरविशिष्टैवेत्याशङ्क्याह ॥ स्वरूपज्ञप्तेरिति ॥ नन्वसंगो ह्ययं पुरुष इत्यपि श्रुतिविरोध इत्याशङ्क्य कर्मलेपाभावपरतया न व्याघातोऽस्त्याह ॥ असङ्गत्वश्रुतेस्त्विति ॥ एतेनेति ॥ ब्रह्मणः श्रुत्यादौ सर्वज्ञतया प्रतिपादितत्वेनैवेत्यर्थः ।

॥ इति सर्वज्ञस्याज्ञानाश्रयत्वभङ्गः ॥ ५२ ॥

## ॥ अथ परोक्तब्रह्ममायित्वभङ्गः ॥ ५३ ॥

एतेन मा भूद्ब्रह्मण्यविद्या । माया तु स्यात् । तस्या लीलोपकरणत्वेनादोषत्वादिति निरस्तम् । तथाहि । सा किमज्ञानविशेषः किं वा देवासुरसंग्रामादौ देवादेर्बाह्यसाधनमनपेक्ष्यैव वह्निजलादिविचित्रसत्यवस्तुसर्जनशक्तिवच्छक्तिविशेषः । यद्वैंद्रजालिकस्येवाविद्यमानप्रदर्शनशक्तिः । नाद्यः । उक्तरीत्या सामान्याभावे विशेषायोगात् । अज्ञानस्य लीलोपकरणत्वादर्शनाच्च । तस्मिन्मायाशब्दाप्रयोगाच्च । नह्येंद्रजालिकोऽपि कस्यचिदज्ञानेनेंद्रजालं दर्शयति, किंतु मणिमंत्रादिनैव । न द्वितीयः, इष्टापत्तेः । न तृतीयः, व्यामोहनीयजीवादर्शने व्यामोहनायोगात् । कल्पिततदर्शनस्य च भ्रांतिं विनाऽयोगात् । कल्पितत्वेन तद्दर्शने च तद्व्यामोहनायोगात् । तस्यापि द्वितीयचंद्रदर्शनस्येवाविद्यां विनायोगाच्च । किंच तस्याः शक्तेः सत्त्वे अद्वैतहानिः । जीवकल्पितत्वे तद्व्यामोहकत्वायोगः । ब्रह्मकल्पितत्वे तस्याज्ञानावश्यंभावः ।

॥ इति परोक्तब्रह्ममायित्वभङ्गः ॥ ५३ ॥

---

॥ अथ परोक्तब्रह्ममायित्वभङ्गः ॥ ५३ ॥

मायात्विति ॥ तस्या अनावरकत्वेन न सर्वज्ञत्वादिश्रुतिविरोध इति भावः । नन्वेवं निरवद्यत्वश्रुतिविरोध इत्याशङ्क्याह ॥ तस्या इति ॥ अज्ञानस्येति ॥ तथा च निरवद्यत्वादिश्रुतिविरोधः स्यादेवेत्यर्थः । किंच नाज्ञानं मायाशब्दार्थः । प्रमाणाभावादित्याह ॥ तस्मिन्निति ॥ ननु ब्रह्मणः सर्वज्ञतया व्यामोहनीयजीवानपि पश्यत्येवेत्याशङ्क्य कल्पितजीवादिकं स्वरूपेण पश्यति उत कल्पितत्वेन वा, नाद्य इत्याह ॥ कल्पितेति ॥ द्वितीयं निराह ॥ कल्पितत्वेनेति ॥ नहि रज्जौ सर्पः कल्पित इति जानन् तद्धननायोद्यतदण्डः प्रवर्तमानो दृश्यत इति भावः ॥ तस्यापीति ॥ कल्पितत्वेन व्यामोहनीयजीवस्यापीत्यर्थः ॥ तस्याः शक्तेरिति ॥ अविद्यमानप्रदर्शिकाया इत्यर्थः ।

॥ इति परोक्तब्रह्ममायित्वभङ्गः ॥ ५३ ॥

## ॥ अथ अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः ॥ ५४ ॥

यथोक्तं वाचस्पतिना जीवाश्रिताविद्येति । तन्न । जीवशब्देन चिन्मात्रलक्षणाया-मुक्तदोषात् । अविद्यया वा आविद्यकबुद्ध्यादिना वावच्छिन्नस्य तत्प्रतिबिंबितस्य वा कल्पित-भेदस्योक्तावन्योन्याश्रयात् । नच बीजांकुरन्यायेनासौ न दोषः । तद्वदिह व्यक्तिभेदा-भावात् । संतानिव्यतिरेकेण च तत्र संतानयोरन्योन्यापेक्षाभावात् । नच यथा निरंशेऽप्या-काशे घटस्तटस्थ एव तदुपलक्ष्यैकदेशं संपाद्य तेन संबध्यते तद्वदविद्यापि तटस्थैव चिन्मात्र-मुपलक्ष्यैकदेशरूपजीवं संपाद्य तत्रावतिष्ठत इति नेतरेतराश्रयः ।

> " खेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम् ।
> तथा जीवाश्रयाविद्यां मन्यंते ज्ञानकोविदाः ॥ "

इत्युक्तेरिति वाच्यम् । निराश्रयाविद्यायोगेन जीवसिद्धिस्तत्सिद्धौ तदुपलक्षितजीवसिद्धिरित्य-न्योन्याश्रयात् । त्वन्मते गगनस्याप्यनित्यद्रव्यत्वेन स्वत एवांशसंभवाच्च । नच जीवा-विद्ययोरनादित्वेनोत्पत्तिज्ञप्तिप्रतिबंधादयमदोषः । यतः—

> " अविद्याजीवयोर्यत्र व्यपेक्षा तन्निरोधकः ।
> अन्योन्यसंश्रयो नोचेदन्योन्याधीनताहतिः ॥ "

---

॥ अथ अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः ॥ ५४ ॥

नन्वस्तु चिन्मात्राश्रिता अविद्या, जीवाश्रिता तु स्यात् अहं न जानामीत्यनुभवादिति मतं दूषयितुमनुवदति ॥ यथेति ॥ अन्योन्याश्रयादिति ॥ अविद्यासिद्धौ तदधीनजीवसिद्धिः । तत्सिद्धौ च तदाश्रिताविद्यासिद्धिरिति । ननु सन्तानिव्यक्तिभेदेऽपि बीजांकुरसन्तानयोरन्यो-न्याश्रयस्यानादित्वेन परिहारवदिहापि स न दोष इत्याशङ्क्याह ॥ सन्तानिव्यतिरेकेणेति ॥ संतान्यपेक्षाव्यतिरेकेणेत्यर्थः । घटस्याम्बराश्रितस्य तदवच्छिन्नाकाशैकदेशस्याश्रयत्वमाकाशस्य संपादकत्वं युक्तम् । अवि-द्यायाः आश्रयात्मलाभे तदवच्छिन्नचैतन्यैकदेशस्य जीवस्य संभवादन्योन्याश्रयो दुर्वार एवेत्याह ॥ निराश्रयेति ॥ किंच त्वदुक्तिया दृष्टान्तो विषम इत्याह ॥ त्वन्मत इति ॥ अयमिति ॥ अन्योन्याश्रय इत्यर्थः । ननु उत्पत्तिज्ञप्तिप्रतिबन्धकत्वादयमदोष इति चेत् अत आह । चिन्मात्रजीवयोरन्योन्यापेक्षास्ति

अज्ञानजीवयोर्हि कुत्रापि विषयेऽन्योन्यापेक्षा न चेदन्योन्याधीनताव्याहतिः । नहि सर्वथा तदनपेक्षं तदधीनम् । अथानादित्वेऽपि द्रव्यत्वगुणत्वादिजातिव्यंजकयोरिव प्रयुक्त्यादावपेक्षा तर्ह्यन्योन्याश्रयस्तस्यैव प्रतिबंधकः । द्रव्यत्वादौ व्यंग्यमेव व्यंजकप्रयुक्तं नतु व्यंजकं व्यंग्यप्रयुक्तम् । इह तु जीवब्रह्मविभागस्याविद्यकत्वादविद्यायाश्च जीवाश्रितत्वात् जीवत्वाज्ञाने अन्योन्यप्रयुक्ते इति प्रयुक्तेरेव प्रतिबंधः । एवं च

"यद्युत्पत्तिज्ञप्तिमात्रप्रतिबंधेन दोषता ।
तर्हि स्वाचैत्रमैत्रादेरन्योन्यारोहणादिकम् ॥"

नच प्रमेयत्वाभिधेयत्वादावन्योन्यवृत्तिवदिहान्योन्यापेक्षा प्रमिता । अन्यथाऽन्योन्याश्रयादिः क्वापि दोषो न स्यात् । जीवत्वप्रयोजकमज्ञानांतरं चेत् चक्रकमनवस्था वा । नचेयं परंपरा सिद्धविषया । अहमज्ञ इति प्रतीतेः सत्यभेदेनैवोपपत्तेः ।

किंच जीवेश्वरयोर्जीवेश्वराभ्यां कल्पितत्वे आत्माश्रयात् , ईश्वर (ब्रह्म) जीवकल्पित

---

उत नेति विकल्प्य कारिकां व्याकुर्वन् द्वितीयमनूद्य निराकरोति ॥ अज्ञानजीवयोरिति ॥ प्रथमपक्षमाशङ्क्य निराचष्टे ॥ अथेति ॥ ननु न प्रयुक्तावन्योन्याश्रयो दोषः । द्रव्यत्वगुणत्वव्यञ्जकयोस्तत्वदर्शनात् । अन्यथा तयोरपि तथात्वादन्योन्याश्रयो दोषस्स्यादित्याशंक्याह ॥ द्रव्यत्वादाविति ॥

ननूत्पत्तिज्ञप्त्योरेवान्योन्याश्रयः प्रतिबन्धकः । न प्रयुक्तौ । द्रव्यत्वगुणत्वयोः परस्परं व्यंग्यव्यंजकभावसत्त्वेन तत्राप्यन्योन्याश्रयत्वस्यादोषत्ववदिहाप्यन्योन्याश्रयस्यादोषत्वमित्याशंक्याह ॥ यदीति ॥ नन्वन्यथाप्यदृष्टमपि प्रमाणसिद्धत्वात् प्रमेयत्वादेरन्योन्याश्रयणं यथा न दोषः, एवमिहापि स्यादित्याशंक्य निराकरोति ॥ नचेति ॥ जीवत्वाज्ञानत्वयोः प्रमाणाभावादिह अन्योन्याश्रयो दोष एवेति भावः ॥ नचेति ॥ नहीत्यर्थः ॥ नन्वेकमेवाज्ञानं जीवाश्रितं जीवत्वप्रयोजकं च । नचान्योन्याश्रयः । अहमज्ञ इति प्रमाणसिद्धत्वेनादोषत्वादित्यत आह ॥ अहमज्ञ इति प्रतीतेरिति ॥ जीवपरयोर्भेदस्य सत्यत्वेन जीवत्वस्य स्वाभाविकतया अज्ञानप्रयुक्तत्वं विनाप्युक्तप्रतीतिरुपपद्यत इति नायमन्योन्याश्रयः सिद्धविषय इति भावः । किंचाज्ञानं शुद्धचैतन्याश्रितमेव, तस्यैवेश्वरादिसर्वकल्पकत्वात् । नचेश्वरो जीवो वा स्वकल्पकौ, आत्माश्रयादन्योन्यकल्पकत्वे चान्योन्याश्रय इति नाज्ञानं जीवाश्रितमित्याह ॥ किंचेति ॥ नन्वविद्यायामाश्रयानिरूपणं न दोषः । "दुर्घटत्वमवि-

त्वेऽन्योन्याश्रयात् । तत्कल्पकस्य शुद्धस्य ब्रह्मणोऽज्ञानमावश्यकम् । नचाविद्याया दौर्घट्यं भूषणम् । तत्र लक्षणप्रमाणाद्युक्त्ययोगात् । अविद्याया निराश्रयत्वनिर्विषयत्वात्मस्वरूपत्वाद्यापाताच्च । प्रतीत्यनुसारेणाश्रयाद्यंगीकारे च घटमहं न जानामीतिप्रतीत्याहमर्थाश्रितत्वजडविषयत्वादिप्रसंगाच्च । अनादित्वादिनाऽनुपपत्तिपरिहारायोगाच्च । उत्तरास्फुरणे प्रकृतिसंवृत्वादेर्दौर्घट्यं भूषणमिति सुवचत्वेन सांख्यबौद्धादिमतनिरासायोगाच्च । उक्तंच ।

"दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः ।
अंधतमोऽप्यलंकारो नित्यदुःखं शिरोमणिः ॥"

इति । एतेन

"प्रश्नविश्रांति(हेतु)भूमित्वाद्बोधं तमसि नोचितम् ।
न बुद्धिमंतः पृच्छंति न जानामीतिवादिनम् ॥"

इति निरस्तम् । नह्यज्ञं प्रत्यप्रश्नोऽज्ञानस्य दौर्घट्यात्, ज्ञानमेवाज्ञानमित्याद्युक्तावपि विरोधाद्यनुद्भावनापातात् । किंतु ज्ञातुरेव वक्तृत्वात् ।

॥ इति अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः ॥ ५४ ॥

---

मविद्याया भूषणं ननु दूषणम्" इत्यङ्गीकारादित्यत आह ॥ नचेति ॥ ननु पररीत्या परो बोधनीय इत्यभ्युपेत्य तदुक्तिः । न तु वस्तुतस्तदित्यत आह ॥ अविद्याया इति ॥

नन्वज्ञानस्याश्रयादिरनुभवबलादेवाभ्युपेय(ते) इत्याशंक्य तर्ह्यनुभवसिद्धत्वेनैव तस्याहंकाराश्रयत्वं घटादिजडविषयत्वं च स्यादित्याह ॥ प्रतीतीति ॥ एतेनेत्येतदेव विवृणोति ॥ नहीति ॥

॥ इति अज्ञानस्य वाचस्पत्युक्तजीवाश्रितत्वभङ्गः ॥ ५४ ॥

## ॥ अथ अविद्याविषयभङ्गः ॥ ५५ ॥

अविद्याविषयोऽपि दुर्वचः । यदत्रोक्तं विवरणे । अज्ञानस्य चिन्मात्रमेव विषयः । तस्याकल्पितत्वेनान्योन्याश्रयादिदोषाभावात् । स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्नावरण-कृत्यासंभवाच्च । नत्वन्यत् । तस्याज्ञानकल्पितत्वात् । जडत्वेन स्वयमेव प्रकाशहीने आव-रणकृत्याभावाच्चेति ।

अत्र ब्रूमः । चिन्मात्रेऽप्यावरणकृत्यं न तावत्सिद्धप्रकाशलोपोऽसिद्धप्रकाशानुत्पत्तिर्वा । स्वरूपप्रकाशस्य नित्यसिद्धत्वात् । तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात् । नापि सतोऽपि प्रकाशस्य विषयासंबंधः । ज्ञानस्य विषयसंबंधस्वभावत्वात्, स्वयं ज्ञानरूपत्वेन त्वन्मते संबंधानपेक्षणाच्च । नापि प्राकट्याख्यकार्यप्रतिबंधः । त्वन्मतेऽपि चैतन्यातिरिक्तस्य तस्याभावात् । नापि नास्ति न प्रकाशत इत्यादिव्यवहारः । व्यवहारो ह्यभिज्ञा, अभिलपनं वा । नाद्यः । नास्तीत्यादिभ्रांतेरावरणसाध्यत्वेनावरणत्वायोगात् । अत एव नांत्यः । तस्योक्त-भ्रांतिसाध्यत्वेन भ्रांन्तिहेत्वावरणत्वायोगात् । सुषुप्तौ व्यवहाराभावेनानावरणापाताच्च । नाप्यस्ति प्रकाशत इत्यादिव्यवहाराभावः । व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानी-

---

॥ अथ अविद्याविषयभङ्गः ॥ ५५ ॥

आवरणकृत्येति ॥ आवरणरूपकृत्येत्यर्थः ॥ अज्ञानकल्पितत्वादिति ॥ तथाचाज्ञान-सिद्धौ कल्पितविषयसिद्धिः । तत्सिद्धौ च सविषयकाज्ञानसिद्धिरित्यन्योन्याश्रयः । व्यक्तिभेदा-श्रयणे तु चक्रकापत्तिरिति भावः ॥ स्वरूपप्रकाशस्येति ॥ तन्नाशाभ्युपगमे चात्महान्यापत्तेः स्वरूपप्रकाशविलोपो नावरणकृत्यमिति भावः । द्वितीयपक्षं दूषयति ॥ तदन्यस्य चेति ॥ तथाच प्रकाशान्तरानुत्पत्तिलक्षणावरणकृत्यस्यात्मस्वरूपप्रकाशाविरोधितया तत्सत्त्वेऽपि यथावदात्मस्वरूप-भानापत्तिरिति भावः ॥ ज्ञानस्येति ॥ तथाच स्वभावस्यानपायात् सर्वदा विषयसंबन्धोऽस्तीति न तदभावोऽज्ञानेनापि सुसंपाद इति भावः ॥ स्वयमिति ॥ तथाच जडस्य भानार्थं चैतन्यसंबन्धा-पेक्षणेऽपि चैतन्यस्य स्वप्रकाशस्य भानार्थं(संबन्धान्तरानपेक्षणेन इति पा.)स्वसंबन्धान्तरानपेक्षणेन सर्वदा यथावत् भानं स्यादिति भावः ॥ प्राकट्येति ॥ ज्ञाततापरनामकप्राकट्येत्यर्थः ॥ त्वन्मतेऽपीति ॥ विशिष्यानुक्तिविषये "व्यवहारे भाट्टनय" इत्यङ्गीकारेऽपि अत्र पक्षेण तद्-

चितोऽज्ञानानवच्छेदेन प्रकाशस्यांगीकार्यत्वाच्च ।

एतेनाज्ञानाविशेषितापरोक्षव्यवहारायोग्यत्वमावरणकृत्यमित्यपि निरस्तम् । नचोक्तयोग्यत्वायोग्यत्वरूपयोः प्रकाशाप्रकाशयोः सत्यत्वमिथ्यात्वाभ्यां विरोध इति वाच्यम् । सुखादिस्फुरणं न प्रकाशत इत्यननुभवेन सुखादिसाक्षिणि चैतन्ये आरोपितस्याप्यप्रकाशस्याभावात् । वह्नाववह्नित्वारोपेऽपि वह्निकार्यस्येवाप्रकाशारोपेऽपि प्रकाशकार्यभ्रांत्याद्यभावस्यापाताच्च । सतः शुक्तित्वस्यारोपितेनाशुक्तित्वेनाविरोधेऽपि सतोऽधिष्ठानप्रकाशस्यारोपांतरेणेवाप्रकाशारोपेणापि विरोधाच्च । अन्यथा तन्निवृत्तिर्न स्यात् । नचावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतात्यंताभावानधिकरणत्वं स्वप्रकाशत्वमुक्तयोग्यताप्रागभावश्चावरणमित्यविरोधः । स्वरूपप्रकाशप्रयुक्तयोग्यताया अनादित्वात् । इदानीं योग्यतारूपप्रकाशस्य प्रागभावः, मोक्षे तु ध्वंस इति मोक्षेऽप्यप्रकाशापाताच्च । भवति हि दीपात्पूर्वमिव पश्चादप्यप्रकाशः । एवंच

"स्वप्रभत्वेनापरोक्षव्यवहारार्ह आत्मनि ।
तद्योग्यत्वाभावरूपमविद्यावरणं कथम् ।"

---

किंच सुखादिसाधकं स्वप्रकाशमित्यविवादम् । तच्चेदज्ञानावच्छिन्नं तदा सुखादिकं न प्रकाशत इत्येवानुभवः स्यात् । नचैवं । तथाच चितः स्वरूपेणैव स्वप्रकाशत्वमङ्गीकार्यमिति उक्तावरणस्वप्रकाशत्वयोः विरोधस्तदवस्थ इत्यभिप्रेत्याह ॥ सुखादेरिति ॥ एतेनेति ॥ उक्तविरोधेनेत्यर्थः । न जानामीत्यपरोक्षव्यवहारयोग्यत्वेनासंभववारणायाह ॥ अज्ञानाविशेषितेति ॥ सुखादिस्फुरणमिति ॥ तथाचारोपिताप्रकाशेन चिन्मात्रावरणमिति नाज्ञानं तद्विषयमिति भावः । किंचारोपितस्य स्वभावकार्यप्रतिबंधकत्वेनारोपिताप्रकाशो नावरणमित्याह ॥ वह्नाविति ॥ अन्यथारोपितानारोपितयोरविरोधेऽपि प्रकृते आरोपितानारोपितयोः विरोधो दुर्वारः । अन्यथारोपिताप्रकाशोऽपि न चैतन्येन निवर्त्येतेत्याह ॥ सत इति ॥ उक्तयोग्यतेति ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतेत्यर्थः । योग्यता किं स्वरूपप्रयुक्ता उतागंतुकीति विकल्प्य नाद्य इत्याह ॥ स्वरूपप्रकाशेति ॥ द्वितीयं निराह ॥ इदानीमिति ॥ प्रागभाव एवावरणं न ध्वंस इत्यत्र नियामकाभावेन ध्वंसस्याप्यावरणत्वापत्त्या मोक्षेऽप्यावरणं स्यादिति भावः । उक्तमर्थं दृष्टान्तमुखेनोपपादयति ॥ भवति हीति ॥ उक्तमेवार्थं संगृह्णाति ॥ एवंचेति ॥ किंचाविद्याया आवरकत्वेऽपि न चैतन्यं

वच्छेदकस्य विषयस्याज्ञाने तदवच्छिन्नाज्ञानज्ञानायोगात् । नच सामान्येन ज्ञातेऽपि विशेषेणाज्ञानमिति वाच्यम् । सामान्यस्य ज्ञातत्वादेवाज्ञानानवच्छेदकतया तदवच्छेदकस्य विशेषस्यैव ज्ञातव्यत्वात्, अविद्यानिवृत्तिस्त्वात्ममात्रविषयकावृत्तिविशेषादेव । एकविषयत्वेऽपि वृत्तिचितोरज्ञानविरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाश-योर्वा तमोविरोधित्वाविरोधित्ववत्, शंखे शैत्यप्रत्यक्षानुमित्योः पीतत्वभ्रमविरोधित्वा-विरोधित्ववच्च युक्ते । एवं च प्रकाशमाने आवरणकृत्याभावेऽप्यज्ञानमविरुद्धमिति मम सिद्धांतरहस्यमिति । अत्रोच्यते । त्वयाप्यनवच्छिन्नब्रह्मानंदाप्रकाशार्थमेवाज्ञानस्य कल्पित-त्वेन कथं प्रकाशमाने अज्ञानम् । अपिच त्वदुक्तोऽर्थो न प्रकाशत इत्यनुभवादस्तु तत्र भास-माने अज्ञानम् । नचेह सुखादिस्फुरणं न प्रकाशत इत्यनुभवोऽस्ति, येन भासमाने तत्स्यात् । किंच न तत्रापि भासमाने अज्ञानम्, गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैवाज्ञानानुभवात् । नहि परचित्तस्थमज्ञानं त्वयापि क्षुत्-पिपासादि( वत् )प्रातिस्विकरूपेणानुभूयते । एवं च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः । तथा दर्शनात् । नहि विशेषे ज्ञाते

---

ननु समानविषयकप्रकाशत्वाविशेषे एकस्याज्ञानविरोधित्वमपरस्य तु नेत्येतत् कुत इत्याशङ्क्य दृष्टान्तमुखेनोपपादयति ॥ एकविषयत्वेऽपीति ॥ अत्र अज्ञानविरोधित्वाविरोधित्वे युक्ते इत्यन्वयः । त्वयापीति ॥ अन्यथा इदानीमप्यनवच्छिन्नब्रह्मानन्दाप्रकाशसत्त्वेन तदर्थं श्रवणाद्यनुसरणं न स्यादिति भावः । किंचाज्ञानं न भासमानचैतन्यविषयकं प्रमाणाभावादित्याह ॥ अपिचेति ॥ तदिति ॥ अज्ञानमित्यर्थः । पूर्वं भासमानेऽप्यज्ञानं कचिदभ्युपेत्य प्रकृते नास्तीत्यभिहितम् । इदानीं तु न कापि भासमानेऽर्थेऽज्ञानमित्याह ॥ किंच न तत्रापीति ॥ एतमेवार्थं सदृष्टान्त-मुपपादयति ॥ गुहास्थमिति ॥ यथा गुहास्थं तमश्छन्नमित्यनुभवो गुहास्थेऽर्थे तमस्त्व-सामान्याकारेण भवद्विशेषांशं(त्व) विशेषाकारेणानवभासमानं तमश्छन्नत्वाकारेणैव गोचरयति । एवं त्वदुक्तमर्थं न जानामीत्यनुभवस्त्वदुक्तार्थत्वरूपसामान्याकारेण भवन् तद्विशेषांशं विशेषा-कारेणानवभासमानमज्ञानावृतत्वेनैव गोचरयतीत्यर्थः । एतदेवोपपादयति ॥ नहीति ॥ प्राति-स्विकरूपेणेति ॥ विषयविशेषांकितत्वेनेत्यर्थः ।

ननु विषयविशेषानुपस्थितौ कथं तद्विषयकाज्ञानज्ञानमित्यत आह ॥ एवंचेति ॥ विशे-

तदर्शनयोर्दृष्टा । अवच्छेदकज्ञानस्यावच्छिन्नज्ञानहेतुतापि हि दर्शनादेव कल्प्या । सामान्यविशेषभाव एव च नियामक इति नातिप्रसंगः । युक्तं च द्वेषस्येष्टत्वेऽपि द्विष्टस्येष्टत्वाभाववत् ईश्वरस्यास्मदादिभ्रांतिविषयविषयकज्ञानाभावेऽपि भ्रांते ( तिविषयकज्ञाऽ ) ज्ञानवदस्मदादीनां सर्वाज्ञानेऽपि ईश्वरमात्रज्ञानवत्याज्ञातज्ञानाभावेऽप्यज्ञानज्ञानम् । अन्यथा ।

"मोहमानार्थमज्ञानमानं यदि च कल्प्यते ।
अज्ञाते मोहहानिश्च तदर्थं किं न कल्प्यते ॥"

तथाहि । संयोगाद्यवच्छेदकस्य घटादेरज्ञानावच्छेदकतया ज्ञानेऽपि घटाद्यज्ञाननिवृत्तिं विनाऽवच्छिन्नसंयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञानज्ञानार्थं तदवच्छेदकविषयावरकाज्ञाननिवृत्तेरपि वक्तव्यत्वेनाज्ञानाविरोधिज्ञानवदज्ञानाविरोधिन्यज्ञाननिवृत्तिरपि स्वीकार्या स्यात् । अथ यथाऽन्यत्रावच्छिन्नसत्त्वस्यावच्छेदकसत्त्वसापेक्षत्वेऽप्यारोपितावच्छिन्नाभावसत्त्वस्य नारोपितसत्त्वसापेक्षत्वं विरोधात् । तथा विषयावच्छिन्नाज्ञानज्ञानस्य न विषयाज्ञाननिवृत्तिसापेक्षत्वं विरोधादिति चेत् तर्हि तत एव तस्य न विषयज्ञानसापेक्षत्वमपि ।

---

साकारेण विशेषज्ञानं तद्विषयकाज्ञानविरोधीति न तदवच्छिन्नाज्ञानहेतुरित्यभिप्रेत्याह ॥ नहीति ॥ ननु तद्विशिष्टविषयज्ञाने तद्विशेषणज्ञानं कारणं वाच्यम् । अन्यथातिप्रसंगात् । तथाच विशेषानुपस्थितौ तदवच्छिन्नाज्ञानज्ञानमेवासंभवीत्यत आह ॥ अवच्छेदकज्ञानस्येति ॥ अन्यत्र तथात्वेऽपि प्रकृते सामान्याकारमात्रेण विशेषावच्छिन्नाज्ञानानुभवात् तथात्वम् । अन्यथा जिज्ञासागोचरज्ञानमात्रेऽप्येवमसंगादिति भावः । नन्वन्यज्ञानस्य विशिष्टपरज्ञानहेतुत्वेऽतिप्रसंग इत्यत आह ॥ सामान्येति ॥ ननु सविषयकपदार्थौ यत्र विषयस्तत्र तद्विषयोऽपि विषयः । ज्ञानविषयकज्ञाने तथा दर्शनादित्याशङ्क्य ईश्वरो व्यभिचारात्रायं नियम इत्याह ॥ युक्तं चेति ॥

ननु यत्र ज्ञाने सविषयकपदार्थो भासते तत्र तद्विषयोऽपि भासत इत्येवं नियमाशोक्तव्यभिचार इत्याशंक्याह ॥ ईश्वरस्येति ॥ अज्ञानज्ञानमिति ॥ एतच्च युक्तं चेति पूर्वेण संबध्यते । अन्यथेति ॥ विषयज्ञानं विना ज्ञानाज्ञानायोगात् अज्ञानविरोधिविषयज्ञानाकल्पन इत्यर्थः ॥ मोहेति ॥ अज्ञाने इत्यर्थः । श्लोकं व्याचष्टे ॥ तथाहीति ॥ अन्वयव्यतिरेकाभ्यां ससंबन्धिकपदार्थप्रत्यक्षे संबन्धिप्रत्यक्षस्येव संबद्धविषयकाज्ञाननिवृत्तेरपि कारणत्वावधारणात् अज्ञानाविरोधित्वनिवृत्त्यन्तरमपि कल्पनेति भावः । ननु ससंबन्धिकपदार्थप्रत्यक्षे संबन्धिविषयकाज्ञाननिवृत्तेरन्यत्र कारणत्वेऽपि विरोधादेव कारणत्वम । अविरोधे तु तन्निवृत्तिरपेक्षैव न स्यादिति शङ्कते ॥ अथेति ॥ तत एवेति ॥ स्वविषयकाज्ञानघोरविरोधादेवेत्यर्थः ।

किंचाज्ञानस्य ज्ञानांतरविरोधित्वेऽपि साक्ष्यविरोधवत् (धित्ववत्) अन्यत्रावच्छेदकज्ञानाभावस्यावच्छिन्नाज्ञानाविरोधः किं न स्यात्। अज्ञानस्य विषयविशेषावच्छेदसिद्धिस्तु तमस इव विशेषज्ञानानंतरमेतावंतं कालममुमर्थमित्थं नाज्ञासिषमित्यनुभवांतरादिति ज्ञेयम्।

यच्चोक्तं साक्ष्यज्ञानस्फोरकत्वात्तदविरोधी। वृत्तिरेव तु विरोधिनीति। तन्न। वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते तस्या अज्ञानानिवर्तकत्वात्। अज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापाताच्च। न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वानुभवाच्च। न जानामीति ज्ञप्तिविरोधित्वस्यैवानुभवाच्च। त्वत्पक्षे च चैतन्यस्यैव ज्ञप्तित्वात्। चैतन्याज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगस्योक्तत्वाच्च। वृत्तेरप्यर्थप्रकाशकत्वं विना जातिविशेषेणैवाज्ञानतत्कार्यनिवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवत् सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थप्रकाश-

---

ननु विषयविशेषस्याज्ञानानुभवेन तदवच्छेदकत्वेनापि विषयीकरणे तस्यायमर्थविशेषो विषय इति न सिध्येदित्यत आह ॥ अज्ञानस्येति ॥ यच्चोक्तमिति ॥ अथ मतमित्यादिपूर्वग्रन्थे यच्चोक्तमित्यर्थः ॥ विरोधिनीति ॥ विशेषनिवर्तिकेत्यर्थः ॥ मोक्षेऽपीति ॥ नच वृत्तिवत्तद्ध्वंसोऽप्यज्ञानविरोध्येवेति मोक्षे नाज्ञानापादनं युक्तमिति वाच्यम्। तमोनिवर्तकालोकध्वंसस्य तमोविरोधित्वादर्शनेन वृत्तिध्वंसस्याप्यज्ञानाविरोधित्वादिति भावः।

ननु ब्राह्मणविशेषविरोधिन्येव ब्राह्मणविरोध्यसावितिवत् सामान्यधर्मपुरस्कारेणापि ज्ञानविशेषवृत्तिविरोधित्वमेवानुभूयत इत्यनुशय( यदाहेति पाठः)वानाह ॥ न जानामीति ॥ तथाच वृत्तेर्ज्ञत्वेनाज्ञप्तितया सामान्यधर्मपुरस्कारेणापि न तद्विरोधित्वमुक्तानुभवविषय इति भावः ॥ चैतन्याज्ञानयोरिति ॥ ज्ञानमेवाज्ञाननिवर्तकम्। अज्ञानमेव च ज्ञाननिवर्त्यमिति त्वदभ्युपगमात् चैतन्याज्ञानयोरविरोधेन व्यापकनिवृत्त्या चैतन्यस्य ज्ञानत्वमज्ञानस्य चाज्ञानत्वं (च) न स्यादिति पूर्वमेवोक्तमिति भावः। किञ्च वृत्तेरज्ञाननिवर्तकत्वमर्थप्रकाश(क)त्वेनैव वाच्यम्। न तु जातिविशेषावच्छिन्नतया। तन्निवर्त्याज्ञानादेः मिथ्यात्वासिद्धिप्रसङ्गात्। अर्थप्रकाशकत्वं च चैतन्येऽप्यविशिष्टमिति तस्याप्यज्ञानविरोधित्वं दुर्वारम्। अन्यथातिप्रसक्ततयार्थप्रकाशकत्वमज्ञाननिवर्तकतावच्छेदकं न स्यादित्यभिप्रेत्याह ॥ वृत्तेरपीति ॥ किञ्च वृत्तिमात्रमज्ञानविरोधि, उत परोक्षवृत्तिरिति विकल्पयोरुभयत्रापि व्यभिचारात् न वृत्तिरज्ञानविरोधिनी किन्तु चैतन्यमेवेत्याह ॥

त्वेन तन्निवर्तके वक्तव्ये चैतन्यस्यापि तत्त्वेन तन्निवर्तकत्वावश्यंभावाच्च । त्वन्मते नित्या-तीन्द्रिये परोक्षवृत्तौ सत्यामपि अज्ञानानिवृत्त्या सुखादावपरोक्षवृत्त्यभावेऽपि स्फुरणमात्रेण-ज्ञानादर्शनेन चान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानविरोधित्वाच्च । स्वसत्तायामप्रकाश-विरोधित्वेनात्मनः स्वप्रकाशत्वसाधनायोगाच्च । वृत्तिचितोर्वैषम्योक्तिश्चायुक्ता । वृत्तिवत्साक्षि-णोऽपि समानविषयकाज्ञानविरोधित्वानुभवात् । अनुभूयते ह्यज्ञानविषयकानुमित्यादिरूप-वृत्तिवदज्ञानविषयकसाक्षिणोऽप्यज्ञानविषयकाज्ञानविरोधित्वं साक्षिवेद्याज्ञानविषयकवृत्तेरप्य-ज्ञानविषयविषयकाज्ञानविरोधित्वं च । अन्यथा साक्षिवेद्ये चैत्रेच्छासुखदुःखादौ मैत्रस्येव चैत्रस्याप्यज्ञानं स्यात् । एवंच ।

"साक्षी स्वविषये ज्ञानविरोधी न भवेद्यदि ।
तद्वेद्ये सुखदुःखादावज्ञानं केन वार्यते ॥"

इच्छादौ सदा प्रकाशादज्ञानप्रसक्तिरेव नेति चेत् तर्ह्यात्मन्यपि तत एव तदप्रसक्तिः स्यात् । नच साक्षिवेद्यत्वं तदप्रसक्तौ तंत्रम् । आत्मा तु न तद्वेद्यः किंतु चिद्रूपत्वात्प्रकाशत एवेति युक्तम् । प्रकाशरूपे दीपेऽन्धकारस्येवात्मन्यप्यज्ञानाप्रसक्तेर्न्याय्यत्वात् । अन्यथा घटादि-रालोकमिवात्मापि स्वव्यवहारे ज्ञानांतरमपेक्षेत । नच सुखाद्यपि वृत्तिप्रतिबिंबितसाक्षिणैव

---

त्वन्मत इति ॥ अप्रकाशविरोधित्वेनेति ॥ अज्ञानविरोधित्वेनेत्यर्थः । यदप्युक्तं न चैतन्यस्य स्वविषयकाज्ञानविरोधित्वं किन्तु वृत्तेरेवेति, तदप्ययुक्तम् । चितोऽस्वविषयेऽज्ञानविरोधि-त्वानुभवस्य तुल्यत्वादित्याह ॥ वृत्तिचितोरिति ॥ अन्यथेति ॥ साक्षिणोऽज्ञानविरोधित्व इत्यर्थः । उक्तमर्थं संगृह्णाति ॥ एवञ्चेति ॥

नन्विच्छादेः प्रकाशाव्यभिचारितया तद्विषयेऽज्ञानस्यैवाप्रसक्तेः न तत्र निवर्तकापेक्षा इत्याशङ्क्य तुल्यन्यायेनात्मन्यप्यज्ञानं कदापि न स्यादित्याह ॥ इच्छादाविति ॥ सदेति ॥ स्व-सत्तायामिति शेषः ॥ तदप्रसक्ताविति ॥ अज्ञानाप्रसक्तावित्यर्थः ॥ अन्यथेति ॥ प्रकाश-विषयकस्यैव स्वविरोध्यप्रसक्तिप्रयोजकत्व इत्यर्थः । स्वविरोध्यप्रसक्तिप्रयोजकस्यैव स्वव्यवहार-हेतुत्वदर्शनात् । प्रकाशविषयत्वस्यैव च तत्प्रयोजकत्वे आत्मापि स्वव्यवहारे घटादिरिवातिरिक्त-ज्ञानमपेक्षेत । यदि चात्मा प्रकाशरूपत्वात् प्रकाशांतरमपेक्षते तर्हि तत एव स्वविरोधिप्रसक्ति-विरोध्यपि स्यादिति भावः । परोक्षवृत्तिवदपरोक्षवृत्तेरपि नाज्ञानविरोधित्वं सुखादौ व्यभिचारा-

वेद्यम्, नतु केवलेनेति केवलो नाज्ञानविरोधीति वाच्यम् । असतः साधकत्वभंगे केवलसाक्षिवेद्यत्वोपपादनात् । अंतःकरणवृत्तेरिंद्रियादिव्यापारमविद्यावृत्तेश्च दोषं विनायोगाच्च । अन्यथाऽऽत्मापि वृत्तिप्रतिबिंबितेनैव स्वेन (तेन) सदा प्रकाशते नतु केवलेनेति स्यात् । एतेन सौरालोकज्ञानादिप्रतिबंदी निरस्ता । एतेनैव सर्वं ज्ञाततया वाऽज्ञाततया साक्षिविषय इति निरस्तम् । अंधकारावृतवत् ज्ञानाभावावच्छेदकविषयवदज्ञानावच्छेदकस्याप्यप्रकाशेन साक्षिवेद्यतायोगात् ।

अस्तु वा वृत्तिरेवाज्ञानविरोधिनी तथाप्यात्मविषया सेदानीमप्यस्तीति कथं तत्राज्ञानम् । विवरणे जीवाकाराहंवृत्तिपरिणतांतःकरणेन च जीवोऽभिव्यज्यते । अन्यथा सुषुप्तेरित्युक्तेः ।

---

त्वित्युक्तव्यभिचारस्योद्धारमाशङ्क्य निराकरोति ॥ नचेति ॥ असतः साधकत्वभङ्ग इति ॥ सुखादेर्ज्ञानैकसत्त्वनिर्वाहाय केवलसाक्षिवेद्यत्वस्योपपादनादित्यर्थः । किंच सुखादिकं वृत्तिप्रतिबिंबितसाक्षिवेद्यमित्यत्र किमन्तःकरणवृत्तिरुताविद्यावृत्तिः । नाद्यः । तस्या इन्द्रियव्यापारं विनाऽयोगात् । सुखादेश्चेन्द्रियायोग्यत्वात् । न द्वितीयः । अविद्यावृत्तेर्दोषजन्यत्वनियमेन सुखाद्यनुभवस्य भ्रमत्वापत्तेः । नचेश्वरज्ञानवदविद्यावृत्तित्वेऽप्यभ्रमत्वम्, दृष्टान्तस्यैवासंप्रतिपत्तेः । 'स्वाभाविकी ज्ञानबलक्रिया च' इतीश्वरज्ञानस्य स्वाभाविकत्वोक्तेरित्यभिप्रेत्याह ॥ अन्तःकरणवृत्तेरिति ॥ अन्तःकरणापरोक्षवृत्तेरित्यर्थः ॥ अन्यथेति ॥ सुखादेर्वृत्तिप्रतिबिंबितसाक्षिभास्यत्व इत्यर्थः । यद्वा ननु इन्द्रिययोग्यविषयकापरोक्षवृत्तावेव इन्द्रियव्यापारो हेतुरिति सुखादेरिन्द्रियायोग्यत्वेऽपि स्वाकारवृत्तिप्रतिबिंबितसाक्षिवेद्यत्वमविरुद्धमित्याशंक्य तर्हि सुखादिवदेवात्मनोऽपि वृत्तिप्रतिबिंबितस्ववेद्यत्वं स्यादिति तथाप्यज्ञानस्य प्रसक्तिर्न स्यादित्याह ॥ अन्यथेति ॥

एतच्चोपलक्षणम् । स्वाभिमतस्वप्रकाशत्वहानिप्रसंग इत्यपि बोध्यम् । स्वप्रकाशत्वाविशेषाद् वृत्तेरिव यदि चैतन्यस्याप्यज्ञाननिवर्तकत्वं तर्हि सौरालोकवत् चाक्षुषप्रकाशस्यापि तमोनिवर्तकत्वं स्यात् । ज्ञानत्वाविशेषात्, श्वैत्यप्रत्यक्षवत् तदनुमितेरपि पीतत्वभ्रमनिवर्तकत्वं स्यादिति दृष्टान्तमुखेनोक्तप्रतिबन्द्यपि निरस्तेत्याह ॥ एतेनेति ॥ चैतन्यस्याज्ञानविरोधित्वसमर्थनेनेत्यर्थः ॥ एतेनेत्येतदेव विवृणोति ॥ अन्धकारावृतवदिति ॥ साक्षिवेद्यत्वायोगादिति ॥ साक्षिणः स्वविषये अज्ञानविरोधित्वादिति भावः । नन्विदानीमात्मविषयकवृत्तिरेव न, तस्य स्वप्रकाशत्वेन वृत्त्यनपेक्षणादित्याशंक्याथ व्यवहारार्थं वृत्त्यनपेक्षणेऽपि सुषुप्तिव्यावृत्त्यर्थं तदपेक्षास्तीत्येतद्विवरणसंमत्या आह ॥ विवरण इति ॥ अन्यथेति ॥

अयं घट इत्याद्यपरोक्षवृत्तेरपि त्वन्मते घटावच्छिन्नचिद्विषयत्वाच्च । अन्यथा घटावरकाज्ञानाभावेन अयं घट इति वृत्तेरज्ञानाभिभावकत्वं न स्यात्। नच विशिष्टचैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिरज्ञानविषयीभूतचिदविषया वा तदज्ञानाविरोधिनी वेति युक्तम्। दंडी चैत्र इतिवृत्त्या चैत्राज्ञानानभिभवापातात्। आकाशस्यैव च घटावच्छिन्नस्य घटाकाशत्वे घटाकाशे दृष्टे आकाशगतमहत्त्वाद्यदर्शनेऽपि आकाशमात्रं दृष्टमेव, आकाशांशस्य घटाकाशत्वे तु घटाकाशदर्शनेऽपि महाकाशादर्शनं युक्तम्। नच श्रवणादिजन्या वृत्तिरज्ञानविरोधिनीति युक्तम्। भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणांतरजन्येनाप्यविद्यानिवृत्त्यावतिप्रसंगात्। अनधिकविषयत्वे श्रवणादिवैयर्थ्याच्च। सत्यत्वापाताच्च। तस्मादात्ममात्रमज्ञानस्य विषयः। नापि देहादिभेदो वा भोक्तृत्वाद्यभावो वा ब्रह्माभेदो वा द्वितीयमात्राभावो वा तद्विशिष्टात्मा

---

वृत्तेर्घटमात्रविषयत्वे समानविषयत्वाभावेन घटावच्छिन्नचिद्विषयकाज्ञाननिवर्तकत्वं न स्यादित्यर्थः ॥ अज्ञानविषयभूतेति ॥ विशिष्टाविशिष्टयोर्भेदादिति भावः ॥ तदज्ञानविरोधिनीति ॥ केवलचैतन्याज्ञानविरोधिनी । अज्ञानान्यूनातिरिक्तविषयकवृत्तेरेवाज्ञानविरोधित्वादित्यर्थः ॥ दण्डीति ॥ नचात्र विशिष्टाविशिष्टयोर्विशेषणप्रयुक्तभेदसत्त्वेऽपि स्वरूपैक्यात् विशिष्टज्ञाने विशेष्यस्वरूपमपि भासत इत्यज्ञाननिवृत्तिर्दुर्वारा । न चान्यूनातिरिक्तविषयत्वमेवाज्ञाननिवर्तकत्वे तन्त्रम् । अनुभवानुरोधात् लाघवाच्च अन्यूनविषयत्वमेव तन्त्रम् । नत्वनतिरिक्तविषयत्वमपीति भावः ।

ननु विशेष्यस्य विशिष्टविषयकप्रत्यक्षविषयत्वे घटावच्छिन्नाकाशज्ञानेनापि महाकाशज्ञानप्रसंगः । नचेष्टापत्तिः । तन्महत्त्वस्यापि ग्रहणप्रसंगात् । सामान्यगुणानां द्रव्यगुणयोग्यतान्तर्भूतयोग्यताकत्वाद्वियतोऽयोग्यत्वात्परिमाणस्याप्रत्यक्षत्वात् आकाशगतमहत्त्वस्याप्ययोग्यतया आकाशज्ञानस्य न तद्विषयकत्वप्रसंग इत्यभिप्रेत्याह ॥ आकाशस्यैव चेति ॥ अयं च परिहार आकाशस्य निरंशत्वमभिप्रेत्योक्तः । वस्तुतस्त्वाकाशस्य सांशत्वात् महाकाशांश एव घटाकाश इति घटाकाशग्रहणेन महाकाशग्रहणप्रसंग इत्याह ॥ आकाशांशस्येति ॥ अन्यूनविषयकवृत्तिमात्रं नाज्ञानविरोधि किंतु श्रवणादिजन्यैव सा चेदानीं नास्तीति नाज्ञाननिवृत्तिप्रसंग इत्याशंक्य निराकरोति । नचेति ॥ इदानीमपरोक्षवृत्तेरज्ञानानिवर्तकत्वे श्रवणादिजन्यवृत्तेरप्यनिवर्तकत्वप्रसङ्गः । विषयकृतविरोधाभावात् । कारणविशेषजन्यत्वस्याप्रयोजकत्वात् । अन्यथा दशमोऽहमिति भ्रमस्य दशमत्वमस्तीति शब्दजन्यज्ञानेनापि निवृत्तिः स्यादित्यभिप्रेत्याह ॥ भ्रमकालीनेति ॥ नचैवं

वा तद्विषयः । तेषामात्ममात्रत्वे उक्तदोषात् । भिन्नत्वे सत्त्वेऽद्वैतहानेः । आविद्यकत्वेऽन्योन्याश्रयादेः । नच ब्रह्मभेदादेः प्रकाशमानात्ममात्रत्वेऽपि कल्पितेन भेदेनाज्ञातत्वम् । अधिष्ठानावरणं विना भेदकल्पनायोगादित्युक्तत्वात् । नच मिथ्याभूतेनापि भेदाभावेन द्वितीयाभावेन वोपलक्षित आत्मा अज्ञानविषयः । तस्य समानविषयज्ञाननिवर्त्यत्वेन वेदान्तानामप्युपलक्षणरूपप्रकारयुक्तात्मपरत्वेनाखंडार्थत्वहानेः । अकाके काकवदिति वाक्यवद्प्रामाण्यापाताच्च । प्रकाशमानस्यात्मनोऽज्ञानविषयत्वे अप्रकाशमानस्य द्वितीयाद्यभावस्योपलक्षणत्वेन तदविषयत्वे च दृष्टहाना(दृष्टक)दिकल्पनापाताच्च । तस्मादात्मनः प्रकाशमानत्वादन्यस्य चाविद्यकत्वान्नाविद्याविषयत्वम् । तदुक्तम् ।

---

श्वैत्यानुमित्यैव श्वैत्यप्रत्यक्षेणापि पीतत्वभ्रमानिवृत्तिप्रसङ्गः । त्वयैव तस्य ज्ञानत्वेन निवर्तकत्वानङ्गीकारेण वैषम्यात् । ज्ञानत्वेनाज्ञाननिवर्तकत्वमभ्युपगम्य विषयकृतविशेषं विनापि वस्तुतः कारणविशेषमात्रजन्यत्वस्य प्रयोजकत्व एवातिप्रसङ्गस्योक्तत्वादिति भावः ।

नन्तु श्रवणादिजन्यता(त्वा)वच्छिन्नत्वमेवात्मविषयकाज्ञाननिवर्तकतावच्छेदकमित्यत आह ॥ सत्यत्वापाताच्चेति ॥ मिथ्यात्वे ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्यैव तन्त्रत्वेन, अज्ञानमिथ्यात्वमिच्छता ज्ञानत्वमेव तन्निवर्तकतावच्छेदकमङ्गीकार्यम्, न श्रवणादिसाध्यज्ञानत्वमिति भावः । परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥ अज्ञानस्य विषयान्तरमाशंक्य निराकरोति ॥ नापीति ॥ देहादीत्यादिपदेनेन्द्रियादिपरिग्रहः ॥ भोक्तृत्वादीत्यादिपदेन कर्तृत्वादिपरिग्रहः ॥ उक्तदोषादिति ॥ आत्मनः सदा प्रकाशमानत्वेनाज्ञानविषयत्वासम्भवादिरूपोक्तदोषादित्यर्थः ॥ अद्वैतहानेरिति ॥ एतच्चोपलक्षणम् । आत्मातिरिक्त (व्यतिरिक्तेति पाठान्तरम्) देहादिभेदेनाजडत्वेनाज्ञानविषयत्वासंभव इत्यपि बोध्यम् ॥ अन्योन्याश्रयादेरिति ॥ आविद्यकत्वसिद्धौ तद्विषयकाविद्यासिद्धिः । तत्सिद्धौ चाविद्यकत्वसिद्धिरित्यन्योन्याश्रयात् । व्यक्तिभेदाश्रयणे च चक्रकादिरित्यर्थः । भेदकल्पनायोगादित्यादेरित्यादिपदेन कल्पितभेदस्य स्वाभाविककार्याप्रतिबन्धकत्वेन भेदकल्पनेऽपि प्रकाशमानात्ममात्रत्वेनाज्ञानत्वासम्भव इत्यादिदोषपरिग्रहः ।

नन्तु मिथ्याभूतजीवब्रह्मभेदाद्यभावोपलक्षितात्मन एवाज्ञानविषयत्वोपगमान्न तस्य जडत्वप्रसक्तिः । तथा सदा प्रकाशमानत्वप्रयुक्तविरोधस्याप्यनुपपत्तिरित्याशङ्क्य निराकरोति ॥ नचेति ॥ आत्मपरत्वेनेति ॥ आत्मपरत्वावश्यंभावेनेत्यर्थः ॥ अकाक इति ॥ उपलक्षणीभूतद्वितीयाभावस्य मिथ्यात्वेन तद्विषयकवेदान्तानामप्रामाण्यापातात् । नच वेदान्तजन्यप्रतीतावुप-

"निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत् ।

मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव प्रपेक्षते" ॥ इति ।

किंच न्यूनयाऽविद्यया विषयसंबंधिन्या कथमधिकब्रह्मावरणम् । न्यूनाप्यंगुलिरविषयसंबंधित्वादधिकसूर्याच्छादिका । तस्मादनिर्वाच्याविद्याया दुर्निरूपत्वादहंकारादिकं न तत्कार्यम् ।

॥ इति अविद्याविषयभङ्गः ॥ ५५ ॥

---

लक्षणस्याविषयत्वात्प्रामाण्यापात इति वाच्यम् । अप्रतीयमानस्योपलक्षणत्वायोगेन तस्यापि वेदान्तजन्यप्रतीतिविषयत्वावश्यंभावादिति भावः ॥ दृष्टहानेति ॥ दृष्टस्याज्ञाने अप्रकाशमानविषयत्वस्य हानिः, अदृष्टस्य प्रकाशमानविषयत्वस्य च कल्पनं स्यादित्यर्थः । उपसंहरति ॥ तस्मादिति ॥ किञ्च विषयान्यूनपरिमाणस्यैवावच्छेदकत्वं दृष्टमिति कथमविषयसंबन्ध्यावरणस्य परिच्छिन्नाज्ञानस्यापरिच्छिन्नब्रह्मावरकत्वमित्याह ॥ न्यूनयाऽविद्यया विषयसम्बन्धिन्येति ॥ विशेषणव्यावर्त्यमाह ॥ न्यूनापीति ॥ अविद्याया दुर्निरूपत्वप्रतिपादनफलमाह ॥ तस्मादिति ॥

॥ इति अविद्याविषयभङ्गः ॥ ५५ ॥

## ॥ अथ अहमर्थस्य अनात्मत्वभङ्गः ॥ ५६ ॥

यदप्युच्यते अहमर्थो नात्मा पश्चात्परामर्शान्यथानुपपत्त्या सुषुप्तौ स्वतःप्रकाशमानस्यात्मनः सद्भावेऽप्यनेवंविधस्याहमर्थस्याभावात् "अथातोऽहंकारादेशः अथात आत्मादेश" इतिश्रुतौ पृथगुपदेशाच्च, "महाभूतान्यहंकार" इति स्मृतावहंकारस्य क्षेत्रज्ञात्पार्थक्येन क्षेत्रत्वोक्तेश्च । तस्मादहमनुभवामीत्यात्मानुबंध्यनुभवस्याहंकर्तेत्यनात्मानुबंधिकर्तृत्वादेश्चाश्रयोऽहंकारः चिदचित्संवलनात्मकत्वादध्यस्तः । यदि च सुषुप्तावहमर्थः प्रकाशेत तर्हि स्मर्येत ह्यस्तन इवाहंकारः । अनुभूते स्मरणनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति ॥

---

॥ अथ अहमर्थस्य अनात्मत्वभङ्गः ॥ ५६ ॥

नन्वहंकारस्यानात्मतया अध्यस्तत्वेन तद्धेतुतयाऽविद्यासिद्धिरविकलेत्येतद् दूषयितुमनुवदति ॥ यदप्युच्यत इति ॥ पश्चादिति ॥ सुषुप्तावहंकाराभावान्न तस्यात्मत्वम् । न च सुखमहमस्वाप्समितिपरामर्शानुपपत्त्या तस्य सुषुप्तावपि सत्त्वसिद्धिः । परामर्शस्य स्वप्रकाशात्ममात्रसद्भावेनाप्युपपत्त्याहंकारासाधकत्वात् । नचैवं परामर्शे अहमर्थानुल्लेखप्रसंगः । अहमर्थस्य तत्कालोत्पन्नत्वेन तदंशे परामर्शत्वस्यैवासिद्धिरित्यर्थः । किंचाहंकारो नात्मा अहंकारात्मनोः श्रुतौ पृथगुपदेशादित्याह ॥ अथात इति ॥ महाभूतानीति ॥ महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पंच चेन्द्रियगोचराः ॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ इति स्मृतावित्यर्थः ।

ननु यद्युक्तरीत्याहंकारो नात्मा तर्ह्यनुभवामीत्यात्मधर्मानुभवाश्रयत्वं न स्यादित्याशङ्क्याऽऽत्मधर्मवदनात्मधर्मस्य कर्तृत्वदुःखादेरपि दर्शनेन आत्मानात्मरूपस्याभ्युपगमान्न विरोधः । नचोभयरूपत्वस्य चाध्यासं विनाऽयोगादध्यस्तकर्तृत्वादिकमात्मधर्म एवेति वाच्यम् । तस्य निर्विकारतया कर्तृत्वादिरूपविकारायोगात् । कर्तृत्वादेर्गौणाभिप्रायत्वाच्च । अतोऽहमर्थो नात्मेत्याह ॥ तस्मादिति ॥

ननु सुषुप्तावहमर्थाप्रकाशेन तदा तस्यासत्त्वमिति न वक्तुं शक्यम् । तदा तदप्रकाशस्यैव सिद्धेरित्याशङ्क्याह ॥ यदि चेति ॥ नन्वनुभूतं सर्वं स्मर्तव्यमिति न नियमः । अस्मर्यमाणसुषुप्तौ व्यभिचारादित्याशङ्क्य अहमर्थस्य स्मर्यमाणात्माभिन्नत्वांगीकारेण तस्यापि स्मरणमावश्यकमित्याह । अनुभूत इति ॥ यदुक्तमात्मनि प्रकाशमानेऽप्यहमर्थस्याप्रकाशमानत्वान्नाभेद

तत्र न तावत् स्वप्रकाशत्वास्वप्रकाशत्वाभ्यां सुषुप्तावात्माहमर्थयोः प्रकाशाप्रकाशौ। अहमर्थः स्वप्रकाशात्मान्य इत्यस्याप्यसिद्ध्याऽन्योन्याश्रयात् । नापि परामर्शापरामर्शाभ्याम् । अहमस्वाप्सम्, न किंचिदहमवेदिषमित्यहमर्थस्यैव परामर्शात् । अहमर्थे परामर्शो न चेत् स कथमात्मनि । अहंज्ञानाज्ञान्य आत्मपरामर्शो हि दृश्यते ।[1] अस्वाप्समित्यत्रापि उत्तमपुरुषप्रयोगयोग्याहमर्थस्यैव स्फुरणात् । उक्तं च विवरणेऽपि "अंतःकरणविशिष्ट एवात्मनि प्रत्यभिज्ञानं ब्रूमो न निष्कलंके, तस्य मोक्षावस्थायिनः शास्त्रैकसमधिगम्यत्वात्" इति । यदि चेदमर्थव्यावृत्तोऽहमर्थो न परामृश्येत तर्हि तावंतं कालं सुप्तोऽहं वाऽन्यो वेति संशयादि स्यात् । नत्वहमेवेति निश्चयः ।

ननु परामृश्यमानात्मन एव प्रत्यक्त्वात्तथा निश्चय इति चेत् प्रत्यक्त्वं न तावत् चिन्निर्भासप्रतिद्वंद्विचित्त्वम्, अन्यत्वप्रतिद्वंद्विस्वत्वं वा । चिदस्वपीदिति वा स्वयमस्वपीदिति वा परामर्शापातेनाहमिति परामर्शायोगात् । घटादिः स्वस्माद्भिन्नो नेत्यादिप्रतीत्यात्मनीव घटादावपि स्वत्वस्य सत्त्वाच्च । नापि युष्मदर्थरूपपराग्व्यावृत्तत्वम्, अहमर्थस्यैव तद्व्यावृत्तेः ।

---

इति । तत्र प्रकाशमानत्वाप्रकाशमानत्वे किं स्वप्रकाशत्वास्वप्रकाशत्वाभ्यां कल्प्येते उत स्मर्यमाणत्वास्मर्यमाणत्वाभ्यामिति विकल्प्याद्यं दूषयति ॥ तत्र न तावदिति ॥ द्वितीयं दूषयति ॥ नापीति ॥ परामर्शादिति ॥ तथा च न तस्य परामृश्यमानात्मान्यत्वमिति भावः । नन्वहमिति आत्मन एव परामर्शो न त्वहंकारस्येत्याशंक्याहमित्युल्लेखनात् अहमर्थस्यैव परामर्शः नत्वात्मन इति सुषुप्तावात्मन एवासिद्धिः स्यात् । न च परामर्शान्तरात् तत्सिद्धिः । तस्यैवाभावादित्याह ॥ अहमर्थ इति ॥ किंचायं परामर्शोऽहमर्थस्यैव, अस्वाप्समिति तस्यैवोत्तमपुरुषप्रयोगविषयत्वादित्याह ॥ अस्वाप्समित्यत्रापीति ॥ अहमर्थस्यैव परामर्शविषयत्वमित्यत्र विवरणसंमतिमाह ॥ उक्तंचेति ॥ अहमर्थस्य परामर्शविषयत्वमुपपाद्य विपक्षे बाधकमप्याह ॥ यदिचेति ॥

नन्वहमस्वाप्समिति परामर्शविषयः प्रत्यगात्मैव, नत्वहमर्थ इति एतावंतं कालमहमेव सुप्तः इति निश्चयः उपपद्यते इति शङ्कते ॥ नन्विति ॥ अहमर्थात्मन एव प्रत्यक्त्वमिति व्यवस्थापयितुं पक्षांतरं प्रतिक्षिपति ॥ प्रत्यक्त्वं न तावदित्यादिना इत्युक्तेरित्यंतेन ॥ चिन्निर्भासप्रतिद्वंद्विचित्त्वमिति ॥ स्वयमस्वपीदिति[1] वा ॥ स्वत्वस्यैवान्यत्वप्रतिद्वंद्वित्वादिति भावः । किंच नान्यत्वप्रतिद्वंद्वित्वं प्रत्यक्त्वम्, परागर्थवृत्तित्वादित्याह ॥ घटादिरिति ॥ आत्मन एव युष्मदर्थ-

1. अस्वपीदिति पाठान्तरम् । (स्वयम स्वप्स्य इति टङ्कनम्)

नहि त्वन्मते आत्मनः पराग्व्यावृत्तिः । विवरणे "आत्मनः सर्वात्मकत्वाच्च पराग्व्यावृत्ति-रहमुपरागादेव व्यावृत्त्यवभास" इत्युक्तेः । तस्मादहमर्थत्वमेव प्रत्यक्त्वं वाच्यमिति घट्टकुटीप्रभातवृत्तांतः ।

ननु नाहमंशे परामर्शः, किंतु परामृश्यमान आत्मा इदानीं जातेनांतःकरणेना-वच्छेदादहंत्वं प्राप्तस्तथानुभूयत इति चेन्न । न किंचिदहमवेदिषमित्यादावज्ञानाद्यंशेऽप्यपरा-मर्शत्वापातात् । नह्यज्ञानादिकं निराश्रयमन्याश्रयं वा परामृश्यते, किंत्वहमर्थाश्रयमेव । एतावंतं कालमहं स्वप्नं पश्यन्नासम्, जाग्रदासमित्यत्रेवाहमस्वाप्समित्यत्राप्यहमंशे परा-मर्शत्वानुभवाच्च । अन्यथा यः पूर्वं दुःखी सोऽधुना सुखी जात इतिवत् यः पूर्वं मदन्यः सुप्तः सोऽधुनाऽहं जात इति धीः स्यात् । नन्वहंकारे परामृश्यमानात्मैक्यारोपात्तज्ज्ञाने परामर्शत्वाभिमान इतिचेन्न । अपरामर्शे परामर्शत्वारोपादर्शनात् । सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन्सुषुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वमितीतरेतरा-श्रयाच्च । अहमित्यतोऽन्य आत्मपरामर्शो नेत्युक्तत्वेन दृष्टहानादृष्टकल्पनापाताच्च ।

---

व्यावृत्त्यभ्युपगमे विवरणविरोधः स्यादित्यभिप्रेत्याह ॥ विवरण इति ॥ तस्मादिति ॥ तथा च प्रत्यगात्मन एव परामर्श इति त्वयैवोक्तत्वात् प्रत्यगात्मनश्चाहमर्थातिरिक्तस्याभावादहमर्थस्यैव परामर्श इति तस्य सुषुप्तावप्रकाशोऽसिद्ध एवेति भावः ॥ नन्वहंकारस्य न परामर्शः । किन्त्वात्मन एव । नचाहमित्यहंत्वाश्रय एव परामृश्यते, आत्मा नाहंत्वाश्रय इति अहंकार एव परामर्श-विषय इति वाच्यम् । तात्कालिकान्तःकरणावच्छेदेन अहंत्वमप्यात्मन्येवास्तीति तदाश्रयपरा-मर्शोऽपि आत्मपरामर्शत्वाविरोध इति शङ्कते ॥ नन्विति ॥

ननु बाधकाभावात् अज्ञानांशे परामर्शत्वमित्याशङ्क्याह ॥ नहीति ॥ तथा च सुषुप्ता-वहमर्थाभावे तदाश्रितमज्ञानमपि नास्तीति तस्यापि तात्कालिकत्वं प्रसज्यत इति तदंशेऽपि परा-मर्शत्वं न स्यादिति भावः । अनुभवबलादप्यहमर्थांशे परामर्शत्वमित्याह ॥ एतावंतं कालमिति ॥ अपरामर्श इति ॥ अनुव्यवसायस्य प्रमात्वनियमादिति भावः । नन्वात्मपरामर्शत्वारोपकारणपरामर्शाभावेण सुषुप्तावहमर्थस्यापरामर्शादैक्यारोपं विनैवाहमर्थस्यात्मान्यत्वसिद्धेर्नान्योन्याश्रय इत्याशङ्क्य नाहंपरा-मर्शस्यैवाभावात् तत्कल्पने च दृष्टहानादिदोषप्रसंग इत्याह ॥ अहमित्यत इति ॥ स्मयैव

एतेन सुषुप्तावहमर्थप्रकाशे स्मर्येत ह्यस्तन इवाहंकार इति निरस्तम् । अहंशब्दोल्लेखि-परामर्शापादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावोपपत्तेः । तावन्मात्रेण च ह्यस्तन-वैषम्यात् । अहमर्थविशेष्यकस्याहंत्वप्रकारकस्य वा परामर्शस्यापादने इष्टापत्तेः । स्मर्यते हि एतावंतं कालं सुखमहमस्वाप्समिति सुषुप्तिकालीनसुखावच्छिन्नोऽहमर्थः । अन्यथा स्मर्येत ह्यस्तन इवात्मेतिचोद्यं निरुत्तरं स्यात् ।

ननु तथाप्येतावंतं कालमहमित्यभिमन्यमान आसमिति न परामर्शः स्यादिति चेत् कर्णं पृष्टः कटिं चालयसि । अहमर्थप्रकाशेन तदभिमानपरामर्शापादनस्य व्यधिकरणत्वात् । अन्यथा तथाप्यात्मेत्यभिमन्यमान आसमिति परामर्शः स्यात् । तस्मात्सुषुप्तावहमर्थः प्रकाशत एव । न किंचिदवेदिषमित्यज्ञानपरामर्शस्य त्वात्माद्यज्ञानादन्यदिवाहमर्थाज्ञानादन्यदेवाज्ञानं विषयः । अन्यथा विरोधात् ।

या तु न विजानात्ययमहमस्मीति सुषुप्तिविषया श्रुतिः सापि नात्मानं न परांश्चेति सुषुप्तावात्माज्ञानश्रुतिवद्विशेषाज्ञानपरा । किंच सौषुप्तिकाज्ञानादिस्मर्तृत्वं किमनहमर्थस्या-विद्यावच्छिन्नचैतन्यस्यांतःकरणावच्छिन्नस्याहमर्थस्य वा । नाद्यः । योऽहमकार्षं सोऽहं सौषुप्ति-

ह्यस्तन इवेति कोऽर्थः किमहंशब्दोल्लेखिपरामर्श आपाद्यते । उताहमर्थविशेष्यकाहंत्वप्रकारक इति । तत्र नाद्य इत्याह ॥ अहंशब्दोल्लेखीति ॥ तावन्मात्रेणेति ॥ शब्दानुल्लेखित्वमात्रेणेत्यर्थः । द्वितीयमनूद्य निराचष्टे ॥ अहमर्थविशेष्यकस्येति ॥ अन्यथेति ॥ ह्यस्तनवैषम्यमात्रेणापादनेऽर्थमात्रस्य इत्यर्थः । ननु यदि सुषुप्तावहमर्थः प्रकाशेत तर्हि न किंचिदवेदिषमिति सर्वविषयकाज्ञानानुभवो न स्यादित्यत आह ॥ न किंचिदवेदिषमिति ॥ सुषुप्तावात्मनः प्रकाशमानतया तदन्याज्ञानमेव परामर्शविषय इति यथोच्यते तथाहमर्थस्यापि प्रकाशमानत्वात् तद्भिन्नमज्ञानं परामर्शविषय इति भावः ।

ननु सुषुप्तावहमर्थाज्ञानस्य श्रुतिसिद्धत्वात् तस्य तदा प्रकाशो नेत्यत आह ॥ या त्विति ॥ किंचेति ॥ सौषुप्तिकाज्ञानादिस्मर्ताहमर्थः किं अविद्यावच्छिन्नचैतन्यं उतान्तःकरणावच्छिन्न-चैतन्यमिति विकल्पार्थः ॥ योऽहमिति ॥ तथाच कर्तुरेवाज्ञानाद्यनुसंधातृत्वानुभवादविद्याव-च्छिन्नस्य कर्तृत्वाभावात् तस्याज्ञानाद्यनुसंधातृत्वमिति भावः । ननु नाहमर्थोऽनुभविता । नचैवं स्मृतिसंस्कारानुभवानां सामानाधिकरण्यभङ्गप्रसङ्गः । स्वरूपचैतन्यैक्येन जीवचैतन्यैक्येन वा

काशानादि स्मरामीत्यबाधितानुभवात् । अंत्ये त्वहमर्थस्यैव तदनुभवितृत्वं वाच्यम् । स्मृतिसंस्कारानुभवानामेकाधिकरणानामेव कार्यकारणभावात्, योऽहमन्वभूवं सोऽहं स्मरामीतिप्रत्यभिज्ञानाच्चेति सुषुप्तावप्यहमर्थसिद्धिः । यद्यपि चैत्रमैत्रादिसाधारणं चैतन्यमेकं जीवत्वोपाध्यविद्यैक्यात्, जीवश्चैकः तथापि तयोरस्मर्तृत्वात् । स्मर्तुश्चाहमर्थस्याविद्यावच्छिन्नानुभवितृचैतन्यादन्यत्वेनानुभवितृस्मर्त्रोरैक्यम् । यद्यप्यविद्या चैतन्यं प्रत्यवच्छेदिका । अंतःकरणं तु अविद्यावच्छिन्नचैतन्यं प्रत्येवावच्छेदकं न तु स्वातंत्र्येण । तथाप्यविद्यांतःकरणरूपोपाधिभेदे शुद्धचैतन्याविद्यावच्छिन्नचैतन्यरूपोपाधेयभेदे च सति मठाकाशतत्स्थघटाकाशयोरिव सुतरामुपहितभेदेन प्रत्यभिज्ञानविरोधो दुस्तरः । किंच सुषुप्तावहमर्थाभावेऽहंनिर्दुःखः स्यामितीच्छया सुषुप्तौ प्रवृत्त्ययोगः । योऽहं सुषुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञाबाधश्च । योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमीति प्रत्यभिज्ञानानुपपत्तिश्च । अहंकारव्यक्तिभेदात् कृतहानाकृताभ्यागमप्रसंगश्च । कर्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वात् ।

---

तदनुपपत्ति(त्ते)रिति शङ्कते ॥ यद्यपीति ॥ तयोरिति ॥ अहमस्वाप्समिति अहमर्थस्यैव स्मृतत्वात्तदनुभवेन स्वरूपचैतन्यजीवचैतन्ययोः प्रमाणाभावेन न स्मर्तृत्वमिति भावः ॥ नानुभवितृस्मर्त्रोरैक्यमिति ॥ उपाधिभेदे उपहितभेदस्यावश्यकत्वादिति भावः ।

ननु स्वतंत्रोपाधिभेद एव उपहितभेदप्रयोजकः । न तु उपाधिभेदमात्रम्, अंतःकरणं च न स्वतंत्रोपाधिरिति नानुभवितृस्मर्त्रोरैक्यानुपपत्तिरिति शङ्कते ॥ यद्यपीति ॥ उपाधिभेदमात्रमेवोपहितभेदप्रयोजकं, मठांतर्वर्तिघटस्यापि मठाकाशभेदकत्वदर्शनात् । नच मठाकाश एव घटावच्छिन्न इति प्रत्यभिज्ञाबलाच्च स्वतंत्रोपाधेर्भेदकत्वमिति वाच्यम् । महाकाश एव मठा(घटा)वच्छिन्नो जात इति प्रत्यभिज्ञाविरोधात् स्वतंत्रोपाधेरपि भेदकत्वं न स्यात् । यदि च तत्र प्रत्यभिज्ञा जातिविषयतया कथंचिदुपपाद्येत तर्हि तद्वदेवात्राप्यस्त्वित्यभिप्रेत्य परिहरति ॥ तथापीति ॥ प्रत्यभिज्ञानविरोध इति ॥ योऽहमन्वभूवं सोऽहमस्मीति प्रत्यभिज्ञाविरोध इत्यर्थः । ननु नोक्तप्रत्यभिज्ञाविरोधः, तस्या जातिविषयतया कथंचिदुपपादनसंभवादित्यनुशयादाह ॥ कृतहानेति ॥

ननु अहमर्थभेदेऽपि चैतन्यैक्यान्न कृतहानादि(ति)प्रसंग इत्याह ॥ अभिन्न इति ॥ तथाच यस्यैक्यं न तस्य कर्तृत्वं यस्य कर्तृत्वं न तस्यैक्यमिति कृतहानादिप्रसंगो दुर्वार इति

अभिन्ने चैतन्ये कर्तृत्वाद्यभावात् । कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात् । अहं करोमी-त्येव प्रतीत्याहमर्थान्यात्मनि कर्तृत्वारोपस्याप्यभावाच्च ।

किंच अहंकार एव क्रियाशक्त्या प्राणः विज्ञानशक्त्या मन इति गीयत इति त्वन्मतम् । तथाच सुषुप्तावहंकारविलये प्राणकार्यश्वासादि न स्यात् । ननु प्राणस्याहंकाराद् भेदपक्षे अहंकारस्य लयो युक्तः । अभेदपक्षेऽपि प्राणांशं विहाय(वि)वशिष्टांशस्यैव लयः कल्प्यत इतिचेत् । न । प्राणस्याहमर्थत्वाभावे कर्तृत्वस्य प्राणोपाधिकत्वेनाहं कर्तेति बुद्ध्य-योगात् । अहमर्थत्वे सुषुप्तावहमुल्लेखापातात् । किंच न सुषुप्तावंतःकरणस्य लयः "अथ हैतत्पुरुषः स्वपिति" इत्यारभ्य "गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन" इत्यादिश्रुतौ मन आदीनामुपरमस्यैवोक्तेः । "अथात आत्मादेश" इतिश्रुतौ चात्मनस्त्वन्मते "स एवा-धस्तात्" इत्युपदिष्टेन भूम्नेवाहंकारेणाप्यैक्येऽपि पृथगुपदेशो युक्तः ।

ननु भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थः । द्वयोः सार्वात्म्या-योगात् । अहंकारस्य त्वात्मैकत्वेन प्रत्यक्षसिद्धस्य पृथगुपदेशो भेदार्थ इतिचेन्न । अहमर्था-दन्यस्यात्मनः भूमात्म्यब्रह्मभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरुपदेशो भेदार्थः । अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात्तयोरुपदेश ऐक्यार्थ इति वैपरीत्यापत्तेः । त्वत्पक्षे श्रुत्युक्तानां भूमाहंकारात्मनां बिंबप्रतिबिंबमुखस्थानीयाविद्योपाधिकब्रह्मजीवचिन्मात्रत्वसंभवेनाहंकारस्य

---

भावः । तन्मात्रारोपितकर्तृत्वं चैतन्येऽप्यस्तीति नोक्तदोष इत्यत आह ॥ कर्तृत्वाद्यारोपस्यचेति ॥ तथाचारोपितकर्तृत्वाश्रयशरीरस्य नाशात् कृतहान्यादिप्रसंगस्तवाप्यस्त्येव इति भावः । ननु शरीरस्य नाशेऽपि आरोपितकर्तृत्वाश्रयचैतन्यस्यानुवृत्तेर्नोक्तदोष इत्यनुशयादाह ॥ अहं करोमीति ॥

ननु सुषुप्तावन्तःकरणं नाभ्युपगंतुं शक्यम् । सुषुप्तिकाल इत्यादि[illegible]प्रतिपादकश्रुति-विरोधादित्याशङ्क्य [illegible]श्रुतिरुपरमपरा [illegible]नुसारादित्याह ॥ किंचेति ॥ यदुक्तं पृथगुप-देशादहंकारात्मनोर्भेद इति तदपि न । पृथगुपदेशस्य[illegible]ोपपत्तेरित्याह ॥ अथात इति ॥ अहंकारस्य त्विति ॥ [illegible] श्रुति[illegible] भावः । किंच त्वत्पक्षे अस्याः श्रुतेः जीवब्रह्माभेदपरत्वेन भूमाहंकारात्मनामीश्वरजीवानुस्यूतचैतन्यपरत्वमेव वक्तुमुचित-म् । तथा[illegible] प्रतिबिंबादिविषयत्वादिति नाहंकारजीवात्मनोर्भेदसिद्धिरित्याह ॥ त्वत्पक्ष इति ॥ यदुक्तं द्वयोः सार्वात्म्यायोगात् भूमात्मनोरभेद इति तदपि नेत्याह ॥ स एवेदमिति ॥

जीवात्मैक्यासिद्धेश्च । "स एवेदं सर्वम्" "आत्मैवेदं सर्वम्" इत्युपसंहाराणां "स एवाधस्तादहमेवाधस्तादात्मैवाधस्तात्" इत्युपक्रमैः "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादिस्मृतिभिश्च सर्वगतत्वपरत्वेन सार्वात्म्योपदेशाभावाच्च । सर्वगतत्वस्य चानेकेषु संभवात् । भूमात्मोपदेशाभ्यामेव ब्रह्मात्मैक्यसिद्ध्या मध्येऽहंकारोपदेशवैयर्थ्याच्च ।

ननु परोक्षस्य ब्रह्मण आपरोक्ष्याय स्थूलारुंधतीन्यायेनाहंकारैक्योक्तिरिति चेन्न । त्वत्पक्षे प्रत्यगर्थरूपस्यात्मन एवापरोक्षैकरसत्वेन तदैक्योक्त्यैवापरोक्षसिद्ध्या अहंकारे अविद्यमानसार्वात्म्योक्त्ययोगात् । आत्मन आपरोक्ष्याभावे चात्मब्रह्मभेदस्य प्रत्यक्षत्वोक्त्ययोगात् । अपरोक्षाहंकारैक्योपदेशलब्धापरोक्ष्यस्य परोक्षात्मैक्योपदेशेन हान्यापाताच्च । श्रुत्यर्थस्तु "भूमा नारायणाख्यः स्यात्स एवाहंकृतिःस्मृतः । जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः ॥ अणुरूपोऽपि भगवान्वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी" इत्यादिछांदोग्यभाष्योदाहृतस्मृत्याऽवगंतव्यः । मोक्षधर्मे च "अनिरुद्धो हि लोकेषु महानात्मा परात्परः । योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥ सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः" इति । सूत्रं च "सैव हि सत्यादय" इति । अन्यथाऽहंकारस्य व्याप्त्युक्त्ययोगात् । अहंकारश्चाहंकर्तव्यं

---

ननु स एवाधस्तादित्याद्युपक्रमस्यास्तातिप्रत्ययांतस्य "दिक्शब्देभ्यः सप्तमीपंचमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"(५-३-२७)इति पाणिनिस्मरणात् प्रथमांतत्वेऽपि संभवेनोपक्रमानुसारेणोपसंहारस्य सर्वगतत्वपरत्वसिद्धिरित्याशंक्याह ॥ सर्वं समाप्नोषीति ॥ तथाच स्मृत्यैव सार्वात्म्यश्रुतेः सर्वगतत्वपरत्ववर्णनेन तदुपस्थितिर्न त्वभिमतसार्वात्म्यपरत्वमित्यर्थः । सर्वगतत्वपक्षे सार्वात्म्यपक्ष इव नाभेदं विनानुपपत्तिरित्याह ॥ सर्वगतत्वस्य चेति ॥ किंच यदीयं श्रुतिरभेदपरा तर्ह्युपदेशद्वयेनैव तत्सिद्धेर्मध्येऽहंकारोपदेशवैयर्थ्यमित्याह ॥ भूमेति ॥ अहंकारैक्योक्तिरिति ॥ तथाचाहंसर्वस्यापरोक्षतया तदभेदे ब्रह्मणोऽप्यापरोक्ष्यं सिध्यतीति भावः ॥ प्रत्यक्षत्वोक्त्ययोगादिति ॥ अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतायाः तंत्रत्वादिति भावः । आत्मनः पक्षद्वयाभ्युपगमे दूषणांतरमाह ॥ अपरोक्षाहंकारेति ॥ कस्तर्हि श्रुतेरर्थ इत्यत आह ॥ श्रुत्यर्थस्त्विति ॥ भूमोपदेशत्रयेण परमात्मनो रूपत्रयमुच्यते । भूमादिपदानां नारायणानिरुद्धवासुदेवाख्यरूपत्रयपरत्वस्य स्मृतिसिद्धत्वात् । तथानेकरूपोपदेशवैयर्थ्यम् । तेन रूपेणोपासनार्थत्वादिति । अहंकारशब्दोऽनिरुद्धवाचक इत्यत्र स्मृत्यंतरमाह ॥ मोक्षधर्म इति ॥ सैव हि सत्यादय इति ॥ सत्यादयः विज्ञानमतिधृत्यभिख्याकृतिसुखभूमाहंकारात्मानः सैव परदेवतैवेत्यर्थः ॥ अन्यथेति ॥ अहंकारपदस्य परि-

चेति श्रुतौ "महाभूतान्यहंकार" इति स्मृतौ च महत्तत्त्वकार्यं मन आदिकारणं वैकारिकादि-भेदेन त्रिविधं च तत्त्वमुच्यते नत्वहमर्थः । "महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् । क्रिया-शक्तिरहंकारस्त्रिविधः समपद्यत ॥ वैकारिकस्तैजसश्च तामसश्चेत्यतो भवः । मनसश्चेंद्रियाणां च भूतानां महतामपि" इत्यादिस्मृतेः । अन्यथा संविद्वाचिनो बुद्धिशब्दस्य बुद्धिरव्यक्तमेव चेति क्षेत्रे प्रयोगात् संविदपि क्षेत्रं स्यात् । अहंकारशब्दस्य दंभाहंकारसंयुक्ता इत्यादौ देहेऽहं-बुद्धौ गर्वे च प्रयोगेण गर्वोऽभिमानोऽहंकार इत्यभिधानेन चाहमर्थवाचित्वनियमाभावाच्च । अहमर्थेऽहंशब्दप्रयोगेऽप्यहंकारशब्दाप्रयोगाच्च । आत्मवाचिनोऽहंशब्दस्य दकारांतास्मच्छब्द-जत्वेनाहंकारतत्त्ववाचिनश्च मकारांताव्ययत्वेन भेदस्य स्पष्टत्वाच्च । अहमर्थे आत्मानात्म-धर्मदर्शनं त्वसिद्धम्, कर्तृत्वादेरात्मधर्मत्वस्य वक्ष्यमाणत्वात् । अंतःकरणधर्मत्वेऽपि गौरोऽह-मित्यादौ देहस्येवाहं कर्तेत्यत्राप्यंतःकरणस्याहमर्थानंतर्भावेऽपि धर्ममात्रारोपसंभवाच्च । या तु परकीयाहमर्थे अयमितिधीः सा अहमर्थस्यैव प्रतिसंबंधिभेदेनेदमर्थत्वात् । नत्वहमर्थे अना-

---

त्मवाहंकारार्थकत्व इत्यर्थः ।

ननु श्रुतिस्मृत्योरहंकारशब्दस्य जडविशेषे प्रयोगदर्शनात् तदनुसारेण प्रकृताहंकार-शब्दस्यापि जडविशेषपरत्वमेव किं न स्यादित्याशङ्क्याह ॥ अहंकारश्चेति ॥ अहंकारशब्दो महत्तत्त्व-वाचक इत्यत्र स्मृतिमाह ॥ महत्तत्त्वादिति ॥ अन्यथेति ॥ अहंकारशब्दस्य क्वचिज्जडविशेषे प्रयोगमात्रेण सर्वत्र तदर्थकत्व इत्यर्थः । ननु यद्यहंकारशब्दो नाहमर्थवाचकः कथं तर्ह्यहमेवा-... अहंशब्दप्रयोगः । तस्यात्मवाचित्वादित्यत आह ॥ आत्मवाचिन इति ॥ तथा च प्रकृताहंशब्दस्य मकारान्ताव्ययत्वेनाप्युपपत्त्या न तस्यात्मवाचित्वनिश्चय इति भावः । ... चिदचित्संवलनात्मको न केवलमात्मैवेति तत्रापि नेत्याह ॥ अहमर्थेति ॥

ननु यद्यात्मैवाहमर्थः कथं तर्हि परकीयाहमर्थे इदमाकारप्रत्यय इत्यत आह ॥ या त्विति ॥ प्रतिसंबंधिभेदेनेति ॥ ... न विरुद्धमित्यर्थः ॥ अन्यथेति ॥ अहमिति ॥ ... इत्यर्थः । तस्यात्मनो ज्ञानानन्दरूपत्वा-दहमर्थस्य च तत्संबंधित्वानुभवात्तयोर्भेदो दुर्वार इत्यत आह ॥ नचेति ॥ आत्मत्वायोगादिति ॥ ... भावः ॥ विरोधादिति ॥ भेदसाधकत्वेन ... प्रतीतेर्भ्रान्तित्वे

त्मांशसद्भावात् । अन्यथा परात्मन्ययमितिधीर्न स्यात् । नच ज्ञानानंदरूप आत्माहं जानाम्यहं सुखीत्यहमर्थाच्छेदेन भातीति युक्तम् । अहमर्थाश्रितत्वेन प्रतीयमानयोरनयोरात्मस्वायोगात् । अस्याः प्रतीतेर्भ्रांतित्वे च विरोधात् । नचात्मा सर्वात्मकः अहमर्थस्त्विदमर्थव्यावृत्त इति वाच्यम् । सर्वात्मकेऽहमर्थे आत्मनीवेदमर्थव्यावृत्तिधियो भ्रांतित्वोपपत्तेः ।

यत्त्वहमर्थो नात्मा अहंप्रत्ययविषयत्वाच्छरीरवदिति । तन्न । त्वन्मतेऽहमर्थांतर्गताधिष्ठानभूतचितोऽपि तत्प्रत्ययविषयत्वात् ।

किंच त्वयाऽऽत्मनो गौरोऽहमित्यनात्मारोपाधिष्ठानत्वम्, मा न भूवम् भूयासमित्यादिना परमप्रेमास्पदत्वमहमर्थस्य स्वसत्तायां प्रकाशव्यतिरेकवैधुर्येणात्मनः स्वप्रकाशत्वं चोक्तम्, तत्सर्वमहमर्थस्यानात्मत्वे न युक्तम् । नच प्रेमास्पदात्मैक्यारोपादहमर्थे तद्धीः, अन्योन्याश्रयात् । अहमर्थप्रेम्णोऽन्यस्यात्मप्रेम्णोऽननुभवाच्च । अहिते हितबुद्ध्या प्रेमोत्पत्तावपि अप्रेमास्पदे तदास्पदतारोपस्यादर्शनाच्च । वाचस्पतिना

---

तया भेदसिद्धेरव्याहतत्वादित्यर्थः । नन्वात्मनः सर्वात्मकत्वेनात्मैवेदं सर्वमित्यादिश्रुतिसिद्धस्य इदमहं नेति इदमर्थव्यावृत्तत्वेन प्रतीयमानादहमर्थाद् भेदः आवश्यक इत्याशङ्क्य निराकरोति ॥ नचेति ॥ सर्वात्मक इति ॥ अहमेवेदं सर्वं इति श्रुत्या अहमर्थस्यापि सर्वात्मकत्वप्रतीतेरविशिष्टतया आत्मनि(वा) इतरव्यावृत्तिधीर्भ्रांतिरेवेति भावः । अहमर्थशब्देनांतःकरणमुच्यते उत चैतन्यम् । नांत्यः । बाधात् । न प्रथमः सिद्धसाधनात् । चैतन्ये व्यभिचारश्चेत्यभिप्रेत्याह ॥ त्वन्मत इति ॥ अहमर्थस्यानात्मत्वे बाधकमप्याह ॥ किंचेति ॥ अहमर्थस्येति ॥ अहंप्रतीतिविषयस्यात्मन इति यावत् ॥ न युक्तमिति ॥ आत्मधर्मत्वेन त्वदभ्युपगतभ्रमाधिष्ठानत्वादीनामहमर्थे प्रतीयमानत्वात्तस्यात्मत्वं दुर्निरसम्, अन्यथा तेषामात्मधर्मत्वमेव न स्यादिति भावः ।

नन्वहमर्थे आत्मधर्मप्रतीतिमात्रेण न तस्यात्मत्वम् । तत्प्रतीतेर्भ्रमत्वेनाप्युपपत्तेरित्याशङ्क्य निराकरोति ॥ नचेति ॥ तद्धीरिति ॥ प्रेमास्पदत्वधीरित्यर्थः । किमहमर्थे प्रेमास्पदत्वमारोप्यते उत प्रेमास्पदात्मन्यहमर्थारोपात् तत्र तत्प्रतीतिरिति । आद्ये दोषमाह ॥ अन्योन्याश्रयादिति ॥ तत्प्रतीतेर्भ्रमत्वे सिद्धे प्रेमास्पदत्वाभावेनानात्मत्वसिद्धिः । सिद्धे चानात्मत्वे तत्प्रतीतेर्भ्रमत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ अहमर्थप्रेम्ण इति ॥ अहमर्थनिष्ठतया प्रतीयमानस्य प्रेमास्पदत्वस्य तदन्यात्मनिष्ठतया कदाप्यननुभवाच्चेत्यर्थः ॥ अदर्शनाच्चेति ॥ ज्ञानविषयत्व-

---

१. सिद्धसाधनत्वात् इति पाठः ।

"समारोप्यस्य रूपेण विषयो रूपवान्भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत्" ॥

इत्युक्तत्वेनाध्यस्तान्तःकरणगतप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तेश्च । त्वद्रीत्या सुखानुभवरूपस्यात्मनः अहं सुखमनुभवामीत्यहमर्थाद्भेदेनैव प्रतीतेश्च । किंच मोक्षे अहमर्थाभावे आत्मनाशो मोक्ष इति बाह्यमतापत्तिः । प्रेमास्पदस्याहमर्थस्य च त्वन्मतेऽपि नाशात् । तदन्यस्य शून्यादेस्त्वन्मतेऽप्यनाशात् । अपिचैवं अहं मुक्तः स्यामितीच्छा न स्यात् ।

नन्वात्मन एव मुक्तिरिष्यते । अहंकारे तु तदभेदारोपान्मुक्तःस्यामितीच्छा, यथा शरीरस्यैव पुष्टीच्छायामप्यात्मनि तदैक्यारोपादहं पुष्टः स्यामितीच्छा, यथाऽऽत्मन एव सुखेच्छायामपि तदैक्यारोपाच्छरीरं सुखि स्यादितीच्छेति चेन्न । अन्योन्याश्रयस्योक्तेः । "तत्र मामभूतं कृधि" "ज्योतिरहं विरजा विपाप्मा भूयासम्" इत्यादिश्रुतिविरोधाच्च । तत्र शरीरं पुष्टं स्यादित्यपीच्छावत् अहं सुखी स्यामित्यपीच्छावच्चेह चिन्मात्रं मुक्तं स्यादितीच्छायाः कदाप्यदर्शनेन मुक्तेरनिष्टत्वापाताच्च । यः कश्चिदात्मा मुक्तः स्यादितीच्छया च न मुमुक्षुप्रवृत्तिः । ममात्मा मुक्तः स्यादितीच्छा त्वहमर्थस्यैव मुक्तीच्छा । नच स्वतःपुरुषार्थ

वत् [illegible]स्यापि [illegible]त्वादिति भावः ॥ [illegible] ॥ वाचस्पतिनेति ॥ विषय इति ॥ अधिष्ठानमित्यर्थः । किंचाहमर्थो न प्रेमास्पद[illegible]ध्यस्तः । तस्यात्मभिन्नतया प्रतीयमानत्वात् [illegible]धिष्ठानभिन्नतया प्रतीति[illegible]त्वात् ॥ त्वद्रीत्येति ॥ अहमर्थाभाव इति ॥ [illegible] तस्यापि निवृ[illegible]भावादिति भावः ॥ अपिचैवमिति ॥ अहमर्थस्य मुक्त्यन्वयाभावादिति भावः । [illegible] ॥ तत्रेति ॥ तथाच यस्येच्छा न तस्य मुक्तिः, यस्य च मुक्तिर्न तस्य मुमुक्षेति मुक्तेरपुरुषार्थत्वप्रसङ्ग इति भावः । नन्वहं मुक्तः स्यामिति इच्छा न मुमुक्षा येनाहमर्थस्य मोक्षा[illegible]भावेन तस्यापुरुषार्थत्वं स्यात् । किंतु यः कश्चि[illegible]स मुक्तः स्यादिति इच्छैवेति नोक्तदोष इत्याशंक्य निराकरोतीति ॥ यः कश्चिदिति ॥ सर्वो हि [illegible]पुरुषार्थम(वे)[illegible] इति यस्य [illegible]पुरुषार्थसिद्ध्यर्थं स्वयं न प्रवर्तेत इति भावः ।

ननु [illegible] मुक्त[illegible] कथं तर्हि ममात्मा मुक्तः स्यादितीच्छेत्यत आह ॥ ममात्मेति ॥ [illegible] षष्ठी नु [illegible] [illegible]ति भावः । ननु चिन्मात्रं मुक्तं स्यादित्येव मुक्तीच्छा

इच्छा नियंतुं शक्या, बौद्धतार्किकादिनियमितेच्छयाऽऽत्मनाशसुखनाशादेरपि पुमर्थत्वापातात् । किंचाहमर्थोऽतःकरणगर्भितश्चेन्मम मन इतिधीर्न स्यात्, तदवच्छिन्नस्य पुनः तदन्वयात् । किंचैवं मनः स्फुरति मनोऽस्तीति ज्ञानादहमितिज्ञानस्य वैषम्यानुभवो न स्यात्, चिदचित्संवलनविषयत्वाविशेषात् । किंच सर्वाऽपि भ्रांतिर्ध्यंशविषया, अन्यथा निरधिष्ठानभ्रमापातात् । नचाहमितिबुद्धेर्थ्यंशत्वमनुभूयते । यदि कल्प्यते तदात्मेतिबुद्धेरपि थ्यंशत्वं कल्प्यताम् ।

ननु रूप्यं स्फुरति रूप्यमस्तीत्यत्रेवाहं स्फुराम्यहमस्मीति थ्यंशता भाति । रूप्यभ्रमे त्विदमंशावच्छिन्नं स्फुरणमधिष्ठानमितीदंरूप्यमितिधीः, इह तु स्फुरणमात्रमधिष्ठानमिति स्फुरामीत्येव धीरितिचेन्न । त्वन्मते भ्रमज्ञानस्याप्यध्यस्तत्वेनाधिष्ठानत्वायोगात् । अहमिच्छामीतिवदहं स्फुरामीत्यहमर्थाङ्गित्वेन भासमानस्य स्फुरणस्य तदैक्यारोपाधिष्ठानत्वायोगाच्च । बाधकेन बाधिष्यमाणस्याध्यस्तधर्मत्वेन भासमानस्य चास्तित्वस्याधिष्ठानत्वायोगाच्च । त्वदभिप्रेतस्याहमित्यत्रैवांशद्वयमित्यस्यासिद्धेश्च । तस्माच्चाहमर्थस्यानात्मत्वे मानम् । आत्मत्वे तु प्रत्यक्षं तावत् । अनुमानानि च अहमर्थः मोक्षान्वयी । तत्साधनकृत्याश्रयत्वात् सम्मतवत् । अहमर्थोऽनर्थनिवृत्त्याश्रयः अनर्थाश्रयत्वात् सम्मतवत् । नचासिद्धिः

---

नत्वहं मुक्तः [1]स्यामित्याशंक्य निराकरोति ॥ नचेति ॥ तदवच्छिन्नस्येति ॥ तद्विशिष्टस्य न पुनस्तदन्वयः । आत्माश्रयापातादित्यर्थः । एवमहमर्थस्य चिदचित्संवलनरूपत्वे त्र्यंशत्वमित्यप्रामाणिककल्पने संकोचायोगादिति भावः । अहमर्थाधिष्ठानत्वेनाभिमतं स्फुरणं भ्रमरूपं ज्ञानांतरम्, स्वरूपज्ञानमेव वा, तत्र नाद्य इत्याह ॥ त्वन्मत इति ॥ न द्वितीय इत्याह ॥ अहमिच्छामीतिवदिति ॥ एतच्च दूषणं प्रथमपक्षसाधारणमिति द्रष्टव्यम् । एवमस्तीत्यत्रापि सत्त्वं नाधिष्ठानम् । अध्यस्तसत्त्वस्य बाध्यतयाधिष्ठानत्वायोगात् । स्वरूपसत्त्वस्य च तद्धर्मतया प्रतीयमानस्य तदधिष्ठानत्वायोगादित्यभिप्रेत्याह ॥ बाधकेनेति ॥ तत्साधनेति ॥ स्वर्मबंधिफलसाधनकृत्याश्रयत्वादित्यर्थः । तेन पुत्रपूतत्वादिसाधनकृत्याश्रये पित्रादौ न व्यभिचारः । यद्वा यथाश्रुत एव हेतुः । नच व्यभिचारः । कर्तृत्वाध्यासभंगे वक्ष्यमाणरीत्या पुत्रपूतत्वादेरपि पितृफलत्वात् ॥ सम्मतवदिति ॥ स्वर्गकामादिवदित्यर्थः ॥ सम्मतवदिति ॥ निग(ल)बंधनिर्मुक्तपुरुषवदित्यर्थः ।

नन्वविद्यामूलस्यानर्थस्यात्मन्यध्यस्ततयाऽहमर्थस्य तदाश्रयत्वमसिद्धमित्याशंक्याबाधिता-

1. भ्रां मुक्तिः स्यात् इति पाठः

अहमज्ञः अहं दुःखमनुभवामीत्यबाधितानुभवात् । अनात्मत्वं नाहमर्थनिष्ठं अनात्ममात्रवृत्तित्वात् घटत्ववदित्यादीनि । श्रुतयश्च "कस्मिन्नहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत, हंताऽहमिमास्तिस्रो देवता" इत्यादौ जगत्कारणे सति प्राणमनस्सृष्टेः प्रागेवाहंत्वोक्तेः । "तदात्मानमेवावेदहं ब्रह्मास्मि" इत्यत्र चावधारणेन शुद्धात्मनोऽहंत्वोक्तेः । अनवद्यस्य ब्रह्मणोऽहमुल्लेखोक्तेः । "अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बंधमोक्षयोः" ॥ इतिश्रुतौ मोक्षान्वयोक्तेश्च । स्मृतयश्च "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति स्वप्रपन्नमायानिरसनशक्तस्येश्वरस्याहमुल्लेखोक्तेः । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इत्यत्राहमर्थस्य मन आदिसर्वकारणत्वोक्तेः । "नचैव न भविष्यामः सर्वे वयमतः परम्" इत्यत्रानित्यत्वोक्तेः । "वेदैश्च सर्वैरहमेव वेद्य" इत्यत्र सर्ववेदवेद्यत्वोक्तेः । "ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्" इत्यत्र मुक्तप्राप्यत्वोक्तेः । "अहमात्मा गुडाकेश" इत्यादावात्मत्वाद्युक्तेः । एवंचाहं ब्रह्मास्मि तयोऽहं मोऽस्मावित्यादौ परेणापि लक्षणा नाश्रयणीया । तस्मात् । "अज्ञोऽहमित्याद्यध्यक्षात्तदात्मानमितिश्रुतेः । अहमात्मेति च स्मृत्याऽहंत्वं शुद्धात्मनः स्थितम्" ।

॥ इति अहमर्थस्यानात्मत्वभङ्गः ॥ ५६ ॥

---

नुभववत्त्वान् अहमर्थस्यैव तदाश्रयत्वसिद्धिरित्याह ॥ नचेति ॥ प्रमेयत्वादौ व्यभिचारादाह ॥ अनात्ममात्रेति ॥ कस्मिन्नहमिति ॥ ईश्वरस्य प्राणमनःसृष्टेः प्रागेव श्रुत्याऽहमर्थोल्लेखि[illegible]प्रतिपादने [illegible]मिति भावः ॥ अवधारणेनेति ॥ तस्याहंप्रतीति[illegible] [illegible]विति भावः । शुद्धात्मन इति ॥ अनात्मनोऽसंभिन्नात्मन इत्यर्थः । "तदात्मानमेवावेदिति" [illegible]स्येश्वरानुसंधाना[illegible]ऽप्यात्मन एवाहमर्थत्वसिद्धिरित्याह ॥ अनवद्यस्येति ॥ मोक्षान्वयोक्तेश्चेति ॥ [illegible] । "तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं [illegible]" इति श्रुतौ [illegible]ोक्तेश्चेत्यपि द्रष्टव्यम् ।

ननु [illegible]ऽस्मदादे[illegible] किं न स्यादित्याशंका निरासायाह ॥ स्वप्रपन्नमायानिरसनशक्तस्येति ॥ तथाच [illegible]श्वरस्य मायाभावेन [illegible] [illegible]ऽसंभवी । [illegible] निवर्तकत्वाभावेन माया(निवारण)[illegible] हेतु[illegible] च स्यादिति भावः । [illegible] एवाहमर्थत्वा[illegible]कारे [illegible] [illegible] ॥ एवंचेति ॥ [illegible] ॥ तस्मादिति ॥

॥ इति अहमर्थस्यानात्मत्वभङ्गः ॥ ५६ ॥

## ॥ अथ कर्तृत्वाध्यासभङ्गः ॥ ५७ ॥

यच्चोच्यते जपाकुसुमस्थं लौहित्यं स्फटिक इव मनस्स्थं कर्तृत्वमात्मन्यध्यस्तम्, नतु तात्त्विकम्, आत्मनो निर्विकारत्वात्, सुषुप्तौ बुद्ध्यभावेनकर्तृत्वदर्शनात्, श्रुत्यादिविरोधाच्चेति । तत्र ब्रूमः ।

"प्रत्येकं स्फटिके पुष्पे भवेद्रक्तत्वबुद्धिवत् ।
चिति बुद्धौ च कर्तृत्वसाक्षात्कारः कदाचन" ॥

भवितव्यं हि बुद्धिस्थस्य कर्तृत्वस्यात्मन्यारोपे रक्तं कुसुममितिवत् कदाचिन्मनः कर्त्रीति प्रत्यक्षप्रमया, रक्तः स्फटिक इतिवत्कदाचिच्चैतन्यं कर्त्रीतिभ्रमेण च । नहि बुद्धिस्थं कर्तृत्वमप्रत्यक्षम् ।

ननु मनश्चैतन्यात्मनाध्यस्तं कुसुमं तु न स्फटिकात्मनेति वैषम्यमिति चेन्न, अधि-

---

॥ अथ कर्तृत्वाध्यासभङ्गः ॥ ५७ ॥

कर्तृत्वादेरात्मधर्मत्वस्य वक्ष्यमाणत्वादित्युक्तम् । तत्समर्थनायोपक्षिपति ॥ यच्चोच्यत इति ॥ मनस्थमिति ॥ "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतौ विज्ञायते अनेनेति व्युत्पत्त्या विज्ञानशब्दितस्य मनसः कर्तृत्वप्रतीतेरिति भावः । निर्विकारत्वादिति ॥ निष्कलं निष्क्रियं शांतमिति श्रुत्या आत्मनो निर्विकारत्वसिद्धेरिति भावः ॥ बुद्ध्यभावेनेति ॥ बुध्यते अनयेति व्युत्पत्त्या बुद्धिरंतःकरणम्, तदभावेनेत्यर्थः ॥ अकर्तृत्वदर्शनादिति ॥ कर्तृत्वादर्शनादित्यर्थः ॥ श्रुत्यादिविरोधाच्चेति ॥ "स समानः सन् उभौ लोकावनुसंचरति ध्यायतीव लेलायतीव" इति श्रुतिविरोधात्, तत्रेवशब्देन वास्तवकर्तृत्वाभावप्रतिपादनात् । अन्यथेव शब्दवैयर्थ्यादित्यर्थः ॥ भवितव्यमिति ॥ एतच्च प्रत्यक्षप्रमया भ्रमेण चेत्यनेन संबध्यते ।

ननु जपाकुसुमलौहित्यवत् मनोनिष्ठकर्तृत्वस्याप्रत्यक्षत्वात् मनः कर्त्रीति प्रत्यक्षं न भविष्यती(भवतो)त्याशंक्याह ॥ नहीति ॥ बुद्धिगतस्वधर्मभूतकर्तृत्वस्यापि साक्षिवेद्यत्वादिति भावः । ननु आरोप्याश्रयाधिष्ठानयोः यत्र भेदेनावभासस्तत्रैवारोप्यमाणस्य स्वधर्मिनिष्ठतया पृथक्प्रतीतिः । भ्रमे चाधिष्ठानविशेषप्रकाशेऽपि यत्र त्वारोप्याश्रयाधिष्ठानयोरभेदाध्यासः, तत्र तु नोक्तप्रतीत्यापादकत्वम्, भीषणोऽयं सर्प इति भ्रमवत्, प्रकृते च मनश्चैतन्ययोरैक्याध्यासान्न पृथक्प्रतीत्यापादनमिति शङ्कते ॥ नन्विति ॥ अधिष्ठानात्मनाध्यस्तस्यैव जपाकुसुमादेः उपाधित्व-

ष्ठानात्मनाऽनध्यस्तं जपाकुसुमादिस्थानीयमुपाधिं विना भीषणत्वादियुक्तसर्पस्य रज्ज्वात्मनेव कर्तृत्वादियुक्तबुद्धेः चिदात्मनाऽध्यासे रज्जौ भीषणत्वांतरस्येवात्मनि कर्तृत्वांतरस्यानध्यासेन तदध्यासस्य सोपाधिकत्वायोगात् । मनो न स्फुरणम्, किंतु स्फुरतीति तयोर्भेदधीदशाया-मपि प्रत्येकं कदापि कर्तृत्वाप्रतीतेश्च । इदंसर्पयोः शरीरात्मनोश्चाभेदग्रहणदशायामप्ययं भीषणः सर्पो भीषणः अहं गौरः शरीरं गौरमितिवत् मनश्चितोरभेदग्रहदशायामपि स्फुरणं कर्तृ मनःकर्त्रिति धीप्रसंगाच्च । नचोपाधेरधिष्ठानात्मनाऽध्यासेऽप्युपाधेस्तद्धर्मस्य वाऽधिष्ठानसम-सत्ताकत्वं वाऽध्यस्यमानादधिकसत्ताकत्वं वा सोपाधिकत्वे तंत्रमिति वाच्यम् । आद्ये त्वन्मते बुद्धेस्तत्कर्तृत्वस्य च चित्समसत्ताकत्वाभावेन सोपाधिकत्वायोगात् । द्वितीये बुद्धिगतकर्तृत्वस्य पारमार्थिकताया वा आत्मस्थकर्तृत्वस्य प्रातिभासिकताया वा प्रसंगात् । उभयथापि नीरे क्षीरत्वाध्यासस्यापि सोपाधिकत्वापाताच्च । एतेन कर्तृत्वं बुद्धिगतमहमर्थेऽहमर्थगतं वाऽऽत्मन्यध्यस्यते, ततश्च चैतन्यं कर्त्रिति मनःकर्त्रिति च प्रतीत्यभावो युक्त इति

---

धर्मानात्मनसोऽपि तादृशस्यैवोपाधित्वं वाच्यम् । अन्यथा कर्तृत्वाध्यासस्य सोपाधिकत्वमेव मयुक्तं स्यात् । नच मनश्चैतन्ययोरभेदाध्यासेऽपि तन्निष्ठकर्तृत्वस्यात्मन्यारोपेण सोपाधिकत्व-सिद्धिः । तर्हि रज्जौ भीषणत्वाध्यासं विनैव तद्विशिष्टसर्पाध्यासमात्रेण भीषणोऽयं सर्प इति-वदात्मनि कर्तृत्वाध्यासं विनैव तद्विशिष्टमनसोऽध्यासमात्रेणाहं कर्तेति प्रतीत्युपपत्त्या स्फटिके लौहित्यांतरस्येवात्मनि कर्तृत्वांतरस्यानध्यासेन सोपाधिकत्वं न स्यात् । अन्यथा भीषणोऽयं सर्प इत्यस्यापि सोपाधिकत्वापत्तेरित्यभिप्रेत्याह ॥ अधिष्ठानात्मनाऽनध्यस्तमिति ॥

चिदात्मभेदधीदशायां मनश्चैतन्ययोः प्रत्येकं कर्तृत्वाप्रतीतिसंभवेऽपि जपाकुसुमस्फटिकयो-रिव तयोर्भेदधीदशायां प्रत्येकं कर्तृत्वप्रतीतिः स्यादेवेत्याह ॥ मनो न स्फुरणमिति ॥ यदुक्त-मात्मनोऽध्यासयोरभेदधीदशायां न प्रत्येकमारोप्यप्रतीतिरिति तदप्यसिद्धमित्याह ॥ इदंसर्पयो-रिति ॥ अधिष्ठानात्मनाऽनध्यस्तस्यैवोपाधेः सोपाधिकाध्यासे, न, तंत्रत्वं येन तद्विरहात् अहं कर्तेत्यध्यासः सोपाधिको न स्यात् । किंत्वन्यदेव तत्र प्रयोजकमित्याशङ्क्य निराकरोति ॥ नचेति ॥ तंत्रमिति ॥ तथाचाहं गौर इत्यध्यासो न सोपाधिकः उक्तप्रयोजकविरहात् । लोहितः स्फटिक इत्यादिरेवोक्तप्रयोजकसत्त्वात् सोपाधिक इति भावः ॥ द्वितीय इति ॥ तथाऽध्यस्यमाना-दधिकसत्ताकत्वरूपप्रयोजकस्य निर्वाच्यमिति भावः ॥ उभयथापीति ॥ उक्तप्रयोजकद्वयेऽपीत्यर्थः ।

निरस्तम् । आद्ये आत्मन्यारोपितस्याप्यनर्थाभावेन बुद्धेरेवाहमर्थस्यैव वा बंधमोक्षापातात् । द्वितीयेऽहमर्थस्यैनानध्यस्तकर्तृत्वेनैवाहंकर्तेति प्रतीत्युपपत्त्याऽऽत्मनि तदध्यासासिद्धेः । किंच मनसः कर्तृत्वेऽपि करणत्वप्रसिद्धिविरोधः ।

अपिच "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणे त्वयापि सांख्यरीत्या बुद्धेः कर्तृत्वे प्राप्ते जीवस्येति सिद्धांतितत्वेन तद्विरोधः । बुद्ध्यात्मनोरविवेकस्य सांख्यमतेऽपि सत्त्वात् । किंच

"बंधस्य तदपायेन कृतेस्तत्फलभाक्तया ।
सामानाधिकरण्याच न बुद्धेः कर्तृता मता" ॥

तथाहि । कर्तृत्वभोक्तृत्वाद्यनर्थरूपो बंधो बुद्धिगतश्चेत् ततो मोक्षोऽपि तद्गतः स्यात्, बंधमोक्षयोः सामानाधिकरण्यात् । अज्ञानमपि हि दुःखादिभोगद्वारैवानर्थः । नच बुद्धिगतं सत्यं भोक्तृत्वादिकं नानर्थः, किंतु तदुपाधिकं मिथ्याभोक्तृत्वादिकमिति

---

बुद्धिगतं कर्तृत्वं अहमर्थेऽध्यस्यत इति पक्षे चैतन्यं कर्तृ इति प्रतीत्यभावो युक्तः । अहमर्थगतं कर्तृत्वमात्मन्यध्यस्यत इति पक्षे मनः कर्तृ इति प्रतीत्यभावो युक्त इति क्रमेणान्वयः । मनः कर्तृ इति प्रतीत्यापत्तिरिति दूषणे सत्येव दूषणांतरमाह ॥ आद्य इति ॥ चैतन्यं कर्तृ इति प्रतीत्यापत्तिरिति दूषणे सत्येव दूषणांतरमाह ॥ द्वितीय इति ॥ अंतःकरणत्व(करणत्वप्रसिद्धिविरोध इति पाठः) प्रसिद्धिविरोध इति ॥ मनसैवानुद्रष्टव्यम्, शारीरमंतःकरणोपघातम्, इत्यादिप्रसिद्धिविरोध इत्यर्थः ।

ननु न सिद्धांतविरोधः । तस्मिन्नधिकरणे कर्तृत्वाश्रयबुद्धिविवेकमात्रेण जीवस्य कर्तृत्वोक्त्युपपत्तिरित्याशंक्याह ॥ बुद्ध्यात्मनोरिति ॥ तस्य सांख्येनाप्यङ्गीकृतत्वेन तदधिकरणसिद्धांतानुत्थानप्रसंग इति भावः ॥ किंचेति ॥ बंधस्य तदपायेन सामानाधिकरण्यात्, कृतेः फलभाक्तया सामानाधिकरण्याच्चेति योजना । श्लोकं व्याचष्टे ॥ तथाहीति ॥ तत इति बन्धादित्यर्थः । सामानाधिकरण्यादिति । सामानाधिकरण्यस्याभ्युपगन्तव्यत्वात् । अन्यथा कृतहानादिप्रसंगादित्यर्थः । न कर्तृत्वादिकं बंधः । किंत्वज्ञानमेव, तन्निवृत्तिरेव च मोक्ष इति तयोरात्मगतत्वमुपपद्यत इत्यत आह ॥ अज्ञानमपीति ॥ अज्ञानं हि न स्वरूपेण बन्धः । किंतु दुःखाद्यनर्थापादकतया, अनर्थ एव मुख्यो बंध इति तस्य बुद्धिनिष्ठत्वे बुद्धेरेव मोक्षः स्यादिति भावः ॥ सत्यमिति ॥ धर्मिसमसत्ताकमित्यर्थः ॥ तदुपाधिकमिति ॥ तथाच तस्यात्मनिष्ठत्वाद् बुद्धेर्मोक्ष-

वाच्यम् । एतत्कल्पनायाः कर्तृत्वाध्याससिद्ध्यधीनत्वेनान्योन्याश्रयात् । मोक्षस्य सत्यस्यैव पुरुषार्थत्ववत् भोक्तृत्वादिरूपबंधस्यापि सत्यस्यैवानर्थत्वाच्च । तदुक्तं वार्तिके बौद्धं प्रति

"नहि स्वप्नसुखायायं धर्मे कश्चित्प्रवर्तते ।
यादृच्छिकत्वात्स्वप्नस्य तूष्णी[1]मासीत पंडितः" ॥

इति । स्थूलः करोमि स्थूलोऽहं भुंजे इत्यादिप्रतीत्या देहस्याप्यनर्थान्वयापाताच्च । नापि बुद्ध्युपाधिकमात्मस्थं भोक्तृत्वादिकमनर्थः, नतु देहस्थमिति वाच्यम् । अनर्थाश्रयस्यात्मनोऽनर्थकोटित्वायोगात् । भ्रमकालेऽहं भोक्तेति प्रमाकाले तु बुद्धिर्भोक्त्रीत्येव प्रतीत्या शुद्धात्मनि कदापि तदप्रतीतेश्च । अपिच मनसः श्रवणादिकर्तृत्वे तत्फलं मोक्षोऽपि तस्यैव स्यात् । "शास्त्रफलं प्रयोक्तरि" इति न्यायेन यस्मिन्साधनकृतिः तस्यैव फलभाक्त्वात्, अन्यथा कृतहानाकृताभ्यागमापातात् । जातेष्टावपि पित्रर्थपुत्रगतं पूतत्वादिकं तदनुष्ठातुः

---

प्रसंग इति भावः ॥ अन्योन्याश्रयादिति ॥ कर्तृत्वाध्याससिद्धौ अध्यस्तकर्तृत्वादेः सिद्धिः । तत्सिद्धौ च सत्यस्य बंधकल्पनायोगेन कर्तृत्वादेरध्यस्तत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ सत्यस्यैवेति ॥ स्वप्नकल्पनाबन्धस्यादिनिवृत्त्यर्थमपि यथोक्तश्रवणादिसाधनानुष्ठानं स्यादिति भावः । सत्यस्यैव पुरुषार्थत्वमित्यत्र संमतिमाह ॥ तदुक्तमिति ॥ किंचाध्यस्तकर्तृत्वादिकं नानर्थः । देहस्याप्यनर्थाश्रयत्वापातेन मोक्षान्वयित्वप्रसंग इत्यभिप्रेत्याह ॥ स्थूल इति ॥ अनर्थाश्रयस्येति । आत्मस्थत्वेन कर्तृत्वादेरनर्थत्वे आत्मनोऽप्यनर्थकोटिनिवेशः स्यात् । स चायुक्तः । आत्मज्ञानस्यापि (ज्ञानस्यापि इति पाठः) पुरुषार्थत्वापत्तेरिति भावः ।

ननु वस्तुगत्या आत्मस्थं कर्तृत्वादिकं तदेवानर्थ इति नात्मनोऽनर्थकोटिनिवेश इत्यनुशयनाह ॥ भ्रमकाल इति ॥ अहं करोमीत्यादिप्रतीतेरात्मनि कर्तृत्वविशिष्टान्तःकरणाभेदाध्यासमात्रेण भ्रमत्वोपपत्त्या कर्तृत्वांतरस्यात्मनि पृथगध्यासे मानाभावादात्मनो बद्धत्वसिद्धिरिति भावः ॥ साधनकृतिरिति ॥ साधनविषयककृतिरित्यर्थः ।

ननु यस्मिन् साधनकृतिस्तस्यैव फलमिति न नियमः । पुत्रगत(पूत इति पा.)त्वादि फलकजातेष्टिकर्तरि यजमानगतस्य साधनकृत्याश्रयेषु ऋत्विक्षु च व्यभिचारादित्याशंक्याह ॥ जातेष्टावपीति ॥ तेन तदुद्देशादिति ॥ यथा च येन यदुद्दिश्य क्रियते तत् तस्यैव फलमिति

१. ([illegible] श्लो. वा. पृ. [illegible]) पाठान्तरम् ।

पितुरेव फलं तेन तदुद्देशात् । नचात्रात्मांतःकरणार्थः, येनात्मगतो मोक्षो मनस उद्देश्यः स्यात् । आर्त्विज्यादेरपि दक्षिणैव फलम् ।

नन्वारोपितमेव वा आत्मारोपितमेव वा कर्तृत्वं फलान्वये तंत्रमिति चेन्न । निरस्तत्वात् । सत्यकर्तृत्ववत्या बुद्धेः सांसारिकफलभोक्तृत्वापाताच्च । नचोभयं तंत्रम्, अननुगमात् । अपिच कृतिकर्मत्वकरणत्वादीनां मनसि श्रुतेः बुद्ध्यभावेऽपि कर्तृत्वश्रुतेर्बुद्धेर्न कर्तृता । श्रूयते हि "तन्मनोऽकुरुत" इत्यादौ मनसः कृतिकर्मत्वम्, "तथा शृण्वंतः श्रोत्रेण विद्वांसो मनसा" इत्यादिश्रुतौ "शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर" इत्यादिस्मृतौ च करणत्वम्, तथा "मन उदक्रामत् मीलित इवाश्नन् पिबन्नास्तैव" इत्यादौ मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वम्, तथा "एतं प्राणमयमात्मानमुपसंक्रम्य" "एतं मनोमयमात्मानमुपसंक्रम्य, इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन्" इत्यादौ त्वद्रीत्या प्राणाद्यतिक्रमणेऽपि संचरणादिकर्तृत्वम्, तथा "परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षन् क्रीडन्रममाण" इत्यादौ स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वम् । अपिच

---

नियमशरीरनिष्पत्तेः नोक्तव्यभिचार इति भावः । अत एव ऋत्विक्ष्वपि न व्यभिचार इत्याह ॥ आर्त्विज्यस्यापि इति ॥ (आर्त्विज्यादेरपि इति पाठः) दूषणांतराभिधित्सया निरस्तमपि पुनराशंकते ॥ नन्विति ॥ आत्मारोपितमिति ॥ आत्मन्यारोपितमित्यर्थः ॥ मन्येति ॥ आरोपितकर्तृत्वस्यैव त्वया सांसारिकफलभोक्तृत्वान्वये तंत्रत्वोपगमादिति भावः ॥ उभयमिति ॥ आरोपितमनारोपितं चेत्यर्थः ॥ कृतिकर्मत्वेति ॥ कृतिसाध्यत्वेत्यर्थः । यथोक्तं व्याचष्टे ॥ श्रूयते हीति ॥ शरीरवाङ्मनोभिरिति ॥ यद्यप्यचतुरविचतुर इत्यादिसूत्रेण निपातनात् शारीरवाङ्मनसैरित्येव प्रयोगः युक्तः । तथाप्यार्षत्वान्न दोषः ॥ तथा मन इति ॥ प्रद्योतस्य च भवनमित्यादिशब्दैः मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वं प्रतीयते । "लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रेण कर्त्रर्थे लकारस्यानुशासनादिति भावः ॥ परममुक्तावपीति ॥ तथाच तत्र श्रूयमाणं कर्तृत्वं स्वाभाविकमेवान्तःकरणाद्युपाधेः परममुक्तौ सर्वात्मना विरहात् ॥ अन्यथा स्वेन रूपेणाभिनिष्पद्यत इति निरुपाधिकस्वरूपमात्राविर्भावप्रतिपादनविरोध इति भावः । आत्मनः स्वाभाविककर्तृत्वाभावे बाधकमुक्त्वा साधकं चाह ॥ अपिचेति ॥ कर्तृत्वमिति ॥ एतच्च ज्ञातृत्वभोक्तृत्वयोरप्युपलक्षणम ॥ नन्विति ॥ बाधकमस्तीत्यभिमानेन शंक्यते । अहं

"अहं करोमीत्यध्यक्षात्फलभाक्त्वादिलिंगतः ।
कर्ताऽऽत्मेत्यादिवाक्याच्च स्थितं कर्तृत्वमात्मनः"॥

नचाहं करोमीत्यादिप्रत्यक्षेण, विमत आत्मा मोक्षसाधनविषयकृतिमान् तत्फलान्वयित्वात् सम्मतवत्, अज्ञानं ज्ञानसमानाधिकरणं ज्ञाननिवर्त्यत्वात् ज्ञानप्रागभाववत्, दुःखादिभोगः मोक्षसमानाधिकरणः बंधत्वात्सम्मतवदित्याद्यनुमानैः, "कर्ता विज्ञानात्मा, यो वेदेदं जिघ्राणीति स आत्मा, आनंदभुक् तथा प्राज्ञ" इत्यादिश्रुतिभिश्च सिद्धे आत्मनः कर्तृत्वादौ बाधकमस्ति । नच श्रुतिरनुवादः, अहमर्थान्यात्मस्थकर्तृत्वस्य "नामरूपे व्याकरोत्सहि सर्वस्य

---

जानामि अहं भुंजे इति प्रत्यक्षमादिशब्दार्थः ॥ विमत इति ॥ अंतःकरणातिरिक्तेत्यर्थः ॥ मोक्षसाधनविषयकृतिमानिति ॥ मोक्षसाधनविषयानौपाधिककृतिमानित्यर्थः । तेनारोपितकृतिमत्त्वमादाय न सिद्धसाधनम् ॥ तत्फलान्वयित्वादिति ॥ उद्दिष्टतत्साधनफलान्वयित्वादित्यर्थः । तेन पुत्रत्वादिफलाश्रये तत्साधनविषयककृतिहीने पुत्रे न व्यभिचारः ॥ अज्ञानमिति ॥ आत्माश्रिताज्ञानस्य ज्ञानसामानाधिकरण्यसिद्धौ आत्मन एव ज्ञातृत्वमिति तत्प्रयुक्तकर्तृत्वमपि तस्यैव सेत्स्यतीति भावः । इत्याद्यनुमानैरित्यादिशब्देन विमत आत्मा नांतःकरणोपाधिककृतिमान्, तदभावेऽपि कर्तृत्वात् संमतवत् । विमतं आत्माश्रयाज्ञानं नांतःकरणोपाधिकं अज्ञाननिवृत्तिजनकत्वात् अज्ञानवत् । विमतो बंधः अनौपाधिकः बन्धत्वात् निगडबंधवत् । इत्याद्यनुमानपरिग्रहः ॥ अनुवाद इति ॥ अहं कर्तेत्यादिप्रत्यक्षप्रमानुवाद इत्यर्थः । तथाच श्रुतितात्पर्याभावात् न कर्तृत्वादिकं श्रुत्यर्थ इति भावः ।

अहमर्थान्येति ॥ अहं कर्तेत्यादिप्रत्यक्षस्य त्वदभिमताहमर्थविषयत्वेन तदतिरिक्तात्मविषयकत्वाभावात्, "कर्ता विज्ञानात्मा" इत्यादिश्रुत्युक्तकेवलात्मनिष्ठकर्तृत्वस्य प्रत्यक्षागोचरत्वाच्च तेन श्रुतेरनुवादः । ईश्वरनिष्ठकर्तृत्वस्य च प्रत्यक्षागोचरत्वात् नानुवादशंकेत्यर्थः ॥ निर्धर्मकत्वमिति ॥ 'केवलो निर्गुणश्च' इत्यादिश्रुतिप्रतिपन्नमित्यर्थः ॥ व्याघातादिति ॥ निर्धर्मकत्वस्यापि धर्मत्वेन तत्सद्भावे धर्मसामान्याभावोऽसंभवी तदसंभवे च (तदसद्भावे च) धर्मवत्त्वं दुर्निवारमित्युभयथापि निर्धर्मकत्वं व्याहतमित्यर्थः । यदुक्तश्रुतिश्च निरनिष्टो निरवद्य इत्यादि श्रुत्यंतरानुसारेण हेयगुणनिषेधपरेति न तद्विरोध इति भावः ।

किंच यथा अंतःकरणधर्मानपि विना आत्मनो ज्ञानत्वादिकमुपेयते तथैव ज्ञातृत्वादिक-

कर्ता" इत्यादिश्रुत्युक्तेश्वरस्यकर्तृत्वस्य च प्रत्यक्षेणाप्राप्तेः । नच निर्धर्मकत्वं बाधकम्, निर्धर्मकत्वरूपधर्मभावाभावाभ्यां व्याघातात् ज्ञानत्ववत्, सौषुप्तिकाज्ञानादिसाक्षित्ववत्, बुद्धिं प्रति बुद्ध्यविशिष्टस्य ज्ञातृत्ववच्च, सत्यस्यासत्यस्य वा ज्ञातृत्वादेरप्यात्मन्येव संभवाच्च । नापि निष्क्रियत्वं बाधकम्, क्रियाया धात्वर्थत्वे आत्मन्यप्यस्त्यादिधात्वर्थसत्तादेः सत्त्वेनासिद्धेः। परिस्पंदत्वे ज्ञानादीनामपरिस्पंदत्वेनाप्रयोजकत्वात् । नापि निर्विकारत्वं बाधकम्, आकाशस्य संयोगाद्याश्रयत्व इवात्मनोऽज्ञानतद्ध्वंसाद्याश्रयत्व इव च ज्ञानरूपगुणाश्रयत्वेऽपि द्रव्यांतरत्वापत्तिरूपविकारानापातात् । नच सुषुप्तौ मनसोऽभावे कर्तृत्वाद्यदर्शनं बाधकम्, तदाऽप्युच्छ्वासादिकर्तृत्वदर्शनात् । "सुप्तो भूर्भूरित्येव प्रश्वसिति" इत्यादिश्रुतेश्च । देहादिवन्मनसो निमित्तत्वेनापि तदुपपत्तेश्च । नापिश्रुतिर्बाधिका, "विज्ञानं यज्ञं तनुते" इति श्रुतेः

---

मभ्युपेयम् । किमन्तःकरणोपाधिकत्वकल्पनयेत्याह ॥ ज्ञानत्ववदिति ॥ बुद्ध्यविशिष्टस्येति ॥ अन्यथा त्वात्माश्रय इति भावः ॥ असत्यस्य वेति ॥ वाशब्दोऽनास्थायाम् ॥ आत्मन्येवेति ॥ केवलात्मनीत्यर्थः ॥ निष्क्रियत्वमिति ॥ निष्कलं निष्क्रियमिति श्रुतिप्रतिपन्नमित्यर्थः । अत्र क्रिया धात्वर्थरूपा उत परिस्पंदरूपेति विकल्प्याद्येऽसिद्धिः । द्वितीये न ज्ञातृत्वादिविरोध इत्याह ॥ क्रियाया इत्यादिना ॥ निर्विकारत्वमिति ॥ निर्विकारोऽक्षरः शुद्ध इत्यादिप्रमाणप्रतिपन्नमित्यर्थः ॥ द्रव्यान्तरत्वापत्तिरूपेति ॥ न च लाघवात् कार्यमात्रं विकारः, तथात्वे मृद् घटाद्यात्मना विकरोतीतिवत् दण्डसंयोगादिमति पुरुषे पुरुषः संयोगाद्यात्मना विकरोतीति प्रतीतिप्रसंगादिति भावः । उच्छ्वासादिकर्तृत्वं न प्रत्यक्षं किन्त्वनुभूयमानोच्छ्वासेनानुमेयम् । तच्चेश्वरगतत्वेनाप्युपपन्नमिति न जीवस्य कर्तृत्वसिद्धिरित्यनुशयादाह ॥ सुषुप्तावपीति ॥ नच सुषुप्तौ जीवस्य कृत्यनुकूलज्ञानाभावात् कथं कर्तृत्वमिति वाच्यम् । श्रुतिबलादेव अत्र ज्ञानाद्यजन्यकृतेरपि कल्पनेन कर्तृत्वाविरोधादिति भावः ।

अस्तु वा सुषुप्तौ कर्तृत्वाद्यभावः । तथापि कर्तृत्वं न मनोनिष्ठम् । तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्य निमित्तसाधारणत्वेनोपादानत्वाप्रयोजकत्वादित्यभिप्रेत्याह ॥ मनस इति ॥

ननु "विज्ञानं यज्ञं तनुते" इत्यादिश्रुत्या विज्ञानशब्दितान्तःकरणस्यैव कर्तृत्वावगमात् आत्मनः कर्तृत्वे तच्छ्रुतिविरोध एवेत्याशङ्क्य निराकरोति ॥ नापीति ॥ अन्यपरत्वादिति ॥

"विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते"। इत्यादिवाक्यशेषेण ब्रह्मपरत्वात् । "कामः संकल्प" इत्यारभ्य "एतत्सर्वं मन एव" इति श्रुतेः "मनसा वा अग्रे संकल्पयति" इत्यादिश्रुत्या मनःकरणकत्वपरत्वात् । "आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इतिश्रुतेरात्मनो भोक्तृत्वे देहादिवन्मनसः सहकारितेत्येवंपरत्वात् । "ध्यायतीव लेलायतीव" इत्यादिश्रुताविवशब्दस्य परतंत्रप्रभौ प्रभुरिवेतिवत् जीवस्यकर्तृत्वस्येश्वरतंत्रत्वपरत्वात् । "अहंकारविमूढात्मा कर्ताहमिति मन्यते" इतिस्मृतेरपि जीवे स्वातंत्र्यनिषेधकत्वात् ।

"तत्रैवंसति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ " इत्यादिवाक्यशेषात् । अन्यथोक्तश्रुत्यादिविरोधात् ।

न च कर्तृत्वस्य क्लेशसंबंधाच्च श्रुतिस्तत्परा, दर्शपूर्णमासादावप्यतात्पर्यापातात् । लीलादेरुन्मत्तादेश्चाकरण एव क्लेशदर्शनाच्च । "यदा वै करोत्यथ निस्तिष्ठति" इति श्रुत्यैव कर्तृत्वस्य फलसंबंधोक्तेश्चेति ।

॥ इति कर्तृत्वाध्यासभङ्गः ॥ ५७ ॥

---

अन्यथा तत्र ब्रह्मशब्दप्रयोगः तदुपासकस्य सकलकामावाप्तिश्च न स्यादिति भावः ॥ ननु 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति" श्रुतौ कामादीनां मन आत्मकत्वाभिधानेन तद्वदेव कर्तृत्वस्याप्यन्तःकरणधर्मत्वमिति कामादीनामंतःकरणनिष्ठतया तत्समानाधिकरणं कर्तृत्वादिकमंतःकरणनिष्ठमेवाभ्युपेयमित्याशंक्याह ॥ कामः संकल्प इत्यारभ्य इति ॥ न च सामानाधिकरण्यप्रयोगानुपपत्तिः । नड्वलोदकं पादरोग इत्यादिवत् निमित्तत्वेऽपि तदुपपत्तेरिति भावः । (नड्वलोदकं पादरोगः इति सूत्रमहाभाष्ये नड्वलोदकं पादरोग इति वर्तते)

तथात्मेंद्रियमनोयुक्तमिति श्रुतौ मनोयुक्तस्यैवात्मनो भोक्तृत्वाभिधानेन मनऔपाधिकमेव भोक्तृत्वादिकमित्याशंक्याह ॥ आत्मेंद्रियेति ॥ अन्यथा देहेन्द्रियादावपि भोक्तृत्वादिकं प्रसज्येतेति भावः । ननु ध्यायतीवेत्यत्रेवशब्देन ध्यानकर्तृत्वादेरपारमार्थिकत्वाभिधानात् तस्यांतःकरणोपाधिकत्वमवगम्यत इत्याशंक्याह ॥ ध्यायतीवेति ॥ केवलमिति ईश्वरानधीनमित्यर्थः । अन्यथेति ॥ तदुदाहृतश्रुतेरंतःकरणविनिर्मुक्तात्मनः कर्तृत्वनिषेधकत्व इत्यर्थः ॥ क्लेशसंबंधादिति ॥ क्लेशजनकत्वादित्यर्थः । किंच कर्तृत्वं न क्लेशव्याप्तं व्यभिचारादित्याह ॥ लीलादेरिति ॥ ननु तथापि फलाभावात् न तत्र श्रुतितात्पर्यमित्याशंक्याह ॥ यदा वै करोतीति ॥

॥ इति कर्तृत्वाध्यासभङ्गः ॥ ५७ ॥

## ॥ अथ देहात्मैक्याध्यासभङ्गः ॥ ५८ ॥

यच्चोच्यते ( आत्मनि देहेंद्रियाद्यैक्यं तद्धर्माश्चाध्यस्यंते ) देहेन्द्रियादेरात्मन्यैक्यं तद्धर्माश्चाध्यस्यंते तत्र चाहं ब्राह्मणोऽहं काण इत्यादिप्रत्यक्षम्, "ब्राह्मणो यजेत" इत्यादिश्रुति-र्देहाद्यैक्याध्यासाभावे सुषुप्तौ प्रमातृत्वाद्यदर्शनात्तदन्यथानुपपत्तिश्च मानमिति तन्न, त्वन्मतेऽहमर्थस्यानात्मत्वेनाहंब्राह्मणइत्यादेर्देहात्मैक्याविषयत्वात् । देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानाद्यप्रामाण्यस्योक्तत्वेन तद्भेदासिद्ध्यापत्तेश्च । परस्परं भिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासायोगाच्च । त्वन्मते देहात्मनोर्भेदस्याध्यस्तत्वेन जीवब्रह्मणोरिव तत्राभेदाध्यासायोगाच्च । मिथ्यात्वं हि अधिष्ठानज्ञानाबाध्यात्यंताभावप्रतियोगित्वम्, तद्बाध्यात्यंताभावप्रतियोगित्वस्य सत्त्वेऽपि संभवात् । अभेदश्च भेदात्यंताभाव इति कथं भेद-

---

॥ अथ देहात्मैक्याध्यासभङ्गः ॥ ५८ ॥

नन्वहं मनुष्य इत्यादिप्रतीतिवदहं कर्तेत्यादिप्रतीतिरध्यस्त एव इत्याशङ्क्य दृष्टांतं दूषयितुमनुवदति ॥ यच्चेति ॥ यद्वा बुद्ध्यैक्याध्यासस्य दूषितत्वात् तत्प्रसंगोपस्थापितमैक्याध्यासांतरमपि दूषयितुमनुवदति ॥ यच्चेति ॥ अहं ब्राह्मण इति ॥ ब्राह्मणत्वकाणत्वादेर्देहेन्द्रियादिधर्मस्य तदाश्रयैक्याध्यासं विना अहंत्वसामानाधिकरण्यप्रतीत्यसंभवात् तदध्याससिद्धिरिति भावः ॥ ब्राह्मणो यजेतेत्यादीति ॥ ब्राह्मणत्वादेरधिकारिविशेषणस्यात्मन्यभावात् देहैक्याध्यासकृतमेव (तदिति) वक्तव्यमिति भावः ॥ तदन्यथानुपपत्तिः ॥ प्रमातृत्वाद्यन्यथानुपपत्तिः ॥ उक्तत्वेनेति ॥ प्रत्यक्षप्राबल्यसमर्थनावसर इति शेषः ॥ परस्परमिति ॥ देहाभिन्नत्वेन प्रतीयमाने आत्मनि देहभिन्नत्वेन प्रतीयमानेन्द्रियस्याध्यात्मनि भिन्नत्वप्रतीतिनियमेन तदैक्याध्यासो नोपपद्यते, अध्यासव्यापकस्य भेदाग्रहस्याभावादिति भावः ॥ अभेदाध्यासायोगाच्चेति ॥ भेदमिथ्यात्वस्याभेदाध्यासविरोधित्वादिति भावः ॥ तदेवोपपादयति ॥ मिथ्यात्वं हीति ॥ तद्बाध्येति ॥ अधिष्ठानज्ञानबाध्येत्यर्थः ।

नन्वस्तूक्तमेव मिथ्यात्वम्, तावता अभेदस्याध्यासः कुतो न युक्त इत्यत आह ॥ अभेदश्चेति ॥ तथाच भेदाभेदयोः परस्परविरहरूपत्वेनान्यतरमिथ्यात्वेऽन्यतरसत्यत्वं दुर्वारमिति भावः । ननु देहस्य भिन्नत्वेन वाभिन्नत्वेन वा नाध्यासः येनोक्तदोषः स्यात् । किंतु स्वरूप-

मीषणत्वादिकमिव धर्मैक्येन सहाध्यस्यते, किं वा स्फटिके जपाकुसुमलौहित्यमिव तेन विनैव । नाद्यः । धर्मैक्याध्यासाभावस्योक्तत्वात् । नांत्यः । तद्वदेव कार्श्यादिद्वयप्रतीत्यापत्तेः । कृशोऽहं कृष्णोऽहमित्यादिस्तु पुत्रे कृशेऽहं कृश इतिवत् कर्दमलिप्तेऽहं कृष्ण इतिवच्च गौणः । नचायमप्यध्यासः, पुत्रात्कर्दमात्स्वस्य स्पष्टं भेदप्रतीतेः । अन्यथा मंचाः क्रोशंतीत्यादिरप्यध्यासः स्यात् । पुत्रकार्श्येन दुःखं तु तस्यात्यंतप्रेमास्पदत्वात् । नच कृशोऽहमित्यैक्यप्रतीत्या शिलापुत्रिकाया देह इतिवत् मम देह इत्ययमेव गौण इति वाच्यम् । मम देह इत्यस्य देहात्मविवेकिनि मुख्यतायाः कृशोऽहमित्यस्य च पुत्रकार्श्ये गौणतायाश्च स्पष्टत्वात् । तत्र भेदधीः स्पष्टेतिचेदिहापि तथा, पश्वादीनामपि देहात्मभेदसाक्षात्कारस्याङ्गीकार्यत्वात् । तदुक्तम् ।

"जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ॥
अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् " ॥ इति ।

तथाहि जातमात्रस्य पश्वादेः स्तन्यपानादौ प्रवृत्त्यादिहेतोरिष्टसाधनत्वाद्यनुमितेर्हेतुः ,

---

भावः । ननु तथापि कृशोऽहमित्यादिप्रतीतेरध्यासत्वं दुर्वारम् । कार्श्यादेः देहमात्रधर्मत्वादित्याशङ्क्याह ॥ कृशोऽहमिति ॥ गौण इति ॥ परंपरासंबंधविषयक इत्यर्थः ॥ अयमपीति ॥ पुत्रे कृशे अहं कृशः कर्दमलिप्तोऽहं कृष्णः इत्यादिप्रत्ययोऽपीत्यर्थः ॥ अन्यथेति ॥ पुत्रे कृशे कृशोऽहमित्यादिप्रतीतेर्गौणत्वाभावादित्यर्थः ।

ननु कृशोऽहमितिधीर्यदि नाध्यासः तर्हि पुत्रकार्श्येन पितुर्दुःखं न स्यात् । नह्यन्यकार्श्यमन्यस्य दुःखापादकमित्याशङ्क्याह ॥ पुत्रकार्श्येनेति ॥ तत्रेति ॥ पितृपुत्रयोरित्यर्थः । इहापीति ॥ देहात्मनोरपि भेदप्रतीतिः स्पष्टेत्यर्थः । स्पष्टत्वमेवोपपादयति ॥ पश्वादीनामपीति ॥ कारिकां व्याचष्टे ॥ तथाहीति ॥ प्रवृत्त्यादीत्यादिपदेन निवृत्तिपरिग्रहः । इष्टसाधनत्वादीत्यादिपदेनानिष्टसाधनत्वपरिग्रहः ॥ यथेदमिति ॥ यथा प्राग्भवे मत्कृतस्तन्यपानमित्यर्थः ॥ यथेदमिति ॥ यथा प्राग्भवे मत्कृतमेवाग्निशंकुकण्टकस्पर्शनमित्यर्थः ॥ न देहांतरेति ॥ न स्वीयदेहांतरेत्यर्थः । तथाच यथेदमिति दृष्टान्तस्मरणस्य प्राचीनस्वीयपार्थिवांतरस्मरणं विनाऽयोगेन स्वात्मनस्ततो भेदसिद्धिरिति भावः ।

यत् स्तन्यपानं तदिष्टसाधनं यथेदं, यच्चेत्रस्यांतःशंकुकंडूयनं तदनिष्टसाधनं यथेदमित्यादि व्याप्तिस्मृतिस्तावत् देहांतरास्मृतौ युक्ता। नच मम प्राग्देहांतरमभूदिति स्मरतः स्वस्यै-तद्देहैक्यधीः, किंत्वनेकमणिष्वनुस्यूतं सूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतस्ततो भेदधी-रेव। किंच योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरः नप्तॄन्पश्यामीति, योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेह इति च देहभेदधीपूर्वकं स्वस्यैक्यमनुसंदधानः कथं ततो भेदं न जानीयात् । नचेयं विरुद्धधर्मरूपलिंगजन्या भेदधीः परोक्षेति नैक्यापरोक्ष-भ्रमविरोधिनीति वाच्यम्। प्रत्यक्षे धर्मिणि भेदकसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वात्। इह च व्यावृत्तत्वेन धीस्थदेहादिभेदकस्यानुवृत्तत्वस्यात्मनि प्रत्यभिज्ञाप्रत्यक्षसिद्धत्वात्, व्या-वर्तकसाक्षात्कारस्यैवैक्यापरोक्षभ्रमेण भेदव्यवहारस्यौपचारिकत्वेन च सह विरोधाच्च। नचायं भ्रमः सोपाधिकः येनाधिष्ठानतत्वसाक्षात्कारेऽपि स्यात्। या तु श्रुतिरुक्ता। तत्र किं लक्षणया देहविशेषैक्याध्यासवान् ब्राह्मणशब्दार्थ इति भावः। किं वा देहविशेषसंबद्ध एव तदर्थः, संबंधस्त्वन्यस्यासंभवादैक्याध्यासरूप इति। यद्वा देहविशेष एव तदर्थः आत्मा

---

नन्वेतावता मास्तु प्राचीनशरीराभेदाध्यासः। वर्तमानशरीरैक्याध्यासः किमिति न स्यात् तत्रैवव्याप्त्यभावादित्याशङ्क्याह ॥ नचेति ॥ तथाच व्यवहितप्राग्भवीयदेहन्यायेन ततोऽपि प्राग्भवीयानंतदेहानुस्यूतत्वेनानादित्वेन च स्वात्मानमनुसंधत्ते । व्यावृत्तस्य (व्यावृत्तस्येति पाठः) मम्वे नदैक्याध्यासो न संभवति, प्रत्युत सामग्रीसत्त्वात् ततो भेदधीरेव भवतीति भावः । पूर्वं देहात्मनोः भेदधीः प्राग्भवीयदेहान्तरस्मरणप्रयुक्तेत्युक्तम्। संप्रति तयोर्भेदधीः प्राग्भवीयदेहस्मरणाभावेऽपि प्रत्यभिज्ञाबलादेव संभवतीत्याह ॥ किंचेति ॥ कथमिति ॥ व्यावृत्तानुवृत्तत्वरूपभेदकधर्मदर्शनरूपसामग्रीसत्त्वात् देहात्मनोर्भेदधीः ध्रुवेति भावः । भाक्तभेदकधर्मस्य शब्दस्य साक्षात्कृतत्वेऽपि नचेतरव्यावृत्तेरप्रत्यक्षतया व्यभिचारवारणायोक्तं प्रत्यक्षे धर्मिणीति । शुक्तित्वादिस्मृतिमतोऽपि प्रत्यक्षशुक्तिसाक्षात्कारे रजतभेदाप्रतीतेः तत्रैव व्यभिचारवारणाय व्यावर्तक(धर्म)साक्षात्कारेत्युक्तम् ॥ देहादिभेदकस्येति ॥ अनुवृत्तत्वस्येति शेषः॥ विरोधाच्चेति ॥ यज्ज्ञानं यत्र प्रतिबंधकं तत्सामग्र्यपि तत्प्रतिबंधिकेति न्यायादिति भावः ।

ननु प्रत्यक्षे धर्मिणि भेदसाक्षात्कारो नाभेदभ्रमविरोधी, शङ्खस्य साक्षात्कारेऽपि पीताभेद-भ्रमस्यैव जनित्वादित्याशङ्क्याह ॥ नचेति ॥ व्यतिरेकः । शङ्खे पीताभेदभ्रमस्य सोपाधिक इति भावः। श्रुतिरिति ॥ ब्राह्मणो यजेतेत्यादिश्रुतिरित्यर्थः ॥ अन्यस्यासंभवादिति ॥ संयोगस्यात्मविभुत्वपक्षे

तु देहैक्याध्यासात्प्रवर्तेत इति। नाद्यः। विधौ लक्षणायोगात्, त्वया पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेत्यध्यस्यतीति भाषितत्वेन न्यायसाम्येन भृत्यमित्रादावपि तस्य सत्त्वेन शूद्रस्वामिनो ब्राह्मणादेर्यागाद्यनधिकारापाताच्च । ब्राह्मणादिकमित्रस्य शूद्रस्याप्यधिकारापत्तेश्च। नच स्वकर्मार्जितेन देहविशेषेणैक्याध्यासवांस्तदर्थः, आवश्यकत्वेन स्वकर्मणा देहविशेषार्जनस्यैव तदर्थत्वोपपत्तेश्च। सुप्तस्य जीवन्मुक्तस्य च देहैक्याध्यासाभावेन "ब्राह्मणो न हंतव्य" इत्यादेस्तदविषयकत्वापाताच्च। नापि कदाचिदध्यासवांस्तदर्थः, महापातकेन नष्टब्राह्मण्यस्याप्यधिकारापाताच्च । जन्मारभ्य जीवन्मुक्तस्योक्तनिषेधाविषयत्वापाताच्च। अत एव न द्वितीयः । संयोगस्यात्मविभुत्वपक्षे सर्वदेहेषु स्वस्वामिभावस्य च भृत्यदेहे सत्त्वेऽपि इच्छानुविधायित्वस्य चात्यातुरादिदेहेष्वसत्त्वेऽपि साक्षात्स्वस्वामिभावस्य वा तदिंद्रियाश्रयत्वस्य वा साक्षात्तत्प्रयत्नजन्यक्रियाश्रयत्वस्य वा तद्भोगायतनत्वस्य वा तत्कर्मार्जितत्वस्य वा संबंधांतरस्य संभवात्। नच प्रयत्नादावप्यात्मैक्यभ्रम एव संबंधः, अहं

---

सर्वदेहसाधारण्यात् स्वस्वामिभावस्य च भृत्यादिसाधारणत्वादिति भावः ॥ विधाविति ॥ विध्युद्देशे बाधकं विना लक्षणायोगादित्यर्थः ॥ ब्राह्मणादिमित्रकस्येति ॥ ब्राह्मणादिमित्रकस्य अभ्यस्तब्राह्मण्यस्य तथापि संभवादिति भावः ॥ तदर्थ इति ॥ ब्राह्मणशब्दार्थ इत्यर्थः ॥ तदर्थत्वोपपत्ते(श्चेति पाठः)रिति ॥ ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वोपपत्तेरित्यर्थः ॥ सुप्तस्येति ॥ तथाच तद्वधे प्रत्यवायो न स्यादिति भावः ॥ कदाचिदिति ॥ तथाच सुषुप्त्यादावपि ब्राह्मणो न हंतव्य इत्यादिनिषेधविषयत्वमविकलमिति भावः ॥ जीवन्मुक्तस्येति ॥ वामदेवादेरिति शेषः ॥ साक्षात् स्वस्वामिभावस्येति ॥ अत्र (तत्र) स्वस्वामिभावस्य साक्षात्त्वं वेतनदानाद्यधीनत्वं विवक्षितम् । तेन भृत्यदारादिदेहव्यावृत्तिरिति ध्येयम् ॥ साक्षादिति ॥ एतच्च घटादेरनुकूलक्रियाश्रये घटादावतिप्रसंगवारणाय ॥ तद्भोगायतनत्वस्य वेति ॥ तद्भोगाश्रयतावच्छेदकत्वस्य वेत्यर्थः । नचेंद्रियादिषु तत्कर्मार्जितत्वातिरिक्तमदीयत्वस्याभावेनावश्यकत्वाल्लाघवान्नातिप्रसक्तत्वाच्च तदेव संबंधः स्यादिति वाच्यम् । यथोक्तविशेष्यविशेषणभावे वैयर्थ्यानवकाशात् । यथा प्रतनस्वरसापेक्षत्वात् ॥ तत्कर्मार्जितत्वस्य वेति ॥ प्रयत्नादावपीति ॥ तथाचावश्यकत्वात् देहस्यापि स एव संबंधः स्यादिति भावः ॥

नन्वहं कृतिरित्यप्रतीतावपि संबंधांतरस्यासंभवादाध्यासिकसंबंधकल्पनमित्याशंक्याह ॥

कृतिरित्यप्रतीतेः । आत्मसमवायस्यात्मायुतसिद्धेर्वा संबंधांतरस्य सत्त्वाच । नचानतिप्रसंगाय स्वस्वामिभावादिरैक्याध्यासरूपमूलसंबंधाधीनः, वैपरीत्यस्यापि सुवचत्वात्, तत्कर्मार्जितत्वस्यैव मूलसंबंधत्वाच । कर्मणां तदीयत्वं चानादिपूर्वपूर्वतदीयकर्माधीनं वा तदाश्रितप्रयत्नजन्यत्वाधीनं वा, न तु तदीयशरीरजन्यत्वाधीनमिति नान्योन्याश्रयः । पुत्रकामेष्टिकर्मापि न पुत्रशरीरार्जकम्, किंतु ग्रामकामेष्टिवत्पुत्रकर्मार्जितस्य तस्य स्वसंबंधमात्रार्जकम् । न तृतीयः । तस्य जडत्वादिना अनियोज्यत्वात् । देहविशेषयुक्त एव ब्राह्मणशब्दप्रयोगेण देहस्यानदर्थत्वाच । अनेन "सर्वाण्यपि विधिनिषेधशास्त्राण्यध्यासमूलानि" इति परभाष्यं निरस्तम् । नापि प्रमातृत्वाद्यन्यथानुपपत्त्याध्याससिद्धिः, तदभावेऽपि सुषुप्तावज्ञानादिज्ञातृत्वस्य दर्शनात्, जागरणादावपि घटादिप्रमातृत्वदशायां तत्कर्मार्जितत्ववत् तदैक्याध्यासस्य सदाऽभावाच ।

---

आत्मसमवायस्येति ।। समवायानभ्युपगन्तृमतेनाह ॥ आत्मायुतसिद्धेर्वेति ।।

ननु साक्षात् स्वस्वामिभावादिरपि देहविशेष एव, न तु देहांतर इत्येतन्नियामकतया ऐक्याध्यासरूप एव संबन्धो वाच्य इत्यावश्यकत्वात् स एव संबन्धोऽस्त्वित्याशङ्क्य निराकरोति ॥ नचेति ।। वैपरीत्यस्यापीति ।। आध्यासिकसंबंधोऽपि देहविशेष एवेत्येतन्नियामकतया साक्षात्स्वस्वामिभावादिरेवांगीकार्य इति वैपरीत्यस्यापीत्यर्थः । ननु कर्मणां मदीयत्वं मदीयशरीरजन्यत्वम्, शरीरस्य मदीयत्वं च तत्कर्मार्जितत्व(श्रित)मित्यन्योन्याश्रय इत्याशङ्क्याह ॥ कर्मणामिति ।। अनादीति ।। तथाचानवस्था न दूषणमिति भावः ॥ तदाश्रितेति ।। तत्तदात्माश्रितेत्यर्थः ।

ननु तत्कर्मार्जितत्वं न मूलसंबन्धः । तस्य पुत्रकामेष्टिकर्मार्जितशरीरविशेषेऽपि सत्त्वादित्याशङ्क्याह ॥ पुत्रकामेति ।। तस्येति ।। देहविशेषस्येत्यर्थः । जडत्वादिनेत्यादिपदेनानित्यत्वादिपरिग्रहः ॥ अनियोज्यत्वादिति ।। स्वर्गादिफलमस्य ममेदं कार्यमिति बोद्धृत्वासंभवादित्यर्थः ॥ देहविशेषयुक्त एवेति ।। ब्राह्मणोऽस्मीति शेषः ॥ एतेनेति ।। ब्राह्मणो यजेतेत्यादिशास्त्रस्याध्यासमूलकत्वदूषणप्रकारेणेत्यर्थः । यदुक्तं प्रमातृत्वान्यथानुपपत्तिरपि देहात्मैक्याध्यासे मानम् । सुषुप्तौ तद्व्यतिरेकेण तद्व्यतिरेकदर्शनादिति, तदपि नेत्याह ॥ नापीति ।।(तदं इति पा.) ऐक्याध्यासस्येति ।। घटादिप्रतीतिकाले (स्थले)ऽहं ब्राह्मण इत्यादिप्रतीतिविषयत्वाभावेन (नित्य-

एतेन प्रमातृत्वादिकमध्यासमूलमिति परभाष्यं निरस्तम् । चार्वाकादेस्त्वनुमानाभासादिजन्येऽपि देहात्मभ्रमे धर्माद्यभावभ्रम इव प्रत्यक्षत्वाभिमानः संसारहेतुः । देहानुकूलादौ रागादिरपि पुत्रानुकूलादाविव देहस्य प्रेमास्पदत्वात् । अंगुल्या देहं प्रदर्श्यायमहमित्युक्तिरपि अंगारं प्रदर्श्यायं वह्निरितिवत् पृथग्दर्शयितुमशक्यत्वात्, श्रुतिषु देहात्मैक्यनिषेधोऽप्यसत्कारणत्वनिषेधवत् कुवादिप्राप्तत्वात्, व्यवहारपर्यंतं स्फुटतरभेदज्ञानाभावाच्च । दृश्यंते हि यमलयोर्व्यावर्तकं पश्यंतोऽपि व्यवहर्तुमशक्ताः । उक्तं च

"व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत् ॥ १ ॥
भवंति व्यवहाराश्च नहि प्रत्यक्षगानपि ।
अर्थान्यथानुभवतः प्रतिपादयितुं क्षमाः ॥" इति ॥

तस्माद्देहादेरात्मैक्येन स्वरूपेण चानध्यस्तत्वाज्जगत्सत्यमेव न त्वनिर्वाच्यमिति ।

॥ इति देहात्मैक्याध्यासभङ्गः ॥ ५८ ॥

---

माभावेन, नियामकाभावेन इति पा.) देहस्यैक्याध्यासस्त्वे प्रमाणाभावादिति भावः ।

नन्वेवं चार्वाकादीनां देहात्मैक्यगोचरप्रत्यक्षभ्रमाभावेन संसार आकस्मिकः स्यादित्याशङ्क्याह ॥ चार्वाकादेस्त्विति ॥ यद्यप्यनुमानाभासादिनापि चार्वाकादेरपि न देहात्मैक्यभ्रमः संभवति । उक्तरीत्या साक्षिप्रत्यक्षेण तद्भेदनिश्चयसत्त्वात् । तथापीश्वरधर्माद्यभावज्ञानमेव तस्य संसारहेतुरित्यत्र तात्पर्यम् ।

ननु देहे आत्मत्वबुद्ध्यभावे देहानुकूलघृतपानादाविच्छापि न स्यात्, आत्मार्थत्वेनैव सर्वस्यापीच्छाविषयत्वादित्यत आह ॥ देहानुकूलादाविति ॥ ननु यदि देहात्मैक्यभ्रमो न स्यात् तर्हि न जायते म्रियते इत्यादौ देहात्मैक्यनिषेधो न स्यात् । अप्रसक्तत्वादित्यत आह ॥ श्रुतिष्विति ॥ किंच व्यवहारपर्यंतं स्फुटतरभेदज्ञानाभावादपि श्रुतिषु देहात्मनोर्भेदोपदेश आवश्यक इत्याशयवानाह ॥ व्यवहारपर्यंतेति ॥ ननु प्रत्यक्षतो भेदज्ञानसत्त्वे तत एव व्यवहारोऽपि किं न स्यादित्यत आह ॥ दृश्यन्ते हीति ॥ व्याप्तत्वादिति ॥ देहे आत्मनो व्याप्तत्वात् प्रत्यक्षभेदज्ञानस्य स्फुटतरभेदव्यवहारेष्वसमर्थत्वात् । तादृशभेदज्ञाने सत्यपि च अंगारे वह्निव्यवहारवत् देहे आत्माविविक्तत्वेन लोकानां व्यवहाराश्च भवन्तीत्यर्थः । स्फुटतरव्यवहारासमर्थं प्रत्यक्षमप्यस्तीत्येतदुपपादयति ॥ नहीति ॥ एतच्च क्षमा इत्यनेन संबध्यते । प्रकृतमुपसंहरति ॥ तस्मादिति ॥

॥ इति देहात्मैक्याध्यासभङ्गः ॥ ५८ ॥

## ॥ अथ अनिर्वाच्यत्वलक्षणभङ्गः ॥ ५९ ॥

यथोक्तं यद्यप्यनिर्वाच्यत्वं न निरुक्तिविरहः, इदं रूप्यमिति निरुक्तेः । अत एव न निरुक्तिनिमित्तस्य ज्ञानस्यार्थस्य वा विरहः, निमित्तं विना कार्यायोगात् । नापि तयोः सदसद्रूपविशिष्टविलक्षणत्वम्, सदेकरूपत्वेऽपि तदुपपत्तेः । नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वम्, सदसद्रूपत्वेऽप्युपपत्तेः । नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वम्, मतोऽपि सदंतरविलक्षणत्वात् । नापि सत्त्वे सत्यसत्त्वरूपविशिष्टस्य विरहः, केवलसत्त्वेऽप्युपपत्तेः । नापि सत्त्वराहित्ये सत्यसत्त्वविरहः, सदसत्त्वेऽप्युपपत्तेः ।

तथापि सत्त्वेनासत्त्वेन सदसत्त्वेन च विचारासहत्वं वा बाध्यत्वं वाऽनिर्वाच्यत्वम् । प्रमाणं तत्र । विमतं सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे सति सदसत्त्वरहितं बाध्यत्वात् दोषप्रयुक्तभानत्वाद्वेत्यादि व्यतिरेकि । नचाप्रसिद्धविशेषणत्वम्, सत्त्वासत्त्वे समानाधिकरणात्यंताभावप्रतियोगिनी धर्मत्वाद्रूपरसवत् । सत्त्वमसत्त्वानधिकरणानिष्ठम्, असत्त्वं वा

---

॥ अथ अनिर्वाच्यत्वलक्षणभङ्गः ॥ ५९ ॥

सत्यप्रमाणाभावादनिर्वाच्यं जगदिति व्यवस्थापनाय परोक्तलक्षणमत्र दूषयितुमनुवदति ॥ यथोक्तमिति ॥ अत एवेति ॥ सत्यमात्ररूप्यत्वादेवेत्यर्थः ॥ निमित्तस्येति ॥ प्रयोजकस्येत्यर्थः ॥ कार्यायोगादिति ॥ प्रयोज्यायोगादित्यर्थः ॥ तयोरिति ॥ निरुक्तिनिमित्तज्ञानार्थयोरित्यर्थः ॥ सदसद्रूपेति ॥ सदसती रूपे सत्त्वासत्त्वे ताभ्यां विशिष्टं यत्तद्विलक्षणत्वमित्यर्थः । नचैवं प्रतियोग्यप्रसिद्धिः । प्रतियोगिप्रमापेक्षया लाघवेन प्रतियोगिज्ञानमात्रस्यैवाभावज्ञानहेतुत्वात् । तस्य च शब्दाभासादिनापि संभवादिति ॥ तदुपपत्तेरिति ॥ विशिष्ट(वि)लक्षणत्वस्य विशेषणविशेष्यान्यतरविरहेणाप्युपपत्तेरिति भावः । सत्त्वं न प्रतियोगितावच्छेदकमित्यभिप्रेत्य दूषयति ॥ मतोऽपीति ॥ तस्य प्रतियोगितावच्छेदकत्वे तु विधर्मके व्याप्त्यतिव्याप्तिरिति भावः ॥ सत्त्वे सतीति ॥ सत्त्वासत्त्वानधिकरणत्वस्वरूपं यद्विशिष्टं तस्येत्यर्थः ॥ सत्त्वरहितत्वे सतीति ॥ सत्त्वेनासत्त्वेन सदसत्त्वेन च सत्त्वस्यैकत्रासंभवात्प्रतीत्याद्यर्थं क्रमेण विशेषणानि । बाध्यत्वादित्ययं च हेतुः प्रपञ्चसत्याभिप्रायेणेति बोध्यम् ॥ अप्रसिद्धविशेषणत्वमिति ॥ सत्त्वाभावसमानाधिकरणासत्त्वाभावाप्रसिद्ध्या अप्रसिद्धसाध्यकत्वमित्यर्थः ॥ असत्त्वानधिकरणानिष्ठमिति ॥

सत्त्वानधिकरणानिष्ठं धर्मत्वाद्रूपवदिति वा सामान्यतस्तत्सिद्धेः । किंच सत्त्वेन बाध्येतासत्त्वेन प्रतीयेतेति ख्यातिबाधान्यथानुपपत्तिः प्रवृत्तिबाधान्यथानुपपत्तिश्चात्र मानमिति ।

अत्र ब्रूमः । अत्र सत्त्वासत्त्वे सत्ताजातितदभावौ वा अर्थक्रियाहेतुत्वाहेतुत्वे वा अबाध्यत्वबाध्यत्वे वा प्रामाणिकत्वाप्रामाणिकत्वे वा अशून्यत्वशून्यत्वे वा असत्त्वशून्यत्वे वा अबाध्यत्वशून्यत्वे वा प्रामाणिकत्वशून्यत्वे वा परेणाङ्गीकृते सत्त्वासत्त्वे वा । नाद्य-द्वितीयौ, शुद्धात्मनि सद्वैलक्षण्यस्य प्रपंचे तदभावस्य चापातात् । न तृतीयः । त्वन्मते तुच्छस्याप्यबाध्यत्वेन तत्र सद्वैलक्षण्यस्यानिर्वाच्यस्य च बाध्यत्वेन तत्रासद्वैलक्षण्यस्य चायोगात् । अत एव न चतुर्थः । अनिर्वाच्यस्याप्रामाणिकत्वेन तत्रासद्वैलक्षण्यायोगात् । नच पंचमः । अनिर्वाच्यस्याशून्यत्वेन तत्र सद्वैलक्षण्यायोगात् । न षष्ठः । ममापि प्रपंचे तस्येष्टत्वात् । न सप्तमः । तयोरविरोधेन सत्त्वासत्त्वरूपत्वायोगात्, अबाध्यत्वाभावस्यैव लक्षणत्वोपपत्त्या व्यर्थविशेष्यत्वाच्च । किंचात्र शून्यं किं विवक्षितं निरुपाख्यं वा निस्स्वरूपं वा । नाद्यः । असत्ख्यातिवादेऽपि रूप्यादौ तद्वैलक्षण्यस्येष्टत्वात् । न द्वितीयः । मिथ्यात्व-भङ्गोक्तरीत्या त्वन्मतेऽपि रूप्यादेः स्वरूपेण त्रैकालिकनिषेधेन निस्स्वरूपत्वात् । अत एव

---

असत्त्वानधिकरणयत्किंचिद्व्यक्तिनिष्ठमित्यर्थः ॥ सामान्यतस्तत्सिद्धेरिति ॥ यद्यपि साध्यतावच्छेदकप्रकारकसाध्यसिद्धिरेवमपि न संपादिता । संपादिता तु नानुमानांगम् । तथाप्युक्तानुमानप्रवृत्त्यनंतरं मानसी साध्यप्रसिद्धिस्त(थापि)त्रापि संभवतीति भावः ॥ अत्रेति ॥ अनिर्वाच्यलक्षण इत्यर्थः ॥ शुद्धात्मनीति ॥ सत्ताजातेरर्थक्रियाकारित्वस्य च शुद्धात्मव्यतिरिक्तवस्तुवृत्तित्वादिति भावः ॥ अबाध्यत्वेनेति ॥ उपाधौ प्रतिपन्नस्यैव बाधनियमात् असतश्चोपाधौ प्रतिपत्त्यभावादिति भावः ॥ तस्येति ॥ सदसच्छून्याभ्यां विलक्षणत्वस्येत्यर्थः ॥ तयोरिति ॥ त्वन्मते अबाध्यत्वशून्यत्वयोः तुच्छवृत्तित्वेन विरोधाभावेनेत्यर्थः ॥ लक्षणत्वोपपत्त्येति ॥ अनिर्वाच्यलक्षणत्वोपपत्त्येत्यर्थः ॥ व्यर्थविशेष्यत्वाच्चेति ॥ असद्विलक्षणत्वे सति सदसद्विलक्षणत्वरूपविशेष्यस्य व्यर्थत्वाच्चेत्यर्थः । तत्रासत्यतिव्याप्तिः । त्वया तस्याप्यबाध्यत्वोपगमेन सद्वैलक्षण्यस्य तत्र भावादिति ॥ असत्ख्यातिवादेऽपीति ॥ असतोऽप्यसत्त्वादिना(वा)ख्यायमानत्वे(न)निरुपाख्यवैलक्षण्यस्य तत्र सत्त्वात्, असत्ख्यातिरूप्यादावतिव्याप्तिरित्यर्थः ॥ निःस्वरूपत्वादिति ॥ तथाच प्रपंचे निःस्वरूपत्वरूपासद्वैलक्षण्याभावेनानिर्वाच्यलक्षणमसंभवत्येव स्यादिति भावः । अत

एतेनानिर्वाच्यवादे विरोधोऽसिद्ध इति निरस्तम्, अन्योन्याश्रयात् । अन्यथा माता वंध्येतिवादे विरोधोऽसिद्ध इति स्यात् ।

ननु निषेधसमुच्चयस्यातात्त्विकत्वान्न विरोधः । सदादिवैलक्षण्योक्तिस्तु तत्तत्प्रतियोगिदुर्निरूपत्वमात्रप्रकटनाय । नहि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवमस्तीति चेन्न । सत्त्वादिराहित्यस्यातात्त्विकत्वेऽपि सत्त्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वे पंचमप्रकाराविद्यानिवृत्तौ "नानिर्वाच्यश्च तत्क्षय" इत्यनिर्वाच्यत्वनिषेधायोगात् । सत्त्वादिवत्तद्राहित्यस्याप्यतात्त्विकत्वे सत्त्वादौ प्रमाणनिरासेन तद्राहित्ये तदुक्तेरयोगाच्च । विधिसमुच्चयस्यैवातात्त्विकत्वान्न विरोध इति सुवचत्वाच्च । किंच निषेधसमुच्चयस्यातात्त्विकत्वं किमुभयातात्त्विकत्वेन एकैकातात्त्विकत्वेन वा । नाद्यः । उभयतात्त्विकत्ववदुभयातात्त्विकत्वस्यापि विरुद्धत्वाद्विधिसमुच्चयस्य तात्त्विकत्वापातेन प्रतियोगिदुर्निरूपत्वस्यायोगाच्च । अत एव न द्वितीयः । तत्प्रतियोगिन एकस्य विधेस्तात्त्विकत्वापातात् । अतात्त्विकं हि तात्त्विकात्यंताभावप्रतियोगीत्युक्तम् ।

किंच हेतूकृतस्य स्वरूपतो दुर्निरूपत्वस्य साध्यस्य वास्तवरूपाभावस्य चातात्त्विकत्वेऽनैकांत्यस्य सिद्धसाधनस्य चापत्त्या तयोस्तात्त्विकत्वावश्यंभावाद्विरोधः । अपिच स्वरू-

---

नात्मत्वमुपाधिः । तस्योक्तसाध्यं प्रति अप्रयोजकत्वादित्याह ॥ मात्र इति ॥ अन्योन्याश्रयादिति ॥ जगदनिर्वाच्यत्वासिद्धौ विरोधासिद्धिः, अविरोधसिद्धौ च व्याहत्यभावेन जगदनिर्वाच्यत्वसिद्धिरिति अन्योन्याश्रयादित्यर्थः ।

नन्वेवं प्रपञ्चे सदसद्वैलक्षण्यसाधनं किमर्थमित्यत आह ॥ सदादीति ॥ निषेधसमुच्चयस्य तात्त्विकत्वमुपपादयति ॥ नहीति ॥ अनिर्वाच्यत्वनिषेधायोगादिति ॥ तथाच दुर्निरूपत्वं अनिर्वाच्य(त्व)मिति न त्वयाप्यङ्गीकर्तुं युक्तम् । स्वस्मिन्नतात्त्विकत्व[illegible]विरोधादिति भावः ॥ तदुक्तेरिति ॥ अनुमानादिप्रमाणोक्तेरित्यर्थः ॥ विधिसमुच्चयस्येति ॥ तथाच जगत् सदसदात्मकमेव स्यादिति भावः ॥ तात्त्विकत्वापातेनेति ॥ निषेधस्यातात्त्विकत्वे प्रतियोगितात्त्विकत्वनियमादिति भावः ॥ अत एवेति ॥ निषेधाऽतात्त्विकत्वस्य प्रतियोगितात्त्विकत्वनियतत्वादेवेत्यर्थः ॥ अनैकान्त्यस्येति ॥ अतात्त्विकत्वस्य स्वरूपतो दुर्निरूपत्वस्य वास्तवत्वरूपं ब्रह्मणि सत्त्वादिति भावः ॥ सिद्धसाधनस्येति ॥ कल्पितस्य वास्तवरूपाभावस्य सत्त्वाविरोधित्वादिति

॥

पतो दुर्निरूपस्येत्यत्र किमिदं दुर्निरूपत्वम्। केनापि प्रकारेण वा केनापि प्रकारेण दुर्निरूपत्वमित्येतन्प्रकारान्यप्रकारेण वा सत्त्वासत्त्वाभ्यां वा। नाद्यः। केनापि प्रकारेण दुर्निरूपत्वमित्यनेन प्रकारेण दुर्निरूपत्वादुर्निरूपत्वाभ्यां व्याघातात्। अत एव न द्वितीयः। केनापि प्रकारेण दुर्निरूपत्वमित्येतदन्यप्रकारेण दुर्निरूपत्वस्य केनापि प्रकारेण दुर्निरूपत्वमित्यस्मादन्यत्वादसतोऽसत्त्वेनेव कल्पितस्यापि बाधवेद्येन मिथ्यात्वादिना सुनिरूपत्वाच्च। न तृतीयः। तस्य सदसद्वैलक्षण्यावास्तवत्वाहेतुत्वात्। न च ध्वंसानुपलक्षितोपलक्षितसत्तायोगित्वरूपयोर्नित्यत्वानित्यत्वयोः सत्ताहीने सामान्यादावभाववदुत्तरावधिराहित्यभावान्यनिवृत्तिमत्त्वरूपयोर्नित्यत्वानित्यत्वयोः प्रागभावे अभाववद्वा क्वचित् सत्त्वासत्त्वयोरभावः स्यादिति केनचिदुक्तं युक्तम् उक्तयोर्नित्यत्वानित्यत्वयोर्भावाभावानात्मकत्वात् सत्त्वासत्त्वयोस्तु तदात्मकत्वात् प्रागभावसामान्याद्यनुगतयोर्ध्वंसाप्रतियोगित्वप्रतियोगित्वयोरेव नित्यत्वानित्यत्वरूपत्वाच्च। प्रागभावस्यापि प्रतियोग्येव ध्वंसः, भावस्याभावो निवृत्तिरभावस्य तु भाव एवेति स्वीकारात्। अन्यथा ध्वंसोपलक्षितानुपलक्षितसत्ताराहित्यरूपयोर्नित्यत्वानित्यत्वयोः सामान्यादौ भाववदेकत्र सत्त्वासत्त्वे स्यातामिति स्यात्। न चाप्यस्ते नित्यत्वानित्यत्वयोरिव सत्त्वासत्त्वयो-

---

भावः ॥ विरोध इति ॥ स्वरूपतो दुर्निरूपत्वस्यैव वास्तवरूपस्य सत्त्वेन तेन वास्तवरूपाभावसाधने विरोध इत्यर्थः ॥ व्याघातादिति ॥ केनापि प्रकारेण दुर्निरूपमित्यनेनापि प्रकारेण दुर्निरूपत्वे स्वाभिमतं दुर्निरूपत्वमेव न सिध्येत्। तेनैव प्रकारेण सुनिरूपत्वे तु केनापि रूपेण दुर्निरूपत्वासिद्धिरित्युभयथापि व्याघातादित्यर्थः ॥ अत एवेति ॥ व्याघातादेवेत्यर्थः। व्याघातमेवोपपादयति ॥ केनापीति ॥ परस्परविरुद्धयोरेकत्राभावो न विरुद्ध इत्येतत् सदृष्टान्तमाशङ्क्य निराकरोति ॥ न चेति ॥ सत्तायोगित्वेति ॥ सत्ताजातियोगित्वेत्यर्थः ॥ प्रागभावे अभाववद्वेति ॥ प्रागभावनिवृत्तेः भावत्वेन तत्र ध्वंसनिवृत्तेस्तत्राभाववदिति भावः। परस्परविरहानात्मकयोरेकत्राभावसंभवेऽपि परस्परविरहात्मकयोरेकत्राभावोऽसंभव एवेत्याह ॥ उक्तयोरिति ॥ ध्वंसाप्रतियोगित्वेति ॥ ध्वंसप्रतियोगित्वस्वरूपेत्यर्थः।

ननु सत्ताश्रयत्वार्थं ध्वंसप्रतियोगित्वस्य प्रागभावे अभावात् कथमस्य प्रागभावस्यानित्यत्वमित्यत आह ॥ प्रागभावस्यापीति ॥ अन्यथेति ॥ परस्परविरहानात्मकयोः प्रातिभासिकविरुद्धत्वानित्यत्वयोरेकत्राभाववदभिमतयोरेव तदात्मकयोरे(स्त्वे)कत्राभावाभ्युपगम इत्यर्थः॥ नित्यत्वानित्यत्वयोरिवेति ॥

रप्यभावौ न विरुद्धौ धर्मिण एव कल्पितत्वेन विरुद्धयोरपि धर्मयोरभावादिति वाच्यम् । त्वन्मते कल्पितस्यानित्यत्वात्कल्पितत्वरूपहेतोर्विरुद्धधर्माभावरूपसाध्यस्य च भावाभावाभ्यां व्याघाताच्च । अथ कल्पितत्वादिकं नित्यत्वादिवच्च धर्मिसत्त्वापेक्षं तद्वत्सत्त्वमपि तथा । अन्यथा तुच्छस्याप्यसद्बहिर्भावः कल्पितस्यापि दृश्यादृश्यवाच्यावाच्यदुर्निरूपसुनिरूपबहिर्भावोऽपि स्यात् । नच तार्किकमते संयोगतदत्यंताभावयोरिव भट्टमते भेदाभेदयोरिव च सत्त्वासत्त्वाभावयोरप्यविरोधोऽस्त्विति वाच्यम् । तद्वदेव सत्त्वासत्त्वयोरेवाविरोधापातात् । अथ संयोगतदत्यंताभावादावच्छेदकभेदेनाविरोधः सत्त्वासत्त्वयोरपि तथात्वे इष्टापत्तिः । स्वकालाद्यवच्छेदेन सत्त्वस्यान्यकालाद्यवच्छेदेनासत्त्वस्य चेष्टत्वादिति चेत् समः समाधिः । स्वकालाद्यवच्छेदेनासद्वैलक्षण्यस्य कालांतराद्यवच्छेदेन सद्वैलक्षण्यस्य चेष्टत्वात् । तस्मात्सत्त्वासत्त्वात्यंताभावावेकत्र विरुद्धौ । अपि च सत्त्वादिना विचारासहत्वं किं सत्त्वाद्यनधिकरणत्वं सत्त्वात्यंताभावाधिकरणत्वं वा सद्रूपत्वाद्यभावो वा सत्त्वादेरित्थमिति निर्वक्तुमशक्यत्वं वा सत्त्वादिना प्रमाणागोचरत्वं वा । नाद्यः । असतोऽप्यसत्स्वरूपधर्मानधिकरणत्वात् सत्पदलक्ष्यस्य निर्धर्मकस्य ब्रह्मणोऽपि

---

ध्वंसानुपलक्षितोपलक्षितसत्त्वायोगित्वरूपनित्यत्वानित्यत्वयोरिवेत्यर्थः ॥ कल्पितत्वरूपहेतोरिति ॥ पक्षे हेतुसत्त्वस्य धर्मिसत्त्वं विनायोगेन हेतुस्वरूपमेव न सिध्येदिति न तेन साध्यसिद्धिः । हेतोरसत्त्वे च न तेन साध्यसिद्धिः । एवं साध्यस्यापि पक्षे सत्त्वे धर्मिणः सत्त्वावश्यंभावेन कल्पितत्वरूपहेतोरसिद्ध्या तेनैतत्साधनानुपपत्तिः । असत्त्वे चोक्तहेतुनापि नैतत्साधनं संभवतीति व्याघातादित्यर्थः ।

ननु हेतुसाध्ययोः पक्षे सत्त्वेऽपि न धर्मिणः सत्त्वापत्तिः । तयोर्धर्मिसत्त्वानिरपेक्षत्वादिति शङ्कते ॥ अथेति ॥ तद्वदित्यर्थः । कल्पितधर्मिसत्त्वसापेक्ष(सत्त्वा)स्वाभावेऽपि तन्निरपेक्षसत्त्वं तु स्यादिति सत्त्वासत्त्वयोरेकत्राभावौ न स्यातामिति भावः ॥ अन्यथेति[1] ॥ परस्परविरहात्मनोस्त्वेकत्राऽभावाङ्गीकार इत्यर्थः । इष्टापत्ति तटस्थः शङ्कते ॥ अथेति[2] ॥ इष्टापत्तिमेवोपपादयति ॥ स्वकालेति ॥ साम्यमेवाह ॥ स्वकालाद्यवच्छेदेनेति ॥ सत्त्वादिनेत्यादिपदेनासत्त्वसत्त्वपरिग्रहः ॥ असतोऽपीति ॥ तथाच लक्षणस्यातिव्याप्तिरिति भावः ।

१-२ [illegible]

स्वरूपातिरिक्तं तात्त्विकं सत्त्वं प्रत्यनधिकरणत्वाच्च। अतात्त्विकं सत्त्वं प्रति त्वनिर्वाच्य-स्याप्यधिकरणत्वात्, धर्मिसमसत्त्वं प्रति च ब्रह्मणोऽप्यनधिकरणत्वात्, अनिर्वाच्यस्याप्यधि-करणत्वाच्च। न द्वितीयः। निर्धर्मके ब्रह्मणि सत्त्ववत्तदत्यन्ताभावोऽपि न, तुच्छेऽप्यसत्त्व-वत्तदत्यंताभावोऽपि नेति कथंचिदतिव्याप्तिनिरासेऽपि तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्त्वादे-रेवानिर्वाच्यलक्षणत्वापातात्, निर्विशेषत्वश्रुत्यापि व्याघातेन धर्ममात्रनिषेधायोगेन ब्रह्मणि सत्त्वराहित्ये तदत्यंताभावस्य दुर्वारत्वाच्च। न तृतीयः। सामान्यादेरप्यबाध्यत्ववत्त्वेनैवा-बाध्यात्मकसद्रूपतया ब्रह्मणः सत्त्वाभावे सद्रूपत्वायोगात्, ब्रह्मणः सद्रूपत्वे श्रौतसत्पदस्य लाक्षणिकत्वायोगाच्च। न चतुर्थः। त्वन्मते ब्रह्मण्यपि सत्त्वस्येत्थमिति दुर्वचत्वात्। न पंचमः। अखंडार्थनिष्ठवेदांतैकवेद्यस्य ब्रह्मणोऽपि सत्त्वप्रकारकप्रमाणागोचरत्वात्। अपिच

---

किंच सत्त्वानधिकरणत्वमित्यत्र सत्त्वं किं तात्त्विकं उतातात्त्विकं धर्मिसमसत्ताकं वा आद्य आह ॥ सत्पदलक्ष्यस्येति ॥ द्वितीय आह ॥ अतात्त्विकमिति ॥ तथाचासंभव एवेति भावः। तृतीयं निराह ॥ धर्मिसमसत्त्वं प्रति चेति ॥ धर्मवत्त्वादेरिति ॥ आदिपदात् पदार्थ-त्वादिपरिग्रहः। यद्यपि धर्मवत्त्वादिकमुक्तलक्षणे न प्रविष्टम्, तथापि तल्लक्षणापेक्षया अस्य लघुत्वादतिव्याप्त्यादिदोषाभावाच्चे(ति)दमेव लक्षणं स्वीकर्तुमुचितमिति भावः।

ननु धर्मवत्त्वादेरनतिप्रसक्तत्वेऽपि पराभिमतसत्त्वाधिकरणत्वाभावेतल्लक्षणं युक्तम्। तत्रैव विवक्षितत्वादित्यनुशयेनाह ॥ निर्विशेषत्वश्रुत्यापीति ॥ केवलो निर्गुणश्चेति(त्यादि)श्रुत्यापीत्यर्थः। तथाच तत्रातिव्याप्तिरिति भावः। सद्रूपत्वाभाव इति तृतीयः पक्षोऽपि न संभवति। सत्त्वा-नधिकरणस्य ब्रह्मणः सद्रूपत्वायोगेन तत्रैवातिव्याप्तेः। नच सामान्यादेः सत्ताजात्यनधिकरणत्वेऽपि सद्रूपत्ववत् ब्रह्मणोऽपि सद्रूपत्वं स्यादिति वाच्यम्। तस्याप्यबाध्यत्वरूपसत्त्ववत्त्वेनैव सद्रूपत्वा-दित्याह ॥ न तृतीय इति ॥ ब्रह्मण इति ॥ ब्रह्मणः सद्रूपत्वरूपसत्पदप्रवृत्तिनिमित्ताभावादिति भावः। दुर्वचत्वादिति ॥ तथाच तत्रैवातिव्याप्तिरिति भावः। पंचमपक्षेऽपि ब्रह्मण्येवातिव्याप्ति-रित्याह ॥ अखंडार्थेति ॥ एतच्च हेतुगर्भं विशेषणम्। सत्त्वप्रकारकप्रमाणागोचरत्वरूपहेत्व-सिद्धिवारणाय सत्त्वादिराहित्यमिति। अनिर्वचनीयलक्षणवादीरप्रविष्टसत्त्वादिराहित्यमित्यर्थः ॥ पारमार्थिकसत्त्वापातादिति ॥ प्रातिभासिकव्यावहारिकत्वाभावे पारमार्थिकत्वनियमादिति भावः। साम्यायोगादिति ॥ अन्यथा प्रातिभासिकत्वस्याप्युपपत्तिरिति भावः। सत्त्वादिराहित्यं

सत्त्वादिराहित्यं न तावत्प्रातिभासिकम्, रूप्यप्रपंचयोर्ब्रह्मवत्पारमार्थिकत्वापातात्। नापि धर्मिसमसत्ताकम्, बाधबोध्यस्य प्रातिसिद्धेन साम्यायोगात्। नापि व्यावहारिकम्। जगति व्यावहारिकत्वे रूप्ये प्रातिभासिकत्वापातेनोक्तदोषात्। रूप्ये व्यावहारिकत्वे च जगति पारमार्थिकत्वापातेनाद्वैतहानेः। अत एव सत्त्वादिराहित्यं न पारमार्थिकम्, नहि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवमस्तीति स्ववचनविरोधाच्च। किंच श्रुत्या युक्त्या च भेदं निराकुर्वता कथं सदसद्भिन्नत्वरूपं तद्यामं वाऽनिर्वाच्यत्वं समर्थ्यते। बाध्यत्वम-निर्वाच्यत्वमिति तु मिथ्यात्वभङ्ग एव निरस्तम्।

॥ इति अनिर्वाच्यत्वलक्षणभङ्गः ॥ ५९ ॥

---

व्यावहारिकमपि किं जगत्येव उत रूप्ये किंवोभयत्रेति विकल्प्याद्यं दूषयति ॥ जगतीति ॥ सत्त्वादिराहित्यस्येति शेषः ॥ प्रातिभासिकत्वापातेनेति ॥ प्रातिभासिकनिष्ठधर्मस्य व्यावहारिकनिष्ठधर्मापेक्षया न्यूनसत्ताकत्वादिति भावः ॥ उक्तदोषादिति ॥ रूप्यस्य ब्रह्मवत् पारमार्थिकसत्त्वापातरूपोक्तदोषादित्यर्थः । द्वितीयं निराचष्टे ॥ रूप्य इति ॥ अत्र जगतीत्यनुषज्यते । रूप्ये जगति च व्यावहारिकत्व इत्यर्थः । जगतीत्यस्यानन्तरं सत्ताया इति शेषः ॥ पारमार्थिकत्वापातेनेति ॥ प्रातिभासिकनिष्ठधर्मापेक्षया व्यावहारिकनिष्ठधर्मस्याधिकसत्ताकत्वनियमादिति भावः । अत एव न तृतीयोऽपि । उक्तनियमद्वयेनोभयसाधारणधर्मस्यासंभवात् । व्यावहारिकसत्ताके प्रपञ्चे व्यावहारिकतत्साहित्यस्य विरोधेनासम्भवाच्चेति भावः ॥ यद्वा सत्त्वादिराहित्यं व्यावहारिकमिति वदन् प्रष्टव्यः । तत्किं धर्मिणो व्यावहारिकत्वात् उत स्वत एवेति-विकल्प्याद्यं निराह ॥ जगतीति ॥ प्रातिभासिकत्वापातेनेति ॥ धर्मिणो रूप्यस्य प्रातिभासिकत्वाङ्गीकारेण तुल्यन्यायतया तन्निष्ठसत्त्वादिराहित्यस्य प्रातिभासिकत्वापातेनेत्यर्थः । द्वितीयं निराचष्टे ॥ रूप्य इति ॥ व्यावहारिकसत्त्वादिराहित्यवतः अप्रातिभासिकस्य पारमार्थिकत्वावश्यं-भावादिति भावः ॥ अत एवेति ॥ अद्वैतहानेरेवेत्यर्थः ॥ कथमिति ॥ व्याहतत्वादिति भावः ॥ तद्यामं वेति ॥ सत्त्वानधिकरणत्वादिरूपं वेत्यर्थः ॥ बाध्यत्वमिति ॥ प्रतिपन्नोपाधौ त्रैकालिक-निषेधप्रतियोगित्वरूपमित्यर्थः ॥ निरस्तमिति ॥ प्रतिपन्नोपाधिस्थनिषेधो न प्रातिभासिकः सिद्धसाधनात्, नापि व्यावहारिकः । अप्रातिभासिकस्य व्यावहारिकनिषेधप्रतियोगिनः पारमार्थिकत्व-नियमेन जगतः पारमार्थिकत्वापत्तेः । नापि पारमार्थिकः । अद्वैतहानेरित्यादिदूषणकलापेन निरस्तमित्यर्थः ।

॥ इति अनिर्वाच्यत्वलक्षणभङ्गः ॥ ५९ ॥

## ॥ अथानिर्वाच्यत्वसाधकानुमानभङ्गः ॥ ६० ॥

अनुमानं चायुक्तम्, मिथ्यात्वभंगे उक्तरीत्यांऽशे सिद्धसाधनाद्, अप्रसिद्धविशेषणत्वाच्च, उक्तरीत्या व्याघाताच्च, ब्रह्मवत्सत्त्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्त्याऽर्थांतरत्वाच्च, सत्त्वादिराहित्यस्य प्रातिभासिकत्वादिपक्षेषु दोषस्योक्तत्वाच्च, भेदनिरासानुपपत्तेरुक्तत्वाद् वक्ष्यमाणरीत्या भ्रांतिबाधयोरन्यथैवोपपत्त्या विमतं सदसदात्मकं बाध्यत्वाद्व्यतिरेकेणात्मवदित्याद्याभाससाम्याच्च, असदेव रजतं प्रत्यभादिति प्रत्यक्षबाधाच्च। नचैवं मिथ्यैव

---

॥ अथानिर्वाच्यत्वसाधकानुमानभङ्गः ॥ ६० ॥

लक्षणं दूषयित्वा विमतं सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे सति सदसत्त्वरहितं बाध्यं वा बाध्यत्वादोषप्रयुक्तभानत्वाद्वेत्याद्युक्तानुमानमपि दूषयति ॥ अनुमानं चेति ॥ अंश इति ॥ असत्त्वराहित्यांश इत्यर्थः। असत्त्वराहित्यस्य सिद्धावपि सत्त्वराहित्यविशिष्टस्य तस्यासिद्धेः नांशतः सिद्धसाधनमित्याशङ्कानिरासायोक्तं मिथ्यात्वभङ्गोक्तरीत्येति। न हि सिद्धमसिद्धेन सहोच्यमानमसिद्धं भवतीत्यर्थः। उद्देश्यप्रतीतेरसिद्धत्वाभावांशतः सिद्धसाधनमिति भावस्याभावादाह ॥ अप्रसिद्धेति ॥

यद्वा सत्त्वादिराहित्यानां विशेषणविशेष्यभावापन्नानामेव साध्यत्वम्, उत स्वतन्त्राणां (स्वतन्त्रं वा इति पाठान्तरम्) वा, नान्त्यः असत्त्वराहित्यांशे सिद्धसाधनात्। पक्षैकदेशे साध्यसिद्धाविव पक्षे साध्यैकदेशासिद्धावप्यंशतः सिद्धसाधनमित्यभिप्रेत्याह ॥ मिथ्यात्वभङ्ग इति ॥ ॥ न हि सिद्धमसिद्धेन सहोच्यमानमसिद्धं भवतीति ॥ मिथ्यात्वभङ्ग उक्तरीत्येत्यर्थः। पक्षैकस्य सिद्धावपि साध्यशरीरप्रविष्टानां सर्वेषामसिद्धत्वान्न सिद्धसाधनमिति शङ्कावारणाय। न प्रथम इत्याह ॥ अप्रसिद्धेति ॥ सत्त्वराहित्यविशिष्टासत्त्वराहित्यस्याप्रसिद्धत्वादिति भावः ॥ उक्तरीत्येति ॥ सत्त्वासत्त्वयोः परस्परविरह(रूपता)रूपकयोरेकत्राभावसाधने व्याघातादित्यर्थः। किञ्च सत्त्वादिराहित्यं किं प्रातिभासिकम् उत व्यावहारिकम् आहोस्वित्पारमार्थिकम्। नाद्यः प्रातिभासिकसत्त्वराहित्यस्य पारमार्थिकत्वाविवक्षितत्वात्सिद्धसाधनात्। अत एव न द्वितीयः। स्वप्ने जगत्सत्त्वस्यापि व्यावहारिकत्वेन तत्र व्यावहारिकसत्त्वाभावसाधने बाधात्। न तृतीयः अद्वैतहानिरित्याह ॥ सत्त्वादिराहित्यस्येति ॥ भेदनिरासेति ॥ तथा च व्याघात इति भावः।

ननु नाभाससाम्यम्। अनिर्वाच्यत्वसाधकानुमानस्य ख्यातिबाधान्यथानुपपत्तिलक्षणानुकूलतर्कसचिवत्वादित्याशङ्कापरिहारायोक्तम् ॥ वक्ष्यमाणरीत्येति ॥ उत्तरभङ्ग इति शेषः ॥ असदेव रजतमिति ॥ असदेव रजतं प्रत्यभादित्यनुभवसिद्धं यद्रजतमत्र नास्ति नासीन्न भविष्यतीति

रूप्यमभादितिप्रत्यक्षेणानिर्वाच्यत्वसिद्धिः, मिथ्याशब्दस्यासत्पर्यायत्वात्, विमतं असत् सत्त्वानधिकरणत्वात् नृशृंगववदितिसत्प्रतिपक्षत्वाच्च । नच सत्त्वाभावमात्रेणासदितिधीः । त्वत्पक्षे ज्ञानेऽपि सत्त्वाभावेनासदितिधीप्रसंगात्, असत्त्वाभावेन सदितिधीप्रसंगाच्च, नृशृंगाद्य-सत्त्वबुद्धितोऽस्या वैलक्षण्याननुभवाच्च । किंचोक्तेषु सत्त्वासत्त्वपक्षेष्वाद्यद्वितीययोः जगति सत्त्वराहित्यांशे रूप्यादावसत्त्वराहित्यांशे तृतीयचतुर्थयोरुभयत्रापि असत्त्वराहित्यांशे पंचमे उभयत्रापि सत्त्वराहित्यांशे सप्तमाष्टमनवमेष्वप्युक्तन्यायेनोभयत्राप्यसत्त्वराहित्यांशे बाधः । षष्ठे त्वबाध्यत्वरूपसत्त्वेनोपपत्याऽर्थांतरम्, सामान्यतोऽनिर्वाच्यसाधकानुमानेष्वप्युक्त-रीत्या व्याघातार्थांतरादिकम् ।

---

प्रत्यक्षं तेन बाधादित्यर्थः । यद्वा यथाश्रुतमेव साधु, अनुव्यवसायस्यापि रजते स्वातन्त्र्येणासत्त्व-वैशिष्ट्यावगाहितया बाधकत्वासंभवात् ॥ मिथ्याशब्दस्येति ॥ स्वरूपेण त्रैकालिकनिषेधप्रति-योगिन एव मिथ्याशब्दासच्छब्दयोः स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्यैव प्रवृत्तिनिमित्तत्वा-दिति भावः ॥ सत्त्वानधिकरणत्वादिति ॥ न च ब्रह्मणि व्यभिचारः । तस्याप्यसद्वैलक्षण्याय सत्त्वाधिकरणत्वा(स्या)वश्यंभावादिति ।

ननु असदेव रजतं प्रत्यभादिति प्रत्यक्षस्य सत्त्वाभावविषयत्वेनान्यथासिद्धेर्न तेन बाध इत्याशंक्य निराकरोति ॥ न चेति ॥ ज्ञानेऽपीति ॥ त्वन्मते रूप्यस्येव तज्ज्ञानस्याप्यव्यस्तत्वेन सत्त्वशून्यत्वादिति भावः ॥ असत्त्वाभावेनेति ॥ विशेषनियामकाभावेन रूप्येऽपि सदिति धीप्रसङ्गादिति भावः ॥ अस्या इति ॥ असदेव रजतं प्रत्यभादिति धिय इत्यर्थः । तथा च विषयभेदकल्पनस्याप्रामाणिकत्वादसत्त्वमेव तद्धीविषय इति भावः ॥ आद्यद्वितीययोरिति ॥ सत्ताजातितद्भावार्थक्रियाहेतुत्वाहेतुत्वयोरित्यर्थः ॥ तृतीयचतुर्थयोरिति ॥ अबाध्यत्वबाध्यत्व-प्रामाणिकत्वाप्रामाणिकत्वरूपयोरित्यर्थः ॥ उभयत्रापीति ॥ रूप्ये जगति चेत्यर्थः ॥ पञ्चम इति ॥ अशून्यत्वशून्यत्वरूप इत्यर्थः ॥ सप्तमाष्टमनवमेष्विति ॥ अबाध्यत्व, शून्यत्व, प्रामाणिकत्व-शून्यत्व, पराङ्गीकृतसत्त्वरूपेष्वित्यर्थः ॥ उक्तन्यायेनेति ॥ स्वरूपेण त्रिकालसर्वदेशीयनिषेध-प्रतियोगिनो निस्स्वरूपत्वेनासत्त्वादित्युक्तन्यायेनेत्यर्थः ॥ बाध इति ॥ एतच्च सप्तम्यन्तपदेषु सर्वत्र संबध्यते ॥ षष्ठ इति ॥ (षष्ठेत्वर्थान्तरमिति मूलपाठः) अबाध्यत्वशून्यत्वरूपेष्वित्यर्थः ॥ अनिर्वाच्यसाधकानुमानेष्विति ॥ सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्म-त्वात् रूपरसवत् । सत्त्वमसत्त्वानधिकरणनिष्ठं असत्त्वं वा सत्त्वानधिकरणनिष्ठं (असत्त्वं बाध्यत्वाधिकरणनिष्ठमिति पाठः) धर्मत्वात् रूपवदिति अनुमानेष्वित्यर्थः ॥ उक्तरीत्येति ॥

किंचोक्तसत्त्वासत्त्वपक्षेषु पक्षान्त्येष्वंशे बाधः। पक्षेऽर्थान्तरम्। सत्त्वासत्त्वे समानाधिकरणात्यंताभावप्रतियोगिनी न भवतः, परस्परात्यंताभावत्वात् घटत्वाघटत्ववत्। असत्त्वं सत्त्वानधिकरणानिष्ठं न, तत्प्रतिषेधरूपत्वात्, यथा अनित्यत्वं नित्यत्वानधिकरणानिष्ठं न। एवं सत्त्वं पक्षीकृत्यापि प्रयोक्तव्यमिति सत्प्रतिपक्षत्वम्। घटत्वाघटत्वे समानाधिकरणात्यंताभावप्रतियोगिनी धर्मत्वाद्रूपरसवत्, कल्पितत्वमकल्पितत्वानधिकरणानिष्ठं धर्मत्वाद्रूपरसवदित्याभाससाम्यंच, परस्परप्रतिषेधानात्मकत्वमुपाधिश्च। एवंच—

"अविरुद्धौ रूपरसौ सत्त्वासत्त्वे विरोधिनी ॥
अन्यथा सदसद्रूपं स्यात्किंचिद्रसरूपवत्" ॥

किंचाद्ये सद्विलक्षणत्वासद्विलक्षणत्वकल्पितत्वाकल्पितत्वदृश्यत्वादृश्यत्वदुर्निरूपत्वादुर्निरूपत्वादौ द्वितीयतृतीययोर्यथाक्रममसद्वैलक्षण्ये सद्वैलक्षण्ये च त्रिष्वपि ज्ञेयत्वव्यवहार्यत्वादौ व्यभिचारः। नचौपाधिकधर्माणामुपाध्यनतिरेकाज्ज्ञानत्वमेव ज्ञेयत्वमिति तदप्यत्यंताभावप्रतियोगीति वाच्यम्। तथात्वे दृक्त्वमेव दृश्यत्वमभिधानत्वादिकमेवाभिधेयत्वादिकमिति ब्रह्मण एव दृश्यत्वम्, नतु जडस्य, ब्रह्मण इव च घटादेरप्यवाच्यत्वमित्याद्यतिप्रसंगात्,

---

परस्परविरुद्धात्मकसत्त्वासत्त्वराहित्यसाधने व्याघातः। स्वस्वरूपात्मकत्वेनार्थान्तरम्। तथा(ना)त्मकसत्त्वासत्त्वराहित्यसाधने तु सिद्धसाधनमित्यर्थः ॥ अंशे बाध इति ॥ परस्परविरुद्धात्मकयोः परस्परविरुद्धधर्मनिष्ठयोर्वा अन्यतरस्य अन्यतराभावसामानाधिकरण्यनियमेन उभयोरप्येकधर्मिनिष्ठाभावप्रतियोगित्वसाधने अन्यतरांशे बाध इत्यर्थः ॥ अर्थान्तरमिति ॥ अबाध्यत्वरूपसत्त्वस्यैवाप्युक्तसाध्योपपत्त्या अर्थान्तरमित्यर्थः ॥ परस्परप्रतिषेधानात्मकत्वमिति ॥

न च संयोगे साध्याव्याप्तिः तस्याव्याप्यवृत्तित्वादिति भावः। उक्तमर्थं संगृह्णाति ॥ एवंचेति ॥ विरोधिनी इति ॥ परस्परविरुद्धरूपे इत्यर्थः ॥ अन्यथेति ॥ सत्त्वासत्त्वयोः परस्परविरुद्धात्मकत्व इत्यर्थः।[1] रसरूपवदिति ॥ रसरूपे अस्य (घटस्य)स्त इति रसरूपी तद्वदित्यर्थः ॥ आद्य इति ॥ सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वादित्यत्रेत्यर्थः ॥ द्वितीयतृतीययोरिति ॥ सत्त्वपक्षकासत्त्वपक्षकानुमानयोरित्यर्थः ॥ व्यभिचार इति ॥ अन्यथा सदसदात्मकं कल्पिताकल्पितात्मकं किञ्चित्स्यात्। ज्ञेयत्वादेः केवलान्वयित्वं च न स्यादिति भावः ॥ औपाधिकधर्माणामिति ॥ तत्पदार्थघटितधर्माणां घट(टादि)पदार्थानतिरेकादित्यर्थः ॥ ज्ञानत्वमेवेति ॥ परस्परासंबंधेन विद्यमाना जातिरेवोपाधिरिति स्वीकारात्,

1. रसरूपवदिति पाठमाश्रित्येदं व्याख्यानम्।

आवाभ्यां षट्पदार्थनियमस्यानंगीकाराच्च वैशेषिकैरप्यौपाधिकधर्माणामभावे सामान्येंऽतर्भाव इति वा उपाध्यनतिरेकेऽपि घटाद्येव कार्यं नत्वाकाशादीतिव्यवस्थित्यर्थं यस्योपाधिना संबंधो न तत्रैवौपाधिकधर्मात्यंताभाव इति वा स्वीकृतत्वेनानैकांत्यतादवस्थ्याच्च ।

नच ज्ञेयत्वाद्यपि स्वनिष्ठात्यंताभावप्रतियोगि अन्यथाऽऽत्माश्रयादिति न व्यभिचार इति वाच्यम् । सत्त्वादेरप्यसत्त्वाद्यनधिकरणत्वात्, सत्त्वादिरूपविशेषनिष्ठात्यंताभावप्रतियोगित्वसिद्ध्या सामान्यतः ससिद्धयुक्त्ययोगात्, द्वैलक्षण्यमिथ्यात्वदृश्यत्वादिवच्छब्दप्रतिपाद्यत्वादेरप्यनन्यथासिद्धधीबलेन स्ववृत्तित्वाच्च, अत्यंताभावप्रतियोगित्वे व्यभिचारस्य दुर्वारत्वाच्च । नच शब्दबोध्यत्वाद्यपि निर्धर्मकात्मनिष्ठात्यंताभावप्रतियोगि, आत्मशब्देनैव प्रतिपाद्यतया व्याघातात्, सत्त्वासत्त्वयोरपि तन्निष्ठात्यंताभावप्रतियोगित्वेनार्थांतरत्वाच्च ।

---

अन्यथा षट्पदार्थनियमभङ्गप्रसङ्ग इति भावः ॥ तथात्व इति ॥ औपाधिकधर्माणामुपाध्यनतिरेक इत्यर्थः । नन्वेवं षट्पदार्थनियमभङ्गप्रसङ्ग इत्यत आह ॥ आवाभ्यामिति ॥ षट्पदार्थनियमानङ्गीकर्तृमतेऽपि व्यभिचारो दुर्वार इत्याह ॥ वैशेषिकैरपीति । अन्तर्भाव इति ॥ औपाधिकधर्माणामुपाध्यतिरिक्तत्वेऽपि न षट्पदार्थनियमभङ्गः । अभावे सामान्ये वान्तर्भावात् उक्तं च सामान्यं द्विविधं जातिरुपाधिश्चेति । नचानित्यघटितधर्माणामनित्यत्वेन नित्यत्वादिपदघटिततल्लक्षणानुपपत्तिः । तस्य जात्यभिप्रायकत्वात् । तथाच ज्ञेयत्वादिकेवलान्वयिधर्माणां ज्ञानत्वाद्यतिरिक्तत्वेन तत्र व्यभिचार एवेति भावः । अस्तु वा परस्परासंबन्धेन विद्यमाना जातिरेवोपाधिरिति ज्ञानत्वमेव ज्ञेयत्वम् । तथापि तत्संबंधघटकज्ञानस्य विषयविषयिभावसंबन्धेन सर्वत्र सत्त्वेन तेन संबन्धेन न कुत्रापि ज्ञानत्वात्यन्ताभावः संभवति । यत्रोपाधिसंबन्धो न तत्रौपाधिकधर्माणामत्यन्ताभाव इति स्वीकर्तव्यत्वात् । अन्यथा कार्यत्वस्यापि कृतित्वपर्यवसितस्य घटाकाशयोरभावत्वाविशेषेऽपि घटाद्येव कार्यं न त्वाकाशादीति व्यवस्था न स्यादित्याह ॥ उपाध्यनतिरेकेऽपीति । सिद्धयुक्त्ययोगादिति ॥ अनिर्वाच्यमिथ्यायुक्त्ययोगादित्यर्थः ।

अस्तु तर्हि तत्रैव व्यभिचारः । अन्ये त्वत्यन्ताभावप्रतियोगित्वव्यभिचारो दुर्वार इत्यर्थः । तर्हि सत्त्वादावेव साध्यप्रसिद्धिरित्यनुशयादाह ॥ असद्वैलक्षण्येति । अत्यन्ताभावप्रतियोगित्व इति ॥ अत्यन्ताभावप्रतियोगित्वमत्यन्ताभावप्रतियोगि न वा, आद्ये यन्निष्ठात्यन्ताभावप्रतियोगि तत्रैव व्यभिचारः । अन्ये त्वत्यन्ताभावप्रतियोगित्वे व्यभिचारो दुर्वार इत्यर्थः ॥ आत्मशब्देनैवेति ॥ तत्रात्मन इति शेषः ॥ अनैकान्त्यतादवस्थ्यमिति ॥ शब्दप्रतिपाद्यत्वादाविति शेषः ।

यदि च सर्वधर्मराहित्यश्रुत्याऽऽत्मनि सत्त्ववदत्यंताभावोऽपि नेति नार्थांतरम्, तर्हि शब्दबोध्यत्वात्यंताभावोऽपि न तत्रेत्यनैकांत्यतादवस्थ्यम् ।

नच सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यंताभावप्रतियोगि अनात्मनिष्ठात्यंताभावप्रतियोगित्वादसत्त्ववदिति प्रयोगादात्मन्यर्थांतरमिति वाच्यम्, व्याघाताद्यनिस्तारात्, अत्यंताभावस्य प्रामाणिकत्वे अपसिद्धांतस्याऽप्रामाणिकत्वे च सिद्धसाधनस्यापाताच्च । अयं च दोषः पूर्वत्रापि द्रष्टव्यः । कल्पितत्वमकल्पितत्वानधिकरणानात्मनिष्ठात्यंताभावप्रतियोगि अनात्मनिष्ठात्यंताभावप्रतियोगित्वादकल्पितत्ववदित्याभाससाम्याच्च, आत्मन इवानात्मनोऽपि सत्त्वासत्त्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्त्याऽर्थांतरत्वाच्च, मिथ्यात्वे त्वद्रीत्या व्यभिचाराच्च । तस्मादप्रसिद्धविशेषणत्वं दुर्वारम् ।

एतेन सत्ख्यातिवादिनं प्रति असद्विलक्षणं विमतं सद्विलक्षणं बाध्यत्वात् शुक्तिरजतत्वसंसर्गवत् इति, असत्ख्यातिवादिनं च प्रति सद्विलक्षणं विमतमसद्विलक्षणमपरोक्षधीविषयत्वात् घटवदितिप्रयोगाद्वाप्रसिद्धविशेषणत्वादिकं पक्षधर्मताबलाच्चानिर्वाच्यसिद्धिरिति नवीनोक्तं निरस्तम्, व्याघातबाधाद्यनिस्तारात् ॥

इत्यनिर्वाच्यत्वसाधकानुमानभंगः ॥ ६० ॥

---

आत्मनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरवारणाय अनात्मा(त्वा)दौ व्यभिचारवारणाय च साध्ये हेतौ चानात्मनिष्ठपदम् । व्याघाताद्यनिस्तारात् इत्यत्र व्याघातदीत्यादिपदेन सत्त्वसत्त्वात्मकत्वेनार्थान्तरपरिग्रहः ॥ अपसिद्धान्तः स्यादिति ॥ अद्वैतहानेरिति भावः ॥ पूर्वत्रापीति ॥ सामान्यतोऽनिर्वाच्यत्वसाधकानुमानद्वयेऽपीत्यर्थः । सत्त्वमसत्त्वानधिकरणानिष्ठं धर्मत्वादित्यनुमाने सिद्धान्तोक्तन्यायेन दूषणान्तरमाह ॥ मिथ्यात्व इति । त्वद्रीत्येति ॥ सिद्धान्ते मिथ्यात्वस्यासत्त्वानधिकरणत्वेऽपि सत्त्वादिति भावः ॥ सत्ख्यातिवादिनं प्रतीति ॥ असत्ख्यातिवादिनं प्रत्यसद्विलक्षणमिति पक्षविशेषणमयोग्यमिति भावः । सदंशे बाधवारणाय विमतमिति । शुक्तिरूप्यादिधर्मीत्यर्थः । असदंशे बाधवारणायाह ॥ विमतमिति ॥ स्वमतेनासति व्यभिचारवारणायाह ॥ अपरोक्षेति । व्याघातबाधाद्यनिस्तारादिति ॥ स्पष्टो व्याघातः । असदेव रजतं प्रत्यभादिति प्रत्यक्षेण प्रथमानुमाने पर्यवसितसाध्यस्य बाधः । द्वितीयानुमाने तु केवलसाध्यस्यापि । आद्यादिपदेन विधर्मकत्वात् सद्रूपत्वेनाप्युपपत्तिरित्युक्तार्थान्तरपरिग्रहः ॥

॥ इत्यनिर्वाच्यत्वसाधकानुमानभङ्गः ॥ ६० ॥

## अथानिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभङ्गः ॥ ६१ ॥

अर्थापत्तावपि सच्चेन्न बाध्येतेत्यत्र किमिदं सत्, सत्ताजातिमद्वा अर्थक्रियाकारि वा अबाध्यं वा अबाध्यत्वावच्छेदकावच्छिन्नं वा प्रामाणिकं वा । नाद्यद्वितीयौ, त्वन्मते प्रपंचे व्यभिचारात्, व्यवहारदशायां न बाध्येतेत्यापादने च "नेह नाने" तिबाधेन जगतोऽनिर्वाच्यत्वासिद्धेः, व्यवहारदशायामेव जगति यौक्तिकादिबाधस्य दर्शनाच्च प्रत्यक्षबाधस्य च परोक्षाध्यस्ते अपरोक्षाध्यस्ते नभोनैल्यादौ चाभावात् सत्त्वादिराहित्येऽपि ब्रह्मवदनिर्वाच्यत्वाभावोपपत्तेश्च, व्यवहारदशायां बाध्यस्यापि रूप्यस्याद्वैतवत्पारमार्थिकत्वोपपत्तेश्च ।

---

### अथानिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभङ्गः ॥ ६१ ॥

ननूक्तरीत्यानुमानस्य प्रमाणत्वासंभवेऽप्यर्थापत्तिरनिर्वचनीये प्रमाणं स्यादित्याशंक्य तत्रापि दूषणं वक्तुमर्थापत्तिमूलव्याप्तिग्राहकौपयिकतर्कशरीरप्रविष्टसच्छब्दार्थं पृच्छति ॥ अर्थापत्तावपीति ॥ प्रमाणविशेषेणाबाध्यत्वं बाध्यविशेषेऽप्यस्तीत्याह ॥ अबाध्यत्वेति ॥ न बाध्येतेत्यत्रापि सर्वदा बाधाभावो वा व्यावहारिकदशायां बाधाभावो वा । नाद्य इत्याह ॥ त्वन्मत इति ॥ परसामान्यत्वेनाभ्युपगतसत्ताजातिमतः अर्थक्रियाकारिणश्च प्रपञ्चस्य त्वया ज्ञाननिवर्त्यत्वरूपबाध्यत्वाभ्युपगमादिति भावः । ननु प्रपञ्चस्य ज्ञानेन निवृत्तिलक्षणबाधस्य कदाचित्संभवेऽपि व्यवहारदशायां तदभावात्तद्दशायां न बाध्येतेत्यापाद्यशरीरसंकोचे नोक्तव्यभिचार इत्यत आह ॥ व्यवहारदशायामिति ॥ तथाच व्यवहारदशायां तत्त्वश्रुतिजन्यज्ञानेन जगतो निवृत्तिलक्षणबाधादर्शनात् तद्दशायां बाध्येत चेति तर्कस्य विपर्यये पर्यवसानाभावेनाभासत्वापत्तेरिति भावः । ननु व्यवहारदशायां(न)बाध्येतेत्यत्र बाधशब्देन विपरीतप्रमारूपबाध एव विवक्षितः। एवं च श्रुत्या इदानीमेव तादृशबाधो जायत इति न तर्कस्याभासत्वमित्यत आह ॥ व्यवहारदशायामेवेति ॥ तथाचोक्तव्यभिचारः तदवस्थ इति भावः । ननु व्यवहारदशायां विपरीतप्रमाभावरूपबाधः प्रात्यक्षिक एवेह विवक्षितः । अतो नोक्तव्यभिचार इत्यत आह ॥ प्रत्यक्षबाधस्य चेति । परोक्षाध्यस्त इति ॥ कूटलिङ्गशब्दाभासजन्याध्यासगोचर इत्यर्थः ।

नभोनैल्यादावित्यादिपदेन चन्द्रप्रादेशिकत्वादिपरिग्रहः । तथाच तदंशे विपर्यये पर्यवसानासंभवादाभासत्वमिति भावः । किञ्चोक्तार्थापत्त्या रूप्यादेः सत्त्वाद्यभावरूपराहित्यसिद्धावपि नानिर्वाच्यत्वसिद्धिः । ब्रह्मवत्सद्रूपत्वेनाप्युपपत्तेरित्याह ॥ सत्त्वादीति ॥ किञ्च व्यवहारदशायां बाध्यत्वं न सत्त्वादिराहित्योपपादकं व्यभिचारादित्याह ॥ व्यवहारदशायामिति ।

न तृतीयः, यदबाध्यं तदबाध्यमिति साध्याविशिष्टत्वात्, व्यवहारस्यापाद्यत्वे च बाध्यत्वेनैवासद्व्यावृत्तेरपि सिद्ध्या शेषवैयर्थ्यात्। अत एव न चतुर्थः, प्रामाणिकत्वादन्यस्य तदवच्छेदकस्याभावाच्च। न पंचमः, बाध्यस्यापि बाध्यत्वाकारेण प्रामाणिकत्वात् सत्त्वेन प्रामाणिकत्वविवक्षायामात्माश्रयापातात्। मानांतराप्राप्तस्य तत्त्वावेदकश्रुतिवेद्यत्वेन प्रामाणिकस्य ब्रह्मनिर्विशेषत्वादेरपि त्वन्मते ब्रह्मान्यत्वेन बाध्यत्वेन व्यभिचाराच्च, अबाध्ये अविद्यादिसाधकतया स्वतःप्रकाशमाने चिन्मात्रे वैयर्थ्येन प्रमाणाप्रवृत्त्या प्रामणिकत्वस्य बाध्यत्वेनैव व्याप्तत्वाच्च, रूप्यादिबाधकस्यातत्त्वावेदकत्वेन तदप्रामाणिकतानापादकत्वाच्च। अतत्त्वावेदकव्यावहारिकप्रमाणबाधितस्यापि रूप्यादेरद्वैतवत्स्वतःप्रामाण्यप्रयुक्तपारमार्थिकत्वोपपत्तेः। नचास्य तत्त्वावेदकाद्वैतश्रुतिबाधः, तस्याः भेदश्रुतिवत् प्रत्यक्षप्राप्तव्यावहारिकरूप्यनिषेधानुवादित्वोपपत्तेः।

---

व्यवहारस्येति ॥ इदमबाध्यमिति व्यवहारस्येत्यर्थः ॥ असद्व्यावृत्तेरपीति ॥ त्वन्मते सत एव असतोऽपि बाधानभ्युपगमाद्विपर्यये पर्यवसानलब्धबाध्यत्वेनैवासद्व्यावृत्तेरपि सिद्धत्वात्। असत्त्वेन प्रतीयेतेत्येतस्य वैयर्थ्यापातादिति भावः ॥ अतएवेति ॥ शेषवैयर्थ्यादेवेत्यर्थः ॥ प्रामाणिकत्वादन्यस्येति ॥ प्रामाणिकत्वस्य च पञ्चमपक्षोक्तमानदोषेणैव दुष्टत्वमिति भावः ॥ व्यभिचाराच्चेति ॥ चशब्दः शेषवैयर्थ्यदोषानुकर्षणार्थः। किञ्च यदप्रामाणिकं तदबाध्यं यथा असदित्यप्रामाणिकत्वाबाध्यत्वयोरेव व्याप्तिदर्शने तदभावरूपयोः प्रामाणिकत्वबाध्यत्वयोरेव व्याप्तिरापद्येतेत्युक्तव्याप्तिर्विरुद्धेत्याह ॥ अबाध्य इति ॥ रूप्यादिबाधकस्येति ॥ अधिकरणे प्रमाणस्य प्रामाणिकत्वमन्तरेण तत्प्रतियोगिनोऽप्रामाणिकत्वानुपपत्तेरिति भावः।

तथा प्रमाणस्य (प्रामाण्यस्य) तत्त्वावेदकत्वाभावेऽपि व्यावहारिकप्रामाण्यस्य बाधप्रतियोगिनोऽप्रामाणिकत्वमित्यत आह ॥ अतत्त्वावेदकेति ॥ यथा प्रामाण्यस्य स्वतस्त्वबलेन व्यावहारिकप्रमाणबाधितस्यापि अद्वैतस्य पारमार्थिकत्वं, एवं तादृशप्रमाणबाधितस्यापि रूप्यस्य तज्ज्ञानप्रामाण्यस्य स्वतस्त्वबलादेव पारमार्थिकत्वं किं न स्यादित्यर्थः ॥ अस्येति ॥ शुक्तिरूप्यस्येत्यर्थः ॥ अद्वैतश्रुतिबाध इति ॥ तस्याः ब्रह्मव्यतिरिक्तसकलनिषेधकत्वादिति भावः ॥ तस्या इति ॥ यथा भेदश्रुतिः प्रत्यक्षप्राप्तव्यावहारिकभेदानुवादिनी तथाद्वैतश्रुतेरपि प्रत्यक्षप्राप्तोऽयं व्यावहारिको रूप्यनिषेध(इति)स्तदनुवादित्वोपपत्तेरित्यर्थः ॥ अमतएवेति ॥ असत्त्वं च सत्त्वरहितत्वेनेति न सत्त्वविकल्पोक्तदूषणावकाश इत्याशयः ॥ इहेति ॥ सत्त्वेन बाध्येतेत्यत्रेत्यर्थः।

एतेनासत एव विलक्षणमिह सद्विवक्षितमिति केनचिदुक्तं निरस्तम्। अवधारणस्य सदसद्विलक्षणं नचेदित्यर्थकत्वेन प्रतियोग्यप्रसिद्ध्यापादकासिद्धेः, बाधेनैवानिर्वाच्यत्वसिद्ध्या ख्यात्युक्त्ययोगाच्च। सदसद्विलक्षणं न चेदित्यत्र सत्किं विवक्षितमिति पूर्वविकल्पप्रसरेण घट्टकुटीप्रभातवृत्तांतापाताच्च। एवं न बाध्येतेत्यत्र बाधः किं ज्ञानेन निवृत्तिः प्रतिपन्नोपाधौ त्रैकालिकनिषेधो वा, नोभयमपि, मिथ्यात्वभंगे उक्तरीत्या आद्ये इष्टापत्तेर्द्वितीये असद्विलक्षणत्वपक्षे बाध्यते चेति विपर्ययापर्यवसानात्।

एवमसच्चेदित्यत्रासत् किं सत्तादिहीनं बाध्यं वा निरुपाख्यं वा निरुपाख्यत्वावच्छेदकावच्छिन्नं वा निस्स्वरूपं वा। नाद्यः, सत्तादिहीनस्यात्मादेः प्रतीत्या व्यभिचाराच्छुक्त्यादौ तस्मादसच्च भवतीति विपर्ययापर्यवसानाच्च। अत एव न द्वितीयः। न तृतीयः। निरुपाख्यं चेन्न ख्यायेतेति साध्याविशिष्टत्वात्। न चतुर्थः। निस्स्वरूपत्वाद्यन्यस्य तस्याभावादसत एव ख्यात्यंगीकारेणापादकासिद्धेश्च। न पंचमः। पारमार्थिकत्वाकारेण

---

एतेनेत्युक्तहेतुं विवृणोति ॥ अवधारणस्येति ॥ यद्यप्यसत एवेत्यवधारणस्य सद्विलक्षणं न चेदित्यर्थकत्वमपि संभवति। तथापि पूर्वपक्षिणैव सत्त्वविकल्पोक्तदूषणाभिधानात् तदर्थकत्वानाश्रयणात् तस्य सदसद्विलक्षणं न चेदित्यर्थकत्वेनेत्युक्तिरिति ध्येयम् ॥ प्रतियोग्यप्रसिद्ध्येति ॥ सदसद्विलक्षणस्य वस्तुनोऽद्याप्यसिद्धेरिति भावः। बाधेनैवेत्यवधारणलभ्यसद्विलक्षण्याभावस्यैव बाध्यत्वापादकत्वेन बाधस्यैव सदसद्विलक्षणरूपानिर्वाच्यत्वसाधकत्वादित्यर्थः। स्वमते प्रपञ्चे व्यभिचारादित्यादिना दूषितमपि बाध्यं दूषणान्तराभिधित्सया पुनः पृच्छति ॥ एवमिति ॥ मिथ्यात्वभङ्ग इति ॥ स्वरूपेण त्रैकालिकनिषेधप्रतियोगिनो नृशृंगादिवत् निस्स्वरूपत्वेन ज्ञानेन निवृत्त्ययोगादिति मिथ्यात्वभङ्गोक्तरीत्येत्यर्थः ॥ द्वितीय इति ॥ परेण शुक्तौ रूप्योत्पत्त्यङ्गीकारेण तत्र तस्य त्रैकालिकनिषेधायोगात् विपर्यये पर्यवसानं न स्यादित्यर्थः ॥ सत्तादिहीनमिति ॥ सत्तादिपदेनार्थक्रियाकारित्वपरिग्रहः। आत्मादेरित्यादिपदात् खप्रतिग्रहः ॥ विपर्ययेपर्यवसानादिति ॥ शुक्तिरजतादेः सत्त्वादिशून्यत्वादिति भावः ॥ अत एवेति ॥ विपर्ययापर्यवसानादेवेत्यर्थः ॥ साध्याविशिष्टयादिति ॥ प्रतीत्युपाख्याशब्दयोरेकार्थकत्वादिति भावः।

न च निरुपाख्यत्वं शब्दाप्रतिपाद्यत्वं विवक्षितमिति न साध्याविशिष्टयमिति वाच्यम्। सर्वस्यापि शब्दप्रतिपाद्यतया आपादकाप्रसिद्धेः ॥ निस्स्वरूपत्वाद्यन्यस्येति ॥ तथा च पञ्चमपक्षागतं भाव इति भावः ॥ असत एवेति ॥ शुक्तिरूप्यादेरिति शेषः ॥ न विपर्यये पर्यवसानमिति ॥

त्रैकालिकनिषेधप्रतियोगित्वस्य निर्धर्मके ब्रह्मण्यपि सत्त्वेनानिर्वाच्यस्य स्वरूपेण तत्प्रतियोगित्वे वाच्ये शशशृंगादेरपीतोऽन्यस्य निस्स्वरूपत्वस्याभावेन तस्मादसत्त्वभवतीतिविपर्यया पर्यवसानात्। किंचासत्त्वं यदि सत्त्वाभावतद्व्याप्यान्यतरत्तर्हि अनिर्वाच्यस्यापि तौ न विपर्यये पर्यवसानं, अन्यथेदिष्टापत्तिः। एवं न प्रतीयेतेत्यत्र किं प्रतीतिमात्रं विवक्षितं सत्त्वेन प्रतीतिर्वा अपरोक्षप्रतीतिर्वा सत्त्वेनापरोक्षप्रतीतिर्वा। नाद्यः। असतोऽप्रतीतावसद्वैलक्षण्यज्ञानायोगात्। असत्प्रतीतिनिरासानुपपत्तेश्च, असत्पदस्यानर्थकत्वे प्रयुक्तपदानां संभूयकारित्वेनासन्न प्रतीयत इति वाक्यस्याबोधकत्वापाताच्च, असतोऽसत्त्वेनाप्रतीतावसद्व्यवहारानुपपत्तेश्च। तदुक्तम्

"असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते" इति।

द्वितीयेऽपि सा किं प्रमारूपा निषिध्यते भ्रमरूपा वा। नाद्यः। इष्टापत्तेः। न द्वितीयः उक्तान्यायेनासतः प्रतीतिसिद्धौ सतोऽसत्त्वेनवारूप्यस्य च रूप्यत्वेनेव भ्रांतित्वादेवासतः

---

तस्माच्च सत्त्वाभाववदिति विपर्यये पर्यवसानस्य सत्त्वविधिपर्यवसन्नत्वादिति भावः॥ अन्यथेदिति॥ सत्त्वाभावतद्व्याप्याभ्यामिति शेषः॥ इष्टापत्तिरिति॥ तादृशासत्त्वराहित्य(रूप)विपर्यये पर्यवसानस्यास्मदभिमतासत्त्वाविरोधित्वादिति भावः॥ ज्ञानायोगादिति॥ तज्ज्ञानस्य प्रतियोगिज्ञानाधीनत्वादिति भावः। असत्प्रतीतिविषयनिरूप्यप्रतीतिनिरासस्य विषयप्रतीतिं विनायोगादिति भावः॥

किञ्च यद्यसतः प्रतीतिमात्राविषयत्वे तत्पदस्याबोधकत्वात् तया तत्समभिव्याहृतवाक्यस्यापि अबोधकत्वं स्यादित्याह॥ असत्पदस्येति॥ व्यवहारान्यथानुपपत्त्याऽसतः प्रतीतिविषयत्वं साधयति॥ असत इति॥ असत्त्वेनेत्युक्तिस्तु वस्तुतोऽसत्त्वप्रकारकप्रतीतिरेव तद्व्यवहारहेतुरिति वस्तुगतिमभिप्रेत्य। यद्वा यद्यसतोऽसत्त्वाप्रकारेण प्रतीत्यविषयत्वं तर्हि तद्व्यवहारोऽपि न स्यात्। व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादित्यभिप्रेत्याह॥ असत इति॥ अथवा असतः प्रतीतिविषयत्वमात्रमनुपपाद्यासत्त्वप्रकारकप्रतीतिविषयत्वमप्युपपादयति॥ असत इति। उक्तन्यायेनेति॥ असद्वैलक्षण्यज्ञानस्य असत्प्रतीतेरावश्यकत्वादित्युक्तन्यायेनेत्यर्थः॥ भ्रान्तित्वादेवेति॥ असति सत्त्वप्रकारकज्ञानस्य भ्रमत्वेनासत्त्वप्रकारेण न भ्रमत्वमित्येतद्विरुद्धमिति भावः॥ नन्वसति सत्त्वप्रकारकज्ञानस्य एव तस्य भ्रमत्वेनोक्तविरोधावकाशः। तदेव तु न संभवति। सामग्रीविरहादित्याशंक्याह॥ वेनेति॥

सत्त्वेन प्रतीत्युपपत्तेः। तदुक्तम् "असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रांतित्वात्" इति। येन पुंसा शशशृंगाभावो न निश्चितः तस्य शशशृंगमस्तीतिवाक्याभासाज्ज्ञानोत्पत्तेश्च। न ह्यत्र "घढभष्" इत्यादिनिरर्थकेष्विव पदार्थधीरेव वा "कुंडमजाजिनम्" इत्याद्यपार्थकेष्विवान्वयधीर्वा नास्ति। विपरीतबोधकेषु योग्यताभावेऽपि अयोग्यत्वज्ञानाभावमात्रेण योग्यताभ्रमेण वा आकांक्षासन्निधिभ्यां ज्ञानोत्पत्तेरनुभवात्। अन्यथा प्रवृत्त्यादेरयोगात्। योग्यताहीनाद्वाक्याज्ज्ञानानुत्पत्तौ च तद्धीनात्प्रतिवादिवाक्याद्धीरेव न स्यादिति कथा बधिरकलहः स्यात्।

ननु शशशृंगादिशब्दाद्विकल्पमात्रमेव जायते। उक्तं हि योगसूत्रे "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इतीतिचेन्न। विकल्पस्येच्छादिवज्ज्ञानान्यवृत्त्यंतरत्वेऽनुभवविरोधात्, प्रवृत्त्ययोगाच्च। नहि शशशृंगस्यासत्त्वाज्ञानदशायां तदस्तित्वज्ञानस्य गोशृंगास्तित्वज्ञानान्मात्रयापि विशेषोऽनुभूयते। असति वृत्त्यंतरवज्ज्ञानस्यैवोपपत्तेश्च। अन्यथा शुक्तिरूप्यादेरपि विकल्पमात्रं न तु प्रतीतिरितिस्यात्। विकल्पस्य ज्ञानविशेषत्वे त्विष्टापत्तिः। वस्तुशून्य

---

ननु योग्यताया अपि शाब्दज्ञानसहकारित्वात्कथं तदभावे वाक्यमपि बोधकमित्यत आह ॥ विपरीतबोधकेष्विति ॥ तथाच यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्रेतुरिति व्याप्तिबलाद्योग्यताज्ञानमेव हेतुः, न तु स्वरूपसती योग्यतेति भावः। स्वरूपसद्योग्यताया एव हेतुत्वे बाधकमाह ॥ योग्यताहीनादिति ॥ न च प्रतिवादिवाक्यगतपदैः पदार्थोपस्थि(तेः पा)ता मानस एव संसर्गबोधो ननु शाब्दः योग्यताव्यतिरेकनिश्चयात्। अत एव चिन्तामणावुक्तम्। 'तेन मानान्तरमुत्थाप्यत' इति, इति वाच्यम्। आहार्यमानससंसर्गबोधवत् विशेषादर्शनस्यानाहार्यनिरुपाधिकभ्रममात्रहेतुत्ववत्, अनाहार्यशाब्दबोध एव योग्यताज्ञानस्यापि हेतुत्वेन प्रतिवादिवाक्यस्यापि आहार्यधी (हेतुत्व) संभवात्। अन्यथा सर्वत्र पदार्थोपस्थितौ मानस एव संसर्गबोध इति शब्द(दे)स्य प्रमाणान्तरत्वोच्छेद इति ॥ शब्दज्ञानानुपातीति ॥ शब्दश्रवणानन्तरोत्पत्तिक इत्यर्थः।

ननु विकल्पो नाम ज्ञानान्यवृत्त्यन्तरं ज्ञानं वेति विकल्प्याद्यं निराह ॥ विकल्पस्येति ॥ अनुभवविरोधादिति ॥ जानामीत्यनुभवविरोधादित्यर्थः ॥ अन्यथेति ॥ असतिविषयकवृत्तेरनुभवसिद्धज्ञानत्वपरित्याग इत्यर्थः। द्वितीयं निराह ॥ विकल्पस्येति। व्यवहारानुपपत्तिश्चेति ॥

इति च कोऽर्थः । किं किमप्यनुल्लिखन्निति, असदेवोल्लिखन्निति वा । आद्ये अनुभवविरोधः व्यवहारानुपपत्तिश्च । न ह्ययं घटादिवत्किमप्यनुल्लिखन्ननुभूयते । द्वितीये सिद्धं नः समीहितम् । नचेयमपि धीरनिर्वाच्यविषया । निस्स्वरूपस्य शशशृंगादेरप्यनिर्वाच्यत्वे हि रूप्यादेः कुतो वैलक्षण्यमाशास्यते । निरुपाख्यादिति चेन्न तस्य दुर्बोधत्वादित्युक्तत्वात्, तादृशाद्वैलक्षण्यस्येष्टत्वाच्च । "अत्यंतासत्यपि ज्ञानमर्थे शब्दः करोति हि" इति, त्वन्मतेऽपि तत्राप्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽपि शशशृंगमसदितिवाक्य इव शशशृंगमस्तीतिवाक्ये शशशृंगशब्देनासत एव प्रतीतेश्च । "तद्धैक आहुरसदेवेदमग्र आसीत्" इतिश्रुत्याऽप्यसतः सत्त्वप्रतीतेश्च ।

एतेन शशशृंगशब्दो निश्चितानन्वयत्वादपार्थक इति चिंतामण्युक्तं निरस्तम् । अपार्थकशब्देनाप्रत्यायकोक्तावनन्वयानिश्चयदशायां प्रवृत्तिपर्यंतप्रतीत्यनुभवविरोधात्, तेनात्यंतिकनिषेधयोग्याप्रतीतौ असच्छशशृंगमित्यादौ समभिव्याहृतस्यासत्पदस्यानन्वयापाताच्च । असत्प्रत्यायकत्वोक्तौ चेष्टापत्तेः । एतेनैव शशशृंगादिशब्दानां संगतिग्रहणासंभवादबोधकत्वमिति तत्त्वविवेकोक्तं निरस्तम् । यौगिकशब्दानामवयवसंगत्यतिरेकेण पृथक्संगत्यनपेक्षया मतो वाऽमतो वाऽर्थस्य बोधनसंभवात् । एतेनैव शशशृंगशब्दस्य शशे शृंगाभावोऽर्थ इति वार्तिकोक्तं निरस्तम् । तत्र तस्याशक्तेः, नास्तीत्यस्य पौनरुक्त्यापाताच्च । न तृतीयः, यद्-

---

तद्व्यवहारस्य तद्विषयकज्ञानसाध्यत्वादिति भावः । अनुभवविरोधमुपपादयति ॥ न ह्ययमिति ॥ शशशृंगादिवाक्यजन्यप्रत्यय इत्यर्थः ॥ तादृशादिति ॥ सर्वथा दुर्बोधादित्यर्थः । असतः सत्त्वप्रकारकप्रतीतिविषयत्वं श्रुतिसिद्धमपीत्याह ॥ तद्धैक इति ॥ तेनेति ॥ शशशृंगशब्देनेत्यर्थः । ॥ यौगिकशब्दानामिति ॥ खपुष्पादिशब्दानां तु शशविषाणादिशब्दात् वाक्यार्थविषयोपस्थितेः शक्तिग्रहः, यथा दुःखेन संभिन्नमित्यादिवाक्यात् वाक्यार्थविषयोपस्थितेः स्वर्गादिशब्दस्येवेति द्रष्टव्यम् । शशशृंगशब्दस्य शशाधिकरणकशृंगाभावे शक्तिर्लक्षणा वेति विकल्प्य प्रथमाभावादिति मनसि निधायाह ॥ तत्रेति ॥ उभयसाधारणदूषणेनैव द्वितीयं निराह ॥ नास्तीत्यस्येति । न तृतीय इति ॥ असतोऽप्रतीतिरिति तृतीयः पक्षः इत्यर्थः ॥ न प्रतीयत इति ॥ नासतोऽसत्त्वा प्रतीयत इत्यर्थः ॥ प्रत्यक्षतादवस्थ्यंभावादिति ॥ अनुमित्यादिरूपव्याप्तिज्ञानस्य तादृशाव्यभिचारज्ञानांतरसापेक्षत्वेनानवस्थापत्त्या प्रत्यक्षत्वे वक्तव्ये असतोऽपि तद्विषयत्वेन

सत् तच्च प्रतीयत इति व्याप्तिज्ञानस्य प्रत्यक्षतावश्यंभावात्, शशशृंगाद्यत्यंताभावस्याप्रत्यक्षत्वा-पातेनासतोऽसत्त्वासिद्धेश्च। न चतुर्थः, भ्रांतित्वादेव तदुपपत्तेः। सन्मात्राविषयकं अपरोक्ष-ज्ञानमपरोक्षभ्रमो वा असद्विषयकः सत्त्वानधिकरणविषयकत्वादसद्विषयकपरोक्षज्ञानवदित्या-द्यनुमानैरप्यसतोऽपरोक्षप्रतीतिसिद्धेश्च।

नन्वसतोऽपरोक्षधीश्चेत् शशशृंगादेरपि सा स्यात्। न चासद्विशेषस्य सा, सद्विशेषत्वे असत्त्वायोगादिति चेन्न, दुष्टेंद्रियस्य रूप्यसंस्कारसाचिव्यवत् शशशृंगादिसंस्कारसाचिव्या-भावात्, असतः सत्यादसत्त्वरूपेण सद्वैलक्षण्यरूपेणापरोक्षप्रतीत्यविषयत्वरूपेण नृशृंग-शशशृंगादीनामेवान्योन्यं नृशृंगादिशब्दैरेव परोक्षप्रतीतिव्यवहारविषयत्वरूपेण शशशृंगस्यैव कदाचिदेव परोक्षप्रतीतिविषयत्वरूपेण च विशेषेणैवानेनापि बौद्धेन सत्त्वानपेक्षेण विशेषेणा-सत्त्वाव्याघाताच्च।

---

व्यभिचार इति भावः ॥ अप्रत्यक्षत्वापातेनेति ॥ संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यत्वस्य तंत्रत्वादिति भावः ॥ असत्त्वा(सत्वा)सिद्धेश्चेति ॥

न चानुमित्या शशशृंगाभावासिद्धावप्यसत्त्वसिद्धिरविकलेति वाच्यम्। अनुमानस्या-प्युक्तविधया प्रत्यक्षव्याप्तिज्ञानमूलत्वेनाभावस्याप्रत्यक्षत्वे तद्घटितव्याप्तेर्दुर्ग्रहत्वादिति भावः। सत्त्वेनापरोक्ष(सत्व)प्रतीतिरित्यत्रापि प्रमा निषिध्यते भ्रमो वा। नाद्यः। इष्टापत्तेरित्याद्यं निरस्य द्वितीयं निराचष्टे ॥ भ्रांतित्वादेवेति ॥ असतः सत्त्वप्रकारकप्रतीतिविषयत्वं तत्प्रतीतेर्भ्रमत्वे-नाप्युपपन्नमिति न तेनासद्वैलक्षण्यसिद्धिरिति भावः ॥ सन्मात्राविषयकमिति ॥ अर्थक्रिया-कारिमात्राविषयकमित्यर्थः। एतच्च घटाद्यपरोक्षज्ञाने बाधवारणाय। असद्विषयकपरोक्षज्ञानांशे सिद्धसाधनवारणायापरोक्षज्ञानमिति ॥ इत्याद्यनुमानैरिति ॥ अपरोक्षभ्रमोऽसद्विषयकः शश-शृंगमस्तीति वाक्यजन्यभ्रमवत्, अपरोक्षत्वं असद्विषयकज्ञानवृत्ति सन्मात्राविषयकवृत्तित्वात् असद्विषयकज्ञानत्ववदित्याद्यनुमानैरित्यर्थः ॥ शशशृंगादेरिति ॥ तथाच सामग्र्यभावान्न तस्य प्रत्यक्षत्वमिति भावः। अस्तु वा सद्विशेषस्यैवापरोक्षत्वम्। न चैवमसत्त्वव्याघातः। धर्मिसत्त्वनिरपेक्षविशेषाणां असत्त्वाव्याघातकत्वादित्याह ॥ असतः सत्यादिति ॥ बौद्धेन ॥ बुद्धिकल्पितेन ॥ सत्त्वानपेक्षेणेति ॥ धर्मिसत्त्वानपेक्षेणेत्यर्थः ॥ तादिति ॥ परोक्षप्रतीति विषयत्वादिकमित्यर्थः ॥ अन्यथेति ॥ असतः सत्त्वप्रकारकप्रतीत्यविषयत्व इत्यर्थः ॥ सा धीरस्या-दिति ॥ सत्त्वप्रकारकधीर्न स्यात्। तुल्यन्यायतया सत्त्वस्येव सद्विलक्षणत्वस्यापि तद्विषयकत्व-प्रयोजकत्वादित्यर्थः।

एतेन सर्वसामर्थ्यहीनस्यासतः सता ज्ञानेनासंबंधाद्विषयत्वरूपधर्मानाश्रयत्वात् भाति ज्ञायत इति कर्तृत्वकर्मत्वाद्ययोगाच्च नापरोक्षधीरिति निरस्तम्। अतीतादेः स्मृत्यनुमित्यादिकं प्रति विषयत्वादिवदसतोऽसद्वैलक्षण्यं प्रति प्रतियोगित्ववद्व्यवहारं परोक्षज्ञानं च प्रति विषयत्वकर्तृत्वकर्मत्वादिवदपरोक्षप्रतीत्यविषयत्वरूपसाध्यवत् सर्वसामर्थ्यवैधुर्यरूपसाधनवत्त्वापरोक्षभ्रांतिविषयत्वस्याप्युपपत्तेः। यदि तत्रानुमित्यादावेव तद्विषयकत्वं न त्वतीतादौ विषयत्वम्, तर्हीहापि तथास्तु, तत्सत्त्वानपेक्षं चेदिदमपि तथा, नहि सत्त्वेन भ्रांतिः सत्त्वसापेक्षा, अन्यथा सद्विलक्षणत्वेऽपि सा न स्यात्, संबंधादावसद्वैलक्षण्यादपि लाघवेन सत्त्वस्यैव तंत्रत्वात्, दुष्टाच्छब्दादसति सत्त्वे परोक्षभ्रांतिवद्दुष्टादिंद्रियात् सत्त्वेनापरोक्षभ्रांत्युपपत्तौ परोक्षप्रतीतिसर्वाकारेणापरोक्षप्रतीतिनिषेधे विशेषहेत्वभावाच्च।

एतेन प्रवृत्तिविषयत्वान्यथानुपपत्त्या असद्वैलक्षण्यसिद्धिरिति निरस्तम्। इदमंशस्यासद्रूप्यात्मना प्रतीतत्वमात्रेण तदर्थिप्रवृत्तिविषयत्वोपपत्तेः। नचापरोक्षज्ञानस्यार्थेनेंद्रियसन्निकर्षेण च जन्यत्वादसतश्च हेतुत्वसन्निकर्षयोरयोगान्नापरोक्षधीरिति वाच्यम्। अपरोक्षप्रमाया एवार्थादिजन्यत्वाद्रूप्यसंस्कारसचिवस्य दुष्टेंद्रियस्याधिष्ठानसन्निकर्षादेवाधिष्ठानस्यासद्रजतात्मना प्रतीत्युपपत्तेश्च, अन्यथाऽनिर्वाच्यपक्षेऽप्ययं दोषः स्यात्। न हि धीमात्रशरीरं रूप्यं स्वज्ञानात्प्रागस्ति।

किंवानिदंरूपे प्रातिभासिके च रूप्ये यदिदंत्वं यच्च व्यावहारिकत्वं भाति तदुभयं न तावत् सत्, नाप्यनिर्वाच्यम्, तथात्वे हि तस्यासद्वैलक्षण्यार्थे प्रातिभासिकसत्त्वाय च

---

ननु संबंधे प्रतीतिविषयत्वे चासद्वैलक्षण्यमेव तंत्रमिति नोक्तप्रतीतिविरोध इत्याशंक्याह ॥ संबंधादाविति। असद्वैलक्षण्यसिद्धिरिति ॥ नचेदमंशस्यैव प्रवृत्तिविषयत्वसंभवाच्च तत्सिद्धिरिति वाच्यम्। रजतान्यविषयस्य तस्य रजतार्थप्रवृत्तिविषयत्वेऽपि प्रसंगादिति भावः ॥ इदमंशस्येति ॥ तदर्थप्रवृत्तिविषयत्वे तदभिन्नत्वेन प्रतीतत्वं तंत्रम्। ननु तत्र विषयस्य सत्त्वमपि, इदमंशे च रजताभेदस्याप्रतीयमानत्वाच्च प्रवृत्तिविरोधीति भावः। नन्वसन्निकृष्टस्याप्यपरोक्षप्रतीतिविषयत्वेऽतिप्रसंग इत्याशंक्याह ॥ रूप्यसंस्कारसचिवस्येति ॥ तथाच दोषादिकमेवातिप्रसंगभंजकमिति भावः ॥ अन्यथेति ॥ लाघवेनापरोक्षप्रतीतिमात्रस्यार्थादिजन्यत्वाभ्युपगम इत्यर्थः। किंच परोक्षस्यासतोऽपरोक्षप्रतीतिविषयत्वमवश्याभ्युपेयम्। शुक्तिरजते प्रतीयमानेदंत्वव्यावहारिकत्वयोरसत्त्वानिर्वाच्यत्वयोरसंभवादित्याह ॥ किंवानिदंरूप इति।

सत्त्वप्रतीत्या भाव्यमेवं तदपि सत्त्वमनिर्वाच्यं चेत्तस्यापि सत्त्वप्रतीत्या भाव्यमित्यनवस्थापातात्। तस्मादिदंत्वव्यावहारिकत्वयोरसत्त्वं वाच्यम्। एवं रूप्यमसद्विलक्षणं धीकालेऽस्ति चेत्तस्य स्वरूपेण त्रैकालिकनिषेधायोगादिदंत्वाकारेण वा परमार्थिकत्वाकारेण वा निषेधो वाच्यः, तयोरप्यसद्विलक्षणत्वे स्वरूपेण निषेधायोगात्पारमार्थिकत्वाकारेण निषेधे चानवस्थानात्तयोरसत्त्वं वाच्यम्। ते च सत्त्वे नापरोक्षे इति कथमसतः सत्त्वेनापरोक्षज्ञानाभावः। तदुक्तम्।

अन्यथात्वमसत्तस्माद्भ्रांतावेव प्रतीयते।
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥ १ ॥

तस्मानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः" इति ॥ टीकायां त्विदंत्वसत्त्वयोः सत्त्वायोगादनिर्वाच्यत्वे च तथैव प्रतीतौ प्रवृत्त्ययोगात्सत्त्वेन भाने च तस्मिन्नपि सत्त्वे सत्त्वादिविकल्पप्रसरेणानवस्थानादिदंत्वव्यवहारिकत्वयोरसत्त्वमित्युक्तम्। न च तत्र त्वत्पक्षेऽप्यसति रूप्ये यत्सत्त्वं भाति तस्य सत्त्वायोगादसत्त्वे च तथैव भाने प्रवृत्त्ययोगात् सत्त्वेन

---

तथात्वे हीति ॥ अनिर्वाच्यत्वे हीत्यर्थः ॥ तस्येति ॥ इदंत्वव्यावहारिकत्वरूपधर्मद्वयस्यानिर्वाच्यत्वे हि सत्त्वप्रतीत्या भवितव्यम्। अन्यथा सद्वैलक्षण्यसाधकप्रातिभासिकसत्त्वासिद्धेरित्यर्थः ॥ तदपीति ॥ उक्तधर्मद्वये प्रतीयमानमपीत्यर्थः। शुक्तिरूप्यगतनिषेधप्रतियोगितावच्छेदकयोरिदंत्वपारमार्थिकत्वे स्तः। प्रकारांतरेणानिषेध्यत्वे सति निषेध्यत्वात्, नृशृङ्गादिवदित्यभिप्रेत्याह ॥ एवमिति ॥

नन्वस्तु तयोरसत्त्वं ततः किमित्यत आह ॥ ते चेति। अन्यथात्वमिति ॥ अनिर्वरूप्यं प्रातिभासिकरूप्यनिष्ठतया भ्रांतौ प्रतीयते, यदन्यथात्वं इदंत्वपारमार्थिकत्वरूपं तदसदेव। तस्यासत्त्वानिर्वचनीयत्वयोरयोगात्। एवं ह्यसत एव सत्त्वस्यापरोक्षतः प्रतीतिः त्वयापि स्वीकार्येत्यर्थः। ननु टीकायामनवस्थितावन्यस्यैव हेतूकरणात् तत्र त्वया कथमन्यदेव हेतूक्रियत इत्याशंक्य तया न विरोध इत्यभिप्रेत्य टीकोक्तं दर्शयति ॥ टीकायां त्विति ॥ यद्वा प्रसंगादुदाहृतश्लोकस्य टीकोक्तार्थे शंकोद्धाराय टीकोक्तमनुवदति ॥ टीकायां त्विति। प्रवृत्त्ययोगादिति ॥ अर्थसत्त्वनिश्चयस्यैव प्रवृत्त्यंगत्वादिति भावः ॥ तत्रेति ॥ टीकोक्तार्थे इत्यर्थः।

किंच ख्यातिबाधयोरन्यथो(थैवो)पपन्नत्वान्न तद्बलेनानिर्वाच्यसिद्धिरित्याह ॥ ननु सदेवेदं रजतमिति भ्रमविरोधात् न तद्विषयस्य सदसदात्मकत्वमित्यत आह ॥ त्वत्पक्ष इति ॥

भाने च तस्मिन्नपि सत्त्वे उक्तविकल्पप्रसरेणानवस्थेति वाच्यम्। परमतेऽनिर्वाच्यसत्त्वस्य सत्त्वेनाभाने प्रातिभासिकत्वासिद्धिवत् मन्मते असतः सत्त्वस्य सत्त्वेनाप्रतीतावसत्त्वासिद्धे-रभावात्।

किंच प्रत्येकं सत्त्वासत्त्वयोरनुपपत्तौ सदसदात्मकमस्तु, निषेधसमुच्चयवत् विधिसमुच्चयस्याप्यतात्त्विकत्वेनाविरोधसंभवात्। एवं चतुर्थप्रकाराकल्पनाल्लाघवम्, त्वत्पक्षे असदेव रूप्यमभादितिबाधकस्य सद्वैलक्षण्यमिवात्रापि सद्रूप्यमिति भ्रमस्यासद्वैलक्षण्यं विषयोऽस्तु। यद्वा त्वत्पक्षे सदसद्विलक्षणे रूप्येऽनिर्वाच्यं सत्त्वमिवात्रापि सदसदात्मके रूप्ये सदसदात्मकं सत्त्वं भ्रांतौ प्रतीयताम्। भ्रांतित्वे च त्वत्पक्षेऽनिर्वाच्यविषयत्वमिवात्रापि सदसद्विषयत्वं तंत्रमस्तु। अन्यथा नित्यकाम्येऽपि नित्यत्वादेः प्रत्येकमनुपपत्त्या भिन्नाभिन्ने च गुणगुण्यादौ भेदादेः प्रत्येकमनुपपत्त्योभयबहिर्भावः स्यात्।

किंचासद्विलक्षणं चेन्न बाध्येत सद्विलक्षणं चेन्न प्रतीयेतेत्यर्थापत्त्याऽनिर्वाच्यत्वाभाव एव किं न स्यात्। नचाबाधाप्रतीत्योः सत्त्वासत्त्वे तंत्रे लाघवात् नत्वसद्विलक्षणत्वसद्विलक्षणत्वे गौरवादिति युक्तम्। अबाधाप्रतीती प्रति प्रतियोगिन्योर्बाधप्रतीत्योरेव हि प्रथमं प्रयोजकं चिंत्यताम्, प्रथमोपस्थितत्वात् कल्पकत्वाच्च। भावप्रयोजकाभावादेवाभावोपपत्तौ प्रयोजकांतरस्यानन्वेषणीयत्वाच्च। बाधप्रतीत्योश्चासत्त्वसत्त्वे तंत्रे लाघवात्, नतु सद्विलक्षणत्वा-

सदेवेदं रजतमिति भ्रमविरोधात् न तद्विषयस्य सदसदात्मकत्वमित्यत आह ॥ त्वत्पक्ष इति ॥ सदसद्रूपत्वेनाप्युपपत्तेर्न तद्विरोध इत्याह ॥ यद्वेति। अन्यथेति ॥ सत्त्वासत्त्वयोः प्रत्येकमनुपपत्त्या शुक्तिरूप्यादेः तदुभयबहिर्भावेन कल्पने इत्यर्थः ॥ प्रत्येकमनुपपत्त्येति ॥ "अग्निहोत्रं यदि नित्यं स्यात् तर्ह्यग्निहोत्रं जुहुयात् स्वर्गकामः" इति श्रुतिप्रतिपन्नस्वर्गकामाधिकारिकर्तृकं न स्यात्। तर्हि कामनायाः कादाचित्कत्वेन यावज्जीवमग्निहोत्रं जुहुयादिति श्रुतिप्रतिपन्नयावज्जीवाधिकारिकर्तृकं न स्यादिति प्रत्येकमनुपपत्त्येत्यर्थः। गुणगुण्यादावित्यादिपदेनोपादानोपादेयादिपरिग्रहः ॥ प्रत्येकमनुपपत्त्येति ॥ अत्यंतभेदे अत्यंताभेदे च नीलो घटः मृद्घटः इति सामानाधिकरण्यायोगादिति भावः। न केवलं ख्यातिबाधान्यथानुपपत्त्या अनिर्वाच्यत्वासिद्धिः। अपितु तदभावसिद्धिरेवेत्याह ॥ किंचेति। प्रथमोपस्थितत्वादिति ॥ अभावज्ञानकारणतया प्रतियोग्युपस्थितेः आवश्यकत्वादित्यर्थः ॥ कल्पकत्वाच्चेति ॥ अनिर्वाच्यकल्पकत्वाच्चेत्यर्थः ॥ भावप्रयोजकेति ॥ तथाच बाधप्रतीत्योः सदेवेदं रजतमिति भ्रमविषयस्य सत्त्वासत्त्वे प्रयोजकतया

सद्विलक्षणत्वे, गौरवात्। तथाचाबाधाप्रतीती प्रत्यसद्विलक्षणत्वसद्विलक्षणत्वे तंत्रे। एवं चोक्तरीत्या सत्त्वात्प्रतीतिरसत्त्वाद्बाध इति विधिसमुच्चयः स्यात्। नृशृंगादौ सद्विलक्षण्यवदसत्त्वस्य भावेऽपि बाधाभावः, प्रसक्त्यभावात्। एवं चासद्विलक्षणं चेन्न बाधः स्यात् सद्विलक्षणं चेन्न भायादिति भवत्वनिर्वाच्यविलक्षणम्।

इत्यनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभंगः ॥ ६१ ॥

---

न कल्प्येते। अन्यथा प्रत्यक्षत्वे महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वमिव अप्रत्यक्षत्वेऽपि प्रयोजकांतरं कल्प्येतेतिभावः। नन्वस्तु बाधप्रतीत्योरपि सद्विलक्षणत्वासद्विलक्षणत्वयोरेव प्रयोजकत्वादस्मदिष्टसिद्धिरेवेत्यत आह ॥ बाधप्रतीत्योश्चेति ॥ नन्वसत्त्वस्य बाधप्रयोजकत्वे नृशृंगादेरपि बाधः स्यादित्यत आह ॥ नृशृंगादाविति ॥ उक्तमर्थं संगृह्णाति ॥ एवंचेति ॥

॥ इत्यनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभंगः ॥ ६१ ॥

## ॥ अथ अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः ॥६२॥

नन्वत्यंतासत्त्वे कथं निषेधप्रतियोगित्वम् । तथाचात्यंतिकनिषेधप्रतियोगित्वरूपबाध्यत्वमेव सत्यमति चानुपपद्यमानमनिर्वाच्यत्वं कल्पयतीति नवीना इति चेन्न । किमिह कथम् । असत्त्वस्यात्यंतिकनिषेधप्रतियोगित्वरूपत्वेन तदप्रतिक्षेपकत्वात् , प्रागभावादिदशायामसत एव घटादेस्तत्प्रतियोगित्वदर्शनेन तस्य रूपादिवद्धर्मिसत्त्वानपेक्षत्वाच्च, असत्त्वाभावादपि लघुत्वेन तत्र सत्त्वस्य तंत्रतया तद्धीनस्यानिर्वाच्यस्याप्रतियोगित्वापाताच्च, त्वन्मतेऽप्यसतोऽसद्वैलक्षण्यं प्रति प्रतियोगित्वाच्च, असतोऽपि "नासदासीत्" इति श्रौतनिषेधप्रतियोगित्वाच्च । यदि च कुत्रचित्कदाचित्सत एवासत्त्वम् , तर्हि कुत्रचित्कदाचिदसत एव सत्त्वमिति नित्यसर्वगतानां सत्त्वं न स्यात् । आत्यंतिकं सत्त्वमसत्त्वनिरपेक्षं चेदात्यंतिकमसत्त्वमपि सत्त्वानिरपेक्षम् । अन्यथा ध्वंसः स्वाधिकरणे प्रतियोगिसत्त्वापेक्ष इत्यत्यंताभावोऽपि तथा स्यात् । अत्यंताभावश्च स्वकाले प्रतियोगिसत्त्वापेक्ष इति ध्वंसोऽपि तथा स्यात् । प्रतियोगिनोऽसत्त्वेऽपि प्रतियोगित्वस्य सत्त्वं च ध्वंसादिदशायां प्रतियोगिनोऽवर्तमानत्वेऽपि प्रतियोगित्वस्य वर्तमानत्ववत् शशशृंगादेरसत्त्वेऽपि परोक्षज्ञानादिकं प्रति विषयत्वस्य सत्त्ववत् असद्वैलक्षण्यं

---

॥ अथानिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः ॥ ६२ ॥

कथमिति । सत एवाभावप्रतियोगित्वादिति भावः ॥ आत्यंतिकेति ॥ स्वरूपेण त्रिकालसर्वदेशीयेत्यर्थः । नन्वत्यंतासत्त्वे कथं निषेधप्रतियोगित्वमिति वदन् प्रष्टव्यः, किमत्यंतासत्त्वनिषेधप्रतियोगित्वयोर्विरोधात् । किंवा निषेधप्रतियोगित्वे अन्यत्र क्लृप्तस्यासत्त्वाभावस्य प्रयोजकस्याभावात् । आद्येऽपि निषेधप्रतियोगित्वस्य किं साक्षादत्यंतासत्त्वविरोधित्वमुत धर्मिसत्त्वापादनमुखेनेति विकल्पमभिप्रेत्याह ॥ किमिह कथमिति ॥ आद्ये दोषमाह ॥ असत्त्वस्येति ॥ द्वितीय आह ॥ प्रागभावादीति ॥ अंत्य आह ॥ असत्त्वाभावादपीति ॥ किंचासत्त्वाभावः किमभावप्रतियोगित्वमात्रप्रयोजकः उतात्यंताभावप्रतियोगित्व इति विकल्प्याद्य आह ॥ त्वन्मतेऽपीति ॥ अन्त्य आह ॥ असतोऽपीति ॥ यद्यपि "नासदासीन्नो सदासीदिति" श्रुतौ सदसच्छब्दाभ्यां भूतपंचकमेवोच्यते । तथापि तमःशब्दार्थस्याज्ञानस्यानिर्वाच्यत्वे इमां श्रुतिं प्रमाणीकुर्वता त्वयैव तयोः सदसत्परत्वमंगीकृतमित्यसन्निषेधश्रुत्युक्तिरियमिति ध्येयम् ॥ असत्त्वमिति ॥ निषेधप्रतियोगित्वमित्यर्थः ॥ अन्यथेति ॥ क्वचिद्दर्शनमात्रेण सर्वत्र तदभ्युपगम इत्यर्थः ॥ सत्त्ववदिति ॥ निषेधप्रतियोगित्वस्यासत्त्वे तु मिथ्यात्वमेव न सिध्येदिति भावः । नन्वभाव-

प्रति प्रतियोगित्वस्य सत्त्ववत् त्वत्पक्षे प्रतियोगिनः सद्विलक्षणत्वेऽपि बाधगोचरस्य निषेधप्रतियोगित्वस्य सत्त्ववच्च युक्तम्। यदि तु तत्र प्रतियोगित्वविषयत्वे न धर्मिसत्त्वापेक्षे तर्हीहापि तथा। यदि च तत्र ध्वंसादौ तत्प्रतियोगिकत्वमेव वर्तमानमसद्विषयकज्ञाने च तद्विषयकत्वमेव सत् असद्वैलक्षण्ये च तत्प्रतियोगित्वमेव सत्, नतु प्रतियोगित्वं वर्तमानं सदा न वा विषयत्वं सत्, तर्हीहाप्यत्यंताभावे तत्प्रतियोगिकत्वं सत्, नतु प्रतियोगित्वमित्यपरत्। नचाभावविरहत्वं प्रतियोगित्वम्, सादृश्यपृथक्त्वादिप्रतियोगिष्वव्याप्तेः, येनासतः प्रतियोगित्वं न स्यात्। किंतु तज्ज्ञानहेतुज्ञानविशेषविषयत्वम्, तच्चासतोऽप्यस्ति, अन्यथा अभावावधित्वं प्रतियोगित्वमिति निरवधिकोऽत्यंताभावो निष्प्रतियोगिकः स्यात्।

एतेन प्रतियोगिस्मृतिरूपहेत्वभावादसत्प्रतियोगिकाभावधीरयुक्तेति निरस्तम्। शब्दाभासादिनाऽनुभूतस्य स्मृतिसंभवात् भ्रमविषयवच्च प्रतियोगिनोऽप्रामाणिकत्वेऽपि भ्रमवदभावस्य प्रामाणिकत्वं युक्तम्। नहि प्रमाणस्पृष्टत्वमेव तत्, असतोऽप्यसत्त्वेन तत्स्पृष्टत्वात्। किंतु सत्त्वेन।

नन्वथापि योग्यानुपलब्ध्या अभावो ग्राह्यः, योग्यता च प्रतियोगितद्व्याप्येतरप्रतियोग्युपलंभकसामग्री, असति च प्रमासामग्री नास्तीति दोषसहितज्ञानसामग्रीरूपा सा वाच्या, तस्यां च सत्यां नासतोऽनुपलंभः, उपलंभस्यैव सत्त्वात्। अनुपलंभदशायां च तज्ज्ञानसामग्रीरूपा योग्यतैव नास्तीति कथमसदभावधीः।

"दृष्टोपलंभसामग्री शशशृंगादियोग्यता। तस्यां नानुपलंभोऽस्ति नास्ति सानुपलम्भने" इति कुसुमांजल्युक्तेरितिचेन्न। या ह्यनुपलब्धिर्यत्र यत्सत्त्वविरोधिनी, तस्या एव योग्यानु-

---

विरहात्मत्वं वस्तुनः प्रतियोगितेत्यभ्युपगमात् कथं सतः प्रतियोगित्वमित्याशंक्य निराकरोति ॥ नचेति। तज्ज्ञानहेत्विति ॥ तज्ज्ञानहेतुज्ञानविषयत्वस्य विशेषणादिसाधारणत्वात् विशेषेत्युक्तम् ॥ अन्यथेति ॥ स्वोक्तलक्षणासंगृहीतत्वेनासतः प्रतियोगित्वानभ्युपगम इत्यर्थः ॥ प्रतियोगिस्मृतिरूपेति ॥ अनुभावकप्रमाणाभावेनासतः पूर्वमननुभूतत्वादिति भावः ॥ शब्दाभासादिनेति ॥ प्रमाणाननुभवस्याकिंचित्कर इति भावः। ननु प्रतियोगिनोऽप्रामाणिकत्वे कथं तदभावस्य प्रामाणिकत्वमित्यत आह ॥ भ्रमविषयवच्चेति ॥ तुच्छस्याप्रामाणिकत्वेऽपि नराविषाणतुच्छादिशब्दस्य प्रामाणिकत्ववदिति दृष्टांतांतरसमुच्चयार्थश्चकारः।

नन्वभावस्य प्रामाणिकत्वे प्रतियोगिनोऽपि प्रामाणिकत्वापातः। तयोरेकप्रमितिविषयत्वादित्यत आह ॥ नहीति ॥ तत् प्रामाणिकत्वम् ॥ या हीति ॥ या ह्यनुपलब्धिः यत्राधिकरणे

पलब्धित्वात् तस्याश्चासत्यपि भावात्। शृंगानुपलब्धिर्हि महत्त्वे सत्युद्भूतरूपशृंगसत्त्वविरोधिनी, नहि प्रतियोगिप्रत्यक्षत्वं अभावप्रत्यक्षत्वे तंत्रम्, स्तंभे पिशाचान्योन्याभावस्याप्रत्यक्षत्वापातात्, जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वप्रसंगाच्च। कथमन्यथा शशशृंगं नास्तीत्यबाधितधीः। नच शशे शृंगं नास्तीत्यर्थ इति चिंतामण्युक्तं युक्तम्, शशशृंगोल्लिखिता भूरित्यादावप्रसिद्धविशेषणत्वोक्त्ययोगात्। गवि शशशृंगं नास्तीत्यधिकरणांतरोपादानाच्च,

---

तर्कितप्रतियोगिसत्त्वप्रसंजनप्रसंजितप्रतियोग्युपलंभविरोधिनी सैव योग्यानुपलब्धिः नतु प्रतियोगितद्व्याप्येत्यादिः। संयुक्तघटयोरेकस्यापगमे सति संयोगध्वंसस्याप्रत्यक्षत्वापातात्। तत्र प्रतियोगिभूतात् संयोगात् तद्व्याप्यात् सन्निकर्षाद्वा अतिरिक्तस्य संयोगोपलंभस्यैकस्य संयोगिनोऽभावादिति भावः॥ तस्याश्चेति॥ एतच्चाभ्युपेत्योक्तम्।

वस्तुतस्त्वभावानुपलब्धिवत् भावानुपलब्धिरप्यवर्जनीयसन्निधित्वात् अभावप्रत्यक्षे जनयितव्ये नेन्द्रियसहकारिणी। तथाहि न तावत् सानुपलब्धिः प्रत्यक्षाप्रत्यक्षसाधारणोपलब्धिसामान्याभावरूपा। शंखश्चैत्यानुमितिदशायां श्वेतो नेत्यभावप्रमानुदयप्रसंगात्। नचोक्तरूपानुपलब्धिरभावप्रमाहेतुरिति वाच्यम्। गुंजापुंजे चक्षुषारोपितेन वह्नित्वेनोष्णस्पर्शानुमितौ त्वचा तदभावप्रमानुदयप्रसंगात्। नापि प्रमारूपोपलब्धिसामान्याभावरूपा वा तत्सहकारिणी। शुक्तौ रूप्यभ्रमदशायामपि तत्र तदभावप्रमोदयप्रसंगात्। नापि प्रत्यक्षरूपोपलब्ध्यभावरूपा तथा। मंडूकवसांजनदोषेण चक्षुषा वंशमुरगत्वेन पश्यतस्त्वचा तदभावप्रमितिप्रसंगात्। नाप्यभावग्राहकेन्द्रियजन्योपलब्ध्यभावरूपा। कपाले घटोऽस्तीति विनश्यदवस्थापन्नघटसाक्षात्कारानंतरक्षणोत्पन्नघटध्वंसस्याप्रत्यक्षत्वप्रसंगात्। तस्मादनुपलब्धिरवर्जनीयसन्निधिरेवेति। उक्तं च पद्धतौ—अनुपलब्धिरवर्जनीयसन्निधिरेवेति। अभावप्रत्यक्षप्रमायां त्वधिकरणयोग्यत्वमेव तन्त्रम्। अन्यथा परमाणौ जलत्वाभावप्रत्यक्षप्रसंगात्। ससंबंधिकपदार्थेषु ज्ञानेच्छादीर्घत्वादिषु क्लृप्तत्वाच्च।

नन्वभावप्रत्यक्षत्वप्रयोजकमधिकरणयोग्यत्वं किमिन्द्रियग्राह्यत्वमात्रम् उत प्रतियोगिग्राहकेन्द्रियग्राह्यत्वम्, अभावग्राहकेन्द्रियग्राह्यत्वं वा। नाद्यः। आत्मनि धर्माद्यभावस्य प्रत्यक्षत्वप्रसंगात्। न द्वितीयः। स्तंभजीवनिष्ठयोः पिशाचेश्वरान्योन्याभावयोः अप्रत्यक्षतापातात्। न तृतीयः। वायुगुरुपाषाणेषु रूपतिक्तरसयोरभावानामप्रत्यक्षतापातादिति चेन्न। यन्निष्ठत्वेनाभावो ज्ञायते तदधिकरणस्याभावग्राहकेणेन्द्रियेण ग्राह्यत्वमधिकरणयोग्यत्वमित्यंगीकारात्। एवं च स्तंभजीवनिष्ठयोः पिशाचेश्वरान्योन्याभावयोः प्रत्यक्षता सिद्धा। स्तंभजीवयोरभावग्राहकेण चक्षुषा साक्षिणा च

शशे शृंगं नास्तीत्यर्थकल्पनेऽपि भूतले घटो नास्तीतिवदसतः संसर्गस्य निषेध्यकोटिनिवेशाच्च, अन्यथा संसर्गस्य सत्त्वापातात्। गोशृंगं नास्तीतिवत् विशिष्टप्रतियोगित्वप्रतीतेरुक्तरीत्या बाधकाभावेनान्यथा व्याख्यानायोगाच्च।

एतेन न प्रतियोगिधीमात्रमभावधीहेतुः, तन्निर्विकल्पकादप्यभावधीप्रसंगात्। किंतु प्रतियोगितावच्छेदकावच्छिन्नतद्धीः। नच शशीयत्वावच्छिन्नशृंगधीरस्तीति सामग्र्यभावादेव बाधकान्न व्यधिकरणधर्मावच्छिन्नाभावधीरितिचिंतामण्युक्तं निरस्तम्। शब्दाभासादिना तद्धीसंभवात्। अन्यथा तंतुषु पटो नास्तीत्यस्यापि तंतुसमवेते पटत्वं नास्तीत्यर्थ इति प्रागभावादेरपि स्वसमानकालीनप्रतियोगित्वं स्यात्। एतेनैव सप्तमभावो नास्तीत्यादेः द्रव्यादिषड्लक्षणात्यंताभावे भावत्वसामानाधिकरण्यं नास्तीत्यर्थ इति निरस्तम्। शुक्तिरूप्यतादात्म्यवत् संसर्गवत्त्वात्यंतासतोऽपि सप्तमपदार्थादेः पररीत्या प्रसक्तस्य निषेधसंभवे

---

ग्राह्यत्वात्। न चैवं वाय्वादौ रूपाद्यभावस्याप्रत्यक्षत्वप्रसंगः। न्यायमते नीरूपो वायुरित्यादिप्रतीतेरानुमानिकत्ववत् वाय्वादौ रूपाद्यभावप्रतीतेरप्यनुपलब्धिलिंगकानुमितिग्राह्यत्वेनेष्टत्वात्। नचैवमपि धर्माद्यभावस्य प्रत्यक्षत्वप्रसंगः। न्यायमते संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यत्वस्यापि तन्त्रत्वेन कल्पनात्। दृष्टानुसारित्वात् कल्पनाया इति॥ असत्युक्तयोग्यानुपलब्धिसत्त्वमुपपादयति॥ शृंगानुपलब्धिर्हीति। अप्रसिद्धविशेषणत्वोक्तययोगादिति॥ शशशृंगशब्दार्थस्य शशे शृंगसंसर्गस्य त्वदुक्तनिषेधप्रतीतिहेत्वारोपविषयत्वेन प्रसिद्धिसंभवादिति भावः। अस्तु वा शशशृंगं नास्तीति प्रतीतेस्त्वदुक्तरीत्यार्थवर्णनं, तथाप्यसत्प्रतियोगिकाभावस्य प्रत्यक्षत्वं दुर्वारमित्याह॥ शश इति॥

ननु संसर्गस्यानिषेध्यत्वे न तत्र तस्य सत्त्वमापादयितुं शक्यम्। स्वरूपसंबंधातिरिक्तसंबंधसत्त्वे संबंधिसत्त्वस्य प्रयोजकत्वादित्यरुचेराह॥ गोशृंगं नास्तीतिवदिति। तन्निर्विकल्पकादपीति॥ सामान्यधर्मप्रकारकतज्ज्ञानादपीत्यर्थः॥ नचेति॥ सर्वेषां शशशृंगं नास्तीतिनिश्चयसंभवादिति भावः॥ शब्दाभासादिनेति॥ विशेषादर्शनदशायामिति शेषः॥ अन्यथेति॥ प्रतीतिव्याख्यान इत्यर्थः॥ प्रागभावादेरपीति॥ नास्तीतिप्रतीत्या हि प्रागभावस्य प्रतियोगिविरोधित्वं ग्राह्यम्। सा चोक्तरीत्या अन्यथासिद्धेति विरोधासिध्यापत्तिरिति भावः। सप्तमभावो नास्तीत्यस्तो निषेध्यत्वसाधकप्रतीतावन्यथासिद्धिमाशंक्य निराकरोति॥ एतेनैवेति॥ द्रव्यादीनां षण्णां यानि लक्षणानि गुणाश्रयत्वादिरूपाणि तदत्यंताभाव इत्यर्थः॥ संसर्गवत्त्वेति॥ शुक्तौ रूप्यसंसर्गवत्त्वेत्यर्थः॥ परीत्येति॥ मंत्र्यामात्यादिकं पदार्थान्तरमिति वादिरीत्येत्यर्थः।

कुसुमादिकल्पनायोगात् । किंचेह भूतले घटो नास्तीतिधियः संसर्गाभावो विषयः, नतु घटाभावः, इह भूतले घटो नास्तीत्यत्र संयोगो निषिध्यत इत्युदयनोक्तेः भूतले घटोऽस्तीतिबुद्धेस्तत्संबंधविषयत्वेन नास्तीतिबुद्धेरपि तदभावविषयत्वाच्च ।

किंच न तावदयं घटप्रागभावो ध्वंसो वा, प्रतियोगिसमानकालीनत्वात् । नाप्यत्यंताभावः, कदाचित्तत्र घटस्य सत्त्वात् । यदि चैतत्कालावच्छेदेनात्यंताभावस्तर्ह्यत्यंताभावातिरिक्तः प्रागभावादिर्न सिद्ध्येत् । संयोगस्य तु भूतले ध्वंसः भावित्वे प्रागभावः कदाप्यभावे त्वत्यंताभाव इत्यसतः संसर्गस्य प्रतियोगित्वसिद्धिः । नच घटे सत्येव संसर्ग इह निषेध्यः, तस्यापि घटतुल्यत्वेन प्रागभावादिविकल्पप्रसरात् । यत्तूक्तं वर्धमाने "घटात्यंताभाव एवायम्, घटकाले त्वसंबंधान्न भाति । घटात्यंताभावस्य भूतलेन सह संबंधश्च तत्संयोगध्वंसादिः, अथवा प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात् संयुक्तघटा-

---

॥ संसर्गाभाव इति ॥ संसर्गस्याभाव इत्यर्थः । नन्विह भूतले घटो नास्तीति घटत्वावच्छिन्नस्यैव प्रतियोगित्वानुभवात् कथमस्य संसर्गाभावविषयत्वमित्याशंक्य बाधकबलात् तस्य तद्विषयत्वमित्याशंक्याह ॥ किंचेति । तर्हीति ॥ कपाले घटो नास्तीत्यादिप्रतीतेरपि तत्कालावच्छेदेनात्यंताभावविषयत्वस्य वक्तुं शक्यत्वादिति भावः । नन्वयं दोषः संसर्गाभावपक्षेऽपि समानः । ध्वंसप्रागभावयोः भाविघटसंयोगस्थले अपसृतघटस्थले व्यभिचारात् अत्यंताभावस्य तत्र प्रतियोगिनः कदाचित्सत्त्वेनासंभवादित्याशंक्याह ॥ संयोगस्य त्विति ॥

नतु भूतले घटो नास्तीत्यादिप्रतीतेर्न घटनिरूपितघटसंबंधाभावविषयत्वम् । प्रतियोगितावच्छेदकप्रकारकज्ञानाभावात् । यत्र घटसंबंधः कदापि न, तत्र घटाभावविषयत्वे बाधकाभावाच्चेति चेन्न । संसर्गाभावे स्वकाले प्रतियोग्यसहिष्णुत्वस्य प्रागभावादौ क्लृप्ततया भूतले घटो नास्तीति प्रतीयमानाभावस्यापि विद्यमानघटप्रतियोगित्वासंभवेन तत्संबंधाभावविषयत्वे घटादे संबंधाभावज्ञानेऽपि संबंधिनि संबंधितावच्छेदकवैशिष्ट्यावगाहिज्ञानस्य कारणत्वकल्पनात् । न चैवं भूतले घटसत्त्वप्रसंगः । संबंधाभावस्यैव तद्विरोधित्वकल्पनात्, भूतले घटसत्त्वापादनस्य तत्संबंधापादनपर्यवसिततया तद्ध्वंसदशायां तादृशसत्त्वापादनायोगाच्च । भूतले तदत्यंताभावयोरननुभवात्प्रत्यक्षत्वसंबंधस्य सर्वदा सत्त्वात् कथं संबंधोक्तिरित्याशंक्याह ॥ घटात्यंताभावस्येति । संयोगध्वंसादिरिति ॥ आदिपदात्तत्प्रागभावपरिग्रहः । आनीतापसारितघटस्थले संयोगध्वंसभाविस्थले तत्प्रागभावसंबंध इति द्रष्टव्यम् । ननु संयुक्त-

भावोऽयं विशिष्टांतराभाववदुत्पादविनाशशीलोऽन्य एवेति" । तत्र नाद्यः, अभावाधिकरणयोः संबंधांतरमंतरेण तदुपश्लिष्टस्वभावरूपक्लृप्तसंबंधत्यागेन संयोगध्वंसादेः संबंधत्वकल्पने आवश्यकसंयोगध्वंसादेरेव तद्धीविषयत्वोपपत्तेः । अन्यथा घटस्य कपालेष्वत्यंताभाव एव, घटकाले त्वाश्रयाश्रयिभावध्वंसादिरूपसंबंधाभावादप्रतीतिरिति घटात्यंताभावः केवलान्वयी स्यात् । न द्वितीयः संयोगस्य निषेध्यकोटित्वादिष्टसिद्धेः दंडे सत्यपि पुरुषाभावेन दंड्यभाववद्भूतलघटसंयोगे सत्यपि घटाभावेन संयुक्ताभावस्यादर्शनेन क्लृप्तैः संयोगध्वंसादिभिरेव सर्वोपपत्तौ उत्पादविनाशशीलसंयुक्ताभावांतरकल्पनायोगाच्च । तस्मादसतोऽपि निषेध्यत्वं युक्तम् ॥

॥ इति अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभंगः ॥ ६२ ॥

---

घटस्यापि कदाचित्सत्त्वात् कथं तत्रात्यंताभाव इत्याशंक्याह ॥ उत्पादविनाशशील इति । इष्टसिद्धेरिति ॥ संयुक्तघटस्य त्वया निषेधप्रतियोगित्वाभ्युपगमेन भूतले घटो नास्तीति प्रतीतेः संसर्गाभावविषयत्वमिति मदिष्टसिद्धेरित्यर्थः । ननु संयुक्तघटाभावो न संयोगप्रतियोगिकः, येन तवेष्टसिद्धिः स्यात् । किंतु दण्ड्यभाववदन्य एवेत्याशंक्याह ॥ दंडे सत्यपीति ।

इति अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभंगः ॥ ६२ ॥

## ॥ अथ श्रुत्यर्थापत्तिभङ्गः ॥ ६३ ॥

नापि "नासदासीन्नो सदासीत्तम आसीत्" इति श्रुत्यर्थापत्तिरनिर्वाच्ये मानम्, तत्र हि सदसच्छब्दौ पंचभूतपरौ, प्रसिद्धपरत्वे "नासदासीत्" इत्यस्याप्रसक्तप्रतिषेधत्वापातात्, तदानीमित्यस्य वैयर्थ्याच्च। नो सदासीदित्यनेनैव सिद्धत्वेन नासीद्रज इत्यादेर्वैयर्थ्याच्च, "न सच्चासदुच्यते" इत्यादौ भूते प्रयोगाच्च, "यदन्यद्वायोरंतरिक्षाच्चैतत्सदिति वायुरंतरिक्षं चासत्" इतिश्रुतेश्च। अन्यथा "आनीदवातम्" इतिवाक्यशेषोक्तं प्रलये सद्ब्रह्माप्यनिर्वाच्यं स्यात्। ख्यात्यंतरभंगस्त्वन्यत्र द्रष्टव्यः ॥

॥ इतिश्रुत्यर्थापत्तिभंगः ॥ ६३ ॥

---

### ॥ अथ श्रुत्यर्थापत्तिभंगः ॥ ६३ ॥

ननु नासदासीदित्यादिश्रुतौ प्रलयकाले सदसत्पदार्थनिषेधपूर्वकं तमःसत्त्वप्रतिपादनात्तस्य च तमसोऽनिर्वाच्यत्वं विनानुपपत्तेः श्रुत्यर्थान्यथानुपपत्तिरेवानिर्वाच्यत्वे प्रमाणमित्याशंक्य निराकरोतीति ॥ नापीति ॥ ननु "नहीह भानु" रित्यादिवत् कुसमयप्राप्तनिषेधकत्वसंभवात्कथं श्रुतेरप्रसक्तप्रतिषेधकत्वमित्यनुशयादाह ॥ तदानीमित्यस्येति ॥ असतः शशशृंगादेः सर्वदा असत्त्वादिति भावः ॥ नो सदासीदित्यनेनैवेति ॥ रजसोऽपि सत्त्वान्नो सदासीत्यस्य च सत्त्वावच्छिन्ननिषेधपरत्वस्य त्वया स्वीकारादिति भावः । ननु सदसच्छब्दयोः प्रामाणिकनिःस्वरूपार्थकत्वस्य प्रसिद्धत्वात् कथं भूतपंचकार्थकत्वमुच्यत इत्यत आह ॥ नासदिति ॥ "मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते" इति पूर्ववाक्यानुसारात्सदसच्छब्दयोः भूतपंचकपरत्वमवसीयत इति भावः ॥ अन्यथेति ॥ नासदासीदिति श्रुतिगतसदसच्छब्दयोः प्रामाणिकात्यंतासत्परत्व इत्यर्थः । ननूक्तरीत्याऽनिर्वचनीयख्यात्यसंभवेऽपि ख्यात्यंतरं तु स्यात् । तथाहि तासां त्रिवृतं त्रिवृतमेकैकामकरोत्, समेत्यान्योन्यसंयोगं, त्र्यात्मकत्वात्तु भूयस्त्वादित्यादिश्रुतिस्मृतिसूत्रैः सर्वस्य सर्वात्मकत्वावेदनेन शुक्तौ तत्र रजतभ्रमनियामकस्य रजतसादृश्यस्य गुणावयवकर्म(धर्म)सामान्य(रूप)परतया रजतावयवप्रवेशं विनायोगेन शुक्त्यादेः रजतात्मकत्वसिद्ध्या तत्रेदं रजतमिति जायमानं ज्ञानं यथार्थमेव। किंच लौकिकप्रत्यक्षस्य विषयजन्यत्वसन्निकर्षजन्यत्वात् शुक्तेः रजतात्मकत्वसिद्धिः । रजतं साक्षात्करोमीत्यनुव्यवसायेन तस्य लौकिकत्व-

सिद्धेः। न चैवं निर्देशार्थक्रियाव्यवस्थानुपपत्तिः। अवयवभूयस्त्वेन तदुपपत्तेः। दोषमहिम्नेन्द्रियं भूयांसमपि शुक्त्यंशं परित्यज्य अल्पीयांसमपि रजतांशं प्रकाशयतीति तत्र तदर्थ(र्थि) प्रवृत्तिश्च युज्यते। दोषापगमे (वा) च शुक्त्यवयवानामेव भूयस्त्वादियं शुक्तिरेव न रजतमिति बाधप्रतीतिश्च युज्यते। ततश्च तज्जातिरेव युक्तेति। यद्वा आत्मख्यातिरेवास्तु। तथापि शुक्ताविदं रजतमिति प्रतीतरजतं सदंतरमेव। न चांतःसत्त्वे प्रमाणाभावः, असत्त्वे च (पुनः) प्रतीत्यनुपपत्तेः, बहिस्सत्त्वे च भ्रांत्यनुपपत्तेः देशांतरसत्त्वे च पुनः प्रतीत्यनुपपत्तेः परिशेषादिदं रजतं ज्ञानरूपं इंद्रियसंप्रयोगमंतरेणापरोक्षत्वात् ज्ञानवदित्यनुमानाच्च तस्य ज्ञानाकारत्वसिद्धेः। न चैवं भ्रमत्वानुपपत्तिः। आंतरस्य बाह्यतावभासो भ्रम इत्यंगीकारात्। नेदं रजतमिति बाधकस्यापि बाह्यत्वनिषेधेनैव बाधकतोपपत्तेश्चेति। यद्वा शुक्ताविदं रजतमिति ज्ञानं ग्रहणस्मरणरूपं ज्ञानद्वयमेवास्तु। नच रजतज्ञानस्य स्मृतित्वे तत्तोल्लेखापत्तिः। पदजन्यस्मृतिवत् तदनुल्लेखोपपत्तेः। नच प्रवृत्त्यन्यथानुपपत्त्या तस्य विशिष्टज्ञानत्वसिद्धिः। रजतप्रत्यक्षे इतररजतेंद्रियसन्निकर्षाभावेन तत्प्रत्यक्षासंभवात् (अभावात्)। तद्धेतु (कत्वानावश्यकत्वाच्च) त्वेनावश्यकत्वाच्च। भेदाग्रहा (देरेव) देव प्रवृत्त्युपपत्तेः। नचैवं शुक्तौ रजते नेदं रजतमिति ज्ञानकाले च प्रवृत्तिप्रसंगः। रजते भेदभ्रमे च अन्यथाख्यात्यापत्तेरिति वाच्यम्। स्वतंत्रोपस्थितेष्टभेदाग्रहस्यैव प्रवृत्तिहेतुत्वोपगमादित्याशंक्याह॥ ख्यात्यंतरभंगस्त्वन्यत्र द्रष्टव्यः इति। सुधादावित्यर्थः। तद्भंगप्रकारस्तु—तत्र न तावदाद्यः पक्ष उपपद्यते। उदाहृतश्रुत्यादिना सर्वस्य तेजोबन्नात्मकत्वप्रतिपादनपरत्वेन शुक्त्यादेः रजताद्यात्मकत्वप्रतिपादनपरत्वासिद्धेः। नापि सादृश्यान्यथानुपपत्त्या शुक्तेः रजतात्मकत्वसिद्धिः। सादृश्यस्य पदार्थांतरत्वेन तस्य तदवयवानुप्रवेशाकल्पकत्वात्। तथात्व निरवयवानां आकाशकालदिक्‌ततीगंधसर्पगंधादीनां परस्परसादृश्याभावप्रसंगात्। नापि लौकिकसाक्षात्कारस्य विषयतत्सन्निकर्षादिजन्यतया (तत्र) तत्सिद्धिः। अंजनादिसहकारिविशेषसामर्थ्याद्धिमहे ऽपि निधिनिक्षेपादौ लौकिके तत्साक्षात्कारदर्शनेनोक्तनियमासिद्धेः। नहि तत्र साक्षात्कारोऽलौकिकत्वमनुभवप्रसावो नेत्यस्ति येन तत्प्रतीतेः लौकिकसाक्षात्कारत्वं नोपेयं स्यात्। नचैवं व्यभिचारादविषयेन्द्रियसन्निकर्षो न प्रत्यक्षहेतुः स्यादिति वाच्यम्। सहकारिविशेषविरहस्थल एवोक्तप्रत्यक्षहेतुत्वेनेन्द्रियाणां प्राप्यकारित्वकल्पनात्। तथाविधसाक्षात्कारे गोमयप्रभववृश्चिक इव वैजात्यकल्पनेन व्यभिचाराभावोपपत्तेश्च। किंच शुक्तिरजताद्यनेकात्मकत्वे विशेषदर्शनानंतरं नेदं रजतं किंतु शुक्तिरेवेति तत्र रजताद्यंशप्रमात्वाभावं च न स्यात्। किंचैवं दोषस्योपयोगो न स्यात्। विद्यमानग्रहणे तस्याहेतुत्वादिति। नापि

ज्ञानाकारमितिमतान्तरानुसारेण सदेव रजतमिति द्वितीयपक्षो युक्तः । ज्ञानाकारत्वे मानाभावात् । इन्द्रियसंप्रयोगमन्तरेणापरोक्षत्वहेतोर्बाह्यतयैवानैकान्त्यात् । शुक्तींद्रियसंप्रयोगेण तस्यापरोक्ष्यस्वीकारादसिद्धेश्च । ज्ञानस्यापीन्द्रियसंप्रयोगादेवापरोक्ष्यस्वीकारेण दृष्टांतस्य साधनवैकल्याच्च । आंतरत्वे च गुंजापुंजादौ दहनादिसमारोपे देहदाहादिप्रसंगात् । असदेव रजतं प्रत्यभादित्यनुभवविरोधाच्च तस्य सत्त्वमपि । नचासत्त्वे प्रतीत्यनुपपत्तिः । बाह्यताया इव तदुपपत्तेः । नापि ग्रहणस्मरणात्मकं ज्ञानद्वयमिति तृतीयपक्षोऽपि । लाघवेन प्रवृत्तित्वावच्छेदेन विशिष्टज्ञानस्यैव कारणत्वकल्पनेन तदभावे प्रवृत्त्यनुपपत्तेः । नच विशिष्टज्ञानसामग्रीबाधात् तद्बाधः । सकपीत्या तत्संभवादिति ।

॥ इति श्रुत्यर्थापत्तिभंगः ॥ ६३ ॥

## ॥ अथ स्वाभिमतान्यथाख्यातिसमर्थनभङ्गः ॥ ६४ ॥

तस्मादनिर्वाच्यख्यात्यसंभवात् उद्बुद्धरूप्यसंस्कारसचिवं दुष्टेंद्रियं स्वसन्निकृष्टं शुक्तीदमंशमत्यंतासद्रूप्यात्मना गृह्णातीत्यन्यथाख्यातिरेव युक्ता। रूप्यस्यासत्त्वे चासदेव रूप्यमभादिति प्रत्यक्षम्, विमतमसत् सत्त्वानधिकरणत्वान्नृशृंगवत्, अप्रमा असद्विषयिका सत्त्वानधिकरणविषयकत्वात् सन्मात्राविषयकत्वे सति सविषयकत्वाच्च असद्विषयकपरोक्षज्ञानवदित्याद्यनुमानं च मानम्। नचैवमसत्ख्यात्यापत्तिः, मन्मते रूप्यस्यासत्त्वेऽपीदमंशस्य सत्त्वेन बाह्यमत इवेदं रूप्यमितिज्ञाने भातस्य सर्वस्याप्यसत्त्वाभावात्। अन्यथा अद्वैतिमतेऽपि सदन्यप्रतीतेरसतश्च परोक्षप्रतीतेस्तार्किकमते शुक्तिः(क्ती)रूप्यं चेत्युभयतादात्म्यस्य वा संसर्गस्य वाऽसत एव प्रतीतेर्बाह्यमतापत्तिः।

ननूभयं चेतादात्म्यं त्वतोऽधिकस्य तस्याभावात्तयोश्च सत्त्वाच्चासतः ख्यातिरिति चेन्न, रूप्यतादात्म्यस्य रूप्यत्वसंसर्गस्य चेदमंशनिष्ठत्वेनाग्रहणे इदं रूप्यं चेति ज्ञानाकारापातेनेदं रूप्यत्वेन ज्ञातमित्यनुव्यवसायायोगात्, पुरोवर्तिनिष्ठाभेदाग्रहे प्रवृत्त्यनुपपत्तेश्च,

---

### ॥ अथ स्वाभिमतान्यथाख्यातिसमर्थनम् ॥ ६४ ॥

अनिर्वाच्यख्यातीत्येतत् ख्यात्यंतराणामुपलक्षणम्। ननु यदि पुरोदेशे रजतं न स्यात् कथं तर्हि असन्निकृष्टस्य तस्य भानं अतिप्रसंगादित्याशंक्याह ॥ उद्बुद्धेति ॥ न चातिप्रसंगः। दोषस्यैव तन्नियामकत्वात्। नच संस्कारजन्यत्वेन स्मृतित्वापत्तिः। संप्रयोगासहकृतसंस्कारजन्यत्वस्यैव तत्प्रयोजकत्वादिति भावः ॥ अत्यंतासद्रूप्यात्मनेति ॥ नचाननुभूतरजतस्य पुंसस्तद्भ्रमाभावात् अनुभूतं सदेव रजतं भ्रमविषय इति वाच्यम्। प्रागनुभूतं रजतं न भवतीति निश्चयदशायामपि भ्रमस्य जायमानत्वेन तस्य तद्विषयत्वासंभवात् ॥ असदिति ॥ त्रिकालसर्वदेशीयनिषेधप्रतियोगीत्यर्थः ॥ सत्त्वानधिकरणत्वादिति ॥ अबाध्यत्वानधिकरणत्वादित्यर्थः। तेन सत्त्वादौ न व्यभिचारः। नच बाध्यत्वस्यैव हेतु(संबंधि)विशेषणत्वाद्वैयर्थ्यमिति वाच्यम्। अबाध्यत्वाभावे वैयर्थ्याशंकानवकाशादिति ध्येयम् ॥ सन्मात्राविषयकत्वे सतीति ॥

ननु सन्मात्राविषयत्वं हि सदितराविषयत्वे सति सद्विषयत्वाभावः। स च सद्विषयत्वस्य बाधात् सदितरविषयत्वेनैव पर्यवस्येत्। तथाच विशेष्यस्य साध्याविशिष्टत्वं स्यादिति चेन्न।

सन्मात्रविषयकत्वे अप्रामाण्यायोगाच्च । नच तथात्वेऽपि तदभाववति तत्प्रकारकत्वरूपम-प्रामाण्यमविरुद्धमितिवाच्यम्, तत्प्रकारकत्वस्यापि तद्वैशिष्ट्यविषयकत्वरूपत्वेनासत इदंरूप्यत्ववैशिष्ट्यस्य प्रतीतेर्दुर्वारत्वात् । नच तद्विशेषणज्ञानजन्यत्वं तत्प्रकारकत्वम्, तस्यापि तद्वैशिष्ट्यविषयकत्वव्याप्तत्वात्, तद्वैशिष्ट्यस्याभानेऽनुव्यवसायविरोधस्योक्तत्वाच्च । ईश्वरज्ञानस्य निष्प्रकारकत्वेन निर्विकल्पकत्वापाताच्चेति ।

॥ इति स्वाभिमतान्यथाख्यातिसमर्थनम् ॥ ६४ ॥

---

सदितराविषयत्वस्य विशिष्टस्य सद्विषयत्वाभाव(स्य)हेतुविशेषणतया तन्मात्रस्य घटादौ व्यभिचारितया विशेष्यवैयर्थ्याभावात् । तावन्मात्रं च प्रमायां व्यभिचारीति सत्यंतम् ॥ अप्रामाण्यायोगाच्चेति ॥ असद्विषयप्रामाण्यरूपत्वादिति भावः ॥ तथात्वेऽपीति ॥ सन्मात्रविषयकत्वेऽपीत्यर्थः ॥ तद्वैशिष्ट्यविषयकत्वरूपत्वेनेति ॥ शुक्त्यनुयोगिकरजतत्वप्रतियोगिकवैशिष्ट्यविषयकत्वरूपत्वेनेत्यर्थः ॥ तस्यापीति ॥ तथाच तद्वैशिष्ट्यविषयकत्वमप्यावश्यकमिति भावः ॥ अनुव्यवसायेति ॥ इदं रूप्यत्वेनाभादित्यनुव्यवसायेत्यर्थः ॥ ईश्वरज्ञानस्येति ॥ त्वदुक्तसप्रकारत्वस्य तत्राभावादिति भावः ।

॥ इति स्वाभिमतान्यथाख्यातिसमर्थनम् ॥ ६४ ॥

## ॥ अथ आविद्यकरजतोत्पत्तिभङ्गः ॥ ६५ ॥

यच्चेदमुच्यते, अध्यस्तमज्ञानोपादानकं तत्वज्ञाननाश्यं चेति तन्न, तथात्वे रूप्यमुत्पन्नं नष्टं चेतिधीप्रसंगेन त्रैकालिकनिषेधायोगात्। नचार्थक्रियाकारित्वादिरूपलौकिकपारमार्थिकत्वाकारेण तथा निषेधः, रूप्यं नासीदस्ति भविष्यतीति स्वरूपेणैव निषेधात्, पारमार्थिकत्वस्यापि रूप्यवत् प्रतीतत्वेन तत्काले सत्त्वाच्च। नाप्ययं निषेध आपणस्थरूप्यस्य, "नेह नानास्ति" इतिनिषेधाय तात्विकप्रपंचांतरापातात्, तस्याप्रसक्तेश्च। अन्यथाऽन्यथाख्यात्यापत्तेः। आभासस्य प्रसक्तिरेव पारमार्थिकस्य निषेधे तंत्रमितिचेन्न, यत्प्रतीतं तन्नास्तीत्यनुभवविरोधात्, प्रतिपन्नोपाधावनिषिद्धस्याभासस्य मिथ्यात्वासिद्धेश्च। निवृत्तिज्ञान इव त्रैकालिकनिषेधज्ञानेऽपि प्रसक्तस्याभासस्य निषेधसंभवे निषेधं प्रत्यवच्छेदकमधीस्थं पारमार्थिकम्, अनवच्छेदकस्याभावस्य धीस्तु निषेधधीहेतुरिति वैयधिकरण्यकल्पनायोगाच्च, अनारोपपूर्वकनिषेधस्यानुपपत्तेश्च। नच तत्रापि बुद्धिपूर्वकारोपकल्पना, यस्यारोपस्तस्यैव निषेध इति मते निषेधस्य प्रसक्त्यर्थं बुद्धिपूर्वकारोपकल्पनेऽपि त्वन्मते तदयोगात्, घटे स्मृते तदारोपं विनैवेह घटो नास्तीतिज्ञानस्यानुभवात्। न चाभासप्रसक्त्याऽनाभासस्यापि

---

॥ अथाविद्यकरजतोत्पत्तिभंगः ॥ ६५ ॥

ननु शुक्तावध्यस्तं नासद्भवितुमर्हति। तस्याज्ञानोपादानकत्वात्। तज्ज्ञाननाश्यत्वाच्चेति यन्मतं तन्मतं दूषयितुमनुवदति ॥ यच्चेदमुच्यत इति। तात्विकप्रपंचांतरेति ॥ शुक्तिरूप्यवत् प्रतिपन्नस्य जगतोऽपि निषेधायोगादिति भावः ॥ तस्येति ॥ आपणस्थरूप्यस्येत्यर्थः ॥ अन्यथेति ॥ आपणस्थरूप्यस्यापि प्रसक्त्यंगीकार इत्यर्थः ॥ निषेधं प्रतीति ॥ पारमार्थिकधीस्थनिषेधं प्रत्यवच्छेदकं (अनवच्छेदकस्य) धीस्थनिषेधधीहेतुरिति विकल्पनायोगादित्यर्थः ॥ अनारोपपूर्वकनिषेधस्येति ॥ अनाहार्यारोपं विना बाधस्यानुपपत्तेश्चेत्यर्थः।

ननु निषेधप्रमात्वाविशेषात् भूतले घटो नास्तीत्यादाविव बाधस्थलेऽपि बुद्धिपूर्वकारोप एव हेतुरस्त्वित्याशंक्याह ॥ नचेति। घटे स्मृत इति ॥ तथाच बाधव्यतिरिक्तस्थले आरोपस्याहेतुतया न तद्दृष्टांतेनात्र बुद्धिपूर्वकारोपकल्पनेति भावः ॥ आभासस्येति ॥ यथा घटादिप्रदार्थे सामान्यप्रत्यासत्त्या सकलव्यक्त्युपस्थितिः, एवमत्रापि सामान्यप्रत्यासत्त्यैवानाभासस्याप्युपस्थिति।

प्रसक्तिः, आभास इत्यप्रसक्तेः । नच रजतत्वाकारेणानाभासस्यापि प्रसक्तिः, आभासानाभासानुगतसामान्याभावात्, फलबलेन व्याप्तिज्ञाने सामान्यस्य प्रत्यासत्तित्वेऽपि अतिप्रसंगेनान्यत्र तदभावाच्च ।

किंचाध्यस्तं न सोपादानकं सकर्तृत्वस्याप्यापातात्, अविद्यालक्षणभंगेऽध्यस्तस्याज्ञानोपादानकताया निरासाच्च । इदं रूप्यमितिरूप्यानुविद्धस्येदमंशस्यैव दोषादिवशात् सत्यविकाराविरोधेन रूप्यात्मना मिथ्याविकाररूपविवर्तसंभवे तदननुविद्धस्याज्ञानस्योपादानत्वायोगाच्च, परोक्षधीरप्यज्ञानविरोधिनीत्युक्तत्वेन श्वेतत्वेनानुमिते शंखे श्वैत्याज्ञानाभावेन पीतत्वभ्रमायोगाच्च, त्वन्मते बिंबप्रतिबिंबयोरैक्यस्य प्रत्यक्षतया ऐक्याज्ञानाभावेनोपाधिबलादपि तत्र भेदभ्रमायोगाच्च, घटत्वेन साक्षात्कृते घटे घटत्वाज्ञानाभावेन पटोऽयमितिवाक्याभासाद्भ्रमानुत्पत्तिप्रसंगाच्च । अयं घट इत्यत्राग्निना सिंचेदितिवदन्वयविरोधिनो धर्मस्यानुपादानेनान्वयधीर्युक्तैव, साक्षिवेद्येऽज्ञानसुखादावज्ञानाभावेन तत्र ज्ञानाभाववत्त्वदुःखाभाववत्त्वादिभ्रमायोगाच्च । परोक्षतत्वज्ञानस्याज्ञाननिवर्तकत्वे शंखे श्वैत्यानुमित्याऽप्यज्ञाननिवृत्तौ भ्रमानुत्पत्त्यापातात्, अपरोक्षतत्वज्ञानस्य च परोक्षे अभावेन परोक्षाध्यासस्यानिवृत्त्यापाताच्च, रूप्यं दृष्ट्वाऽधिष्ठानतत्वज्ञानं विना निवृत्तस्य पुंसोऽज्ञाननिवृत्त्यभावेन मिथ्यात्वेनाधिष्ठानतत्वज्ञानैकनिवर्त्ययो रूप्यज्ञानाकाराविद्यापरिणामयोर्निवृत्त्यभावेन रूप्यधीसामग्री-

---

स्यादिति भावः । आभासस्य प्रसक्त्या (प्रत्यासत्त्या) अनाभासस्य प्रत्यासत्तिरित्यत्र किमाभासस्य सामान्यप्रत्यासत्त्या अनाभासस्य प्रसक्तिरुच्यते किंवा वस्तुगत्याभासस्य रजतत्वादिसामान्यप्रत्यासत्त्या अनाभासस्य प्रसक्तिरुच्यत इति विकल्प्य आद्यं प्रत्याह ॥ आभास इति ॥ द्वितीयमवांक्य निराकरोति ॥ नचेति । अतिप्रसंगेनेति ॥ पुरोवर्तिनि घटत्वेन गृह्यमाणे घटांतरस्यापि निषेधविषयतापत्तिरूपातिप्रसंगेनेत्यर्थः ॥ सकर्तृत्वस्यापीति ॥ नचेष्टापत्तिः । ईश्वरस्य बाधकाभावात्सत्त्वाज्जीवस्य च मया रूप्यं सृष्टमिति प्रतीत्यदर्शनाच्च तस्य कर्तृत्वं नेति भावः ॥ निरासाच्चेति ॥ अज्ञाने उपादानत्वप्रयोजकस्य भावत्वस्य सत्त्वस्य चाभावेन तस्योपादानत्वनिरासाच्चेत्यर्थः ।

ननु घटत्वेन साक्षात्कृते पटोऽयमिति वाक्यस्य "अग्निना सिंचेत्' इति वाक्यवदयोग्यत्वात्तयोपलभ्यमेवेत्याशंक्याह ॥ अयं घट इत्यत्रेति ॥ घटत्वपटत्वयोः परस्परविरुद्धत्वाद्यत्वा

सद्भावेन रूप्यप्रतीतेर्दुर्वारत्वाच्च। नच सर्वज्ञानानां स्वगोचरशूरत्वाद्यथाभ्रांति तदर्थोऽङ्गीकार्य इति युक्तम्, अर्थतत्त्वव्यवस्थापकस्य बाधस्यैवानुसर्तव्यत्वेनानेवंविधस्य भ्रमस्यातथात्वात्, अन्यथा तदर्थस्य तात्त्विकत्वापातात्॥

॥ इति आविद्यकरजतोत्पत्तिभंगः ॥ ६५ ॥

---

प्रतिसंधानदशायामिति भावः। ननु पटत्वाभावव्याप्यत्वाज्ञानमेव तद्भ्रमहेतुरित्यतो दोषांतरमाह ॥ माक्षिवेद्य इति ॥ अभ्यस्तमज्ञानोपादानकमित्येतद्दूषयित्वा अभ्यस्त (त्वं) तत्त्वज्ञाननाश्यमित्यत्र किमपरोक्षज्ञानं परोक्षज्ञानं वेति विकल्पक्रमेण दूषयति ॥ अपरोक्षतत्त्वज्ञानस्येति। स्वगोचरशूरत्वादिति ॥ स्वविषयसाधनसमर्थत्वादित्यर्थः ॥ अनेवंविधस्येति ॥ अर्थतत्वाव्यवस्थापकस्येत्यर्थः ॥ अन्यथेति ॥ भ्रांतेरप्यर्थतत्वव्यवस्थापकत्व इत्यर्थः ॥

॥ इत्याविद्यकरजतोत्पत्तिभंगः ॥ ६५ ॥

## ॥ अथ भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभङ्गः ॥ ६६ ॥

यच्चेदमुच्यते अधिष्ठानांशे इंद्रियजन्यांतःकरणवृत्तिरध्यस्तांशे तदजन्याविद्यावृत्तिरिति ज्ञानद्वयम्, नचैवमख्यात्यापत्तिः तादात्म्यस्यापि भानादिति। तन्न, त्वन्मते इदमंशस्याप्यध्यस्तत्वेनेदमितिज्ञानं द्व्यात्मकम्, इदं रूप्यमितिज्ञानं त्र्यात्मकं स्वाप्नशुक्त्यादाविदं रूप्यमितिज्ञानं चतुरात्मकमितिप्रसंगात्, शंखे पीतत्वं पश्यामीति पीतत्वांशे चाक्षुषत्वादिजातिविशेषस्यानुव्यवसायाच्च, रूप्यज्ञानस्याविद्यावृत्तित्वेन प्रातिभासिकत्वे प्रतिभासावध्यंभावाद्ध्यस्तविषयकज्ञानस्य चाध्यस्तत्वनियमादविद्यावृत्तेरप्यविद्यावृत्त्यंतरप्रतिबिंबितचैतन्यवेद्यत्वमेवं तस्य तस्यापीत्यनवस्थानाच्च, अज्ञानस्य रूप्याकारज्ञानात्मना परिणामे रूप्यमितिप्रतीतेर्ज्ञानगताकारेणैवोपपत्तेः भ्रमस्य चातीतादिज्ञानवदर्थाभावेऽपि संभवाद्रूप्याकाराविद्यावृत्तेर्वैयर्थ्याच्च, दोषाणां स्वाश्रयजन्य एवातिशयहेतुत्वेनेंद्रियदोषप्रयुक्तभ्रमत्वाश्रये करणांतराजन्ये च रूप्यज्ञाने इंद्रियकरणकत्वस्य दुर्वारत्वाच्च। अन्यथा त्वचा शंखं चक्षुषा च शुक्तिसादृश्यं ज्ञात्वा निमीलितनेत्रस्य नेत्रगतदोषात् पीतत्वरूप्यादिभ्रमः स्यात्। रूप्येदमंशयोस्तादात्म्यभानेनाख्यातिवैषम्येऽपि ज्ञानैक्यानुभवविरोधस्याख्यातिपक्षदोषस्य साम्याच्च।

एतेन विषययोरध्यस्तेनाभेदेनैकत्वापन्नत्वात् ज्ञानयोरप्यैक्यमुपचरितमिति निरस्तम्। ज्ञानैक्यानुभवविरोधात्, एकविषयकधारावाहिकज्ञानानामप्यैक्यानुभवापाताच्च। कल्पितस्यार्थैक्यस्य ज्ञानैक्योपचाराहेतुत्वाच्च। एतेन यच्चेदमंशावच्छिन्नचैतन्याविद्याविवर्तत्वा-

---

॥ अथ भ्रमस्य अद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ॥ ६६ ॥

प्रसंगसंगत्या ॥ यच्चेदमुच्यत इति। चतुरात्मकमिति ॥ शुक्त्यधिष्ठानांशः, शुक्त्यंशः, इदमंशो, रजतांशश्चेत्यंशचतुष्टयभानात् स्वाप्ने शुक्त्यादाविदं रजतमिति ज्ञानं चतुरात्मकं स्यादित्यर्थः ॥ शंख इति ॥ तथाचाध्यस्तांशेऽपि प्रमाणप्रवृत्तिरेवांगीकार्येति भावः ॥ अध्यस्तत्वनियमादिति ॥ अध्यस्तत्वनियमस्य त्वयांगीकृतत्वादित्यर्थः ॥ रूप्याकाराविद्यावृत्तेरिति ॥ रूप्यरूपाविद्यापरिणामस्येत्यर्थः। किंच रूप्यज्ञानमिंद्रियजन्यम्। तदाश्रयदोषजन्यत्वात्, व्यतिरेकेण घटवत्, करणांतराजन्यत्वे सति जन्यज्ञानत्वात् घटादिज्ञानवदित्यभिप्रेत्याह ॥ दोषाणामिति ॥ अतिशयहेतुत्वमप्यंशोऽस्मत्पक्षसाधकत्वात् ॥ अन्यथेति। शुक्तिसादृश्यमिति ॥ शुक्तिगतम् रजतसादृश्य-

रूप्यमिदंत्वेन भाति, तथेदंवृत्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्यज्ञानमिदंज्ञानत्वेन भातीति निरस्तम्। बाधकालेऽर्थयोरिव ज्ञानयोरपि भेदधीप्रसंगात्, इदंवृत्तेर्ज्ञातैकसत्त्वेन तदवच्छिन्नचैतन्येऽज्ञानाभावाच्च, शुक्तितत्वं जानतः इदंवृत्तितत्वं चाजानतः पुंसः रूप्यनिवृत्तावपि तज्ज्ञानानुवृत्तिप्रसंगाच्च, अबाधितज्ञानैक्यानुभवविरोधाच्च। न चेंद्रियेणाध्यस्तस्यासंप्रयोगो बाधकः, तस्य प्रमायामेवापेक्षितत्वेनाप्रमायां दोषमपेक्ष्यैवेंद्रियस्य हेतुत्वोपपत्तेः, रूप्यं प्रत्यप्यंगुल्यग्रनिर्देशचेलांचलबंधनादिना शुक्तेरेवाधिष्ठानत्वेन तदवच्छिन्नचैतन्यस्यानधिष्ठानत्वाच्च।

न चाविद्यावृत्तेर्ज्ञानत्वाभावाज्ज्ञानैक्यधीः, परोक्षाध्यासे चैतन्यप्रतिफलनाभावेनाध्यस्तांशे जानामीत्यनु(व्यवसाया)भवायोगात्, ज्ञाने अपवादादप्रामाण्यमित्यस्यायोगाच्च, विवरणेऽतःकरणपरिणामे ज्ञानत्वोपचारादित्युक्त्या तद्वृत्तावपि ज्ञप्तित्वाभावाच्च, प्रकाशकचैतन्यस्य प्रतिफलनोपाधित्वस्य चाविद्यावृत्तावपि सत्वात् अज्ञाननिवर्तकत्वस्य च धारावाहिकद्वितीयाद्यंतःकरणवृत्तावप्यभावात्। नच वृत्तिभेदेऽपीदंरूप्ययोरिदमंशावच्छिन्नसाक्षिवेद्यत्वेन फलैक्येन ज्ञानैक्यधीः, परोक्षभ्रमे अपरोक्षैकरसचैतन्यरूपफलैक्याभावात्, त्वन्मते इदं-

---

मित्यर्थः ॥ उपचरितमिति ॥ अर्थगतमैक्यं परस्परासंबंधेन ज्ञाने भासत इत्यर्थः ॥ कल्पितस्येति॥ कल्पितस्यासत्त्वात् असतः साधकत्वस्य च निरस्तत्वादिति भावः। नच बाध्यभेदग्राहकसामग्र्याः सत्त्ववत् ज्ञानभेदग्राहकसामग्र्या अभावाच्च तद्भेदग्रह इति वाच्यम्। नियमेन सामग्र्यभावकल्पने प्रमाणाभावेन कदाचित्तद्भेदग्रहप्रसंगात्। यद्वा एतदस्वरसादाह ॥ इदंवृत्तेरिति। तज्ज्ञाननिवृत्तिप्रसंगाच्चेति ॥ अधिष्ठानतत्वज्ञानस्यैवाध्यासनिवर्तकत्वादिति भावः। इदमंशावच्छिन्नचैतन्यस्योक्ताधिष्ठानत्वमिति यदुक्तं तदपि नेत्याह ॥ रूप्यं प्रत्यपीति ॥

ननु ज्ञानैक्यानुभवो न विरुद्धः। ज्ञानस्यांतःकरणवृत्तेरेकत्वात् अविद्यावृत्तेरज्ञानत्वात्। तद्विषयं जानामीत्यनुभवस्तु चैतन्यप्रतिफलनप्रयुक्त इत्याशंक्य निराकरोति ॥ नचेति। ज्ञान इति ॥ अप्रमाणभूताविद्यावृत्तेर्ज्ञानान्यत्वोपगमादिति भावः। नन्वंतःकरणवृत्तेः वृत्तेः स्वतो ज्ञानत्वाभावेऽपि चैतन्यप्रतिफलनौपाधिकज्ञानत्वमस्तीत्याशंक्य तुल्यमविद्यावृत्तावपीत्याह ॥ प्रकाशेति ॥ नन्वविद्यानिवर्तकत्वरूपं ज्ञानं अंतःकरणस्यैव नत्वविद्यावृत्तेरित्याशंक्याह ॥ अज्ञाननिवर्तकस्येति। परोक्षभ्रम इति ॥ तत्र चैतन्यप्रतिफलनस्याभावेन ज्ञानैक्यानुभवो न स्यादिति भावः।

ननु चिन्मात्रैक्यमादाय ज्ञानैक्यानुभव इत्याशंक्य घटपटादिज्ञानानामैक्यापत्तेर्नैवमित्याह ॥ अफलेति ॥ ननु रूप्यं प्रतीव इदमंशं प्रत्यपि इदमंशावच्छिन्नचैतन्यस्यैवाधिष्ठानतया

रूप्ययोर्यथाक्रममिदंरूप्याकारांतःकरणाविद्यावृत्तिप्रतिबिंबिताभ्यां वा तदभिव्यक्ताभ्यामिदमंशानवच्छिन्नतदवच्छिन्नाभ्यामिदमंशरूप्याधिष्ठानचैतन्याभ्यां वा वेद्यत्वेनावच्छिन्नस्य फलस्य भिन्नत्वाच्च। अफलचिन्मात्राभेदस्य च सर्वत्र सत्त्वात्। नहि रूप्यं प्रतीवेदमंशं प्रत्यपीदमंशावच्छिन्नचैतन्यमधिष्ठानम्, आत्माश्रयात्। नापीदमंशं प्रतीव रूप्यं प्रत्यपीदमंशानवच्छिन्नमधिष्ठानम्, इदं रूप्यमितिधीविरोधात्।

एतेनेदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनात् ज्ञानैक्यमिति निरस्तम्। क्रमिकयोरिदमितिज्ञानयोरप्यैक्यापातात्, समूहालंबनज्ञानस्यापि भेदापाताच्च, तस्यातदाकाररूप्यवृत्तौ प्रतिफलनायोगाच्च। अन्यथा रूप्याधिष्ठानेदंवृत्तिप्रतिफलितचितैव रूप्यप्रतीतिसंभवाद्रूप्याकाराविद्यावृत्तिर्व्यर्था, तस्माज्ज्ञानैक्यानुभवविरोधो दुष्परिहरः। तिक्तो गुड इत्यादावपि मधुरो गुडः सुरभि चंदनमित्यादाविव ज्ञा(मा)नांतरोपनीतविशेषणविषयकमेकमेव ज्ञानम्। तस्माच्छुक्तिरूप्याद्यपि नानिर्वाच्यं सुतरां जगदिति पारमार्थिकमेव तदिति॥

॥ इति भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ॥ ६६ ॥

---

फलैक्यमुपपद्यत इत्याशंक्याह ॥ नहीति। इदं रूप्यमितीति ॥ अन्यतरस्याधिष्ठानतादात्म्येन धीनियमादिति भावः ॥ समूहालंबनेति ॥ तत्रेदमंशावच्छिन्नचैतन्ययोर्भिन्नत्वादिति भावः ॥ तस्येति ॥ इदमंशावच्छिन्नचैतन्यस्येत्यर्थः। ननु तिक्तो गुड इत्यादौ रसद्रव्ययोर्भिन्नेन्द्रियग्राह्यत्वेन (रसनेन्द्रियग्राह्यत्वेन.पा), ज्ञानभेदेऽप्यपि धर्मैक्यधीस्तद्वदिहापि स्यादित्याशंक्याह ॥ तिक्तो गुड इति ॥ परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥

॥ इति भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ॥ ६६ ॥

## ॥ अथ सत्तात्रैविध्यभङ्गः ॥ ६७ ॥

यच्चेदमुच्यते ब्रह्म पारमार्थिकं सत्, जगद्व्यावहारिकं, शुक्तिरूप्यादि प्रातिभासिकम्, इति सत् त्रिविधमिति तन्न। स्वाप्नशुक्तौ चाध्यस्तरूप्यादेरुपसंग्रहाय प्रातिभासिकादपि निकृष्टस्य सत्त्वस्य पंचमप्रकारस्यात्र्यावहारिकस्याज्ञानध्वंसस्य चोपसंग्रहायापारमार्थिकस्य व्यावहारिकादप्युत्कृष्टस्य सत्त्वस्य च वाच्यत्वेन त्रैविध्यायोगात्।

किंचायं विभागो न तावत्तात्त्विकः, ब्रह्मैव तात्त्विकमित्यस्य भंगात्। नाप्यतात्त्विकः, तात्त्विकस्य ब्रह्मणोऽतात्त्विकत्वात्। शुक्ते रूप्यादिव बाधगम्यस्य विभागस्य तात्त्विकत्वावश्यं भावात्। अन्यथा विभागश्रुतेरतत्त्वावेदकत्वं स्यात्। एवं च।

"अयं विभागः सत्यश्चेदपसिद्धांत आपतेत्।
मिथ्या चेत्कृतकृत्योऽहं त्वयैव स्वोक्तदूषणात्॥

व्यावहारिकसत्योऽपि बाध्योऽबाध्योऽथवा भवेत्।
उक्तो दोषश्चोभयत्र सर्वमेतेन दूषितम्"॥

संभवति हि विश्वमिथ्यात्वब्रह्मनिर्विशेषत्वादावप्येवं विकल्प्य दूषणम्।

अपिच किमत्र परमार्थसदेव सत् इतरद्वयं सद्विलक्षणमेव सत्त्वेन भ्रांतिबाधविलंबाभ्यां तद्भेद इत्यभिप्रेतम्, किंवा सत्येवावांतरभेद इति। नाद्यः त्वन्मते रूप्याभावे रूप्यधिय इव

---

॥ अथ सत्तात्रैविध्यभंगः ॥ ६७ ॥

ननु पारमार्थिकसत्त्वस्य ब्रह्ममात्रवृत्तितया कथं जगतः पारमार्थिकत्वम्। न चैवं घटादौ शुक्तिरूप्यादौ च सत्त्वप्रतीत्यनुपपत्तिः। घटादौ व्यावहारिकसत्त्वस्य शुक्तिरूप्यादौ प्रातिभासिकसत्त्वस्य चांगीकारेण तदुपपत्तेः इत्येतद्दूषयितुमनुवदति॥ यच्चेदमुच्यत इति॥ प्रातिभासिकादपि निकृष्टस्येति॥ अध्यस्तस्याधिष्ठानापेक्षया न्यूनसत्ताकत्वादिति भावः॥ तात्त्विकस्येति॥ यथा शुक्तिरूप्यादिप्रतियोगिकब्रह्मनिष्ठाभेदः पारमार्थिकस्तथा ब्रह्म पारमार्थिकमन्यत्सर्वमपारमार्थिकमिति विभागे बाधगम्यस्य पारमार्थिकत्वं स्यादित्यर्थः॥ अन्यथेति॥ उक्तविभागस्यातात्त्विकत्वे "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इत्यादितद्विभागश्रुतेरतत्त्वावेदकत्वेनाप्रामाण्यं स्यादित्यर्थः। उक्तार्थमुपसंगृह्णन् दूषणांतरमाह॥ एवं चेति। उक्त इति॥ विभागस्तात्त्विकोऽतात्त्विको वेति विकल्पे उक्तमित्यर्थः॥ नद्वैमिति॥ विश्वमिथ्यात्वादिकमित्यर्थः॥ एतेन॥

सत्त्वाभावे सत्त्वबुद्धेरयोगात्, उत्पत्त्यादौ लाघवेन कदाचित्सत्त्वस्यैव तंत्रतया सत्त्वहीनस्य रूप्यादेरुत्पत्त्याद्ययोगाच्च, व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावे तत्रार्थक्रियादेः श्रुतीनां व्यावहारिकविषयत्वेन प्रामाण्यस्य चायोगाच्च। दीर्घभ्रांतिहेतुत्वे नभोनैल्यभ्रम-हेतोरिवाप्रामाण्यातिशय एव स्यात्। नांत्यः। असतः साधकत्वभंगे आरोपितानारोपितानुगतं सामान्यं नास्तीत्युक्तत्वात्। व्यावहारिकस्य चानारोपितविशेषत्वेऽस्मदभिमतासिद्धेः।

किंच पारमार्थिकापारमार्थिकयोर्न तावद्बाधाबाधाभ्यां भेदः, मिथ्यात्वभंगे उक्तरीत्याऽध्यस्तेऽपि स्वरूपाबाधस्य ब्रह्मण्यप्याकारबाधस्य सत्त्वात्, जगद्बाधकस्य च सप्रकारकत्वे तस्यैव प्रकारस्याबाध्यत्वापातात्। निष्प्रकारकत्वे च बाधकत्वायोगात्, व्यावहारिकप्रातिभासिकयोरपि न तावन्मायिकत्वाविद्यकत्वाभ्यां भेदः, मायाविद्ययोस्तदभावात् मायिकस्यैंद्रजालिकादेः प्रातिभासिकत्वाच्च, असाधारणस्याविद्यकस्य दुःखादेर्व्यावहारिकत्वाच्च, त्वयैव मायाविद्याभेदस्य निरासाच्च। नाप्यर्थक्रियाकारित्वतदभावाभ्यामादानादिनिर्वाहकत्वतदभावाभ्यां वा भेदः, अर्थगतविशेषाभावे तदयोगात्, स्वाप्नेऽपि कुंभादौ स्वाप्नजलाहरणाद्यर्थक्रियाकारित्वादेः सत्त्वाच्च। व्यावहारिकस्य तस्य विवक्षायां चात्माश्रयात्। नापि ब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां भेदः, त्वन्मते रूप्यादेरपि शुक्त्यवच्छिन्नब्रह्मधीबाध्यत्वात्। ब्रह्मण्यध्यस्तस्य प्रातिभासिकस्य क्षणिकत्वादेरपि ब्रह्मधीबाध्यत्वाच्च। नापि ब्रह्मप्रमाबाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां भेदः। त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वात्। नापि प्रमाबाध्यत्वभ्रांतिबाध्यत्वाभ्यां भेदः, भ्रांतिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात्। नापि शुद्धब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां भेदः, शुद्धशब्देन भ्रांतिदशायामज्ञाताधिष्ठानभूतविशेष्यमात्रोक्तौ तज्ज्ञानस्या-

---

सत्ताविभागविकल्पोत्थानुभवेन। एतदेव दर्शयति ॥ संभवति हीति ॥ तद्भेद इति ॥ व्यावहारिकत्वप्रातिभासिकत्वविभागः इत्यर्थः ॥ सत्त्वबुद्धेरिति ॥ सत्त्वापरोक्षबुद्धेरित्यर्थः। किंच स्वदर्शनमनुरूप्यादेरुत्पत्तिनिर्वाहाय तस्य सत्त्वमवश्यमभ्युपगंतव्यमित्याह ॥ उत्पत्त्यादाविति। श्रुतीनामिति ॥ "यस्मिन् द्यौः" इत्यादिश्रुतीनामित्यर्थः। चिरकालानुवृत्तार्थविषयत्वेन श्रुतीनामप्रामाण्यं स्यादित्याशंक्याह ॥ दीर्घेति। अबाध्यत्वापातादिति ॥ बाधकज्ञानप्रकारत्वस्य तद्बाध्यत्वादिति भावः ॥ निष्प्रकारकत्वे चेति ॥ समानप्रकारकयोरेव बाध्यबाधकभावदर्शनादिति भावः ॥ तदभावादिति ॥ मायिकत्वप्रातीतिकत्वयोरभावेन तत्र व्यावहारिकत्वं न स्यादित्यर्थः

बाधकत्वात् तत्कालाज्ञातेन द्वितीयाभावादिना विशिष्टस्योपलक्षितस्य चोक्तौ वेदांतानामखंडार्थत्वहानेः, द्वितीयाभावादेः पारमार्थिकत्वापाताच्च ।

एतेन महावाक्यजन्यधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा चरमधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा भेद इति निरस्तम् । महावाक्यजन्यस्य चरमस्य चाखंडार्थवेदांतजन्यतया निष्प्रकारकत्वेन बाधकत्वायोगात् । सप्रकारकत्वे च तस्य प्रकारस्य तात्त्विकत्वापत्तेः । अत एव च न निष्प्रकारकबाध्यत्वसप्रकारकबाध्यत्वाभ्यां भेदः । नापि पारमार्थिकविषयधीबाध्यत्वव्यावहारिकविषयधीबाध्यत्वाभ्यां भेदः, अन्योन्याश्रयात्, नाप्यन्योन्येतरत्वाभ्यां भेदः, भेदकाभाव इतरेतरत्वस्यैवायोगात् अन्योन्याश्रयाच्च। तस्माज्जगतः सत्यत्वात् समन्वयाध्यायोक्तन्यायैः सत्यजगत्कर्तृत्वाद्यनंतगुणे ब्रह्मणि वेदांताः प्रमाणमिति ॥

॥ इति सत्त्वानिर्वाच्यभंगः ॥ ६७ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते प्रथमः परिच्छेदः ॥ १ ॥

---

॥ असाधारणस्येति ॥ प्रतिनियतसुखादिकमाविद्यकं साधारणं घटादिकं तु मायिकमिति त्वयांगीकारादिति भावः । यथाकथंचिदर्थक्रियाकारित्वं व्यवहारिकत्वे प्रयोजकमुत व्यावहारिकं तदिति विकल्प्य क्रमेण दूषयति ॥ त्वन्मत इति ॥ ब्रह्मणः सर्वप्रत्ययवेद्यत्वादिति भावः । ॥ अखंडार्थत्वहानेरिति ॥ संसर्गासंगिसम्यग्धीहेतुत्वस्यैव अखंडार्थत्वादिति भावः ॥ द्वितीयाभावादेरिति ॥ बाधबोध्यत्वस्य बाध्यत्वनियमादिति भावः ॥ महावाक्येति ॥ तत्त्वमस्यादिवाक्येत्यर्थः ॥ अन्योन्येतरत्वाभ्यामिति ॥ ब्रह्मान्यप्रातिभासिकेतरत्वतदन्यव्यावहारिकेतरत्वाभ्यामित्यर्थः । इयता प्रबंधेन साधितं सत्याशेषविश्वस्य कारणमिति यत् तत्सप्रमाणमुपसंहरति ॥ तस्मादिति ॥

॥ इति सत्त्वानिर्वाच्यभंगः ॥ ६७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचितायां लघ्वामोदाख्यायां न्यायामृतव्याख्यायां प्रथमः परिच्छेदः ॥

श्रीः श्रीः श्रीः श्रीः श्रीः

॥ इति न्यायामृतलघ्वामोदे प्रथमः परिच्छेदः ॥

# ॥ द्वितीयः परिच्छेदः ॥

## ॥ अखंडार्थत्वलक्षणभङ्गः ॥ १ ॥

॥ श्रीगुरुभ्यो नमः ॥

नन्वेतदयुक्तम्—द्विविधं हि वेदांतवाक्यं-एकं पदार्थनिष्ठं यथा "सत्यं ज्ञानं" इत्यादि-तत्पदार्थपरम् "योऽयं विज्ञानमय" इत्यादि त्वंपदार्थपरं च, अपरमैक्यरूपवाक्यार्थनिष्ठं यथा "तत्त्वमसि" इत्यादि, द्वयमप्यखंडार्थनिष्ठम्। यद्यप्यखंडार्थनिष्ठत्वं न तावन्निर्भेदार्थनिष्ठत्वं भेदाभावविशिष्टत्वरूपस्य तदुपलक्षितत्वरूपस्य वा निर्भेदत्वस्य शब्दबोध्यत्वेऽभिप्रेते निर्घटं भूतलमित्यादिवत् मखंडार्थत्वापत्तेः। स्वरूपसत्त्वमात्रेऽभिप्रेते च सखंडार्थानां सगुणवाक्यानामपि वस्तुगत्या निर्भेदब्रह्मनिष्ठत्वेनाखंडार्थत्वापातात्, प्रकृष्टप्रकाशादिवाक्येष्वव्याप्तेश्च, अत एव न निर्विशेषार्थनिष्ठत्वं तत्, नाप्यपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वम्, पयःपावकरूपानेकप्रातिपदिकार्थमात्रपर्यवसायिनि शीतोष्णस्पर्शवंतौ पयःपावकावित्यादावतिव्याप्तेः, नाप्येकविशेष्यपरत्वम्। नीलमुत्पलमित्यादावतिव्याप्तेरिष्टापत्तेश्च, तथाप्यपर्यायशब्दानां संसर्गागोचरप्रमाजनकत्वं वा तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा अखंडार्थत्वम्। उक्तं हि।

---

॥ अथाखंडार्थत्वलक्षणभङ्गः ॥ १ ॥

वेदांतेति ॥ वस्तुनिष्ठवेदांतेत्यर्थः। एकमिति वाक्यभिप्रायम्। पदार्थनिष्ठमिति ॥ तत्त्वमस्यादिमहावाक्यगततत्त्वमादिपदार्थपरमित्यर्थः ॥ तत्पदार्थपरमिति ॥ तत्पदार्थप्रतीतिप्रयोजकमित्यर्थः। स्वाभिमतं साध्यभूतं अखंडार्थत्वं निर्धारयितुं अनभिमतानि तल्लक्षणान्यनूद्य दूषयति ॥ यद्यपीति ॥ शब्दबोध्यत्व इति ॥ अखंडार्थत्वेनाभिमतवाक्यबोध्यत्व इत्यर्थः ॥ मखंडार्थत्वापत्तेरिति ॥ परानभिमतस्याखंडार्थत्वस्यैवाखंडार्थत्वमिति परिभाषापत्तेरिति भावः ॥ स्वरूपसत्त्वमात्र इति ॥ अत्र निर्भेदत्वमित्यनुषज्यते ॥ प्रकृष्टप्रकाशादिवाक्येष्विति ॥ प्रकृष्टप्रकाशश्चंद्र इत्यादिवाक्येष्वव्याप्तिः। चंद्रादीनां नक्षत्रादिप्रतियोगिकधर्मिसमसत्ताकभेदवत्त्वादित्यर्थः ॥ अत एवेति ॥ उक्तदोषादेवेत्यर्थः। अखंडार्थनिष्ठत्वम् ॥ इष्टापत्तेश्चेति ॥ सिद्धसाधनापत्तेश्चेत्यर्थः ॥ अपर्यायेति ॥ समभिव्याहृतपदार्थसंसर्गागोचरप्रमाजनकापर्यायशब्दत्वं वा समभिव्याहृतैकप्रातिपदिकमात्रपर्यवसायिपर्यायशब्दत्वं वेत्यर्थः। घटमानयेत्यादिवाक्येष्वति-

"संसर्गासंगिसम्यग्धीहेतुता, या गिरामियम् ॥
उक्ताऽखंडार्थता यद्वा तत्प्रातिपदिकार्थता" इति ।

तत्र पदार्थनिष्ठस्य वाक्यस्याखंडार्थत्वे, सत्यादिवाक्यं अखंडार्थनिष्ठं ब्रह्मप्रातिपदिकार्थमात्रनिष्ठं वा लक्षणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा, प्रकृष्टप्रकाशश्चंद्र इति वाक्यवदित्यनुमानं मानम् ॥ न च द्वितीयहेतोरसिद्धिः "ब्रह्मविदाप्नोति परम्" इत्युक्तब्रह्मप्रातिपदिकार्थमात्रे बुभुत्सितेऽस्य प्रवृत्तेः। नच हेतुद्वयेऽपि दृष्टांतः साध्यविकलः प्रकृष्टादिवाक्यं चंद्रप्रातिपादिकार्थमात्रनिष्ठं तन्मात्रप्रश्नोत्तरत्वात् संमतवदिति तत्सिद्धेः । नहि कश्चंद्र इति चंद्रप्रातिपादिकार्थमात्रे पृष्टेऽन्यद्वक्तुमुचितम् । सास्नादिमान्गौरित्याद्यपि लक्षणवाक्यं पृष्टगवादिप्रातिपदिकार्थमात्रपरमिति न व्यभिचारः । ऐक्यपरस्य वाक्यस्याखंडार्थत्वे तु तत्त्वमसीत्यादिवाक्यम् अखंडार्थनिष्ठं आत्मस्वरूपमात्रनिष्ठं वा, अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा सोऽयं देवदत्त इतिवाक्यवत् । नचांत्यहेतोरसिद्धिः, कोऽहमित्यात्मस्वरूपमात्रे बुभुत्सितेऽस्य प्रवृत्तेः । नच हेतुद्वयेऽपि दृष्टांतः साध्यविकलः, कोऽयमिति देवदत्तस्वरूपमात्रे पृष्टेऽस्य प्रवृत्तेः । विपक्षे प्रश्नोत्तरयोर्वैयधिकरण्यप्रसंगो बाधक इति ॥

---

व्याप्तिवारणाय लक्षणद्वयेऽपि प्रथमदलम् । घटः कलश इत्यादिष्वतिव्याप्तिवारणाय उभयत्राप्यपर्यायेति । प्रथमलक्षणे प्रमेति वस्तुगतिमभिप्रेत्य ॥ तत्प्रातिपदिकार्थतेति ॥ तासामपर्यायगिरामेकप्रातिपदिकमात्रपर्यवसायितेत्यर्थः । द्विविधस्यापि वाक्यस्याखंडार्थत्वे क्रमेण प्रमाणमाह ॥ तत्रेति । वाक्यस्येति ॥ "सत्यं ज्ञानमनंतं ब्रह्म" इत्यादिलक्षणवाक्यस्येत्यर्थः । ॥ तन्मात्रप्रश्नोत्तरत्वादिति ॥ अत्र यत् प्रश्नोत्तरं तत् तन्मात्रपरमिति सामान्यव्याप्तिरभिमता । न चासिद्धिः । "अस्मिन् ज्योतिर्मंडले कश्चंद्रः" इतिप्रश्नानुसारेण प्रकृष्टप्रकाशश्चंद्र इति प्रतिवचनरूपलक्षणवाक्यस्य चंद्रस्वरूपमात्रपरत्वावसायात् । तदिदमाह ॥ नहीति ॥ प्रथमहेतौ व्यभिचारमाशंक्याह ॥ सास्नादिमानिति । अकार्यकारणेति ॥ घटः नीलमुत्पलं देवदत्तस्य ग्राम इत्यादौ व्यभिचारवारणाय क्रमेण विशेषणानि ॥ अस्येति ॥ तत्त्वमसीत्यादेरित्यर्थः । ॥ अस्येति ॥ सोऽयं देवदत्त इत्यादिवाक्यस्येत्यर्थः ॥ संसर्गमात्रेति ॥ पदस्मारितपदार्थप्रति-

अत्र भ्रमः । आद्यलक्षणे संसर्गशब्देन संसर्गमात्रोक्तौ "अप्राप्तयोः प्राप्तिः संयोग" इत्यादिसंसर्गलक्षणवाक्ये अव्याप्तिः । पदस्मारितपदार्थसंसर्गोक्तौ तु विषं भुंक्ष्वेत्यादावतिव्याप्तिः, तस्य पदस्मारितपदार्थसंसर्गाप्रमापकत्वात् । न चेदमपि "द्विषदन्नं न भोक्तव्यम्" इति शास्त्रमूलकत्वात् शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमापकम्, अस्य युक्तिमूलत्वेनाशास्त्रमूलत्वात् । प्रतिपिपादयिषितपदार्थसंसर्गोक्तौ च चंद्रप्रभादिशब्दार्थानां प्रश्नहेतुसंशयधर्मित्वेन प्रागेव सामान्यतो ज्ञाततया स्वरूपेणाप्रतिपिपादयिषितत्वात् । संसर्गप्रतियोगित्वेन तु प्रतिपिपादयिषितत्वे विवक्षिते संसर्गाप्रमापकत्वासंभवात् । किंच शीतोष्णस्पर्शवंतौ पयःपावकावित्यादौ त्वद्रीत्या संसर्गाप्रतिपादकेऽनेकप्रातिपदिकार्थमात्रपरेऽतिव्याप्तिः । नहि(च) धर्मधर्मिभावासहमखंडार्थत्वं धर्मिभेदसहम् । किंच यौगिकार्थौपगवादिप्रश्नोत्तरे श्यामो दीर्घो लोहिताक्ष औपगव इत्यादौ अनेकार्थात्मकवनसेनादिप्रश्नोत्तरं "एकदेशस्था वृक्षा वनम्" इत्यादौ च

---

योगित्वाद्यौदासीन्येन संसर्गोक्तावित्यर्थः ॥ संसर्गलक्षण इति ॥ संयोगलक्षण इत्यर्थः ॥ अव्याप्तिरिति ॥ अप्राप्तयोः प्राप्तिः संयोग इति प्राप्तिपदेनैव संसर्गस्य पदार्थविधयोपस्थापनादिति भावः । ॥ पदस्मारितेति ॥ यद्यप्येवमप्यप्राप्तयोः प्राप्तिः संयोग इत्यादिलक्षणवाक्यानां गामानयेत्यादिवाक्यांतराणामिव पदस्मारितपदार्थप्रतियोगिकसंसर्गांतरगोचरप्रमाजनकत्वमस्ति । ततोऽपि संसर्गविषया तादृशसंसर्गांतरभानादित्युक्ताव्याप्तिस्तादवस्थ्यम्, तथापि लक्षणवाक्यानां पदस्मारितपदार्थसंसर्गगोचरत्वमिति पररीतिमनुसृत्योक्ताव्याप्तिपरिहाराय विशेषणविवक्षेयमिति ध्येयम् । ॥ तस्येति ॥ पुत्रादिकं प्रति परमाप्तेन पित्रादिनोक्तस्य वैरिगृहभोजननिवृत्तिपरस्य विषं भुंक्ष्वेत्यादिवाक्यस्य शक्त्या स्वगतवि(षो)षादिपदस्मारितपदार्थसंसर्गाप्रमापकत्वादित्यर्थः ॥ इदमपीति ॥ विषं भुंक्ष्वेत्यादिवाक्यमपीत्यर्थः ॥ शास्त्रमूलकत्वादिति ॥ तथाच विषं भुंक्ष्वेत्यादिवाक्यं, वैरिगृहभोजनाकर्तव्यत्वपरम् । स्वमूलभूतशास्त्रप्रकारकतया शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमां प्रति प्रयोजकमिति तादृशप्रमाप्रयोजकत्वाभावलक्षणाभावान्नास्ति तस्मिन्वाक्येऽतिव्याप्तिरिति भावः ॥ अशास्त्रमूलत्वादिति ॥ शास्त्रानुसंधानरहितस्यापि विषं भुंक्ष्वेत्यादिवाक्याभिवृत्तिदर्शनादिति भावः । प्रतिपिपादयिषितेति संसर्गविशेषणम् ॥ प्रागेवेति ॥ संशयस्य धर्मिज्ञानं विनानुदयादिति भावः ॥ अतिव्याप्तिरिति ॥ द्वितीयलक्षणे पदप्रातिपदिकार्थमात्रपर्यवसायित्वं यदा त्वयैव शीतोष्णस्पर्शसंसर्गावित्यादिवाक्यस्य [illegible] भावः । तस्य(लक्ष्यत्वे) [illegible] ॥ न चेति । यौगिकार्थेति ॥ एतच्च लक्षणस्य विशिष्टविषयत्वज्ञापनार्थम् ।

सखंडार्थे लक्षणवाक्येऽतिव्याप्तिः । प्रकृष्टादिवाक्येऽपि संसृष्टार्थत्वस्य वक्ष्यमाणत्वेनासंभवश्च । अत एवांत्यं लक्षणमप्ययुक्तम् असंभवात् सखंडार्थलक्षणवाक्येऽतिव्याप्तेश्च । किंच प्रवृत्तिनिमित्ताभेदश्चापर्यायत्वं तद्भेदस्त्विह नास्ति, अनंतत्वादीनां शुद्धादन्यत्रासंभवात्, अनंतादिशब्दानां लक्षणयाऽखंडार्थत्वे च शुद्धे तदसिद्धेः ।

॥ अखंडार्थत्वलक्षणभंगः ॥ १ ॥

---

औपगवादिशब्दस्य उपगोरपत्यमिति विगृह्य तस्यापत्यमित्यस्मिन्नर्थे अण्प्रत्ययानुशासनेन विशिष्टनिष्ठत्वादिति भावः ॥ सखंडार्थे लक्षणवाक्य इति ॥ औपगवादिप्रश्नोत्तर इत्यर्थः । किंच सत्यज्ञानादिपदप्रवृत्तिनिमित्तभूतसत्यत्वादीनां भेदे तेषां पदानां पर्यायत्वानुपपत्तेः तत्पदघटितोक्ताखंडार्थलक्षणस्यासंभवपरिहाराय तेषां पर्यायत्वं प्रवृत्तिनिमित्तभेदेनैव निर्वाह्यम् । नचेह तद्भेदोऽस्ति । तद्भेदे ब्रह्मणस्तल्लक्षणकत्वे च मानांतरासंभवेन "सत्यं ज्ञानम्" इत्यादिलक्षणवाक्यमेव प्रमाणं वाच्यमिति विशिष्टपरत्वप्रसंगात् । न च तेषां मुख्यवृत्त्या विशिष्टार्थपरत्वेऽपि लक्षणया शुद्धचैतन्यमात्रपरत्वमक्षतमिति वाच्यम् । सत्यत्वानंतत्वादीनां शुद्धादन्यत्रासंभवात् । शुद्धे च तत्सिद्धत्वे प्रमाणाभावाच्च पर्यायत्वमेवापन्नमिति । लक्षणद्वयसाधारणदूषणांतरमाह ॥ किंचेति ॥

॥ इति अखंडार्थत्वलक्षणभङ्गः ॥ १ ॥

## ॥ अथ सत्यज्ञानादिवाक्यानामखंडार्थत्वानुमानभङ्गः ॥ २ ॥

आद्यानुमाने चाप्रसिद्धविशेषणत्वम्, प्रत्यक्षादिनापीदमित्थमितिसप्रकारकज्ञानस्यैवोत्पत्तेः। असिद्धिश्च। सत्यत्वज्ञानत्वादेः परापरजातित्वे तस्या ब्रह्मण्यपि सत्त्वेनातिव्याप्तेः। अजातित्वेऽपि ब्रह्मण्यपि तस्य तात्त्विकस्य धर्मिज्ञानाबाध्यस्य चासंभवात्, अतात्त्विकस्य व्यावहारिकस्य चानात्मन्यपि सत्त्वात्। विरुद्धत्वं च, असाधारणधर्मरूपलक्षणपरवाक्यत्वस्य सखंडार्थत्वेनैव व्याप्तेः। न च स्वरूपलक्षणस्य लक्ष्यानतिरेकात्तत्परत्वमखंडार्थत्वाविरोधि, तस्य लक्ष्यमात्रत्वे

---

### ॥ अथ सत्यज्ञानादिवाक्यानामखंडार्थत्वानुमानभङ्गः ॥ २ ॥

ननु नाप्रसिद्धविशेषणत्वं प्रत्यक्षस्य। घटादिनिर्विकल्पकजनकत्वेन तत्रैव तत्प्रसिद्धिसंभवादित्यत आह ॥ प्रत्यक्षादिनापीति ॥ निर्विकल्पक एव प्रमाणाभावेन प्रत्यक्षादेस्तज्जनकत्वे मानाभावात्। न तावत्तत्र प्रत्यक्षं मानम्। निर्विकल्पकमंगीकुर्वता तस्यैन्द्रियकत्वानभ्युपगमात्। न च जन्यविशिष्टज्ञानस्य तथाविधानुभवस्य वा जन्यविशेषणज्ञानजन्यत्वनियमेन प्रथमोत्पन्नविषयकविशिष्टज्ञानहेतुभूतं विशेषणज्ञानं निर्विकल्पकमेव सिध्यतीति वाच्यम्। स्मृतावभावत्वादिप्रकारकाभावप्रत्यक्षे च व्यभिचारात्। न च पूर्वानुभवस्य संस्कारद्वारा विशेषणज्ञानत्वेनापि स्मृतिं प्रति हेतुत्वान्न व्यभिचार इति वाच्यम्। संस्कारस्य विशेषणज्ञानद्वारत्वायोगात्। विशेषणज्ञानस्य संस्कारं जनयित्वापि विशिष्टज्ञानजनकत्वादर्शनात् यदवच्छिन्नं यदवच्छिन्नं जनयित्वैव यदवच्छिन्नं जनयति तस्यैव तद्द्वारत्वात्। न च तज्जन्यत्वे सति तज्जन्यजनकत्वं द्वारत्वं लाघवादिति वाच्यम्। कुलालतत्पुत्रोभयजन्ये घटे कुलालजन्यघटनाशे च तत्पुत्रघटयोरपि तद्द्वारत्वापातात्। किंच जन्यविशिष्टज्ञानत्वस्य नीलघटत्ववत्सर्वदासंपन्नत्वेन जन्यविशेषणज्ञानजन्यतावच्छेदकत्वात्, जन्यज्ञानत्वावच्छिन्नज्ञानत्वावांतरजातिविशेषस्यात्ममनोयोगादिरूपसामग्रीमात्रप्रयोज्यत्वात्। विशेषणवैशिष्ट्यावगाहित्वस्य च कॢप्तविशेषणविशेष्योभयभानसामग्रीमात्रप्रयोज्यत्वाच्चेति भावः ॥ असिद्धिश्चेति ॥ सत्यत्वादेर्लक्षणत्वायोगेन सत्यज्ञानादिवाक्यस्य लक्षणवाक्यत्वाभावादिति भावः। सत्यत्वादेरलक्षणत्वमुपपादयति ॥ सत्यत्वेति। धर्मिज्ञानाबाध्यस्य चेति ॥ यद्यपि सत्यत्वादिकं ब्रह्मणि धर्मिज्ञानाबाध्यमुच्यमानं तात्त्विकमेव पर्यवस्यति। तथाऽप्येतत् व्यावहारिकसाधारण्यमित्यपौनरुक्त्यमिति ध्येयम्।

लक्ष्यलक्षणभावायोगात्, अतिरेकेऽपि यावल्लक्ष्यभावित्वादिनैव स्वरूपलक्षणत्वोपपत्तेश्च। नच द्वारत्वेन लक्षणपरत्वं द्वारिणोऽखंड(डार्थ)त्वाविरोधि, वक्ष्यमाणरीत्या लक्षणात्प्रागेव सामान्यतो ज्ञाते स्वरूपमात्रे तस्य द्वारत्वायोगात्। नच लक्षणपरत्वं न हेतुः किंत्वतत्परत्वेऽपि तत्प्रत्यायकत्वमात्रमिति वाच्यम्। अलक्षणवाक्यस्यापि तात्पर्यभ्रमादिना लक्षणप्रत्यायकत्वसंभवेन व्यभिचारात् सखंडवनादिलक्षणवाक्ये, किं चंद्रलक्षणमित्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये च व्यभिचारश्च। नचाखंडलक्षणवाक्यत्वं हेतुः, असिद्धेः। नच धर्मे पृष्टे स्वरूपमात्रं वक्तुमुचितम्। नच प्रश्नविशेष्यविशेष्यकत्वं उत्तरत्वे तंत्रम्, किंतु तन्मूलसंशयविरोधित्वम्। बाधश्च, धर्मिज्ञानाधीनसप्रकारकसंशयादिनिवर्तकं मोक्षहेतुं सप्रकारकं ब्रह्मज्ञानं

---

ननु लक्षणवाक्यादित्यस्य स्वरूपलक्षणपरवाक्यत्वादित्यर्थ इति न विरोध इत्याशंक्य निराकरोति ॥ नचेति ॥ ननु लक्षणस्य लक्ष्यातिरेके स्वरूपलक्षणत्वमनुपपन्नमित्याशंक्यातिरेकेऽपि स्वरूपलक्षणव्यवहारस्य गतिमाह ॥ अतिरेकेऽपीति ॥ ननु सत्यज्ञानादिवाक्यस्य लक्षणोपस्थापना द्वारा लक्ष्योपस्थापकत्वाभावाखंडार्थत्वक्षतिः, बोध्यमानलक्ष्यस्वरूपस्याखंडत्वादित्याशंक्य निराकरोति ॥ नचेति ॥ द्वारत्वायोगादिति ॥ तथाच तेन लक्ष्ये लक्षणवैशिष्ट्यमेव बोधनीयमिति विरुद्धत्वं तदवस्थमिति भावः ॥ अतत्परत्वेऽपीति ॥ तथाच लक्षणवैशिष्ट्यप्रतिपादकत्वेऽपि तस्य तत्र तात्पर्याभावेन लक्ष्यस्वरूपमात्रप्रतिपादनपरत्वेन नाखंडार्थत्वक्षतिरिति भावः ॥ अलक्षणवाक्येऽपीति ॥ द्रव्यं घट इत्यादिसखंडवाक्येऽपीत्यर्थः। नन्वलक्षणवाक्येनापि स्वरूपमेव प्रत्याय्यम्। तस्यैव प्रश्नविषयत्वादित्याशंक्य निराकरोति ॥ नचेति ॥ प्रश्नमूलभूतसंशयधर्मिणोऽज्ञाने संशयाद्ययोगेन प्रश्नस्यापि धर्मिविषयतया तत्प्रतिवचनभूतलक्षणवाक्यस्यापि धर्मपरत्वं दुर्निरसमिति भावः।

ननु यदि धर्मप्रश्नः तर्हि सत्यं ज्ञानमिति ब्रह्मविशेष्यकमुत्तरं न स्यात्। समानविशेष्यकसमानप्रकारकनिश्चयस्यैव संशयविरोधित्वेन प्रश्नोत्तरयोरपि समानविशेष्यकत्वनियमादित्याशंक्य निराकरोति ॥ नचेति ॥ तथा च पर्वते वह्निरस्ति नवेति संशयस्य पर्वतो वह्निमानिति निश्चयेन निवृत्तिदर्शनादुक्तनियमोऽसिद्ध इति भावः। यद्वा किं चन्द्रलक्षणमिति प्रश्नोत्तरे प्रकृष्टप्रकाशादिति वाक्ये न व्यभिचारः। तस्यापि स्वरूपमात्रप्रत्यायकत्वादित्याशंक्य निराकरोति ॥ नचेति ॥ ननु प्रकृष्टादिवाक्यस्य धर्मिविशेष्यकत्वाभावात् न धर्मप्रश्नोत्तरत्वमित्याशंक्य निराकरोति ॥ नचेति। धर्मिज्ञानाधीनेति ॥ स्वरूपज्ञानमात्रस्य संशयनिवर्तकत्वे च धर्मिज्ञानेनैव संशयनिवृत्तिः स्यादिति

प्रति साधनत्वेन वेदांतविचारविधानान्यथानुपपत्त्या बलवत्या वेदांतवाक्ये साध्याभावनिश्चयात् । सन्प्रतिपक्षत्वं च, सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात् संमतवत् । सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गपरं स्वतात्पर्यविषयज्ञानाबाध्यस्वकरणकप्रमितिविषयपदार्थनिरूप्यसंसर्गपरं वा प्रमाणवाक्यत्वात् ज्योतिष्टोमादिवाक्यवत् । विषं भुंक्ष्वेत्यादौ वाच्यार्थसंसर्गपरत्वाभावेऽप्युक्तसाध्यसद्भावान्न व्यभिचारः । खं छिद्रं, कोकिलः पिक इत्यादावपि अनतिभिन्नार्थत्वे सामानाधिकरण्यायोगेन छिद्रकोकिलादीनां खपिकादिशब्दवाच्यान्वसंसर्गपरत्वात् न तत्रापि व्यभिचारः । यद्वा वेदांतजन्या प्रमा सप्रकारिका विचारजन्यज्ञानत्वात् संशयविरोधित्वाच्च कर्मकांडजन्यज्ञानवत् । वेदांतजन्या प्रमा ब्रह्मनिष्ठप्रकारविषया, ब्रह्मधर्मिकसंशयविरोधिज्ञानत्वात् ब्रह्मविचारजन्यज्ञानत्वाच्च यदेवं तदेवं यथा कर्मकांडविचारजन्यनिश्चय इत्यादिना प्रतिरोधात् । दृष्टांतस्य साध्यवैकल्यं च ।

तथाहि—प्रकृष्टादिवाक्यस्याखंडार्थत्वं न तावन्मुख्यवृत्त्या, लक्षणापि न तावत् गंगायां घोष इत्यादाविवान्वयानुपपत्त्या, चंद्रादौ प्रकृष्टेन गुणरूपेण द्रव्यरूपेण वा प्रकाशेन संबंधस्य सत्वात्, चंद्रे प्रकृष्टप्रकाशादेः सत्त्वात् । नापि यष्टीः प्रवेशयेत्यादाविव तात्पर्यानुपपत्त्या कश्चंद्र इति स्वरूपमात्रस्य पृष्टत्वादिति वाच्यम् । अस्ति कश्चिच्चंद्रशब्दस्यार्थ इत्यज्ञाने तत्र धर्मिज्ञानसाध्याया बुभुत्सायाः संदेहस्य चानुपपत्तेः चंद्रशब्दस्य प्रातिपदिकत्वानिश्चयेन सुब्विभक्तिप्रयोगायोगाच्च चंद्र इत्यनूद्य क इति प्रश्नायोगाच्च । नाज्ञातमनुवादार्हम् । असंकीर्णं चंद्रस्वरूपं न ज्ञातमिति चेत् न । चंद्रस्वरूपद्वयाभावात् । तदेव स्वरूपमसंकीर्णत्वेन न

---

संशयनिवर्तकज्ञानस्य धर्मिज्ञानविषयविशेषविषयकत्वस्यावश्यकत्वादिति भावः ॥ प्रमाणवाक्येति ॥ अबाधितवाक्येत्यर्थः । एतच्च "वह्निना सिंचेत्" इति वाक्ये व्यभिचारवारणाय । भ्रमजनकवाक्यविषये पदार्थे द्वितीयस्याभावेन व्यभिचारवारणाय ॥ तात्पर्यविषयेति ॥ उक्तमार्गेणेति ॥ स्वकारणकप्रमितिविषयपदार्थत्वस्य तात्पर्यलाक्षणिकत्वसाधारणत्वादिति भावः ॥ अनतिभिन्नार्थत्व इति ॥ अत्यंताभिन्नार्थत्व इत्यर्थः ॥ वेदांतजन्यप्रमेति ॥ ज्ञेयब्रह्मपरवेदांतजन्यप्रमेत्यर्थः ॥ न तावन्मुख्यवृत्त्येति ॥ प्रकृष्टत्वादिविशिष्टस्यैव मुख्यत्वादिति भावः । लक्षणापि किं अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वेति विकल्प्य क्रमेण दूषयति ॥ लक्षणापि न तावदित्यादिना ॥ स्वरूपस्य ज्ञातत्वाच्च प्रश्नविषयत्वं किंतु व्यावर्तकधर्मविषयकत्वम् । अन्यथा चंद्रस्वार्थज्ञाने बुभुत्सानिवृत्तिर्न स्यादित्यर्थः ॥ अस्ति कश्चिदित्यादिना ॥ चंद्रशब्दस्येति ॥ धातु-

ज्ञातमिति चेत् न, असंकीर्णत्वस्य व्यावर्तकवैशिष्ट्यव्यावृत्तिवैशिष्ट्ययोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वापातात् । एवं च ॥

सामान्यतोऽपि न ज्ञातो धर्मी चंद्रो यदा तदा ।
न बुभुत्सा न संदेहो नानुवादश्च युज्यते ॥
तस्माच्चंद्रस्येतरस्माद्भेदको धर्म एव हि ।
पृष्टस्तस्मात्प्रकृष्टादिवाक्यं नाखंडगोचरम् ॥

एवं प्रतिवचनस्य प्रकृष्टत्वादिविशिष्टे तात्पर्याभावे तात्पर्यतो यः कश्चिच्चंद्र इत्येव बोधनात्, अतात्पर्यविषयस्य च प्रतीतस्य त्यक्तत्वात्, वस्तुतो यस्य कस्यापि चंद्रत्वं स्यात्, तात्पर्यविषयेऽखंडेऽयं चंद्र इति लक्षणलक्ष्यरूपोद्देश्यविधेयविभागाभावेन तात्पर्यतो यत्किंचिदित्येव बोधना (त्तेन)(चंद्रत्वेन)चंद्रबुभुत्सानिवृत्त्यभावात्, कश्चंद्र इति प्रश्नस्योत्तरं च न स्यात् । सर्वेषामपि लक्षणवाक्यतात्पर्यजन्यज्ञानानां वस्तुगत्या परस्परभिन्नतत्तत्प्रातिपदिकार्थविषयत्वेऽपि प्रकारभेदाभावेन तेन तेन भिन्नभिन्नप्रकारकतत्तत्संदेहनिवृत्तिश्च न स्यात् । प्रकृष्टादिपदवैयर्थ्यं च स्यात्। व्यावर्त्यभेदेन सार्थक्यमित्येतन्निरसिष्यते। एतेन प्रश्नोत्तरे तावच्चंद्रप्रातिपदिकमात्रविषये प्रकृष्टादिविशेषणाश्रयभूता चासाधारणी विशेष्यव्यक्तिः चंद्रप्रातिपदिकार्थः, नतु तद्विशिष्टा, प्रकृष्टप्रकाशश्चंद्र इति सहप्रयोगाद्ययोगात् विशेष्यव्यक्तिश्चाखंडेति अखंडार्थपरे प्रश्नोत्तरे इति

---

प्रत्ययभिन्नार्थवत्त्वचन्द्रत्वरूपप्रातिपदिकत्वस्यार्थज्ञानाभावे ज्ञातुमशक्यतया तज्ज्ञानाधीनसंप्रयोगादिति भावः । उक्तमर्थं कारिकाभ्यां संगृह्णाति ॥ एवं चेति । अतात्पर्यविषयस्य चेति ॥ प्रकृष्टप्रकाशत्वविशिष्टस्येति शेषः ॥ यस्य कस्यापीति ॥ तथा च व्यक्तिविशेषे चंद्रत्वनिर्धारणं न स्यादिति भावः । किंच यदि प्रकृष्टादिवाक्यं विशिष्टपरं न स्यात् तर्हि प्रश्नमूलबुभुत्सानिवर्तकत्वेनोत्तरं च न स्यादित्याह ॥ तात्पर्यविषय इत्यादिना ॥ तत्तत्संदेहनिवृत्तिश्च न स्यादिति ॥ न चान्यलक्षणवाक्यजन्यज्ञानस्य भिन्नविषयत्वेनैतत्संदेहानिवर्तकत्वेऽप्येतल्लक्षणवाक्यजन्यज्ञाननिवर्तकत्वे समानविषयत्वस्यैव तंत्रत्वादिति वाच्यम् । इदं द्रव्यमिति ज्ञानानंतरं तत्रैव घटत्वादिप्रकारकसंदेहाद्यनापत्तेरिति । ननु प्रकृष्टप्रकाशपदयोर्नभआदिव्यावृत्तिरूपफलभेदसत्त्वान्न वैयर्थ्यमित्याशंक्याह ॥ व्यावर्त्यभेदेनेति । न तु तद्विशिष्टेति ॥ प्रकृष्टत्वादिविशिष्ट-

निरस्तम्, अस्या एवासाधारण्यव्यक्तेर्व्यावर्तकादिवैशिष्ट्यरूपेणासाधारण्येनाज्ञानेऽपि चंद्रप्रातिपदिकार्थत्वादिरूपेण प्रागेव ज्ञातत्वात्।

एवं च गामानयेत्यादौ गोत्वस्यानयनेनेव प्रकृष्टत्वादेर्विधेयेन चंद्रप्रातिपदिकार्थत्वेनानन्वयेऽपि उद्देश्यत्वावच्छेदकत्वेन विवक्षितत्वात्तद्वदेव विशिष्टार्थत्वं दुर्वारम्। अस्ति च पृथिवीत्ववर्ती पृथिवीत्यादौ पृथिवीत्वस्य विधेयेन पृथिवीशब्दार्थत्वेनान्वयः। नहि पृथिवीत्वं न पृथिवीप्रातिपदिकार्थः, सहप्रयोगस्तु पृथिवीशब्दस्य तच्छब्देन व्यवहर्तव्यतापरत्वात्। तस्माद्धर्मिणश्चंद्रस्य सामान्यतो नक्षत्रादिव्यावर्तकव्यावृत्तिरूपधर्मस्य च घटादौ प्रागेव ज्ञातत्वाद्विशिष्टविषये एव प्रश्नोत्तरे। तत्र यदि प्रष्टा व्यावृत्तिवैशिष्ट्यमेव साक्षाद्बुभुत्सितं तदा वक्ता व्यावृत्तेरस्मादस्माच्च व्यावृत्त इति साक्षाज्जन्मशतेनापि दुर्बोधत्वात् धूमे उक्तेऽग्निमिव व्यावर्तके उक्ते व्यावृत्तिं ज्ञास्यतीति भावेन व्यवर्तकवैशिष्ट्यमेव तात्पर्यतः प्रतिपादयति।

---

स्येत्यर्थः। तथाच तुल्यार्थत्वात् घटः कलश इत्यादिवत् सहाप्रयोगादिति भावः ॥ प्रागेव ज्ञातत्वादिति ॥ तथाच प्रश्नोत्तरयोर्न प्रातिपदिकार्थविषयत्वमिति भावः।

ननु यदि प्रकृष्टादिवाक्यं विशिष्टपरं तदा प्रकृष्टत्वादिविशिष्टोद्देशेन चंद्रप्रातिपदिकार्थत्वविधाने विशिष्टानन्वयिनो विशेषणान्वयित्वनियमेन प्रकृष्टत्वादावपि तदर्थत्वं स्यादित्याशंक्याह ॥ एवंचेति ॥ तथाचवाक्ये विशिष्टस्योद्देश्यत्वे विशेषणस्यापि विधेयप्रातिपदिकार्थत्वान्वयोऽपि क्वचिदिष्ट इत्याह ॥ अस्ति चेति ॥ नन्वेवं तुल्यार्थत्वात्सहप्रयोगो न स्यादित्याशंक्याह ॥ सहप्रयोगस्त्विति। तच्छब्देनेति ॥ पृथिवीशब्देन पृथिवीतिव्यवहर्तव्यत्वस्य विवक्षितत्वादित्यर्थः। न तावच्चंद्रस्वरूपं प्रश्नविषयः। तस्य धर्मिज्ञानेन निश्चयात्। नापि नक्षत्रादिव्यावर्तकधर्मः तद्व्यावृत्तिर्वा। तयोरपि घटादौ निश्चयात्। तस्माद्व्यावर्तकधर्मविशिष्टस्य व्यावृत्तिवैशिष्ट्यस्य वा प्रश्नविषयत्वं वक्तव्यम्। प्रतिवचनस्य तु व्यावर्तकवैशिष्ट्यविषयत्वं सर्वत्र वक्तव्यमित्याह ॥ तस्मादिति ॥ इदं च यदा सामान्यतः किंचिच्चंद्रशब्दवाच्यमस्तीति निश्चित्य प्रत्यक्षतो ज्योतिर्मंडलं सर्वं पश्यन्नेव कश्चंद्र इति पृच्छति तदा प्रत्यक्षतो ज्ञाने तु व्यावर्तकधर्मवैशिष्ट्यस्य वा व्यावृत्तिवैशिष्ट्यस्य वा ज्ञातत्वेन तद्विषयकप्रश्नायोगात्। यदा तु प्रत्यक्षतो ज्योतिर्मंडलं सर्वं पश्यन्नेव कश्चंद्र इति पृच्छति तदा व्यक्तिविशेषे चंद्रशब्दवाच्यत्वमेव प्रश्नादिविषय इत्यवधेयम्। ननु प्रतिवचने नायं विवक्षः। प्रश्नानुरोधेन कश्चिद्व्यावृत्तिवैशिष्ट्यमप्रबोधनसंभवादित्यत

नह्यग्निबोधनार्थस्य धूमोऽस्तीतिवाक्यस्य न धूमे तात्पर्यं नवा यागाक्षेपकस्य "यदाग्नेयादि" वाक्यस्य न द्रव्यदेवतासंबंधे। यदि तु प्रष्ट्रैव व्यावृत्तिः प्रतियोगिनामानंत्येन साक्षात्प्रष्टुं वक्तुं चाशक्येति ज्ञात्वा कश्चंद्रइत्यनया वाचोभंग्या कैर्विशेषणैर्विशिष्ट इति पृष्टं तदा सुतरां प्रश्नोत्तरे व्यावर्तकवैशिष्ट्यपरे इति न काप्यखंडार्थत्वम्। असाधारणधर्मरूपलक्षणप्रश्नो ह्ययं किंलक्षणकश्चंद्र इति असाधारणधर्मविषयकस्य, कतमश्चन्द्र इति जातिविषयस्य, अनयोः कतरश्चंद्र इति गुणक्रियाजातिभिः पृथक्करणरूपनिर्धारणविषयस्य च प्रश्नस्योत्तर इवात्रापि प्रतिवचने लक्षणोक्तेः प्रश्नेऽपि प्रकृष्टो वा प्रकाशो वेत्यादिधर्मविषयविकल्पसूचककिंशब्दप्रयोगाच्च। एतेन प्रश्ने धर्मवाचिपदं नेति निरस्तम्। तथात्वे चंद्रधर्मस्यैव लक्षणीयत्वापत्त्या तस्यानपेक्षि-

---

आह ॥ तत्रेति। यदाग्नेय इति ॥ अस्य द्रव्यदेवतासंबंधे तात्पर्याभावे द्रव्यदेवताविशिष्टकर्मविधानं न स्यादिति भावः। एतच्च नामधेयपादे चिंतितम्। "तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः। (जै.सू.अ.१ पा.४, अधि ७,सू.९)"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्यत्र किमाग्नेयशब्दः कर्मनामधेयमुत गुणविधिरिति संशये, अष्टाकपालशब्दितस्य अष्टसु कपालेषु संस्कृतस्य पुरोडाशद्रव्यस्याग्नेर्देवतायाश्च विधाने अनेकगुणविधानरूपगौरवप्रसंगात्। द्रव्यमात्रविशिष्टो यागो विधीयते। आग्नेयपदं तु याज्यानुवाक्याकांडे अस्य यागस्य "अग्निर्मूर्धा दिवः ककुत् भुवो यज्ञस्य रजसश्च नेता" इति अग्निदैवत्ययाज्यानुवाक्यायुगलपाठात् तल्लब्धाग्निदैवत्यत्वरूपप्रवृत्तिनिमित्तं कर्मनामधेयमिति पूर्वः पक्षः॥

सिद्धान्तस्तु—यदाग्नेयवाक्ये यागो न श्रूयत इति द्रव्यदेवतासंबंधेन यागाविनाभूतेनाक्षेप्यः। आक्षिप्ते च यागे मंत्रापेक्षायां मंत्रान्वयः। अतो मंत्रान्वयात् प्रागेव यज्ञकल्पनादेवतोपस्थितेर्वक्तव्यत्वात् आग्नेयशब्दो गुणविधिरिति॥ ननु प्रश्ने धर्मिवाचकपदाभावात् स्वरूपप्रश्न एवायम्। तदुत्तरमपि स्वरूपमात्रपरमित्याशंक्य लक्षणप्रश्नत्वात् धर्मविषय एवायम्। कतम(कतरः)श्चंद्रइत्यादिप्रश्नवदित्याह ॥ असाधारणेति। अत्रापीति ॥ कश्चंद्र इति प्रश्नोत्तरेऽपीत्यर्थः॥ एतेनेति॥ किं शुक्लस्यैव धर्मविशिष्टवाचकत्वादिति भावः॥ तथात्व इति ॥ प्रश्ने पृथक् धर्मवाचिपदसत्त्व इत्यर्थः॥ तस्येति ॥ विशिष्टविषयोत्तरस्य वैयधिकरण्येनावाचकत्वादिति भावः।

सत्वात् चंद्रप्रातिपदिकार्थस्य सामान्यतो ज्ञातत्वेन तद्बुभुत्सायोगात् । लक्षणया वा प्रश्नस्थ-चंद्रपदस्यैव चंद्रासाधारणधर्मपरत्वस्य कल्प्यत्वाच्च । यद्वा लक्षणवाक्यं अनुमानत्वेनाप्त-वाक्यत्वेन वा चंद्रव्यवहारकर्तव्यतावैशिष्ट्यपरमस्तु चंद्रस्वरूपस्य प्रत्यक्षेणैव ज्ञातत्वात् । चंद्र-व्यवहारशब्देन च चंद्रशब्दविशेषितो व्यवहारो विवक्ष्यते, न तु चंद्ररूपार्थविशेषितः येन तज्ज्ञाने वाक्यवैयर्थ्यं तदज्ञाने तु तस्य कर्तव्यताबोधनमशक्यमिति शंक्येत । नचैवं वृद्धव्यवहारादेव व्युत्पत्तिसंभवात् लक्षणवाक्यं व्यर्थम्, शृंगग्राहिकयोपदेशवदस्यापि व्युत्पत्तावुपायांतरत्वात् ।

एतेन मानांतरसिद्धं वैशिष्ट्यमखंडचंद्रसिद्धावुपायमात्रमिति कल्पतरूक्तं निरस्तम् । मानांतरेण चंद्रप्रातिपदिकार्थः प्रकृष्टत्वादिविशिष्ट इत्यज्ञानात्, अस्मिन् ज्योतिर्मंडले कश्चंद्र इति पृच्छना चंद्रस्वरूपस्य प्रत्यक्षेण सुतरां ज्ञातत्वाच्च । तस्मात्साध्यवैकल्यं दुष्परिहर मित्याद्यानुमानमयुक्तम् ।

तथा द्वितीयमपि अप्रसिद्धविशेषणत्वबाधसत्प्रतिपक्षत्वदृष्टांतसाध्यवैकल्यादिदोषात् प्रकृष्टादिवाक्यं उत्कर्षत्या सत्यादिवाक्येऽपि बुभुत्साद्यनुपपत्त्या प्रश्नस्वरूपमात्रप्रश्नोत्तरत्वस्या-सिद्धेश्च । इह च कश्चंद्र इतिवत् कृत्स्नस्य प्रश्नस्याभावात् कल्प्यस्य च प्रश्नोत्तरानुसारेण धर्मविषयकस्यैव कल्प्यत्वाच्च । कतम आत्मेत्यत्र कतरः स आत्मेत्यत्र च त्वंपदार्थप्रश्ने "वा बहूनां जातिपरिप्रश्ने डतमच्, "द्वयोरेकस्य निर्धारणे डतरच्" इतिसूत्राभ्यां जात्याद्यर्थकतमादिशब्दप्रयोगेण तत्प्रतिवचने योऽयं विज्ञानमय इत्यादौ पक्षत्वेन त्वदभिमते

---

नन्वु धर्मवाचकपदाभावात् प्रश्नस्य स्वरूपपरत्वं वक्तव्यमित्याशंक्य पूर्वोक्तदोषं स्मारयति ॥ चंद्रप्रातिपदिकार्थस्येति ॥ किंच प्रश्ने धर्मवाचकपदाभावेऽपि चंद्रपदस्यैव तल्लक्षणस्य सत्त्वात् प्रश्नस्य धर्मविषयकत्वं नानुपपन्नमित्याह ॥ लक्षणया वेति । अनुमानत्वेनेति ॥ अयं चंद्र इति [illegible], प्रकृष्टप्रकाशत्वात् व्यतिरेकेण घटवदित्यनुमानविषयेत्यर्थः ॥ चंद्रशब्दविशेषित इति ॥ [illegible]रूपो व्यवहार इत्यर्थः ॥ चंद्ररूपार्थविशेषित इति ॥ अयं चंद्र इत्यादि-रूप इत्यर्थः ॥ मानांतरसिद्धेति ॥ प्रत्यक्षसिद्धेत्यर्थः । तथा च लक्षणवाक्यस्य न तत्परत्वं [illegible]दिति भावः ॥ मानांतरेति ॥ प्रकृष्टत्वादिविशिष्टमानांतरेण चंद्रप्रातिपदिकार्थत्वाज्ञाना-दिति भावः ॥ साध्यवैकल्यमिति ॥ दृष्टांतस्येति शेषः ॥ द्वितीयमपीति ॥ प्रश्नोत्तरत्वादित्यनु-मानमित्यर्थः ॥ उत्कर्षत्येति ॥ प्रकृष्टादिवाक्योत्कर्षत्येत्यर्थः ॥ इह चेति ॥ "ब्रह्मविदाप्नोति परं"

हेतोरसिद्धेश्च। किंच सर्वस्याप्युत्तरस्य प्रष्टृनिर्धारितप्रश्नधर्मिनिष्ठनिर्धारितैकप्रकारपरत्वाद्विरुद्धो हेतुः। यदि चोत्तरजन्यं ज्ञानं निष्प्रकारकं स्यात् तेन सप्रकारकसंदेहनिवृत्तिर्न स्यात्। यदि चोत्तरं प्रश्नादधिकविषयं न स्यात्तर्ह्युत्तरमेव न स्यात्। अन्यथा प्रश्न एवोत्तरं स्यात्। किं करोति? किमानेयम्? इत्यादिप्रश्नोत्तरेषु अध्ययनं करोति गामानयेत्यादिषु व्यभिचाराच्च। नहि तान्यप्यध्ययनत्वगोत्वादित्यागेन लक्षणया कर्मादिमात्रपराणि।

एतेन सत्यादिवाक्यार्थः ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरवाक्यार्थत्वादिति न्यायदीपावल्युक्तं व्यतिरेक्यनुमानं निरस्तम्। किंचैकप्रातिपदिकार्थप्रश्नोत्तरत्वेन कथमखंडार्थत्वम्।

> 'स्वार्थो द्रव्यं तथा लिंगं संख्याकर्मादयोऽपि च।
> नामार्थपंचकं प्राहुराद्यं त्रिकमथापरे॥'

इति वैयाकरणमते त्वदेकदेशिभिः मया प्राभाकरैश्च स्वीकृतान्विताभिधानमते अभिहितान्वयपक्षेऽपि जातिविशिष्टायां व्यक्तौ शक्तिरिति तार्किकमते च प्रातिपदिकार्थस्यैव विशिष्टत्वात्। जातावेव शक्तिर्व्यक्तिस्तु लक्ष्येति भाट्टानां तव च मते ब्रह्मप्रातिप्रदिकस्यैव यौगिकत्वेन तदर्थस्य विशिष्टत्वात्। नच प्रातिपदिकार्थे पृष्टे तदेकदेशोक्तिर्युक्ता। किंचाप्रयोजका हेतवः। तथाहि, विपक्षे बाधकं किं ब्रह्मस्वरूपमात्रस्यैव बुभुत्सितत्वं "एकधैवानुद्रष्टव्यं" इत्याद्यभेदविधायकवाक्यं वा "उदरमंतरं कुरुत" इति भेदनिषेधकवाक्यं वा "केवलो निर्गुणश्च" इत्यादिगुणनिषेधकवाक्यं वा "एकमेवाद्वितीयं" इत्यादिद्वितीयमात्रनिषेधकवाक्यं वा सर्वतोऽनवच्छिन्नवस्तुपरानंतब्रह्मशब्दौ वा। नाद्यः, निरस्तत्वात्। सत्यादिवाक्ये सत्सु विशेषणेषु सस्तुतिकविधिवाक्ये प्राशस्त्य इव रक्तपटन्यायेनाकांक्षाया उत्थाप-

---

इत्याद्यावित्यर्थः॥ प्रष्टृनिर्धारितेति॥ प्रष्टा निर्धारितः प्रश्नधर्मनिष्ठो यः प्रतिवक्त्रा निर्धारितः एकःप्रकारस्तत्परत्वादित्यर्थः॥ संदेहनिवृत्तिः न स्यादिति॥ समानप्रकारकनिश्चयस्यैव संशयविरोधकत्वादिति भावः॥ तन्मात्रप्रश्नोत्तरत्वादिति॥ हेतुवाक्यस्य पृष्टमात्रोत्तरत्वादित्यर्थः। मम स्वखण्डार्थत्वे साध्ये व्यभिचारमाह॥ किं करोतीति। एतेनेति॥ उक्तबाधादिदोषसाम्येनेत्यर्थः। ॥ तन्मात्रेति॥ ब्रह्मप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वादित्यर्थः। स्वार्थस्वरूपद्रव्यमतयोगित्वेनेति 'बृहबृंहिवृद्धौ' इति पाणिनिस्मरणात्। "बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इतिस्मृतेश्चेति भावः॥ एकधैवेति॥ एकत्वेनैवेत्यर्थः॥ भेदनिषेधकवाक्यं वेति॥ "भय तस्य भयं भवति"

नीयत्वाच । उक्तं हि "आकांक्षणीयाभावनिमित्तो ह्याकांक्षाभाव" इति । निष्प्रकारकज्ञानस्याप्यसिद्ध्या सप्रकारकज्ञानस्यैव मोक्षहेतुतया "ब्रह्मविदाप्नोति परम्" इत्यनेन प्रतीत्या "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुत्या "यो वेद निहितं गुहायाम्" इत्युत्तरवाक्येन चोक्त्या च मुमुक्षोः प्रकार एव धर्मिज्ञानसाध्यबुभुत्सौचित्याच । निर्गुणवाक्यवत् सगुणवाक्यस्यापि ब्रह्मबुभुत्सायां कर्मकांडस्य च कर्मबुभुत्सायां वैद्यादिशास्त्रस्याप्यौषधादिबुभुत्सायां प्रवृत्ततया लक्षणया सगुणवाक्यमप्यखंडब्रह्मपरं कर्मकांडमप्यखंडकर्मपरं वैद्यादिशास्त्रमप्यखंडौषधादिपरमित्यापाताच । अस्ति च धर्म इव ब्रह्मण्यप्यलक्षणरूपं वाक्यम् । न सध्यमाः, तेषां चैक्यभेदाभावादिविशिष्टार्थपरत्वे वेदांतमात्रस्याखंडार्थत्वासिद्धेः सत्यशुद्धान्यमिथ्याविशिष्टार्थपरत्वे प्रामाण्यायोगाच । तेषामेव लक्षणयाऽखंडार्थता सत्यादिवाक्यस्य तु सत्यत्वादिविशिष्टार्थपरतेति वैपरीत्यापाताच । उभयोरपि मुमुक्षुज्ञेयब्रह्मपरत्वाविशेषात् । नचास्यां दशायां ब्रह्मण्यभावरूप एव धर्मो मुमुक्षुणा ज्ञेयो नतु भावरूप इति सिद्धम् । तेषां लक्षणयाऽखंडार्थत्वे तु न तद्विरोधेन विशिष्टार्थस्य सत्यादिवाक्यस्य मुख्यार्थत्यागः विशेष्यपरस्य विशिष्टपरेणाविरोधात् ।

ननु ऐक्यादेर्द्वारत्वेनोपादानाद्विरोध इति चेन्न, द्वारीभूतस्य ब्रह्मान्यस्य ऐक्यादेर्मिथ्यात्वे सत्यत्वादिधर्मपारमार्थ्याविरोधित्वात्, सत्यत्वे चापसिद्धांतात्, द्वारत्वानुपपत्तेर्वक्ष्य-

---

इत्युत्तरवाक्ये भेददर्शिनो भयश्रवणेनास्य तन्निषेधपरत्वावसायादिति भावः ॥ सर्वत इति ॥ देशतः कालतो वस्तुतश्चेत्यर्थः ॥ तमेवं विद्वानिति ॥ उक्तगुणविशिष्टतया तं विद्वानित्यर्थः ।

ननु ब्रह्मकांडस्य सर्वस्य लक्षणवाक्यत्वादखंडब्रह्मपरत्वम् । कर्मकांडस्य तु सर्वस्य लक्षणपरत्वाभावाद्वैषम्यमित्याशंक्याह ॥ अस्ति चेति । अलक्षणरूपमिति ॥ 'असन्नेव स भवति, ब्रह्म पुच्छं प्रतिष्ठा' इत्यादिवाक्यमित्यर्थः । बाधकत्वेनाभिमतानामेकमेवेत्यादिवाक्यानां किमैक्यादिविशिष्टार्थपरत्वमुताखंडार्थपरत्वम् । आद्येऽपि किं विशिष्टं सत्यं मिथ्याभूतं वेति विकल्प्य आद्यं प्रत्याह ॥ तेषामिति ॥ द्वितीयं प्रत्याह ॥ सत्यशुद्धेति । प्रमाणामिति ॥ पिकारलातामित्यर्थः । अंत्यं प्रत्याह ॥ तेषामिति । विशेष्यपरस्येति ॥ अन्यथा पुरुषोऽस्ति दंडी पुरुषोऽस्तीत्यनयोरपि विरोधापत्तेरिति भावः । नन्वेकमेवेत्यादिवाक्यमैक्यमात्रपरम् । ऐक्यादि च सत्यादिवाक्यस्याखंडार्थत्वं विनानुपपन्नमिति तदखंडार्थत्वसिद्धिरविरुद्धेति शंकते ॥ ननु

माणत्वाच्च । अत्रापि सत्यत्वादेर्द्वारत्वेनोपादानेन तेषामेवैतद्विरोधापाताच्च । नांत्यः त्वन्मतेऽनंतब्रह्मशब्दयोरपि लक्षणया विशेष्यमात्रपरत्वेनाविरोधित्वात् "अथ कस्मादुच्यते ब्रह्मेति बृहंतो ह्यस्मिन्गुणा" इतिश्रुत्या "महद्गुणत्वाद्यमनंतमाहुः" इत्यादिस्मृत्या च ताभ्यां सद्गुणत्वस्यैव सिद्धेश्च ।

प्रतिकूलतर्कपराहतिश्च । तथाहि– द्विविधमपि वेदांतवाक्यं तद्दृष्टांतीभूतं प्रकृष्टादिवाक्यं सोऽयमित्यादिवाक्यं च यदि संसृष्टार्थं न स्यात् वाक्यमेव न स्यात्, आकांक्षासंनिधियोग्यतानामभावात् । आकांक्षा ह्यभिधानापर्यवसानम् । यस्य च येन विना न स्वार्थान्वयानुभावकत्वं तदेव च तस्यापर्यवसानम् । संनिधिस्त्वव्यवधानेनान्वयप्रतियोग्युपस्थितिः । योग्यता च इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यंताभावप्रतियोगितावच्छेदकधर्मशून्यत्वम् । प्रमाणाबाधो योग्यतेति

---

ऐक्यादेरिति । तेषामिति ॥ एकमेवेत्यादिवाक्यानामित्यर्थः ॥ वाक्यमेवेति ॥ प्रमाणवाक्यमेवेत्यर्थः ॥ यस्य चेति ॥ इतरपदव्यतिरेकप्रयुक्तस्वार्थान्वयाननुभावकत्वमित्यर्थः । पदपदं च तदुपस्थितिपरं, तेन पदस्य स्मारकत्वेन स्वत एवाननुभावकत्वम् । नन्वितरपदव्यतिरेकप्रयुक्तमिति शंका गलहस्तिता । ननु राजपदं पुत्रपदसाकांक्षं न स्यात् । तद्व्यतिरेकेऽपि पुरुषपदेन स्वार्थान्वयानुभावकत्वादिति चेन्न । अन्वये तात्पर्यविषयत्वस्य विवक्षितत्वात् । घटः कर्मत्वमित्यादावतिव्याप्तिवारणाय इतरपदव्यतिरेकप्रयुक्तेति ॥ अव्यवधानेनेति ॥ अन्वयप्रतीत्यननुगुणानंतरितान्वयप्रतियोग्युपस्थितिरित्यर्थः । तेन कुलकश्लोकादौ व्यवहितेनापि क्रियाविनान्वयबोधेऽपि ध्येयम् ॥ इतरेति ॥ एतच्च पदविशेषणम् । तेन प्रमेयत्वे प्रमेयत्वमित्यादौ नाव्याप्तिः । पदत्वं च शक्तत्वम् । येनाकारेण शक्तत्वं तेनाकारेण इतरेतिशब्दोक्तभेदो विवक्षितः । तेन गामित्यादौ प्रकृतिप्रत्ययार्थयोः पचतीत्यादौ कृतिवर्तमानत्वयोश्चान्वययोग्यत्वं विवक्षितमिति(सविकल्पमिति) ध्येयम् । अत्यंताभावपदं च विरोधिपरम् । तेन गंधप्रागभावकालीनो घटो गंधवानित्यादौ नातिव्याप्तिः । सामानाधिकरण्यबोधे तु योग्यतास्तीति बोध्यम । व्यासज्यवृत्तिप्रतियोगितानंगीकर्तृमतेनेदम् । तेन आकाशः संयोगसंसर्गेण जलनिष्ठात्यंताभावप्रतियोगितावियत्त्वानुभवादिमत्त्वावच्छिन्नप्रतियोगिकात्यंताभावप्रतियोगितावच्छेदकधर्मवत्त्वेन जलेन संयोगीत्यादावव्याप्तिरिति निरस्तम् । नच प्रतियोगितावच्छेदकपदवैयर्थ्यम् । अत्यंताभावे व्यधिकरणधर्मावच्छिन्नत्वाभावादिति । किं पदार्थस्य बाधः किंवा संसर्गस्य उत तात्पर्यविषयस्य वे(चे)ति विकल्प्याद्यं प्रत्याह ॥ पदार्थेति ॥ द्वितीयं प्रत्याह ॥ संसर्गाबाधस्य चेति ॥ तृतीयमाशंकते ॥ तात्पर्यविषयेति । पदार्थेति ॥

चेन्न, पदार्थमात्राबाधस्य वाक्याभासेऽपि सत्त्वात्, संसर्गाबाधस्य चेहाप्यभावात्। तात्पर्यविषया-बाधो योग्यतेति चेन्न, पदार्थमात्रे वाक्यतात्पर्यायोगात्।

ननु यत्र पदार्थः प्रमितः तत्र स इतरपदार्थविशिष्टः प्रतिपाद्यः, यत्र त्वज्ञातः तत्र स नान्यैः शक्यो विशेष्टुमिति तत्र स एव प्रतिपाद्यः। प्रमिते च तस्मिन् वाक्यसमाप्तेर्न विशिष्ट-परत्वमिति चेन्न, उत्कर्षात्या चंद्रब्रह्मादिप्रातिपदिकार्थानां सामान्यतो ज्ञातत्वेनेतरव्यावृत्त्यर्थं प्रकृष्टत्वसत्यत्वादिना विशिष्यैव बोध्यत्वात्। वेदांतानां निर्विषयत्वं च स्यात्। अखंड-वाक्यार्थस्य स्वप्रकाशस्यचिन्मात्रस्याविद्या(य)ध्यासाधिष्ठानत्वेन तत्साक्षित्वेन च नित्यसिद्ध-त्वात्। निर्निमित्तं सर्ववेदांतानां मुख्यार्थत्यागश्च स्यात्, एकरसत्वादिश्रुतीनामपि विशेष्य-मात्रपरत्वेन मुख्यार्थबाधकाभावात्। वेदांतजन्यज्ञानं च निष्प्रकारकं चेत् ज्ञानमेव न स्यात्, ज्ञानस्येच्छादेरिव सविषयकत्ववत्सप्रकारकत्वस्यापि नियतत्वात्, कंचित्प्रकारं विना वस्तुनो बुद्धावनारोहाच्च। इदमित्थमितिहि धीः। वेदांतानामबुभुत्सितार्थत्वं च स्यात्, बुभुत्सायाः धर्मिज्ञानाधीनत्वात्। "श्रोतव्यो मंतव्य" इति विचारविधिश्चायुक्तः स्यात्, तस्याप्यापात-दर्शनजन्यसंशयनिवर्तकसप्रकारकनिश्चयार्थत्वात्। शुद्धब्रह्मविचारकाणामाद्याध्यायतृतीय-पादाद्यधिकरणानां अनारंभश्च स्यात्, विषयादिपंचकाभावात्। विशिष्याज्ञातो हि विषयः

---

तस्यैकपदार्थोपस्थितिसंभवेनोत्तरपदवैयर्थ्यं स्यात्। वाक्यार्थस्य तात्पर्यविषयत्वे तु संसर्गस्यैव वाक्यार्थत्वेनाखंडार्थत्वहानिरिति भावः।

ननु यत्र पदार्थः प्रसिद्धस्तत्रोक्तरीत्या तन्मात्रतात्पर्यायोगेनेतरवैशिष्ट्ये तात्पर्यं कल्पनीयम्। यत्र तु न प्रसिद्धस्तत्र पदार्थस्येतरवैशिष्ट्यबोधनायोगात् तन्मात्रपरत्वं कल्पनीयम्। तावता तस्य सप्रयोजनत्वात्। इह तु ब्रह्मणोऽलौकिकत्वेन प्रागप्रसिद्धत्वात् अखंडार्थत्वमिति शंकते ॥ नन्विति। उत्कर्षात्येति ॥ बुभुत्सानुरोधेन चंद्रब्रह्मादिशब्दार्थानां सामान्यज्ञानावश्यंभावा-दिति भावः ॥ निर्विषयत्वमिति ॥ स्वप्रकाशे ब्रह्मणि वेदांतप्रमाणव्यापारायोगात् अज्ञानस्यैव निरसनेन स्वरूपस्याज्ञानाभावादेति भावः ॥ निर्निमित्तमिति ॥ गुणादिनिषेधवाक्यानां बाधकाभावेनाप्यनुपपत्त्यभावादिति भावः। किंच वेदांतानां स्वरूपमात्रपरत्वं तदा तत्स्वरूपं बुभुत्सा ज्ञातस्य वा। आद्ये न तत्र बुभुत्सा। तद्विषयस्य सिद्धत्वात्। अंत्ये धर्मिज्ञानाभावात् न बुभुत्सेत्युभयथापि वेदांतानामबुभुत्सितार्थत्वं स्यादित्यभिप्रेत्याह ॥ वेदांतानामिति। सत्वादि-

साधारणधर्मधीजन्यश्च संशयः, मिथ्यासत्यैकप्रकारावलंबिनौ च पूर्वपक्षसिद्धांतौ, एकतरप्रकारनिर्धारणाधीनं च प्रयोजनं, तच्च पंचकं निर्विशेषे कथं स्यात्। "ब्रह्मविदाप्नोति" इति पूर्ववाक्य एव ब्रह्मणः सामान्येन ज्ञाततया सत्यादिवाक्यवैयर्थ्यं च स्यात्, सत्यादिवाक्यस्य सत्यत्वादिविशिष्टे तात्पर्याभावे तात्पर्यतो यत्किंचिद्ब्रह्मेत्येव बोधनाद्यस्य कस्यचिद्ब्रह्मत्वं च स्यात्। तात्पर्यविषयस्याखंडार्थत्वेत्न इदं ब्रह्मेति लक्षणलक्ष्यरूपोद्देश्यविधेय(भावा)(विभागा)भावेन तात्पर्यतो यत्किंचिदित्येव बोधनात्। तेन च ब्रह्मबुभुत्सानिवृत्त्यभावात्। किं ब्रह्मेति प्रश्नोत्तरं च न स्यात्। नचोद्देश्यविधेयभावेऽसत्यपि अप्राप्तविधेयमात्रपरत्वादखंडार्थत्वाहानिः, विधेयस्यापि स्वरूपेण ज्ञातत्वेनोद्देश्यसंसृष्टतयैव बोधनीयतया वाक्यांतरवत्सखंडार्थत्वापातात्। उक्तं हि—

> "किंचिद्विधीयतेऽनूद्य वाक्येनेति सतां स्थितिः।
> सत्यज्ञानादिवाक्येन कथ्यतां किं विधीयते॥
> अज्ञातं बोध्यते किंचित् वाक्येनेति सतां स्थितिः।
> सत्यज्ञानादिशब्दैस्तु किमज्ञातं प्रबोध्यत॥" इति॥

सत्यादिपदानां लक्षणा च न स्यात्। अशक्यासदृशान्वयप्रतियोग्युपस्थितिर्लक्षणेतिपक्षे लक्षणाया एवासंभवात्। शक्यसंबंधो लक्षणेतिपक्षेऽन्वयानुपपत्तिरूपलक्षणाबीजाभावात्। सत्यादिपदानां पर्यायत्वं च स्यात्। नच कुंभाद्यनुगतसत्ता परजातिः, अंतःकरणवृत्त्युपधानलब्धभेदचिदानंदविशेषानुगते ज्ञानत्वानंदत्वे चापरजाती। एवं च सत्यज्ञानानंदशब्दानां

---

वाक्यवैयर्थ्यमिति ॥ पूर्ववाक्ये स्थिते ब्रह्मशब्दार्थत्वादधिकस्याभावादिति भावः ॥ यस्य कस्यचिदिति ॥ तथाच ब्रह्मनिर्धारणं न स्यादित्यर्थः । दूषणांतरमाह ॥ तात्पर्यविषयस्येति ॥ ननूद्देश्यविधेयभावसत्वेऽप्युद्देश्यस्य मानांतरसिद्धत्वादप्राप्तविधेयमात्रपरत्वान्न तस्याखंडार्थत्वहानिरित्याशंक्य निराकरोति ॥ नचेति । वाक्यांतरवदिति ॥ "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिवाक्यवदित्यर्थः । गौणवृत्तावतिव्याप्तिवारणाय ॥ असदृशेति । अन्वयानुपपत्तिरूपेति ॥ तात्पर्यविषयानुपपत्तिरूपेत्यर्थः । न च लाघवात्तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति वाच्यम् । पदार्थाभावे तात्पर्यासंभवात् वाक्यार्थस्य प्रकृते असंभवादिति भावः ॥ सत्यादिपदानामिति ॥ सर्वेषा-

लक्ष्यार्थाभेदेऽपि क्रमेणोक्तजातिवाचित्वान्न पर्यायतेतिकल्पतरूक्तं युक्तम्। कुंभाद्यनुगत-सत्ताया ब्रह्मलक्षणत्वायोगात्, मिथ्यासत्यानुगतसत्तासामान्याभावाच्च। तयाऽनृताद्व्यावृत्त्य-सिद्धेश्च, कालत्रयाबाध्यत्वरूपं पारमार्थिकं सत्त्वं ब्रह्मणि श्रौतमिति त्वन्मतभंगाच्च। धर्मिसम-सत्ताकभेदं विनौपाधिकभेदमात्रेणाऽऽकाशत्वादेरिव ज्ञानत्वादेरपि जातित्वायोगाच्च। योगे-वा ज्ञानत्वादेर्धर्मिसमसत्ताकभेदवदुपहितवृत्तित्वे च शुद्धलक्षणत्वायोगात्। एतेन सत्त्वादि-विशिष्टशबलब्रह्मवाचिनां सत्यादिशब्दानां शुद्धब्रह्मणि लक्षणेति न पर्यायत्वमिति निरस्तम्। अनृतात्मप्रकाशपरिच्छिन्नरूपे शबले सत्यत्वादेरयोगात्। योगे वा तस्यैवानृतादिव्यावृत्तिः स्यान्न तु शुद्धस्य। तस्मात्सत्यत्वादीनां शुद्धादन्यत्रासंभवात् सत्यादिवाक्यस्य लक्षणयाऽखंडा-र्थत्वे च शुद्धे तदसिद्धेः पर्यायत्वं दुर्वारम्। पदांतरवैयर्थ्यं च स्यात्। नच प्रातिपदिक-प्रथमयोरैकार्थ्येऽपि पदांतरावैयर्थ्यमिति वाच्यम्, तत्र महाभाष्य एव "किं पुनरत्र प्रथमया" इति वैयर्थ्यमाशंक्य "ग्राम उर्वस्ते स्वग्राम उर्वस्तव स्वम्" इत्यत्र "सपूर्वायाःप्रथमाया" इत्येष-विधिर्यथा स्यादित्यर्थवत्त्वोक्तेः। नच प्रतिपदमारोपितासत्यत्वादिव्यावृत्तिरूपफलभेदाद-वैयर्थ्यम्, व्यावर्तकस्य सत्यत्वादेस्तात्पर्यतोऽनर्पणे व्यावृत्त्यसिद्धेः। नच सत्यत्वादेरतात्पर्य-विषयत्वेऽपि लक्षणातःप्रागभिधाकाले प्रतीतिमात्रेण तत्सिद्धिः, नद्यां घोष इत्यत्र तीरस्यानदीतः "यजमानः प्रस्तरः" इत्यत्र प्रस्तरस्यायजमानाच्च व्यावृत्त्यापातात्। नचातात्पर्याविशेषेऽपि

---

मेकप्रातिपदिकमात्रे, प्रातिपदिकत्वादिति भावः ॥ कुंभाद्यनुगतेति ॥ सत्यत्वादीनां प्रत्येक-लक्षणत्वेन सत्यत्वादेः परजातिरूपत्वेऽतिव्याप्तिप्रसंगात्, मिलितस्य लक्षणत्वे तु सत्यज्ञान-पदयोरनंतपदस्य वा वैयर्थ्यप्रसंगादिति भावः। किंच किं ज्ञानत्वादिकमौपाधिकभेदशुद्धवृत्ति उत उपहितवृत्तीति विकल्प्य नाद्य इत्याह ॥ धर्मिसमसत्ताकेति ॥ न द्वितीय इत्याह ॥ ज्ञानत्वादेरिति । प्रातिपदिकप्रथमयोरिति ॥ "प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमा" इति पाणिनीयस्मृत्या प्रथमायाः प्रातिपदिकतुल्यार्थकत्वेऽपि अन्यतरावैयर्थ्यमिव सत्यादिपदानाम-वैयर्थ्योपपत्तिरित्यर्थः ॥ सपूर्वाया इति ॥ पूर्वसहितात्प्रथमांतात् पदात्परयोर्युष्मदस्मदोरस्तेमे इत्यादेशौ स्तो विकल्पेनेति सूत्रार्थः। तथा च तुल्यार्थत्वेऽपि अवैयर्थ्ये भाष्यकारेण प्रयोजनांतरोक्तिर्न स्यात्। प्रयोगस्तु "न केवला प्रकृतिः" इति न्यायेन साधुत्वार्थः इति भावः। आरोपितेति व्यावृत्तिविशेषणम्।

सत्यत्वादिकं व्यावहारिकं यजमानत्वादिकं तु प्रातिभासिकमिति युक्तम्, नचौपनिषदे ब्रह्मणि सत्यत्वादिकं प्रत्यक्षादिप्राप्तं येन व्यावहारिकं स्यात्। नच तत्वपरात्प्रतीतं व्यावहारिकं व्यावहारिकपरात्तु (अतत्वपरात्तु इति पाठः) प्रतीतं प्रातिभासिकमिति व्यवस्था, "असद्वा इदमग्र आसीत्" इति तत्त्वपरेण प्रतीतस्य मूलकारणासत्त्वस्य व्यावहारिकत्वापातात्। नच सत्यत्वादिकं तत्त्वावेदकबाधितत्वात् व्यावहारिकं, यजमानत्वादिकं तु व्यावहारिकबाधितत्वात् प्रातिभासिकमिति युक्तम्। तत्त्वावेदकस्यापि विशेष्यमात्रपरत्वेन सत्यत्वाद्यबाधकत्वात्, व्यावहारिकबाधितस्याद्वैतवत्पारमार्थिकत्वोपपत्तेश्च। नच लक्षणाबीजे मुख्यार्थबाधके तुल्येऽपि सत्यादिपदस्य वाच्यार्थेऽवांतरतात्पर्यं यजमानपदस्य तु नेत्यत्र हेतुरस्ति येनोक्तव्यवस्था स्यात्। किंच व्यावृत्तयः सत्या मिथ्या वा? आद्ये व्यावर्तकानामपि सत्त्वं स्यात् व्यवहारिकैर्व्यावर्तकैः पारमार्थिकव्यावृत्त्यसिद्धेः। किंच तासां ब्रह्माभेदे ब्रह्मपदेनैव तत्सिद्धेरितरवैयर्थ्यं व्यावर्तकधर्माणामपि सत्त्वं ब्रह्माभिन्नत्वं च स्यात्, अविशेषात्। एवं व्यावृत्तीनामन्योन्यमभेदे सत्यपदेनैवाज्ञानादिव्यावृत्तिसिद्धेर्ज्ञानादिपदवैयर्थ्यम्। तासां ब्रह्मणा परस्परं भेदे चाद्वैतहानिः, अभावद्वैतस्य निरासात्। नांत्यः शुक्तेः शुक्तितो व्यावृत्तेर्मिथ्यात्वे शुक्तित्वस्य शुक्तिसमानसत्ताकत्ववदनृतव्यावृत्तेर्मिथ्यात्वेऽनृतत्वस्य ब्रह्मसमसत्ताकत्वापातात्। तत्वजिज्ञासुं मुमुक्षुं प्रति मिथ्याबोधनायोगात्। नचानृतत्वादिभ्रांतिनिवृत्त्यर्थं तद्बोधनम्, अधिष्ठानब्रह्मतत्वज्ञानेनैव तन्निवृत्तिसंभवे भ्रांत्यंतरोत्पादायोगात्। नहि वल्मीके स्थाणुत्वभ्रांतिः

---

ननु सत्यत्वादेर्व्यावहारिकत्वादसत्यादिव्यावर्तकत्वं, यजमानादेस्तु प्रातीतिकत्वान्न व्यावर्तकत्वमित्याशंक्य निराकरोति ॥ नचेति ॥ किञ्च सत्यत्वाद्यव्यावहारिकत्वमेवासिद्धम्, येन व्यावर्तकत्वं स्यादित्याह ॥ नचेति। तत्त्वपरादिति ॥ ब्रह्मपरवेदांतादित्यर्थः ॥ अतत्वपरादिति ॥ धर्मपरकर्मकांडादित्यर्थः ॥ तत्त्वावेदकबाधितत्वादिति ॥ "केवलो निर्गुणश्च" इति वाक्यबाधितत्वादित्यर्थः ॥ व्यावहारिकबाधितत्वादिति ॥ प्रत्यक्षादिबाधितत्वादित्यर्थः। ननु सत्यादिपदानां सत्यत्वाद्यवांतरतात्पर्यसत्त्वात् ततो व्यावृत्तिः सिध्यति, यजमानादिशब्दस्य तु तदभावात्सैवमित्याशंक्याह ॥ नचेति ॥ व्यावहारिकैरिति ॥ स्वतः साधकत्वनिरासेन पारमार्थिकस्यैव साधकत्वसमर्थनादिति भावः ॥ तासामिति ॥ व्यावृत्तीनां ब्रह्मणा अन्योन्यं च भेदाभ्युपगम इत्यर्थः। ननु भावाद्वैतस्याभ्युपगमान्नाद्वैतहानिरित्यत आह ॥ अभावाद्वैतस्येति। शुक्तेरिति ॥ शुक्तित्वेन प्रतीयमानस्येत्यर्थः ॥ शुक्तिसमानसत्ताकत्ववदिति ॥ शुक्तित्वेन प्रतीयमानसमसत्ता-

पुंस्त्वस्योपदेशेन निवर्त्या, किंतु वल्मीकत्वस्य। नचात्मनि कल्पितेनापि ब्राह्मण्येन मिथ्याशंकिताब्राह्मण्यस्येव व्यावहारिक्या व्यावृत्त्या प्रातिभासिकानृतत्वभ्रांतिनिवृत्तिरिति वाच्यम्। ब्राह्मण्यस्य देहविशेषसंबंधित्वे आत्मनि ब्राह्मण्यस्य जातिविशेषत्वेऽब्राह्मण्यस्य सत्यत्वेन द्वयोः कल्पितत्वायोगात्, असद्व्यावृत्तेर्व्यावहारिकत्वेऽनपोदितप्रामाण्येन "असद्वा इदमग्र आसीत्" इति वाक्येनासत्त्वस्य पारमार्थिकत्वापत्तेश्च।

ननु मीमांसकमतेऽनृतस्याप्यर्थवादार्थस्य सत्ये प्राशस्त्ये इव मिथ्याभूतानामपि व्यावृत्तीनां सत्ये ब्रह्मणि द्वारत्वेन बोधनं युक्तम्। उक्तं हि— "सत्यादिशब्दा असत्यादिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यंति" इतिचेन्न, ब्रह्मस्वरूपमात्रस्य श्रुतिं विना प्रागेवाविद्याध्यासाधिष्ठानत्वादिना ज्ञातस्य पुनरपि 'ब्रह्मविदाप्नोति' इति पूर्ववाक्ये सामान्यतोऽत्र च सत्यादिशब्दैः सत्यत्वादिविशिष्टतया (व्यावृत्तिविशिष्टतया च) ज्ञातत्वेन तज्ज्ञानस्य व्यावृत्तिज्ञानासाध्यत्वात्, व्यावृत्तिज्ञानस्यैव च धर्मिज्ञानसाध्यत्वेन वैपरीत्यापाताच्च शाब्देऽर्थे आर्थिकार्यस्य द्वारत्वानुपपत्तेश्च, नीलमुत्पलमित्यादेरपि अनीलव्यावृत्तिद्वारा स्वरूपमात्रपरत्वमित्यापाताच्च। नच प्रागज्ञातो व्यावृत्त्या ज्ञाप्यो विशेषस्त्वन्मतेऽस्ति। नच प्राग्ब्रह्मणो ज्ञानेऽप्यन्याविषयकं तज्ज्ञानमसिद्धमिति वाच्यम्। व्यावृत्तिज्ञानस्यान्याज्ञाने द्वारत्वापत्त्या ब्रह्मज्ञाने द्वारत्वायोगात्, व्यावर्त्यज्ञानं व्यावृत्तिज्ञाने द्वारमिति वैपरीत्यापाताच्च, प्राचीने ब्रह्माज्ञाननिवर्तके ब्रह्मापरोक्षज्ञाने तदज्ञानकार्यस्यान्यस्य भानायोगाच्च, ब्रह्मप्रातिपदि-

---

कत्वचमित्यर्थः॥ अनृतव्यावृत्तेरिति॥ सत्यत्वेन प्रतीयमानब्रह्मनिष्ठानृतव्यावृत्तेरित्यर्थः॥ जातिविशेषत्वे त्विति॥ शरीरगतजातिविशेषत्वे त्वित्यर्थः। ननु मिथ्यैव व्यावृत्तिस्तद्बोधनं तु सत्यब्रह्मबोधनाय। अतो न तद्बोधकत्वेनाप्रामाण्यम्। न च मिथ्यावस्तुनः सत्यप्रतिपादनद्वारत्वानुपपत्तिः। अर्थवादगतास्तवपोत्थाननादेर्मिथ्याभूतस्यापि सत्यप्राशस्त्यबोधकताया दृष्टत्वादित्याशंक्यते॥ नन्विति। शाब्द इति॥ आर्थिकार्यस्य शाब्दार्थप्रतीत्यनंतरभावित्वादिति भावः॥ अन्याज्ञान इति॥ ज्ञानस्यान्यविषयकत्व इत्यर्थः॥ व्यावृत्तिज्ञाने इति॥ व्यावृत्तिज्ञानमितरविषयकज्ञाने एव हेतुरिति वदतो व्यावृत्तेरपि इतरत्वेन व्यावृत्तिज्ञानं व्यावर्त्यज्ञाने हेतुरिति लोकविरुद्धमापद्येतेत्यर्थः। किंच ब्रह्मज्ञानमात्रस्येतरविषयत्वासंभवाच्च व्यावृत्तिज्ञानद्वारत्वमित्याह॥ प्राचीन इति॥ किंचान्यविषयकज्ञाने व्यावृत्तिज्ञानस्याहेतुत्वे सत्यादिवाक्यं स्वरूपमात्रबोधकमित्युक्तं स्यात्। तच्च स्ववचनव्याघातम्। धर्मिज्ञानाभावे बुभुत्साप्रयोगाविरहस्य चाह॥ ब्रह्मप्रातिपदिकार्थेति॥ किंच व्यावृत्तीनां विकल्पेन द्वारत्वं उत समुच्चये-

कार्यबुभुत्सायामेतद्वाक्यं प्रवृत्तमिति स्वप्रक्रियाविरोधाच्च। किंच सत्यशब्देनासद्व्यावृत्तिद्वारा यद्बोधितं तदेव ज्ञानादिपदेनाज्ञानादिव्यावृत्तिद्वारा बोध्यतेऽन्यद्वा। आद्ये ज्ञानादिपदवैयर्थ्यम्। द्वितीये सविशेषत्वम्। नच द्वारविकल्पः, सत्यादिशब्दानां नित्यवच्छ्रवणात्, एकस्मिन्प्रयोगे व्रीहियवयोरिवैकस्मिन्वाक्ये सत्याद्यनेकपदोपादानायोगाच्च, अनृतत्वादिभ्रांतिनिवृत्तिरूपदृष्ट-कार्याणां भिन्नत्वेन व्रीहियवादिवद्विकल्पप्रयोजकस्यैककार्यत्वस्याभावाच्च। नापि समुच्चित-द्वारत्वं "विज्ञानमानंदं ब्रह्म" इत्यादौ अनृतव्यावृत्तेरबोधनेऽपि ब्रह्मप्रतीतेः, "आनंदादयः प्रधानस्य" इतिसूत्रे त्वद्भाष्योक्तन्यायेनोपासनायां शाखांतरोक्तगुणोपसंहारेऽपि ब्रह्मप्रमितौ वाक्यस्य शाखांतरानपेक्षत्वाच्च, सत्यादिपदानां प्रत्येकं लक्षकत्वेन प्रत्येकं लक्ष्यब्रह्मबोधकत्वाच्च, सत्यत्वादेः प्रत्येकं लक्षणत्वाच्च। नहि प्रकृष्टत्वादिकमिव सत्यत्वादिकं प्रत्येकमतिव्याप्तं, तस्मान्न-व्यावृत्तिर्द्वारम्। एतेन चंद्रं शाखेव ब्रह्म व्यावृत्तिर्द्वारतया बोधयतीति निरस्तम्। एतेन सत्यत्वादिकं व्यावृत्तिर्वा ब्रह्मबोधने उपलक्षणतयोपादीयत इति निरस्तम्, काकवद्गृहमित्यादिवत् सखंडार्थत्वापत्तेः, उपलक्षणात्प्रागेव ब्रह्मणो ज्ञातत्वेनोपलक्ष्यत्वायोगाच्च। तदुक्तं

"सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम्।
व्यावर्त्यस्याविशेषत्वे तदखंडं च खंडितम्॥" इति।

व्यावृत्त्या द्वारभूतयेत्यर्थः। टीकायां तु व्यावृत्तिः किं ब्रह्मविशेषणत्वेन बोध्या? स्वतंत्रा वा? आद्ये सखंडत्वम्, अंत्ये ब्रह्मजिज्ञासुं प्रति तदुपदेशोऽसंगत इति व्याख्यातम्। नचात्र व्यावृत्ति-वैशिष्ट्यस्यार्थिकत्वेन शाब्दार्थस्य न सखंडत्वं "यच्चार्थादर्थो न स चोदनार्थ" इति न्यायात्, "मानांतरादपोहस्तु न शाब्दस्तेन स स्मृत" इति सुरेश्वरोक्तेश्चेति वाच्यम्, आर्थिकेनापि

नेति विकल्प्याद्यं दूषयति ॥ नचेति ॥ दूषणांतरमाह ॥ एकस्मिन्निति ॥ एकजातीयकार्यजनकत्वरूपस्य विकल्पप्रयोजनस्याभावात्। नापि विकल्पसंभव इत्याह ॥ अनृतत्वादीनि ॥ द्वितीयं निराह ॥ नापीति ॥

ननु विज्ञानादिवाक्यं गुणोपसंहारन्यायेन शाखांतरगतसत्यत्वाद्युपसंहारेणैव स्वार्थबोधकमिति नोक्तदोष इत्यत आह ॥ आनंदादय इति ॥ उपासनायां तदुपसंहारेऽपि वाक्यस्य निराकांक्षत्वेनात्र तदुपसंहारे प्रमाणाभाव इति भावः ॥ एतेनेति ॥ अनृतादिव्यावृत्तेः द्वारत्वायोगेनेत्यर्थः। सत्यज्ञानादिवाक्यस्य व्यावृत्तिविशिष्टबोधकत्वं बाधकमाह ॥ तदिति ॥ टीकोक्तार्थमनुवदति ॥ टीकायां त्विति ॥ तामाशंक्य निराकरोति ॥ नचेति ॥ मानांतरादिति ॥

विशेषणेन ब्रह्मणोऽखंडत्वहानेः अनंतशब्देनांतवद्व्यावृत्तेः साक्षादुक्तेश्च शब्दस्य व्यावर्तक-वैशिष्ट्यतात्पर्ये आर्थिकव्यावृत्त्याऽसिद्धेरुक्तत्वाच्च । एतेन

"लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्य(स्य भे)विभेदतः ।
विज्ञानानंदपदयोः पर्यायव्यर्थते कुतः ॥"

इत्यानंदबोधोक्तमपास्तम् ।

नवीनास्तु गंभीरायां नद्यां घोष इत्यत्र गंभीरनद्योरन्योन्यमन्वयबोधानंतरं गंभीर-नदीपदयोरिव समुदितानां सत्यादिपदानां लक्षकत्वान्न वैयर्थ्यम्, त(त्रा)स्याप्येकैकस्यैव लक्षकत्वे शक्यासंबंधिनो गंभीरनदीतीरस्याप्रतीतिप्रसंगादित्याहुः । तन्न । तत्र गंभीरनद्योरिवेह सत्यज्ञानयोरन्योन्यमन्वयाबोधनात् । "सत्यं ज्ञानं" "विज्ञानमानंदं ब्रह्म" इत्यादाव(न्यो)-न्यानपेक्षाणामेव सत्यादिपदानां ब्रह्मलक्षकत्वदर्शनाच्च । गंभीरपदेन गंभीरसंबंधितीरस्येव इह पदांतरेणाधिकस्यालाभाच्च । तत्रापि गंभीरनद्योरन्वयबोधानंतरं गंभीरान्वितनदीबोधके नदी-पद एव लक्षणया सर्वोपपत्तौ पदद्वये एकस्या लक्षणाया लक्षणाद्वयस्य वाऽकल्प्यत्वाच्च । लक्षणापि हि पदवृत्तिः, वृत्तित्वात्, शक्तिवत् एवमन्यत्राप्यूह्यम् । "गच्छ गच्छसि चेत्कांत" इत्यत्र तु जन्मना मृत्यनुमितिः । प्रियामृतिहेतुत्वाच्च गमनं न कार्यमित्यनुमितानुमितिरेव, न तु वाक्ये लक्षणा । अनन्यलभ्यो हि शब्दार्थः । विषं भुंक्ष्वेत्यादावपि प्रकृताच्छत्रुगृहभोज-

---

पर्यायपतिरूपादित्यर्थः । अपोहः व्यावृत्तिः ॥ लक्ष्यार्थेति ॥ वाच्यार्थभेदसत्त्वात् व्यावर्त्यभेदसत्त्वाच्च न पर्यायत्वव्यर्थत्वे इति भावः ॥ तत्रेति ॥ परस्परान्वयाबाधसत्त्वादस्तु तत्र वाक्यस्य लक्षकत्वं इह तु तदभावाच्च वाक्यलक्षणेति भावः । किंच न समुदितानां सत्यादिपदानां लक्षकत्वम् । पदांतरासमभिव्याहृतपदांतरस्याप्यलक्षकत्वदर्शनादित्याह ॥ सत्यं ज्ञानमिति ॥

नतु "गच्छ गच्छसि चेत्कांत पंथानः संतु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

इति गमननिषेधः प्रतीयते । तत्प्रतीतिश्च न वाक्यलक्षणामंतरेण संभवति । इतरपदवैयर्थ्य-प्रसंगेन पदानां प्रत्येकं लक्षकत्वायोगादित्याशंक्याह ॥ गच्छ गच्छसि चेदिति ॥ तत्र हि जन्म-प्रतीत्या प्रियामरणमनुमाय तत्र च गमनस्य हेतुत्वं प्रत्येति । ततश्च गमनं न कर्तव्यमित्यनु-मित्या निषेधो वाक्यार्थो न गंतुमुक्तः इति भावः । ननु लक्षणयैव गमनाभावप्रतीत्युपपत्तौ किमेवं कल्पनयेत्याशंक्याह ॥ अनन्यलभ्यो हीति ॥ ननु विषं भुंक्ष्वेत्यत्र शत्रुगृहभोजना-

नात् विषभक्षणस्येष्टसाधनतोक्त्या भोजनस्यानिष्टसाधनता आक्षिप्यते न तु वाक्येन भोजनाकर्तव्यता लक्ष्यते। यद्वा तत्र विषशब्देनानिष्टसाधने विधिप्रत्ययेन च निषेधे लक्षिते निषेध्ये भोजने भुजिधातुर्मुख्य एवेति न सर्वपदानामेकार्थलक्षकता। वस्तुतस्त्वयमिदानीं मह्यं क्रुद्धः, आप्तत्वे सति प्रमाणविरुद्धकर्तव्यताभिधायित्वात्। क्रोधश्चास्य संनिहितभोजनादेव। दृष्टहेतुत्यागेनादृष्टकल्पनायोगात्। अतो मयेदं न कार्यमित्यनुमितिरेवात्र, न लक्षणा। अर्धमंतर्गृहमर्धं बहिर्गृहमित्यत्रापि धूमेनाग्निरिवार्धस्यांतस्त्वे सति अर्धस्य बहिष्ट्वेन वाक्यार्थेनांतरालप्रदेश आक्षिप्यते नतु समुदाये लक्षणा। अनन्यलभ्यत्वाभावात्। एव(मर्धमंतर्वेदि मातव्यमर्धं बहिर्वेदी)तिवैदिकोदाहरणमपि नेयम्। तत्राप्यंततो लिङादेरभिधायकत्वाच्च। "वायुर्वै क्षेपिष्ठा"

---

कर्तव्यताप्रतीतिर्नोक्तविधानुमानेन, लिंगाभावात्। नापि प्रत्येकपदलक्षणया, विशिष्टार्थलाभात्। तथाच वाक्य एव लक्षणावश्यकीत्याशंक्याह ॥ विषं भुङ्क्ष्वेति ॥ नीरपानप्रस्तावे क्षीरं पिबेत्यत्र नीरपानस्यानिष्टसाधनत्वप्रतीतावप्यनिष्टसाधनत्वेन प्रमितस्य विषभक्षणस्येष्टसाधनत्वोक्त्या एतदपेक्षयापि वैरिगृहभोजनस्यानिष्टसाधनत्वमाक्षिप्यत इत्यर्थः। ननु लक्षणाबीजानुपपत्त्यैव यद्यर्थसिद्धिः गंगायामित्यत्रापि लक्षणा न स्यादित्यत आह ॥ यद्वेति ॥ तथा चानिष्टसाधनत्वात्प्रकृतशत्रुगृहभोजनं न कर्तव्यमिति तात्पर्यतोऽवगम्यत इति भावः। ननु प्रकृतभोजनकर्तव्यतानिषेधेनैव न कलंजं भक्षयेदित्यादाविवानिष्टसाधनताप्रतीतेः किं विषपदस्यानिष्टसाधनलक्षणयेत्यतः पक्षांतरमाह ॥ वस्तुतस्त्विवति। आक्षिप्यत इति ॥ अंतरालदेशप्राप्तिं विना अर्धस्यांतस्त्वं अर्धस्य बहिष्ट्वं च नोपपद्यत इति तदाक्षेप इति भावः। नन्वेवमपि अर्धमंतर्वेदि, अर्धं बहिर्वेदि इत्यत्र वाक्ये लक्षणा न स्यात्, नचेष्टापत्तिः। तथा यूपस्य वेदिरित्यत्राग्नीषोमीयपशौ यूपं प्रकृत्य श्रूयते। अस्मिन् वाक्ये किमन्तर्वेद्येकदेशो यूपांगत्वेन चोद्यते उत बहिर्वेद्येकदेशसहितः स यूपांगमंतरालदेशं लक्षयतीति संदिह्य लक्षणाया अन्याय्यत्वादंतर्वेद्येकदेश एव विधीयते। अर्धं बहिर्वेदीत्येतत्तु अर्धस्यांतस्त्वे अर्धं बहिरेव भवतीति अनुवाद इति पूर्वपक्षयित्वा अर्धमंतर्वेदि मातव्यमित्येतावन्मात्रविधावर्धानंतरं बहिरित्यविधानादप्रतिषेधाच्च तस्यांतर्बहिर्वा मानं स्यात्। ततश्चार्धं बहिरिति पाक्षिकानुवादो भवेदिति नित्यवच्छ्रवणविरोधः स्यात्, तस्यापि विधौ वाक्यभेदप्रसंगाच्च। यत्र देशे निर्यातस्यार्धमंतरर्धं बहिश्च भवेत्तत्र मिनुयादित्युभयलक्षितांतरालदेशविधिरिति सिद्धांतितत्वेन तत्र लक्षणायाः स्वीकृतत्वादित्याशंक्याह ॥ एवमिति ॥ नच सूत्रविरोधः। तदर्थस्य लक्षणां विनाप्युपपत्तेरिति भावः। नन्वेवं यदि वाक्ये न लक्षणा तर्हि अर्थवादानां प्रामाण्यलाक्षणिकत्वं कथमित्याशंक्य न कथमपीत्याह ॥ वायुर्वा इति। इहेति ॥ सत्यवदनादिवाक्ये

इत्याद्यार्थवादिकपदसंघस्याप्यावयोर्मते कर्मणि क्षिप्रदेवताप्रसादहेतुत्वरूपतत्तत्पदार्थसंसर्गबोधकत्वमेव, नतु तदन्यप्राशस्त्यलक्षकत्वम्। किंच तत्र लिङाद्यभिधेयकार्यान्वयानुपपत्तिरिवेह सर्वपदानामपि लक्षकत्वबीजाभिधेयान्वयानुपपत्तिरूपं लक्षणाबीजमस्ति। अपिच सर्वपदानां लक्षकत्वे लक्षकपदान्यननुभावकनीतिपक्षे सत्यादिवाक्यस्यानुभावकत्वं न स्यात्। यदिच लक्ष्यपरं ब्रह्मपदं वाचकं तर्हि यौगिकं तदेव सखंडार्थं स्यात्। ब्रह्मपदस्य पदार्थांतरान्वयार्थमेव लक्षणाश्रयणेन पदार्थांतरान्वितस्वार्थपरं च स्यात्। नच "यष्टीः प्रवेशय" इत्यादाविव तात्पर्यानुपपत्त्यैव लक्षणा नत्वन्वयानुपपत्त्येति वाच्यम्। तत्रापि भोजनादिकर्तृत्वेन प्रकृतानां प्रवेशनान्वयानुपपत्तेरेव तद्बीजत्वात्। इह प्राग् पदार्थमात्रे तात्पर्यायोगादित्युक्तत्वाच्च। एतेन वाक्यप्रामाण्यानुपपत्तिर्लक्षणाबीजमिति निरस्तम्। वाक्यस्यान्वयलक्षकता तु न संभवा। अन्विताभिधानांगीकारात्। अभिहितान्वयवादिभिस्तार्किकैरप्यन्वये लक्षणानंगीकाराच्च। अन्वयो लक्ष्यत इति पक्षेऽपि पदांतरैः प्रतियोग्युपस्थितौ प्रधानस्यैकपदस्य अन्वयलक्षकत्वोपपत्तेश्च। गामानयेत्यस्मात् गामानय शुक्लां दंडेनेतिवाक्यस्येवेह पदांतरप्रयुक्तस्य अधिकलक्षकत्वाभावाच्च। अस्तु वान्यत्र पदसंघे लक्षणा, इह तु न, तथाहि यदि कृत्स्नं सत्यादिवाक्यं लक्षकं, तर्हि तस्य विशिष्टार्थत्वेऽनंतब्रह्मशब्दविरोधोक्तिः। सत्यादिपदैरनृतादिव्यवच्छेदोक्तिः, "विज्ञानमानंदं ब्रह्म सत्यं ज्ञानं" इत्यादिश्रुतिर्ब्रह्मणो विज्ञाना-

---

इत्यर्थः। ब्रह्मपदस्याखण्डलक्षकत्वेऽपि सखंडार्थत्वं दुर्वारम्। अन्वयानुपपत्तिमूलकलक्षणायास्तदन्वयबोधनार्थत्वादित्याह (मित्याह) ॥ ब्रह्मपदस्येति ॥ ननु भोजनादिकर्तृत्वेनाप्रकृतानां प्रवेशनान्वयानुपपत्तिरिति वदता तात्पर्यविषयीभूतान्वयानुपपत्तिस्तद्बीजमित्युक्तं स्यात्। तथाच लाघवात्तात्पर्यानुपपत्तिरेव तथास्त्वित्यतो दोषान्तरमाह ॥ इहेति ॥ अतो नेति पदार्थमात्रे तात्पर्यायोगेनेत्यर्थः। तथा च तात्पर्यविषयीभूतार्थ एव शब्दस्य प्रामाण्यात् पदार्थमात्रे च तात्पर्याभावात् न प्रामाण्यानुपपत्तिस्तद्बीजमिति भावः।

ननु यदि वाक्यगतसकलपदानामेकस्माखण्डलक्षकत्वं न स्यात्कथं तर्ह्यखण्डवाक्यस्यान्वयस्य भानम्। तथैवमपि पदभेदेन पदं मा भवत्वखण्डमस्त्विति वाच्यम्, विशिष्टप्रमाविरहादित्याशंक्याह ॥ वाक्य इति। इहेति ॥ "सत्यं ज्ञानं नित्यं विज्ञानमानंदं" इत्यादावित्यर्थः ॥ विरोधोक्तिरिति ॥ तत्र सर्वेण इत्यनुयुक्तं स्यादित्यनेन संबध्यते। सत्यादिपदैः सत्यादिबोधनादिति भावः

ह्मात्मकत्वे प्रमाणमित्युक्तिः, "एकमेवाद्वितीयं" इत्यादौ सजातीयविजातीयस्वगतनानात्व-निषेधोक्तिरित्याद्ययुक्तं स्यात्। सत्त्वाद्युद्देशेन ब्रह्मत्वाविधानाद्ब्रह्मबुभुत्सानिवृत्तिश्च न स्यात्। सगुणसप्रपंचवाक्ययोरपि लक्षणयाऽखंडार्थपरत्वसंभवेन सगुणनिर्गुणादिविद्याविभागः, निर्गुणादिवाक्यैः सगुणादिवाक्यानां बाध इत्यादि चासंगतं स्यात्। "तदैक्षत, स एषोऽनंत" इत्यादीनामपि वाक्यलक्षणयाऽखंडपरत्वेनेक्षणादौ तात्पर्याभावेनेक्षणानंतत्वादिलिंगैः प्रधानाकाशादिनिरासके सत्याद्यधिकरणानारंभश्च स्यात्। कृत्स्नस्य ब्रह्मकांडस्य वाक्यलक्षणया शून्यादिपरत्वं कृत्स्नस्य च कर्मकांडस्य चैत्यवंदनादिपरत्वं निर्विशेषधर्मिपरत्वं वा स्यादित्यलम्। तस्मादखंडार्थत्वे पदांतरवैयर्थ्यं दुर्वारम्। अपिच सत्यानंदादिपदलक्ष्यत्वे ब्रह्मणो नदीपदलक्ष्यस्य तीरस्यानदीत्ववदसत्यत्वानानंदत्वादिकं स्यादिति शून्यवादापत्तिः। मुक्तिश्चापुमर्थः स्यात्। आनंदानुभवाभावात्। ननु न नदीशब्देन नदीत्ववाचिना तदाश्रयव्यक्तेर्लक्षणा, किंतु तदाश्रयव्यक्तिसंबंधिनस्तीरस्येति तस्यानदीत्वम्, इह तु सन्घट इत्यादाविव सत्तादिजातिवाचिभिः सत्यादिशब्दैः तदाश्रयव्यक्तेरेव लक्षणा, एवंच सत्त्वसंबंधस्याशाब्दत्वेऽपि तीरस्य नद्येव ब्रह्मणोऽपि घटस्येव सत्तया संबंधः सिध्यति, मुख्यार्थासंबंधे लक्षणायोगात्। जातिव्यक्त्योश्च तादात्म्यसंबंधात्। उक्तं हि—

"सत्त्वादीनां हि जातीनां व्यक्तितादात्म्यदर्शनात्।
लक्ष्यव्यक्तिरपि ब्रह्म सत्त्वादि न जहाति नः" ॥

---

॥ प्रमाणमित्युक्तिरिति ॥ स्वार्थस्य त्यागादिति भावः ॥ निषेधोक्तिरिति ॥ तस्यापि स्वरूपमात्रपरत्वादिति भावः। ईक्षत्यादीत्यादिपदेन आकाशस्तल्लिंगादित्यधिकरणपरिग्रहः। तात्पर्याभावेऽपि मानांतराविरोधात् तत्सिद्धिरित्येतत्प्रागेव निरस्तमिति भावः। प्रकृतमुपसंहरति ॥ अपि चेति ॥ यद्यपि पूर्वं सत्यज्ञानादिवाक्यानां लक्षकत्वे सादिरूपत्वं प्रमाणोक्तिर्न स्यादित्यत्रैवेदमुक्तप्रायं, तथापि तत्र पुरुषः उक्तः, इदानीं वस्तु उच्यत इति तस्य (तात्पर्यं) ध्येयम। दृष्टांतवैषम्यमाशंकते ॥ नन्विति ॥ ननु सत्यज्ञानादिवाक्यानां लक्ष्यत्वमात्रेणासत्यत्वानृतत्वादिकमापाद्यते तत्र सत्त्वादिसंबंधबोधकप्रमाणाभावादिति। तत्राद्यं दोषमाह ॥ नन्विति ॥ तीरस्यानदीत्वं न नदीपदलक्ष्यत्वप्रयुक्तम्। तथा सत्यनदीत्वापत्तेः। किंतु शक्याश्रयसंबंधित्वप्रयुक्तम्। ब्रह्म-वस्तु शक्यसत्त्वाश्रयत्वेन नासत्यत्वादिकमिति भावः। द्वितीयं आह ॥ एवंचेति ॥ तथापि

इतीतिचेन्न। व्यक्तिः शब्दार्थ इति मते सद्व्यक्तितोऽन्यस्यैव लक्षणीयत्वेन ब्रह्मणः सत्त्वासिद्धेः।

ननु गंगाशब्दे जहल्लक्षणा आनंदादिशब्देषु तु जात्यंशत्यागेऽपि व्यक्त्यंशत्यागायोगात् जहदजहल्लक्षणेति कथमनानंदत्वापत्तिरिति चेन्न, तत्रानंदत्वजातेरसत्त्वे तद्व्यक्तेरानंदव्यक्तित्वासिद्धेः। तत्सत्यत्वस्य चौपनिषदे ब्रह्मण्यशब्देनासिद्धेः। जातिः शब्दार्थ इतिमतेऽपि सन्घटइत्यादावपि शब्देन सत्तावैशिष्ट्याप्रतीतेः लक्षणाहेतुत्वेन प्रतीतेश्चेहापि सत्त्वेन तद्विशिष्टार्थमिदं त्वखंडार्थमितिविभागायोगेन विभागाय सन्घट इत्यादितो विशेषेण सत्यादिशब्दानां लक्षकत्वार्थं च नद्यां घोष इत्यादाविव जात्याश्रयव्यक्तिसंबंधित्वेनैव ब्रह्मणो लक्षणीयत्वेन सत्त्वासिद्धेः। एतेन यथा शोणिमगुणवाचिनः शोणशब्दस्य(तद्विशिष्टःपदार्थो लक्ष्यः)गुणविशिष्टाऽश्वव्यक्तिर्लक्ष्या यथा वा तद्गुणसंविज्ञानबहुव्रीहौ कर्णादिशब्दस्य तद्विशिष्टोऽन्यपदार्थो लक्ष्यः, तथा सत्तादिवाचिनां सत्यादिशब्दानां सत्तादिविशिष्टो लक्ष्य इति सत्तादिसंबंधः शाब्द एवेति निरस्तम्। लक्ष्यस्य तात्पर्यविषयस्य विशिष्टत्वापातात्। नच सन्घट इत्यादौ विशिष्टं लक्ष्यम्, इहतु व्यक्तिमात्रम्। तेनेह शब्दस्याखंडार्थत्वं लक्षणाहेतुत्वेन ब्रह्मणस्सत्त्वसिद्धिश्चेति वाच्यम्। लक्षणाया घटादाविवातात्त्विकसत्त्वसंबंधेनाप्युपपत्तेः। श्रुतेरेव वाच्ये सत्त्वेऽपि तात्पर्यं तु सखंडार्थत्वम्। नचानुगतसत्त्वैव ब्रह्मेति सत्तासंबंधाभावेऽपि सत्त्वसिद्धिरिति वाच्यम्। वाच्यातिरिक्तलक्ष्याभावापातात्। ब्रह्मणः परतंत्रत्वादिरूपजातित्वायोगाच्च। एतेन ब्रह्म स्वरूपातिरिक्तसत्ताहीनमपि सत्तावत् सत्स्वभावमिति निरस्तम्। सच्छब्दस्य तत्र लाक्षणिकत्वात्। सत्तायामिव च मानांतराप्रवृत्तेर्ब्रह्मणः सत्स्वभावत्वे मानाभावात्। कथंच परमार्थसति मुख्यस्य सत्यशब्दस्य जातिवाचिता, सद्व्यक्तेरेकत्वात्। एतेन सद्रूप्यं कुंभ इति-

---

मतांतर उक्तदोषस्तावदस्त्वत्यभिप्रेत्याह ॥ व्यक्तिरिति ॥ ननु न केवला व्यक्तिः शब्दार्थः, किंतु जातिविशिष्टा। तथा च जात्यंशापरित्यागेन तद्व्यक्तिमात्रस्यैव लक्षणायामुक्तदोष इत्यभिप्रेत्य शंकते ॥ नन्विति ॥ ननु शब्देनाबोधनेऽपि मतांतरेणैव ब्रह्मणः सत्यत्वादिसिद्धिरित्याशंक्याह ॥ तत्सत्यत्वस्य चेति। शोणशब्दस्येति ॥ शोणो धावतीति वाक्यस्थशोणशब्दस्येत्यर्थः। ॥ कर्णादिशब्दस्येति। लंबकर्णमानयेत्यादिवाक्यस्थकर्णादिशब्दस्येत्यर्थः ॥ लक्षणाहेतुत्वेनेति ॥ लक्षणाविनाभावेनेत्यर्थः। शक्यसंबंधं विना लक्षणायोगादिति भावः। शोणादिशब्दवत् सत्यादि-

पदानि तत्तज्जातिद्वारा एकां कुंभव्यक्तिमिव सत्यादिपदान्यपि सत्तादिजातिद्वारा एकामेवा-नंदव्यक्तिं लक्षयंतीति कल्पतरूक्तं निरस्तम् । तद्वदेवातात्त्विकसत्तादिविशिष्टार्थत्वापातात् । एवंच

"सौगतोक्तस्वाभिमतशून्यतासिद्धये परैः ।
सत्यज्ञानादिवाक्यानां लक्षणोक्ता परात्मनि ॥"

तस्मात्सत्यज्ञानादिवाक्यानां नाखंडार्थत्वम् ।

॥ सत्यज्ञानादिवाक्यानामखंडार्थत्वानुमानभंगः ॥ २ ॥

---

शब्दस्यापि सत्त्वादौ तात्पर्यमस्ति न वा । नांत्यः । पारमार्थिकसत्त्वासिद्धिप्रसंगादित्यभिप्रेत्याह ॥ लक्षणाया इति ॥ आद्य आह ॥ श्रुतेरेवेति । तत्रेति ॥ ब्रह्मणीत्यर्थः । किंच शब्दस्य जातिवाचित्वमानन्त्यव्यभिचाराव्यवस्त्यनेकत्वदोषैः कल्पनीयम् । नचात्र तादृशबाधकमस्ति । परमार्थसद्व्यक्तेरेकत्वादित्याह ॥ कथंचेति ॥

॥ इति सत्यज्ञानादिवाक्यानामखंडार्थत्वानुमानभंगः ॥ २ ॥

## ॥ अथ तत्त्वमस्यादिवाक्यस्याखंडार्थत्वानुमानभङ्गः ॥ ३ ॥

तत्त्वमस्यादिवाक्यस्याऽखंडार्थत्वानुमाने अप्ययुक्ते । उक्ताप्रसिद्धविशेषणत्वबाधप्रतिरोधाप्रयोजकत्वप्रतिकूलतर्कपराहत्यादिदोषात् । उक्तरीत्याऽस्य हेतोरसिद्धेश्च । उभयत्रापि दृष्टांतस्य साध्यवैकल्याच्च । ननु सोऽयमित्यत्र किं तद्देशकालादिविशिष्टस्यैतद्देशकालादिवैशिष्ट्यं बोध्यते, एतद्देशकालादिविशिष्टस्य तद्देशकालादिवैशिष्ट्यं वा, विशिष्टद्वयैक्यं वा । नाद्यः, एतत्कालादिविशिष्टस्य प्रत्यक्षत्वेनाऽनुपदेश्यत्वात् । तत्कालादेरपीदानीं सत्त्वापत्तेश्च न द्वितीयः, एतत्कालादेस्तदा सत्त्वापातात् । न तृतीयः, विशेषणभेदे विशिष्टाभेदायोगात् । विशिष्टं हि यदि विशेषणविशेष्यसंबंधरूपं तदा विशेषणभेदेन, यदि तु पदार्थांतरं तदापि विशेष्यभेदेनेव विशेषणभेदेनापि तद्भेद आवश्यकः, तस्मात्सोऽयमित्यादिवाक्यं लक्षणयाऽखंडार्थमिति चेत् ।

उच्यते । अस्तु तावदनुभवकालसंबंध एव तत्ता, तथापि बाल्ययौवनयोरिव श्यामरक्तरूपयोरिव च तदेतद्देशकालसंबंधरूपयोस्तत्तेदंतयोः परस्परमनन्वयेऽपि एकविशेषणविशिष्टे इतरस्यावृत्तावपि एकविशेष्यवृत्तित्वं तावदस्ति, कालद्वयासंबंधिपदार्थानां क्षणिकत्वापातात् । देशद्वयसंबंधस्यापि कालभेदेनानुभवात् । सोऽयमितिपदद्वयं च तत्तेदंतयोरेकवृत्तित्वबोधने

---

॥ अथ तत्त्वमस्यादिवाक्यस्याखंडार्थत्वानुमानभङ्गः ॥ ३ ॥

॥ अखंडार्थत्वानुमाने अपीति ॥ तत्त्वमस्यादिवाक्यमखंडार्थनिष्ठं आत्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणवाक्यत्वात् । तत्प्रश्नप्रश्नोत्तरत्वादित्यनुमानेऽपीत्यर्थः ॥ अप्रसिद्धविशेषणत्वेति ॥ अखंडार्थनिष्ठत्वस्य साध्यस्याप्रसिद्धेर्विपरीतप्रसिद्ध्या बाधात् । वाक्यत्वेन हेतुना प्रतिरोधात् । नीलोत्पलादिवाक्यवत् सखंडप्रश्नोत्तरत्वादिवाक्यवच्च । उक्तसाध्यमपि नाप्युपपत्त्या । अप्रयोजकत्वात्, वाक्यत्वोक्तकेवललक्षणप्रतिकूलतर्कपराहतत्वाच्च, एतदनुमानद्वयमप्ययुक्तमित्यर्थः ।

ननु विशिष्टार्थत्वे बाधात् लक्षणया स्वरूपमात्रपरत्वं सोऽय(मसौ)मित्यादिवाक्यस्य वक्तव्यमिति न दृष्टांते साध्यवैकल्यमिति शंकते ॥ नन्विति । अनुपदेश्यत्वादिति ॥ शास्त्रस्य संदिग्धविपर्यस्तार्थपरत्वं प्रत्यक्षत्वादिति भावः ॥ तत्कालादेरपीति ॥ उद्देश्यस्यासत्त्वे तदुद्देशेन विधानायोगात् । विधेया(ता)भावित एव विधेयत्वादिति भावः । नन्वस्तु क्षणिकत्वभयात् एकस्य कालद्वयसंबंधः । देशद्वयसंबंधस्तु कथं स्याद्विरोधादित्याशंक्याह ॥ देशद्वयसंबंधस्या-

शक्तम्। समानाधिकरणत्वात्। भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। नच विशेष्यस्य तत्तेदंतान्वयपरमपीदं वाक्यं विशिष्टस्य तदन्वयपरं नेत्येतावताऽखंडार्थम्। नीलमुत्पलमित्यादेरप्यखंडार्थत्वापातात्। एवंच

कालद्वयेन योगस्य क्रमेण स्थायिवस्तुनि।
नैल्यरक्तत्ववत्सत्त्वात्तदुक्तौ का विरुद्धता॥
विशेष्ये धर्मसंसर्गपरं चापि विशेषिते।
तत्परं नेत्यखंडार्थं स्याच्चेत्सर्वं तथा भवेत्॥

एतेन विशेष्यस्य कालद्वयसंबंधेनैव क्षणिकत्वानापत्तेर्विशिष्टस्य तत्संबंधो नाऽपेक्षित इति निरस्तम्। मयापि विशेष्य एव कालद्वयसंबंधस्योक्तेः। देवदत्तस्वरूपमात्रं बुभुत्सितमिति तु निरसिष्यते। नच तत्ताया अतीतत्वमात्रेण तत्पदस्य लक्षणा। घटो नष्ट इत्यादाविवातीततत्तारूपस्वार्थात्यागात्। अन्यथा तत्तादेरतात्पर्यविषयत्वे सोऽयमित्यनेन देवदत्तस्य कालद्वयसंबंधो न सिध्येत्। तस्मादेकविशेषणविशिष्टे विशेषणांतरान्वयाबोधकमपीदं वाक्यं विशेष्यस्य क्रमिकधर्मद्वयान्वयपरत्वात्सखंडार्थमेव। किंच त्वदुपन्यस्ते पक्षत्रयेऽपि न दोषः। तत्तादेरतीतत्वेऽपि यदन्विततया ज्ञात एव तात्पर्यविषयीभूतेतरान्वयधीः, तत्स्वरूपस्य विशेषणत्वस्य संभवात्। नच विधेयान्वय्येव विशेषणम्। शब्दोऽनित्य इत्यादौ शब्दत्वादावव्याप्तेः। नापि विधेयान्वयकाले सदेव विशेषणम्। दंडी भविष्यति दंडी नास्तीत्या-

---

पीति। नीलमुत्पलमिति॥ तत्रापि नैल्यविशिष्ट उत्पलत्ववैशिष्ट्यबोधायोगादिति भावः। उक्तमर्थं कारिकायां(कया) संगृह्णाति॥ एवंचेति॥ पदार्थानां क्षणिकत्वपरिहाराय विशिष्टयोः कालद्वयसंबंधो वक्तव्य इति दूषणमभिप्रेत्य विशेष्यमात्रस्य कालद्वयसंबंधेनापि न क्षणिकत्वमिति परिहारमाशंक्य स्वयुक्तावविशेषयन्नित्याह॥ एतेनेति॥

ननु देवदत्तस्वरूपमात्रस्य बुभुत्सितत्वात्तदेव सोऽयमित्यादिना बोधनीयमिति न विशिष्टार्थपरत्वमित्याशंक्याह॥ देवदत्तेति॥ ननु तत्पदस्य न मुख्यत्वं संभवति तदर्थस्यातीतत्वात्। विद्यमानार्थत्वस्यैव मुख्यार्थत्वात्। तथाच न सर्वपदानां मुख्यत्वमिति आशंक्य निराकरोति॥ नचेति। अन्यथेति॥ सोऽयमित्यादिवाक्यस्य स्वरूपमात्रपरत्व इत्यर्थः। किंच

दावव्याप्तेः। गृहनिष्ठे काकादावतिव्याप्तेश्च। नापि विधेयान्वयप्रतियोगितावच्छेदकं वा स्वप्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकं वा विशेषणम्। अवच्छेदकत्वस्यान्यूनानधिक-देशकालत्वरूपत्वे तस्य मात्रादिमान् गौरित्यादिषु लक्ष्यतावच्छेदकरूपविशेषणेषु सत्त्वेऽपि गौः शुक्ला इत्यादावव्याप्तेः। नहि गोत्वं शुक्लान्वयप्रतियोगित्वेनाशुक्लव्यावृत्त्या वा अन्यूनानधिकदेशम्। अवच्छेदकत्वस्य यद्वत्तया ज्ञात एव यदन्वयधीस्तत्त्वरूपत्वे चेहाप्यव-च्छेदकस्य सत्वात्। नहि काकोपस्थापितसंस्थानवत्तया ज्ञात एव देवदत्तीयत्वधीवद्-देवदत्तगृहव्यावृत्तिधीर्वा तत्तोपस्थापितधर्मांतरवत्तया ज्ञात एवेदंत्वधीः, अनिदंव्या-वृत्तिधीर्वा किंतु तत्तावत्तया ज्ञात एव। नचात्रापि तत्तोपस्थापितदेवदत्तसंस्थानविशेष-वत्तया ज्ञात एवेदंत्वादिधीः। तत्रेदंतादिसंबंधस्य प्रत्यक्षत्वेनानुपदेश्यत्वात्। तस्मा-दतीतमपि यदन्विततया ज्ञात एवेत्याद्युक्तलक्षणयुक्तं चेद्विशेषणमेव। तदयुक्तं चेद्वर्तमान-मप्यविशेषणमेव। अत एवाहुः 'सदसद्वा समानाधिकरणं विशेषणम्' इति। तस्मात्पक्षत्रयेऽपि

---

यदन्वयितया ज्ञात एव तात्पर्यविषयेतरान्वयिधीः तत्त्वस्वरूपविशेषणत्वस्य विवक्षितत्वात्, तस्य चातीतादावपि सत्त्वात् नाद्यद्वितीयपक्षयोस्तत्रेदंतयोः कालद्वयसत्त्वापत्तिः। तृतीयेऽपि शब्दो-ऽनित्य इत्यादौ शब्दत्वान्विततया ज्ञाते अनित्यत्वान्वयवत् तत्तान्विततया ज्ञाते इदन्तान्विता भेदान्वय इति न विशेषणयोरभेदापत्तिरित्याह ॥ किंचेति। नहीति ॥ यद्यपि गौः शुक्ल इत्यत्र गोत्वस्य गो(त्व)व्यावृत्त्यन्यूनानतिरिक्तदेशकालत्वेनावच्छेदकत्वं संभवति। तथापि शुक्लत्वविशिष्ट-गोत्वाभावव्यावृत्तौ शुक्लत्वगोत्वादीनां विशेषणत्वं न स्यादित्यत्र तात्पर्यम्। वस्तुतस्तु प्रमेयमभिधेयमित्यादौ विशेषणत्वं न स्यादिति बोध्यम्। यद्यपीदं विशेषणत्वलक्षणं प्रत्यक्ष-प्रतीतावेवोपयुक्तं न शाब्दप्रतीतौ तथापि साधारणमिति मत्वा शंकासमाधाने इति द्रष्टव्यम् ॥ इहापीति ॥ तत्तावतीत्यर्थः ॥ तत्रेति ॥ काकोपस्थापितसंस्थानविशेषवत्तया ज्ञाते(मे) देवदत्ती-यत्वविधानं संभवति तस्याज्ञातत्वात्। इदंतु न तथा देवदत्तसंस्थानविशेषमात्रे वा इदंत्व-वैशिष्ट्यस्य भासमानत्वात् उपदेशावैयर्थ्यमिति भावः। नन्वेवं विशेषणत्वलक्षणोक्तौ "जटाभिस्तापस" इत्यादौ जटानां विशेषणत्वं न स्यात्। स्याच्च दंडी नास्तीत्यादौ दंडादेर्विशेषणत्वमित्याशंका-मिष्टापत्त्या परिहरन्नुपसंहरति ॥ तस्मादिति ॥ क्वचिदविद्यमानस्यापि विशेषणत्वं क्वचिद्विद्य-मानस्याप्युपलक्षणत्वमस्तीत्यत्र वैयाकरणानामपि संमतमस्ति ॥ अत एवाहुरिति ॥ ननु सोऽय-मित्यादिवाक्यं यदि तत्तान्वितेदंतावैशिष्ट्यबोधनपरं तदा बुभुत्सितस्वरूपाभेदस्य लाक्षणिकप्रति-

न दोषः। नचाद्ये वाक्यवैयर्थ्यम्। इदंतावैशिष्ट्यस्य प्रत्यक्षत्वेऽपि तत्ताविशिष्टे तस्याप्रत्यक्षत्वात्। नचाद्यद्वितीययोर्बुभुत्सितस्याभेदस्य साक्षादलाभः। पुरोवर्तिनि तत्ताद्यवैशिष्ट्यभ्रमनिरासायायं स वा न वेत्यभिप्रायेण कोऽयमितिप्रश्ने सोऽयमित्युक्तेः। भेदभ्रमे निरसितव्येऽपि अभेदोक्त्ये वाभेदकोक्त्यापि साक्षद्भेदभ्रमनिवृत्तेश्च। अभेदस्य बुभुत्सितत्वेऽपि वाक्यस्याभेदविशिष्टपरत्वेन सखंडार्थत्वापत्तेश्च। ननु तृतीये विशिष्टैक्ये विशेषणैक्यं स्यात्। नच धूमवदग्निमतोरैक्येऽपि धूमाग्न्योर्भेदो दृष्ट इति वाच्यम्। तत्रापि विशेष्यस्यैवैक्यात्। नच तर्हि दृष्टांताभावाद्विशिष्टैक्येन विशेषणैक्यापादनायोगः। अग्निमतोऽग्निमतैक्येऽग्नेरग्निनैक्यदर्शनात्। समुदायिरूपविशेषणभेदे समुदायैक्यस्य व्याहतत्वादेवेति चेन्न। विशिष्टमपदार्थांतरमिति मते विशेष्यस्यैवैक्याधिकरणत्वेऽपि धर्मयोरप्युद्देश्यतावच्छेदकत्वेन विशेषणत्वात् तस्यैव च विशिष्टाभेदशब्दार्थत्वात्। पदार्थांतरमित्याद्ययोर्मते तु धूमाग्न्योर्भेदेऽपि धूमवानग्निमानित्यबाधितसामानाधिकरण्यधीबलेन विशिष्टयोरभेदस्यापि सत्त्वात्। अन्यथा इदं रूप्यमित्युक्ते पुरोवर्तिनि रूप्याभेदाप्रतीतेः रूप्यार्थिनः पुरोवर्तिनि प्रवृत्तिश्च न स्यात्। तत्तेदंतोपलक्षितैक्यबोधनमिति त्वन्मतं चायुक्तं स्यात्। तत्तेदंतोपलक्षितत्वरूपविशेषणभेदाद्विशिष्टभेदात्। अस्तु वा तत्तेदंतयोर्मध्ये एकस्योपलक्षणत्वं तथापीदंताविशिष्टस्योपलक्षणीभूततत्कालसंबंधो वा तत्तोपलक्षिताभेदो वा तत्ताविशिष्टस्योपलक्षणीभूतेदंतासंबंधो वा इदंतोपलक्षिताभेदो वा बोध्यताम्। नचैतावता वाक्यस्याखंडार्थत्वम्। उपलक्षणस्य काकादेः

---

प्रतिपादनादनाकांक्षिताभिधानत्वं स्यादित्याशंक्याह ॥ नचेति ॥ यदा प्रष्टा (पृष्टः) तत्ताद्यवैशिष्ट्यसंशयेन कोऽयमिति प्रश्नस्तदा सोऽयमित्यस्य साक्षात्तत्तादिवैशिष्ट्यबोधकत्वेनाकांक्षिताभिधानत्वम्। यदा तु भेदभ्रमनिवृत्त्यर्थं भेदबुभुत्सा तदा अभेदोपदेशेनेव भेदोपदेशेनापि भेदभ्रमनिवृत्तेः नानाकांक्षिताभिधानत्वमित्याह ॥ पुरोवर्तिनीत्यादिना। समुदायिरूपेति ॥ समुदायिनां विशेषणविशेष्यसंबंधानां भिन्नत्वेन तद्विशिष्टयोरैक्यस्य व्याहतत्वादिति भावः। विशिष्टैक्यं नाम तत्तद्विशेषणावच्छिन्नविशेष्यैक्यमेव। न च विशेषणस्यासंभवः। तथाप्यन्वितावच्छेदकत्व-मात्रेण तत्संभवादित्याह ॥ विशिष्टमिति ॥

ननु नास्मन्मते तत्तेदंत्वोपलक्षितत्वविशिष्टयोरभेदः। किंतु तदुपलक्षितस्वरूपमात्रस्य। अन्यथा विशिष्टयोरैक्ये विशेषणयोरैक्यापत्तेः। अत एवेदं रजतमित्यत्र इदंत्वरजतत्वयोर्न

स्वयं प्रकारत्वेन प्रका(रां)तरोपस्थापकत्वेन वा निष्प्रकारकत्वरूपाखंडार्थत्वविरोधित्वात्। एकस्योपलक्षणत्वेऽप्यन्यस्य विशेषणत्वाच्च। नाप्युपलक्षणत्वमात्रेण तद्वाचिशब्दानां लाक्षणिकत्वम्। वृत्तिविशेषरूपलक्षणाया व्यावर्तकविशेषरूपोपलक्षणस्य च भिन्नत्वात्। दृश्यते हि घटस्याभावः जटाभिस्तापसइत्यादावभावादिकं प्रति घटादेरुपलक्षणत्वेऽपि घटादिशब्दस्यालाक्षणिकत्वम्। दृश्यते च दंड्यभिप्रायेण प्रयुक्ते दंडमानयेत्यत्र दंडशब्दस्य दंडिनि लाक्षणिकत्वेऽपि दंडस्याऽनुपलक्षणत्वम्। वरं चोभयपदलक्षणात एकपदलक्षणा। नचेदंताविशिष्टस्य तत्तया तत्ताविशिष्टस्य चेदंतया कदाप्यसंबंधात्त्व ते प्रति तयोरुपलक्षणतेति वाच्यम्। तयोस्ताभ्यां विशेष्यद्वारा संबंधात्। परंपरासंबंधिनोऽप्युपलक्षणत्वात्। यद्वा इदंतोपलक्षितस्य तत्तावैशिष्ट्यं तत्ताविशिष्टाभेदो वा तत्तोपलक्षितस्येदंतावैशिष्ट्यं वा इदंताविशिष्टाभेदो वा बोध्यताम्।

ननु यद्यपीदंतया तत्तया वोपलक्षितस्य विशेष्यस्य तत्तावैशिष्ट्यं वा इदंतावैशिष्ट्यं वा युक्तम्। विशेष्ये विशेषणांतरान्वयात्। अभेदपक्षौ तु न युक्तौ। अनुवृत्तव्यावृत्तयोर्विशेष्यविशिष्टयोरभेदायोगादिति चेन्न। समवायस्थाने भेदाभेदावित्यावयोर्मतेऽनुवृत्तव्यावृत्तयोरपि

---

बोधने विशेष्यत्वं किंतूपलक्षणत्वमेव, रजतामेवबोधनमात्रेणैव रजतार्थिप्रवृत्त्युपपत्तेः। उपलक्षणस्यापि रजतत्वादेः प्रकारतया भानसंभवाचेत्यनुशयादाह ॥ अस्तु वेति। प्रकारांतरोपस्थापकत्वेनेति ॥ वस्त्वन्त्यापुपस्थापकत्वेनेत्यर्थः। ननु तत्तादीनामुपलक्षणत्वे सोऽयमित्यत्र तच्छब्दादेर्लाक्षणिकत्वं स्यात्। तदर्थस्यान्वयप्रतियोगित्वाभावात्। एवमेवहि पदस्य लाक्षणिकत्वं यत्स्ववाच्यार्थस्यान्वयप्रतियोगित्वाभाव इत्याशंक्य किं लक्षणोपलक्षणयोरभेद इत्युच्यते किंवोपलक्षणत्वेन तद्वाचकशब्दस्य लक्षणावश्यकीति। नाद्य इत्याह ॥ वृत्तिविशेषरूपेति ॥ अंत्य आह ॥ दृश्यते हीति ॥ वस्तुचैकपदे लक्षणा तथापि सर्वपदलक्षणायाः गौरवात् न त्वविष्टसिद्धिरिति प्रौढिवादेनाप्याह ॥ वरं चेति ॥ ननु विशिष्टं पदार्थोतरमिति मते यत्र विशिष्टे तयोरुपलक्षणत्वं तेन तस्य कदाप्यसंबंधात् नोपलक्षणत्वम्। विशेष्यमात्रसंबंधित्वं तु अकिंचित्करमित्यत आह ॥ परंपरेति ॥ संबंधस्यैवोपलक्षणत्वे तंत्रत्वादिति भावः।

ननु परंपरासंबंधिनोऽप्युपलक्षणत्वे चैत्रपुत्रसंबंधिनोऽपि काकस्य चैत्रपुत्रव्यावर्तकत्वं स्यादित्यस्वरसादाह ॥ यद्वेति ॥ तथाच तत्तादीनां विशेष्यमात्रपर्योपलक्षणत्वात् तत्संबंधित्वमुपलक्षणत्व स्वारस्यतीति न प्रागुक्तदोष इति भावः। विशेषणांतरान्वयादित्यस्यानंतरं तत्तापीति

तयोः पर्वतोऽग्निमानितिधीबलाज्जातिव्यक्त्योरिव मृद्घटयोरिव चाभेदस्यापि सत्त्वात्। अन्यथा पर्वतोऽग्निमानिति लैंगिकी धीरपि निर्विकल्पिका स्यात्। केवलाभेदस्तु परिणामिनि देवदत्तपिंडेऽपि नास्त्येव। यद्वा तत्तोपलक्षितस्य इदंतोपलक्षितेन वा इदंतोपलक्षितस्य तत्तोपलक्षितेन वा ऐक्यं बोध्यताम्। नचैतावताऽखंडार्थत्वादिकमित्युक्तम्। तदेतदभिप्रेत्योक्तं "अनित्यदेशकालसंबंधस्य सत्त्वाच्च सोऽयं देवदत्तइत्याद्युपमा च" इति। टीकायां तु तद्देशकालसंबंधमात्रं न तत्ता, किंतु तद्ध्वंसः, सचेदानीमस्ति। एवंच पक्षत्रयेऽपि न दोष इत्युक्तम्। तद्वस्तुस्थितिप्रदर्शनार्थम्। तत्तेदंतयोर्न केवलं बाल्ययौवनवत्सामानाधिकरण्यमात्रं किंतु नीलत्वोत्पलत्ववत्समानकालत्वमपीति प्रदर्शनार्थं च। नतु सखंडार्थत्वार्थम्। उक्तरीत्यान्यथापि तत्सिद्धेः। परेण तद्देशकालसंबद्ध एतद्देशकालसंबद्ध इत्यस्मिन्नुदाहृते टीकोक्तप्रकाराप्रसराच्च। युक्तं चानुभवकालध्वंस एव तत्तेति। अन्यथा पूर्वकालविषयेऽनुभवेऽपि स्मृताविव तत्तोल्लेखः स्यात्। स्मृत्यनुभवयोः संस्कारजन्यत्वाजन्यत्वाभ्यां भेदेऽपि अनुभवकाले सतःकालस्य स्मृतिकाले वस्तुगत्यातीतत्वेऽपि च विषयकृतवैलक्षण्याभावात्। तत्तामात्रे च स्मृतेरननुभूतविषयत्वमिष्टमेव। नचातिप्रसंगः। अनुभवबलेनानुभूतकालध्वंसत्वस्य तंत्रत्वात्। पूर्वकालसंबंधस्तत्तेतिमतेऽपि ह्यननुभूतापि भूतता भातीति वक्तव्यम्। तत् तत्र तदा तथासीदितिस्मृतौ अननुभूतस्य भूतत्वस्योल्लेखात्।

ननु पूर्वकालध्वंसविशिष्टो मध्येऽप्यस्ति, इदंताविशिष्टस्तु मध्ये नेति कथं तयोरभेदः। नचेदंता नैतत्कालसंबंधः किंतु तत्प्रागभावः। तद्विशिष्टश्च मध्येऽप्यस्तीति वाच्यम्। पूर्वकाल-

---

शेषः ॥ निर्विकल्पिका स्यादिति ॥ अनुवृत्ताग्निमभेदावगाहिनी न स्यादित्यर्थः। किंच सोऽयं देवदत्त इत्यत्र तत्तेदंतात्यागेऽपि व्यावृत्तानुवृत्तयोरेवाभेदः स्वीकार्यः। तथाप्यपरिच्छिन्नस्य देवदत्तपिंडस्य पूर्वानुभूताद्व्यावृत्तत्वादित्याह ॥ केवलाभेदस्त्विति। अनित्यदेशकालेति ॥ उपलक्षणीभूततत्संबंधयोः प्रतीयमानत्वादित्यर्थः। नन्वेतट्टीकाविरुद्धम। अनुभूतकालध्वंस एव तत्तेत्युक्तानुभूतकालस्य तत्तात्वे अखंडार्थत्वापरिहार इत्याशयप्रतीतेरित्याशंक्य तदभिप्रायकथनाय टीकोक्तमनुवदति ॥ टीकायां त्विति ॥ ननु टीकोक्तप्रकारेणैवोपपत्तौ किमर्थं विभक्तान-वेत्याशंक्य अस्मदुक्तप्रकारोऽप्यवश्यमपेक्षणीय इत्याह ॥ परेणेति ॥ ननु अनुभवकालसंबंधस्यैव तत्तात्वे बाधकाभावात् तद्ध्वंस एव तत्तेति कथं वस्तुगतिरित्याशंक्याह ॥ युक्तं चेति।

ध्वंसविशिष्टस्येदानीं सत्त्वेऽपि एतत्कालप्रागभावविशिष्टस्येदानीमभावादिति चेन्न । अनुवृत्त-व्यावृत्तयोरभेदस्य विशेष्यमात्रस्यैक्येऽपि तत्तादेर्विशेषणत्वस्य च समर्थितत्वात् । किंच त्वन्मते सोऽयं देवदत्त इति वाक्यस्य किं देवदत्तस्वरूपमात्रे तात्पर्यम्, तत्तेदंतोपलक्षिताभेदविशिष्टे वा उक्ताभेदोपलक्षिते वा । नाद्यः । तस्य प्रत्यक्षसिद्धत्वात् । अन्यथा धर्मिज्ञानाभावेन तत्र बुभुत्सानुवादभेदभ्रमाद्ययोगात् । अभेदाबोधने भेदारोपनिवृत्त्ययोगाच्च । एकेनैव पदेन पूर्णत्वेन पदांतरवैयर्थ्याच्च । नच लक्षणार्थं सोऽयमिति पदद्वयम् । देवदत्तपदेनैव पूर्णत्वात् । स एव कुंडल्ययं देवदत्त इत्यादौ सोऽयमिति पदद्वयेनैव लक्षणासिद्धौ पदांतर-वैयर्थ्याच्च । न द्वितीयतृतीयौ । समानविभक्तिकपदद्वयेन प्रातिपदिकार्थेतरस्याभेदरूप-संसर्गस्य बोधनेऽखंडार्थत्वहानेः । नहि क्रियाकारकभावान्वय एव संसर्गः । नीलमुत्पलं निर्घटं भूतलं घटः पटो नेत्यादेरप्यखंडार्थत्वापातात् । नच भावांशभेदाभावमात्रेणा-खंडार्थत्वमित्यानंदबोधोक्तं युक्तम् । स्वोचितसंसर्गान्यसंसर्गाबोधकत्वस्य सर्वत्र सत्त्वात् । उपलक्षणेनाभेदेनोपलक्ष्यस्य देवदत्तस्य प्रागेव निश्चितत्वेन तस्योपलक्षणत्वायोगाच्च । देव-दत्ते देवदत्ताभेदस्य प्रत्यक्षसिद्धत्वाच्च । तस्मादभेदो न सिद्ध इति चेत् । तस्मादिति कोऽर्थः । किं तत्ताविशिष्टादिति किंवा तत्तोपलक्षितादिति यद्वा तच्छब्देन विवक्षितात्स्वरूप-मात्रादिति । नाद्यद्वितीयौ । सखंडार्थत्वापातात् । उक्तरीत्योपलक्ष्याकाराभावेनोपलक्षण-त्वायोगाच्च । न तृतीयः, दत्तोत्तरत्वात् ।

एवंच— प्रत्यक्षत्वाद्देवदत्तस्वरूपं नैव बोध्यते ।
सोऽयमित्यादिवाक्येन किंत्वैक्यादिविशेषितम् ॥

---

विषयकृतविशेषाभावादिति (विषयकृतवैलक्षण्याभावात्. पा) कारणकृतविशेषस्य प्रतीत्या कार-णांतरप्रयोज्यत्वे एकविषयकप्रत्यक्षानुमित्योरप्याकारांतरत्वापत्तिरिति भावः ॥ एतत्कालप्रागभाव-विशिष्टस्येति ॥ तथानुभवकालप्रागभाव एवेदंतास्तु । सा चानुभवांतरप्रागभावरूपेदानीमप्यस्तीति वाच्यम् । विनष्टघटस्यापि घटविषयत्वे इदमाकारानुभवाभावप्रसंगात् ॥ उक्ताभेदेति ॥ तत्तेदंतोप-लक्षिताभेदोपलक्षिताभेदेत्यर्थः ॥ लक्षणार्थमिति ॥ पदान्तरतदर्थान्वयानुपपत्तिरूपलक्षणाबीजा-भावादिति भावः ॥ देवदत्तपदेनैवेति ॥ तथापि तदिदंपदयोरन्यतरवैयर्थ्यमिति भावः । अभेदोपलक्षिते तात्पर्यमिति तृतीये किं भेदः देवदत्त एवोपलक्षणम् । उत देवदत्ताभेद इति विकल्प्य पक्षद्वयमपि क्रमेण दूषयति ॥ उपलक्षणेनेत्यादिना ॥ यद्वा प्रथमपक्षोक्तदूषण एवोद्धार-माशंक्य परिहर्तुं पुनस्तदनुवदति ॥ देवदत्त इति ॥ शंकते ॥ तस्मादिति ॥ तत्त्वोप-

अपिच सोऽयमिति प्रत्यक्षप्रत्यभिज्ञा तावदखंडार्थविषया। तत्र शब्दवृत्तेर्लक्षणाया अयोगात्, तत्वेदंतादेरभेदस्य च प्रकारस्योल्लेखानुभवाच्च। तदनुल्लेखे प्रत्यभिज्ञाया अभिज्ञातो विशेषो न स्यात्। तथाच शाब्दप्रत्यभिज्ञापि तथा। स्वप्रत्यभिज्ञावगतस्यैव परं प्रति बोधनात्। तस्मात् दुष्परिहरं साध्यवैकल्यम्। किंच तत्त्वमसीत्यस्याभेदविशिष्टे तदुपलक्षिते वा तात्पर्यं चेदुक्तरीत्या अभेदरूपसंसर्गबोधनेन सखंडार्थत्वम्। किंच चिन्मात्रस्य चिन्मात्रेणाभेदबोधने इष्टापत्तिरप्रसक्तनिषेधश्च। तत्पदादिवाच्यसार्वज्ञ्याद्युपलक्षिताभेदबोधने तु सखंडार्थत्वम्। सार्वज्ञ्यादेः प्रकारत्वेनानुप्रवेशात्। चैतन्यमात्रपरत्वं चेत्, तस्य स्वप्रकाशस्य नित्यसिद्धतयोपदेशवैयर्थ्यम्। वाक्यात्प्राक्चैतन्याज्ञाने उक्तरीत्या तत्र बुभुत्सा च न स्यात्। तस्या धर्मिज्ञानसाध्यत्वात् भेदभ्रमश्च न स्यात्। अधिष्ठानज्ञानाभावात्। महावाक्येन भेदभ्रांतिनिवृत्तिश्च न स्यात्। भ्रमकालज्ञाताधिष्ठानादधिकाबोधनात्। महावाक्यस्यावांतरवाक्येन गतार्थत्वं च स्यात्। तत्पदार्थशोधकेन "सत्यं ज्ञानम्" इत्यादिना त्वंपदार्थशोधकेन "योऽयं विज्ञानमय" इत्यादिना चावांतरवाक्येन लक्षणया शुद्धचैतन्यबोधनात्। महावाक्य एवानेकपदवैयर्थ्यं स्यात्। एकेनैव पदेन लक्षणया शुद्धबोधनात्कथं तेन भेदभ्रमनिरास इति चेत्। अधिकार्थाबोधने वाक्येनापि कथम्। नहि वाक्यमदृष्टद्वारा भ्रमनिवर्तकम्। नच तात्पर्याविषयेणाप्यभेदेन तन्निवृत्तिः। अतिप्रसंगात्। नचैकस्य पदस्य लाक्षणिकत्वाय पदांतरम्। तत्त्वमिति विरुद्धार्थवाचिपदद्वयस्य सामानाधिकरण्याधीनत्वाल्लक्षणाया इति विवरणोक्तं युक्तम्। चैतन्यपदेनैव विवक्षितासिद्धौ

---

स्थापितादित्यर्थः ॥ ऐक्यादिविशेषितमिति ॥ अभेदादिविशिष्टमेव वैषयस्वरूपमित्यर्थः। ॥ तदनुल्लेख इति ॥ यद्यप्यभिज्ञाया इदंतावैशिष्ट्यविधायकत्वादस्ति विशेषः। तथाप्युक्तानुभवविरोध एव तात्पर्यम्। अस्तु प्रत्यक्षप्रत्यभिज्ञायाः संसर्गविषयत्वं तथापि शाब्दे किमायातमित्यत आह ॥ तथाचेति ॥ दृष्टांतोक्तदूषणानि दार्ष्टांतिकेऽप्याह ॥ किंचेति ॥ तत्त्वमसीत्यस्य किमभेदविशिष्टे तात्पर्यम् किमभेदोपलक्षिते वा उत तत्पदोपस्थापितचिन्मात्राभेदे वा सार्वज्ञ्याद्युपलक्षिताभेदे वा चैतन्यमात्रे वेति विकल्प्य आद्यौ निरस्य तृतीयं निराचष्टे ॥ किंच चिन्मात्रस्येति ॥ तुरीये त्वाह ॥ तत्पदादिति ॥ नापि पंचम इत्याह ॥ चैतन्यमात्रेति ॥ वाक्यजन्यमेव ज्ञानं भ्रमनिवर्तकमित्याशयेन शंकते ॥ कथमिति ॥ ननु चिन्मात्रपरमपि वाक्यमभेदमपि

तत्त्वमिति लाक्षणिकपदद्वयेन तद्बोधनक्लेशायोगात् । गंगायां घोष इत्यत्रापि घोषपदं गंगाशब्दस्य लाक्षणिकत्वाय ननु स्वार्थार्पणायेत्यापाताच्च । अभेदरूपान्वयावबोधने पदद्वयसामानाधिकरण्यस्य लक्षणाकल्पकत्वायोगाच्च । सदेवेत्यादिपूर्ववाक्ये लक्षितचिन्मात्रस्य प्रकृतवाचिना तत्पदेन लक्षणां विनैव परामर्शसंभवाच्च । "स वा एष महानज आत्मा" इत्यादिमहावाक्ये लक्षणायाः स आत्मेतिपदद्वयसामानाधिकरण्येनैव सिद्धया पदान्तरवैयर्थ्याच्च । वाच्यार्थभेदग्राहकतत्त्वावेदकप्रत्यक्षबाधकेन तत्त्वावेदकेनाद्वैतवाक्येन तयोरेव तात्त्विकाभेदबोधनसंभवेन लक्षणाया अनपेक्षितत्वाच्च । एतेन वाक्यस्थपदस्यैव लक्षकत्वादनेकपदोपादानमिति निरस्तम् । अन्वयानुपपत्तिरूपलक्षणाबीजार्थमेव वाक्यस्थत्वस्यापेक्षणात् त्वमसीत्युक्तेऽपि वाक्यस्थत्वसिद्धेश्च । एतेन यदुक्तं विवरणे अभिज्ञातः प्रत्यभिज्ञायाः शाब्दा वा प्रत्यभिज्ञायास्तावन्न प्रमेयतो विशेषः । अभिज्ञया ज्ञातस्यैव देवदत्तैक्यस्य प्रत्यभिज्ञया ग्रहणात् । नहि देवदत्तस्य स्वेनैक्यमभिज्ञायां न भाति । नचानभिज्ञातं प्रत्यभिज्ञया ज्ञेयं देवदत्तस्य स्वेनैक्यांतरमस्ति । एकस्य कालद्वयसंबंधः प्रत्यभिज्ञागोचर इति चेन्न । ऐक्यस्य कालद्वयसंबंधस्य चाभिज्ञाभ्यामेव सिद्धेः, तस्मान्प्रमेयतो न विशेषः किंतु फलतः कालद्वयसंबंधिपदार्थैक्यविषयत्वे द्वयोरविशिष्टेऽपि प्रत्यभिज्ञाया एव कालद्वयपरामर्शित्वेन पदार्थभेदभ्रमनिवर्तकत्वात् । तत एव च प्रामाण्यमपि । एवंच तत्त्वमसिवाक्यस्य सत्यज्ञानादिवाक्यात् तत्पदाच्च प्रमेयतोऽविशेषेऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात्प्रामाण्यम् । उक्तं हि "सिद्धं तु निवर्तकत्वात्" इति । तन्निरस्तम् । अभिज्ञाभ्यां वस्तुत एकस्मिन् कालद्वयसंबंधस्य देवदत्ताभेदस्य च देवदत्ते ग्रहणेऽपि प्रत्यभिज्ञयेव एकस्मिन् कालद्वयसंबंध इति वा कालद्वयसंबंधाधार एक इति वा ग्रहणेन प्रत्यभिज्ञायाः प्रमेयत एव भेदात् । नहीदमितिज्ञानं वस्तुतः शुक्तौ शुक्त्यभेदग्राह्यपीयं शुक्तिरितिज्ञानवत् इदंत्वशुक्तित्वाधार एक इत्याकारम् । अन्यथा फलतोऽपि विशेषो न स्यात् । कालद्वयपरामर्शमात्रेण भेदभ्रमनिवृत्तौ भेदभ्रमकालेऽपि तस्य सत्त्वात्तेन निवृत्तिः स्यात् । एवं तत्त्वमसीत्यत्रापीतिदिक् । एतेन

---

बोधयतीति न तत्त्वंपदार्थैक्यं न वा भेदभ्रमनिरासकत्वानुपपत्तिरित्याशंक्य निराकरोति ॥ नचेति ॥ धर्मभेदेनेति शेषः । किंच प्रत्यक्षविरोधेन हि तत्त्वंपदयोर्लक्षणा कल्प्या, प्रत्यक्षं च त्वन्मते दुर्बलत्वात् न तद्बाधकमिति वाक्यस्य विशिष्टाभेदबोधकत्वसंभवात् न लक्षणेत्याह ॥ वाच्यार्थभेदेनेति । अन्वयानुपपत्तिरूपेति ॥ त्वन्मते अन्वयाभावेन तदनुपपत्तेरेवाभावात् । वाक्यस्थत्वस्याकिंचित्करत्वेन एकपदेऽपि लक्षणा स्यादिति भावः ॥ प्रत्यभिज्ञाया इति ॥ प्रत्यक्षरूपाया इति शेषः

"उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखंडार्थं महद् खं कुंभखं यथा ।।" इतिकल्पतरूक्तम् ।
"सत्यज्ञानादिगीरेतत् संसर्गव्यतिरेकिणि ।
अर्थे प्रमाणं मानत्वादयनादिप्रमाणवत् ।।"

इतिचित्सुखोक्तं चानुमानं निरस्तम् । अप्रसिद्धविशेषणत्वादिदोषजातात् । एकत्वप्रतिपादकत्वरूपस्याद्यहेतोः सखंडार्थत्वेनैव व्याप्ततया विरुद्धत्वाच्च । आकाशेंऽशः स्वाभाविक इति वक्ष्यमाणत्वेन साधनवैकल्याच्च । घटाकाशो महाकाश इत्यत्रापि आकाशस्वरूपमात्रबोधने भेदभ्रमनिरासायोगेनाधिकस्य बोध्यत्वेन साध्यवैकल्याच्च । द्वितीयहेतौ संसर्गादन्यस्मिन् संसर्गिण्यपि प्रामाण्यस्य मन्मतेऽपि सत्त्वेन सिद्धसाधनाच्च । श्लोकस्य अग्निहोत्रादिगीरिति सत्यज्ञानादिगीरेतत्पदार्थव्यतिरेकिणीत्यपि पठितुं शक्यत्वेनाभाससाम्याच्च । तस्माद्वेदांताः सगुणब्रह्मपरा इति ब्रह्मानंतगुणमिति ।

।। इति तत्त्वमस्यादिवाक्यस्याखंडार्थत्वानुमानभंगः ।। ३ ।।

---

।। एकस्येति ।। अभिज्ञायाश्च एककालसंबोधकत्वात्ततो विशेष इति भावः ।। अन्यथेति ।। प्रमेयतो विशेषाभाव इत्यर्थः ।। कालद्वयपरामर्शमात्रेणेति ।। व्यक्तिविशेषे कालद्वयसंबंधज्ञानेऽपि भेदभ्रमनिवृत्तावित्यर्थः ।। एतदिति ।। एतच्च दृष्टांते साध्यवैकल्यपरिहाराय ।। आद्यहेतोरिति ।। तत्त्वमस्यादिवाक्यमखंडार्थ(त्व)निष्ठम् । उपाधिभेदभिन्नयोरैक्यप्रतिपाद(ना.पा)कत्वात् । घटाकाशो महाकाश इति वाक्यवदित्याद्यहेतावित्यर्थः । व्यतिरेकशब्दस्यान्योन्याभावपरत्वं मत्वा दूषयति ।। संसर्गिण्यपीति । श्लोकस्येति ।। अग्निहोत्रादिगीरित्येतत्संसर्गिव्यतिरेकिणीति वा सत्यज्ञानादिगीरित्येतत्पदार्थव्यतिरेकिणीति वा पठितुं शक्यत्वेनेत्यर्थः ।

।। इति तत्त्वमस्यादिवाक्यस्याखंडार्थत्वानुमानभङ्गः ।। ३ ।।

## ॥ अथ ब्रह्मणो निर्गुणत्वभंगः ॥ ४ ॥

तथाहि—ब्रह्मणो धर्माः किं साधकाभावान्न संति उत बाधकसद्भावात् । नाद्यः "बृहंतो ह्यस्मिन्गुणाः", "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामः सत्यसंकल्प" इत्यादिश्रुतीनाम् ,

"ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ॥"

"सत्यनंतगुणेऽनंते, तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः, परःपराणाम्" इत्यादिस्मृतीनाम् , "अंतर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात्" "अदृश्यत्वादिगुणको धर्मोक्तेः" "सर्वधर्मोपपत्तेश्च" इत्यादीनां निर्णायकसूत्राणां, ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवत् उक्तसत्ताकभावरूपधर्मवद्वा यावत्स्वस्वरूपमनुवर्तमानधर्मवद्वा उक्तविशेषणवद्भावरूपधर्मवद्वा स्वज्ञानाबाध्यभावरूपधर्मवद्वा, धर्मैर्भावरूपैर्धर्मैर्वा हीनं नावतिष्ठते, पदार्थत्वात् भावत्वात् अभावविलक्षणत्वाद्वा घटवत् । ब्रह्म स्वज्ञानाबाध्यप्रकारवत् , स्वारोपितव्यावर्तकस्वज्ञानाबाध्यप्रकारवद्वा, अधिष्ठानत्वाच्छुक्तिवत् । ब्रह्म स्वज्ञानाबाध्यदुःखव्यावृत्तिमत् , स्वज्ञानाबाध्यदुःखव्यावर्तकधर्मवद्वा, दुःखानात्मकत्वात् घटवत् । ब्रह्म स्वज्ञानाबाध्यप्रकारकज्ञानविशेष्यम् , संदिग्धत्वात् विचार्यत्वात् निर्णेतव्यत्वाच्च स्थाणुवत् । ब्रह्म वेदांततात्पर्यगोचरप्रकारवत् , वेदांत-

---

॥ अथ ब्रह्मणो निर्गुणत्वभंगः ॥ ४ ॥

प्रतिज्ञातं ब्रह्मणोऽनंतगुणकत्वमुपपादयति ॥ तथाहीति । श्रुतीनामिति ॥ अत्र षष्ठीबहुवचनांतं पदं सत्त्वादित्यनेन संबध्यते । कल्पितधर्मवत्त्वेन सिद्धसाधनवारणायाह ॥ धर्मिसत्तासमानसत्ताकेति उक्तसत्ताकेति च ॥ एवमग्रेऽप्यूह्यम् । अबाधितमतेनाह ॥ स्वारोपितेति ॥ स्वारोपितस्य निवर्तकं यद्ज्ञानं तदबाधितप्रकारवदित्यर्थः । स्वारोपितहेतुधर्मिज्ञानाबाध्यप्रकारत्वं कल्पितधर्मवत्त्वेनापि संभवतीति सिद्धसाधनवारणाय ॥ स्वारोपितव्यावर्तकेति ॥

नन्वत्राद्येस्य सामान्याभावो विवक्षितो न वा । आद्ये विशेषणवैयर्थ्यम् । अंत्ये पूर्वसाध्येऽपि सिद्धसाधनता स्यादिति चेन्न । तत्र सामान्याभावस्य विवक्षितत्वेऽप्यत्रापि विवक्षितत्वान्न दोषः ॥ स्वज्ञानाबाध्येति ॥ एतच्च दुःखव्यावृत्तिविशेषणम् । नच हेतुसाध्ययोरभेदः ।

विचारविषयत्वात्, यदेवं तदेवं यथा कर्मकांडविचारविषयो धर्मः। ईश्वरः सदाऽवाप्तसमस्तकल्याणगुणः, सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात्, यो यदा यत्प्रेप्सुत्वे सति यत्र शक्तः स तदा तद्वान् यथा चैत्रः। ईश्वरः सदा त्यक्तसमस्तदोषः सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात्, यो यदा यज्जिहासुत्वे सति यत्त्यागे शक्तः स तदा त्यक्ततद्दोषः यथा चैत्रः। तत्प्रेप्सादिकं च प्रेक्षावत्त्वादिना विपक्षेऽधिष्ठानत्वसंदिग्धत्वादिकं न स्यादित्याद्यनुकूलतर्कसनाथानुमानानां च सत्त्वात्। नचानवस्थानिरासाय कश्चिद्धर्मो निर्धर्मक इति तत्राद्यहेतोर्व्यभिचारः। साध्याभावस्वरूपस्य निर्धर्मकत्वस्य पदार्थत्वात्मकस्य हेतुरूपस्य च धर्मस्य भावाभावाभ्यां व्याघातात्। प्रमेयत्वाभिधेयत्वादीनामबाधितानुभवबलेन त्वदभिमतमिथ्यात्वदृश्यत्वादिवत् स्ववृत्तित्वाच्च। गोत्वादेरपि गोव्यक्तिरेव वा गोत्वं वा तं स्वाश्रयव्यक्तिं प्रति अन्यस्माद्व्यावर्तकत्वं वा व्यावर्तकमिति न दुःखानात्मकत्वस्य तत्र व्यभिचारः। न च श्रुतिः सगुणब्रह्मपरा नतु परब्रह्मपरेति वाच्यम्। सगुणातिरिक्तस्य परस्याद्याप्यसिद्धेः। त्वत्पक्षेऽपि तात्त्विकगुणवद्ब्रह्मव्यंतराभावाच्च। परःपराणामित्यादिस्मृतौ परात्परत्वोक्तेश्च। अन्यथा "सदेव सोम्येदम्, असद्वा इदमग्र" इति सदसच्छ्रुती अपि परापरब्रह्मविषये, ग्रहणा-

---

विशिष्टाविशिष्टरूपत्वेन भेदसंभवादिति भावः। चो वार्थः। सामान्यव्याप्तौ दृष्टांतमाह ॥ यदेवं तदेवमिति ॥ उदासीने व्यभिचारवारणायाह ॥ सदा तत्प्रेप्सुत्वे सतीति ॥ प्रकृताभिप्रायम्। हेतौ विशेषणासिद्धिं परिहरति ॥ तत्प्रेप्सादिकं चेति ॥ आद्येति ॥ पदार्थत्वादित्याद्यहेतुद्वयेऽपीत्यर्थः। किंच निर्धर्मकधर्म एव न। सर्वत्र प्रमेयत्वादेः सत्त्वात्। नच तत्रैव व्यभिचारः। आत्माश्रयेण तदनाश्रयणादिति वाच्यम्। मिथ्यात्वदृश्यत्वादिवत् प्रमाणबलेन स्ववृत्तित्वसंभवादित्याह ॥ प्रमेयत्वाभिधेयत्वादीनामिति ॥ ननु दुःखानात्मकत्वहेतोर्गोत्वादौ व्यभिचारः। किंचिद्वस्तु स्वत एव विलक्षणमिति न्यायेन तस्य व्यावर्तकधर्मशून्यतया स्वज्ञानाबाध्यव्यावर्तकधर्मवत्त्वरूपसाध्याभावादित्याशंक्याह ॥ गोत्वादावपीति(गोत्वादेरपीति-पा)नान्वेति ॥ तस्य केवलो निर्गुणश्चेति निर्गुणत्वेनैव प्रतिपाद्यत्वादिति भावः ॥ सगुणातिरिक्तस्येति ॥ निर्गुणवाक्यस्य हेयगुणनिषेधपरतया सगुणविषयत्वादिति भावः ॥ त्वत्पक्षेऽपीति ॥ अतात्त्विकधर्मवत्प्रतिपादने तु वाक्यस्याप्रामाण्यं स्यादिति भावः ॥ अन्यथेति ॥ सगुणवाक्यानां सगुणब्रह्मपरत्वम्। निर्गुणवाक्यानां(वाक्यस्य-पा) निर्गुणब्रह्मपरत्वमित्यंगीकारे इत्यर्थः ॥ ग्रहणाग्रहणश्रुती-

ब्रह्मश्रुती अपि परासरयागविषये स्याताम् । "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इति श्रुतिरपि नासत्त्वनिंदार्था किंतु शून्यतापत्तिरूपफलममोक्षपरेति स्यात् । नचेदानीं सगुणं दशांतरे तु निर्गुणम् । तथात्वेऽपि गुणानामनित्यत्वमात्रापत्त्या त्वदभिमतमिथ्यात्वासिद्धेः । "ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः । एष नित्यो महिमा ब्राह्मणस्य" इत्यादिश्रुतेश्च । "एष नित्य" इतिश्रुतिश्च ब्रह्मपरा । पूर्वत्र "नावेदविन्मनुते तं बृहंतम्" इति ब्रह्मणः प्रकृतत्वात् । उत्तरत्र "न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन" इति ब्रह्मलिंगात् । बृहदारण्यके "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः, स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष सर्वेश्वर एष भूताधिपतिः एष भूतपाल" इत्यादिना ब्रह्मोक्त्वा तत्र संमतित्वेन तदेतदृचाभ्युक्तमिति "एष नित्य" इत्यादिमंत्रस्योदाहृतत्वाच्च । अन्यथा ब्रह्मेदानीं सद्दशांतरे त्वसदिति स्यात् । नचौपाधिका धर्माः, औपाधिकत्वस्य सोपाधिकाध्यस्तत्वरूपत्वे श्रुत्यप्रामाण्यापातात् । वक्ष्यमाणसत्यत्वश्रुतिविरोधाच्च । उपाधिकृतत्वरूपत्वे तूक्तनित्यत्वश्रुतिविरोधात् अंतःकरणादिरूपोपाधिसृष्टेः प्रागेवेक्षितृत्वादिश्रुतेश्च । "स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेश्च । नच योगलभ्ययोगिसर्वज्ञत्वादिवैलक्षण्यमात्रेण तदुक्तिः । संकोचकाभावेनोक्तनित्यत्वश्रुत्यनुसारेण स्वाभाविकज्ञानसमभिव्याहारेण चोपाधिमात्रनिषेधात् । अन्यथा ब्रह्मणः सत्त्वमौपाधिकं असत्त्वं तु स्वाभाविकमिति स्यात् । नचातात्त्विका गुणाः, श्रुत्या गुणमात्रोक्त्या तात्त्विकत्वानुक्तेरिति वाच्यम् । नित्यत्वोक्तिसामर्थ्यात् विषयाबाधलक्षणप्रामाण्यस्यौत्सर्गिकत्वात् ,

---

अर्थात् ॥ "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" इति श्रुती अपीत्यर्थः । असद्ब्रह्मेति न वक्तुं शक्यम् । असद्ब्रह्मदर्शिनो निंदाभवत्वादित्याशंक्याह ॥ असन्नेवेति । इदानीमिति ॥ नचाच ब्रह्मणो मिथ्यात्वानंगीकारात्तोकातिप्रसंगः । सगुणवाक्यानां च कादाचित्कगुणप्रतिपादकत्वेनोपपत्तिरेवेति भावः । तथात्वेऽपि प्रमाणविरोधानिस्तार इति ॥ ज्ञानमिति । अन्यथेति ॥ प्रमाणविरोधस्तत्वेऽपि कालभेदेन सगुणनिर्गुणत्वांगीकार इत्यर्थः ।

ननु निर्गुणवाक्यं स्वाभाविकरूपप्रतिपादकम् , सगुणवाक्यं तु औपाधिकधर्मपरमित्यविरोध इत्याशंक्य निराकरोति ॥ नचेति ॥ सत्यत्वादिवाक्यविरोधस्तस्यापरस्य इत्यत आह ॥ स्वाभाविकीति ॥ नचासाविकस्य बोधाभिप्रायमिति भावः ॥ अतात्त्विका इति ॥ उपाधिं विनापि सत्त्वस्य इत्यर्थः । तेन न तात्त्विकत्वमिति चोद्यम् ॥ नित्यत्वोक्तिसामर्थ्यादिति (र्थ्यादिति (पा) ॥

"सत्यः सो अस्य महिमा" इत्यादिश्रुतेश्च तत्सिद्धेः । अन्यथा "सत्यं ज्ञानं, तत्त्वमसि" इत्यादिश्रुत्युक्तं ब्रह्मसत्त्वैक्यादिकमपि तात्त्विकं न स्यात् । निर्गुणश्रुतिविरोधस्तूद्धरिष्यते । किंच तद्विरोधेऽपि श्रुतेर्नातात्त्विकविषयता युक्ता । उक्तं हि—"को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः । एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति ॥" इति ।

तथाहि पूर्वतंत्रे प्राप्तबाधोऽप्राप्तबाधश्चेति द्विविधो बाध उक्तः । तत्र दाशमिके प्राप्तबाधे प्रकृतिवत्कुर्यादित्यादिरूपस्य प्राप्तस्य चोदकादेः कृष्णलादाववघातवर्जमित्यादिरूपः संकोच एव । एवं तार्तीयेऽप्यप्राप्तबाधे गार्हपत्यमिति द्वितीयाश्रुत्यनुसारेणेंद्रशब्दप्रयुक्तमंत्रलिंगस्य गार्हपत्ये गौणत्वादिकमेव । एवं व्याकरणेऽपि परेण पूर्वस्य नित्येनानित्यस्य अंतरंगेण बहिरंगस्य प्रतिपदोक्तेन लक्षणोक्तस्येत्यादिर्बाध उक्तः । तत्रापि संकोच एव । एवं ब्रह्ममीमांसायामपि "विकारशब्दान्नेतिचेन्न प्राचुर्यात्, उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात्, गौण्यसंभवात्"

---

अध्यस्तस्य च ज्ञाननिवर्त्यतया नित्यत्वायोगादिति भावः ॥ अन्यथेति ॥ प्रामाण्यस्वतस्त्व-स्यौत्सर्गिकत्वेन विषयस्य तात्त्विकत्वासिद्धावित्यर्थः ॥ चोदकादेरिति ॥ अतिदेशस्येत्यर्थः । ॥ अप्राप्तबाधे इति ॥ निरपेक्षतया झटिति प्रवृत्तया गार्हपत्यमिति द्वितीयाश्रुत्या "कदाचन-स्तरीरसि" इतिमंत्रस्य गार्हपत्योपस्थाने विनियुक्तत्वेन चरमप्रवृत्तलैंगिकविनियोगस्याप्राप्तत्वा-त्तार्तीयोऽप्राप्तबाध इति भावः ॥ परेण पूर्वस्येति ॥ श्रुणोतेर्मिपि कृते "श्रुवः शृ च" इति श्नुप्रत्ययेन शृभावे श्नुप्रत्यये च सति श्नुप्रत्ययोकारस्य "लोपश्चास्यान्यतरस्यां म्वोः" इति पूर्वसूत्रेण लोपे प्राप्ते श्नुप्रत्ययोकारस्य "सार्वधातुकार्धधातुकयोः" इति परशास्त्रेण गुण एव भवतीति परेण पूर्वस्य संकोच एव कल्पितः । एवं भूयादित्यत्र भवतेराशिषि लिङि सति "सार्वधातुकार्ध-धातुकयोः" इति धातोरुवर्णस्य गुणे प्रसक्ते (प्राप्ते) "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति यासुडेव भवति । कृते अकृतेऽपि च गुणे यासुटः प्राप्तिसत्त्वेन तस्य नित्यत्वात्, गुणविधायकसार्व-धातुकेत्यादिशास्त्रस्य तु "किदाशिषि" इति यासुटः कित्त्वेन "क्ङिति च" इति गुणनिषेधेन प्राप्तेरनित्यत्वात् । तथा च नित्येन शास्त्रेणानित्यस्य तदतिरिक्तविषयत्वं क्लृप्तम् । भवंतीत्यत्र भू अंतीति स्थिते 'कर्तरि शप्' इति शप्प्रत्यये च सति शपकारस्य 'अतो गुणे' इति प्रथमं पररूपे प्राप्ते सार्वधातुकार्धधातुकयोरिति शब्निमित्तो गुण एव प्रथमं भवत्यंतरंगत्वात् । जाते गुणे बहिरंग-पररूपमित्यंतरंगेण बहिरंगस्य बाध आश्रितः । तथा भारतस्य श्रवणमित्यत्र कर्मणि द्वितीया इति

ननु निर्गुणवाक्येन निषेद्धुं सगुणवाक्यस्यानुवादकत्वेनैकवाक्यत्वसंभवे वाक्यभेदेन गुणप्रापकता न युक्तेतिचेन्न। सत्यकामत्वादीनामन्यतोऽप्राप्तेः। श्रुतिप्राप्तस्य च श्रुत्या-निषेधेऽहिंसावाक्यमग्नीषोमीयहिंसायाः, अग्रहणवाक्यं च षोडशिग्रहणस्य, असद्वा इत्यादिवाक्यं च ब्रह्मसत्त्वस्य, भेदवाक्यं चैक्यस्य निषेधकं स्यादित्युक्तत्वात्। किंच "मृडमृद" इत्यादि-विधिः "न क्त्वा सेडिति" निषेधस्येव सगुणवाक्यमेव निर्गुणवाक्यस्य बाधकं किं न स्यात्। नच जगत्कर्तृत्वेनाक्षिप्तस्य सार्वज्ञादेर्निषेधायानुवादः। श्रुत्याक्षिप्तस्य पुनः श्रुत्या निषेधा-योगात्। अन्यथा श्रुतेन ज्ञाननिवर्त्यत्वेन जगदारोपाधिष्ठानत्वेन "स एवेदं सर्वं आत्मैवेदं सर्वम्" इति श्रुतेन जीवब्रह्मणोः सार्वात्म्येन चाक्षिप्तं सर्वमिथ्यात्वं ब्रह्मसत्त्वं जीवब्रह्मैक्यं च "विश्वं सत्यम्" इत्यनेन "असद्वा इदम्" इत्यनेन "द्वा सुपर्णा" इत्यनेन च निषेद्धुं "नेह-

---

मासयोराज्यभागौ प्रकृत्य श्रूयते। तत्र न पशाविति नञ् किं पर्युदासः प्रतिषेधो वेति संशये विकल्पपरिहाराय "नार्षेयं वृणीत" इत्यादाविव पर्युदास एवेति प्राप्तावुच्यते पर्युदासार्थत्वे अनंत(र)-श्रुताज्यभागविधिशेषत्वं संभवति। तस्य दर्शपूर्णमासमात्रविषयत्वे(तु)(न)(पा) सर्वपशुसाधारण्या-भावात्। पशुव्यतिरिक्तत्वस्य(पा)(च)वैयर्थ्येन दर्शपूर्णमासविशेषणत्वायोगात्। नापि पाशुक-प्रकृतिवच्छब्दशेषत्वम्। तस्यासन्निधानात्। तच्छेषत्वे न सोमेऽध्वर इत्यर्थवादानन्वयाच्च। नह्येवं भवति यथा सोमस्याज्यभागव्यतिरिक्तमिष्टिकमंगं कर्तव्यं तथा पशावपीति, तस्यापूर्वत्वादेरि-काँगाभावात्। संभवति त्वेवं यथा सोमस्याज्यभागौ न कर्तव्यौ तथा पशावपीति। तस्मात् प्रतिषेधः। तस्य च शास्त्रीयप्राप्त्यपेक्षत्वात् (सापेक्षत्वात्-)(पा) पशावाज्यभागतत्प्रतिषेधयो-रगत्या विकल्प इति। निर्गुणवाक्ये(न)सकलगुणनिषेधेऽपि तात्पर्यविषयीभूतार्थस्याबाधितत्वाच्च सगुणवाक्यानामप्रामाण्यमित्याशयेन शंकते॥ नन्विति॥ सत्यकामत्वादीनामिति॥ तथाच नानुवादकतेति भावः।

ननु भूतले घटो नास्तीत्यादौ भूतले घट इत्यनेन प्राप्तस्य नास्तीति निषेधवत् इहापि शास्त्रप्राप्तस्यैव निषेध इत्याशंक्याह॥ श्रुतिप्राप्तस्य चेति॥ सत्यकामत्वादीनां मानांतराप्राप्त्या तद्बोधकवाक्यानां तद्विधायकत्वमेवेति न निषेधशेषत्वं वक्तुं शक्यमिति प्रसंगादिति भावः। ननु 'यः सर्वज्ञः सर्ववित्' इत्यादिवाक्यस्य न सार्वज्ञादिविधिपरत्वम्। तस्य जगत्कर्तृत्वान्यथानुपपत्ति-लभ्यत्वात्। अतो निषेधायैवानुवाद इत्याशंक्य निराकरोति॥ नचेति॥ श्रुतेनेति॥ "तथा विद्वान्नाम-रूपाद्विमुक्तः" इत्यादिश्रुतिप्रतिपन्नत्वेन स्वाभिमतत्वेनेत्यर्थः। अभ्युपेत्याप्याह॥ किंचेति॥ ननु सर्व-

नाना" इत्यनेव "सत्यं ज्ञानम्" इत्यनेन "तत्त्वमसि" इत्यनेन चानूद्यत इति स्यात् । किंच श्रुत्याश्रितस्य सार्वज्ञ्यादेः श्रुत्या निषेधेऽपि श्रुतस्य सर्वकर्तृत्वादेः कथं निषेधः । किं चाद्वैतश्रुतेः निर्गुणश्रुत्यंतरस्य वा तात्पर्यापरिज्ञानप्राप्तं निर्गुणत्वमेव सगुणवाक्येन निषेद्धुं सगुणवाक्ये-नानूद्यत इति किं न स्यात् । "त्रैगुण्यमेव पश्यंति न गुणा(न्विनि)नि नियुंजत" इति भारतोक्तेः । किंच निर्गुणवाक्य एव "साक्षी चेता" इत्यादिना द्रष्टृत्वादिगुणविधानाच्च तेन तन्निषेध इति न तदर्थं सार्वज्ञ्यादिवाक्यमनुवादकम् । अन्यथा सार्वज्ञ्यादेर्व्यावहारिकं सत्त्वमपि न स्यात् । नहि निषिद्धे ब्रह्मणहननादौ अवांतरमपि तात्पर्यम् । नचौपनिषदस्य ब्रह्मणः सार्वज्ञ्यादिकमनुमानादिसिद्धम् ।

ननु सगुणवाक्यं "वाचं धेनुमुपासीत" इत्यादिवदुपासनार्थम् । उपासनायाः कर्तव्यत्वे गुणेषु च तात्पर्ये वाक्यभेदादिति चेन्न ।

> "उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च ।
> उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥"

इति स्मृतिविरोधात् । "यः सर्वज्ञः" इत्यादौ उपासनाविधेरश्रवणाच्च । कल्पनस्य च निर्गुणवाक्येऽपि शक्यत्वात् । किंच "आत्मेत्येवोपासीत" "अथ योऽन्यां देवतामुपास्ते" इत्याद्यावद्वैतस्याप्युपास्यत्वं श्रूयते । किंच त्वयैव तृतीयस्य तृतीये पादे "आनंदादयः" इतिसूत्रे "आनंदं ब्रह्म" इत्यादिश्रुतिसिद्धा आनंदादयः, "व्यतिहार" इतिसूत्रे "तद्योऽहम्" इतिश्रुत्युक्तं जीवस्येश्वरत्वमीश्वरस्य च जीवत्वमुपास्यमित्युक्तम् । तथा

---

कर्तृत्वादेः श्रुतितात्पर्यापरिज्ञानप्राप्तस्याद्वैतनिर्गुणवाक्येन तन्निषेधो न विरुध्यत इत्याशंक्य वैपरीत्येन समाधत्ते ॥ किंचेति । अन्यथेति ॥ सार्वज्ञ्यादेः श्रुतितात्पर्याविषयत्व इत्यर्थः । ननु सार्वज्ञ्यादिश्रुतेः निषेधे महातात्पर्येऽपि स्वार्थे ऽवांतरतात्पर्यात् व्यावहारिकसत्त्वसिद्धिरित्याशंक्याह ॥ नहीति ॥

ननु ब्रह्म सर्वज्ञं सर्वकर्तृत्वादित्याद्यनुमानेनैव सार्वज्ञ्यादेः प्राप्तत्वात् सर्वज्ञ इत्यादि श्रुतिरनुवादिकेत्याशंक्य निराकरोति ॥ नचेति । औपनिषदस्येति ॥ उपनिषदेकगम्यस्येत्यर्थः । उभयत्र तात्पर्यस्य स्मृतिसिद्धत्वात् वाक्यभेदो न दूषणमित्याह ॥ उपासनाया इति ॥ वाक्यत्वे स्वार्थमिति । "अथ योऽन्यां देवताम्" इति वाक्यद्वैतोपास्त्या प्रतीयते । तथापि "आत्मेत्येवो-पासीत" इति पूर्ववाक्यविहिताभेदोपास्त्यविधिशेषत्वेनावभेदोपासनमिति ध्येयम् ॥ व्यतिहार सूत्र इति ॥ "व्यतिहारो विशिंषंति हीतरवत्" इति सूत्र इत्यर्थः ॥ तद्योऽहमिति ॥ "तद्योऽहं

"उत्तरस्मिंस्तापनीये शैव्यप्रश्नेऽथ काठके ।
मांडूकादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥"

इति निर्गुणं ब्रह्माप्युपास्यमित्युक्तम् । एवं चोपास्यत्वेऽप्यानंदादेरिव ऐक्यस्येव निर्गुणब्रह्मण इव च सत्यकामत्वादेरपि तात्त्विकतास्तु । भाषितं हि त्वयैव "व्यतिहार" इतिसूत्रे यथा ध्यानार्थेऽपि सत्यकामत्वाद्युपदेशे तद्गुणईश्वरः सिध्यति तद्वदैक्यमिति । भामत्यां च 'तादात्म्यदार्ढ्यं तु भवन्तोपेक्षामहे । सत्यकामादिगुणोपदेश इव तद्गुणेश्वरसिद्धेः, इति । नचानंदादिवाक्यसत्यकामादिवाक्ययोर्मानांतराविरोधे तदप्राप्तौ उपासनाविध्यश्रवणे निर्गुणश्रुतिविरोधे

---

सोऽसौ योऽसौ सोऽहम्" इति श्रुत्युक्तमित्यर्थः ॥ उत्तरस्मिन्निति ॥ सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्ज्वलोऽविद्याकार्यहीनः स्वात्मबंधहरः सर्वदा द्वैतरहितः आनंदरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोऽहमेवेति तस्मादेवात्मानं परं ब्रह्मानुसंदध्यात्" इत्युत्तरतापनीये "अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वैतद्भगवन् मनुष्येषु प्रायणांतमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदयमोंकारः" इत्यादिना द्विविधमपि ब्रह्म उक्त्वा यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति निर्गुणब्रह्मोपासनाप्रतिपादके प्रश्नोपनिषदंतर्गतशैब्यप्रश्ने,

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यत् ।
अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ इति काठके,

"नांतःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं नप्रज्ञं नाप्रज्ञं अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपंचोपशमं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा स विज्ञेयः" इति मांडूक्यादौ च

"तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथामृतस्यैष सेतुः"

इति मुंडकादौ च निर्गुणोपासनोक्तेत्यर्थः । उपास्यत्वस्य तात्त्विकत्वविरोधित्वे परस्य स्ववचनविरोध इति भावेनाह ॥ भाषितं हीति । तदप्राप्ताविति ॥ मानांतराप्राप्तावित्यर्थः । ॥ उपासनाविध्यश्रवणेऽपीति ॥ यद्यपि "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति सत्यकामादिवाक्ये उपासनाविधिः श्रूयते । तथापि स विजिज्ञासितव्यः इति ज्ञेयत्वमेवोच्यते न तूपास्यत्व-

च तुल्येऽपि आनंदादयो वास्तवाः सत्यकामादयस्तु वाग्धेनुत्वादिवत् पुंतंत्रा वा व्यावहारिका वेति युक्तम्। यदि चानंदादयः स्वरूपभूता इति न निर्गुणश्रुतिविरोधः तर्हि बलशक्त्यादयोऽपि तथैव। "ज्ञानात्मको भगवान् बलात्मको भगवान्" इत्यादिश्रुतेः। "समस्तकल्याणगुणात्मको" इत्यादिस्मृतेश्च।

ननु निर्गुणाद्युपासनं भ्रमोऽपि मणिप्रभायां मणिभ्रम इव फलसंवादि। उक्तं हि

"स्वयं भ्रमोऽपि संवादी यथा सम्यक् फलप्रदः।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा॥" इति।

नचैवं ब्रह्मासिद्धिः, उपासनस्य भ्रमत्वेऽपि शब्दजन्यस्य ज्ञानस्य प्रमात्वादिति चेन्न। प्रकृतेऽपि तथात्वोपपत्तेः। मणिप्रभायां मणित्वस्येव ब्रह्मणो मिथ्यात्वाभावेन ध्यानस्यापि सत्यब्रह्मविषयत्वाच्च। नच ब्रह्मविषयशाब्दधीजन्यस्य तदपरोक्षधीजनकस्य च ब्रह्मध्यानस्याब्रह्मविषयता युक्ता, ब्रह्मज्ञानहेतूनां श्रवणादीनामपि तथात्वापातात्। "ईक्षतिकर्म" इतिसूत्रे—

"ईक्षणध्यानयोरेकः कार्यकारणभूतयोः।
अर्थ औत्सर्गिकं तत्त्वविषयत्वं तयोर्यतः॥"

इति भामत्यां "परात्परं पुरिशयं पुरुषमीक्षते" इति ईक्षणकर्मणः परब्रह्मण एव "परं पुरुषमभिध्यायीत" इति ध्यानध्येयत्वोक्त्या तद्विरोधाच्च। ननु ऐक्याद्युपासनं परोक्षप्रमाप्रवाहरूपम्, नतु "वाचं धेनुमुपासीत" इत्यादाविव ज्ञानविजातीयं कृत्यंतरं बुद्धिपूर्वकारोपो वेति चेत् समं प्रकृतेऽपि। नचैक्यादिकं ध्येयं ज्ञेयं च सार्वज्ञादिकं तु ध्येयमेवेति युक्तम्। तत्र "तत्त्व-

---

मिति वा, ब्रह्म[illegible] तथा भवत्वेऽपि [illegible] तस्मिन् [illegible]मिति वा तत्त्वोक्तमिति ध्येयम्॥ पुंतंत्रा वेति॥ पुरुषबुद्धिकल्पिता वेत्यर्थः। तथात्वेऽपीति निर्गुण[illegible] इव सत्यकामत्वादीनामपि [illegible] [illegible]माशंकते॥ नन्विति। स्वयमिति॥ मणिप्रभायां मणिभ्रमवत् इत्यर्थः। दृष्टांतोऽपि विषम इत्याह॥ मणिप्रभायामिति॥ ननूपासनस्या[illegible] विषयत्वात् [illegible] [illegible] निराकरोति॥ तथात्वापातादिति॥ [illegible]विषय[illegible]मित्यर्थः। ध्यानस्या[illegible]विषयत्वांगीकारे स्ववचनविरोधश्चेत्याह॥ ईक्षतीति॥ नन्विति॥ [illegible]उपासनं तु [illegible]मिति भावः॥ ध्येयमेवेति॥ तथाच ज्ञेयमेव [illegible] न ध्येयमिति भावः॥ प्रतिज्ञावाक्यवदिति॥ "योषितमग्निं ध्यायीत नाम [illegible]" इति [illegible]मित्यर्थः।

मसि" इत्यादेरिवेहाप्यविधिरूपस्य वस्तुतत्त्वनिष्ठस्य "यः सर्वज्ञ" इत्यादेः सत्त्वेन विशेषहेत्वभावात् । ब्रह्मणो जगत्कर्तृत्वादिनारोप्योपास्यत्वे अग्निब्रह्मवाक्यानामिव ब्रह्मण्यपि कारणवाक्यानां समन्वयस्यावकल्प्यत्वेन समन्वयाध्यायानारंभापाताच्च । "य आत्माऽऽपहतपाप्मा" इत्यारभ्य "सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इति सत्यकामत्वादीनामपहतपाप्मत्वादिभिः सह जिज्ञास्यत्वश्रवणाच्च । अपहतपाप्मत्वादीनामप्युपास्यत्वे तस्य भूताकाशेऽपि(संभवेन)सत्त्वेन दहराकाशस्य ब्रह्मत्वप्रतिपादकदहराधिकरणविरोधः । "एष सर्वेश्वर एष भूताधिपतिः" इत्यादिधर्मानुक्त्वा तेषां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति" इति मुमुक्षुज्ञेयत्वोक्तेश्च । "यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि" इत्याद्युक्त्वा "तद्विज्ञानेन परिपश्यंति धीरा" इत्यपरोक्षप्रमाविषयत्वोक्तेश्च । "तुरीयं तत्सर्वदृक्सदा" इति तुरीये सार्वज्ञ्यश्रवणाच्च । "सत्यः सो अस्य महिमा" इत्यादौ साक्षात्सत्यत्वश्रुतेश्च । अत्र होममात्रानुवादेन आहवनीयस्येव स इति श्रुत्युक्तमहिममात्रानुवादेन सत्यत्वस्य विधानात् । "सत्यः सो अस्य" इत्यादेरैंद्रसूक्तस्थत्वेऽपि "तद्वायामि" "सुवीर्यं तद्ब्रह्म पूर्वचित्तय" इति ब्रह्मश्रुत्या "इंद्रः सूर्यमरोचयत् , इंद्रे ह विश्वा भुवनानि येमिर" इत्यादिसूर्यप्रकाशकत्वादिलिंगैश्च ज्योतिरधिकरणन्यायेन सूक्तस्य परमेश्वरपरत्वात् । इयं श्रुतिर्व्यावहारिकसत्त्वपरा चेद्ब्रह्मसत्त्वश्रुतिरपि प्रातिभासिकसत्त्वपराऽस्तु । नचात्र मानांतरप्राप्तिरस्ति । अत्र निर्गुणवाक्यं बाधकं चेत् तत्राप्यसद्वा इत्यादिवाक्यं बाधकम् । तत् अव्यक्तत्वाद्यभिप्रायं चेत् इदमपि त्रैगुण्यराहित्याद्यभिप्रायम् । यदि च ब्रह्म भ्रमाधिष्ठानत्वात्सत् तर्हि तत एव

---

ननु सत्यः सो अस्य महिमेत्यत्र सत्यकामत्वादिषु सत्यत्वं नोच्यते । किंतु सत्यपदार्थस्य तन्महिमत्वमात्रमुच्यत इत्याशंक्याह ।। तत्रेति । (अत्रेति पाठः) ।। ननु तथापि ब्रह्मगुणानां न सत्यत्वसिद्धिः । एतद्वाक्यस्यैन्द्रसूक्तस्थितत्वादित्याशंक्याह ।। तस्य इति । ज्योतिरधिकरणन्यायेनेति ।। "ज्योतिश्चरणाभिधानात्" इत्यत्र "वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्" इत्यत्र श्रूयमाणं ज्योतिः किमग्निरुत विष्णुरिति संदेहे अस्य मंत्रस्याग्निसूक्तस्थत्वात् ज्योतिरग्निरेवेति प्राप्ते कर्णादिविस्फुरत्वरूपविष्णुलिंगात् सूक्तमपि तत्परमेवेति विष्णुरेव ज्योतिरिति सिद्धांतितम् । तन्न्यायेनेत्यर्थः ।। नचेति ।। येन तात्पर्याभावेन सात्त्विकत्वं महिम्नो न सिध्येदिति

सविशेषम्। नच निर्गुणस्यारोपरूपोपासनाविषयत्वे तज्ज्ञानान्मुक्त्ययोगः। धर्मिज्ञानाधीन-संदेहनाशकवेदांतविचारसाध्यसप्रकारकज्ञानस्यैव मोचकत्वोक्तेः। उपासनांतराणामिव श्रुति-बलादेव विचित्रफलत्वोपपत्तेश्च। सगुणेऽपि साम्यापत्तेश्च। "पृथगात्मानम्" इत्यादिश्रुतिषु

"यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम्।
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा॥
भोक्तारं यज्ञतपसां सर्व(भूत)लोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति॥"

इत्यादिस्मृतिषु च सविशेषज्ञानादेव मोक्षोक्तेः। तस्य तथोपासनाकर्तव्यतापरत्वे सगुणो-पासनाविधिशेषार्थवादत्वे वा निर्गुणज्ञानान्मुक्तिश्रुतिरपि तथा स्यात्। एतेन "एष नित्यो महिमा ब्राह्मणस्य सत्यः सो अस्य महिमा" इत्यादेरपि तथोपासनापरत्वादिकं निरस्तम्। श्रूयते च निर्गुणज्ञानस्यापि फलांतरं "स यो ह वै तत्परमं ब्रह्म वेद नास्याब्रह्मवित्कुले भवति, य एवं वेदाहं ब्रह्मास्मीति तस्य ह न देवाश्च नाभूत्या ईशत" इत्यादौ। श्रुतिबलान्निर्गुणज्ञानस्य संयोगपृथक्त्वन्यायेन मुक्तिरपि फलं चेत् सगुणज्ञानस्यापि तथास्तु। नच सगुणज्ञानाच्युता मुक्तिरवांतरा, "पुण्यपापे विधूय" इति सर्वकर्मनिवृत्त्युक्तेः। अन्यथा निर्गुणज्ञानाच्युताप्य-वांतरैव। परममुक्तिस्तु "ब्रह्मैव स भवति" इतिश्रुत्युक्ता शून्यतापत्तिरिति स्यात्। एतेन सगुणवाक्यं निष्प्रपंचप्रकरणस्थं चेद्विशेषाभावानुवादकम्, उपासनाप्रकरणस्थं चेदुपासनार्थमिति निरस्तम्।

गुणविशेषविधिसंनिहितस्य सामान्यनिषेधकस्य निष्प्रपंचवाक्यस्य विहितगुणानिषेध-कत्वात्, प्राप्तत्वमात्रेण सगुणवाक्यस्याननुवादकत्वाच्च। अन्यथा "असद्वा इदमग्र आसीत्" "इदं वा अग्रे नैव किंचनासीत्" इति सर्वनिषेधप्रकरणस्थं, "रसो वै सः" इत्यादिकमपि

---

भावः॥ मोचकत्वोक्तेरिति॥ "तमेवं विद्वानमृत इह भवति" इत्यादाविति शेषः। वस्ति च (पत्र च-श.) [illegible] विचित्रफलसाधनत्वं तथा दोषमात्र॥ सगुणेऽपीति॥ सगुणोपासनोपासकानामीत्यर्थः। ननु "ये चैते अरण्ये श्रद्धां तप इत्युपासते" इत्यादिना "स एनान् ब्रह्म गमयति" इत्यंतेन सगुणोपासकानां फलांतरश्रवणात् न मोक्षफलकत्वमित्याशंक्याह॥ श्रूयते चेति।

निषेधाय ब्रह्मानुवादकं स्यात् । उपासनाप्रकरणस्थत्वमात्रेण चोपास्यत्वे उद्गीथोपासना-प्रकरणस्थस्य "स एषोऽनंत" इति श्रुतानंतत्वादेरपि भूताकाशे उपासनामात्रमिति सुवचत्वे-नाकाशाद्यधिकरणेषु अनंतत्वादिलिंगैर्ब्रह्मत्वोक्त्ययोगाच्च । अनुपास्तिप्रकरणेऽपि सत्यकाम-त्वादेः श्रवणाच्च । यदि च "वेधाद्यर्थभेदात्" इतिसूत्रे त्वद्भाष्योक्तरीत्या यथा सर्वं प्रविध्ये-

---

सर्वनिषेधेति ॥ सर्वस्य निषेधप्रतिपादकप्रकरणस्थमित्यर्थः ॥ आकाशाद्यधिकरणेष्विति ॥ "आकाशस्तल्लिंगात्" अस्य लोकस्य का गतिरिति आकाश इति होवाच । सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यंते आकाशं प्रत्यस्तं यंति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इत्यत्र किं आकाशः परं ब्रह्म उत भूताकाश इति संदेहे आकाशशब्दस्य भूताकाशे प्रसिद्धत्वेन तस्यैव शीघ्रं बुद्ध्यारोहात् वाय्वादिभूतकारणत्वस्य तत्रोपपत्तेश्च भूताकाश इति प्राप्ते सावधारणसर्वभूतोत्पत्त्यादिकारणत्वरूपस्य "स एष परोवरीयानुद्गीथः स एषोऽनंतः" इत्युपसंहार-स्थानंतत्वरूपस्य च लिंगस्य दर्शनादाकाशः परं ब्रह्मेति सिद्धांत इति । "अत एव प्राणः" इत्यत्र उद्गीथे "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य प्रवृत्ते 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्तेत्यत्र किं प्राणः पंचवृत्तिः प्रसिद्धः उत परं ब्रह्मेति संशये "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति" इत्यादौ मुख्येऽपि भूतसंवेशनोद्गमनस्य दर्शनात् उद्गीथप्रतिहारयोरादित्यान्नदेवताकत्वेन प्रस्तावस्याप्यब्रह्मभूतप्राणदेवताकत्वस्यैवोचितत्वाच्च प्रसिद्धः प्राण एवेति प्राप्ते सर्वभूतोत्पत्तिप्रलयकारणत्वरूपस्य ब्रह्मलिंगस्य प्राणे श्रवणात् प्राणः परं ब्रह्मेति सिद्धांत इति ॥" "अंतस्तद्धर्मोपदेशात्" "य एषोऽन्तरादित्ये(ह्रदये)हिरण्मयः पुरुषो दृश्यते" इत्यादावादित्यांतर्वर्तितया श्रूयमाणः पुरुषः किं देवनात्मा संसारी किं वा परमेश्वर इति संशये हिरण्यश्मश्रुरित्यादिना रूपवत्वश्रवणात् अंतरादित्य इति साधारश्रवणात् ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे इत्यैश्वर्यमर्यादाश्रवणाच्च संसारी ननु (नु)परमेश्वरः । स्वे महिम्नि प्रतिष्ठितः एष सर्वेश्वर इत्यादौ नीरूपत्वस्वमहिमस्थत्वसर्वैश्वर्यादिश्रवणादिति प्राप्ते "य आत्मा अपहतपाप्मा" इत्यादौ परमेश्वरधर्मत्वेन श्रुतस्यापहतपाप्मत्वस्य "स ह वै सर्वेभ्यः पाप्मभ्य उदित" इत्युन्नामप्रवृत्तिनिमित्ततया आदित्यपुरुषे श्रवणात् सैव तत्साम तदुक्थं तद्यजुः तद्ब्रह्मेति-सामादिसर्वात्मकत्ववेदनात् ईश्वरस्य साधकानुग्रहार्थमिच्छावशान्मायामयरूपपरिग्रहस्योपपत्ते-रधारविशेषकथनस्यैश्वर्यमर्यादायाश्चोपासनार्थत्वाच्च परमेश्वर इति सिद्धांत इति ॥ अनु-पास्तिप्रकरणेऽपीति ॥ दहरविद्याप्रकरणेऽपीत्यर्थः ॥ वेधाद्यर्थभेदादिति सूत्र इति ॥ आथर्वणिका-

त्यादिमंत्राणामुपासनाप्रकरणादुत्कर्षः, तथानंतादिवाक्यस्यापि । यदिवाऽनंतादिवाक्यस्योपास्यत्वे वस्तुत्वे च तात्पर्यं तर्हि सगुणवाक्यस्यापि तथास्तु । तस्मान्नासदुपासनार्था गुणोक्तिः । अन्यथा सार्वज्ञादिकं वाग्धेनुत्वादिवत् प्रातीतिकमेव स्यात् । किंच न क्वाप्यसदुपासना ॥ "नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः" । "नच रमंत्यहो असदुपासनयात्महन" इत्यादिस्मृतिभिः "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यां" इतिसांकर्षणसूत्रेण च निषेधात् । "वाचं धेनुम्" इत्यत्रापि धेनुमिवायतीमिति श्रुत्यंतराद्धेनुशब्दो गौणः । "योषितमग्निं ध्यायीत" इत्यत्रापि "रेतो जुह्वति" इतिश्रुतेर्योषितो रेतोरूपाहुत्याधारत्वादग्निशब्दो गौणः । छांदोग्यभाष्यरीत्या यौगिको वा नत्वारोपः । "नाम ब्रह्मेत्युपासीत" इत्यत्रापि "नामाभिमानिनी चोपास्तस्यां ब्रह्म हरिं स्मरेत्" इत्यादिस्मृतेः ब्रह्माधिष्ठाने नामादौ ब्रह्मशब्दः । नामेतिप्रथमा वा, वनं वसति मारुत इत्यादिवत्सप्तम्यर्थे ब्रह्मेति

---

नामुपनिषदारम्भे "सर्वं प्रविध्य हृदयं प्रविध्य" इति मंत्रः श्रूयते । तत्र किमयं मंत्रो विद्यासूपसंहर्तव्यः किं वा नेति संदेहे विद्यासन्निधानाद्विद्यांगतया तत्रोपसंहर्तव्य इति प्राप्ते आभिचारिकविषयस्य हृदयवेधाद्यर्थस्य विद्याभिः संबंधाभावेन तदनंगत्वात्तत्रोपसंहर्तव्योऽयं मंत्र इति एतत्सूत्रे व्याख्यातं करिष्येत्यर्थः ॥ अनंतादिवाक्यस्यापीति ॥ "स एषोऽनंत" इत्यादिवाक्यस्यापीत्यर्थः ॥ वैदिका इति ॥ वैदिकाश्चेत्यर्थः ॥ अचेतनेति ॥ निष्फलत्वादनर्थफलकत्वाच्चाचेतनादीन्यनुपास्यानीत्यर्थः ।

ननु यद्यसदुपास्या न स्यात्तर्हि "वाचं धेनुं" इत्यादेः का गतिरित्याशंक्याह ॥ वाचमिति ॥ तथाच धेनुमिवायतीमिति श्रुतिप्रतिपन्नं सादृश्यमेव निमित्तीकृत्य वाग्योषितोरग्निधेनुशब्दौ प्रवर्तेते, इत्यर्थः ॥ छांदोग्यभाष्योक्त(भाष्यरीत्या-पा)रीत्येति ॥

"वाराधकादयः पंच क्रमात्पंचाग्नयः स्मृताः । तद्वाचकाग्निशब्देनाग्नितरामवरत्वतः ॥ योषा प्रोक्ता मनीषिभिः"

इत्युक्तरीत्या योषिच्छब्दो नामाभिमानिनी चेति उपास्या अग्निनामार्था च नामाभिमानिनीत्यर्थः । तथाचोपासनस्तुतिप्रतिपन्नब्रह्माधिष्ठानत्वमेव नाम्नि ब्रह्मशब्दप्रवृत्तौ निमित्तमिति ब्रह्माधिष्ठानत्वेन नामोपासनां कुर्यादिति तद्वाक्यार्थ इति भावः ॥ गौण इति ॥ लाक्षणिक इत्यर्थः । तेन सादृश्यनिमित्तकत्वाभावात् कथमयं गौणोक्तिरिति शंका निरस्ता ।

ननु ब्रह्मप्रकरणे नामोपासनोपदेशानुपपत्तेरतः पक्षांतरमाह ॥ नामेति ॥ तथाच नाम्नि ब्रह्मेत्युपासीतेति वा नाम ब्रह्मणः स्थानतयोपास्यमिति वा तद्वाक्यार्थः । द्वितीयपक्षे प्रथमान्तं

प्रथमा वा "ब्राह्मणोऽस्य मुखम्" इतिवत् पंचम्यर्थे सुपां सुलुगित्यादिसूत्रात् । अन्यथा "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इति पृष्टवंतं नारदं प्रति अनात्मोपास्त्युक्तिरयुक्ता स्यात् । प्रतिमायामपि देवताधिष्ठानत्वबुद्धित एव फलं नतु देवतात्वबुद्धितः । "शिला देव इति ज्ञानं, भौम इज्यधीः" इत्यादिना तन्निषेधात् । यथाच "अन्यदेव तद्विदितात्" इतिश्रुतावश्रौतज्ञानस्य कात्स्न्र्येन ज्ञानस्य वा निषेधः । तथा "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इतिश्रुतावपि अश्रौतध्यानस्य कात्स्न्र्येन ध्यानस्य वा निषेधः । अन्यथा "तस्याभिध्यानात्" इतिश्रुतिविरोधात् । तस्मात्साधकाभावादित्याद्यो न युक्तः । नापि बाधकसद्भावादिति द्वितीयः । सामान्यतो मिथ्यात्वश्रुतिभंगे अखंडार्थत्वभंगे चोक्तन्यायेनाद्वैतश्रुत्यादीनामबाधकत्वात् । नापि निर्गुणवाक्यं बाधकम् । वैपरीत्यस्यापि सुवचत्वात् । नच निषेधत्वादिना तत्प्रबलम् । अमद्वा इत्यादिवाक्यस्य सदेवेत्यादिवाक्यात्प्राबल्यापत्तेरित्युक्तत्वात् । अपच्छेदन्यायस्य च निरासात् । नच निर्गुणत्वं पुरुषार्थः येन तद्वाक्यं तत्परं स्यात् । किंतु गुणितैव । नच निर्गुणज्ञानस्य मोचकत्वात् फलवत्संनिधावितिन्यायेन सगुणवाक्यं तदनुगुणं नेयमिति युक्तम् । सगुणज्ञानस्यैव मोचकत्वोक्तेः । तस्मात् सगुणत्वनिर्गुणत्वयोर्विरोधेन

---

ब्रह्मत्वोपास्यत्वेनाप्नोतीति नामब्रह्मोपासनाप्रसक्तिरिति भावः । ननु कथं द्वितीयार्थेः सप्तम्यर्थेऽर्थं सुप्विभक्तौ लक्षणायोगादित्याशंक्याह ॥ सुपामिति ॥ छंदसि सुपां सुलोपो भवति लुक् च भवतीति सूत्रावयवार्थः ॥ भौम इज्यधीरिति ॥ पिंडीभूतवह्नौ यष्टव्यदेवतात्वधीरित्यर्थः । ॥ निषेधादिति ॥ जनेष्वभिज्ञेषु स एव गोचर इति वाक्यशेषावगततात्पर्यया निषेधावगमादित्यर्थः । ननु यदि ब्रह्मैवोपास्यं तर्हि उपास्ये ब्रह्मत्वनिषेधश्रुतेः का गतिरित्याशंक्य सदृष्टांतं तच्छ्रुत्यविरोधमुपपादयति ॥ यथेति । अन्यथेति ॥ न चात्र ब्रह्मणो ध्यानध्यत्वमेवोच्यते न तूपास्यत्वमिति वाच्यम् । ध्यानव्यतिरिक्तोपासनायां प्रमाणाभावादित्यर्थः (मानाभावादिति पा.) ॥ उक्तन्यायेनेति ॥ अद्वैतश्रुतेर्भिन्नमात्रतात्पर्यकत्वे बाधकत्वात् द्वितीयाभावविशिष्ट तत्पुरुषात्मनि वा तात्पर्ये अखंडार्थत्वहानेरित्युक्तन्यायेनेत्यर्थः ॥ किंतु गुणितैवेति ॥ लोके तथा दर्शनादिति भावः ॥ फलवत्सन्निधाविति ॥ "फलवत्सन्निधौ अफलं तदंगम्" इति न्यायेन सगुणवाक्यस्य निर्गुणवाक्यांगत्वे सिद्धे प्रधानभूतनिर्गुणवाक्यानुसारेण सगुणवाक्यं नेयमित्यर्थः ॥ मोचकत्वोक्तेरिति ॥ 'तमेवं विद्वान्' इत्यादिश्रुतिष्विति शेषः ॥ निर्गुणश्रुतिरित्यत्र ॥ "केवलो

स्यात् । किंच निर्गुणवाक्यस्य छागपशुन्यायेन "त्रैगुण्यवर्जितं, विना हेयैर्गुणादिभिः" इत्यादि-विशेषोपसंहारोऽस्तु । नचैवं "न हिंस्यात्" इत्यस्यापि "ब्राह्मणो न हंतव्य" इत्यत्रोपसंहारात् व्यर्थहिंसा न निषिध्येतेतिवाच्यम् । सार्वज्ञादिगुणेष्विव व्यर्थहिंसायां विध्यभावात् । एतेन "त्रैगुण्यवर्जितम्" इत्यादेरेव काकेभ्यो दधि रक्ष्यतामित्यादिवत् सामान्यपरतास्त्विति निरस्तम् । अत्र सर्वज्ञादिश्रुतिभिरिव तत्र मानांतरेण विरोधाभावात् प्रत्युत तदानुगुण्यात् । किंच "एवं धर्मान्पृथक् पश्यन्" इतिश्रुतौ "सविशेषणे हि" इतिन्यायेन गुणानां पार्थक्यस्यैव निषेधात् । तत्समाख्यानादन्यत्रापि तथैव निषेधो युक्तः । पार्थक्याभावेऽपि च विशेषबलादेव ज्ञानानंदयोरिवैकतरपरिशेषाभावो युक्तः । अन्यथाऽऽनंदस्फुरणाभावान्मुक्तिरपुमर्थः स्यात् । अपिच "साक्षी चेता केवलो निर्गुण" इतिवाक्यात्पूर्वत्रोत्तरत्र च गुणोक्तेस्तन्मध्यस्थं निर्गुण-वाक्यं उपांशुयाजन्यायेन तदनुगुणं नेयम् । किंच निर्गुणशब्देन गुणमात्रनिषेधोऽयुक्तः साक्षी चेतेत्यादिभिर्द्रष्टृत्वादिविधानेन व्याघातादितिसंकोचोऽस्तु । साक्षित्वादेस्तात्त्विकत्वादविरोध इति तु निरस्तम् ।

उक्तं च "युक्तोऽयुक्तश्च यत्रार्थ आगमस्य प्रतीयते ।
स्यात्तत्र युक्त एवार्थो नावाक्या युक्तिरिष्यत ॥" इति ।

एवंच "उपक्रमादिन्यायेन श्रुतिलिंगनयात्तथा ।
विशेषसामान्यनयन्यायान्निरवकाशतः ॥ १ ॥

---

वचनमतिपक्षविशेषनिषेधपरत्वमस्त्वित्यर्थः ॥ सार्वज्ञादिगुणेष्विति(गुणेष्विवेति) ॥ तथाच बाधकाभावेन न हिंस्यादित्यत्र तथात्वेऽप्यत्र "यः सर्वज्ञ" इत्यादिविधायकश्रुतिरूपबाधकसत्त्वाच तथात्वमित्यर्थः । एतेनेत्येतद्विवृणोति ॥ अत्रेति । श्रुतावित्ति ॥ "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति" इति श्रुतौ भिन्नधर्मदर्शननिंदया सविशेषणे हि इति न्यायेन भिन्नत्वस्यैव निषेधादित्यर्थः ।

ननु धर्माणां धर्म्यपेक्षया पृथक्त्वाभावे धर्मो वा धर्मी वा स्यात्र धर्मधर्मिभाव इत्यत आह ॥ पार्थक्याभावेऽपि चेति ॥ एकस्यैव ज्ञानानंदोभयात्मकत्वात् धर्मधर्मिरूपत्वमविरुद्धमित्यर्थः । ॥ पूर्वत्रेति ॥ "एको देवः सर्वभूतेषु गूढः" इत्यादावित्यर्थः ॥ उत्तरत्र चेति ॥ "एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति" इत्युत्तरत्र चेत्यर्थः ॥ इति संकोचोऽस्त्विति ॥

बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा ।
पशुच्छागनयाच्चैव सविशेषनयात्तथा ॥ २ ॥
उपांशुयाजन्यायेन युक्तायुक्तनयात्तथा ।
आप्तत्वात्स्वप्रकृता प्रबला सगुणश्रुतिः ॥ ३ ॥

तस्मादहिंसावाक्यमग्नीषोमीयेतरहिंसाया इव निर्गुणवाक्यं श्रौतसार्वज्ञ्यादीतरतर्काभासप्राप्तहेय-सुखादिगुणानां निषेधकमिति न तद्बाधकम् ।

एवं च "हिंसाऽहिंसावाक्यसाम्याद्गुणिनिर्गुणवाक्ययोः ।
अविरोधेऽप्यमानत्वं ब्रूते सौगतसौहृदात्" ॥

नाप्यनुभूतिर्निर्विशेषा अनुभूतित्वादिति व्यतिरेक्यनुमानं बाधकम् । अप्रसिद्धविशेषणत्व-स्वव्याघातश्रुतिबाधाभाससाम्याप्रयोजकत्वप्रतिकूलतर्कपराहतत्वादिदोषात् । नापि भिन्नत्वेऽभिन्नत्वे च धर्मत्वानुपपत्तिः, एवमसंबद्धत्वे धर्मत्वायोगः संबद्धत्वे संबंधस्यापि संबंधांतरमित्यनवस्थेति न ब्रह्म धर्मवदित्यादिकुतर्का बाधकाः । धर्माभावरूपधर्मभावाभावाभ्यां व्याघातात् । अभेदेऽपि ज्ञानानंदयोरेकतरपरिशेषाभावप्रयोजकविशेषबलादेव धर्मधर्मिभावोपपत्तेश्च । संबंधस्यापि मिथ्यात्वादिवत्स्वनिर्वाहकत्वाच्च । अन्यथाऽऽनंदस्य ज्ञानमात्रत्वे दुःखज्ञानमप्यानंदः स्यात् । भिन्नत्वेऽखंडार्थत्वहानिः । एवं ब्रह्म जगदभिन्नं चेन्मिथ्या स्यात्, भिन्नं चेद्भेदस्य सत्यत्वमित्यादितर्कव्याघात् त्वदभिप्रेतं ब्रह्मापि न सिध्येत् । श्रुतिबाधस्तर्काभासाभासत्वं त्विहापि समम् ।

---

इतिशब्दः प्रकारार्थे । तथाचोक्तप्रकारेण संकोचोऽस्त्वित्यर्थः ॥ नाबाध्येति ॥ न बाध्यविरुद्धे-त्यर्थः । सगुणवाक्यस्य प्राबल्योक्तन्यायान् संगृह्णाति ॥ एवंचेति । तर्काभासप्राप्तेति ॥ [illegible] इत्यर्थः ॥ स्वव्याघातेति ॥ [illegible] अनुभूतिस्वरूपप्रकाशाय [illegible] अनुभूतौ निर्विशेषत्वसाधने स्वव्याघातादिति भावः । यद्वा निर्विशेषत्वानु-मित्यैव [illegible] इत्यर्थः ॥ आभाससाम्येति ॥ घटो निर्विशेषः घटत्वात् व्यतिरेकेण [illegible] इत्यर्थः ॥ भिन्नत्व इति ॥ [illegible] धर्मिधर्म[illegible]दिति भावः । [illegible] इत्यतो [illegible] ॥ एवमसंबद्धत्व इति ॥ [illegible] इति [illegible] संबध्यते । विशेषस्य धर्म-

एवंच—शुष्कतर्कैः श्रौतगुणबाधे ब्रह्मापि बाधितम् ।
भवेच्छ्रुत्या शुष्कतर्काधिकारस्तु द्वयोः समः ॥

किंच निर्विशेषत्वरूपविशेषभावाभावाभ्यां मूकोऽहमितिवत् स्वव्याघातः । यदि निर्विशेषत्वरूपविशेषोऽप्यनेनैव निषिध्यते तर्हीयमपि वचनक्रिया मूक इत्यनेनैव निषिध्यत इति समम् । तदुक्तं "निर्विशेषत्वमेतेन मूकोऽहमितिवद्भवेत्" इति । किंच ब्रह्मणः शून्यादनिर्वाच्याच्च तत्त्वतो विशेषाभावे तत्त्वतस्तदेव स्यात् । भावे तु सविशेषत्वम् । किंच ब्रह्मणो निर्विशेषत्वे वेदांतविचारविषयत्वमयुक्तम् ।

तदुक्तं "इदमित्थमितिज्ञानं जिज्ञासायाः प्रयोजनम् ।
इत्थंभावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ॥" इति ।

किंच ब्रह्मणि धर्मारोपार्थमेव केचिद्धर्माः सत्याः स्वीकार्याः इदंत्वादिना ज्ञात एव शुक्त्यादौ धर्मांतरारोपात् ।

तदुक्तं "धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।
सर्वधर्मविहीनस्य धर्मारोपः क दृश्यत ॥" इति ।

अभावरूपधर्माः संतीति चेन्नाभावत्वं तत्र हेतुः अतिप्रसंगात् । किंतु प्रामाणिकत्वम् , तच्च भावेष्वपि समम् । यदि चाभावो ब्रह्माभिन्नः यदि वा पंचमप्रकारो नतु सन्निति सदद्वैताविरोधी तर्हि भावोऽपि तथास्तु ।

तस्मात् "मृतेऽमतोऽपि मोहादीन्दोषान्विष्णोर्गुणान्मतः ।
निहते परमे तत्वे द्वेषादेवासुरो जनः ॥

तस्मात् ब्रह्म सगुणमेवेति ॥

॥ इति ब्रह्मणो निर्गुणत्वभङ्गः ॥ ४ ॥

---

धर्मिभावाद्यनियामकत्वे बाधकमाह ॥ अन्यथेति । जिज्ञासाया इति ॥ विचारस्येत्यर्थः । ॥ तत्रेति ॥ धर्मसत्त्व इत्यर्थः ॥ अतिप्रसंगादिति ॥ व्यावहारिकघटाभावारोपितमनःपापानाम् ब्रह्मणोऽसत्त्वापातादित्यर्थः ॥ अमतोऽपीति ॥ अविद्यमानानपीत्यर्थः ॥

॥ इति ब्रह्मणो निर्गुणत्वभंगः ॥ ४ ॥

## ॥ अथ निर्गुणे प्रमाणभङ्गः ॥ ५ ॥

किंच निर्विशेषे किं प्रमाणम्। नच तत्स्वतःसिद्धम्। निरस्तत्वात्। यद्यद्धि प्रतिपन्नं तत्सर्वमपि स्वतःसिद्धमिति सुवचत्वाच्च। विप्रतिपत्त्ययोगाच्च। शास्त्रवैयर्थ्याच्च। नचाज्ञाननिवृत्त्यर्थं शास्त्रम्। अज्ञानाविरोधिन्याः स्वतःसिद्धेर्घटादावपि सुवचत्वात्। नच तत्र प्रत्यक्षं मानम्। अपसिद्धान्तात्। "नेन्द्रियाणि नानुमानम्" इत्यादिश्रुतेश्च। शास्त्रवैयर्थ्याच्च। अतएव नानुमानम्, व्याप्त्या व्यापकतावच्छेदकविशिष्टत्वेन पक्षधर्मतया च पक्षसंसृष्टत्वेन सिद्ध्या तेन निर्विशेषासिद्धेश्च। नापि पदरूपः शब्दस्तत्र मानम्। गुणक्रियाजातिरूपनिमित्ताभावेन मुख्यवृत्तेरयोगात्। अस्वीकाराच्च। वैदिकशब्दस्य डित्थादिवत्सांकेतिकत्वायोगाच्च। आरोपितनिमित्तविशिष्टविषयप्रतीतेश्च निर्विशेषे प्रामाण्यायोगात्। गौण्याश्च मुख्यार्थगुणयुक्ततयैव स्वार्थोपस्थापकत्वात्। लक्षणायाश्च शक्यार्थसंबंधितावच्छेदकरूपवत्तयैव स्वार्थोपस्थापकत्वात्। पदस्यान्वयप्रतियोगितावच्छेदकरूपेणैव स्वार्थोपस्थापकतया निर्विशेषे वृत्तिमात्रायोगाच्च। अत एव नोपनिषद्वाक्यरूपः शब्दस्तत्र मानम्। असंसर्गत्वात्। धर्मिज्ञानाधीनविचारजन्यं निर्धारितैककोट्यवलंबिनं सप्रकारकनिश्चयं प्रत्येव तस्य हेतुत्वाच्च। निष्प्रकारक-

॥ अथ निर्गुणे प्रमाणभंगः ॥ ५ ॥

॥ विप्रतिपत्त्ययोगाच्चेति ॥ सिद्धे वस्तुनि संशयायोगेन विप्रतिपत्त्ययोगादिति भावः ॥ शास्त्रवैयर्थ्याच्चेति ॥ तत्सिद्धेः शास्त्रनिरपेक्षत्वांगीकारादिति भावः ॥ अज्ञानविरोधिन्या इति ॥ तथाच स्वतःसिद्धिरिति परिभाषामात्रमितिभावः ॥ तत्रेति ॥ निर्विशेषब्रह्मणीत्यर्थः ॥ अपसिद्धांतादिति ॥ तस्य शास्त्रैकसमधिगम्यत्वांगीकारादितिभावः ॥ अत एवेति ॥ अपसिद्धांतादिदोषादेवेत्यर्थः। ननु तत्र शब्द एव प्रमाणमित्यत्रांगीकृत शब्दः किं पदरूप उत वाक्यरूपः। पदरूपोऽपि स किं मुख्यया वृत्त्या उत गौण्या आरोपितलक्षणया वा बोधकः। मुख्यत्वेऽपि किं गुणादिप्रवृत्तिनिमित्तकः उत सांकेतिक इति विकल्प्याद्यं निराकरोति ॥ नापि पदरूप इति ॥ द्वितीयं निरस्यति ॥ वैदिकशब्दस्येति ॥ ननु निर्विशेषेऽपि आरोपितगुणादेः संभवात् पदस्य तत्प्रवृत्तिनिमित्तकत्वमस्त्वित्यत्राह ॥ आरोपितेति ॥ तृतीयं निरस्यति ॥ गौण्याश्चेति ॥ अपि तुरीयं दूषयति ॥ लक्षणायाश्चेति ॥ अन्त्ये त्वाह ॥ अत एवेति ॥ [illegible]

ज्ञानं नेत्युक्तत्वाच्च । निर्विशेषविषयकज्ञानस्य निष्प्रकारकत्वे तेन निर्विशेषत्वासिद्ध्या तत्सिद्ध्यर्थमेव विशेषाभावरूपविशेषविषयकत्वस्यावश्यकत्वाच्च । तस्मात्सगुणमेव ब्रह्मेति ॥

॥ इति निर्गुणे प्रमाणभंगः ॥ ५ ॥

---

॥ असंसर्गत्वादिति ॥ वाक्यस्य पदार्थसंसर्ग एव प्रमाणत्वादितिभावः । करणस्वाभाव्यान्निर्विशेषे प्रमाणाभावमुक्त्वा फलस्वाभाव्यादपि तमाह ॥ निर्विषयत्वासिद्ध्या तत्सिद्ध्यर्थमिति ॥

॥ इति निर्गुणे प्रमाणभंगः ॥ ५ ॥

## ॥ अथ ब्रह्मणो निराकारत्वभङ्गः ॥ ६ ॥

एतेन ब्रह्मणो निराकारत्वमपि निरस्तम् । "आदित्यवर्णं तमसः परस्तात् । यदा पश्यः पश्यते रुक्मवर्णम् । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् । विश्वतश्चक्षुः । सहस्रशीर्षा पुरुषः । सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । यदेकमव्यक्तमनंतरूपम्" इत्यादिश्रुतिभिः, "पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च । सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्" इत्यादिस्मृतिभिः तदनुगृहीतैःब्रह्म सविग्रहं स्रष्टृत्वात् पालयितृत्वादुपदेष्टृत्वादित्याद्यनुमानैश्चाकारसिद्धेः । विग्रहं विनापि नित्यज्ञानेनैव कर्तृत्वे ज्ञानेच्छे अपि विना नित्यप्रयत्नेनैव तत्स्यात् । किंच कुलालादौ न शरीरं ज्ञानाद्युपजीव्यं किंतु ज्ञानादिकमेव शरीरचेष्टोपजीवकम् । अत एव "विकरणत्वान्नेति चेत्तदुक्तम्" इतिसूत्रे ईश्वरस्य कर्तृत्वार्थं "बुद्धिमान् मनोवान् अंगप्रत्यंगवान्" इतिश्रुत्या सकरणत्वमुक्तम् । किंच "तद्देवानु प्राविशत्" "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिसिद्धं सर्वगतस्य ब्रह्मणः प्रवेष्टृत्वं गम्यत्वमित्यादि न विग्रहविशेषं विना युक्तम् । न च श्रुतिरवांतरब्रह्मपरा वा रूपोपासनापरा वा आरोपितरूपपरा वेति युक्तम् । "आदित्यवर्णम्" इत्यत्र प्रकृत्याख्यतमःपरस्त्वोक्तेः । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यत्र च वर्तमानत्वेनापरोक्षज्ञानविषयत्वोक्तेश्च । नहि "योषित्यग्निर्दृश्यत" इत्युच्यते । "सहस्रशीर्षा" इत्यत्र "तमेवं विद्वानमृत इह भवति" इति "यदा पश्य" इत्यत्र च "तदा विद्वान्पुण्यपापे विधूय" इति "न संदृशे

---

॥ अथ ब्रह्मणो निराकारत्वभंगः ॥ ६ ॥

ननु सुखी विग्रहः साक्षात् कारणम्, किंतु ज्ञानादिद्वारैव । तथा च नित्यसिद्धोपादानगोचरापरोक्षज्ञानवत्त्वेनैवेश्वरस्य कर्तृत्वोपपत्तेरित्यप्रयोजकतामाशंक्याह ॥ विग्रहं विनापीति ॥ तथा च विग्रहस्य साक्षादेव हेतुत्वमिति कर्तुरीश्वरस्य विग्रहः आवश्यक इति नाप्रयोजकतेति भावः ॥ अत एवेति ॥ विग्रहस्य साक्षात्कारणत्वादेवेत्यर्थः । ब्रह्मणो विग्रहवत्त्वे श्रुत्यर्थापत्तिमपि प्रमाणयति ॥ किंच तद्देवेति ॥ [illegible] बाधकमाह ॥ य एषोऽन्तरिति ॥ मोक्षसाधनज्ञानविषयत्वानुक्त[illegible] [illegible] नेत्याह ॥ सहस्रशीर्षेत्यत्रेत्यादिना मुक्तगम्यत्वायुक्तेश्चेत्यंतेनेति । न तदिति ॥ न [illegible]मित्यर्थः ॥ नासदिति ॥ न [illegible]मित्यर्थः । [illegible] [illegible] । विग्रहस्य नित्यत्वे प्रमाणमाह ॥ एक इति

तिष्ठति रूपमस्य" इत्यत्र च "य एनं विदुरमृतास्ते भवंति" इति तज्ज्ञानस्य मोचकत्वोक्तेश्च। "देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिण" इत्युक्तरूपस्य "ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप" इतिस्मृतौ मुक्तगम्यत्वाद्युक्तेश्च। अत एवेदं रूपं न भौतिकं प्राकृतं अनित्यं वा। "नाभ्या आसीदंतरिक्षम्" इत्यादौ भूतकारणत्वस्य, "तमसः परस्तात्" इतिश्रुतौ तमसः परत्वस्य, सर्वतःपाणिपादं तत्" इतिस्मृतौ च "न सत्तन्नासदुच्यते" इति पूर्वत्राभौतिकत्वस्य, "तमसः-परमुच्यते" इति परत्राप्राकृतत्वस्य चोक्तेः। "एको नारायण आसीन्न ब्रह्मा न च शंकर" इत्यादिषु महाप्रलये स्थित्युक्तेश्च। प्रलये विग्रहरहितचेतनमात्रसत्त्वस्य सर्वसाधारण्यात्। विग्रहानित्यत्वे "नित्यो नित्यानां चेतनश्चेतनानाम्" इति विशेषोक्त्ययोगात्। "पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतम्" इत्यादौ साक्षान्महाप्रलये स्थित्युक्तेश्च। "पश्यंत्यदो रूपमदभ्रचक्षुषः सहस्रपादोरुभुजाननाद्भुतम्" इत्यारभ्य "एतन्नानावताराणां निधानं बीजमव्ययम्" इत्यत्र

"सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः।
परमानंदसंदोहा ज्ञानमात्राश्च सर्वशः॥"

इत्यादौ च साक्षान्नित्यत्वाद्युक्तेश्च। अत एव न जडं नापि ततो भिन्नम्। "आनंदरूपममृतं यद्विभाति अप्रणखात्सर्व एवानंदः, मोदो दक्षिणः पक्षः, यदात्मको भगवांस्तदात्मिका व्यक्तिः। किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक" इत्यादिश्रुतेः। भेदाभावेऽप्यहिकुंडलाधिकरणन्यायेन विशेषबलाद्विग्रहवत्त्वोपपत्तेश्च। "आत्मनि चैवं विचित्राश्च हि" इतिसूत्रे

---

विग्रहस्य परमात्माभेदे प्रमाणमाह ॥ यदात्मक इति ॥ इत्यादिश्रुतेरित्यादिपदात् "एकमेवाद्वितीयं, नेह नानास्ति" इत्यादिश्रुतिपरिग्रहः ॥ अहिकुंडलाधिकरणन्यायेनेति ॥ "उभयव्यपदेशात्त्वहिकुंडलवत्" (ब्र. सू. ३-२-२८) परमात्मनि भक्तिः कर्तव्या न वेति संशये परमात्मन आनंदस्वरूपतया आनंदित्वाभावात्र भक्तिः कार्येति प्राप्ते सिद्धांतः "आनंदं ब्रह्मणो विद्वान्" "एष एव परम आनंदः" इत्यादिश्रुतौ तस्योभयात्मकत्वव्यपदेशादानंदस्वरूपत्वेऽप्यानंदित्वं युक्तम्। न चैकस्य तद्रूपत्वं तद्वत्त्वं च विरुद्धम्। कुंडलात्मकस्याप्यहेः कुंडलित्ववत्, प्रकाशात्मकस्याप्यादित्यादेः तद्वत्त्ववत्, पूर्वः काल इत्यत्र एकस्यैव कालस्य विशेषणत्ववत् विशेष्यत्ववच्च विशेषबलात्तदुपपत्तेरित्यहिकुंडलाधिकरणन्यायेनेत्यर्थः। अत्र न आनंदात्मकत्वानंदित्वम् तत्स्वरूपत्वादित्यादि

"विचित्रशक्तिः पुरुषः पुराण" इत्यादिश्रुतिभिर्विचित्रशक्त्येकत्वेन आनंदस्य नित्यत्ववद्-पराधीनत्ववच्च विग्रहवत्त्वस्यापि संभवाच्च। "नैषा तर्केण मतिरापनेया" इत्यादिश्रुतिभिस्तर्का-गम्यत्वोक्तेश्च । पिशाचादिवदंतर्धानशक्त्यानुपलंभसंभवाच्च । नचाऽपाणिपाद इत्यादि-विरोधः । "अदुःखमसुखं समं न प्रज्ञानघनम्" इति सुखज्ञाननिषेधकवाक्यवत्प्राकृतावय-वादिनिषेधपरत्वात् । अन्यथोक्तश्रुतिस्मृतिभिः पश्यति शृणोतीत्यादिवाक्यशेषेण च विरोधात्। "अरूपोऽप्राकृतत्वाच्च" इत्यादिस्मृत्यैवारूपश्रुतिगत्युक्तेश्च। विग्रहवत्त्वेन दुःखं चेत् सत्त्वादिनापि तत्स्यात्। स्वतंत्रत्वादिना समाधिरपि समः। अप्राकृतानंदमयविग्रहस्य दुःखा-भावादिनैव व्याप्तेश्च। सर्वैरपीश्वरे लीलाविग्रहांगीकाराच्च। नच भगवद्विग्रहस्य महत्त्वविशिष्ट-रूपवत्त्वसावयवत्वादिनाऽनित्यत्वं शंक्यम्। उक्तश्रुत्यादिविरोधात्। प्राकृतत्वस्योपाधित्वाच्च। निरवयवविशेषस्येव ज्ञानानंदादिविशेषस्येव च सावयवविशेषस्यापि श्रुत्यादिबलान्नित्यत्वो-पपत्तेश्च।

किंचावयवशब्देनोपादानोक्तावसिद्धिः। एकदेशोक्तौ गगनात्मादौ व्यभिचारः। नचोपादानातिरिक्त एकदेश एव नास्ति। पटादावुपादानतंत्वन्यस्य हस्तवितस्त्यादिपरि-माणस्यैकदेशस्यानुभवात्। विस्तृतं चैतदन्यत्र। नित्यस्य गगनादेरपि संयोगित्वेनैकदेश-साधनाच्च। अन्यथाकाशे पक्षिसंयोगतदत्यंताभावयोः आलोके त्रसरेणुसंयोगतदत्यंता-

---

युक्तिविरोधात्[illegible]श्रुत्यादिभिः विग्रहस्य तदभेदसिद्धिरित्याशंक्याह ॥ नैषेति ॥ एषा [illegible] मतिः [illegible] नानेया, नाप्यपनेयेत्यर्थः। तथाच श्रुत्यैकसमधिगम्ये पर-मात्मनि न युक्तिविरोधः प्रभवतीति भावः। ननु यदि परमात्मनो विग्रहादिमत्त्वं तर्हि रूपवत्त्वात् [illegible]त्यपलभ्येतेत्याशंक्याह ॥ पिशाचादिवदिति ॥ ननु विग्रहवत्त्व[illegible]श्रुत्यादीनां "[illegible] [illegible] [illegible] [illegible] स शृणोत्यकर्णः" इत्यादिश्रुतिविरोध इत्याशंक्य निरा-करोति ॥ नचेति । सुखज्ञाननिषेधकवाक्यवदिति ॥ सुखज्ञानयोर्निषेधकवाक्यवदित्यर्थः ॥ अरूपश्रुतीनामिति ॥ [illegible]श्रुतीत्यर्थः। विग्रहवत्त्वेन दुःख[illegible] [illegible]त्याह ॥ सर्वैरपीति । महत्त्वविशिष्टेति ॥ महत्त्वविशिष्टरूपवत्त्वात् सावयवत्वाच्चानित्यत्वं शंक्यमित्यर्थः। किंच यथा [illegible] निरवयवस्य [illegible]नित्यत्वेऽपि [illegible]र्नित्यत्वं, यथा [illegible]-[illegible]नित्यत्वेऽपि ईश्वर[illegible]र्नित्यत्वं, तथा सावयव[illegible]नित्यत्वेऽपि श्रुति[illegible]श्वर[illegible] सावयवस्यापि [illegible]मित्याह ॥ निरवयवविशेषस्येवेति । गगनात्मादौ व्यभिचार इति ॥ [illegible] बोध्यम्।

भावयोः आत्मनि च सुखदुःखयोर्देशभेदेन प्रतीतिर्न स्यात् । एतेनैकदेशाभावेऽपि संयोगादेः स्वात्यंताभावसामानाधिकरण्याच्चथाधीरिति निरस्तम् । यत्र देशे संयोगस्तत्रैव तदभावप्रतीत्यापत्तेः । "गौरनाद्यंतवती" इत्यादिश्रुत्या अनादिनित्याया अपि प्रकृतेः सत्त्वरजस्तमोरूपैकदेशदर्शनाच्च । त्वन्मतेऽप्यनाद्यविद्याया उपादानत्वाय अनणुत्वे सति परिच्छिन्नत्वाय त्रिगुणत्वाय जीवन्मुक्तौ लेशानुवृत्त्यर्थं चैकदेशस्य वक्तव्यत्वाच्च । जीवानामपि 'द्रोणं बृहस्पतेर्भागं द्रौणिं रुद्रांशसंभवम् । दुर्वासाः शंकरस्यांश' इत्यादिनांशोक्तेश्च ।

"यस्यायुतायुतांशेऽपि विश्वशक्तिरवस्थिता ।
परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम् ॥
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"

इत्यादावीश्वरस्याप्यंशोक्तेश्च । नचायमौपाधिकोंऽशः । नचेदुपाधीतिन्यायेन स्वाभाविकांशाभावे तद्योगात् । एतेन सावयवत्वादिना भगवल्लोकादेरनित्यत्वसाधनमप्यपास्तम् ।

"अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः ।
मत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥"

इत्याद्यागमविरोधात् । तस्मात्सगुणं साकारं च ब्रह्मेति ।

इति ब्रह्मणो निराकारत्वभंगः ॥ ६ ॥

---

॥ उपादानातिरिक्तेति ॥ तथाच हेत्वभावादाकाशे व्यभिचार इति भावः ॥ विस्तृतं चैतदिति ॥ द्रव्यारम्भकद्रव्यत्वं सावयवत्वं चेत् अकार्यत्ववादिनं प्रत्यसिद्धिः । मध्यमपरिमाणत्वं चेत् कार्यत्वं विनैव मध्यमीभूतपरिमाणाश्रयत्वेनाप्युपपत्त्या अप्रयोजकत्वम् । प्रकृते चासिद्धिश्चेति । अन्यत्र तर्कताण्डवादौ । एतच्च विस्तृतमित्यर्थः । गगनादिः प्रदेशविशेषवान् संयोगित्वात् घटवदित्यनुमानाच्च प्रदेशविशेषसिद्धिरित्याह ॥ नित्यस्येति ॥ नन्वत्र सोपादानकत्वमुपाधिरित्याशंक्यानुकूलतर्कसत्त्वान्नायमुपाधिरित्याह ॥ अन्यथेति । दर्शनादिति ॥ "सितासिता च रक्ता च सर्वकामदुघा विभोः" इत्यादिवाक्यशेषे दर्शनादित्यर्थः ॥ उपादानत्वायेति ॥ एकस्यैकावच्छेदेनानेकाकारपरिणामस्य विरुद्धत्वांशकल्पना आवश्यक इति भावः ॥ अनणुत्वे सतीति ॥ परमाणौ परममहत्परिमाणे च व्यभिचारवारणाय विशिष्टोपादानम् ।

॥ नचेदुपाधीतीति ॥ नचेदुपाधिसंबंधः एकदेशेऽप्यसंगः । एकदेशेऽनवस्था स्यात् सर्वांगेणैव भेदकः ॥ इत्युपाधिखंडनोक्तन्यायेनेत्यर्थः ॥

॥ इति ब्रह्मणो निराकारत्वभंगः ॥ ६ ॥

## अथ परमते ब्रह्मणो ज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः ॥७॥

यच्चेदमुच्यते ब्रह्म ज्ञानानंदात्मकमद्वितीयं नित्यं साक्षिरूपं च नतु ज्ञानादिगुणकमिति। तत्र परमते ज्ञानत्वं किं जातिविशेषः । साक्षाद्व्यवहारजनकत्वं वा जडविरोधित्वं वा जडव्यावृत्तत्वं वा अज्ञानविरोधित्वं वा अर्थप्रकाशात्मकत्वं वा परांगीकृतं वा । नाद्यः । वृत्तिप्रतिबिंबितज्ञानाभासेषु तत्संभवेऽप्यखंडे स्वरूपज्ञाने तदयोगात् । न द्वितीयः । फलोपधानस्य सुषुप्त्यादावभावात् । शक्त्यादिरूपस्वरूपयोग्यताया अपि मुक्तावभावात् । न तृतीयः । स्वरूपज्ञानस्य नित्यत्वेन तद्विरुद्धस्य जडस्य नित्यनिवृत्त्यापातात् । न चतुर्थः । "सत्यं ज्ञानम्" इत्यत्र जडव्यावृत्तेरार्थिकत्वोक्त्ययोगात् । किंच जडत्वस्याज्ञातृत्वादिरूपत्वेऽसंभवः । अज्ञानत्वरूपत्वे त्वन्योन्याश्रयः । न पंचमः । अज्ञानस्य नित्यनिवृत्त्यापातात् । द्वितीयादिषु ज्ञानत्वस्य कारकत्वादिवत् व्यवहाराद्यन्यतमोपाधिकत्वेन ब्रह्मणो ज्ञानस्वभावत्वायोगाच्च । न षष्ठः । मोक्षे अन्यार्थोल्लेखाभावात् स्वरूपोल्लेखे च स्वविषयत्वापातात् । न सप्तमः । परांगीकृताया जातेर्व्यवहारहेतुत्वादेर्वा त्वन्मतेऽसंभवात् । एवं च

> "अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम् ।
> अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात् ।।"

किंचेदमानंदत्वं जातिविशेषो वा अनुकूलतया वेदनीयत्वं वा अनुकूलवेदनरूपत्वं वा अनुकूलत्वमात्रं वा विज्ञानात्मकत्वमेव वा दुःखविरोधिस्वरूपत्वं वा दुःखाभावोपलक्षित-

---

॥ अथ परमते ब्रह्मणो ज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभंगः ॥ ७ ॥

प्रसंगप्राप्तत्वात् पराभिमतज्ञानत्वादिदूषणाय पक्षोक्तमनुवदति ॥ यच्चेदमिति । तदयोगादिति ॥ [illegible] ज्ञातत्वोगादित्यर्थः ॥ शक्त्यादिरूपेति ॥ [illegible] [illegible] हि स्वरूपयोग्यत्वं मुख्यफलविषयत्वेन [illegible] भावेन स्वरूपयोग्यत्वाभावान्मुक्तौ ज्ञानं न स्यादित्यर्थः । [illegible] ॥ किंचेति ॥ ब्रह्मणोऽप्यज्ञातृतया [illegible] इत्यर्थः ॥ अज्ञानत्वरूपत्व इति ॥ ज्ञानभिन्नत्वरूपत्व इत्यर्थः । [illegible] तु [illegible] ॥ नित्यनिवृत्त्यापातादिति ॥ प्रतिबन्धत्वा-[illegible] ॥ द्वितीयादिष्विति ॥ द्वितीयादिपक्षेष्वित्यर्थः ।

स्वरूपत्वं वा परांगीकृतं वा । नाद्यः । अखंडस्वरूपानंदे तदयोगात् । न द्वितीयः । मोक्षे वेदितुरभावात् । आत्मनोऽवेद्यत्वाच । किंचानुकूल्यं किंचित्सापेक्षम्, नचान्यं प्रति तदुक्तमिति स्वं प्रत्येव वक्तव्यत्वेन सविशेषत्वापातः । अत एव न तृतीयः । अपिच वेदनस्वभावादधिकस्यानुकूल्यस्य स्वाभाविकत्वे (सखंडार्थत्वापातः)ऽखंडार्थत्वाभावापातः । औपाधिकत्वे कदाचिदानंदनिवृत्त्यापातः । न चतुर्थः । उक्तरीत्यानुकूल्यासंभवात् । एतेन निरुपाधिकेष्टत्वमानंदत्वमिति निरस्तम् । न पंचमः । दुःखादिज्ञानस्याप्यानंदत्वापातात् । विषयानुल्लेखिज्ञानं तथेति चेन्न । विरोधात् । "विज्ञानमानंदं ब्रह्म" इत्यादौ विज्ञानपदेनैव दुःखव्यावृत्तिसिद्ध्यानंदपदवैयर्थ्याच । न षष्ठः । विरोधस्य निवर्तकत्वादिरूपत्वे दुःखस्य नित्यनिवृत्त्यापत्तेः । तादात्म्यायोग्यत्वरूपत्वे घटादेरप्यानंदत्वापातात् । "विज्ञानमानंदं ब्रह्म" इत्यादौ दुःखव्यावृत्तेरार्थिकत्वोक्त्ययोगाच । न सप्तमः । वैशेषिकमोक्षवत् त्वदुक्तस्य दुःखस्याभावे सत्यपि आनंदाभावेनापुमर्थत्वस्य त्वन्मोक्षेऽप्यापातात् । नाष्टमः । परांगीकृतस्य निरुपाध्यनुकूलतया वेदनीयत्वादेस्त्वन्मतेऽसंभवात् । यदि चानंदत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं ब्रह्माबाध्यमानंदाद्यात्मकं च तर्हि सत्यत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं जगदप्यबाध्यं सदात्मकं च स्यात् ।

एवंच "निरुपाध्यनुकूलत्ववेदनीयं सुखं मतम् ।
निर्विशेषमवेद्यं च कथं ब्रह्म सुखात्मकम् ॥"

किंचेदमद्वितीयत्वं द्वितीयाभावविशिष्टत्वं वा तदुपलक्षितत्वं वा । नाद्यः । द्वितीयाभावस्य प्रामाणिकत्वे तेनैव, अप्रामाणिकत्वे द्वितीयेनैव सद्वितीयत्वापातात् । न चाऽभावस्य प्रामाणिकत्वेऽपि प्राभाकरमत इवाऽधिकरणमात्रत्वाददोषः । "अनुपलब्धिगम्योऽभाव"

---

सर्वप्रकाशात्मकत्वपक्षोक्तं दूषणं संगृह्णाति ॥ एवंचेति । किंचेदमिति ॥ त्वदभिमतमानंदत्वं च किमित्यर्थः ॥ किंचित्सापेक्षमिति ॥ निरूपकसापेक्षमित्यर्थः ॥ नचान्यं प्रति तदुक्तमिति ॥ अनुकूलतया वेदनीये वैरिदुःखेऽतिव्यापकत्वादिति भावः ॥ अत एवेति ॥ सविशेषत्वापाताभावेवेत्यर्थः ॥ एतेनेति ॥ इष्टत्वस्यापि स्वं प्रत्येव वक्तव्यतया सखंडत्वापातादिनैवेत्यर्थः ॥ तथेति ॥ आनंद इत्यर्थः ॥ विरोधादिति ॥ ज्ञानत्वाविरोधात् सविषयत्वस्वभावा(च्च वा)दित्यर्थः । त्वदुक्तस्यापुमर्थस्येति संबंधः ॥ अनुकूलमवेदनीयमिति ॥ अनुकूलत्वेन वेदनीयमित्यर्थः ॥ द्वितीयेनेति ॥ अभावाप्रतियोगिनैवेत्यर्थः ॥ अनुपलब्धिगम्य इति ॥ यद्यप्यधिकरणस्थितिर्भावा-

इत्यादित्वन्मतभंगात् । अनृतव्यावृत्तेरपि ब्रह्ममात्रत्वेन भेदसत्वत्वापाताच्च । प्राभाकरमतेऽपि प्रतियोगिमदधिकरणव्यावृत्त्यर्थं कैवल्यादिविशेषितस्यैवाधिकरणस्याभावत्वाच्च । नचैतन्मतेऽप्यनुपपत्तिरेव । अन्यथा गुणगुण्यभेदमते शौक्ल्यादेरिव शक्त्यादिभावधर्माणामपि ब्रह्ममात्रत्वं स्यात् । नच भावरूपद्वितीयाभावविशिष्टत्वमद्वितीयत्वम्, तथाचाभावस्य द्वितीयस्य प्रामाणिकत्वेऽप्यदोष इति वाच्यम् । इष्टस्याप्यभावस्यैव श्रुत्यादिसिद्धस्य धर्माधर्मादिरूपभावस्यापि मिथ्यात्वायोगादित्युक्तत्वात् । अत एव नांत्यः । उपलक्षणस्याप्यभावस्याप्रामाणिकत्वे तत्प्रतियोगिनो द्वितीयस्य प्रामाणिकत्वावश्यंभावात् । किंचाभावस्य प्रागभावादित्वे द्वितीयस्यानित्यत्वमात्रं स्यान्न तु मिथ्यात्वम् । अत्यंताभावत्वे उपलक्षणत्वमयावद्द्रव्यभावित्वेन चेदत्यंताभावत्वहानिः । वेदांततात्पर्यविषयत्वादिकार्यानन्वयित्वेन चेदत्यंताभावासिद्धिः । किंचाप्रामाणिकेन द्वितीयाभावेनेव द्वितीयेनाप्युपलक्षितत्वसंभवात् तेन सद्वितीयं किं न स्यात् ।

एवंच "द्वैताभावस्तात्त्विकश्चेत्तेन स्यात्सद्वितीयता ।
अतात्त्विकश्चेत् द्वैतेन सद्वितीयत्वमापतेत्" ।

किंचेदं नित्यत्वं यद्ब्रह्मण एवाभिमतं सर्वकालसंबंधित्वं वा कालावच्छेदराहित्यं वा ध्वंसाप्रतियोगित्वं वा उभयावधिराहित्यं वा । नाद्यौ, अविद्यायां काले चाऽतिव्याप्तेः । सापि हि सर्वकालोपादानत्वात्तत्संबंधिनी । इदानीमेव नान्यदेत्येवंरूपतदवच्छेदरहिता च । न तृतीयः । ध्वंसेऽतिव्याप्तेः । ननु ध्वंसोऽपि ध्वंसप्रतियोगी, प्रतियोग्यनुन्मज्जनं तु प्रागभाव-

---

अतिरिक्तत्वे अधिकरणतातिरिक्तस्याप्यभावस्यांगीकाराच्च तन्मतभंगः, तथाप्यधिकरणभेदेनाभावभेदे प्रमाणाभावात् क्वचिदधिकरणत्वे सर्वत्र तथैवेति तन्मतभंग इत्यत्र तात्पर्यम् । यद्वा पक्षत्रयस्यापि ... ॥ अनृतव्यावृत्तेरपीति ॥ ननु तथापि ब्रह्मत्वेनैव सत्यता नतु भेदत्वेनेत्यतो ... ॥ प्राभाकरमतेऽपीति ॥ तथाच त्वयापि ब्रह्ममात्रस्य नाभावस्वरूपत्वम् । इदानीमपि तत्र सत्वेन प्रतियोगिनोऽसत्वप्रसंगात् । किंतु प्रतियोगिनः सत्वदशाव्यावृत्तकैवल्यादिविशेषितस्यैवेति पूर्वोक्त सद्वितीयत्वापत्तिरिति भावः ॥ अत्यंताभावत्वहानिरिति ॥ तस्य नित्यत्वादिति भावः ॥ अत्यंताभावासिद्धिरिति ॥ अतात्त्विकेऽपि ... सिद्धिरिति तु न वाच्यम्, निरस्तत्वात् ॥ सप्रपंचवाक्यविरोधाच्चेति ॥ अविद्यायामतिव्याप्तिमुपपादयति ॥ सापि हीति । सर्वकालोपादानत्वादिति ॥ एतच्च ... अभिप्रायेण । अध्यासंबंधरूपत्वे तु तस्यानित्यत्वादिति ध्येयम् । प्रागभावध्वंसयोः ... प्रतियोगिकालत्वनियमात् प्रतियोग्यनु... ॥ प्रतियोग्यनुन्मज्जनं त्विति ॥ तथाच ध्वंसत्वे विभूतेरपि प्रतियोगिविरो-

निवृत्तिरूपस्य घटस्य निवृत्तावपि प्रागभावानुन्मज्जनवत् युक्तमितिचेन्न । एवं सति मोक्षेऽप्यात्मान्यस्य कस्यचिद्ध्वंसस्य वक्तव्यतया लाघवार्थम् आद्यध्वंसनित्यताया एव युक्तत्वात् । नच ध्वंसस्य नित्यत्वेऽपि भावेषु ब्रह्मैव नित्यमित्यस्याहानिरिति वाच्यम् । निष्प्रतियोगिकत्वेन भावस्य ध्वंसत्वादेर्नित्यत्वावश्यंभावात् । न चतुर्थः । एवं परिभाषायामपि ब्रह्मण एव नित्यत्वमित्येतत्फलस्य मुक्तावन्याभावस्यासिद्धेः ।

एवंच "काले कालापरिच्छिन्ने ध्वंसे चाध्वंसयोगिनि ।
नित्ये सति कथं नित्यं ब्रह्मैवेति मतं तव ॥"

कथंच दृग्रूपस्यात्मनः साक्षात् द्रष्टृत्वरूपं साक्षित्वम् । "साक्षाद्द्रष्टरि संज्ञायाम्" इति हि सूत्रम् । बुद्ध्युपाधिकस्यापि द्रष्टृत्वस्य सुषुप्त्यादावभावात् । बुद्धेः साक्ष्यधीनसिद्धिकप्रातीतिकाविद्याकार्यत्वेन चक्रकाश्रयत्वाच्च । किंच साक्षी किं जीवकोटिर्ब्रह्मकोटिर्वा उभयानुगतं चिन्मात्रं वा । नाद्यः । जीवो बुद्ध्युपाधिकोऽणुरितिपक्षे इदमंशावच्छिन्नचिद्वेद्यस्य शुक्तिरूप्यादेः साक्षिवेद्यत्वायोगात् । चक्रकाच्च । "अज्ञानोपाधिकः सर्वगत" इतिपक्षेऽपि अज्ञानस्य साक्ष्यधीनसिद्धिकत्वेनाऽन्योन्याश्रयात् । न द्वितीयः । तेन ब्रह्मण एव साक्षिवेद्यसुखदुःखादिधीः नतु जीवस्येति वैपरीत्यापातात् । अन्यथाऽनवच्छिन्नानंदधीरपि जीवस्य स्यात् । नच ब्रह्मचैतन्यं घटादिप्रकाशकमितिमतेऽज्ञानाभिभवद्वारा तस्य जीवचैतन्याभेदाभिव्यंजकांतःकरणवृत्तिरिवेह तादृशी वृत्तिरस्ति । न तृतीयः । ईश्वरेणेव चिन्मात्रेणापि सांसारिकदुःखस्य तद्गतत्वेनाऽग्रहणेऽपि यद्भावो मुक्तिस्तस्य चिन्मात्रस्य दुःखाद्युल्लेखरूपापत्त्यापातात् । सुप्तंप्रति अज्ञानादेर्वैशद्यवत्तयैव जाग्रद्वैशद्यदुःखादेरपि वैशद्यतया

---

भिन्नत्वात् विरोध्यनवच्छिन्नकालस्यैव प्रतियोगिकालत्वमितिनियमः । प्रागभावकाले तु सत्त्वादिति भावः ॥ निष्प्रतियोगिकत्वेनेति ॥ तथाच ध्वंसत्वेऽतिव्याप्तिरितिभावः । ध्वंसत्वादेराश्रयरूपतया भावत्वे तु चतुर्थपक्षे वक्ष्यमाणमेवाशार्पाति ध्येयम् । परिभाषितं ब्रह्मणः साक्षित्वमपि किं द्रष्टृत्वं उत द्रष्टृत्वमिति विकल्प्य नाद्य इत्याह ॥ कथं दृग्रूपस्येति ॥ तथासति पाणिनिसूत्रविरोध इति भावः । अन्त्येऽपि स्वाभाविकमौपाधिकं वा । नाद्यः । अनंगीकारादित्याशयं बाहेरेव निरस्य द्वितीयं निराचष्टे ॥ बुद्ध्युपाधिकस्येति । (स्यार्दाति. पा) चक्रकाश्रयत्वाच्च ॥ साक्षित्वं स्वाज्ञानाभासांतःकरणमपेक्षते, तच्चाविद्यां, सा च साक्षिणमिति चक्रकाश्रयत्वार्थः । अज्ञानस्याप्यनो ऽपि

सुप्तमैत्रं प्रति प्रतीतिप्रसंगेन मैत्रस्यैतावंतं कालं दुःखं नावेदिषमितिपरामर्शायोगाच्च । नापि साक्षात्कर्तव्याकाराविद्यावृत्तिप्रतिफलितं चैतन्यं साक्षी, सुषुप्तौ चाज्ञानाद्याकाराविद्यावृत्तिर्नास्तीति वाच्यम् । दुःखादेः स्वानंतरभाव्यविद्यावृत्तिप्रतिफलितचिद्वेद्यत्वे ज्ञातैकसत्त्वायोगात् । अविद्याविषयेऽपि साक्ष्यधीनसिद्धिकत्वेनान्योन्याश्रयाच्च । विस्तृतं चैतदसतः साधकत्वभंगे।

॥ इति परमते ब्रह्मणो ज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभंगः ॥ ७ ॥

---

सिद्धिसंभवाच्च चक्रकाश्रय इत्यादिशंकावारणाय प्रातीतिकेत्यविद्याविशेषणम् । बुद्धेर्मध्यमपरिमाणत्वपक्षेऽपि प्रतिकर्मव्यवस्थामंगीकरीत्या तस्या बहिर्निस्सरणायोगात् साक्षिवेद्यत्वायोग इति ध्येयम् ॥ चक्रकाश्रयाच्चेति ॥ पूर्वोक्तचक्रकाश्रयाच्चेत्यर्थः । सुषुप्तौ वृत्त्यभावादज्ञानप्रतीतिर्न स्यादित्याशंक्याह ॥ सुषुप्तौ चेति ॥

॥ इति परमते ब्रह्मणो ज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभंगः ॥ ७ ॥

## ॥ अथ ब्रह्मण उपादानत्वभङ्गः ॥ ८ ॥

यच्चेदमुच्यते ब्रह्म जगत उपादानत्वे सति कर्त्रित्यभिन्ननिमित्तोपादानं जगदिति। तन्न। यतः "विकारवत्कारणत्वमुपादानत्वमुच्यते।
निर्विकारतया वेदसिद्धे ब्रह्मणि तत्कथम् ॥"

परिणामापरपर्यायविकारवत्त्वं ह्युपादानत्वम्। तच्च ब्रह्मणि "निर्विकारोऽक्षरः शुद्धः" इत्यादि-श्रुतिविरुद्धम्। ननु विवरणे रज्ज्वाः सूत्रद्वयवन्मायाविशिष्टं ब्रह्म जगत्कारणमिति वा माया-शक्तिमद्ब्रह्म कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणमितिवेति मतत्रयमुक्तम्। तत्राद्ये रज्ज्वाः सूत्रे इव मायाब्रह्मणी उपादाने, निर्विकारश्रुतिस्तु केवलब्रह्मपरेति विवक्षितम्। द्वितीये मायोपरागाद्ब्रह्म विकारि, निर्विकारश्रुतिस्तु तदनुपरक्ताभिप्रायेति विवक्षितम्। तृतीये तंतुद्वारांऽशुः पटस्येव मायाद्वारा ब्रह्मोपादानम्। श्रुतिस्तु अद्वारकविकारनिषेधिकेति विवक्षित-मिति चेन्न। आद्ये मायावत्तंतुवच्च ब्रह्मापि विकारीति विशिष्य ब्रह्मणो निर्विकारत्वोक्त्ययोगात्।

किंच परमार्थसज्ज्ञानानंदस्वभावस्य ब्रह्मणोऽप्युपादानत्वे कार्यमपि तथा स्यात्। अविद्योपादानत्वेऽपि सितासितसूत्रकार्ये पटे सितत्ववज्जगति परमार्थसत्त्वादेरपि दुर्वारत्वात्। नह्युपादानस्वभावस्योपादेये धीमात्रम्। अविद्यास्वभावस्याऽनिर्वाच्यत्वस्याऽपि प्रपंचे धीमात्र-त्वापातात्। सन्मात्रोपादानकत्वं सत्त्वे तंत्रं चेत् अनिर्वाच्यत्वमपि न स्यात्। तन्मात्रो-पादानकत्वाभावात्। द्वितीये मायाख्यहेतूपरागभावाभावाभ्यां विकारभावाभावविवक्षा चेत् मृदादिनाप्यारुप्यम्। मायाविशिष्टं ब्रह्म विकारि निर्विकारश्रुतिस्तु विशेष्याभिप्रायेति विवक्षायां तु विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः। अब्रह्मत्वे न नो हानिः। एतेन प्रकृतिविशिष्टं ब्रह्मोपादानमिति निरस्तम्। विस्तृतं चैतदन्यत्र।

---

॥ अथ ब्रह्मण उपादानत्वभंगः ॥ ८ ॥

नन्वविद्याया अप्युपादानत्वात् न कार्यस्य ज्ञानानंदाद्यात्मकत्वमित्याशंक्याह ॥ अविद्यो-पादानत्वेऽपीति ॥ ननूपादानस्वभावस्योपादेयगतत्वमिति न नियमः। किंतु तत्र तत्स्वभाव प्रतीतिनियम, उपादानस्वभावसत्त्वप्रतीतिस्तु प्रपंचेऽप्यस्तीति नोक्तदोष इत्याशंक्याह ॥ नहीति। अनिर्वाच्यत्वमपीति ॥ विनिगमनाविरहेणानिर्वाच्यमायोपादानकत्वाभावान्न प्रपंचे अनिर्वाच्यत्वमपि न स्यादित्यर्थः ॥ एतेनेति ॥ ब्रह्मत्वाब्रह्मत्वविकल्पेनेत्यर्थः ॥ विस्तृतं चैतदिति ॥ ननु नेदं

किंच विशिष्टस्य मृदादिवद्धर्मिसमसत्ताकरूपांतरापत्तिरूपपरिणामाद्विवर्तमतहानिः स्यात्। विशिष्टस्य परिणामः शुद्धस्य तु विवर्त इति चेत् तर्हि शुद्धेऽपि विवर्तार्थं आरोपितविकारस्यावश्यकत्वान्निर्विकारश्रुतेस्तत्परत्वं न स्यात्। श्रुतिर्विशेष्यस्यैव तात्विकविकाराभावपरा चेत् विशिष्टे विकारोक्तिरयुक्ता स्यात्। तत्वतो निर्विकारे आरोपितविकाराविरोधात्। तृतीयोऽप्ययुक्तः, अंशोस्तंतु प्रतीव ब्रह्मणः अनादिमायां प्रति उपादानत्वाभावात्। भ्रमाधिष्ठानत्वमुपादानत्वमिति चेत् न। उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादौ उपादानत्वस्य चाऽव्यवहारात्। पारिभाषिकोपादानत्वस्य चाऽनुपादानत्वे पर्यवसानात्।

एतेनाऽसत्यरूपांतरापत्तिर्विवर्तः, सत्यरूपांतरापत्तिस्तु परिणामः, रूपांतरापत्तिमात्रं उपादानत्वम्। तच्च ब्रह्मणो विवर्तरूपविशेषेणाप्युपपन्नम्। निर्विकारश्रुतिस्तु तात्विकविकाराभावाभिप्राया। ब्रह्म चाज्ञानं प्रपंचरूपेण विवर्त इति अज्ञानमपि परिणामितयोपादानांतर्गतम्। रूप्यमपि शुक्तिविवर्तत्वादज्ञानपरिणामत्वाच्चोभयोपादानकमिति निरस्तम्। त्वयापि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयम्। सत्यत्वे कार्यस्याऽपि कारणस्वभावतया सत्यत्वप्रसंग इति वदता सत्यस्यासत्यरूपापत्तेर्निषेधात्। सत्यारोपितधूमानुगतधूमत्वसामान्यस्येव सत्यासत्यरूपांतरापत्त्यनुगतोपादानत्वसामान्यस्याप्यभावाच्च। शुक्तिब्रह्मणोरेव रूप्याकाशाद्युपादानत्वसंभवे अविद्यान्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेरविद्योपादानत्वकल्पनायोगाच्च। नच परिणामित्वेनाविद्याकल्पनम्। असत्यस्य रूप्यादेः सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावात्। विकारित्वेनाविद्याकल्पनं तु तत्वतो निर्विकारे ब्रह्मणि अतात्विकविकाराङ्गीकारात् परेणैव निरस्तम्। नच कार्यापेक्षितन्यूनसमानसत्ताकोपादानत्वेनाविद्याकल्पनम्। अविद्यार्थापत्तिभंगे निरस्तत्वात्।

---

(भेदं) मृदादिसाधारण्यमुपादानत्वम्। किंतु [illegible] इत्याशंक्याह ॥ पारिभाषिकोपादानत्वस्य चेति ॥ [illegible] मिति तदपि नेत्याह ॥ सत्यारोपितेति। निरस्तत्वादिति ॥ [illegible] ॥ नतु [illegible]

किंच रूप्येऽपि रूप्यमिदमितिप्रतीतेः अविद्याविकारभूतं रूप्यं इदंरूप्यतादात्म्यं वाऽस्तु । इदमो रूप्यरूपापत्तिरूपो विकारस्तु कथम् । नहीदं रूप्यरूपमापन्नमिति धीरस्ति । नचारोपितमप्यारोपं विना युक्तम् ।

एतेन रूपांतरापत्तिप्रतीतिविषयत्वमुपादानत्वम्, प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्ताविति निरस्तम् । शुक्तिर्वा ब्रह्म वा रूप्यत्वं वा आकाशत्वं वा आपन्नमित्यप्रतीतेः । सच त्यच्चाभवदित्यादिश्रुतेश्चात्माश्रयप्रसंगेन स्वजन्यरूपांतरापत्तिधीविषयत्वप्रत्यायकत्वायोगात् ।

एतेन रूपांतराभेदधीविषयत्वं वा कार्याभेदधीविषयत्वं वोपादानत्वम् । प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्ताविति निरस्तम् । आद्ये तत्त्वंपदार्थयोः क्षीरनीरयोः खंडगोत्वयोश्चोपादानोपादेयत्वापातात् । द्वितीये सदृशे संनिहिते निमित्तेऽपि कार्याभेदभ्रमसंभवेनातिव्याप्तेः । तस्मादकारणस्यातीतादेरत्यंतासतश्च भ्रमाधिष्ठानत्वदर्शनात् भ्रमाधिष्ठाने च शुक्त्यादौ कारणत्वोपादानत्वयोरव्यवहारात् न परपक्षे भ्रमाधिष्ठानस्य ब्रह्मण उपादानत्वकारणत्वे । ननु मायोपादानमीश्वरो निमित्तम् । शुद्धं ब्रह्माधिष्ठानमितिचेन्न । अभिन्ननिमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्यधिकरणादेरनुपपत्तेः ।

॥ इति ब्रह्मण उपादानत्वभंगः ॥ ८ ॥

---

भावेऽपि श्रुतितः संभवतीत्याशंक्याह ॥ सचेति ॥ उदाहृतश्रुतेर्न रूपांतरापत्तिप्रतीतिविषयत्वरूपोपादानत्वप्रत्यायकत्वम्, तज्जन्यप्रतीतेः स्वविषयत्वप्रसंगादित्यर्थः । वस्तुतस्तु नेयं श्रुतिर्ब्रह्मणो वियदादिरूपांतरापत्तिप्रतिपादनपरा किंतु ब्रह्मण एव तत्तदंतर्यामिरूपप्रतिपादनपरा । सत्त्वादिगुणाविर्भावप्रतिपादनपरा वेति न ततो रूपांतरापन्नत्वप्रतीतिरर्थादिति ध्येयम् ॥ तदर्थस्येति ॥ अभिन्ननिमित्तोपादानत्वसाधनार्थं प्रवृत्तस्येत्यर्थः ।

॥ इति ब्रह्मण उपादानत्वभंगः ॥ ८ ॥

## ॥ अथ परमते ब्रह्मणो निमित्तत्वभङ्गः ॥ ९ ॥

किंचेदं कर्तृत्वं किं परिभाषया शुक्त्यादिवदधिष्ठानत्वमात्रम्, भ्रांतवदध्यासद्रष्टृत्वं वा, मायाविवद्व्यामोहकत्वं वा, कुलालादिवदुपादानादिगोचरप्रयत्नादिमत्त्वं वा । नाद्यः । त्वन्मतेऽधिष्ठानत्वातिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्त्ययोगात् । "तद्देदं नामरूपे व्याकरोत्" इत्यादिश्रुत्यनुपपत्तेश्च । नहि चेतनोऽचेतनो वा स्वस्मिन्नारोपितं संकल्प्य करोति । अत एव न द्वितीयः । भ्रांतस्य प्रेक्षापूर्वकारोपितकर्तृत्वाभावात् । ब्रह्मणोऽभ्रांतत्वेनाकर्तृत्वस्य जीवस्य भ्रांतत्वेन जगत्कर्तृत्वस्य चापातात् । नचेष्टापत्तिः । श्रुत्यादिविरोधात् । जगत ईश्वरं मुक्त्वा संसारिण उत्पत्त्यादि संभवयितुमपि न शक्यमित्यादित्वद्भाष्यविरोधाच्च । ननु शुद्धस्याभ्रांतत्वेऽपि मायाशबलितः कर्तेश्वरो भ्रांत इति चेन्न । ईश्वरस्य भ्रांतत्वे जीववत्संसाराद्यापातेन बहुश्रुत्यादिविरोधात् । किंच पक्षद्वयेऽपि वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यादिसूत्रेषु कर्मसापेक्षत्वेन वैषम्यादिपरिहारो न युक्तः स्यात् । अधिष्ठान(त्वादिना)त्वेन तदप्रसक्तेः । न तृतीयः । व्यामोहनीयजीवादर्शने व्यामोहकत्वायोगात् । दर्शने च भ्रांतत्वापत्तेः । व्यामोहकत्वस्यापि आरोपितत्वेनान्योन्याश्रयाच्च । नामरूपे व्याकरवाणीत्यादिश्रुत्यनुपपत्तेश्च । नहि मायावी गजादिकं करवाणीति संकल्प्य करोति, किंतु दर्शयानीति संकल्प्य दर्शयति । किंच पक्षत्रयेऽपि जन्मादिसूत्रेऽर्थलब्धसार्वज्ञादिस्फोरणार्थं शास्त्रयोनित्वसूत्रमिति यत्परमतं तद्भंगः स्यात् । भ्रमाधिष्ठानत्वादिना सार्वज्ञालाभात् । न चतुर्थः । कल्पितत्वे तस्यायोगात् । नहि घटादिकं कुलालेनेव कल्पितं रूप्यादि भ्रांतेन वान्येन वा क्रियते । विस्तृतं चैतत्पुरस्तात् ।

तस्मात् "अधिष्ठाने तथा भ्रांते भ्रमके च न कर्तृता ।
लौकिकी कृतिमत्ता तु न दृष्टारोपितं प्रति ॥"

॥ इति परमते ब्रह्मणो निमित्तत्वभंगः ॥ ९ ॥

---

॥ अथ परमते ब्रह्मणो निमित्तत्वभंगः ॥ ९ ॥

॥ सामानाधिकरण्योक्त्ययोगादिति ॥ तस्य भेदघटितत्वादिति भावः ॥ श्रुतिविरोधादिति ॥ "आत्मन्यवीतः सुखदुःखहेतोः" इत्यादिश्रुतिविरोधादित्यर्थः ॥ अधिष्ठानत्वादिनेति ॥ प्रेक्षापूर्वककर्तुरेव हि वैषम्यादिप्रसक्तिरिति भावः ॥ भ्रांतत्वादिति ॥ स्वव्यतिरिक्तवस्त्वंतराभावेन तदर्शने भ्रांतत्वापत्तिरिति भावः ॥ व्यामोहकत्वस्यापीति ॥ तस्यापि व्यामोहकत्वमितीतरसापेक्षत्वेनान्योन्याश्रयादित्यर्थः । संकल्प्येति ॥ अधिष्ठानेति ॥

॥ इति परमते ब्रह्मणो निमित्तत्वभंगः ॥ ९ ॥

## ॥ अथ ब्रह्मण उपादानत्वे प्रमाणभङ्गः ॥ १० ॥

किंचोपादनत्वे न तावत् "आत्मन आकाशः संभूतः" "यतो वा" इत्यादिपंचमीश्रुतिर्मानम्, तस्या अनेकार्थत्वात्। अपादानार्थत्वेऽपि "ध्रुवमपायेऽपादानम्" इत्यनेनापादानसंज्ञासंभवाच्च। "जनिकर्तुः" इत्यनेनापादानसंज्ञायामपि वृत्तौ "पुत्रात्प्रमोदो जायते" इत्यस्याप्युदाहृतत्वात्। न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य असति प्रकृतिग्रहणे उपादानस्यैव स्यात्, प्रत्यासत्तेः, नेतरस्य, प्रकृतिग्रहणात् सर्वस्य कारणस्य भवतीति प्रकृतिपदं पुत्रात्प्रमोदो जायत इत्यादावनुपादानेऽप्यपादानसंज्ञार्थमित्युक्तत्वात्। "शृंगाच्छरो जायते गोलोमाविलोमभ्यो दूर्वा जायंते" इत्यादावपि शरांकुरं प्रत्युपादानभूतो यः शृंगैकदेशः तत्संसृष्टं शृंगैकदेशांतरं शरांकुरनिमित्तमस्ति। माषांकुरोपादानभूतो यस्तुषांतरवस्थितो माषभागस्तत्संसृष्टो माषांकुरनिमित्तभूतस्तुषभाग इवापरिणतशृंगभागस्यानुभवात् तदेव शृंगादितिपंचम्यंतेनोच्यते। अत एव महाभाष्ये "अयमपि योगः शक्योऽवक्तुम्। गोलोमाविलोमभ्यो दूर्वा जायंते। अपक्रामंति तास्तेभ्य" इत्यादिना लोमादीनां दूर्वादीन्प्रत्यवधित्वात् "ध्रुवमपायेऽपादानम्" इत्यनेनैवाऽपादानसंज्ञासिद्धेरिदं सूत्रं प्रत्याख्यातम्। कैयटेऽपि यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यादिनाऽवधित्वमेवोपपादितम्।

तदुक्तम्, "शृंगाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा।
वृश्चिकश्चेत्येवमादेष्वपादानत्वमिष्यते॥" इति।

---

॥ अथ ब्रह्मण उपादानत्वे प्रमाणभंगः ॥ १० ॥

॥ अनेकार्थत्वादिति ॥ उपादानत्ववद्धेतुत्वस्यापि पंचम्यर्थत्वात्। तथानुशासनाभावः। "तदशिष्यं संज्ञाप्रमाणत्वात् कुत्वं कस्मान्न भवति भुग्नादित्वादिति पाणिनिभाष्यकारादिप्रयोगप्रमाणबलेन हेतुत्वस्यापि पंचम्यर्थत्वावगमादिति ॥ पुत्रादिति ॥ तथाच प्रकृतिपदं हेतुमात्रपरं न तूपादानपरमिति न तयोरभिन्नविषयतेति भावः। ननु "शृंगाच्छरो जायत" इत्यादौ पंचम्या उपादानत्वं प्रतीयत इत्याशंक्याह शृंगादित्यादिना। अत एवेति ॥ उपादानत्वेन पंचम्यर्थत्वाभावादित्यर्थः। अपक्रामितिच्छेदः। ननु यदि "सच्च त्यच्चाभवत्" इति वाक्येन

अत एवाकाशाद्वायुरित्याद्युपादानपंचमीसाहचर्यात् आत्मन इत्यप्युपादानपंचमीति निरस्तम्। आकाशादित्यादावपि निमित्तांशस्यैव पंचमीनिर्देशात् । अन्यथा संभूतइत्ययुक्तम् । नहि शुक्ते रूप्यं संभूतमित्युच्यते। नापि "सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानु प्राविशत् तदनु प्रविश्य सच्च त्यच्चाभवत्" इतिश्रुतिस्तत्र मानम् । सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानंतरभावित्वेन जगत्सृष्टित्वानुपपत्त्या परमेश्वरस्य सत्त्वादिगुणाभिव्यक्तिपरत्वात्। अन्यथाऽभवदित्ययुक्तम्। नहि शुक्ती रूप्यमभवदित्युच्यते। मूर्तामूर्तात्मकप्रपंचस्य सदसत्पदाभ्यामेवोक्तत्वेन "निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च" इत्यादिवाक्यशेषस्थनिरुक्तादिपदवैयर्थ्यं च। "सोऽकामयत बहु स्याम्" इत्यादि तु परमेश्वरस्य "अजायमानो बहुधा विजायते यदेकमव्यक्तमनंतरूपम्" इत्यश्रुतिसिद्धतत्तदनन्तपदार्थप्रेरकानंतरूपैर्बहुभावसंकल्पमाह । न च स्वस्याऽनंतरूपैर्बहुभावं संकल्प्य "इदं सर्वमसृजत" इतिप्रपंचसर्जनानुपपत्तिः। नियामकरूपैर्बहुभावस्य नियम्यसापेक्षत्वात् नियम्यं सर्वं सृष्ट्वा नियामकरूपैः प्रवेशोक्त्युपपत्तेः।

उक्तं हि—"बहु स्यामिति संकल्प्य तेजः प्रभृतिसर्जनम्।
गुरुः स्यामिति संकल्प्य शिष्यसंपादनादिवत् ॥" इति।

अन्यथा स्यामिति भव्योक्तिरयुक्ता। स्यामितिसंकल्पितस्य सत्यदादिभवनस्य "सच्च त्यच्चाभवत्" इत्यनेनैवोक्तत्वेनेदं सर्वमसृजतेत्यादिवैयर्थ्यं च । सृष्टेः पूर्वमंतःकरणाभावेन तद्विशिष्टाहमर्थाभावादुत्तमपुरुषानुपपत्तिश्च। एतेन "तदैक्षत बहु स्यां प्रजायेय" इत्येतदपि व्याख्यातम्। किंच तत्तेजोऽसृजतेति यत्तेजःप्रभृतिसृज्यं तत्तदात्मना हि त्वया बहुभावो वाच्यः। तेजःप्रभृति च चेतनं "तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षंत ता अन्नमसृजंत तिस्रो देवता" इति ईक्षितृत्वस्रष्टृत्वदेवतात्वादीनां श्रवणात्। नच चेतनं प्रति उपादानता तवापीष्टा। एतेनैव "असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुत" इत्येतदपि व्याख्यातम्। "तदात्मानं सृजाम्यहम्, संभवामि युगे युगे" इत्यादिवदुपपत्तेः। नत्वात्मानमाकाशाद्यात्मना-

---

[illegible]: प्रपंचरूपेण बहुरूपत्वं न स्यात्, तर्हि बहु स्यामिति बहुभावसंकल्पो न स्यादित्याशंक्याह ॥ सोऽकामयतेति। अन्यथेति ॥ बहु स्यामितिसंकल्पस्य प्रपंचरूपेण बहुभावपरत्वे प्रपंचस्या-[illegible] स्यामितिभव्योक्तिरयुक्ता स्यादित्यर्थः ॥ भव्योक्तिरिति ॥ भूतकालसंबंध[illegible]

ऽकुलतेति श्रूयते, अन्यथा अकुलतेति सत्त्वोक्तिरयुक्ता। किंच परमते "ततो वै सदजायत" इति-पूर्ववाक्येनैव तच्छब्दनिर्दिष्टाद्ब्रह्मणः प्रपंचोत्पत्तेः सिद्धत्वात् "तदात्मानम्" इति व्यर्थम्।

नापि "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यंते आकाशं प्रत्यस्तं यंति" इति ब्रह्मण्येव सृष्टिलयोक्तिस्तत्र मानम्, निमित्ते कार्यस्य लयाभावादिति युक्तम्। निमित्तेऽप्यूर्णनाभौ तंतोर्लयदर्शनात्। ब्रह्मणोऽप्यूर्णनाभिवदेव संहर्तृत्वस्य "यथोर्णनाभिः" इत्यादिश्रुतिसिद्धत्वात्। नचोर्णनाभिरपि तंतुकोशादीन्प्रत्युपादानम्। ऊर्णनाभिनाशेऽपि तंतूपलंभात्। नच दधि कुंडलं वा क्षीरं स्वर्णं वा प्रत्यस्तं यातीत्युच्यते। नापि "यथोर्ण-नाभिः सृजते गृह्णते च, यथा सतः पुरुषात्केशलोमानि, ससर्ज मातापितृवत्" इत्यादिदृष्टांत-कथनादुपादानता। ऊर्णनाभिदेहधातुविशेषस्यैव तंतूपादानत्वात्, केशादीन् जडोपादान-कान्प्रति चेतनस्य निमित्तमात्रत्वात्। पितृदेहधातोः पुत्रदेहं प्रत्युपादानत्वेऽपि पितृचेतनस्य निमित्तमात्रत्वात्। नाप्येकमेवाद्वितीयमिति वस्त्वंतरनिषेधादात्मन एवोपादानत्वम्। त्वन्मते-ऽप्यविद्यादेः सत्त्वात्। "यद्भूतयोनिम्" इति योनिशब्दस्तु "योनिष्ट इंद्र सदने" इत्यादि-प्रयोगान्नोपादानत्वे नियत इति परैरप्यंगीकृतम्।

नाप्येकविज्ञानेन सर्वविज्ञानानुपपत्तिरुपादानत्वे मानम्, सादृश्यप्राधान्याभ्यामेव तदुप-पत्तेरुक्तत्वात्। नापि "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यानुपपत्तिस्तत्र मानम्।

---

धानुभावेन वा कालसंबंधित्वरूपसत्तायाः प्रतीतत्वादिति ॥ नापीति ॥ युक्तमित्यनेन संबध्यते। ॥ यथोर्णनाभिरिति ॥

"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवंति।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम् ॥"

इति श्रुतिसिद्धत्वादित्यर्थः। यद्यप्यत्र संहर्तृत्वं ब्रह्मणो न प्रतीयते, तथापि ऊर्णनाभिदृष्टांतानुसारेण तदप्यत्र श्रुत्यभिप्रेतमित्यत्र तात्पर्यम् ॥ नापीति ॥ यद्यप्ययं दृष्टांतः प्रागेव विघटितः। तथापि युक्त्यंतरप्रदर्शनार्थं पुनरुपादानमिति ध्येयम्। ननु यदि ब्रह्मोपादानं न स्यात्कथं तर्हि "यद्भूतयोनिं परिपश्यंति धीराः" इत्यादौ योनिशब्दप्रयोगः इत्याशंक्याह ॥ भूतयोनिमिति ॥ योनिशब्दप्रयोगस्य "योनिष्ट इंद्र सदने अकारि तमा नृभिः पुरुहूत प्रयाहि" इत्यादाविव स्थानपरत्वेनाप्युपपत्तिः। अंगीकृतं च त्वया "योनिश्च हि गीयते" इति सूत्रभाष्ये योनिष्ट इत्यादौ योनिशब्दस्य स्थानपरत्वमिति न तद्बलेनो-पादानत्वसिद्धिरिति भावः ॥ उक्तत्वादिति ॥ वाचारंभणश्रुत्यर्थकथनावसर इति शेषः ॥ सामाना-

सर्वं समाप्नोषि ततोऽसि सर्वः" इतिस्मृत्यैवान्यथा व्याख्यातत्वात्। प्रकृत्यधिकरणं तु भाष्य एवाऽन्यथा व्याख्यातम्। एतेन ब्रह्मण एव परिणाम इति भास्करादिमतमपास्तम्।

नापि महाभूतानि सद्वस्तुप्रकृतिकानि सत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्। मृदनुस्यूतघटादिवदिति विवरणोक्तमनुमानं मानम्। विवर्तमते उपादानता न युक्तेत्युक्तत्वात्। सत्प्रधानप्रकृतिकत्वस्य मन्मतेऽपि सत्त्वाच्च। खंडो गौर्मुंडो गौरिति गोस्वभावानुरक्ते खंडादौ व्यभिचाराच्च। सदनुपादानकत्वेऽपि सद्घटोऽस्तीतिवत्सती पृथिवीत्यादिप्रतीतेरुपपत्त्याऽप्रयोजकत्वाच्च। अत्रेदानीं सन् घट इतिवत् अत्रेदानीमसन् घट इत्यपि प्रतीत्या घटादेः, असन्नृशृंगं असत्खपुष्पमित्यादिप्रतीत्या नृशृंगादीनामप्यसदुपादानकत्वापाताच्च। ब्रह्म न द्रव्योपादानं चेतनत्वाच्चैत्रवत्। जगन्नानंदप्रकृतिकम् तत्स्वभावानुरक्तत्वात् यद्यत्स्वभावानुरक्तं न तत्तत्प्रकृतिकम्। यथा घटस्वभावाननुरक्तः पटो न घटोपादानक इत्यादिना सत्प्रतिपक्षत्वाच्च। यच्च जगदभिन्ननिमित्तोपादानकं प्रेक्षापूर्वजनितकार्यत्वात् सुखदुःखादिवदिति विवरणोक्तमनुमानम्। तच्च, विवर्तमते उपादानत्वानुपपत्तेरुक्तत्वात्। कार्यत्वादित्येतावत एव हेतुत्वसंभवाच्च। त्वन्मते दुःखादीनामंतःकरणोपादानकत्वेन साध्यवैकल्याच्च। जगदुपादानं न कर्तृ द्रव्योपादानत्वान्मृद्वत्। जगत्कर्ता वा न द्रव्योपादानं कर्तृत्वात्कुलालवदित्यादिना सत्प्रतिपक्षत्वाच्च। एतेन विमतमभिन्ननिमित्तोपादानकं कार्यत्वात् सर्वकार्यनिमित्तकालघटसंयोगवदिति निरस्तम्। तस्माद्ब्रह्म जगत्कर्तृत्वादिनैव श्रुत्यादिवेद्यं न तूपादानत्वेनेति।

॥ इति ब्रह्मण उपादानत्वे प्रमाणभंगः ॥ १० ॥

---

धिकरणानुपपत्तिरिति ॥ कार्यकारणयोः सामानाधिकरण्यप्रयोगस्य उपादानोपादेयतां विनानुपपत्तेरिति भावः। ननु यदि ब्रह्म जगदुपादानं न स्यात्तर्हि प्रकृत्यधिकरणविरोध इत्याशंक्याह ॥ प्रकृत्यधिकरणं त्विति। अन्यथाव्याख्यातमिति ॥ प्रकृतिशब्दोपलक्षितस्त्रीलिंगशब्दसमन्वयपरतया व्याख्यानमित्यर्थः ॥ महाभूतानीति ॥ सत्प्रकृतिकमित्यत्र किं सत्त्वेन ब्रह्मोच्यते उताबाधितमिति विकल्प्याद्य आह ॥ विवर्त इति ॥ द्वितीय आह ॥ सत्प्रधानेति ॥ वैयात्यतोऽपि गुणपुरुषान्तरस्य दृष्टांते साध्यवैकल्यपरिहाराच्चाह ॥ द्रव्येति ॥ दृष्टांते साध्यसत्त्वार्थमाह सर्वकार्यनिमित्तेति कालविशेषणम्।

॥ इति ब्रह्मण उपादानत्वे प्रमाणभंगः ॥ १० ॥

## ॥ अथ स्वप्रकाशत्वलक्षणभङ्गः ॥ ११ ॥

यच्चेदमुच्यते—ब्रह्म न वेद्यं स्वप्रकाशत्वात्, तत्र यद्यपि न वृत्त्यव्याप्यत्वम्, दृश्यत्वभंगे उक्तरीत्याऽसंभवात्, नापि फलाव्याप्यत्वम्। अतीतादौ नित्यातींद्रिये चातिव्याप्तेः। नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम्। सुषुप्तिप्रलयादौ व्यवहाराभावेनाव्याप्तेः। नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयतायोग्यत्वम्, मोक्षे योग्यतारूपधर्मस्याप्यभावात्। तथाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यतात्यंताभावानधिकरणत्वं तत्। प्रमाणं चात्र अनुभूतिः स्वप्रकाशा अनुभूतित्वादिति व्यतिरेकि। नचाप्रसिद्धविशेषणता। वेद्यत्वं किंचिन्निष्ठात्यंताभावप्रतियोगि धर्मत्वाच्छौक्ल्यवदिति सामान्यतस्तत्सिद्धेः। आत्मा चानुभूतिरूप इति। तन्न, त्वन्मते आत्मनि सत्त्वाद्यनधिकरणत्वरूपानिर्वाच्यत्वस्येव मोक्षे योग्यतात्यंताभावानधिकरणत्वरूपस्य वाऽनधिकरणत्वोपलक्षितत्वरूपस्य वा धर्मस्याप्यभावात्। किंच, त्वन्मते ब्रह्मणि योग्यतापि मिथ्या, मिथ्यात्वं च स्वसमानाधिकरणात्यंताभावप्रतियोगित्वं तथा च तदत्यंताभावानधिकरणत्वमसंभवि। नच व्यावहारिको योग्यतात्यंताभावो ब्रह्मणि नेति वाच्यम्। अत्यंताभावस्य ब्रह्मान्यत्वेन व्यावहारिकत्वात्। किंचेदमवेद्यत्वं न तावद्वृत्त्यव्याप्यत्वम्, असंभवात्। नापि फलाव्याप्यत्वम्, दृश्यत्वभंगे उक्तरीत्या प्रातिभासिके

---

॥ अथ स्वप्रकाशत्वलक्षणभंगः ॥ ११ ॥

॥ असंभवादिति ॥ ब्रह्म विचारयतोर्गुरुशिष्ययोर्मौनं मौक्यं च स्यात्, ब्रह्मज्ञानार्थं श्रवणादिविधेश्च वैयर्थ्यं स्यादित्यादिदृश्यत्वभंगोक्तन्यायेनासंभवादित्यर्थः ॥ अवेद्यत्वे सतीति ॥ फलाव्याप्यत्वे सतीत्यर्थः । घटादौ नित्यातीन्द्रिये चातिव्याप्तिवारणाय विशिष्टोपादानम् । ॥ अप्रसिद्धेरिति ॥ अवेद्यत्वाप्रसिद्ध्या तद्विशिष्टसाध्यस्याप्रसिद्धत्वादिति भावः । यद्यप्यवेद्यत्वस्य वृत्त्यव्याप्यत्वरूपत्वे तद्वैयर्थ्यम्, फलाव्याप्यत्वरूपत्वे तु नाप्रसिद्धिः । नित्यातीन्द्रियादौ तत्प्रसिद्धेः । तथापि वेदनत्वावच्छिन्नविषयत्वाभावरूपमवेद्यत्वमादायाप्रसिद्ध(द्धि)विशेषणतोक्तिरियमिति ध्येयम् । हेतोः पक्षधर्मतामुपपादयति ॥ आत्मा चेति ॥ ननु लक्षणप्रविष्टात्यंताभावो व्यावहारिको विवक्षितः । मिथ्यात्वघटकात्यंताभावस्तु पारमार्थिक इति नासंभव इत्याशंकां निराकरोति ॥ नचेति । अत्यंताभावस्येति ॥ मिथ्यात्वघटकात्यंताभावस्येत्यर्थः ॥ व्यावहारिकत्वादिति ॥ व्यावहारिकात्यंताभावत्वादित्यर्थः । ननु ज्ञाननिवर्त्यत्वरूपमिथ्यात्वाभ्युपगमे नोक्तदोष इत्यतो दोषान्तरमाह ॥ किंचेति । दृश्यत्वभंगे उक्तरीत्येति ॥ शुक्तिरूप्यादेर्विषया-

रूप्यादौ व्यावहारिके अविद्यांतःकरणतद्धर्मसुखादौ घटादौ च लक्षणस्यातिव्याप्तेः, तत्रोक्तरीत्यैव ब्रह्मणोऽपि चरमवृत्तिप्रतिबिंबितचिद्रूपफलव्याप्यत्वेनासंभवाच्च। एतेन फलव्याप्यत्वं वृत्तिप्रतिबिंबितचिज्जन्यातिशययोगित्वम्, अतिशयश्च नावरणभंगः, नापि व्यवहारः, किंतु भग्नावरणचित्संबंधः, स च घटादावस्ति न त्वात्मनि। यद्वा फलव्याप्यत्वं वृत्त्या तत्प्रतिफलितचिता वाऽभिव्यक्ताधिष्ठानचिद्विषयत्वम्, तच्च तज्जन्यव्यवहारयोगित्वं तच्च घटादावस्ति न त्वात्मनीति निरस्तम्।

घटादौ वृत्तिविषयत्वमेव ननु तत्प्रतिफलितचिद्विषयत्वं न वा तदभिव्यक्ताधिष्ठानचिद्विषयत्वमित्युक्तत्वात्। एतेनैव चिद्रूपज्ञानाविषयत्वमवेद्यत्वं रूप्यादिरपि साक्षिविषयएव। लक्षणे विशेष्यं तु नित्यातींद्रियेष्वनतिव्याप्त्यर्थमिति निरस्तम्। घटादावतिव्याप्तेः। चित्सुखेन तत्स्वभावस्यापि स्फुरणस्य तद्विषयत्वमित्युक्तत्वेन असंभवाच्च। ननु तर्हि चिदकर्मत्वमवेद्यता चित्सुखेनैव चितश्चिद्विषयत्वमुपेत्य तदकर्मत्वोक्तेरितिचेत्, कर्मत्वं किं कारकविशेषत्वम्, तज्जन्यातिशयवत्त्वं वा परसमवेतक्रियाफलशालित्वं वा। नाद्यः, अनवच्छिन्नं नित्यं चैतन्यं प्रति घटादेरप्यकारकत्वात्। स्वाकारवृत्तिप्रतिबिंबितं तु प्रति घटस्येवापादेरिवापरोक्षचरमवृत्तिव्याप्यस्य ब्रह्मणोऽपि कारकत्वावश्यंभावात्। न द्वितीयः, ब्रह्मण्यप्युक्त(रीत्याम)न्यायेन प्रतिफलितचित्फलभूतावरणभंगरूपस्य तदभिव्यक्तचिज्जन्यव्यवहाररूपस्य

---

वेद्य केवलस्वाश्रितभास्यतया घटादेरप्यन्वयव्यतिरेकाभ्यां वृत्तिमात्रभास्यतया च वृत्तिप्रतिफलितचैतन्यविषयत्वरूपफलव्याप्यत्वाभावेनातिव्याप्तेरित्यर्थः। यथा च प्रातिभासिकस्यापरोक्षव्यवहारयोग्यत्वं तथोपपादयिष्यमाणत्वात्। नन्वतिशयः किमावरणभंगः व्यावहारिको वा [(व्यवहारोवा पा)] नोभयमपि। ब्रह्मण्यपि सत्त्वेनासंभवापत्तेरित्याशंक्याह॥ अतिशयश्चेति। नत्वात्मनीति॥ चिद्रूपस्यात्मनः स्वेनैव संबंधायोगादिति भावः(र्थः)। ननु वृत्तिप्रतिबिंबितचितः केवलचैतन्याद्विभिन्नत्वेन न तत्संबंधानुपपत्तिरित्यसंभवतादवस्थ्यमित्यत आह॥ यद्वेति। नत्वात्मनीति॥ आत्मनो विषयविषयित्वायोगादिति भावः॥ घटादाविति॥ तथाच घटादावतिव्याप्तिरिति भावः॥ ॥ तद्विषयत्वमिति॥ तज्जन्यव्यवहार[(योग्यत्व)(पा)]योगित्वरूपमित्यर्थः। चैतन्यं प्रति कारकविशेषत्वविवक्षायामपि किमनवच्छिन्नचैतन्यं प्रति उत स्वाकारवृत्तिप्रतिबिंबितं प्रति। आद्यः। घटादावतिव्याप्तेः। न द्वितीयः ब्रह्मण्यतिव्याप्तेरित्याह॥ अनवच्छिन्नमित्यादिना॥ तृतीयेऽपि

बातिशयस्य सत्वात् । तदन्यस्य च घटादावप्यभावात् । न तृतीयः, शुद्धचितोऽसमवेतत्वादक्रियात्वाच्च तत्फलशालिनोऽपि जडस्याकर्मत्वापातात् । प्रतिबिंबिते चिति तु समवेतत्वादेः सत्त्वेऽपि ब्रह्मणोऽपि चरमवृत्तिप्रतिफलितचित्फलभूतावरणभंगादिशालित्वाच्च ।

एतेन ज्ञप्त्यविषयत्वमवेद्यत्वं वृत्तिस्तु न ज्ञप्तिरिति निरस्तम् । घटादौ वृत्त्यन्यज्ञप्त्यभावस्योक्तत्वात् । तस्मादवेद्यत्वं दुर्वचम् ।

कश्चायमपरोक्षव्यवहारः अपरोक्षज्ञानजन्यो वा अपरोक्षवस्तुविषयो वा अपरोक्षोऽयमित्याकारो वा । नाद्यः, धर्माधर्मादावप्यपरोक्षेण योगजज्ञानेनानुव्यवसायेन व्याप्तिज्ञानेन च जन्यव्यवहारस्य सत्त्वेनातिव्याप्तेः । अपरोक्षज्ञानशब्देनानागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यसाक्षात्कारविवक्षायां चात्मस्वरूपज्ञानस्य नित्यत्वेनासंभवात् । विषयगतापरोक्षव्यवहारहेतुसाक्षात्कारविवक्षायां तु साक्षिवेद्ये रूप्यादौ चाविद्यादौ चातिव्याप्तेः । द्वितीये वस्तुन आपरोक्ष्यं अपरोक्षज्ञानविषयत्वं चेदात्मापि घटादिवद्वेद्यः स्यात् । तस्यैव लक्षणत्वोपपत्त्या कुसृष्टिर्वैयर्थ्यं च । अपरोक्षव्यवहारविषयत्वं चेत् वस्तुव्यवहारयोरापरोक्ष्येऽन्योन्यसापेक्षत्वादन्योन्याश्रयः । न तृतीयः निराकारशुद्धब्रह्मविषयस्याऽखंडार्थनिष्ठवेदांतजन्यस्य च व्यवहारस्यापरोक्ष इत्याकारत्वायोगात् । अभावेऽतिव्याप्तेश्च । अस्ति हि गज इव गजाभावेऽप्यपरोक्ष इति लोकव्यवहारः । स चावेद्यः । त्वयैव नाभावस्य प्रत्यक्षत्वं

---

क्रियाशब्देन शुद्धचैतन्यं विवक्षितं वृत्तिप्रतिबिंबितं वेति विकल्प्याद्यं(निराह)मिराकरोति ॥ शुद्धचित इति । अक्रियात्वादिति ॥ क्रियात्वरूपधर्मानधिकरणतया क्रियारूपत्वासंभवादित्यर्थः । द्वितीयं निराह ॥ प्रतिबिंबचिति(त)स्त्विति ॥ अपरोक्षज्ञानपदेन लौकिकालौकिकसाधारणमपरोक्षज्ञानमात्रं विवक्षितं उत लौकिकप्रत्यासत्तिजन्यं आहोस्विद्विषयापरोक्ष्यव्यवहारप्रयोजकमिति विकल्प्याद्ये दोषमाह ॥ धर्माधर्मादाविति । व्याप्तिज्ञानेन चेति ॥ यो धर्मः सः विहितक्रियाजन्य इति ज्ञानांतरोपनीतधर्मविहितक्रिययोर्व्याप्तिविषयकमानस्य प्रत्यक्षरूपत्वेनेत्यर्थः । द्वितीय आह ॥ अपरोक्षज्ञानशब्देनेति ॥ अन्त्ये त्वाह ॥ विषयगतेति । आत्मापीति ॥ तथाचावेद्यत्वलक्षणस्यासंभव इति भावः ॥ तस्यैवेति ॥ अवेद्यत्वे सत्यपरोक्षज्ञानविषयत्वयोग्यत्वस्यैव लक्षणत्वसंभवे व्यवहारपदवैयर्थ्यं स्यादिति भावः । अभावातिव्याप्तिमुपपादयति ॥ अस्ति हीति ॥ ननु न

किंत्वनुपलब्धिविषयत्वमिति कृत्स्नव्याप्यत्वनिषेधात्। यदि चापरोक्षज्ञानं अपरोक्षव्यवहार-शब्दार्थः, तदा स्वव्याहतिः।

किंच अपरोक्षव्यवहारयोग्यत्वं न तावत्सर्वान्प्रति। चैत्रस्य ज्ञाने मैत्रं प्रति तद-भावात्। नापि ज्ञानं प्रति, तस्याव्यवहर्तृत्वात्। नापि ज्ञानाश्रयं प्रति, चितोऽनाश्रितत्वात्। किंचावेद्य(त्वे सत्यप)रोक्षव्यवहारविषयत्वं व्याहतम्। तदपरोक्षव्यवहारे तद्विषयक-स्फुरणस्य हेतुत्वात्। यदि च स्फुरणाविषयेऽपि स्फुरणे तद्विषयकापरोक्षवृत्तिर्वा तदविषयकं स्फुरणमेव वा स्वभावभेदादेव अपरोक्षव्यवहारहेतुस्तर्हि वैरूप्याय घटादावपि तथैव स्यात्। ननु घटादिकमस्फुरणरूपं स्फुरणं तु तद्रूपमितिचेत् (आत्मा तु स्फुरणरूप इति चेत्) सत्यं तावता स्फुरणे स्फुरणांतरं नापे(क्ष्यतां)क्षितं नतु कृत्स्नं तद्विषयकत्वमपि। अन्यथा प्रमेयत्वमपि स्ववृत्तिं विनैव स्वस्मिन्प्रमेयव्यवहारं कुर्यादिति केवलान्वयि न स्यात्। गतिरपि ग्राम इव स्व-स्मिन्नपि स्वकार्यं कुर्यात्। अस्मन्मतेऽव्याप्यत्वरूपसत्त्वस्य स्ववृत्तित्वादेव सत्ता सतीति व्यवहारः।

एतेन चिदविषयस्वरूपत्वमेव स्वप्रकाशत्वं चिदन्यत्सर्वमपि दृश्यत्वनिरुक्तिप्रस्तावे उक्तन्यायेन चिद्विषयमेव। चित्तु न स्ववेद्या। स्वात्मनि वृत्तिविरोधात्। नहि छिदा छेद्या भवतीति निरस्तम्। मिथ्यात्वानुमित्यादेः स्वविषयकत्ववदुपपत्तेः। अन्यथा चितिः स्वात्मनि व्यवहारमपि न जनयेत्, नहि छिदाकार्यं छिदायां दृश्यते। नापि स्वव्यवहारे स्वातिरिक्त-संविदनपेक्षत्वं वा स्वव्यवहारे स्वावच्छिन्नसंवि(न्नापे)दनपेक्षत्वं वा स्वप्रकाशत्वम्। अस्य स्ववेद्यत्वेऽप्युपपत्त्या संमतत्वात्। स्वविषयत्वं विना स्वव्यवहारहेतुत्वायोगादित्युक्तत्वाच्च।

किंच स्वप्रकाशत्वं आत्मस्वरूपमेव वा, तद्धर्मो वा। नाद्यः इष्टापत्तेः, नांत्यः, तात्विकस्य तस्याभावेन स्वप्रकाशत्वस्यातात्विकत्वापत्त्या तत्साधकानुमानादेर्बाधात्।

॥ इति स्वप्रकाशत्वलक्षणभंगः ॥ ११ ॥

---

व्यवहारपर्यवेक्षणम्, तस्यैव ज्ञानार्थकत्वादित्याशंक्य निराकरोति ॥ यदि चेति। स्वव्याहति-रिति ॥ अवेद्यत्वांशोक्तरादिति भावः ॥ स्वभावभेदादेवेति ॥ स्वभावविशेषादेवेत्यर्थः। किंच सविषयकपदार्थस्य कार्यकारित्वं स्वविषय एवेति स्फुरणस्यापि स्वविषयत्वमावश्यकम्। अन्यथा गमनादेः स्वस्मिन्नपि स्वकार्यकारित्वप्रसंग इत्याशयेनाह ॥ गतिरपीति ॥ एवं तर्हि छिदापि छेद्या स्यादित्याशंक्याह ॥ अन्यथेति ॥ स्वावच्छिन्नेति ॥ स्वविषयकेत्यर्थः। द्वितीयपक्षे दोषमाह ॥ स्वविषयत्वं विनेति। स्वप्रकाशत्वमिति ॥ स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वरूपमित्यर्थः।

॥ इति स्वप्रकाशत्वलक्षणभंगः ॥ ११ ॥

## ॥ अथ आत्मनः पराभिमतस्वप्रकाशत्वभङ्गः ॥ १२ ॥

यच्चानुभूतित्वहेतौ साध्यप्रसिध्यर्थं धर्मत्वादित्यनुमानम्, तत्र वेद्यत्वं वृत्तिव्याप्यत्वं वा फलव्याप्यत्वं वा चिद्विषयत्वं वा अस्वप्रकाशत्वं वा। नाद्यः अर्थांतरत्वात्, नहि पूर्वानुमान एतदभावः साध्यः। न द्वितीयः, तस्य मम घटादौ तव शुक्तिरूप्यादौ च धर्मादौ च पक्षेतरव्यक्तिविशेषेऽसिद्धत्वेनासाधारणानैकांत्यात्। नच पूर्वत्रावेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं साध्यम्, तच्च न व्यक्तिविशेषे सिद्धमिति वाच्यम्। तस्य सामान्यतोऽप्यप्रसिद्ध्याऽप्रसिद्धविशेषणत्वात्। नच पूर्वत्र किंचित्प्रत्यपि फलाव्याप्यत्वं साध्यं धर्मादिश्च योगिनं प्रति फलव्याप्यः। अविद्यावृत्तिप्रतिफलितचिदपि साध्यत्वात्फलमिति शुक्तिरूप्याद्यपि फलव्याप्यमेव, अवेद्यत्वमात्रं च स्वप्रकाशत्वमिति वाच्यम्। उक्तन्यायेन फलव्याप्ये ब्रह्मणि तदभावस्य बाधात्। न तृतीयः। उक्तरीत्या प्रतिफलितचिद्विषयत्वस्य ब्रह्मण्यपि भावात्। शुद्धचिद्विषयत्वस्य च घटादावप्यभावेनासाधारण्यात्। न चतुर्थः, प्रतियोग्यप्रसिद्ध्याश्रयासिद्धेः। सर्वत्रैवं साध्याभावं पक्षीकृत्य सुसाधत्वेनातिप्रसंगाच्च। किंच धर्मत्वस्यानिर्वाच्यत्वभंगे उक्तरीत्या शब्दप्रतिपाद्यत्वादिषु केवलान्वयिधर्मेषु व्यभिचारः।

किंचात्यंताभावप्रतियोगित्वं कुतश्चिच्च व्यावर्तते येषत्रैव व्यभिचारः। व्यावर्तते वेद्यतो व्यावर्तते तत्रैव धर्मिणि व्यभिचारः। अपिच घटादाविव स्वप्रकाशत्वविरोधिनो व्यावहारिकस्य वेद्यत्वस्य सत्त्वेऽपि तदत्यंताभावसंभवेनार्थांतरम्। नच घटादौ धर्मिसमसत्ताकमेव वेद्यत्वं तद्विरोधि, तथात्वे आत्मनि वृत्तिव्याप्यत्ववत् फलव्याप्यत्वस्य व्यावहारिकत्वेऽपि स्वप्रकाशत्वोपपत्त्या तन्निगमवैयर्थ्यात्। अत एवायं घटः एतद्घटान्यत्वे सति

---

॥ अथ आत्मनः पराभिमतस्वप्रकाशत्वभंगः ॥ १२ ॥

॥ नहीति ॥ आत्मा स्वप्रकाशः अनुभूतित्वादिति पूर्वानुमाने फलव्याप्यत्वाभावस्यैव साध्यशरीरप्रविष्टत्वात् अन्यथा बाधापत्तेरिति भावः [(अन्यथानुपपत्तेरिति)(पाठः)] ॥ असाधारणानैकांत्यादिति ॥ अनुभूतित्वहेतोरिति शेषः। नन्वेवं शुक्तिरूप्यधर्मादेरपि फलव्याप्यत्वापरोक्षव्यवहारयोग्यत्वरूपविशेष्यभागो व्यर्थ इत्याशंक्याह ॥ अवेद्यत्वमात्रं चेति। आश्रयासिद्धेरिति ॥ धर्मत्वानुमानस्येति शेषः ॥ एतद्घटान्यत्वे सतीति ॥ एतद्घटान्यत्वविशिष्टं यद्वेद्यत्वं तदनधिकरणं वा एतद्घटलक्षणस्य इत्यर्थः। एतच्च साध्यं पक्षादन्यत्र एतद्घटान्यस्मिन् सर्वत्र प्रसिद्धम्। एतद्घटरूप

अप्रयोजकत्वं च। नन्वनुभूतिरूपस्यात्मनः परवेद्यत्वेऽनवस्था स्यात्, पराभाववदज्ञायामात्मनि संशयादिश्च स्यात्। नचात्मनि अहमनहं वेति कश्चित्संदिग्धे। नापि नाहमेवेति विपर्यस्यति। स्ववेद्यत्वं तु विरुद्धं तस्मात्काप्रयोजकतेति चेन्न। त्वन्मते संदेहाद्यविषयस्याहमर्थस्यानात्मत्वात्। तदन्यस्मिंश्च शब्दैकगम्यात्मनि संदेहादेः सत्त्वात्। किंच स्ववेद्यत्वं किमिति विरुद्धम्, किं साक्षात्कारस्य विषयजन्यत्वात् स्वस्य च स्वजन्यत्वासंभवात्, किंवा साक्षात्कारे स्वजनकेंद्रियसंनिकृष्टस्यैव विषयत्वात् स्वजनकसंनिकर्षकाले च स्वस्याभावात्, यद्वा विषयविषयिभावसंबंधस्योभयनिष्ठत्वात्, अथवा ज्ञानस्यैव ज्ञेयत्वे विरुद्धस्य क्रियाया एव कर्मत्वस्यापातात्। आहोस्वित् विषयिण एव विषयत्वे कर्तुरेव कर्मत्वापातात्। तस्य चान्यत्वगर्भितस्यैकस्मिन्नसंभवात् ॥ नाद्यद्वितीयौ स्वप्रकाशस्यात्मस्वरूपज्ञानस्येश्वरज्ञानवन्नित्यत्वेनाविरोधात्। अन्यथा स्वव्यवहारहेतुसाक्षात्कारस्यापि स्वजन्यत्वादिनियमात्तवापि तुल्यो दोषः। न तृतीयः अतीतारोपितात्यंतासतां ज्ञानदर्शनेन तस्योभयनिष्ठत्वाभावात्। न चतुर्थः, कृतिविशेषस्य कार्यत्ववत्, इच्छाविशेषस्य चेष्टत्ववत्, व्यवहृतेश्च व्यवहार्यत्ववत् अभिधेतिशब्दगताया अभिधायाः स्वाभिधेयत्ववत्, वृत्तिरूपस्य यद्दृश्यं तन्मिथ्येति व्याप्तिज्ञानस्य मिथ्यात्वानुमितेश्च स्वविषयत्ववच्चोपपत्तेः। न पंचमः, अज्ञस्यैव ब्रह्मणो ज्ञेयत्वस्य विषयिण्या एव मिथ्यात्वानुमितेः स्वविषयकत्वस्य अभिधायकस्यैव शब्दशब्दस्य स्वाभिधेयत्वस्य च दर्शनेन मामहं जानामीत्यनुभवेन "तदात्मानमेवावेत्" इतिश्रुत्या च कर्तुरेव कर्मत्वसिद्धौ परसमवेतक्रियाफलशालित्वरूपान्यत्वगर्भितस्वकपोलकल्पितलक्षणत्यागेन क्रियाविषयत्वादिरूपस्यान्यस्यैव लक्षणस्य कल्प्यत्वात्। ननु कृत्यादिः कृत्याद्यंतरं प्रत्येव विषयः न तु स्वं प्रतीति चेन्न। गत्यादौ गत्याद्यंतरविषयत्वस्याप्यदर्शनात्। यदि च वस्तूनां विचित्रस्वभावत्वात् गत्यादावदृष्टमपि कृत्यादौ स्वसजातीयविषयत्वम्, तर्हि तत एवानुभूतेः

---

परसमवेतक्रियाफलशालित्वरूपस्य कर्मत्वस्येत्यर्थः ॥ अन्यथेति ॥ स्वविषयकसाक्षात्कारस्य स्वजन्यत्वादिदर्शनेनात्रापि तथाभ्युपगम इत्यर्थः। ननूक्तस्थले व्यभिचारदर्शनान्न दोष इत्याशंक्याह ॥ अभिधेति ॥ सर्वोपसंहारेण व्याप्त्यसिद्धिरित्युक्तदूषणमदूषणम् शंकामाशंक्य निराकरोति ॥नचेति॥धर्मादौ व्यभिचारवारणायाह ॥व्याप्तिज्ञानस्यापीति॥तथाच स्वविषयत्वं स्वव्याप्तिव्याप्यतावच्छेदकावच्छिन्नविषयत्वं न स्यादिति भावः ॥ गमनादाविति ॥ गमनाद्यावरणत्वात् कर्तुः कर्मत्व

स्वविषयत्वमप्यस्तु । अन्यथा स्वस्य स्वस्मिन्व्यवहारजनकत्वमपि न स्यादित्युक्तम् । व्याप्तिज्ञानमिथ्यात्वानुमित्यादेश्च स्वविषयत्वे सर्वोपसंहारवती व्याप्तिरनुमितिमिथ्यात्वं च न सिध्येत् । नहि चितश्चिद्विषयत्वेऽपि वृत्तिव्याप्यत्वमात्रेण सिद्ध्यादिवत् व्याप्तिविषयवृत्तेः स्वाविषयत्वेऽपि सर्वोपसंहारयुक्तव्याप्तिसिद्धावन्य उपायोऽस्ति । नच व्याप्तिज्ञानादेः स्वस्मिन् स्वव्यवहारहेतुत्वमेव, नतु स्वविषयत्वमिति वाच्यम् । घटादिज्ञानस्यापि तस्मिंस्तद्धेतुत्वमेव न तु तद्विषयत्वमित्यापातात् । व्याप्तिज्ञानादेरपि व्याप्यतावच्छेदकावच्छिन्नत्वाच्च । घटो ज्ञात इतिवत्सर्वोपसंहारवती व्याप्तिर्ज्ञातेत्यनुभवाच्च । एवं च

"जानामि मामहमिति तथात्मानमवेदिति ।
प्रत्यक्षेण तथा श्रुत्या ज्ञप्तौ कर्तुश्च कर्मता ॥
गमनादौ त्वदृष्टत्वान्न कर्तुः कर्मतेष्यते ।
अन्यथा शब्दशब्दादेः स्ववाच्यत्वादिकं कथम् ॥"

प्रतिकूलतर्कपराहतिश्च, अवेद्यत्वेऽवेद्यत्वसाधकप्रमाणवेद्यत्वावेद्यत्वाभ्यां व्याघातात् । वेदांतानां ब्रह्मणि प्रामाण्यायोगाच्च । ब्रह्मविचारविधिवैयर्थ्याच्च । ब्रह्माज्ञाननिवृत्त्ययोगाच्च । एतेन तदज्ञाननिवर्तकत्वात्तत्र तत्प्रामाण्यमिति निरस्तम् । आत्मनोऽप्यसिद्धिप्रसंगाच्च । स्वतःसिद्ध इति चेत् स्वत इति कोऽर्थः, किं स्वेनैवेति, किंवा प्रमाणं विनैवेति । नाद्यः, स्वविषयत्वापातात् । नच सिद्ध इत्यस्य ज्ञात इति नार्थः, किंतु व्यवहारयोग्य इतीति वाच्यम् । ज्ञातत्वातिरेकेण व्यवहारयोग्यत्वाभावात् । मुक्तौ योग्यताया अप्यभावेनात्मनस्तदा स्वतःसिद्ध्यभावापाताच्च । नांत्यः, सिद्ध्युपायस्यानुपन्यासात् । अन्यथा नृशृंगादेरपि सिद्ध्यापातात् । ननु वृत्तिव्याप्यत्वात्सर्वं युक्तम् । अवेद्यत्वं तु फलाव्याप्यत्वमिति चेन्न । एतादृशावेद्यत्वस्य

---

मेयत्व इति न वाच्यमित्यर्थः । पक्षांगीकारे बाधकमाह ॥ अन्यथेति ॥ यद्वा गमनादावित्यनेन अन्यथा दृष्टान्तमाह ॥ गमनादौ त्विति ॥ ननु चिद्वेद्यत्वेऽपि वृत्तिवेद्यत्वांगीकारान्न दोष इत्यतो दोषांतरमाह ॥ ब्रह्माज्ञानेति ॥ ननु वेदांतजन्यवृत्तिप्रतिफलितचैतन्यस्यात्माविषयत्वेऽपि तदज्ञाननिवर्तकत्वेन वेदांतानां प्रामाण्यमुपपद्यत इति मतं तदपि निरस्तमित्याह ॥ एतेनेति ॥ तदविषयस्य तदज्ञाननिवर्तकत्वायोगेनेत्यर्थः ॥ ज्ञातत्वातिरेकेणेति ॥ ज्ञातत्वातिरिक्तस्य व्यवहारयोग्यत्वस्याभावादित्यर्थः । यद्वा अज्ञाते व्यवहाराभावेन ज्ञातत्वं विना व्यवहार-

घटादावपि सत्त्वात् । किंचात्मस्वरूपभूतवित्तेः स्ववेद्यत्वाभावे वित्तित्वं स्वव्यवहारहेतुत्वं स्वस्मिन् संशयादिविरोधित्वं च न स्यात् । भुक्तेः सभोज्यत्ववत् वित्तेः सवेद्यत्वनियमान्मुक्तौ च वेद्यांतराभावात् । उक्तं चैतज्जडत्वहेतुभंगे ॥ वित्तेस्तद्व्यवहारादिहेतुत्वे तत्संशयादिविरोधित्वे च तद्विषयत्वस्य तंत्रत्वात् । नच स्वकर्मकत्वाभावेऽपि स्वनिर्वाहकत्वात् स्वस्मिन् स्वव्यवहारादिकं कुर्यादिति वाच्यम् । स्वनिर्वाहकशब्देनैव निर्वाह्यत्वनिर्वाहकत्वरूपयोर्निर्वहणक्रियाकर्मत्वकर्तृत्वयोरुक्तेः । स्वनिर्वाहकमभ्ययनविधिदीपप्रभादिकमपि अन्यस्मिन्निव स्वस्मिन्स्वकार्यकारि चेत् स्वविषयमेव ॥

एतेन यथा "गाङ्कुटादिभ्य" इत्यत्र बहुव्रीहिः स्वाविषयेऽपि कुटे स्वकार्यं करोति तथेहापीति खंडनोक्तं निरस्तम् । बहुव्रीहेरन्यपदार्थे शक्तिरिति वैयाकरणादिमते लक्षणेति तार्किकादिमते वा चैत्रशालास्था आनीयंतामित्यत्रोपलक्षणस्यापि चैत्रस्य शालास्थस्य तच्छब्दविषयत्ववत् कुटस्यापि कुटादित्ववत् अन्यपदार्थभूतसमुदायांतर्गतस्य शक्त्या लक्षणया वा बहुव्रीहिविषयत्वेन तदविषयत्वासंमतेः । उक्तं हि कैयटे—"उद्भूतावयवभेदः समुदायः समासार्थ" इति । नच ज्ञानस्य स्वस्मादन्यत्र व्यवहारादिजनने तद्विषयत्वं तंत्रम् । स्वस्मिंस्तु स्वाभेद एवेति युक्तम् । पक्षादन्यत्रैवायं नियम इति सर्वत्र सुवचत्वात् । दुःखादिविषयकस्य द्वेषस्य स्वाभेदे सत्यपि स्वविषयकत्वव्यतिरेकेण दुःखादाविव स्वस्मिन्निवृत्तिहेतुताया इच्छाविरोधित्वस्य चादर्शनाच्च । ब्रह्मज्ञानस्य च स्वाभेदे सत्यपि स्वविषयकत्वव्यतिरेकेण ब्रह्मणीव स्वस्मिन्प्रकाशप्रतिबंधकत्वादेरदर्शनाच्च । स्मरणरूपस्य परोक्षानुभवरूपस्य च वृत्तिज्ञानस्य स्वाभेदे सत्यपि स्वविषयकत्वव्यतिरेकेण स्वविषय इव स्वस्मिन् व्यवहारादिहेतुताया अदर्शनाच्च । वृत्तेरपि चिद्वत् स्वव्यवहारादिहेतुत्वे स्वप्रकाशत्वं स्यात् । मैत्रचैतन्यस्य चैत्रचैतन्येन पारमार्थिकाभेदे सुषुप्तौ भेदकल्पनाराहित्ये च सत्यपि तद्विषयकत्वव्यतिरेकेण तद्व्यवहारादिहेतुत्वव्यतिरेकस्य दर्शनाच्च । स्वात्मानं जानामीति स्वविषयकत्वस्यानुभवाच्च ।

---

योग्यत्वासंभवादित्यर्थः ॥ स्वाविषयेऽपीति ॥ बहुव्रीहेरन्यपदार्थविषयत्वेन कुटाविषयत्वादिति भावः । किमयं नियमो ज्ञान एव, सविषयकपदार्थमात्रे वेति विकल्पाद्य आह ॥ पक्षादिति ॥ द्वितीय आह ॥ दुःखादीत्यादिना ॥ आद्येऽपि व्यभिचारमाह ॥ स्मरणरूपस्येति । पारमार्थिकाभेदे सत्यपीति ॥ काल्पनिकभेदस्तु न तात्त्विकाभेदकार्यप्रतिबंधकः । यद्वौ कल्पितस्य

एवंच "कुर्यात्स्वकार्यं स्वस्मिंश्चेज्ज्ञानं स्वाविषये तदा ।
द्वेषाज्ञानादिकं कुर्यात्स्वकार्यमपि चाऽऽत्मनि ॥"

स्वविषयकत्वेऽपि स्वकर्मकत्वाभावाद्वेद्यत्वमिति तु निरस्तम् । घटः स्वप्रकाशः घटत्वात् व्यतिरेकेण पटवदित्याभाससाम्यं च । ननु चक्षुरादिसिद्धस्य पक्षत्वे बाधः, अन्यथा आश्रयासिद्धिरितिचेत्, इहापि वृत्तेःपक्षत्वे बाधः, अन्यथा आश्रयासिद्धिरिति समम् । त्वज्ज्ञानं तदापरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधिकरणं ज्ञानत्वात् मदीयज्ञानवदिति स्वप्रकाशत्वानुमाने त्वज्ज्ञानं तदापरोक्षव्यवहारयोग्यत्वे सति अवेद्यत्वानधिकरणम् । ज्ञानत्वान्मदीयज्ञानवदिति प्रकरणसमता । विवादपदानि ज्ञानानि घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणानि । ज्ञानत्वात् । घटज्ञानवदित्यत्रापि विवादपदानि ज्ञानानि घटज्ञानान्यत्वे सति चिदविषयत्वानधिकरणानि ज्ञानत्वात् घटज्ञानवदिति प्रकरणसमतैव । एतेनात्मनोऽपि स्वप्रकाशत्वं निरस्तम् । चित एवात्वप्रकाशत्वे चिद्रूपत्वेन तदसिद्धेः । परपक्षे आत्मनि चित्त्वायोगस्योक्तत्वाच्च । "विज्ञाता प्रज्ञाता" इति ज्ञातृत्वश्रुतेश्च ।

एतेन विमतं ज्ञानं भिन्नाश्रयविषयं ज्ञानत्वाज्ज्ञानांतरवत् । विमतं न स्वाश्रयविषयं गुणत्वात् अग्नेरौष्ण्यवदिति विद्यासागरोक्तं निरस्तम् । मामहं जानामीति प्रत्यक्षबाधात् । अज्ञान इव ज्ञानेऽपि आश्रयविषययोरैक्योपपत्त्याऽप्रयोजकत्वाच्च । अंतःकरणविषयिण्यामंतःकरणाभिन्नायां शब्दादिजन्यवृत्तौ आद्यस्य व्यभिचाराच्च । द्वितीयस्यापि दीपगतभास्वररूपस्य घट इव दीपेऽप्यंधकारविरोधित्वेन तद्विषयतया तत्र व्यभिचाराच्च । त्वन्मते तस्यागुणत्वाच्च ।

---

पक्षिभेदस्यापि दृष्टान्ततिसंबंधकत्वापातादिति भावः । ननु सुषुप्तौ व्यवहारकारणसमर्थस्याभावादेव व्यवहाराभाव इत्यतो दोषांतरमाह ।। स्वात्मानमिति । आत्मनीति ।। स्वस्मिन्नित्यर्थः ।। तदेति ।। त्वदपरोक्षव्यवहारयोग्यत्वसमानाधिकरणवेद्यत्वस्यानधिकरणमित्यर्थः । पक्षे विशेष्याभावमादाय दृष्टांते च विशेषणाभावमादाय साध्यपर्यवसानमिति द्रष्टव्यम् । विशिष्टोपादानं स्वप्रसिद्धिवारणाय ।। घटज्ञानान्यत्वे सतीति ।। पक्षे घटज्ञानान्यत्वस्य सत्त्वेन वेद्यत्वानधिकरणत्वेन दृष्टांते घटान्यत्वाभावमादाय साध्यपर्यवसानमिति द्रष्टव्यम् । आत्मा स्वप्रकाशः चिद्रूपत्वादित्येतदपि दूषयति ।। एतेनेति ।। आत्मा चिद्विषयः ज्ञातृत्वात् अंतःकरणवदित्यभिप्रेत्याह ।। विज्ञातेति । भिन्नाश्रयविषयमिति ।। भिन्नाश्रयविषयकं यस्य तत्तथोक्तमित्यर्थः ।। ज्ञानांतरवदिति ।।

नापि "अत्रायं पुरुषः स्वयंज्योतिः" इतिश्रुतिः आत्मनः स्वप्रकाशत्वे मानम्। तथाहि "अस्तमित आदित्ये याज्ञवल्क्य" इत्यादिना "किंज्योतिरयं पुरुषः" इत्यंतेन ज्ञानसाधनालोकाद्यभावे जीवस्य किं ज्ञानसाधनमिति पृष्टे "आत्मैवास्य ज्योतिः" इत्युपक्रांत आत्मा तावत्परमात्मैव। "स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति" इत्यादितल्लिंगात्। द्युभ्वाद्यधिकरणन्यायेनात्मशब्दस्य तत्रैव मुख्यत्वाच्च। तथाचात्रायं पुरुष इत्युपसंहारोऽप्यस्येत्यस्यानुषंगेणायमीश्वरोऽस्य जीवस्य स्वयमेव ज्योतिर्ज्ञानहेतुरित्येवंपरः। अस्मिन्नेव प्रकरणे "वाचैवायं ज्योतिषास्ते" इति ज्योतिःशब्दस्य ज्ञानसाधने प्रयोगात्। स्वप्रकाशत्वपरत्वे सदा स्वप्रकाशत्वेन श्रुतावत्रेत्यस्य वैयर्थ्याच्च। आत्मैवास्येति षष्ठ्या स्वविषयत्वस्यैवोक्तेश्च। "स्वयंदासास्तपस्विनः" इत्यादाविवान्यावेद्यत्वपरत्वे चामुख्यार्थत्वापातात्। वेद्येऽपि प्रदीपादौ स्वविषयप्रकाशत्वमात्रेण लोके स्वप्रकाशपदप्रयोगाच्च। तत्रापि सजातीयप्रकाशाप्रकाश्यत्वं निमित्तमितिचेन्न। घटादेरपि स्वप्रकाशत्वापातात्। नहि घटादिज्ञाने दीपे वा घटत्वादिकमस्ति।

---

न्यदीयज्ञानमित्यर्थः। "आत्मैवास्य ज्योतिः" इति पूर्ववाक्यानुसारात् "अत्रायं पुरुषः" इति वाक्यस्यापि जीवस्य परमात्मैव ज्ञानसाधनमित्यर्थप्रतिपादनाय पूर्ववाक्यगतात्मशब्दस्य परमात्मपरतां तावदाह ॥ तथाहीत्यादिना ॥ तल्लिंगादिति। द्युभ्वाद्यधिकरणन्यायेनेति ॥ "यस्मिन् द्यौः पृथिवी चांतरिक्षम्" इति द्युभ्वाद्यायतनत्वेन श्रूयमाणो रुद्रादिः उत विष्णुरितिसंशये "रुद्रो वाव लोकाधार" इत्यादिश्रुत्यंतरसमाख्यानात् रुद्रादिरेवेति प्राप्ते तमेवैकं जानथ आत्मानमित्यात्मशब्दात् "अमृतस्यैष सेतुः" इति मुक्तप्राप्यत्वव्यपदेशात् रुद्रादिसमाख्यायाः "सोऽन्तकः स रुद्रः स प्राणभृत्" इति श्रुत्यंतरानुसारेण विष्णुविषयत्वाच्च न रुद्रादिरिति सिद्धांत इति द्युभ्वाद्यधिकरणन्यायेनेत्यर्थः। ज्योतिःशब्दस्य ज्ञानसाधनपरत्वे प्रमाणमाह ॥ अस्मिन्नेवेति ॥ स्वप्रकाश(त्व)परत्वेऽपि नावेद्यत्वलक्षणस्वप्रकाशत्वसिद्धिरित्याह ॥ आत्मैवेति ॥ ननु "आत्मैवास्य ज्योतिः" इति वाक्यस्यास्य जीवस्य स्वयमेव ज्योतिरित्यर्थः। आत्मशब्दस्य स्वशब्दपर्यायत्वात्। तथाच न स्वविषयत्वसिद्धिः। किन्तु 'स्वयं दासा' इत्यादिवदन्यावेद्यपरत्वमेवेत्याशंक्याह ॥ स्वयंदासा इति ॥ (यद्वा स्वयंदासा इत्यादावनन्यदासत्वमिव स्वयंज्योतिरित्यत्राप्यन्यावेद्यत्वपरत्वमेवार्थ इत्याशंक्याह ॥ स्वयंदासा इति ॥) यद्वा स्वयंदासा इत्यादावनन्यदासत्वमिव स्वयंज्योतिरित्य-

यथोक्तं विवरणे आत्मा स्वप्रकाशः स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात् । प्रकाशाश्रयत्वात् प्रकाशकर्तृत्वात् प्रदीपवदित्यनुमानत्रयम् । तत्र साध्यं अवेद्यत्वं चेत् दृष्टांतस्य साध्यवैकल्यम् । सजातीयप्रकाशाप्रकाश्यत्वं चेत् अर्थांतरम् । घटादिवदप्रकाशत्वेऽप्युपपत्तेः । स्वविषयप्रकाशत्वं चेत् । अपसिद्धांतः सिद्धसाधनं च । किंचाद्यस्य ज्ञातैकसति दुःखादौ व्यभिचारः । अंत्ययोर्व्याप्त्यसिद्धिः । त्वन्मते आत्मनः प्रकाशत्वात् । निरस्तं चाविद्यानुमानभंगे ज्ञानप्रमानुगनं प्रकाशत्वम् । यदप्युक्तं विवरणे । आत्मा न स्वोत्पत्त्यनंतरं उत्पद्यमानप्रकाशाश्रयः प्रकाशाश्रयत्वादादित्यादिवदिति, तत्रास्माकं सिद्धसाधनं तवासिद्धिश्च ।

एतेन विवादाध्यासिता संवित् स्वसमानाश्रयस्वसमानकालीनस्वगोचरज्ञानविरहप्रयुक्ताव्यवहारा न भवति । संवित्त्वात् । अनंतरं व्यवहृयमाणसंविद्वत् इत्यानंदबोधोक्तं निरस्तम् । स्ववेद्यत्वेऽप्युपपत्त्यास्माकं सिद्धसाधनात् । ब्रह्मणोऽवेद्यत्वश्रुतिस्तु साकल्येनावेद्यत्वपरेति दृश्यत्वभंग एवोक्तम् । एतेनैवानुभूतिर्न स्वविष(यो वा)या वा स्वाविषयत्वे सति स्वजातीयाविष(यो वा)या वा । क्रियात्वात् च्छिदावत् । प्रकाशत्वादाऽऽलोकवत् । वस्तुत्वात् घटवत् । चैत्रीयानुभवो वा चैत्रीयापरोक्षव्यवहारयोग्यानुभवो वा न चैत्रीयापरोक्षानुभवविषयः । अनुभवत्वात् मैत्रानुभववदित्यादीनि नवीनानुमानानि निरस्तानि । असिद्ध्यनैकांतिकत्वबाधसत्प्रतिपक्षाद्युक्तदोषात् । तस्माज्ज्ञानस्य भाट्टरीत्या ज्ञाततानुमेयत्वेऽतीतं जानामीत्यनुभवस्याहं सुखीतिवत् अहं जानामीत्यपरोक्षानुभवस्य चायोगात् । प्राभाकररीत्यायं घट

मपि सम्यग्वेद्यत्वमेवेष्यत इत्यत ॥ स्वसंदामा इति ॥ नहीति ॥ स्वसजातीयप्रकाशाप्रकाश्यत्वाभावस्य प्रकाशे सजातीयप्रकाशाभावप्रयुक्त एवेति भावः ॥ स्वसत्तायामिति ॥ घटादौ व्यभिचारवारणाय वस्त्वप्रयोपादानम् । प्रदीपावस्थायां प्रदीपे प्रकाशव्यतिरेकविधुरत्वस्याभावात् दृष्टांते साधनवैकल्यमित्यत(उक्तं)आह ॥ उक्तं स्वसत्तायामिति ॥ व्याप्तिसिद्धिमेवोपपादयति ॥ त्वन्मत इति । अस्माकमिति ॥ स्वविषयकत्वरूपं स्वप्रकाशत्वमस्मदुक्तमेवेत्यर्थः । स्वसमानाश्रयस्वसमानकालीनेत्येतत् उद्देश्यसिद्ध्यर्थम् । अन्यथा "[illegible]" इत्यादिश्रुतिविरोध इत्याशंक्याह ॥ [illegible] । स्वाविषयत्वे सतीति ॥ स्वाविषयकत्वपरप्रकाश्यत्वाभ्यामर्थांतरवारणाय विशिष्टोपादानम् । [illegible] सिद्धसाधनवारणाय [illegible] ॥ असिद्धीति ॥ गुरुमते [illegible] ।

इतिजन्यज्ञानस्यैव स्वप्रकाशत्वे विमतं न स्वविषयं तदसंनिकृष्टकरणजन्यप्रमात्वादित्याद्यनुमानेन अयं घटः घटमनुभवामीतिज्ञानयोः क्रमानुभवेन च विरोधात् । तार्किकरीत्यानुव्यवसायस्यापि परप्रकाश्यत्वे ज्ञानस्य प्रत्यक्षात्मविशेषगुणत्वेन इच्छादिवदवश्यवेद्यत्वात् बुभुत्सितग्राह्यत्वे धर्मिज्ञानं विना बुभुत्साया एवायोगेनानवस्थानात् अयं घटः घटं जानामीतिज्ञानद्वयातिरिक्तज्ञानधारानुभवेनानुभवविरोधात् । चैत्रदुःखादिकं चैत्रीयनित्यापरोक्षज्ञानविषयः तं प्रति ज्ञातैकसत्त्वात् यं प्रति ज्ञातैकसत् तत्तदीयनित्यज्ञानविषयः यथेश्वरप्रयत्न इत्यादिना नित्यज्ञानसिद्धौ तत्स्वविषयं नित्यज्ञानत्वात् स्वव्यवहारेऽन्यानपेक्षत्वात् स्वसंशयादिविरोधित्वाच्च ईश्वरज्ञानवत् । नच द्वितीयादाश्रयसिद्धिः । ज्ञानधारानुभवादित्याद्यनुमानैः चैत्रस्योक्तज्ञानाभावे सुप्तोत्थितस्य परामर्शो न स्यादित्याद्यनुकूलतर्कसनाथैर्विरोधात् । अद्वैतिरीत्यात्मरूपस्य ज्ञानस्यावेद्यत्वे च दोषाणामुक्तत्वात् आत्मनो नित्यगुणभूतं ज्ञानं स्ववेद्यत्वरूपस्वप्रकाशत्ववत् । आत्मापि यावद्द्रव्यभाविना तेनाभिन्नत्वात् मामहं जानामीत्यनुभवात् । आत्मरूपा संवित् स्वविषयः, स्वजन्यव्यवहारविषयत्वात् स्वसत्तायामप्रकाशमानत्वरहितत्वात् यो यज्जन्यव्यवहारविषयादिः स तद्विषयो यथा घटः । आत्मरूपा संवित्-

---

गताभिधायां च व्यभिचारः । मामहं जानामि तदात्मानमेवावेत् इत्यादिप्रत्यक्षश्रुतिभ्यां बाधः । अनुभूतिः स्फुटविषया तदपरोक्षव्यवहारविषयत्वात् घटवदिति प्रतिरोधः इत्याद्युक्तदोषादित्यर्थः । इयता प्रबंधेन ज्ञानस्यावेद्यत्वं निरस्य ज्ञानमात्रस्यानुमितिवेद्यत्वं स्ववेद्यत्वं अनुव्यवसायवेद्यत्वं वेति भाट्टप्राभाकरतार्किकमतान्यपि क्रमेण निराकरोति ॥ तस्मादित्यादिना । तदसंनिकृष्टकरणजन्यत्वादिति ॥ यथा चानुमितिशाब्दादेर्विषयसन्निकृष्टजन्यत्वं तथोपपादितं दृग्दृश्ययोः संबंधानुपपत्तिभंगे ॥ प्रत्यक्षेति ॥ संस्कारस्वरूपात्मैकत्र्येषु व्यभिचारवारणाय क्रमेण विशेषणानि । घटज्ञानं जानामीत्यनुभवादपि नानुव्यवसायवेद्यतेत्याह ॥ अयं घट इति ॥ कथं तर्हि ज्ञानस्य वेद्यत्वमित्याशंक्य स्वाभिमतं वेद्यत्वमुपपादयति ॥ चैत्रमुखेति ॥ न च चैत्रनिष्ठापरोक्षज्ञानान्निष्ठया साध्यप्रसिद्धिरिति वाच्यम् । सामान्यव्याप्ती तस्याः अदोषत्वात् । ननु नित्यज्ञानस्यापि ज्ञानांतरवेद्यत्वं नैयायिकपक्षोक्तदोष इत्यत आह ॥ तदिति । विरोधादिति ॥ स्वव्यवहारे अन्यापेक्षत्वे विरोधादित्यर्थः । ननु स्वव्यवहारे अन्यानपेक्षत्वं ज्ञानमात्रेणाप्युपपन्नमिति न स्वविषयत्वे प्रयोजकमित्याशंक्याह ॥ अद्वैतिरीत्येति । आत्मापीति ॥ स्ववेद्यत्वरूपस्वप्रकाशत्ववानित्यनेन संबध्यते ॥ यावद्द्रव्य-

स्वविषयिणी, स्वसमानाधिकरणस्वसमानकालीनसत्त्वप्रकारकत्वविशेष्यकसंशयविरोधित्वात् , उक्तविशेषणवद्विपर्ययविरोधित्वात् , यद्यद्विशेष्यकोक्तसंशयादिविरोधि तत्तद्विषयकं यथा घटसंवित् । स्वसमानाधिकरणपदस्थाने स्वापरोक्षव्यवहारयोग्येति वा वक्तव्यम् । अयं घट इत्यादिज्ञानमपि घटे व्यधिकरणादिसंशयविरोधीति व्याप्तिग्रहणार्थमेव हेतुविशेषणानि , न स्वसिद्धिवारकाणि । इत्याद्यनुमानैश्च स्ववेद्यत्वरूपस्वप्रकाशत्ववान् स्वप्रकाशदीप्त्याश्रयप्रदीपवत् । तस्माद्यौगिकापुनरुक्तानंतवैदिकशब्दैर्वाच्यतया वेद्यत्वादनंतगुणं ब्रह्मेति ।

॥ आत्मनः पराभिमतस्वप्रकाशत्वभंगः ॥ १२ ॥

---

भाविनेति ॥ नित्यगुणभूतज्ञानाभिन्नत्वे हेतुः । ननु स्वविशेष्यकान्यदीयसंशयाविरोधित्वाद सिद्धिरिति तद्वारणाय स्वसमानाधिकरणेतिपदं देयम् । तथा चासिद्धिवारकत्वाद्व्यर्थमित्याशंक्याह ॥ अयं घट इत्यादीति ॥ व्याप्यग्रहणार्थमुपक्षिपन् उपसंहरति ॥ तस्मादिति ॥

॥ इति आत्मनः पराभिमतस्वप्रकाशत्वभंगः ॥ १२ ॥

## ॥ अथ अवाच्यत्वभङ्गः ॥ १३ ॥

यच्चेदमुच्यते ब्रह्म सर्वशब्दावाच्यमिति । तत्रावाच्यपदेनोच्यते चेत्, वाच्यत्वसिद्धिः । नापि तेनापि लक्ष्यते, अवाच्यरूपमुख्यार्थस्यान्यस्याभावात्, भावे वा ब्रह्म नावाच्यं किंतु तीरवदवाच्यरूपमुख्यार्थसंबंधिमात्रमिति स्यात्, मुख्यार्थहीनस्यापि ब्रह्मलक्षकत्वे घटशब्दोऽपि घटलक्षकः स्यात् । एवं निर्विशेषं स्वप्रकाशं परमार्थसदित्यादिशब्दैर्ब्रह्मोच्यते चेद्वाच्यत्वसिद्धिः । नापि तैरपि लक्ष्यते, निर्विशेषस्वप्रकाशादिरूपमुख्यार्थस्यान्यस्याभावात् । एवं लक्ष्यशब्देनोच्यते चेद्वाच्यत्वसिद्धिः, लक्ष्यते चेल्लक्ष्यत्वहानिः, गंगाशब्दलक्ष्यस्याऽगंगात्ववत् लक्ष्यपदलक्ष्यस्यालक्ष्यत्वात् । ननु निर्विशेषादिशब्दानां विशेषाभावादिविशिष्टं वाच्यम् । तच्च न ब्रह्म, तस्य विशेषाभावाद्युपलक्षितत्वादिति चेत् तर्हि विशेषाभावोपलक्षितशब्दवाच्यत्वमनिवार्यम् । ननु विशेषाभावोपलक्षितत्वादिकं वा तद्विशिष्टत्वं वा निर्विशेषादिपदवाच्यं, तच्च न ब्रह्म किंतु तदाश्रयव्यक्तिभूतं विशेष्यम्, एवंच मुख्यार्थसिद्धिः । ब्रह्मणो निर्विशेषादिशब्दलक्ष्यत्वेऽपि निर्विशेषत्वाद्यहानिश्चेति चेन्न । व्यक्तिः शब्दार्थः जातिस्तूपधानमितिमते, जातिविशिष्टा व्यक्तिः शब्दार्थ इति मते च यत्र विशेष्ये निर्विशेषत्वादिकं तस्य तदवाच्यत्वयोगात् । जातिरेव शब्दार्थः, व्यक्तिस्तु लक्ष्येति मतस्य च व्युत्पत्तिविरोधादिनान्यत्रनिरासात् । अस्मिन्पक्षे घटादिव्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणस्ततो विशेषार्थं जातिवाचिभिः सत्यादिशब्दैः ब्रह्म मंचशब्देन पुरुष इव जात्याधारव्यक्तिसंबंधितयैव लक्ष्यत इति वक्तव्यत्वेन मुख्यार्थाभावादिदोषतादवस्थ्याच्च । सत्यं ज्ञानमित्यादौ ब्रह्मणः सत्यत्वादिधर्माश्रयतयैव लक्ष्यत्वे घटादिवत् सखंडार्थत्वापाताच्च । किंच निर्गुणस्वप्रकाशादेरब्रह्मत्वे यद्यद् ब्रह्मतयेष्टं तत्तदब्रह्मेति साधु समर्थितो ब्रह्मवादः ।

---

॥ अथावाच्यत्वभंगः ॥ १३ ॥

ननु न ब्रह्मानंतर्यैविकल्पवाच्यम् । "यतो वाचो निवर्तंते" इत्यादिश्रुतिविरोधादित्याशंक्याह ॥ यच्चेति । अन्यस्याभावादिति ॥ तथाच तत्संबंधित्वरूपलक्षणा न स्यादितिभावः ॥ तदवाच्यत्वयोगादिति ॥ तस्य शक्यतावच्छेदकावच्छिन्ने लक्षणायोगात् । अन्यथा घटपदस्यापि घटे लक्षणा स्यादिति भावः ॥ व्युत्पत्तिविरोधादिनेति ॥ घटमानय पटमानयेत्यादौ व्यक्तेरेवानयनक्रियान्वयित्वप्रतीतेः तत्रैव संकेतग्रहणादिति भावः ॥ अस्मिन्पक्ष इति । व्यक्तिस्तु लक्ष्येति ॥ पक्षलक्ष्येत्यर्थः । किंचैवं लक्षणास्वीकारे घटमानयेत्यादिवत [त्यादिवाक्यवत (पा)]सत्यं ज्ञानमित्यादिवाक्यस्यापि सत्यत्वादिप्रकारकबोधजनकत्वसंभवात् अखंडार्थत्वं न स्यादित्या-

त्वन्मते "यतो वाचो निवर्तंते" इत्यादेरपि लक्षणया चिन्मात्रपरत्वेन वाच्यत्वाविरोधित्वाच्च। "अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते परं ब्रह्म" इतिश्रुत्या "वचसां वाच्यमुत्तमं, परमात्मेति चाप्युक्त" इत्यादिस्मृत्या वेदांततात्पर्यविषयो ब्रह्म वाच्यं वस्तुत्वाल्लक्ष्यत्वाच्च तीरवत्। परमार्थसदादिपदं कस्यचिद्वाचकं पदत्वाद्घटपदवत्। सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवत्पदयुक्तं वाक्यत्वात् अग्निहोत्रादिवाक्यवदित्याद्यनुमानैश्च विरोधाच्च। विपक्षे लक्ष्यत्वं न स्यात्। तथाहि लाक्षणिकशब्दो न श्रुत एवार्थांतरधीहेतुः। तत्रागृहीतशक्तिकत्वात्, किंतु पूर्वधीस्थे वाच्यार्थेऽनुपपत्तिदर्शने सति तत्यागेन स्वरूपतो वाच्यार्थसंबंधित्वेन चावगतस्यार्थांतरस्य बोधकः। गंगाशब्दादौ तथा दर्शनात्। अन्यथातिप्रसंगाच्च। तथाच ब्रह्मणोऽपि लक्ष्यत्वे वाच्यार्थसंबंधित्वे ज्ञेयत्वात्, औपनिषदत्वश्रुत्या वेदैकगम्यस्य चाशब्देनाज्ञेयत्वात् स्वप्रकाशतया नित्यसिद्धौ च शब्दवैयर्थ्यात् अवाच्ये च शब्दस्य लक्षकस्यैव वक्तव्यत्वात् तत्रापि वाच्यसंबंधित्वेन ज्ञेयत्वेनानवस्थेति कथमवाच्ये लक्षणा।

एवंच "वाच्ययोगितया बुद्धं लक्ष्यं ब्रह्म च वैदिकम्।
अवाच्यं चेति वक्तव्ये लक्षके ह्यनवस्थितिः॥"

नच वाचकस्यापि गृहीतसंगतिकस्यैव बोधकत्वात्संबंधग्रहणस्य च संबंधिज्ञानाधीनत्वात् संबंधिनश्च ब्रह्मणः शब्दैकगम्यत्वात् तथाप्यनवस्थेति वाच्यम्। यौगिकशब्दानां वाक्यतुल्यत्वेन संगतिग्रहणानपेक्षणात्। एवमवाच्यं चेद्ब्रह्म न सिद्ध्येत्, स्वतःसिद्धेर्निरस्तत्वात्, औपनिषदत्वेन चाशब्देनासिद्धेः। लक्षकस्य च शब्दस्य वाच्यार्थसंबंधित्वेन ज्ञातं प्रत्येव साधकत्वेनावाच्यस्य सिद्ध्ययोगात्।

ननु चात्र पक्षो ब्रह्मपदवाच्यं चेत्सिद्धसाधनं लक्ष्यं चेद्विरोधः, अत एवावाच्यत्वे लक्ष्यत्वं न स्यादिति तर्कोऽप्ययुक्तः। आपाद्यापादकयोरप्रसिद्ध्या व्याप्त्यसिद्धेश्च। उक्तं हि

---

याच्च॥ वेदांततात्पर्यविषय इति। अन्यथेति॥ तत्संबंधितयानवगतस्याप्यर्थस्य बोधक इति स्वीकारे वाच्यसंबंधिपदार्थांतरबोधोऽपि स्यादित्यर्थः॥ औपनिषदत्वश्रुत्येति॥ "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुत्येत्यर्थः॥ वक्तव्य इति॥ लक्षके पदे वक्तव्ये अनवस्थितिरित्यर्थः। ॥ अत्रेति॥ वेदांततात्पर्यविषयो ब्रह्मेत्यनुमान इत्यर्थः॥ अत एवेति॥ अवाच्यपदवाच्यस्य पक्षत्वे सिद्धसाधनम्। लक्ष्यस्य (तस्य) पक्षत्वे विरोधो दुस्तरो भवेदिति पक्षविकल्पदूषणादेवेत्यर्थः। तर्के

उक्तं हि "कथं लक्ष्यत्वमत्यंतावाच्यस्येति न चोद्यताम् ।
अत्यंतावाच्यशब्देन लक्ष्यस्यैवावबोधनात् ॥" इति चेन्न ।

वेदांततात्पर्यविषयत्वादिना रूपेण पक्षीकरणात् । अन्यथा त्वदीयेऽवाच्यत्वानुमानेऽपि पक्षो वाच्यं चेद्विरोधः, लक्ष्यं चेदाश्रयासिद्धिरिति स्यात् । अस्ति च यत्र प्रयोजकाभावस्तत्र प्रयोज्याभाव इति सामान्यव्याप्तिः । उक्ता च लक्ष्यत्वे वाच्यत्वस्य तंत्रता । न चेक्षुक्षीर-माधुर्यादौ वाक्यार्थे च व्यभिचारः, तस्यापि माधुर्यवाक्यार्थादिसाधारणशब्दवाच्यत्वात् ।

"विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते ॥"

इत्युक्तत्वेन अन्विताभिधानस्यान्यत्र समर्थितत्वेन चासाधारणशब्दवाच्यत्वाच्च । अभिहि-तान्वयपक्षेऽपि वाक्यार्थो नोच्यते नापि लक्ष्यते किंत्वन्विताभिधाने विशेषान्वय इव वृत्तिं विनैव संसर्गमर्यादया प्रतीयत इति तार्किकमते वाक्यार्थे लक्ष्यत्वस्याप्यभावाच्च । नच वाक्यार्थशब्दस्य समासत्वेन लक्षकत्वात् न वाचकतेति वाच्यम् । समासस्य लक्षकत्वपक्षेऽपि राजपुरुष इत्यत्र राजशब्दस्येव वाक्यशब्दस्य षष्ठ्यर्थलक्षकत्वेऽपि पुरुषशब्दस्येव अर्थशब्दस्य वाचकत्वात् । एतेन समासस्य वाक्यतुल्यत्वेनाभिधानं विनैव स्वार्थबोधकतेति निरस्तम् । वाक्यशब्दार्थशब्दयोर्यावर्थौ तत्संसर्गत्वेन रूपेण समासावाच्यत्वेऽपि अर्थत्वरूपेणार्थपद-वाच्यत्वात् ।

ननु प्रवृत्तिनिमित्ताभावात् कथं वाच्यत्वम् । उक्तं हि
"दृष्टा गुणक्रियाजातिरूढयः शब्दहेतवः ।
नात्यन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥" इति ।

[illegible]सिद्धिमुक्तरसि ॥ अस्ति चेति । व्यभिचार इति ॥ [illegible] भावे [illegible]ऽपि [illegible] [illegible] [illegible]माधुर्यं [illegible] दुर्भणम् ।' इत्यादि[illegible] [illegible] क्षीरादिषु[illegible]नैव [illegible]चेति भावः ॥ अन्विताभि-धानस्येति ॥ [illegible] [illegible] [illegible] व्यभिचार इति । अभिहिता-न्वयवादे तु [illegible] व्यभिचार [illegible] ॥ अभिहितान्वयपक्षेऽपीति । अभिधां विनैवेति ॥ वृत्तिं [illegible] ॥ शब्दहेतव इति ॥ [illegible] । [illegible]पदानां प्रवृत्ति-

नच घटादाविवारोपितं निमित्तमस्तीति शंक्यम् । आरोपिते श्रुतितात्पर्यायोगेन तात्पर्यविषयस्य वाच्यत्वायोगादिति चेन्न । सत्यादिशब्दानां लक्षकत्वे सिद्धे निमित्तभावस्तस्मिंश्च सिद्धे लक्षकत्वमित्यन्योन्याश्रयात् । स्वरूपमात्रप्रश्नोत्तरत्वेन तल्ल(क्षकते)क्ष्यतेत्यस्य च निरातात् । निर्विशेषवाक्यस्य च स्वरूपमात्रपरत्वे सत्यत्वाद्यविरोधात् । तस्य निर्विशेषत्वविशिष्टपरत्वे तु निमित्तस्य सत्त्वेन निर्विशेषशब्दवाच्यत्वापातात् । अभावनिमित्तकशब्दवाच्यत्वे च निर्गुणत्वभंगे उक्तरीत्या प्रामाणिकत्वाविशेषेण भावनिमित्तकशब्दवाच्यत्वस्यापि दुर्वारत्वात् । तस्माद्ब्रह्मणि सर्वेषां वैदिकशब्दानां लक्षणेत्येतदयुक्तम् । उक्तं हि

"एकस्यापि च (हि) शब्दस्य गौणार्थस्वीकृतौ सताम् ।
महती जायते लज्जा यत्र तत्राखिला रवाः ।। १ ।।
अमुख्यार्था इति वदन्यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ।। २ ।।" इति ।

तस्माद्यौगिकानंतवैदिकशब्दवाच्यत्वादनंतगुणं ब्रह्म जीवादिभिन्नमिति ।

।। इति अवाच्यत्वभंगः ।। १३ ।।

---

निमित्तसत्यत्वाद्यबोधकत्वं क(य)स्माल्लक्षकत्वाद्वा स्वरूपमात्रप्रश्नोत्तरत्वाद्वा निर्विशेषवाक्य(वाक्य) विरोधाद्वेति विकल्प्य नाद्यद्वितीयाविस्याह ।। सत्यादिशब्दानामित्यादिना ।। तृतीयेऽपि निर्विशेषवाक्यं स्वरूपमात्रपरमुत निर्विशेषत्वविशिष्टत्वपरमिति विकल्प्य नाद्य इत्याह ।। निर्विशेषवाक्यस्य चेति ।। द्वितीयं निराह ।। निर्विशेषेति वदन्निति ।। यो वदति तन्मार्गानुयायिना-(वर्तिना(पा)मित्यर्थः । प्रकृतमुपसंहरन् वक्ष्यमाणार्थमुपक्षिपति ।। तस्मादिति ।।

।। इति अवाच्यत्वभंगः ।। १३ ।।

## ॥ अथ सामान्यतो भेदखण्डनोद्धारः ॥ १४ ॥

यच्चेदमुच्यते भेदः किं स्वरूपं धर्मो वा । नाद्यः निरपेक्षत्वाद्यापातात् । नांत्यः अनवस्थाद्यापत्तेः । कुंभस्य स्तंभाद्भेदे प्रतीते स्तंभस्य कुंभाद्भेदधीरित्यन्योन्याश्रयाद्यापत्तेश्चेति । अत्र ब्रूमः—किं भेदप्रतीतिरेव नास्तीत्युच्यते किंवा सा कारणजन्या नेति उत बाध्यविषयेति । नाद्यः, भेदभ्रमनिरासाय वेदांतश्रवणाद्ययोगात् । भेदाप्रतीतौ बहुयत्नैस्तन्निरासायोगाच्च । स्वपरपक्षदूषणभूषणादेर्भेदाप्रतीतौ बहुविप्लवापत्तेश्च । भेदः स्वरूपं धर्मो वेति विकल्पायोगाच्च । नहि पर्यायेण विकल्पः संभवति । द्वितीये कारणाजन्यत्वमजन्यत्वेन वा स्यात्, अकारण-जन्यत्वेन वा स्यात् । नाद्यः भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्रातिकूल्याचरणापातात् । न द्वितीयः । व्याघातात् । जनकस्यैव कारणत्वात् । तृतीयेऽपि किं शुष्कतर्कैरेव भेदस्य बाध्यत्वाध्यवसायः श्रुत्यादिना वा । नाद्यः, ऐक्यस्यापि ब्रह्मस्वरूपत्वे तद्वदेव निरपेक्षत्वाद्या-पातात्, धर्मत्वेऽनवस्थेत्यादितर्कबाध्यत्वसाम्यात् । त्वयैव वेदांतानामैदंपर्यं दर्शयितुमिदं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः कंचित्सिद्धांतं साधयितुं दूषयितुं वा प्रवृत्तमित्युक्तत्वाच्च । एवंच

> "भेदःस्वरूपं धर्मो वेत्यादिरूपा विभीषिका ।
> अकारमात्रप्रक्षेपे स्यादभेदे विभीषिका ॥"

भेदाभावादन्यदैक्यं नास्तीति चेदैक्याभावदन्यो भेदो नास्तीति समम्, भेददूषणेनैवैक्य-सिद्धिश्चेदैक्यदूषणेनैव भेदसिद्धिः स्यात् । एवंच

---

॥ अथ सामान्यतो भेदखंडनोद्धारः ॥ १४ ॥

॥ निरपेक्षत्वाद्यापातादिति ॥ प्रतियोग्यविकल्पकत्वाद्यापातमित्यर्थः ॥ अनवस्थापत्तेरिति ॥ भेदस्यापि कुम्भादिभिन्नत्वात् तथापि भेदांतरस्वीकारापत्तेरिति भावः ॥ अन्योन्याश्रयाद्या-पत्तेश्चेति ॥ कुंभे स्तंभभेदज्ञानमंतरेण कुंभस्य स्तंभव्यावृत्तधर्मवत्तया ज्ञानस्य भेदप्रतीतेर्हेतोर-संभवादिति भावः ॥ नहीति ॥ स्वरूपं धर्मो वेति विकल्पस्योभयोर्भेदज्ञानं विनायोगादिति भावः ॥ स्वप्रातिकूल्येति ॥ भेदप्रतीत्युच्छेदार्थं प्रवृत्तस्योच्छेदासंभवादिति भावः । धर्मत्वेऽपि मिथ्या-त्वं वा बाधः । भेदस्य सत्यत्वसाधकतानिराकार्यं यदीरेव निरस्य द्वितीयं निराकरोति ॥ धर्मत्व

"भेदस्य खंडनेनैव यद्यभेदः प्रसिध्यति ।
अभेदखंडनेनैव तर्हि भेदोऽपि सिद्ध्यतु ॥"

भेद एव दूष्योऽस्माकं नत्वभेदः साध्य इति चेत्, अभेद एव दूष्योऽस्माकं न तु भेदः साध्य इति समम् । स्वपक्षस्य जल्पादौ त्वयापि स्थाप्यत्वात् । वितंडायां तु मयाऽप्यस्थाप्यत्वात् । नच वितंडा तवैवेति नियमः । सत्यपि पक्षपरिग्रहे तवेव ममापि तदा तदस्थापनेन वितंडाधिकारात् । अन्यथा तार्किकादेः शब्दानित्यत्वादौ मीमांसकादिना सह वितंडा न स्यात् । उक्तंच

"वितंडा तु सतामन्यैस्तत्त्वमेषु निगूहितम्" इति ।

पक्षपरिग्रहहीनस्य तु निर्मर्यादस्यापसिद्धांतादिनिग्रहानर्हतया न वितंडायामप्यधिकारः । नाप्यौपनिषदंमन्यस्यापि तव वितंडैवेति नियमः । त्वदिच्छाननुसारित्वात्प्राश्निकानाम् । उपनिषदां परपक्षनिरासमात्ररूपत्वाभावाच्च । परपक्षनिरासकेन द्वितीयाध्यायेनैव गतार्थत्वेन स्वपक्षसाधनार्थानामाद्याद्यध्यायानां वैयर्थ्यापाताच्च । भाषितं च त्वयैवाद्यद्वितीययोः संगतिं दर्शयता स्वपक्षसाधनं प्रथमं कृतं तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति ।

त्वया स्थाप्यं मया दूष्यमिति समयबंधे कथमिति चेन्न । मयापि स्वानभिमतस्यास्थाप्यत्वेन त्वयापि स्वाभिमतस्यादूष्यत्वेन तथा समयबंधायोगात् । त्वया भेदः स्थाप्यः मया दूष्य इति तद्बंधे कथमिति चेत् । त्वयैक्यं स्थाप्यं मया दूष्यमिति तद्बंधे कथम् । तदापि अस्वव्याघातकैरेव त्वया ऐक्यं दूष्यमितिचेत् । भेदेऽपि तथेति न स्वव्याघातकैर्भेददूषणं युक्तम् । ब्रह्मातिरिक्तमैक्यमेव नास्तीतिचेत् घटाद्यतिरिक्तो भेदोऽपि नास्तीति समम् । श्रुतिविरोधादैक्यदूषकास्तर्का आभासा इति चेत्, प्रत्यक्षादिविरोधाद्भेददूषका अपि तथेति समम् ।

---

इति ॥ ननु न स्वपक्षस्थापनमात्रेण मेव वितंडाधिकारः । किंतु पक्षापरिग्रहेणैवेति न वितंडाधिकार इत्याशंक्याह ॥ अन्यथेति ॥ किंच तव वितंडैवेति नियमः कस्मात् । किं प्राश्निकानां त्वया दूष्यमित्येव नियोगनियमात् उतोपनिषदनुसारित्वाद्वेति विकल्प्याद्यं निराह ॥ नापीति ॥ द्वितीयं निराचष्टे ॥ उपनिषदामिति ॥ "तद्धैक आहुरसदेवेदमग्र आसीदिति कथमसतः सज्जायेत" इति परपक्षनिरासवत् "सदेव सोम्येदमग्र आसीत्" इति स्वपक्षस्थापनस्यापि दर्शनादिति भावः । परपक्षदूषणमात्रेण स्वपक्षसिद्धौ बाधकमाह ॥ परपक्षनिरासकेनेति । ब्रह्मातिरिक्तमिति ॥

प्रत्यक्षं तर्कविरोधादप्रमाणं चेच्छ्रुतिरपि तद्विरोधादुपचरितार्थेतिसमम् । त्वन्मतेऽपि स्वस्य स्वाभिन्नत्वादभेदनिरासः स्वव्याहत इति चेत् त्वन्मतेऽपि ब्रह्मणोऽनृताभिन्नत्वाद्भेदनिरासोऽपि मिथ्येति सुवचत्वात् ।

"नहि सत्यमसत्येभ्यो भिन्नं नेत्युक्तितोऽपिच ।
सत्यं न सत्यमित्युक्तावधिकास्ति विरुद्धता" ।

एवंच "शुष्कतर्कैर्भेदबाधे स्यादभेदोऽपि बाधितः ।
प्रमितत्वात्तत्र तर्कास्तुच्छाश्चेत्प्रकृते न किम् ॥"

न द्वितीयः, श्रुतेः साक्षिप्रत्यक्षाद्यबाधकत्वस्योक्तत्वात् । श्रुत्यादेः सम्यग्व्याख्यातत्वाच्च । प्रत्यक्षस्यापि भाविबाधकशंकाभंगे उक्तन्यायैर्भेदधीबाधकत्वासंभवाच्च ।

किंच कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेत् उताभेदं यद्वा यत्किंचित् । निरालंबनज्ञानयोगात् । नाद्यः साधकत्वात् । द्वितीये तदन्यस्तद्विरोधी तदभावो वा नञर्थो वाच्यः, पक्षत्रयेऽपि दुष्परिहरो भेदः । तदनन्यत्वे च तद्विरुद्धत्वतदभावत्वयोरयोगात् । भेदाभावादिग्राहिणापि प्रतियोगिविलक्षणतयैव स्वविषयस्य ग्राह्यत्वाच्च । औदासीन्येन प्रवृत्तस्य इदमितिज्ञानवदबाधकत्वात् । अत एव न तृतीयः । एतेन बाधकं भेदभ्रमाधिष्ठानतत्त्वगोचरमिति निरस्तम् । तस्यापि भेदमभेदाभावे भेदविलक्षणत्वेनाग्रहणे च तज्ज्ञानस्य भेदबाधकत्वायोगात् ।

किंच नायं भेद इति वा नास्त्यत्र भेद इति वा अन्यदेव भेदात्मना प्रत्यभादिति वा बाधकज्ञानेन भवितव्यं नेदं रजतमित्यादिवत् । तदेतत्सर्वथा भेदावगाहीति कथं तद्बाधकम् । एकमेवानेकात्मना प्रत्यभादितिज्ञानं बाधकमिति चेन्न । एकानेकयोर्वस्तुतो भेदाभावे वैलक्षण्याग्रहणे च तस्य बाधकत्वायोगात् । एवंच

---

तथाच ब्रह्मस्वरूपमेवैकत्वरूपमिति न पृथक्तत्स्वरूपतापेक्षेति भावः ॥ तर्का इति ॥ अभेदः स्वरूपं धर्मो वेत्यादितर्का इत्यर्थः । नचैवमभ्युपगमे विरोधतः साम्यादित्याह ॥ नहीति । प्रकृते न किमिति ॥ प्रकृतेऽपि तथा विशेषार्थः । श्रुत्यादिभिर्भेदस्य बाधितत्वमिति द्वितीयं निराकरोतीति ॥ न द्वितीय इति । श्रुत्यादेरिति ॥ [illegible]द्वितीयं नेह नानास्ति किंचन । एकधैवानुद्रष्टव्यम्, उदरमंतरं कुरुते इति श्रुत्यादेरित्यर्थः । तथा विशेषार्थः प्रकृतेऽपि ॥ उक्तन्यायैरिति ॥ [illegible]विषयविशेष[illegible] [illegible] । [illegible] । किंच बाधकधीबोध्यं न वाच्यमभेदश्च बाधकधीबोध्यः । तथा [illegible] भेदभिन्नतया औदासीन्येन वा बाधकत्वायोगादित्याद्युक्तन्यायैरित्यर्थः । [illegible] भेदस्य प्रतीति[illegible] ॥ भेदाभावादिग्राहिणेति ॥ पूर्वोक्त[illegible]

"भेदाद्भिन्नतया स्वार्थं बाधधीर्गाहते न वा ।
आद्ये भेदः स्थिरोऽन्त्ये तु न सा स्याद्भेदबाधिका ।।"

तस्मात् भिन्नविषयत्वात् नान्योन्याश्रयतादेरुत्थानम् । उत्थितस्य भवेदाभासत्वम् । एतेन यदुक्तं खंडने "निर्वचनवादिनीदं शोभते नास्मासु प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षांतर्भावबहिर्भावाभ्यां सदसत्त्वाभ्यां वा अन्येनापि धर्मेण वाऽनिर्वाच्य इत्यंगीकारात्" इति । तन्निरस्तम् । तर्कबाधमात्रेणानिर्वाच्यत्वे ऐक्यस्यापि तत्प्रसंगात् ।

किंच त्वयापि अनृतजडदुःखपरिच्छिन्नाद्यनात्मके ब्रह्मणि अनृतादिव्यावृत्तिर्ब्रह्मज्ञानाबाध्येति वाच्यम्, शून्याद्यनात्मके घटादौ शून्यादितः स्वज्ञानाबाध्यभेददर्शनात् । अन्यथानृतादिव्यावृत्तिबोधनेन तद्भ्रांतिनिवारकस्य सत्यज्ञानादिवाक्यस्य भ्रांत्यंतरहेतुत्वं स्यात् । ब्रह्मण्यनृतत्वादेरधिष्ठानज्ञानाबाध्यात्यंताभावप्रतियोगित्वरूपं मिथ्यात्वं च न स्यात् । उक्तं चैतद्देहात्मैक्याध्यासभंगे ।

नच प्रतियोगिनोऽनृतत्वात्ततो व्यावृत्तिरप्यनृता । शुक्तौ रूप्याभेदवत् बाधगम्यस्य तद्भेदस्यापि प्रातिभासिकत्वापत्त्या भ्रांतिबाधव्यवस्थायोगात् । विस्तृतं चैतन्मिथ्यात्वभंगे । एवमात्मनि देहात् आत्मज्ञानाबाध्यभेदाभावे देहात्मैक्यस्य मिथ्यात्वं न स्यादिति त्वदीया तदैक्याध्यासोक्तिरयुक्ता स्यात् । तथा नित्यस्यानित्यात्तात्त्विकभेदाभावे साधनचतुष्टयांतर्गतो नित्यानित्यवस्तुविवेको भ्रमः स्यादिति तेनानित्यहानेन नित्ये प्रवृत्तिरयुक्ता स्यात् । एवं प्रपंचे मद्वैलक्षण्यादिरूपमनिर्वाच्यत्वमधिष्ठानाबाध्यमिति वाच्यम् । अन्यथाऽधिष्ठानज्ञानाबाध्यमस्वापातात् । जगन्मिथ्यात्वप्रमाणानामतत्त्वावेदकत्वापाताच्च । एवमभेदस्य भेदात्तात्त्विकभेदाभावे तयोरभेदस्तात्त्विकःस्यादिति भेददर्पैरभेदबाधनम्, अभेदप्रमाणैर्भेदसाधनं

---

उपसंहारव्याजेन परिहरति ।। तस्मादिति ।। ब्रह्म स्वज्ञानाबाध्यजडादिव्यावृत्तिमत् तदनात्मकत्वात् । यत् यदनात्मकं तत् तज्ज्ञानाबाध्यतद्व्यावृत्तिमत् । यथा शून्याद्यनात्मको घट इत्यनुमानादपि शून्यादिव्यावृत्तेरबाध्यत्वसिद्धिरित्याह ।। किंचेति ।। अप्रयोजकत्वमाशंक्य निषेधति ।। अन्यथेति ।। ननु प्रतिपन्नोपाध्यात्यंताभावप्रतियोगित्वं मिथ्यात्वम्, तत्त्वभावस्य स्वज्ञानाबाध्यत्वमर्पीति नोक्तदोष इत्याशंक्याह ।। उक्तं चेति ।। तद्वाध्यात्यंताभावप्रतियोगित्वस्य सत्वेऽपि संभवात् अभेदस्य भेदात्यंताभाव इति कथमभेदमिथ्यात्वे भेदः सत्यो न स्यादित्युक्तं चैतदित्यर्थः ।। प्रवृत्तिर्न स्यादिति ।। अभ्रांतप्रवृत्तिर्न स्यादित्यर्थः ।। अभेददर्पैरिति ।। तथाच दूषणभूषणव्यवस्था न

च स्यात् । न च तात्त्विकभेदाभावेऽपि तात्त्विकाभेदाभावमात्रेण व्यवस्थेति वाच्यम् । अभेदाभावे भेदध्रौव्यात् । न च व्यावहारिकभेदाद्व्यवस्था । कल्पितेनाकल्पितकार्यप्रतिबंधादित्युक्तत्वात् । एवंच

"ब्रह्मणोऽनृतता भेदः सत्यश्चेद्भेदखंडनम् ।
व्याहतं स्यादसत्यश्चेद्ब्रह्मणोऽनृतता भवेत् ॥ १ ॥

"भेदाभेदभिदा चेत्स्यात्कथं भेदो निवार्यते ।
भेदाभेदभिदा नो चेत्कथं भेदो निवार्यते ॥ २ ॥"

किंच भेदस्य व्यावहारिकसत्यत्वरक्षार्थमेव त्वयाप्यन्योन्याश्रयादिकमुद्धार्यम् । नह्यन्योन्याश्रयादिदुष्टस्य व्यावहारिकतापि दृष्टचरी । नहि मृद्वास्तवीत्येतावता स्वजन्यघटजन्या । अन्यथाऽज्ञब्रह्मवादिभिरेवान्योन्यमुपादानत्वाधिष्ठानत्वे स्यातामित्यज्ञानब्रह्मणोस्ते न कल्प्ये स्याताम् । यदि चान्योन्याश्रयादिदुष्टस्यापि अविद्यासामर्थ्यात् व्यावहारिकता तर्हीश्वरसामर्थ्यात् तादृशस्यापि पारमार्थिकतैवास्तु ।

अपिच कथमयमापादनक्रमः यदि भेददर्शनं स्यात् तर्ह्यन्योन्याश्रयादिकं स्यात्, न च तद्युक्तं तस्मान्नास्ति भेददर्शनमिति वा यदि भेददर्शनं वास्तवं स्यात्तर्हि अन्योन्याश्रयादिकं स्यादिति वा यदि भेददर्शनं प्रमा स्यात्तदाऽन्योन्याश्रयादिकं स्यादिति वा यदि भेददर्शनं धर्मिप्रतियोग्यादिसापेक्षं स्यात्तदान्योन्याश्रयादिकं स्यादिति वा । नाद्यः यदि भेददर्शनं न स्यात्तदा परः परमतमिव स्वमतमपि निराकुर्यात् सकलव्यवहारविधुरश्च स्यादित्यादिप्रतिकूलतर्कपराहतेर्भेदादर्शने तद्विरामायोगेन विपर्ययापर्यवसानाच्च । न द्वितीयः वास्तवेऽन्योन्याश्रयादेरभावेन व्याप्तिवैकल्यात् । दर्शनावास्तवत्वेऽप्यभेदवद्भेदस्यापि सत्त्वोपपत्तेश्च । न तृतीयः, त्वया स्तंभात्कुंभस्य भेदप्रतीतौ कुंभात्स्तंभस्य भेदधीरितिप्रतीतावेवान्योन्याश्रयत्वस्वीकारेण चोरापराधान्मांडव्यस्य शूलप्राप्तिवत् प्रतीतिगतेनान्योन्याश्रयेण

---

स्यादिति भावः ॥ उक्तत्वादिति ॥ कल्पितेन [illegible]स्यापि [illegible]दित्युक्तत्वादित्यर्थः ॥ व्याप्तिवैकल्यमिति ॥ [illegible] तथान्योन्याश्रय इत्या[illegible]र्व्याप्त्यभावादित्यर्थः ॥ दर्शनावास्तवत्वेऽपीति ॥ तथाच [illegible] इति

प्रमात्वनिषेधायोगात्। नच प्रतीतेर्विचारासहत्वेन भ्रमत्वम्। विचारासहप्रपंचांतर्गतचरमवृत्तिवत् प्रमात्वोपपत्तेः। जीवस्य ब्रह्मैक्यप्रतीतौ ब्रह्मणो जीवैक्यधीरिति ऐक्येऽप्यन्योन्याश्रयस्य वक्ष्यमाणत्वाच्च। रूप्यादिभ्रमस्यापि त्वयाऽख्यातिवाद्युक्तहेत्वभावादिबाधकानामुद्धृतत्वेन विचारासहत्वाच्च। चतुर्थेऽपि सापेक्षतामात्रं निवर्ततां भेददर्शनस्य किमायातम्। प्रकारांतराभावात्स्वयमपि निवर्तत इतिचेन्न। प्रतीतेः परेणाप्यपेक्षणीयत्वेन निवर्तयितुमशक्यत्वात्। प्रमात्वनिवर्तने च सामर्थ्याभावस्योक्तत्वात्। अन्यथा स्वाभिमताद्वैतमपि न सिद्ध्येदित्युक्तम्। किंच त्वत्पक्षे घटस्य पटाद्भेद इव घटेनाभेदोऽपि व्यावहारिकः, उक्तरीत्या ब्रह्मजीवैक्यमिव ब्रह्मण्यनृतव्यावृत्तिरपि तात्विकीति कथमभेदमुपेक्ष्य भेदे द्वेषः। एवंच

"ब्रह्मण्यनृतभेदस्य सत्यत्वे कलशे स्वतः।
अभेदस्य च मिथ्यात्वे भेदे द्वेषस्तु किं कृतः॥"

॥ इति सामान्यतो भेदखंडनोद्धारः॥ १४॥

---

भावः। विचारसहत्वस्य भ्रमत्वप्रयोजकत्वे अन्वयव्यभिचारमुक्त्वा व्यतिरेकव्यभिचारमप्याह ॥ रूप्यादिभ्रमस्यापीति॥

॥ इति सामान्यतो भेदखंडनोद्धारः॥ १४॥

## ॥ अथ विशिष्य भेदखंडनोद्धारः ॥ १५ ॥

संभवति च भेदस्य स्वरूपत्वेन निर्वाहः । तत्र यदुक्तं निरपेक्षघटस्वरूपत्वे तद्वदेव भेदस्यापि निरपेक्षत्वं स्यादिति तन्न । व्याप्तेः स्वपरासंमतेः । त्वन्मते सापेक्षाया अविद्यानिवृत्तेर्जीवब्रह्मैक्यस्य मतद्वयेऽपि स्थितौ व्यक्तिसापेक्षस्य जातिमात्रस्य प्रतीतौ सापेक्षस्य नीलतरत्वादिजातिविशेषस्य अर्थप्रकाशात्मकज्ञानस्य ब्रह्मणि ब्रह्माभेदस्यास्ति ब्रह्मेत्यादौ कालसापेक्षस्यास्तित्वस्य च निरपेक्षब्रह्मव्यक्त्यादिस्वरूपत्वात् । व्याप्त्यभावे चानुमानस्य तर्कस्य चाभासत्वात् । ऐक्यस्यास्वरूपत्वे च सत्त्वेऽद्वैतहानिः मिथ्यात्वे च तत्परस्य "तत्वमसि" इत्यादेरतत्वावेदकत्वं भेदस्य सत्यता च स्यात् । यत्र यदध्यस्तं तत्र तद्विरोधितज्ज्ञानाबाध्यं यथा शुक्तावरूप्यत्वमिति वा, यत्र यदैक्यमध्यस्तं तत्र तद्भेदस्तज्ज्ञानाबाध्यो यथा दूरस्थवनस्पत्योर्भेद इति वा, यत्र यदध्यस्तं तत्र तद्विरोधि तात्विकं यथा ब्रह्मण्यनृतत्वस्याध्यस्तत्वे सत्यत्वं तात्विकमिति वा व्याप्तेः । ऐक्यस्य च निरपेक्षत्वे तत्त्वंपदार्थपराणां "सत्यं ज्ञानं विज्ञानघनः" इत्यादीनां ऐक्यपरमहावाक्यैकवाक्यत्वाभावेन वैयर्थ्यं स्यात् । नच प्रतियोगिनो भेदस्य सापेक्षत्वादैक्यं सापेक्षमिति वाच्यम् । घटः पटो नेति नञर्थस्य भेदस्यैव तादात्म्यनिषेधत्वेन वैपरीत्यस्यैवोचितत्वात् । ऐक्ये भेदसापेक्षत्वस्य दुर्वारत्वाच्च ।

अथ तत्र प्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वे इति तयोरेव भेदः, नतु तद्विषयस्य । एकस्यामेव तत्तायां संस्कारसापेक्षनिरपेक्षस्मृत्यनुभवविषयत्वस्य एकस्मिन्नेवाग्न्यादौ व्याप्त्यादिसापेक्षनिरपेक्षानुमितिप्रत्यक्षविषयत्वादेर्दर्शनादिति चेत् समं प्रकृतेऽपि । एवंच

"अज्ञानहानिवद्ब्रह्मरूपधीवदभेदवत् ।
स्वरूपत्वेऽपि भेदस्य सापेक्षत्वं हि युज्यते ॥

---

॥ अथ विशिष्य भेदखंडनोद्धारः ॥ १५ ॥

॥ व्याप्तेरिति ॥ यत्सापेक्षं तन्न निरपेक्षस्व(रूपाभिन्न)मिति व्याप्तेरित्यर्थः । नन्वैक्यस्य स्वरूपाभिन्नत्वेन हेतुत्वाभावात् न व्यभिचार इत्याशंक्याह ॥ ऐक्यस्येति ॥ ऐक्यस्यास्वरूपस्यापि सत्यत्वात् व्यभिचार इत्याशंक्याह ॥ ऐक्यस्येति ॥ इत्यादीनामित्यादिपदात् "योऽयं विज्ञानमयः" इत्यादिपरिग्रहः ॥ एकवाक्यत्वाभावेनेति ॥ वाक्यार्थाधीनत्वादेकवाक्यत्वस्येति भावः । ऐक्यस्य भेदनिषेधरूपत्वमभ्युपेत्याह ॥ ऐक्ये इति ॥ सम्यक्स्यैव यत्सापेक्षं तन्निरपेक्षाभिन्नमिति व्याप्तिः नचैवं व्यभिचारः सापेक्षत्वनिरपेक्षत्वयोः प्रतीतिधर्मत्वादिति शंकते ॥ अथेति ॥ संस्कारसापेक्ष-(स्मृ)ति (वा) ॥ यद्यपि तत्ताया अपि संस्कारसापेक्ष(प्र)त्यभिज्ञारूपानुभवविषयत्वमस्ति ।

अथ तत्र स्वरूपेण निरपेक्षस्यापि ब्रह्मणोऽभेदत्वेन सापेक्षत्वम्, तर्हि स्वरूपेण निरपेक्षस्यापि घटस्य भेदत्वेन सापेक्षत्वमस्तु प्रमेयत्वानिरपेक्षस्यापि अभावसादृश्यादेरभावत्वादिना सापेक्षत्वस्य स्वरूपेण निरपेक्षस्यापि दंडादेर्ब्रह्मणश्च कारणत्वेन ज्ञानत्वेन च सापेक्षत्वस्य दर्शनात्। सप्रतियोगिकनिष्प्रतियोगिकव्यवस्था तु यदसाधारण्येन स्ववाचकपदप्रवृत्तिनिमित्तावच्छेदेन प्रतीतौ प्रतियोगिप्रतीतिसापेक्षं तत्सप्रतियोगिकम्, अन्यत्तु निष्प्रतियोगिकमिति। यदि च तत्रैकस्यैवार्थस्य लघुत्वकठिनत्वशब्दोल्लेखेन निरपेक्षस्यापि अगुरुत्वाद्रवत्वशब्दोल्लेखेन सापेक्षत्ववत् ब्रह्मशब्दोल्लेखेन निरपेक्षस्याप्यभेदशब्दोल्लेखेन सापेक्षत्वम्, तर्हीहापि घटशब्दोल्लेखेन निरपेक्षस्यापि भेदशब्दोल्लेखेन सापेक्षत्वमस्तु। एकस्यैव गमनस्य गच्छति चलतिशब्दोल्लेखाभ्यां प्रयत्नस्य च करोति यततिशब्दोल्लेखाभ्यां कर्मसापेक्षत्वनिरपेक्षत्वयोः शब्दस्वभावप्रयुक्तयोर्दर्शनात्। यदि च तत्राभेदत्वादिकमेव सापेक्षं नत्वभेदरूपो विशेष्यः, तर्ह्यत्राप्यन्योन्याभावत्वरूपं भेदत्वमेव सापेक्षं नतु भेदरूपो विशेष्य इति समम्। नच तर्ह्यन्योन्याभाव एव भेदोऽस्त्विति वाच्यम्। अन्योन्याभावस्यैव स्वरूपत्वोक्तेः। उक्तं हि

"भावाभावस्वरूपत्वात्तान्योन्याभावता पृथक्" इति।

उक्तंच "न स्वरूपमात्रं भेदः किंत्वन्योन्याभावः, स च वस्तुना सविशेषाभिन्न" इति। कथमभावस्य भावैक्यमितिचेत्। अविद्यानिवृत्त्यद्वैतयोरपि कथं ब्रह्मैक्यम्। भावः स्वाभावेन विरुद्धो नत्वन्याभावेनेति चेत् समं प्रकृतेऽपि। अभावाभावस्य भावत्वदर्शनात्। यदि चाविद्यानिवृत्तेर्ब्रह्मत्वं नाम प्राभाकरमत इवाधिकरणस्यैव निवृत्तिव्यवहारालंबनता। तर्हि इहापि घटस्यैवान्योन्याभावव्यवहारालंबनतेत्यस्तु। यदि चाद्वैतं न द्वैताभावः किंतु तद्विरोधिभावांतरं द्वैताभावोपलक्षितं ब्रह्मैव वा, तर्हि भेदोऽपि न तादात्म्याभावः किंतु तद्विरोधिभावांतरं तदभावोपलक्षितं स्वरूपमेव वाऽस्तु।

---

तथापि संस्कारसापेक्षत्वं संस्कारजन्यत्वं विवक्षितम्। एवंच प्रत्यभिज्ञायां तत्तास्मृतिरेव हेतुः न संस्कार इति वा संस्कारस्य तद्धेतुत्वेऽपि तमिमं साक्षात्करोमीत्यनुव्यवसायविषयत्वेन वा तत्तेदंतयोरभेदात् इदमनुभवविषयत्वेन वा तत्ताया अपि संस्कारनिरपेक्षानुभवविषयत्वमस्तीत्यत्र तात्पर्यम्। ननु पदार्थमात्रस्य स्वेतरभेदरूपत्वेन ज्ञाने प्रतियोगिज्ञानसापेक्षत्वात् सप्रतियोगिकत्वनिष्प्रतियोगिकत्वव्यवस्था न स्यादित्याशंक्याह ॥ सप्रतियोगिकेति ॥ असाधारण्येनेत्यस्य विवरणं स्वप्रतिपादकपदप्रवृत्तिनिमित्तावच्छेदेनेति ॥ स्वाभावेन विरुद्ध इति ॥ स्वाभावेन सहैक्यविरोधीत्यर्थः। ननु प्रतियोगिनिरूप्यो भेदो न स्वरूपरूपः [स्वरूपः (पा)] निरूपकस्य

केचित्तु तत्तादात्म्यायोग्यत्वं वा तदैक्यधीव्यवहारविरोधित्वं वा तद्भेदत्वं यत्र यद्दर्शनं यत्तादात्म्याध्यासविरोधि तत्र तत्त्वं वा तद्भेदत्वमित्याहुः ।

इतरे तु स्ववृत्तियत्किंचिद्धर्मानाधारनिष्ठयत्किंचिद्धर्मानाधारत्वरूपं वा स्वावृत्तिधर्माधारानिष्ठधर्माधारत्वरूपं वा स्वरूपत्वं भेदत्वम् । अनाधारत्वं चाधारत्वराहित्यं नत्वाधारान्यत्वमिति नान्योन्याश्रय इत्याहुः ।

एतेन प्रतियोगिनिरूप्यस्य भेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यादिति निरस्तम् । व्याप्तेः स्वपरासंमतेः, दुःखनिवृत्तेः पुमर्थत्वेऽपि दोषाभावस्य साधकत्वप्रयोजकत्वेऽपि अनृतव्यावृत्त्यज्ञाननिवृत्त्योः अज्ञानादिप्रकाशरूपज्ञानस्य च ब्रह्मस्वरूपत्वेऽपि अज्ञाननिवृत्तेर्मोक्षत्वेऽपि दुःखे दोषेऽनृतेऽज्ञाने च पुमर्थत्वस्य साधकत्वप्रयोजकत्वस्य ब्रह्मस्वरूपत्वस्य मोक्षत्वस्य चादर्शनात् । तत्राज्ञानादिकं कार्यानन्वयित्वेनोपलक्षणं सत् निरूपकमात्रम्, न तु कार्यान्वयित्वेन विशेषणमिति चेत् समं प्रकृतेऽपि । लोकेऽपि निरूपके "लम्बकर्णमानय" इत्यादौ कार्यान्वयस्येव "चित्रगुमानय" "काशीवासी समागत" इत्यादौ तदनन्वयस्यापि दर्शनात् । नच व्याप्तिग्रहणेऽनुसृता लौकिकी रीतिर्व्यभिचारे नानुसरणीया । नच कर्णस्य कार्यान्वयदर्शनेन गवामपि तदापादनम् । वैपरीत्यापत्तेः । अज्ञानादेर्ब्रह्मस्वरूपत्वापत्तेश्च ।

ननु प्रतियोगिन उपलक्षणत्वे कदाचित्काकाऽज्ञानेऽपि गृहज्ञानवत् प्रतियोग्यज्ञानेऽपि भेदज्ञानं स्यादिति चेन्न तर्ह्यज्ञानाद्यज्ञानेऽपि कदाचित्तन्निवृत्त्यादिज्ञानं स्यात् । अथोपलक्षणस्यापि प्रतियोग्यादेर्ज्ञानमुपलक्ष्याभावसाक्ष्यादिज्ञानकारणं दृष्टमित्यदोषमिति चेत् समं प्रकृतेऽपि । तस्मात्प्रतियोगिन उपलक्षणत्वान्न धर्मिण्यन्तर्भावः । एवं च

"पुमर्थे दुःखमिव ब्रह्मण्यज्ञानवत्तथा ।
मोक्षे च मोहवत्कोऽन्तर्गतं कुम्भादिकं पटे ॥
तटस्थत्वेऽपि कुम्भादेरप्रतीतौ न भेदधीः ।
अज्ञानादेरप्रतीतौ तद्वान्त्याद्यप्रतीतिवत् ॥"

केचित्तु प्रतियोगिनो विशेषणत्वेऽपि न दोषः । शब्दोऽनित्य इत्यादौ शब्दत्वादेरिव कार्यानन्वयेऽपि विशेषणत्वोपपत्तेरित्याहुः ।

---

प्रतियोगिनोऽपि [illegible]संगतम् । निरूपकान्वयितो निरूपकान्वयित्वनियमात् । लंबकर्ण-[illegible] तथा दर्शनात् इत्याशंक्याह ॥ एतेनेति ॥ दृष्टांतं विघटयति ॥ लोक इति

नतु तथापि विदारणात्मनो भेदस्य घटस्वरूपत्वे घटस्यापि विदारणम्, एवं तदवयवानामपीति परमाणुरपि नैक इति शून्यतापत्तिरितिचेन्न । अविदारणात्मकस्याभेदस्य ब्रह्मस्वरूपत्वे पारमार्थिकस्य ब्रह्मणो व्यावहारिकेण घटादिना प्रातिभासिकेन रूप्यादिना शून्येन चाप्यविदारणेन तदैक्यं स्यादिति साम्यात् । यदि च तत्र जीवाभेद एव ब्रह्मस्वरूपं नतु घटाद्यभेदः तर्हत्रापि पटादिभ्यो भेद एव घटस्वरूपं नतु स्वस्मादिति समम् । एवंच

"विदारकत्वेऽपि पटाद्घटस्य स्याद्विदारणम् ।
नतु स्वतो यथा ब्रैक्यं स्वेनैव न परेण तु ॥"

किंच भेदस्य स्वस्माद्विदारकत्वेऽपि (अवयवानां)कार्याणां विभागेन सूक्ष्मत्वमेव स्यात् नतु शून्यत्वम्, नहि शून्यानां संयोगात्कस्यचिज्जन्म । येनावयवानां विभागेन शून्यपरिशेषः स्यात् । अपिच विदारकमपि लवित्रादि स्वयं यत्संबंधि तदेव विदारयति, नतु स्वात्मानम् । ततो धर्मभेदवादे कथंचिदेवं वक्तव्यम् नतु स्वरूपभेदवादे । वस्तुतस्तु भेदो न विदारकः किंतु विदारणम्, भावसाधनत्वाद्भेदशब्दस्य । तथाच घटोऽपि विदारणं स्यात् नतु घटस्य । नहि विदारणस्य विदारणम्, स्ववृत्तिविरोधात् । एवंच

"विदारणस्य भेदस्य घटत्वे हि घटोऽपि च ।
विदारणं स्यान्न घटे स्वस्य स्वस्मिन्नवृत्तितः ॥"

अंगीकृत्य चेदमुदितम् । वस्तुतस्तु न विभागरूपविदारणात्मा भेदः किंत्वन्योन्याभावः

"क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते ।
प्रयोगतोऽनुगंतव्या अनेकार्था हि धातवः ॥"

इति वचनेन भिदेर्विभागोऽन्यत्वं चार्थो यतः । अन्यथा संयुक्तयोरोष्ठयोर्भिन्नाविति व्यवहारो न स्यात् । उक्तं च

"भेदस्य च स्वरूपत्वे ये वदंति च शून्यताम् ।
अज्ञुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते ॥ १ ॥

प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात्कथंचन ।
विभागेनाल्पतैव स्यात्कुत एव च शून्यता ॥ २ ॥

---

विशेषणत्वोपपत्तिरिति ॥ कार्यानन्वयित्वेऽपि यदन्वितमतया ज्ञात एव तात्पर्यविषयेतरसामर्थ्यादयुक्तविशेषणस्याविकलत्वादिति भावः ॥ विदारणात्मन इति ॥ भिदिर् विदारण इति पाणिनीयस्मृत्या

न शून्यानां हि संयोगाद्भावो वस्तुन इष्यते ।
विदारणार्थो धातुश्च विभागगुणवाचकः ॥ ३ ॥
अविदारत्वेऽपि शास्त्रस्य भिन्नावोष्ठौ तु तस्य हि" इति ।

एतेन अनेकत्वैकार्थसमवायिनो भेदस्य घटस्वरूपत्वे घटस्याप्यनेकत्वं स्यात् । तथा तदवयवानामपीति तद्विरुद्धमेकत्वं क्वापि न स्यात् । एकत्वाभावे चानेकत्वमपि न भवेत् । तथाच संख्यारहितस्य द्रव्यस्य शून्यतापत्तिरिति निरस्तम् । एकत्वैकार्थसमवायिनो घटेन घटाभेदस्य घटस्वरूपत्वे घटस्य पटेन सह धर्मिज्ञानाबाध्यमनेकत्वं ब्रह्मणा च ब्रह्माभेदस्य ब्रह्मस्वरूपत्वे मायाद्वैतमते ब्रह्मणः प्रभावेन सहाप्यनेकत्वं न स्यादिति साम्यात् । अथ स्वेनैकत्वेऽप्यन्येन सहानेकत्वमविरुद्धम्, तर्ह्यन्येन सहानेकत्वेऽपि स्वेनैकत्वमविरुद्धमिति समम् । किंच भेदस्य सादृश्यादिवदन्यनिरूप्यस्यैकमात्रवृत्तित्वादनेकत्वैकार्थसमवायित्वमसिद्धम् ।

अपिच भेदस्यानेकत्वैकार्थसमवायित्वेऽपि यत्र भेदात्मको घटस्तस्यानेकत्वं स्यात् नतु घटस्य, कथं चानेकत्ववक्रेन एकत्वाभावमुक्त्वा पुनस्तेनैवानेकत्वाभावं वदतः न पूर्वोत्तरविरोधः । न ह्यत्र काप्यसद्व्याप्तिरस्तीत्युक्तम् । येन पररीत्यापादनमिति निस्तारः स्यात् । एतेन भेदस्य धर्मिस्वरूपत्वे संशयादिकं न स्यात् । धर्मिज्ञानस्य संशयादिहेतुत्वात्तज्ज्ञानेनैव च तदभिन्नस्य भेदस्य ग्रहणाद्भेदज्ञानस्य च संशयादिविरोधित्वादिति निरस्तम् । प्रत्यक्चैतन्ये स्वयंभानेऽपि तदभिन्नस्यैक्यस्यानवच्छिन्नानंदस्य चाप्रकाशवत् धर्मिणः प्रकाशेऽपि तदभिन्नस्य भेदस्याप्रकाशोपपत्तेः । ऐक्यस्य च प्रकाशे च तत्र विप्रतिपत्तिर्न स्यात्, तदुपदेशानर्थक्यं च स्यात् । नच स्वरूपज्ञानेनैक्यस्य स्वतो भानेऽप्यज्ञानविरोधिन्या वृत्तेरभावात् विप्रतिपत्त्यादीति वाच्यम् । प्रत्यगर्थवदेव वृत्त्यभावेऽपि स्वतोभानेनैक्येऽपि विप्रतिपत्त्याद्ययोगात् । यदि चैक्यस्याविद्यावरणादप्रकाशः तर्हि भेदस्यापि सादृश्यादिदोषादप्रकाश इति समम् । एवंच

"स्वरूपत्वेऽपि भेदस्य युज्यते संशयादिकम् ।
स्वप्रभप्रत्यगात्मत्वेऽप्यभेदे संशयादिवत् ॥"

---

भेदान्तरस्य विदारत्वव्याप्तत्वादिति भावः ॥ भाव इति ॥ उत्पत्तिरित्यर्थः । ननु भेदाश्रयस्य घटस्यानेकत्वं वक्तव्यम् । एकत्वे भेदानुपपत्तेः । एवंच सर्वस्याप्यनेकत्वेन एकत्वस्यैवाप्रसिद्धेरनेकत्वमपि न संभवतीत्याशंक्याह ॥ एतेनेति ॥ अनेकत्वमपि न स्यादिति ॥ एकत्वैकार्थसमवायित्वाभावादिति भावः ॥ अनेकत्वैकार्थसमवायित्वमिति ॥ अनेकत्वेन सह एकार्थ-

किंच भेदः स्वरूपेण प्रकाशत एव । उक्तरूपेण भेदत्वेन तु न प्रकाशते । भेदत्वेन भेदज्ञानमेव च संशयादिविरोधि । किंच संशयादिस्थलेऽपि भेदस्य भेदत्वेनाप्रतीतिरप्यसिद्धा, प्रायः सर्वतो भिन्नमेव हि वस्तु तत्र प्रतीयते । अन्यथा सर्वकोटिः संशयः स्यात् । किंतु तस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनेके धर्माः संति । तत्र सादृश्यादिवशाद्घटप्रतियोगिकत्वं न भाति तत्र संशयः । नहि निरूपकभेदेन निरूप्यभेदः । एकघटनिरूप्ययोः प्रागभावप्रध्वंसयोर्भेददर्शनात् । अनेकविषयनिरूप्यस्यापि ईश्वरज्ञानादेरनेकद्वैतनिरूप्यस्याद्वैतस्य चैक्यदर्शनात् ।

केचित्तु स्वरूपभेदवादे भेदज्ञानं न भ्रमविरोधि । किंत्वधिष्ठाने आरोप्यविरुद्धधर्मादिज्ञानमित्याहुः ।

केचित्तु अदोषमूलताद्रूप्येणाप्रतीतौ प्रतीतिः स्वरूपभेदलक्षणम् । शुक्तेः शुक्त्यात्मत्वेनाप्रतीतिश्च दोषमूलेति नातिव्याप्तिः । एवं च भ्रमस्थले ताद्रूप्येणाप्रतीत्यभावादभेदभ्रमोपपत्तिरित्याहुः । एवंच

"सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसंगतः ।
एकाभावादसंदेहान्न रूपं वस्तुनो भिदा ॥" इति श्लोकः
"सापेक्षत्वात्सावधेश्च तत्त्वे द्वैतप्रसंगतः ।
नैकाभावादसंदेहान्न रूपं वस्तुनोऽभिदा" इति पठनीयः ।

एतेन भेदस्य घटस्वरूपत्वे घटभेदयोरेकतरपरिशेषः स्यादिति निरस्तम् । ऐक्यस्यानंदस्य ज्ञानस्य च ब्रह्मस्वरूपत्वेऽप्येकतरपरिशेषः स्यादिति युक्तिसाम्यात् । तत्र वस्तुभेदाभावादिष्टापत्तिरितिचेत्समं प्रकृतेऽपि । तथाहि । एकतरपरिशेषः स्यादिति कोऽर्थः किं

---

वृत्तित्वमित्यर्थः ॥ उक्तरूपेणेति ॥ तत्तादात्म्यायोग्यत्वमितियावदुक्तरूपेणेत्यर्थः । नन्वेकस्य घटस्य कथमनेकनिरूप्यभेदात्मकत्वम् । निरूपकभेदे निरूप्यभेदावश्यंभावादित्याशंक्याह ॥ नहीति । केचित्त्विति ॥ भेदेदमनुमितिबीजम् । अन्वयव्यतिरेकाभ्यां भेदज्ञानस्यापि संशयादिविरोधित्वादुक्तदोषतादवस्थ्यमेवेति ॥ अदोषमूलेति ॥ यद्रूपेण यस्य स्वरूपधर्म भेदत्वमभिमतम् [भिन्नमिति(पा)] तद्रूपतया अदोषमूलप्रतीतिविषयत्वे सति प्रतीयमानत्वमित्यर्थः । अप्रतीयमानता(त्व)दशायां स्वस्य स्वाभेदत्वं मा भूदिति प्रतीयमानत्वमित्युक्तम् । प्रतीयमानत्वदशायामुक्तदोषवारणाय सत्यन्तम् । भ्रमविषयशुक्त्यादावतिव्याप्तिवारणायादोषमूलेति । पततैवाह ॥ शुक्तेरिति । तत्त्व इति ॥ स्वरूपमात्रत्वे भेदाभावप्रसंग इत्यर्थः ॥ एकाभावादिति ॥

वस्तुभेदो न स्यात् किंत्वेकमेव स्यादिति किंवा घट इति वा भेद इति वा व्यवहारः स्यात् । नतूभयथेति । यद्वा एतयोरेकस्यैवार्थक्रिया स्यात् नोभयार्थक्रियेति । अथवा द्विवचनप्रयोगो न स्यादिति । नाद्यः । इष्टापत्तेः । न द्वितीयः । प्रवृत्तिनिमित्तभेदेन तदुपपत्तेः । न तृतीयः । एकत्रैव दीपे शुक्लभास्वररूपोष्णस्पर्शावच्छेदेन प्रकाशदाहरूपार्थक्रियावदेकत्रैव घटत्वभेदत्वावच्छेदेन तदुपपत्तेः । न चतुर्थः । अर्थप्रकाशात्मकत्वनिरुपाधिकेष्टत्वरूपयोर्ज्ञानत्वानंदत्वरूपविशेषणयोरनेकत्वेन विज्ञानानंदाविति वदिहापि घटत्वभेदत्वयोरनेकत्वेन तदुपपत्तेः । एतेन भेदस्य स्वरूपत्वे घटभेदशब्दयोः पर्यायत्वं स्यादिति निरस्तम् । ऐक्यब्रह्मशब्दयोः पर्यायत्वं स्यादिति साम्यात् । यदि तत्रैकार्थपर्यवसानेऽपि शुक्लः पट इत्यादाविव प्रवृत्तिनिमित्तानेकत्वादपर्यायत्वम्, तर्हि प्रकृतेऽपि समम् । एतेन भेदस्य स्वरूपत्वे अस्य भेदः इदं भिन्नमिति च संबंधित्वेन धीर्न स्यात् । प्रत्युत घटो भेद इति धीः स्यादिति निरस्तम् । जीवब्रह्मणोरैक्यम्, आनंदं ब्रह्मण इत्यादिवदुपपत्तेः । न ह्येकं ब्रह्मेतिवदैक्यं ब्रह्मेत्यस्ति । जीवब्रह्मणोरैक्यमिति व्यपदेशमात्रमितिचेत्, मात्रशब्देन किमर्थो निषिध्यते । व्यवहारस्याबाधितत्वं वा व्यवहारनिमित्तं वा । आद्येऽपि किं ब्रह्मस्वरूपं निषिध्यते ऐक्यं वा तत्संबंधो वा । नाद्यः । निराश्रयस्यैक्यस्यानिर्वाहात् । निर्वाहे वा ब्रह्माद्वैतं शून्याद्वैते पर्यवस्येत् । न द्वितीयः । भेदोन्मज्जनापातात् । न ह्युभयोदासीनतत्वसिद्धिः उभयात्मकत्ववत् । तस्यापि व्याहतत्वात् । तृतीयेऽप्यैक्यस्यान्यसंबंधित्वं वा मेरुमंदरादिवत्स्वातंत्र्यं वा स्यादिति प्रत्यग्ब्रह्मैक्यासिद्धिः । ऐक्यमात्रस्य मन्मते सत्त्वेन सिद्धसाधनादिकं च स्यात् । न द्वितीयः । उक्तरीत्या अर्थाबाधेन व्यवहारबाधायोगात् । न तृतीयः । निमित्ताभावे कार्यासंभवात् । ब्रह्मभेदास्यनिमित्ताभावाद्व्यपदेशमात्रत्वोक्तिरितिचेत्प्रकृतेऽपि तथास्तु । एवं च

अपर्यायत्वैकतरापरिशेषविशेष्यताः ।
अभेदस्येव भेदस्य स्वरूपत्वेऽपि संगताः ॥

---

अभेदस्यैकार्थसमवायित्वे भेदस्यैवानुपपत्त्या कस्यापि वस्तुनः एकत्वासंभवादित्यर्थः । ब्रह्मैक्यस्येवाभेदमात्रस्याप्युभयवादिनां सिद्धसाधनता स्यादिति भावः ॥ उभयोदासीनेति ॥ भिन्नाभिन्नविलक्षणेत्यर्थः ॥ सिद्धसाधनं च स्यादिति ॥ ममापि तवैक्यस्य ममापि सिद्धत्वेन अभेदत्वस्याप्युभयोः सिद्धसाधनता स्यादिति भावः ॥ मृषेति ॥ संबंधित्वेन यो व्यवहारस्तस्य

तत्र गत्यंतराभावादैक्यस्य स्वरूपत्वं सिद्धमित्यपर्यायत्वादिकं कथंचिन्निर्वाह्यमितिचेत् इहापि धर्मपक्षस्य त्वयैव दूषितत्वेन पृथक्त्वान्योन्याभाववैलक्षण्यभेदवादेऽपि पृथक्त्वादावंततरस्वरूपभेदस्यांगीकरणीयत्वेन च गत्यंतराभावात्। तथा भेदस्य घटे पटात्मको नेत्यप्रतीतेः घटः पटात्मको नेत्येव च प्रतीतेः तत्र च पटतादात्म्यनिषेधरूपस्य भेदस्य मृद्घट इतिवत् घटसामानाधिकरण्येनाभेदस्यैव भानेन प्रत्यक्षात् तथा घटतद्भेदयोरेकस्यप्रतीतावितरस्य नियमेन प्रतीयमानत्वादिलिंगात्।

"सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशय"

इत्यागमाच भेदस्य स्वरूपत्वं सिद्धम्। नच पटाद्भेदस्य घटस्वरूपत्वे कुड्यस्याघटस्वरूपत्वात् (घटस्वरूपत्वाभावात्) तस्य पटाद्भेदो न स्यादिति युक्तम्। अभेदस्य ब्रह्मस्वरूपत्वे घटतुच्छयोरब्रह्मस्वरूपत्वात् तयोः स्वाभेदो न स्यादिति साम्यात्। यदि तु ब्रह्माभेदो ब्रह्मस्वरूपं घटाद्यभेदस्तु तत्स्वरूपं तर्हि पटप्रतियोगिको भेदो घटधर्मिक एव घटस्वरूपम्, कुड्यधर्मिकस्तु कुड्यस्वरूपमिति समम्। यद्यपि (घटकुड्यादिरूपाः) कुड्यकुल्यादिरूपाः पटाद्भेदाः स्वरूपेणाननुगताः। तथाप्यनेकेषु घटज्ञानेच्छादिषु घटविषयत्वस्येवेहापि पटप्रतियोगिकत्वस्य पटैक्यव्यवहारविरोधित्वादेर्वानुगमात्पटाद्भिन्नमिति व्यवहारानुगमः। एतेन भेदो यदीदमस्माद्भिन्नमिति वा अस्यामुष्माद्भेद इति वा धर्मिप्रतियोगिघटितत्वेन गृह्येत तदा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम्। अस्यामुष्मादितिविलक्षणधर्मिप्रतियोगिज्ञानं च भेदज्ञाने सतीत्यन्योन्याश्रयः। यदि घटपटौ भिन्नाविति घटपटविशेषणतया घटपटयोर्भेद इति तद्विशेष्यतया वा गृह्येत, तदापि घटपटप्रतीतौ तद्विशेषणत्वादिना भेदप्रतीतिःभेदप्रतीतौ च द्वित्वावच्छिन्नघटपटप्रतीतिरित्यन्योन्याश्रय एवेति निरस्तम्। भेदस्य स्वरूपत्वेन स्वरूपप्रतीतेरेव भेदधीत्वेन धीद्वयाभावात्। भासमानं हि वस्तु इदं न सर्वात्मकम्, किंतु स्वयमेवेति सामान्यतः सर्वतो व्यावृत्तमनुभूयते। अन्यथा इदं सर्वात्मकमेवेति विपर्ययादि स्यात्। नच सार्वज्ञ्यापत्तिदोषः, सामान्यतः सर्वज्ञानस्य प्राणभृन्मात्रवृत्तित्वात्। अन्यथा सर्वोपसंहारवती व्याप्तिर्न सिद्ध्येदिति सर्वानुमानतर्कोच्छेदः स्यात्। सर्वशब्दप्रयोगादिकं च न स्यात्, "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यार्थधीश्च न स्यात्। ननु यद्यपि भेदो धर्मिस्वरूपमिति न तदपेक्षयाऽन्योन्याश्रयः। तथापि प्रतियोगिरूपं नेति तदपेक्षयान्योन्याश्रय इति चेन्न। विद्यमानभेदस्य तदंशेन चाप्रतीतस्य स्वरूपप्रतीतिमात्रेण प्रतियोगित्वबुद्ध्युपपत्तेः। नहि सामान्यतः सर्वात्मत्वप्रतीतेऽपि तस्य

---

भेदेत्यर्थः ॥ घटतद्भेदयोरिति ॥ घटपटप्रतियोगिकभेदयोरित्यर्थः ॥ स्वरूपप्रतीतिमात्रेणेति ॥ नच प्रमेयत्वेन प्रतियोगिप्रतीतौ तदभावप्रतीतिप्रसंग इति वाच्यम। धर्मीभूताभावप्रतीतौ

पुरोवर्तिनो भेदाग्रहेण पुरोवर्तिनः सामान्यतः सर्वस्माद्भेदाग्रहो दृष्टः। किंचास्तीदमित्यत्र साक्षिसिद्धेन कालेन सहैव वस्तुन इव न जानामीत्यत्र साक्षिसिद्धेन विषयेण सहैवाज्ञानस्येव "सर्वं खल्विदं ब्रह्म" इत्यत्र सर्वेण सहैवाऽभेदस्येव चेहापि साक्षिसिद्धेन प्रतियोगिना सहैव व्यावृत्तिप्रतीतेर्नाऽन्योन्याश्रयः। उक्तं हि

"सर्वं सामान्यतो यस्मात्सर्वैरप्यनुभूयते।
तस्माद्व्यावृत्तता सर्वैः सर्वस्मादनुभूयते॥" इति।

सर्वस्मादित्यनेन च तदात्मकत्वेनाज्ञातं सर्वं विवक्ष्यते। यथा "सर्वं खल्विदं ब्रह्म" इत्यत्र ब्रह्मात्मत्वेनाज्ञातं सर्वमिति न कश्चिद्दोषः।

एतेन विशिष्य भेदप्रतीतौ स्तम्भात्कुम्भस्य भेदसिद्धौ कुम्भात्स्तम्भस्य भेदसिद्धिरित्यन्योन्याश्रयः। धर्मिणः सकाशाद्भेदेन प्रतीतस्यैव प्रतियोगित्वात्। अप्रतीतभेदस्य प्रतियोगित्वे तु स्वस्यापि तत्स्यादिति निरस्तम्। त्वन्मतेऽपि विवादः प्रतिबिम्बादिना ब्रह्मणश्च ब्रह्मणा जीवेन चाभेदोऽपि इदमनेनाभिन्नमिति वा अस्यामुष्माद्भेद इति वा इमे अभिन्ने इति वा अनयोरभेद इति वा प्रत्येतव्यः। धर्मिप्रतियोगिभावधीः द्वित्वावच्छिन्नधीश्च भेदज्ञानाधीनेति तद्विरुद्धाभेदज्ञानानुपपत्तिरिति साम्यात्। यदि च तत्राऽभेदं प्रति प्रतियोग्यादिधीर्न भेदज्ञानाधीना विरोधात् तर्हीहापि भेदं प्रति प्रतियोग्यादिधीरपि न भेदज्ञानाधीना असंभवात्। अनयोरितिद्वित्वधीरिदमस्माद्भिन्नमित्यवध्यवधिमद्धीश्चापेक्षाबुद्ध्यादिसामग्रीतः। ननु भेदज्ञानात्। नह्यवधित्वादेर्भेदकस्य ज्ञानं नियमेन भेदज्ञानाधीनम्। भेदज्ञानानन्तरमपि भेदधीदर्शनात्। ऐक्यप्रतीताविवावधित्वाद्यवच्छेदकनीलत्वादिधीमात्रेण तत्संभवाच्च। अन्यथा जीवस्य ब्रह्माभेदे ज्ञाते ब्रह्मणो जीवाभेदधीरिति तवाप्यन्योन्याश्रयः। धर्मिणा सहाभेदेन प्रतीतस्यैवाभेदप्रतियोगित्वात्। अप्रतीताभेदस्य प्रतियोगित्वे तु दहनस्यापि तुहिनाभेदप्रतियोगित्वं स्यात्। "तत्त्वमसि" इत्यत्र त्वंपदवाच्यस्य विशिष्टस्य च तत्स्यादिति समम्। तत्र विद्यमानाभेदस्याप्रतिप्रतिबंधके अभेदयोग्यचिन्मात्रादिरूपेण प्रतीतिरभेदधीहेतुः भेदभ्रमे तु दोषः प्रतिबंधक इति नाभेदधीरिति चेत्। अत्रापि स्वरूपभेदपक्षे वस्तुतोऽन्योन्यप्रतियोगिरूपयोर्घटपटस्वरूपभेदयोरन्योन्यप्रतियोगित्वयोग्यघटपटत्वादिरूपेण प्रतीतयोरसति-

---

यन्नप्रकारत्वेन भासते तत्संबन्धतया प्रतियोगिप्रतीतिमपेक्षेतस्यैव तात्पर्यात्। सर्वस्य सर्वस्मात् सर्वभेदग्रहे त्वसिद्धमपि स्वभेदप्रकारसिद्धिरित्याशंक्याह॥ सर्वस्मादित्यनेन चेति॥ किंचावधिज्ञानं न भेदज्ञानं कारणम्। अवधिज्ञाने भेदज्ञानं न हेतुरिति चावेनान्योन्याश्रयः स्यात्। किं त्ववधिज्ञानतावच्छेदकनीलत्वादिज्ञानमपेक्षितमाह॥ ऐक्यप्रतीताविति। विशिष्टधीरिति॥ घटपटौ भिन्नाविति

प्रतिबंधके अन्योन्यप्रतियोगितया विशिष्टधीः। धर्मभेदपक्षेऽपि विद्यमानभेदस्यासति प्रतिबंधके भेदयोग्यनीलपीतत्वादिरूपेण प्रतीतिर्भेदधीहेतुः। दूरस्थवनस्पत्यादौ दूरादिर्दोषः प्रतिबंधक इति न भेदधीरिति समम्। नन्वुक्तविशेषणे सति स्तंभात्कुंभस्य भेदाग्रहेण कुंभात्स्तंभस्य भेदाग्रहो दृष्टः। नचान्योन्याश्रयासंस्पर्शिनि मार्गे सति तदापादको मार्गो ग्राह्यः। गौर्गवयसदृशीत्यादावपि गवयादीनां गवादिभ्यो भेदः सत्येव प्रतियोगित्वे हेतुः। ननु प्रतियोगित्वज्ञाने भेदज्ञानं हेतुः। नहि गौर्गवयसदृशीतिप्रत्यक्षधीरपि नियमेन गवयो गोभिन्न इति ज्ञानपूर्विकानुभूयते सुतरां शाब्दधीः। तत्र भेदवाचिशब्दाभावात्। अन्यथा चैत्रस्य मैत्रपितृत्वगुरुत्वादिके ज्ञात एव मैत्रस्य चैत्रपुत्रत्वादिज्ञानम्, गवयस्य गोसादृश्ये ज्ञात एव गोर्गवयसादृश्यज्ञानमिति सप्रतियोगिकपदार्थज्ञानमात्रेऽन्योन्याश्रयः स्यात्। एवं च

"सद्भेदस्य स्वरूपेण ज्ञातस्याप्रतिबंधके।
प्रतियोगिता न भेदेन ज्ञाते तन्न मिथःश्रयः॥ १॥
जीवस्य ब्रह्मणा ह्यैक्ये ज्ञाते जीवैकतामतिः।
ब्रह्मणीति तथाऽपि स्यादन्यथाऽन्योन्यसंश्रयः॥ २॥"

एतेन न प्रतियोगिधीमात्रं भेदधीहेतुः। तन्निर्विकल्पकादपि भेदधीप्रसंगात्। किंतु प्रतियोगित्वेन। तत्रापि नान्यं प्रति प्रतियोगित्वधीर्भेदधीहेतुः। अतिप्रसंगात्। किंतु भेदं प्रति। तथाच भेदज्ञाने प्रतियोगित्वधीः। तज्ज्ञाने च भेदधीरित्यन्योन्याश्रयः इति निरस्तम्। सप्रतियोगिके सादृश्यादावभेदे च साम्यात्। तत्र सादृश्याभेदादिप्रतियोगितावच्छेदकगवयत्वचित्वादिरूपेण धीरेव सादृश्याभेदादिधीहेतुर्यथेहाऽपि वस्तुतः प्रतियोगितावच्छेदकपीतादेः पीतत्वादिरूपेण धीरेव भेदधीहेतुः। यद्वा यत्र धर्मिप्रतियोगिनौ सन्निहितौ तत्र धर्मिप्रतियोगिस्वरूपयोस्तद्भावयोस्तद्भेदस्य च युगपद्धीः इदमनेन सदृशमितिवत्, तथा विशेषणविशेष्यभूतयोर्भेदभेदिनोर्विशेषणविशेष्यभावस्य च युगपदेव धीः इमौ सदृशाविनिवत्, सर्वस्येंद्रियसन्निकृष्टत्वात् योग्यत्वाच्च। युगपदनेकज्ञानोत्पत्तेर्विरुद्धत्वेऽपि दीपसहस्र इव समूहालंबनैकज्ञानाविरोधात्। नहि सन्मते दंडी चैत्र इति

---

विशिष्टधीरित्यर्थः। नन्वेवं सादृश्यप्रतियोगिज्ञानमपि भेदज्ञानसापेक्षं न स्यादित्याशंक्यैष्टापत्त्या परिहरति॥ गौर्गवयसदृशीत्यादावपीति। तन्न मिथःश्रयः इति॥ तस्मान्नान्योन्याश्रय इत्यर्थः॥ तद्भावयोरिति॥ तद्धर्मयोरित्यर्थः। ननु न विशेषणविशेष्ययोर्युगपज्ज्ञानं संभवति। विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वात्। दंडी पुरुष इत्यादौ तथा दर्शनादित्याशंक्य दृष्टांतासम्मतिरित्याह॥ नहीति॥ विशेषणविशेष्योभयसन्निकर्षादेव विशिष्टधीसंभवादिति भावः। नन्वनु-

विशिष्टधीरपि विशेषणज्ञानपूर्विका । उक्तं चैतदन्यत्र । यत्र तु धर्मिप्रतियोगिनोरन्यतरस्यासन्निधानं तत्रापि संस्कारसचिवेन्द्रियसन्निकर्षेणैकमेव ज्ञानमुत्पद्यते तदनेन सदृशमितिवत् । अन्यथाऽभेदज्ञानमपि न स्यात् । तथाच नान्योन्याश्रयः । तदुक्तम् ।

"धर्मित्वप्रतियोगित्वतद्भावा युगपद्यदि ।
विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ।
को विरोधः स्वरूपेण गृहीतो भेद एव तु ।
अस्यामुष्मादिति पुनर्विशेषणेनैव गृह्यते ॥" इति ।

यद्यपि व्यावृत्तिधीहेतुधीविशेषविषयत्वादिरूपव्यावर्तकत्वाद्यात्मकस्य विशेषणत्वादेर्विशिष्टज्ञानाधीनव्यावृत्तिज्ञानानंतरं निर्णयस्य न विशिष्टज्ञाने स्फुरणम्, तथाप्युपसर्जनत्वादिरूपविशेषणत्वादेर्विशिष्टज्ञाने स्फुरणं युक्तम् । किंच

"अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ॥
अन्यत्वं यदि सिद्धं स्यात्कथमन्योन्यसंश्रयः ॥"

इत्युक्तत्वादुभयतःपाशा रज्जुः । एतेन विशेषणविशेष्यभावेनैव भेदस्य प्रत्येतव्यत्वात्तद्भावप्रतीतेश्च भेदप्रतीत्यधीनतया दंडचैत्रादौ दर्शनेन भेदप्रतीतिपरंपरयानवस्थेतिनिरस्तम् । ब्रह्मजीवाभिन्नं जगन्मिथ्या स्वपक्षो निर्दोषः परपक्षो दुष्ट इत्यादावप्यभेदादेर्विशेषणादिभावेनैव प्रत्येतव्यत्वात्तत्प्रतीतेश्च भेदप्रतीत्यधीनत्वेनानवस्थाना(द्यप्राथमिकाभेदादि)मात्राऽभेदादिधीरनिर्मात्म्यात् । अथ दंडादावपि भेदः सन्नेव विशेषणत्वादिहेतुः नतु भेदज्ञानं

---

भितेतरान्वयी साध्यादिरूपविशेषणज्ञानस्य कारणत्वात् पक्षेऽपि तद्वत् ज्ञानस्य कारणतावश्यं वाच्येत्येतत्तात्पर्याद ॥ उक्तं चैतदिति ॥ अनुमित्यादौ साध्यप्रसिद्ध्यादिनैव हेतुता न विशेषणज्ञानत्वेन, यदि च वस्तुतो विशेषणविषयकत्वात् तत्त्वेनापि तस्य हेतुता तदा विशेष्यज्ञानत्वेन पक्षज्ञानस्य हेतुत्वमिति प्रत्यक्षेऽपि विशेष्यज्ञानस्य कारणतापत्तावित्ति तर्कताण्डवादावुक्तमित्यर्थः ॥ तदनेन सदृशमित्यादिवदिति ॥ [अन्यत्रापि(क)] नच तत्रापि सादृश्यप्रतियोगिनः स्मृतिरेव हेतुः । अन्यथा तज्जन्यत्वे स्मृतित्वापत्तेरिति वाच्यम् । इन्द्रियविरपेक्षजन्यसंस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वात्तज्जन्ये स्मृतित्वाभावे प्रमाणाभावाच्चेति भावः ॥ धर्मित्वप्रतियोगित्वतद्भावा इति ॥ धर्मिप्रतियोगित्वतद्भावा इत्यर्थः । युगपदित्येतद्गृह्यत इत्यनेन संबध्यते । अन्यथान्यथा भेदज्ञानविनाशे स्वरूपिकताभेदादिविशेषणज्ञानमपि न स्यात् । तस्यापि भेदज्ञानाधीनत्वादित्याह ॥ ग्रहमिति ॥ यद्यपि स्वरूपभेदोऽपि न विशेषणविशेष्यभावधीप्रयोजकः । तदभावेऽपि

तज्ज्ञाने तथाऽननुभवादतो नानवस्थेति चेत्समं प्रकृतेऽपि । विद्यमानभेदयोः स्वरूपेण प्रतीतयोरसति प्रतिबंधे विशेषणत्वादिधीसंभवादित्युक्तत्वात् । किंच भिन्नत्वेनैव ज्ञातस्य विशेषणतायां भिन्नं ब्रह्मेतिभेदधीपूर्वकं विशेषणतया विज्ञातस्याभेदस्य पुनर्ब्रह्माभेदज्ञानं न स्यात्, विरोधात् । एवंच

विशेषणत्वं भेदेन ज्ञानं नापेक्षतेऽन्यथा ।
न स्याद्विशेषणं ह्यैक्यं ब्रह्माभिन्नं विरोधतः ॥

एतेन प्रत्यक्षं किं भेदमेव गोचरयेत् । उत वस्त्वपि । नाद्यः । भेद इत्येवाप्रतीतेः । द्वितीयेऽपि किं भेदपूर्वकं वस्तु गोचरयेत् । उत वस्तुपूर्वं भेदं युगपद्वोभयम् । नाद्यः । भेद इत्येवाप्रतीतेः, बुद्धेर्विरम्य व्यापाराभावाच्च । अत एव न द्वितीयः । न तृतीयः । वस्तुग्रहस्य भेदग्रहहेतुत्वादिति निरस्तम् । बिंबप्रतिबिंबयोर्जीवब्रह्मणोर्वाभेदग्राहि प्रत्यक्षं शब्दश्च किं भेदमेव गोचरयेदित्यादेः साम्यात् । वस्तुमात्रज्ञानानंतरभाविना विशिष्टज्ञानेन युगपदुभयग्रहणाच्च । विशिष्टधीर्विशेषणधीपूर्विकेतिमते भूतले घटाभाव इति ज्ञानानंतरमेव भूतलं घटाभाववदितिज्ञानवदनयोर्भेद इतिज्ञानानंतरमेव इमौ भिन्नाविति धियः संभवेन तत्पूर्विकैव नेतिमते तु युगपदेवोभयगोचरविशिष्टधियः संभवेनोक्तदोषानवकाशाच्च । यच्चोच्यते भेदस्यान्योन्याभावत्वे तत्प्रतियोगिनः स्तंभकुंभयोस्तादात्म्यस्याप्रामाणिकत्वेनान्योन्याभावस्याप्यप्रामाणिकत्वं स्यादिति । तन्न, रूप्यस्य द्वैतस्यात्यंतासतश्चाप्रामाणिकत्वेन बाधगोचरस्य रूप्याभावस्याद्वैतस्यासद्विलक्षण्यस्य चाप्रामाणिकत्वं स्यादिति साम्यात् ॥ यदि तत्र प्रतियोगिनो निरूपकत्वमात्रत्वेनाप्रामाणिकत्वेऽपि तदभावस्य प्रामाणिकत्वम्, तर्हि प्रकृतेऽपि तथा । नत्वस्मन्मते प्रामाणिकस्यैव निषेध इतिनियमः । येषां नियमः तन्मतेऽपि पटे प्रमितस्य पटतादात्म्यस्य घटे निषेध इत्यस्तु । तन्मतेऽन्योन्याभावसंसर्गाभावयोर्घटप्रतियोगिकत्वेऽपि यत्र प्रतियोगिनमधिकरणे समारोप्य निषेधावगमः स संसर्गाभावः, यत्र त्वधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः सोऽन्योन्याभाव इति तयोर्भेदः ।

---

त्र्यमेतदभिन्न इत्यादि प्रतीतिनिदर्शनात् । तथाप्येवमंगीकारेऽपि न प्रकृतहानिरित्याह ॥ समामिति । वस्तुमात्रेति ॥ ज्ञानभेदस्वीकारात विरम्य व्यापार इति भावः । ननु घटपटयोस्तादात्म्यस्याप्रसिद्धेन कथं तन्निषेधः सन्मात्रयामेवाधिकरणप्रतियोगिभ्यामभावो निरूप्यत इत्यंगीकारादित्याह ॥ नहीति ॥ वस्तुतस्त्वन्योन्याभावोऽपि घटप्रतियोगिक एव । नच संसर्गाभावाद्भेदः प्रतियोगितावच्छेदकयोर्भेदाभावादित्याह (शंक्याह) ॥ तन्मतमिति ॥ प्रतियोगिनमित्यस्यानंतरं संसर्गितयेति शेषः

एतेन भेदेऽपि स्वेतरभेदस्य वक्तव्यत्वात्स्ववृत्तित्वमिति निरस्तम् । जीवब्रह्माभेदे स्वेनाभेदस्य वक्तव्यत्वात्स्ववृत्तित्वमिति साम्यात् । तत्राभेदांतरं वा तस्यैव स्वनिर्वाहकत्वं वा चेदिहापि तथास्तु । एतेन नृशृंगशशशृंगात्यंताभावयोरन्योन्याभावरूपभेदस्य सत्त्वाद्भावस्य च भावत्वान्नृशृंगशशशृंगयोः सत्त्वं स्यात् । एवं घटध्वंसप्रागभावयोरन्योन्याभावस्य वक्तव्यत्वादभावाभावस्य भावत्वाद्घटध्वंसकाले घटः स्यादिति निरस्तम् । अविद्यानिवृत्तिः पंचमप्रकारेतिमते भावाद्वैतमते च अविद्यानिवृत्तेः ब्रह्मतोऽन्योन्याभावस्य वक्तव्यत्वादभावाभावस्य भावत्वादविद्यानिवृत्तिकालेऽविद्या स्यादिति साम्यात् । यदि त्वभावसंसर्गाभाव एव भावः, नत्वन्योन्याभावस्तर्हि प्रकृतेऽपि समम् ।

यथोक्तम् । भेदेषु जातिरूपमौपाधिकधर्मरूपं वा भेदत्वं वाच्यम् , तत्र पुनर्भेदो वाच्यः । अन्यथा भेदत्वस्यान्यस्माद्भेदो न स्यात् । तथाचान्योन्यवृत्तिरिति । तन्न, अभेदेष्वभेदत्वं वाच्यम् , तत्र पुनरभेदो वाच्यः । अन्यथा तस्य स्वाभेदो न स्यात् । तथाचान्योन्यवृत्तिरिति साम्यात् । नच घटस्य घटाभेदः जीवस्य जीवाभेदो वा जीवस्य ब्रह्माभेदः, वेदांतवैयर्थ्यापत्तेः । अथ तत्र प्रमेयत्वाभिधेयत्वयोरिव प्रमितत्वादन्योन्यवृत्तिरदोषः, तर्हि प्रकृतेऽपि तथास्तु ।

ननु भेदः किं भिन्ने वर्तते उताभिन्ने । नाद्यः । अनवस्थापातात् । नांत्यः । विरोधादिति-चेत् अभेदः अनात्मनोऽनिर्वाच्यत्वम्, आत्मनो निर्विशेषत्वं स्वपक्षे दोषाभावः परपक्षे दोषश्च किं तद्वति वर्तते । उत तद्रहिते इत्यादेः साम्यात् । यथभेदादिस्वरूपं यदि वा स्वाश्रयत्वयोग्ये वर्तते योग्यता च प्रमितिरूपकार्योन्नेया तर्हि प्रकृतेऽपि तथास्तु । एवमन्येऽपि स्वव्याघातकाः क्षुद्रोपद्रवाः परिहार्याः । नह्यत्र भेदखंडने केनापि क्वाप्यत्रास्वव्याघातिका अज्ञानिरूपा युक्तिरुक्ता । तदुक्तम् ।

"एतादृशस्य वक्तारावुभौ ज्ञान्युत्तराकरौ ।
मायी माध्यमिकश्चैव तावुपेक्ष्यौ मुमुक्षुभिः ॥" इति ।

॥ विशिष्य भेदखंडनोद्धारः ॥ १५ ॥

---

॥ प्रतियोगितावच्छेदकमिति ॥ प्रतियोगितावच्छेदकमारोप्य संबंधीकृत्येत्यर्थः । तेनोभयत्र प्रतियोगिन एवारोपः । अन्यथा आरोप्यस्यैव निषेधप्रतियोगितया प्रतियोगितावच्छेदकस्यैव भेदप्रतियोगित्वं स्यादिति शंका निरस्ता । भेदत्वस्यैवान्यथासिद्धत्वाच्च भेदत्वं किंचिद्वाच्यम् । अतो नान्योन्यावृत्तित्वमित्याशंक्य निराकरोति ॥ नचेति ॥ अज्ञानिरूपा इत्यस्य विवरणं स्वव्याघातिका इति ॥

॥ इति विशिष्य भेदखंडनोद्धारः ॥ १५ ॥

## ॥ अथ विशेषसमर्थनम् ॥ १६ ॥

वस्तुतस्त्वस्मन्मते भेदो वस्तुना सविशेषाभिन्नः । ततश्चाभिन्नत्वाच्चानवस्थादि । भेदप्रतिनिषेधश्च विशेषस्य सत्त्वाच्च पर्यायत्वादिकम् । विशेषश्च भेदहीनेऽप्येकतरपरिशेषाभावादिनिर्वाहकः । तदुक्तं ।

"भेदहीने त्वपर्यायशब्दांतरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥" इति ।

प्रमाणं(त्वत्रा)तत्रार्थापत्तिः । तथाहि । "विज्ञानमानंदं ब्रह्म" इत्यादिवाक्यबोध्यविज्ञानानंदादीनां परमतेऽपि न तावद्भेदो भेदाभेदौ वा, अखंडार्थत्वात् । "एकधैवानुद्रष्टव्यम्" इत्याद्यैकरस्यश्रुतिविरोधाच्च । तत्र भेदप्रतिनिधिर्विशेषोऽपि न चेत्कथं तच्छब्दानामपर्यायत्वम्, पदांतरावैयर्थ्यम्, विज्ञानानंदयोरेकतरापरिशेषः, भ्रमाधिष्ठानत्वेन चैतन्यभानेऽपि मोक्ष इवेदानीमानंदाप्रकाश इत्यादिभेदकार्यं स्यात् । लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदादपर्यायत्वं व्यावर्त्यभेदादवैयर्थ्यं चेति चाखंडवादे निरस्तम् । नच सखंडवादेऽपि प्रवृत्तिनिमित्तयोर्ज्ञानत्वानंदत्वयोर्भेदादपर्यायत्वम् । "एवं धर्मान्" इतिश्रुत्या तयोरपि भेदनिषेधात् । अर्थप्रकाशत्वनिरुपाधिकेष्टत्वरूपयोस्तयोरर्थप्रकाशनिरुपाधिकेष्टरूपाश्रयविशेषसापेक्षत्वाच्च । आकाशशब्दशब्दाश्रयशब्दयोर्निमित्तभेदाभावेन पर्यायत्वापाताच्च । नह्याकाशशब्दस्य शब्दाश्रयत्वादन्यन्निमित्तमस्ति । ज्ञानानंदयोरेकतरपरिशेषे च मोक्षे आनंदप्रकाशो

---

### ॥ अथ विशेषसमर्थनम् ॥ १६ ॥

ननु स्वरूपभेदपक्षो न युक्तः । भेदघटशब्दयोः पर्यायतापत्तेरेकतरपरिशेषापत्तेश्चेत्याशंक्याह ॥ वस्तुतस्त्विति । एवं धर्मानितिश्रुत्येति ॥ 'पृथग्विनान्तरेणर्ते' इत्यभिधानानुसारेण पृथक्शब्दस्य विनार्थकत्वमंगीकृत्य निर्गुणज्ञाननिषेध एव श्रुत्यर्थ इत्यंगीकर्तुं शक्यम्, तथापि गोशब्देन झटिति सास्नाद्यर्थोपस्थितेरिव पृथक्शब्देनापि भिन्नत्वार्थस्यैव झटित्युपस्थितेः, बाधकाभावे शीघ्रोपस्थितार्थस्यैव ग्राह्यत्वात् उक्तार्थ एव श्रुतेस्तात्पर्यम् । यद्वा द्वयोऽर्थाः सर्ववेदेष्वित्यादिप्रमाणानुसारेणार्थद्वयांगीकारेऽपि न दोष इति भावः ॥ नहीति ॥ यद्यप्याकाशशब्दस्य शब्दद्रव्यातिरिक्तद्रव्यत्वं प्रवृत्तिनिमित्तं संभवति । तथापि शब्दाश्रयत्वस्यैव लघुत्वात् आकाशशब्दाभिधानेन तयोपस्थितेश्च तदेव प्रवृत्तिनिमित्तमिति भावः । यन्मते त्वाकाशशब्दस्य एकव्यक्तित्वात्

न स्यात् । तस्माद्विज्ञानानंदादेरैक्यश्रुतिबलादभेद इत्येकत्वरापरिशेषायवं विशेषोऽप्यंगीकार्यः । एवं तत्त्वमसीत्यत्र शोधितायत्पदार्थाद्वाक्यार्थस्यैक्यस्य न तावत्परमते भेदो भेदाभेदौ वा । ऐक्यस्य मिथ्यात्वाबाधापत्तेः । तत्र विशेषोऽपि न चेत्कथं स्वप्रकाशचैतन्यप्रकाशेऽप्यैक्यस्याप्रकाशः । तत्प्रकाशस्य भेदभ्रमाविरोधित्वेऽप्यैक्यप्रकाशस्य तद्विरोधः । तस्य निरपेक्षत्वेऽप्यैक्यस्य सापेक्षत्वमित्यादि । नचाविद्यावरणादैक्यस्याप्रकाशः, विशेषाभावे अनावृतचिदभिन्नस्यैक्यस्यावरणायोगात् । नहि शुक्त्यज्ञानेन शुक्त्यंश एवावृतोऽनावृतश्च भवति । किंच "एवं धर्मान्" इतिश्रुतिबलादपि विशेषसिद्धिः । अत्र हि ब्रह्मणो धर्मानुक्त्वा तद्भेदो निषिध्यते । नच भेदप्रतिनिषेधाभावे धर्मधर्मिभावो धर्माणामनेकत्वं च युक्तम् । नच धर्मानित्यनुवादः । श्रुतितोऽन्येन ब्रह्मधर्माप्राप्तेः । नचेयं श्रुतिरत्यंतभेदनिषेधिका । भेदमात्रनिषेधादत्यंतभेदाभावस्य लोकत एव प्राप्तत्वाच्च ।

"भेदाभेदौ च यः पश्येत्स याति तम एवच"

इत्यादिस्मृतेश्च । तदुक्तम् ।

"उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥" इति ।

किंच गुणगुण्याद्यभेदपक्षे पटोपलंभेऽपि शौक्ल्याद्यनुपलंभाद्यर्थं भेदाभेदपक्षेऽपि तयोरविरोधार्थमत्यंतभेदपक्षेऽपि समवायः संबंधः, सत्ता सती, भेदो भिन्नः, अंत्यविशेषो व्यावृत्तः, कालः सदास्ति, देशः सर्वत्रेत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्यः । किंचाभावादावस्तित्वादिर्नाभावादितो भिन्नः । गुणादिष्वनंतर्भावेन षट्पदार्थनियमभंगात् । अनियमपक्षेऽप्यस्तित्वेऽप्यस्तित्वांतरमित्यनवस्थानात् । तत्र विशेषोऽपि न चेत्कथं विशेषणविशेष्यभावादि । नच सत्ता

---

प्रवृत्तिनिमित्तापेक्षा, तन्मतेऽपि भिन्नप्रवृत्तिनिमित्तकत्वाभावात् पर्यायत्वं स्यादेवेति ध्येयम् । किंच स्वप्रकाशचैतन्याभिन्नस्यैक्यस्य प्रकाशान्यथानुपपत्त्यापि विशेषसिद्धिरित्याह ॥ एवमिति । ब्रह्मधर्मस्येति ॥ श्रुत्या प्राप्तस्य श्रुत्यैवात्यंतनिषेधे च प्रापकश्रुतेरप्रामाण्यापत्तिरिति भावः ॥ इयं श्रुतिरिति ॥ भेदाभेदस्याप्यत्र धर्मधर्मिभावोपपत्तिरिति भावः ॥ नात्यंतभेदाभावस्येति ॥ लोके अत्यंतभिन्नयोर्धर्मधर्मिभावादर्शनेनैवापि धर्मधर्मिणोरत्यंतभेदाभावस्य सिद्धेः पुनः श्रुत्या प्रतिपाद्यं व्यर्थमिति भावः । नन्वयं विशेषो वस्तुनोऽभिन्नो भिन्नो वा । नाद्यः । वस्तुवदेव तस्य

सतीत्यादिधीर्भ्रांतिः । सन्घट इत्यादिवद्बाधात् । नाप्युपचारः । देवदत्तः सिंहो नेतिवत् सत्ता सती नेति कदाप्यव्यवहारात् । ननु सत्तादेः सत्तांतराभावेऽपि स्वभावविशेषादेव सद्व्यवहार इति चेन्न । तस्यैव स्वभावविशेषस्यास्माभिर्विशेषशब्देनोक्तेः । समवायादिः स्वनिर्वाहक इतिचेन्न । स्वस्य स्वयमेव निर्वाहकं हि स्वनिर्वाहकम् । विशेषाभावे च कथमेकस्यैव निर्वहणक्रियायां कर्तृत्वं कर्मत्वं च । अयमेव विशेषः वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानवस्था । तस्य तथात्वं च धर्मिग्राहकमानसिद्धम् । यत्र भेदाभावो भेदकार्यं च प्रमितौ(तं)तत्रैव विशेषः कल्प्यत इति न प्रमितभेदे घटपटादौ विशेषमादाय भेदत्यागः । न हि सोमाभावे पूति(ती)क इति तल्लाभेऽपि सः । एतेनोक्तस्थले भेद एवास्तु भेदकार्यार्थं न तु भेदप्रतिनिधिरस्त्विति निरस्तम् । तत्र भेदस्य बाधितत्वात् ।

एवंच ब्रह्मस्वरूपभूतयोर्विज्ञानानंदयोर्ब्रह्मभेदयोश्च एकतरपरिशेषाभावः, प्रमेयत्वादेः स्वाश्रितत्वादिकं वा भेदान्यनियम्यम्, भेदानियम्यत्वे सति नियम्यत्वात् । यद्यदनियम्यत्वे सति नियम्यं तत्तदन्यनियम्यं यथा संमतं । ब्रह्मस्वरूपभूतं विज्ञानानंदादिकं वा भेदान्यैकतरापरिशेषनिर्वाहकवत् भेदहीनत्वे सत्येकतरापरिशेषरूपनिर्वाह्यवत्त्वात् । यद्यद्धीनत्वे सति यन्निर्वाह्यवत् तत्तदन्यतन्निर्वाहकवत् यथा संमतम् । स्वाश्रितं प्रमेयत्वादिकं वा भेदान्याश्रयाश्रयिभावनिर्वाहकवत् भेदहीनत्वे सत्याश्रयाश्रयिभावरूपनिर्वाह्यवत्त्वात् । यद्यद्धीनत्वे सति यन्निर्वाह्यवत् तत्तदन्यतन्निर्वाहकवत् यथासंमतमित्यादिप्रयोगो द्रष्टव्यः ।

किंचायं विशेषः प्रत्यक्षसिद्धः । तथाहि । तंतुपटादिबुद्धीनां भिन्नघटपटादिबुद्धितोवैलक्षण्यं तावदनुभूयते । तच्च न तावत्संबंधविषयत्वेन, कुंडबदरादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि संयोगान्यसंबंधविषयत्वेन । घटतद्ज्ञानतदभावबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसंबंधविषयत्वेन । घटतद्धर्मिकान्योन्याभावादिबुद्धेः घटपटा-

धर्मधर्मिभावादिनिर्वाहकत्वाभावप्रसंगात् । न द्वितीयः । अनवस्थापत्तेरित्याशंक्याह ॥ अयमेवेति ॥ तथाच धर्मधर्मिभावादिनियामकत्वेनैव सिद्ध इति नोक्तदोष इतिभावः । नन्वेवं भेदमात्रोच्छेद-प्रसंगः । सर्वत्र स्वदभिमतविशेषादेव भेदकार्यसंभवादित्याशंक्याह ॥ यत्रेति । भेदान्य-नियम्यमिति ॥ अभेदनियम्यत्वस्य बाधात् भेदप्रतिनिधिनियम्यत्वपर्यवसानेन सिद्धसाधनं विरुद्धत्वं न, सिद्धिरिति भावः ॥ तंतुपटादिबुद्धीनामिति ॥ तंतवः पट इत्यादिबुद्धीनामित्यर्थः । समवायित्वं

धिबुद्धितो वैलक्षण्याभावापातात् । नाप्ययुतसिद्धिविषयत्वेन । आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः । तत्र तदानींतन आश्रयाश्रयिभावः कुंडबदरादिबुद्धावपि भाति, नियमस्तु न तंतुपटादिबुद्धावपि । नहि प्रत्यक्षा तंतुपटादिधीः तंतुपटसंबंधनाशो वा तंतुपटविभागो वा न भविष्यतीत्याकारा । नापि कुंडबदरादिधीस्तयोः संबंधनाशो वा कुंडबदरविभागो वा भविष्यतीत्याकारा । नापि समवायविषयत्वेन, उक्तरीत्या संबंधनित्यत्वस्य वा संबंध्ययुतसिद्धत्वस्य वा तत्राऽस्फुरणात् । तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम् । अयं घटः गजाश्वादिरेव सेना पत्रमेव ताटंकमित्यादौ पुरोवर्त्यादिना घटादेरिव आतानवितानात्मकाः तंतवः पटः शुक्लः पट इत्यादावपि तंत्वादिना पटस्याभेदप्रतीतेः । नचात्र पटत्वशुक्लत्वयोरेकस्थत्वमेव भातीतिवाच्यम् । पटशुक्लयोरैक्यस्यापि तत्रांतर्गतेः । अन्यथा क्वाप्यभेदो न सिद्ध्येत् । घटः घटो नेति धीश्च भेदविषया न स्यात् । दंडी चैत्र इत्यत्रापि दंडिना चैत्रस्य भेदो भात्येव । नच शुक्लः पट इत्यत्र शुक्लवानेव शुक्लपदार्थ इतिवाच्यम् । शुक्लरूपमित्यत्र यच्छुक्लं तस्यैवेह प्रतीतेः । अन्यथेहापि शुक्ली पट इति धीः स्यात् । मतुब्लोपादिकल्पनं तु व्यवहारे न तु प्रतीतौ । पटस्य शौक्ल्यं रूपी पट इत्यादिधीस्तु संबंधविषया, न तु भेदविषया, सत्ता सतीत्यादिवत् भेदाभावेऽप्युपपन्ना । पटस्य तंत्वन्यत्वे च गुरुत्वद्वयं स्यात्, तंतुयुक्ते भूतले पटवृत्तिश्च न स्यात् । मूर्तानां सामानाधिकरण्यायोगात् । व्यवहारार्थक्रियाभेदादि तु पत्रताटंकादिवदित्युक्तम् । तस्मात्तंतुपटादिबुद्धिरभेदविषयैव । यदि चेयं केवलाभेदविषया तर्हि समानाधिकरणं व्यवहारं न जनयेत् । घटः कलश इत्यव्यवहारात् । तेन ज्ञायते अधिको-

---

क्ति नित्यसंबंधित्वं उतायुतसिद्धिनिरूपितसंबंधित्वमिति विकल्प्य नोभयमपीत्याह ॥ उक्तरीत्येति ॥ अभ्युपेत्य चेदमुक्तम् । वस्तुतस्तत्सद्भावे प्रमाणाभाव इति ध्येयम् ॥ तत्रांतर्गतेरिति ॥ पटत्वशुक्लत्वयोरेकस्थत्वप्रतीतेः पटशुक्लयोरैक्यप्रतीतिं विना असंभवादिति भावः ॥ अन्यथेति ॥ सामानाधिकरण्यप्रतीतेरैक्याविषयत्व इत्यर्थः ॥ दंडिना इति ॥ दंडवतेत्यर्थः । ननु दंडविशिष्टेन । अन्यथा दंडेनाप्यभेदप्रसंगादिति ध्येयम् । ननु गुणवचनेभ्यो मतुपो लोपो वक्तव्य इत्यनुशासनविरोधात् शुक्ली पट इति प्रतीत्याकारत्वमित्याशंक्याह ॥ मतुब्लोपादिकल्पनं त्विति । गुरुत्वद्वयं स्यादिति ॥ नच (ननु) कार्यैकगुरुत्वात् कारणगतगुरुत्वं नश्यतीति

ऽप्यस्या विषयोऽस्तीति । नचायं भेदः पटो न शुक्ल इत्युल्लेखापातात्, भेदाभेदाविरोधाय विशेषस्यावश्यकत्वाच्च । तस्माद्योऽधिको विषयः स एव विशेष इति सिद्धं विशेषस्य प्रत्यक्षत्वम् ।

तदुक्तं "येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत्" इति ।

"अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेत्"

इतिस्मृतिसिद्धश्च विशेषः । तस्माद्भेदस्य वस्तुना सविशेषाभिन्नत्वान्न कोऽपि दोष इति ।

॥ इति विशेषसमर्थनम् ॥ १६ ॥

---

न गुरुत्वद्वयोपलंभ इति वाच्यम् तथासति कार्येऽपि गुरुत्वं न स्यात् । असमवायिकारणना-शात्कार्यनाशावश्यंभावादिति ॥ मूर्तानामिति ॥ नचावयवावयविभावातिरिक्तस्थल एवायं नियम इति वाच्यम् । तस्यातिरिक्तावयविसिद्ध्यधीनत्वेनान्योन्याश्रयात् ।

॥ इति विशेषसमर्थनम् ॥ १६ ॥

## ॥ अथ भेदपञ्चके प्रत्यक्षविवरणम् ॥ १७ ॥

ननु तथापि न तावज्जीवेश्वरभेदे प्रत्यक्षं मानम् । ईश्वरस्याप्रत्यक्षत्वेन तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्याप्रत्यक्षत्वात् । नाप्यनुमानम् । जीवेश्वरौ भिन्नौ विरुद्धधर्माधिकरणत्वात् दहनतुहिनवदित्यत्र तात्त्विके भेदे साध्ये दृष्टांतस्य साध्यवैकल्यात् । अतात्त्विके साध्ये सिद्धसाधनात् । दुःखादेरंतःकरणधर्मत्वेनासिद्धेश्च । ब्रह्म तत्वतो जीवाद्भिन्नं सर्वज्ञत्वात् व्यतिरेकेण जीववदित्यत्राप्रसिद्धविशेषणत्वात् । ब्रह्म धर्मिसत्तासमानसत्ताकभेदवदिति साध्यनिर्देशेऽप्यसाधारण्यात् । नाप्यात्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्पृथिवीत्ववदित्यादिभिरात्मभेदमात्रसिद्धिः । आत्मैक्यवादिनं प्रत्यसिद्धेः । दुःखं गुणत्वावांतरजात्या स्वजातीयाश्रयभिन्नाश्रितं गुणत्वाद्रूपवदित्यत्र शब्दे व्यभिचारात् । दुःखादीनामंतःकरणधर्मत्वेन सिद्धसाधनाच्च । विमतानि शरीराणि स्वसंख्यासंख्येयात्मवंति शरीरत्वात् संमतवदित्यत्र योगिशरीरे व्यभिचारात् । आत्मा धर्मिसत्तासमानसत्ताकात्मप्रतियोगिकभेदवान् द्रव्यत्वात् घटवत् । आत्मा द्रव्यत्वव्याप्यजात्या नाना, अभावविशेषगुणाधिकरणत्वात् घटवदित्यत्र चात्मनो निर्गुणत्वेनासिद्धेः । उक्तसाध्य एव शरीरात्मसंयोगाधारत्वात् शरीरवदित्यत्राभाससाम्यात् । नापि "द्वासुपर्णा" इत्यादिश्रुतिः, अनुवादकत्वात् । व्यावहारिकभेदपरत्वाद्वा । एवं भेदांतरेऽपि प्रमाणं निरसनीयमिति ।

---

### ॥ अथ भेदपंचके प्रत्यक्षविवरणम् ॥ १७ ॥

॥ अप्रत्यक्षत्वादिति ॥ प्रतियोग्यधिकरणयोर्योग्यत्वस्याभावप्रत्यक्षतायां तंत्रत्वादिति भावः । ननु भेदत्वेनैव साध्यता न तु तात्त्विकत्वविशेषेण, नचैवमप्यारोपितभेदवत्त्वेन सिद्धसाधनतादवस्थ्यम् । आरोपितस्य भ्रमत्वाय सिद्धसाधनोक्तावनुमानमात्रोच्छेदप्रसंगादित्यरुचेराह ॥ दुःखादेरिति । गुणत्वावांतरजात्येति ॥ एतच्च गुणत्वेन स्वसमानजातीयकत्व(य)व्याश्रयत्वादिभिन्नाश्रितत्वेन सिद्धसाधनतावारणाय । स्वपरत्वाप्येवमेव प्रयोजनं द्रष्टव्यम् ॥ संमतवदिति ॥ देवदत्तशरीरवदित्यर्थः । स्वस्य सर्वाभिव्याप्तमनपरत्वेन देवदत्तैकात्मकत्वपरत्वेऽपि साध्यस्य पर्यवसानसंभवात् न दृष्टांते साध्यवैकल्यमाशंकनीयाः । कालाकाशयोर्व्यभिचारवारणाय अभावविशेषगुणाधिकरणत्वादिति विशिष्टोपादानम् । संयोगस्यापि गुणत्वेनोक्तासिद्धिलक्षणदोषे सिद्धे सत्येव दोषांतरमाह ॥ आभाससाम्यादिति ॥ अस्य अयमर्थः शरीरात्मसंयोगाधार-

उच्यते। प्रत्यक्षं तावत् जीवस्य ब्रह्मतो भेदे प्रमाणम्। घटः पटो नेतिवन्नाहं सर्वज्ञः नाहं निर्दुःखः इत्यनुभवात्। नच ब्रह्मणोऽप्रत्यक्षत्वात्ततो भेदोऽप्यप्रत्यक्षः। यत्र हि यत्सत्त्व-मनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः, न तु प्रतियोगिप्रत्यक्षत्वं अभावप्रत्यक्षत्वे तंत्रम्। जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वापातात्। स्तंभः पिशाचो न भवति घटः परमाणुर्न भवतीति प्रत्यक्षप्रतीतेश्च। प्रतीत्यनुसारेण च प्रयोजकं कल्प्यम्। अन्यथा जीवेश्वराभेदश्रुतेर-प्रसक्तप्रतिषेधत्वं स्यात्। तद्भेदश्रुतेश्च त्वदुक्तं प्रत्यक्षप्राप्तानुवादित्वं न स्यात्। ईश्वरस्य जीवा-द्भेदे तु "तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप। उत्तमः पुरुषस्त्वन्यः" इत्यादितद्वचनानु-मितमीश्वरप्रत्यक्षं प्रमाणम्। नन्वत्र यो भाति अंतःकरणाविद्याविशिष्टस्याहमर्थस्य निर्दुःखाद्भेदः स ममापीष्टः, यस्तु नेष्टः शुद्धचैतन्यस्य निर्दुःखाद्भेदः सोऽत्र न भातीति चेन्न। योऽहमस्वाप्सं यस्य ममाज्ञानं संसारश्च सोऽहं निर्दुःखो नेति सुषुप्तिकालीनांतःकरणानवच्छिन्नाभेदेन अज्ञानाद्याश्रयाभेदेन च प्रत्यभिज्ञायमाने शुद्धे भेदप्रतीतेः, संसाराधारस्य तदनाधाराद्भेद एव आवयोर्विवादः। न तु चैतन्यस्य चैतन्यात्। साधितं चाहमर्थस्य शुद्धात्मत्वम्। यद्यपि घटाद्यपि निर्दुःखं तथापि निर्दुःखमात्राद्भेदधीरियं ब्रह्मतोऽपि भेदविषयैव। नचाद्वैतमते जीवदुःखेन ब्रह्मापि दुःखीति न निर्दुःखं ब्रह्मेति वाच्यम्। बहुजीववादे ब्रह्मभावरूपमुक्तेरपु-मर्थत्वापातात्। एकजीववादेऽप्यौपाधिकश्यामत्वादेर्बिंबमहाकाशयोरिव दुःखित्वादेर्ब्रह्मण्य-सत्त्वात्। विस्तृतं चैतदविद्याश्रयभंगे, साधितं च प्रत्यक्षप्रामाण्यावसरे बाह्यप्रत्यक्षस्य बलव-

---

त्त्वात् शरीरवदित्याभाससाम्यादित्यर्थः। ननु तथापि प्रमाणांतरप्राप्तस्यैवानुवाद्यत्वात् भेदसिद्धिर-विकलैव। नच त्वयानुवादत्वमपि वक्तुं शक्यम्। प्रापकप्रमाणानां दूषितत्वादित्यपरितोषादाह ॥ व्यावहारिकेति। एवं भेदांतरेऽपीति ॥ आत्मा घटादिभ्यो भिन्नः ज्ञानाश्रयत्वात् व्यतिरेकेण घटवत्, घटादि पटाद्भिन्नं विलक्षणक्रियाकारित्वात् व्यतिरेकेण पटवदित्याद्यनुमानम्। आत्मनो ज्ञानरूपत्वेनाश्रयहेतोरसिद्धिः। द्वितीये पञ्चाङ्गुलादौ व्यभिचार इत्येवंरूपेण निरसनीयमित्यर्थः। ननु प्रतियोगियोग्यत्वस्यापि तंत्रत्वांगीकारान्नोक्तदोष इत्यतो दोषांतरमाह ॥ स्तंभ इति। अन्यथेति ॥ भेदस्याप्यप्रत्यक्षत्वे इत्यर्थः। ननु भेदस्य प्रत्यक्षाद्यविषयत्वेऽपि मानांतरप्रामाण्याविरोधो-पपत्तिरित्यतो दोषांतरमाह ॥ भेदश्रुतेरिति ॥ किञ्च नाहं सर्वज्ञ इत्यादिप्रतीत्या आत्मन एव

त्प्रत्यक्षेतरेण न बाधः, साक्षिप्रत्यक्षस्य तु न केनापि बाध इति । तस्माज्जीवेशभेदः प्रत्यक्षः । एवं शब्दादनुमानादिना वा चैत्रात्मादिकं ज्ञातवता मैत्रेण नाहं चैत्रः घटो न ब्रह्म घटो न पटः नाहं घट इत्यनुभवात् पंचापि भेदाः प्रत्यक्षाः ।

॥ इति भेदपंचके प्रत्यक्षविवरणम् ॥ १७ ॥

---

भेदो बोध्यते नत्वंतःकरणादिविशिष्टस्य, ब्रह्मधर्मानात्मत्वस्य निरस्तत्वादित्याह ॥ साधितं चेति ॥ श्यामत्वादेरित्यादिपदात् परिच्छिन्नत्वादिपरिग्रहः । ननु नाहं सर्वज्ञ इत्यादिभेदप्रत्यक्षस्य तत्त्वमसि नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतिबाधितत्वान्न तेन भेदसिद्धिरित्याशंक्याह ॥ साधितं चेति ॥

॥ इति भेदपंचके प्रत्यक्षविवरणम् ॥ १७ ॥

## ॥ अथ जीवब्रह्मभेदानुमानानि ॥ १८ ॥

अनुमानानि च । ईश्वरः जीवप्रतियोगिकतात्त्विकभेदवान् सर्वशक्तित्वात् सर्वज्ञत्वात् सर्वकार्यकर्तृत्वात् स्वतंत्रत्वाच्च व्यतिरेकेण जीववत् । जीवो वा ब्रह्मप्रतियोगिकतात्त्विकभेदवान् अल्पशक्तित्वात् अल्पज्ञत्वात् अल्पकर्तृत्वात् संसारित्वाच्च व्यतिरेकेण ब्रह्मवत् । परमतेऽपि जीवब्रह्मणोर्व्यावहारिकभेदस्य सत्त्वात् पक्षदृष्टांतभावः । अन्यथा परस्यापि जीवात्मानस्तत्त्वतः परमात्मनो न भिन्नाः आत्मत्वात्परमात्मवत् इत्यादि न स्यात् । एतेन सर्वाद्वैतवादिनं प्रति साध्यावैशिष्ट्यादिदोषाच्च भेदेऽनुमोक्तिर्युक्तेति निरस्तम् । परेणापि स्वव्याहतिनिरासाय व्यावहारिकभेदमात्रेण हेतुसाध्यादिव्यवस्थायाः स्वीकृतत्वात् । भेदस्य वस्तुस्वरूपत्वेऽपि विशेषबलात् वस्तुविशेषणत्वं चास्तीत्युक्तत्वात् भेदवत्त्वं न बाधितम् । नचाप्रसिद्धविशेषणता । जीवब्रह्माभेदेऽनिष्टप्राप्तेर्वक्ष्यमाणत्वेन तद्विपर्ययस्याष्टद्रव्यातिरिक्तद्रव्यादेरिवानुमानयोग्यत्वात्। यद्वा जीवः किंचिद्धर्मिकप्रतियोगिज्ञानाबाध्यभेदप्रतियोगी । ब्रह्म वा किंचिद्धर्मिकप्रतियोगि-ज्ञानाबाध्यभेदप्रतियोगि अधिष्ठानत्वाच्छुक्तिवदिति सामान्यतस्तत्सिद्धेर्नाप्रसिद्धिः ।

केचित्तु जीवात् भिन्न इत्येव साध्यम् । तथाच नाप्रसिद्धिः । मिथ्याभेदेन सिद्धसाधनं तु निरसिष्यते । यद्वा ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवदिति साधनान्ना-प्रसिद्धिर्नापि सिद्धसाधनम् । नचोभयत्राप्यसाधारण्यम् । तस्यागृह्यमाणविशेषावस्थायामेव दोषत्वादित्याहुः । इतरे तु ब्रह्म जीवप्रतियोगिकतात्त्विकाभेदवन्नेतिसाधनान्नाप्रसिद्धिः । परपक्षेऽपि घटादेर्जीवेन तात्त्विकाभेदाभावादित्याहुः ।

---

॥ अथ जीवब्रह्मभेदानुमानानि ॥ १८ ॥

॥ सर्वज्ञत्वादिति ॥ स्वतःसिद्धसार्वज्ञ्यवत्त्वादित्यर्थः । तेन योगिषु न व्यभिचारः । वस्तुतस्त्वसंकुचितसार्वज्ञ्यस्य योग्यादिष्वसंभावितत्वात् न तत्र व्यभिचार इति ध्येयम् । ननु हेतुसाध्ययोर्भेदस्य सर्वाद्वैतवादिनानभ्युपगमात् कथं तं प्रत्यनुमानोक्तिरित्याशंक्य निराकरोति ॥ एतेनेति ॥ अभावसाध्यकव्यतिरेकिणि साध्याप्रसिद्धिर्नागम । तां विनापि सर्वज्ञत्वादिरूप-हेत्वभावस्य साध्याभावरूपजीवाभेदव्यापकतया ग्रहीतुं शक्यत्वाच्च । यद्वा तद्भूताभावप्रतियोगी हेतुः तदभावस्यैव हेतुना साधनात् । अत एवाकाशादिवर्णनाप्रसिद्ध पर्यवसन्नभेदः साध्यं इत्यभि-प्रेत्याप्रयोजकत्वशंकानिरासपूर्वकमाह ॥ जीवब्रह्माभेद इति ॥ नचाप्रसिद्ध इत्यादिना ग्रन्थ-वक्तव्यम् । अस्यैव प्रपंचनात् ॥ जीव इति ॥ ब्रह्म किंचिद्धर्मिकमित्यर्थः ।(पं)या ॥

अपरे त्विह साध्यस्य जीवप्रतियोगिकतात्विकभेदस्यान्योन्याभावरूपत्वाञ्चाप्रसिद्धि-दोषः । सा हि व्याप्तिग्रहविघटकत्वेन दोषः । पक्षता तु सिषाधयिषाविरहसहकृतसाधक-प्रमाणाभाववत्त्वादिरूपा संदेहानपेक्षा । सापेक्षत्वेऽपि शब्दोऽभिधेय इत्यादाविव जीव-ब्रह्मणोर्भेदे तात्विकत्वमस्ति नवेति संदेहेनैव सा युक्ता । न तु ब्रह्म जीवात्तत्वतो भिन्नं नवेति संदेहसापेक्षा । व्यतिरेकिणि च साध्याभावस्य व्याप्तिः । अत्र च साध्याभावो जीवा-भेदो जीवे प्रसिद्धः । यत्र तु व्यतिरेकिणि भावः साध्यः तत्राभावस्य भावज्ञानाधीनत्वात् सा दोष इत्याहुः ।

यद्वा ब्रह्म जीवात् भिन्नं दुःखाननुभवितृत्वात् घटवदिति प्रयोगाच्चाप्रसिद्धविशेषणत्वा-भावाख्यं । नच मिथ्याभेदेन सिद्धसाधनम् । भेदरूपार्थे साध्येऽर्थशून्यभ्रांत्या सिद्ध-साधनोक्त्ययोगात् । एतदनुमितिविषयतया प्रामाणिकत्वेन सिद्ध्यतो भेदस्य मिथ्यात्वा-योगाच्च । अन्यथा त्वदीयेषु मिथ्यात्वानुमानेषु कल्पितमिथ्यात्वादिना सिद्धसाधनं स्यात् । तात्विकत्वविशेषणेऽपि तात्विकत्वेन कल्पितभेदेन सिद्धसाधनमिति च स्यात् ।

यद्वा ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवत् । दुःखाननुभवितृत्वात् अभ्रां-तत्वात् असंसारित्वाच्च घटवत्, जीवो वा ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान् असर्वशक्तित्वात् असर्वज्ञत्वात् अस्वतंत्रत्वाच्च घटवदिति प्रयोगाच्च दोषः । अत्र च जीवब्रह्म-शब्देन त्वन्मतेऽपि "तत्त्वमसि" इत्यत्र तत्त्वंपदाभ्यां, "जीवाः परमात्मनस्तत्वतो न भिद्यंते आत्मत्वात् परमात्मवत्" इत्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते ते संसाराधारानाधार-चैतन्ये विवक्षिते, ते च मन्ये इति न सिद्धसाधनम् । न च ब्रह्मणो धर्मित्वाभावाद्बाधः ।

---

धर्म्यविशेषोपहितचैतन्यस्यैव जीवत्वात् ब्रह्मजीवाभ्यमेदसिद्धावपि न तात्विकभेदसिद्धिः । विशोधितत्वंपदार्थ एव विवक्षित इति नोक्तदोषः । एतच्चाकर एवाग्रे स्पष्टीभविष्यति ।

ननु व्याप्तिग्रहार्थं साध्यप्रसिद्ध्यनपेक्षत्वेऽपि प्रसिद्धस्यैव साध्यस्य पक्षधर्मतासिद्ध्यर्थं तदपेक्षा स्यादेवेत्याशंक्याह (विना) ॥ पक्षता त्विति । यद्वेति ॥ धर्म्यन्तरेऽपि केचिदित्यादि-नोक्तम् । तथापि हेत्वन्तरकथनाय पौनरुक्त्यं दोष इति । ननु धर्मिसत्तासमानसत्ताकत्वविशेषणे-ऽपि धर्मिणो जीवस्य ब्रह्मणश्च सत्त्वात् सिद्धसाधनमेवेत्याशंक्याह ॥ अत्र चेति । जीवप्रति-योगिकजीवधर्मिकेति ॥ संदिग्धासिद्धिपरिहाराय बहुहेतूपादानम् । दृष्टान्ते साधनवैकल्य-

धर्मित्वाभावं प्रति धर्मित्वाधर्मित्वाभ्यां व्याघातात्। इह धर्मिशब्देनाश्रयमात्रस्य विवक्षितत्वाच्च। धर्मिशब्दस्य च पित्रादिशब्दवत्संबंधिशब्दत्वाच्च मिथ्यात्वं प्रति धर्मिभूतशुक्तिरूप्यसमानसत्ताकप्रातिभासिकभेदेन सिद्धसाधनम्। नहि माता पूज्येत्युक्ते स्वसुतमाता भार्या पूज्यते। धर्मिपदस्थाने स्वपदं वास्तु। सत्तात्रैविध्यं वदतस्तव मतेऽपि ब्रह्मणि बाधाभावरूपाया वा तदुपलक्षितस्वरूपरूपाया वा सत्तायाः सत्त्वाच्च बाधः।

यद्वा धर्मिसत्तासमानसत्ताकेतिपदस्थाने पारमार्थिकेतिवा यावत्स्वस्वरूपमनुवर्तमानेति वा स्वाज्ञानाकार्येति वा स्वज्ञानाबाध्येति वा विशेषणं देयम्। स्वशब्दस्य च समभिव्याहृततत्तदर्थपरत्वस्य व्युत्पन्नत्वाच्च कश्चिद्दोषः। अन्यथा तवापि स्वप्रागभावव्यतिरिक्तेत्याद्ययुक्तं स्यात्। नचात्राद्ये साध्ये दृष्टांतस्य साध्यवैकल्यम्। घटो जीवप्रतियोगिक(स्वज्ञानाबाध्यभेदवानिति टिप्पणमंमतः पाठः।) प्रतियोगिज्ञानाबाध्यभेदवान् जीवधर्मिकधर्मिज्ञानाबाध्याभेदाप्रतियोगित्वात् यद्यज्ज्ञानाबाध्ययद्धर्मिकाभेदाप्रतियोगि तत्तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवत् यथा दूरस्थवनस्पत्योरेकइत्याद्यनुमानेन तत्सिद्धेः।

यद्वा ब्रह्म तत्त्वतो जीवाभिन्नं नेति साध्यम्। एवंच न साध्यवैकल्यशंकापि। त्वन्मतेऽपि कल्पिते घटे अकल्पितजीवात्तात्त्विकभेदवत् तात्त्विकाभेदस्याप्यभावात्। नचांतःकरणस्यैव दुःखानुभवितृत्वात् तदननुभवितृत्वं जीवेऽनैकांतम्। त्वन्मतेऽपि दुःखादेरंतःकरणधर्मत्वेऽपि व्यावहारिकस्य स्वतोऽनर्थरूपदुःखानुभवात्मकबंधस्य मोक्षसामानाधिकरण्याय जीवस्थत्वावश्यंभावात्। त्वन्मतेऽपि यदनर्थरूपमहंदुःखीत्यनुभवितृत्वं जीवस्य तदभावो हेतुरिति न कश्चित्क्षुद्रोपद्रवः। नचामंमात्रिवादेब्रह्मण्यसिद्धिः जीवेऽनैकांत्यं वा। त्वन्मतेऽप्यौपाधिकश्यामत्वादिवत्तस्य व्यवस्थितत्वात्। एवंच जीवेश्वरौ धर्मिज्ञानाबाध्यपरस्परप्रतियोगिकभेदवंतौ विरुद्धधर्माधिकरणत्वात् दहनतुहिनवदित्याद्यपि सुस्थम्। विरोधश्च यद्यपि न सहानवस्थानम्। अद्वैतिनं प्रत्यसिद्धेः। नापि वध्यघातुकभावः। नाजात एकोऽन्यं हंति नाप्यन्याधार इति न्यायेन तस्य भेदासाधकत्वात्। नापि परस्पराभावव्याप्यत्वं परस्पराभावरूपत्वं वा, कालभेदेन नीलरूपं रक्तरूपं नीलरूपप्रागभावं च प्रत्याश्रये घटे

---

परिहाराय धर्मिज्ञानाबाध्येत्युक्तम्। तत्र तस्य भ्रमविषयीभूताभेदप्रतियोगित्वानुक्तदोषनिरासः। एतच्च दृष्टांतं दूरस्थत्वेन विशिषता ग्रंथकृतैव सूचितम्॥ अद्वैतिनमिति॥ एकत्वैव मायया-

व्यभिचारात् । तथापि परस्परात्यंताभावव्याप्यत्वं वा परस्परात्यंताभावरूपत्वं वा काल-भेदेनापि सामानाधिकरण्यायोग्यत्वं वा विरोधः । संयोगतदत्यंताभावयोश्च सामानाधिकरण्यं नेत्याचार्यैर्मतमिति न तदाश्रये व्यभिचारः । तादृशविरुद्धधर्माश्च स्वतंत्रत्वास्वतंत्रत्वादयः । न चासिद्धिः ।

"अल्पशक्तिरसार्वज्ञ्यं पारतंत्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥
स्वाभाविकं तयोरेतन्नान्यथा तु कथंचन"

इत्यादिश्रुतेः । नच कल्पितायाः सार्वज्ञ्यासार्वज्ञ्यादिव्यवस्थाया वर्णे दीर्घत्वह्रस्वत्वव्यवस्था-वत्कल्पितभेदेनैवोपपत्त्या तात्त्विकं भेदं प्रत्यप्रयोजकत्वम्, सगुणवादोक्तन्यायैः श्रुतसार्व-ज्ञ्यादेः ब्रह्मणि प्रत्यक्षप्रामाण्यवादोक्तन्यायैर्नित्यनिर्दोषानुभवरूपसाक्षिसिद्धासार्वज्ञ्यादेश्च जीवे सत्यत्वात् । एवं ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत् पदार्थत्वाद्घटवत् । जीवस्यापि जीवांत-राद्भिन्नत्वात् न व्यभिचारः । चेतनत्वं जीवत्वावच्छिन्नप्रतियोगिताकधर्मिज्ञानाबाध्यभेदव-द्वृत्ति सर्वचेतनवृत्तित्वाचेतनावृत्तित्वरहितत्वाद्वा शब्दार्थत्ववदित्यादीनि चानुमानानि जीवेश्वर-भेदे प्रमाणानि । विपक्षे ब्रह्मणोऽपि जीववत्संसाराद्यापत्तिः । एतेन ।

"अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथंचन ।
प्रमेयस्य त्वनात्मत्वात्तत्र भेदानुमेष्यते ॥"

इति निरस्तम् । त्वन्मतेऽप्यात्मनः शब्दलिंगादिजन्यवृत्तिव्याप्यत्वात् । अन्यथा ।

"अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथंचन ।
प्रमेयस्य त्वनात्मत्वात्तदैक्यानुमितिः कथम् ॥"

इति सुवचत्वेन त्वदीया आत्मभेदे अनुमानोक्तिरयुक्ता स्यात् ।

॥ इति जीवब्रह्मभेदानुमानानि ॥ १८ ॥

---

सार्वज्ञ्योऽप्यङ्गीकारादिति भावः ॥ तद्विपर्यय इति ॥ तेषामुक्तधर्माणां विपर्यय इत्यर्थः । चेतनत्वमप्यत्रास्ति व्यभिचारवारणाय ॥ सर्वेति ॥ पक्षधर्मताभिमहेतौ तत्प्रदयोपादानम् ।

॥ इति जीवब्रह्मभेदानुमानानि ॥ १८ ॥

## ॥ अथ जीवानामन्योन्यं भेदेऽनुमानानि ॥ १९ ॥

जीवानामन्योन्यं भेदे तु चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् । मैत्रानुसंहितदुःखाननुसंधातृत्वात् घटवत् । इह च दहनतुहिनादौ स्वतयानुसंधानाननुसंधानरूपविरुद्धधर्मयोरेव प्रयोजकत्वात् । विमतं सुरभिधूमरहितं चंदनप्रभववह्निरहितत्वादित्यादाविवासिद्धिवारकविशेषणत्वं न दोषः । एवं चैत्रो मैत्रप्रतियोगिकतात्विकाभेदवान्न । मैत्रस्मृतसर्वास्मर्तृत्वात् मैत्रानुभूतसर्वाननुभवितृत्वाच्च घटवत् । विमतो बंधध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठः । बंधध्वंसत्वात् संमतवत् । जीवः संसारी वा संसारध्वंसाधारो वा स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवान् स्वज्ञानाबाध्यसंसारिप्रतियोगिकभेदवान्वा स्वज्ञानाबाध्यसंसारध्वंसाधिकरणप्रतियोगिकभेदवान्वा पदार्थत्वात् घटवत् । विपक्षे बाधकस्य वक्ष्यमाणत्वात् नाभाससाम्यम् । आत्मभेदमात्रे तु आत्मा आत्मप्रतियोगिकस्वज्ञानाबाध्यभेदवान् पदार्थत्वाद्घटवत् । विमत आनंदः स्वनिष्ठदुःखविरोधित्वव्याप्यधर्मेण सजातीयप्रतियोगिकस्वज्ञानाबाध्यभेदवान् दुःखविरोधित्वात् दुःखाभाववत् । आत्मवैभवपक्षे आकाशः आत्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधारविशेषगुणवद्विभुव्यतिरिक्तः द्रव्यत्वात् पृथिवीवदित्याद्यपि द्रष्टव्यम् ।

---

॥ अथ जीवानामन्योन्यं भेदेऽनुमानानि ॥ १९ ॥

॥ मैत्रानुसंहितेति ॥ नचास्य विशेषणस्यासिद्धिवारकत्वाद्वैयर्थ्यमिति वाच्यम् । उक्तविशेषणविशिष्टदुःखानुसंधातृत्वाभावस्याखंडस्यैव हेतुतया व्यर्थत्वशंकानवकाशात् । एतदेवाभिप्रेत्य वक्ति ॥ विमतमित्यादिना ॥ अप्रयोजकत्वमाशंक्याह ॥ इह चेति । मैत्रेति ॥ मैत्रेणास्मर्यमाणविषयकस्मृतिमत्वादित्यर्थः । एवमग्रिमहेतावपि । तेन मैत्रस्मृतपटादिस्मर्तृत्व(त्वावि)विशिष्टोपादानेऽप्यसिद्धिरिति शंका परास्ता ॥ विमतो बंधध्वंस इति ॥ अत्र साध्ये प्रतियोगितावच्छेदकावच्छिन्नेति विशेषणं बंधध्वंसयोरेकात्मवृत्तित्वेन सिद्धसाधन(ता)वारणाय । हेतौ बंधपदं तु प्रागभावध्वंसे व्यभिचारवारणाय । तत्र प्रतियोगितावच्छेदकावच्छिन्नविशेषणं बंधतद्ध्वंसयोरेकात्मवृत्तित्वेन प्रतियोगितावच्छेदकात्मत्वावच्छिन्नाधारस्याकाशादेर्भेदेन सिद्धसाध्याभावात् । ननु देवदत्तः स्वज्ञानबाध्यस्वप्रतियोगिकभेदवान् । पदार्थत्वादित्याभाससाम्यात न भेदमनुमानमित्याह ॥ विपक्षे बाधकस्येति ॥ दुःखविरोधित्वेन स्वसमानजातीयदुःखप्रागभावप्रतियोगिकभेदवत्त्वेनार्थान्तरत्ववारणायाह ॥ दुःखविरोधित्वव्याप्यधर्मेणेति ॥ दुःखविरोधित्वव्याप्यदुःखाभावत्वेन स्वसमानजातीयदुःखप्रागभावप्रतियोगिकभेदवत्त्वेनार्थान्तरवारणाय स्वनिष्ठेति

केचित्तु पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं मेयत्वात् जलत्ववत्। गगनत्वजातिवादिनं प्रति गगनत्वेतरेत्यपि विशेषणीयम्। नचोक्तजातिमत्पदार्थांतरसिद्ध्यार्थांतरम्। लाघवेन क्लृप्ते धर्मिणि धर्ममात्रेणानुमानपर्यवसानात्। सत्ता द्रव्यत्वान्यात्मनिष्ठजात्यन्या, द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत् मेयत्वात् घटत्ववत्। आत्माणुत्वमते, आत्मा द्रव्यत्वव्याप्यजातिमान् अविभुद्रव्यत्वात् पृथिवीवदित्यादिभिरात्मत्वजातिसिद्धौ तात्त्विकात्मभेदसिद्धिः। जातेर्धर्मिज्ञानाबाध्यभेदं विनाऽयोगात्। अन्यथा व्यक्त्यभेदः क्वापि दोषो न स्यात्। विपक्षे आत्मत्वस्य जातित्वे लाघवम्। औपाधिकत्वे तस्योपाधिज्ञानाधीनत्वेन गौरवं बाधकम्। आकाशादिकं तु धर्मिग्राहकमानेनैकतया सिद्धमिति नाकाशत्वं जातिरित्याहुः।

॥ जीवानामन्योन्यं भेदेऽनुमानानि ॥ १९ ॥

---

धर्मविशेषणम्। कालादिभिन्नत्वेन पृथिव्यादिभिन्नत्वेन च सिद्धसाधनतावारणायाह ॥ विशेषगुणवद्भिन्नमिति ॥ आत्मनः पक्षत्वेऽप्युक्तसाध्यपर्यवसानेनार्थांतरवारणायात्मप्रतियोगिकेति भेदविशेषणम्। नन्वेवमाकाशादिकं द्रव्यत्वव्याप्यजातिमत्, द्रव्यत्वात् पृथिवीवदित्यनुमानात् त्वदुक्तविपक्षबाधकतर्कसनाथादाकाशत्वादिजातिरपि सिध्येदित्याशंक्याह ॥ आकाशादिकं त्विति ॥

॥ इति जीवानामन्योन्यं भेदेऽनुमानानि ॥ १९ ॥

## ॥ अथ आत्मभेदेऽनुकूलतर्काः ॥ २० ॥

आत्माभेदे तु अन्योन्यं सुखदुःखाद्यनुसंधानं स्यात् । नचोपाधिभेदोऽननुसंधाने तंत्रम् । हस्तपादाद्युपाधिभेदेऽप्यनुसंधानदृष्टेः । नापि विश्लिष्टोपाधिभेदस्तत्र तंत्रम् । मातृसुखादेर्गर्भस्थेनानुसंधानापातात् ।

"उद्यतायुधदोर्दंडाः पतितस्वशिरोक्षिभिः ।
पश्यंतः पातयंति स्म कबंधा अप्यरीन्युधि ॥"

इतिभारतोक्त्या विश्लेषेऽप्यनुसंधानदृष्टेश्च । नाप्यतीतादिशरीरेष्विव शरीरभेदस्तत्रतंत्रम् । तद्भेदेऽपि बाल्येऽहं दुःखीत्यनुसंधानस्य जातिस्मरणस्य च जन्मांतरेऽहं दुःखीत्यनुसंधानस्य योगिनश्च नानादेहगभोगानुसंधानस्य च दर्शनात् । नच वयं सदा वर्तमानतया अनुभवं स्मरणं वा अनुसंधानं ब्रूमः । किंनाम कदाचित् स्वीयतयानुभवमात्रं । नच तन्नास्त्यतीते सुखादौ । नचांतःकरणरूपोपाधिभेदस्तत्र तंत्रम् । योगिनोंऽतःकरणमेकमेवेति वाच्यम् । चैतन्यैक्येऽप्यंतःकरणभेदादननुसंधानस्य मां प्रत्यद्याप्यसिद्धत्वेन शरीरभेदवच्चक्षुरादिकरणभेदवच्च तद्भेदस्याप्यप्रयोजकत्वात् । त्वन्मते प्रत्यहं सुषुप्तावंतःकरणलयेऽपि पूर्वेद्युरहं दुःखीत्यनुसंधानाच्च सुषुप्तप्रलीनमुक्तानामंतःकरणभेदाभावेन संसारिदुःखाद्यनुभवापाताच्च । नचांतःकरणैकत्वानेकत्वे अनुसंधानाननुसंधानयोस्तंत्रे । मुक्तादेःस्वरूपसुखाननुभवापातात् । अंतःकरणनानात्वेऽप्यनुसंधानस्योक्तत्वाच्च । नचाविद्यारूपोपाधिभेदस्तत्र तंत्रम्, सुषुप्तौ चाविद्यास्तीतिवाच्यम् । उक्तरीत्या ज्ञानप्रागभावभेदस्याप्यप्रयोजकत्वात् । यावंति ज्ञानानि तावंत्यज्ञानानीति मते एकस्मिन्नपि जीवे ब्रह्मविषयकाज्ञानानां भिन्नत्वाच्च, मुक्तस्य संसारिदुःखाद्यनुसंधानापाताच्च । नचाविद्यैकत्वानेकत्वे अनुसंधानाननुसंधानयोस्तंत्रे । मुक्तस्य स्वरूपसुखाननुभवापातात् ।

---

॥ अथात्मभेदेऽनुकूलतर्काः ॥ २० ॥

॥ शरीरभेदस्तत्र तंत्रमिति ॥ अन्यथा तथापि जन्मांतरीयदुःखाद्यनुसंधानापत्तिरिति भावः । ननु शरीरभेदस्य सुखाद्यननुसंधानाप्रयोजकत्वे जन्मांतरीयसुखाद्यनुसंधानं सर्वेषां किं न स्यादित्याशंक्य किमिदानीमनुसंधानमापाद्यते, कदाचिद्वा । नाद्यः । एतादृशस्य मयाप्यनापादनात् । (नेतरः)नोत्तरः इष्टापत्तेरित्याह ॥ नचेति ॥ नन्वेवं सौभर्यादीनामनेकशरीरगतदुःखाद्यनुसंधानं न स्यात् । प्रतिशरीरमन्तःकरणभेदादित्याशंक्याह ॥ योगिनश्चेति ॥ ननु सुषुप्तप्रलीनयोरंतःकरणस्य संस्कारात्मना सत्त्वात्तयोरप्यदुःखानुसंधानमित्याशंक्याह ॥ मुक्ता-

किंचानेकाविद्यासंबंधस्य दुःखानुसंधानरूपानर्थस्य च विशिष्टगतत्वे बंधमोक्षयोर्वैयधिकरण्यापातेन शुद्धगतत्वे वाच्ये यच्छुद्धं चैत्रीयदुःखानुसंधातृ तदेव मैत्रीयदुःखानुसंधात्रिति कथमनुसंधानाननुसंधानव्यवस्था ।

एतेन बिंबप्रतिबिंबयोरवदातत्वश्यामत्ववत् घटाकाशमहाकाशयोः परिच्छिन्नत्वापरिच्छिन्नत्ववत् एकस्यैव नभसस्तत्कर्णपुटावच्छेदेन तत्र तत्र श्रोत्रभाववदौपाधिकभेदेन जीवब्रह्मणोरनुसंधानाननुसंधाने इति निरस्तम् । दुःखानुसंधानरूपस्यानर्थस्योपहितनिष्ठत्वे तस्य कल्पितत्वेन बद्धस्य निवृत्तिरेव न तु मोक्ष इत्यापातात् । दुःखाद्यनुसंधानस्य साक्षिरूपतयोपाधिधर्मत्वाभावेन श्यामत्वादिवैषम्याच्च । प्रतिबिंबस्य छायावद्वस्त्वंतरत्वेनाकाशस्य तु त्वन्मतेऽपि कार्यद्रव्यतया सावयवत्वेन तैजसाहंकारकार्याणां श्रोत्राणां स्वत एव भिन्नत्वेन दृष्टांतासम्मतेश्च ।

एतेनाऽऽत्मेंद्रियमनोयुक्तं भोक्तेत्याहुरिति श्रुतेर्विशिष्टस्यैव भोक्तृत्वात्तस्य च भिन्नत्वाद्व्यवस्थेति कौमुद्युक्तं निरस्तम् । शुद्धचिन्मात्रनिष्ठत्वे तु तत्र भेदाप्रतीत्या कल्पितभेदस्याप्यभावात्, भावे वा भेदस्यैव व्यवस्थारूपस्वकार्यकारिणो वह्न्यौष्ण्यत्ववद्धर्मिज्ञानाबाध्यत्वम्, अभेदस्य व्यवस्थारूपस्वकार्याकारिणोऽनुष्णत्ववन्मिथ्यात्वमित्यापाताच्च । कल्पितभेदहीनस्य मुक्तस्य संसारिदुःखानुभवापाताच्च ।

एतेन नोपहितेऽनुसंधानं किंतु तार्किकमते आत्मनि दुःखाद्याश्रयता देहादिनेवेहापि चिन्मात्रेऽनुसंधातृता अविद्यारूपोपाधिनावच्छिद्यत इति निरस्तम् । तन्मते आत्मन इवात्र चित एवानर्थान्वयेन ब्रह्मदुःखित्वापादकस्य संसारिदुःखस्य सत्त्वेन तद्भावरूपमुक्तेरपुमर्थत्वापातात् नित्यमुक्तब्रह्मश्रुतेर्निर्विषयत्वापाताच्च । विस्तृतं चैतदविद्याश्रयभंगे ।

---

नाभिनेति ॥ नन्वंतःकरणभेदाभावमात्रं नानुसंधानप्रयोजकम् । किंत्वेकांतःकरणवत्त्वमेव । अननुसंधाने भेद एव प्रयोजक इति नोक्तदोष इत्याशंक्य निराकरोति ॥ नचेति । भिन्नत्वाच्चेति ॥ तथाच पूर्वपूर्वोक्तरूपं यथा बालमित्यनुसंधानं न स्यादिति भावः ।

॥ एतेनेति ॥ बंधमोक्षयोर्वैयधिकरण्यापातादिनेत्यर्थः ॥ ते इति ॥ अनुसंधानाननुसंधाने इत्यर्थः ॥ शुद्धचिन्मात्रनिष्ठत्वे त्विति ॥ अनुसंधानाननुसंधानयोरिति शेषः । ननु नित्यमुक्तब्रह्मश्रुतिस्तत्त्वतो बंधाभावपरेति नोक्तदोष इत्याशंक्याह ॥ विस्तृतं चैतदिति ॥ तात्त्विकेनापि संसारेण ब्रह्मदुःखित्वाभावे नित्यमुक्तब्रह्मश्रुतिर्निर्विषया स्यात् । तत्त्वतो बंधाभावस्य सर्वसाधारणत्वेन विशिष्योक्तत्वोमर्दित्यादिना विस्तृतमित्यर्थः ।

नतु किमत्रांशानां जीवानामनुसंधानमापाद्यम्। अंशिनो ब्रह्मणो वा। नाद्यः। हस्तावच्छिन्नेन पादावच्छिन्नदुःखाद्यननुसंधानात्। नांत्यः। तस्याभोक्तृत्वेन भोगाप्रसंगात्। दुःखादिज्ञानमात्रस्य च सर्वज्ञे तस्मिन्निष्टत्वादितिचेन्न तावदाद्ये दोषः। न हि भोगायतनानां सांकर्यमापाद्यते येन पादे मे वेदना शिरसि मे सुखमिति न स्यात्। किंत्वनुसंधानमात्रम्। तच्चांशानामस्त्येव। अन्यथा चैत्रदेहलग्नकंटकोद्धाराय मैत्रस्येव पादे लग्नकंटकोद्धरणाय हस्तव्यापारो न स्यात्। नच पुत्रादाविवोपपत्तिः, दुःखाद्यनुमानपूर्वककृपादेरनुपलंभात्।

एतेन नेत्राद्यवच्छिन्नस्यात्मनः शब्दाद्यनुपलंभवदेकशरीरविशिष्टस्य शरीरांतरेऽननुसंधानमिति निरस्तम्। योऽहं रूपमद्राक्षं सोऽहं शृणोमीत्यनुभवात्। नाप्यंत्ये दोषः। भोक्तृजीवाभिन्नत्वेन ब्रह्मणोऽपि भोक्तृत्वस्यापादनात्। आपादने च प्रमाणविरोधस्यालंकारत्वात्। नचांतःकरणस्य तदवच्छिन्नस्य वानुसंधातृत्वान्न ब्रह्मणस्तदिति वाच्यम्। दुःखभोगस्य शुद्धब्रह्मगतत्वोक्तेः।

एतेनानवच्छिन्ने अभ्रांते च ब्रह्मण्यनुसंधाने तंत्रस्यांतःकरणावच्छेदस्याभावात्, न तस्याहं दुःखीतिभ्रांतिरूपमनुसंधानमिति निरस्तम्। कल्पितस्याकल्पितस्य वा दुःखभोगस्य शुद्धचिद्गतत्वावश्यंभावात् भ्रांतजीवाभिन्नेश्वरस्याभ्रांतत्वायोगाच्च।

एतेनांतःकरणावच्छिन्नान् अनुसंधातॄन्प्रत्यविद्यावच्छिन्नस्यांशित्वात्तस्यैव दुःखानुसंधानम्, नतु शुद्धस्येति निरस्तम्। चिन्मात्रमेवानुसंधात्रित्युक्तत्वात्। अवच्छिन्नस्यानुसंधातृत्वेऽप्यवस्थात्रयानुस्यूताविद्यावच्छिन्नस्यैवानुसंधातृत्वेन तद्द्वारा शुद्धस्यानुसंधानापरिहाराच्च। अंतःकरणावच्छिन्नस्यैवानुसंधातृत्वेऽपि तद्गतस्याऽनुसंधानस्य तदवच्छेद्याविद्यावच्छिन्ननिष्ठत्ववत् अविद्यावच्छिन्ननिष्ठस्य तदवच्छेद्यशुद्धनिष्ठत्वापत्तेश्च।

एतेन यथा स्वकर्णपुटपरिच्छिन्ननादोपलंभेऽपि भागांतरवर्तिनादानुपलंभः तथा सुखदुःखाद्युपलंभानुपलंभाविति निरस्तम्। आत्मभेदे कर्णपुटानां तत्तदीयत्वनियमवत् ऐकात्म्यवादे सर्वदेहानां स्वीयत्वेन तत्तदीयत्वनियमाभावेन स्वीयकर्णपुटद्वयपरिच्छिन्ननादोपलंभवत् सर्वदेहस्थदुःखाद्यनुसंधानस्य दुर्वारत्वात्। नच कर्मणां तत्तदीयत्वेन शरीराणां तत्तदीयत्वम्।

---

॥ अनुसंधानमिति ॥ अन्यसुखाद्यनुसंधानमित्यर्थः ॥ अननुसंधानादिति ॥ अनुसंधाने तु "पादे मे वेदना शिरसि मे सुखम्" इत्यनुसंधानं न स्यात्। हस्तस्यैव पादावच्छिन्नभोगायतनत्वादिति भावः। द्वितीयेऽप्यनुसंधानशब्देन भोग उच्यते ज्ञानमात्रं वेति विकल्प्य नाद्य इत्याह ॥ तस्येति ॥ द्वितीयं निराह ॥ दुःखादिज्ञानमात्रस्येति ॥ ननु पादावच्छिन्नावच्छेदेन

आत्मैक्ये कर्मणामपि तत्तदीयत्वनियमायोगात्। शरीरनियमेन कर्मनियमे त्वन्योन्याश्रयात्।

तदुक्तम्। "सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता।

तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥" इति।

एतेन यत्केनचिदुक्तम्। न सुखदुःखव्यवस्थया भेदसिद्धिः। व्यवस्थाशब्देन धर्मभेदोक्तौ एकस्मिन्नेवैकदेव सुखदुःखदर्शनेन व्यभिचारात्। भिन्नाश्रयधर्मोक्तौ अन्योन्याश्रयात्, विरुद्धधर्मोक्तौ विरोधस्य सहानवस्थानरूपत्वे असिद्धेः। वध्यघातुकभावरूपत्वे "नाजात" इतिन्यायेन भेदासाधकत्वादिति निरस्तम्। व्यवस्थाशब्देनानुसंधानाननुसंधानयोरुक्तेः। तस्मादात्मैक्ये सुखदुःखादिव्यवस्था न स्यादेव। तदुक्तम्।

"सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः।

दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥ १ ॥

नानादेहगभोगानुसंधानं योगिनो यथा।

न चेद्भोगानुसंधानं तदिच्छा योगिनः कुतः ॥ २ ॥" इति।

उक्तं च। "अनुसंधानरहितमैक्यं चेदेकता न तत्।

चैतन्यैक्येऽनुसंधानं प्रमाणं नैव चापरम् ॥" इति।

एवं बद्धमुक्तव्यवस्था पंडितमूर्खव्यवस्था चैत्रप्रमया मैत्रस्य भ्रांत्यनिवृत्तिः, चैत्रानुभूते मैत्रस्यास्मृतिरित्यादिव्यवस्था च न स्यात्। नच तत्तदुपाध्यपगमे तस्य तस्य मुक्तिः। उपाधिसंबंधस्योपहितनिष्ठत्वे आत्मान्योन्यचक्रकाश्रयानवस्थान्यतरापातात्। शुद्धनिष्ठत्वेऽपि किमेकैकोपाध्यपगमो मुक्तिः उत सर्वोपाध्यपगमः। नाद्यः। सदा मुक्तिरेव न तु बंध इत्यापातात्। नान्त्यः। अधुना बंध एव न कस्यापि मुक्तिरित्यापातात्। त्वन्मते इदानीं कल्पितबंधवतः तत्त्वतो मुक्तत्वेऽपि पारमार्थिकः कल्पितोऽप्यनर्थरूपः ज्ञानेनोच्छेद्यो बंधः तद्रहितस्य मुक्तशब्दार्थस्याभावात्। तदेवं नौपाधिकभेदमात्रेण बद्धमुक्तादिव्यवस्था युक्ता ॥

---

यत्कर्म क्रियते तत्तदीयमित्यंगीकारस्तत्रोक्तदोष इत्याशंक्याह ॥ शरीरनियमेनेति ॥ शरीरे तदीयत्वस्य तत्तत्कर्मोपार्जितत्वरूपत्वेनान्योन्याश्रयादित्यर्थः ॥ उपाधिविभिन्नतेति ॥ शरीरविभिन्नतेत्यर्थः ॥ अन्योन्याश्रयादिति ॥ भिन्नाश्रयधर्मस्याश्रयभेदसिद्ध्यधीनत्वादिति भावः ॥ नाजात इति न्यायेनेति ॥ 'नाजातं पक्षोऽयं हंति' इति न्यायेनेत्यर्थः ॥ उपाधिसंबंधस्येति ॥

किंचोपाधेर्भेदकत्वमेवायुक्तम्। तथाहि। उपाधिः किमेकदेशेन संबध्यते कृत्स्नेन वा। आद्ये त्वन्मते स्वाभाविकांशाभावेन औपाधिकत्वे वाच्येऽनवस्था। अंत्ये न भेदकता। कृत्स्नस्यैकोपाधिग्रस्तत्वात्। एवं गगनादावपि स्वाभाविकांशानंगीकारे घटाद्युपाधिसंबंधो न स्यादेव। तदुक्तम्।

"नचेदुपाधिसंबंध एकदेशेऽथ सर्वगः।
एकदेशेऽनवस्था स्यात्सर्वगश्चेन्न भेदकः॥" इति।

॥ इति आत्मभेदे अनुकूलतर्काः ॥ २० ॥

---

यद्यपि "बहूनां जातिपरिप्रश्ने डतमच्" इत्यनुशासनानुसारादनवस्थान्यतमापातादित्येव वक्तुमुचितं, तथाप्यात्माश्रयादिकमाश्रयत्वेनैकीकृत्यैवमुक्तिरिति ध्येयम्।

॥ इति आत्मभेदे अनुकूलतर्काः ॥ २० ॥

## ॥ अथ भेदपंचकेऽनुमानानि ॥ २१ ॥

जडेशभेदे जडजीवभेदे च, ब्रह्म जीवो वा अनात्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्। पदार्थत्वाद्घटवत्, ब्रह्म जीवो वा घटप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, घटासंबद्धकालसंबंधित्वात्, तदसंबद्धदेशसंबंधित्वात्, तज्जनकाजन्यत्वात् पटवत्। ब्रह्म जीवो वा जडप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् जडानात्मकत्वात् यदेवं तदेवं यथा दूरस्थवनस्पत्योरेकः। विपक्षे तु घटसिद्ध्यैव ब्रह्मसिद्ध्या वेदांतवैयर्थ्यम्। ब्रह्मणो जडत्वानित्यत्वाद्यापत्तिः। शुक्तिसमानाधिकरणसंसाराधारस्य जीवस्य जडवन्निवृत्त्यापत्तिः। गौरोऽहमित्यादिज्ञानं च प्रमा स्यादित्यादि बाधकम्।

जडानामन्योन्यं भेदे तु घटस्तत्वतश्शुक्त्यभिन्नो न, शुक्तिसंबद्धकालासंबंधित्वात्, तज्जनकाजन्यत्वात्, शुक्त्यारोपितरूप्यवत्। परमतेऽपि व्यावहारिकभेदस्य सत्त्वान्नासिद्ध्यादि शंक्यम्। अन्यथा भेदसिद्ध्यसिद्ध्योर्दोषतदभावयोश्चाभेदेन स्वक्रियादिविरोधः स्यात्।

अनात्मा स्वावृत्तिधर्मानाधारज्ञानाबाध्यांतर्गणिकभेदवान् पदार्थत्वात् आत्मवत्। विपक्षे दूरस्थवनस्पत्योश्शुक्तिरूप्ययोश्चाभेदग्राहि प्रत्यक्षं तत्त्वावेदकं स्यात्, शुक्तिसंसारादिसांकर्यं च स्यादित्यादि बाधकम्। आत्मनां परस्परमात्मानात्मनोश्च तात्विकभेदे, अनात्मा स्वावृत्तिधर्माधिकरणप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणम्। यत् स्वावृत्तिधर्माधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणं पदार्थत्वात् आत्मवत्, पक्षे स्वावृत्तिधर्माधिकरणमात्मा ततो भिन्नादात्मांतराद्भिन्नत्वेन साध्यसिद्धिः। दृष्टांते तु स्वावृत्तिधर्माधिकरणं जडं

---

॥ अथ भेदपंचकेऽनुमानानि ॥ २१ ॥

॥ जडानात्मकत्वादिति ॥ जडत्वात्यंताभाववत्त्वादित्यर्थः। तेन साध्याविशिष्टत्वशंका निरस्ता ॥ यदेवमिति ॥ यदनात्मकं तत्ततो भिन्नमित्यर्थः। तेन दृष्टांते साधनवैकल्यशंका निरस्ता। ॥ घट इति ॥ हेत्वधिकरणत्वस्यैवात्र पक्षत्वमिति द्रष्टव्यम्। ननु सर्वाभेदे शुक्तिकालसंबंधस्यैव घटकालसंबंधत्वाद्धेतोरसिद्धिरित्याशंक्याह ॥ परमतेऽपीति। स्वावृत्तिधर्मानाधारेति ॥ ननु यत्किंचिद्धर्मानाधारत्वं वा स्वावृत्तिधर्मानाधारत्वं वा। नाद्यः। तादृशाप्रतियोगिज्ञानाबाध्यभेदस्य मयाप्यंगीकारेण सिद्धसाधनात्। नेतरः। अप्रसिद्धेरिति चेन्न। स्वावृत्तिजडत्वादिरूपधर्मात्मनोऽपि प्रसिद्धस्य तदाधारत्वाभावस्य विवक्षितत्वात् ॥ आत्मवदिति ॥ आत्मभेदश्च साधित इति न दृष्टांते साध्यवैकल्यमिति ध्येयम् ॥ सांकर्यं चेति ॥ अभेदश्चेत्यर्थः ॥ यत्स्वा-

ततो भिन्नाज्जडांतराद्भिन्नत्वेन भेदस्य तात्त्विकत्वार्थं प्रतियोगिज्ञानाबाध्येति विशेषणम्। जीवस्य ब्रह्मतो जीवाच्च जडस्य सत्यभेदे, पृथिवी ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणं यदप्त्वाद्यनधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती वस्तुत्वात् अंबुवत्। अप्त्वादीत्यादिशब्देन तत्तद्वादिनः प्रति तत्तद्वादिसिद्धाः पृथिवीत्वादन्ये जडनिष्ठा धर्मा विवक्षिताः। पक्षे ब्रह्मभिन्नाज्जीवाद्भिन्नत्वेन साध्यसिद्धिः। दृष्टांते तु ब्रह्मभिन्नात्पार्थिवाद्भिन्नत्वेनेति ज्ञेयम्। जीवस्य ब्रह्मजीवांतराभ्यां, जीवाच्च जडस्य भेदे, पृथिवी ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणम्। यदप्त्वाद्यनधिकरणं आंतर्गणिकभेदवच्च तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती वस्तुत्वात् अंबुवत्। अत्र जीवस्य जीवांतरादपि भेदार्थं पूर्वस्मादधिकमांतर्गणिकभेदवदिति विशेषणम्। अत्र पक्षे ब्रह्मतः परस्परं च भिन्नाज्जीवाद्भिन्नत्वेन साध्यसिद्धिः। दृष्टांते तु ब्रह्मतः परस्परं च भिन्नात्पार्थिवाद्भिन्नत्वेनेति ज्ञेयम्। जीवस्य ब्रह्मजीवांतराभ्यां जडस्य च जीवाद्ब्रह्मणो जडाच्च भेदे, पृथिवी ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणम्। यदप्त्वाद्यनधिकरणं आंतर्गणिकभेदवच्च तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवत्त्वे सति अप्त्वाद्यनधिकरणासंसारिधर्मिकधर्मिज्ञानाबाध्यभेदप्रतियोगिनी वस्तुत्वात् अंबुवत्। अत्र च ब्रह्मणो जडादपि भेदार्थं पूर्वस्मादधिकमप्त्वाद्यनधिकरणासंसारीत्यादि विशेषणम्। अत्र पक्षे अप्त्वाद्यनधिकरणासंसारिब्रह्मतद्धर्मिकभेदप्रतियोगित्वेन साध्यसिद्धिः। दृष्टांते तु अप्त्वाद्यनधिकरणासंसारि पार्थिवं तद्धर्मिकभेदप्रतियोगित्वेनेति ज्ञेयम्।

---

वृत्तिधर्माधिकरणमिति ॥ नन्विदं विशेषणं व्यर्थम्। नच पक्षस्यापि स्वावृत्तिधर्माधिकरणात्मप्रतियोगिकभेदाधिकरणत्वेन तत्प्रतियोगिकभेदाधिकरणत्वरूपसाध्यस्याभावेन बाधवारणायेति वाच्यम्। उक्तसाध्यस्य जडांतरवद्भिन्नत्वेनापि पर्यवसानसंभवादिति चेन्न। आत्मनां परस्पर भेदसिध्यर्थत्वेनावैयर्थ्यात् ॥ भेदस्य तात्त्विकत्वार्थमिति ॥ आत्मज्ञानाबाध्यत्वस्यैव तात्त्विकत्वरूपत्वादितिभावः। जडस्य जीवात् तात्त्विकभेदसिध्यर्थमाह ॥ यदप्त्वाद्यनधिकरणमिति ॥ नन्वप्त्वादिपदेन पृथिवीत्वस्यापि ग्रहणे दृष्टांतासिद्धिः, एतदनुमानप्रवृत्तेः प्राक् जीवाज्जडस्य भेदासिध्या अप्त्वाद्यनधिकरणजीवभिन्नत्वेन साध्यपर्यवसानायोगात्। भेदसिद्धौ वा एतदनुमानवैयर्थ्यात्। किंच अप्त्वाद्यनधिकरणं वृक्षादप्रत्यक्षत्वेनाभिमतं यद्गन्धकादि तद्भिन्नत्वेनापि साध्यपर्यवसानसंभवात् जीवाज्जडस्य भेदासिद्धिरेवेत्याशंक्याह ॥ अप्त्वादीत्यादिशब्देनेति ॥

भेदमात्रे तु, ब्रह्म भेदहीनं नावतिष्ठते स्वज्ञानाबाध्यभेदवद्वा पदार्थत्वाद्घटवत्, अनात्मा स्वान्यज्ञानाबाध्यभेदाधिकरणम्, पदार्थत्वात् आत्मवत्। ब्रह्मभेदो न सर्वनिष्ठात्यंताभावप्रतियोगी ब्रह्मनिरूप्यत्वात् ब्रह्माभेदवत्, ब्रह्मज्ञानं स्वाबाध्यभेदवद्विषयम् ज्ञानत्वात् शुक्तिज्ञानवत्, घटो घटसंसर्गानवच्छिन्नप्रतियोगिताकघटादिधर्मिकत्रैकालिकाभावप्रतियोगी द्रव्यत्वात् पटवत्। अत्र विपक्षे बाधकानामुक्तत्वात् नाभाससाम्यादि। एवं समानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाधायोग्यो(ध्यो)भेदः परमार्थसन् प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात्, स्वासत्त्वागोचरप्रमां प्रति साक्षाद्विषयत्वात्, आरोपितमिथ्यात्वकत्वात्, कल्पकरहितत्वात्, स्वविषयकसाक्षात्कारात्पूर्वभावित्वाद्वात्मवत्, जीवब्रह्मभेदः परमार्थसन् अनादित्वादात्मवत्। साक्षिवेद्यः सुखदुःखादिभेदः परमार्थसन् अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् आत्मवत्। धर्माधर्मयागदानादिभेदः परमार्थसन् श्रुतितात्पर्यविषयत्वात् ब्रह्मवदित्याद्यूह्यम्। अत्र कंटकोद्धारः जगत्सत्यत्वमानप्रस्तावे कृत इति॥

॥ इति भेदपंचकेऽनुमानानि ॥ २१ ॥

---

ब्रह्मनिष्ठा इत्यनेनानिष्ठत्वेनात्मधर्मस्यापि ब्रह्मभेदेऽप्रसिद्धिरिति शंका परास्ता॥ आत्मवदिति॥ परमते ब्रह्मनिष्ठभेदस्य बाध्यत्वेऽपि अनात्मज्ञानाबाध्यत्वाच्च दृष्टांतासिद्धिरिति ज्ञेयम्॥ घटसंसर्गानवच्छिन्नप्रतियोगिताकेति॥ संसर्गारोप्यसंबंधप्रतियोगिताकेत्यर्थः। तेन तादात्म्यावच्छिन्नात्यंताभावसिध्याऽर्थांतरमिति शंका निरस्ता। दृष्टांते तु तादात्म्यपटात्यंताभावप्रतियोगित्वेन साध्यपर्यवसानं द्रष्टव्यम्। ननु घटो घटसंसर्गतादात्म्यावच्छिन्नप्रतियोगिताकघटधर्मिकत्रैकालिकात्यंताभावप्रतियोगी द्रव्यत्वात् पटवदित्याभाससाम्यमित्याशंक्याह॥ अत्रेति। समानाधिकरणेति॥ भेदमात्रस्य पक्षत्वे प्रातिभासिकभेदांशे बाधः। हेतोरसिद्धिश्चेत्यत उक्तम्॥ अबाध्य इति॥ अबाध्यभेदोक्तौ कर्मप्रागभावसमानकालीनाबाध्यभेदोक्तौ च अप्रसिद्धिरित्यत उक्तम्॥ समानाधिकरणेति। स्वासत्त्वागोचरेति॥ भ्रमविषये प्रतियोगितया बाधकप्रमाविषये अनुव्यवसायविषये च शुक्तिरूप्यादौ व्यभिचारवारणाय क्रमेण विशेषणानि।

॥ इति भेदपंचकेऽनुमानानि ॥ २१ ॥

## ॥ अथ भेदश्रुतेरनुवादकत्वभङ्गः ॥ २२ ॥

किंच "द्वा सुपर्णा, य आत्मनि तिष्ठन्, नित्यो नित्यानां, चेतनश्चेतनानां, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्यादिश्रुतिभिः

"नैतदिच्छंति पुरुषमेकं कुरुकुलोद्वह ।
अन्यश्च परमो राजंस्तथान्यः पंचविंशकः ।
यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ॥"

इत्यादिस्मृतिभिः, "भेदव्यपदेशात्, भेदव्यपदेशाच्चान्यः, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, पृथगुपदेशात्" इत्यादिभिर्निर्णायकसूत्रैश्च सिद्धो भेदः । नच श्रुतिरनुवादः । जगत्सत्यत्वश्रुतेरननुवादकत्वप्रस्तावोक्तन्यायैर्जीवत्वावच्छिन्नजीवभेदस्याप्राप्त्या "न हिंस्यात्" इत्यादिवदननुवादकत्वोपपत्तेः । शास्त्रांतरस्थविधिवाक्यस्येव पुंविशेषं प्रत्यर्थवत्त्वाच्च । "द्वयोः प्रणयंति" इत्यादिवद्वर्तमानमात्रग्राहिप्रत्यक्षाप्राप्तकालत्रयाबाध्यभेदप्रापकत्वोपपत्तेश्च । ऐक्ये षड्विधतात्पर्यलिंगवद्वाक्यार्थत्वाच्च । षड्विंशतिरित्येव ब्रूयादितिवत् प्रतिप्रसवार्थत्वाच्च । प्रत्यक्षस्याप्रामाण्ये श्रुतेरनुवादकत्वायोगाच्च । श्रुतेः प्रत्यक्षनिरपेक्षानुवादत्वेन धारावाहिकद्वितीयादिज्ञानवत् प्रमात्वोपपत्तेश्च । विद्वद्वाक्यवत्सप्रयोजनानुवादत्वेन स्वार्थपरत्वाच्च ।

---

### ॥ अथ भेदश्रुतेरनुवादकत्वभंगः ॥ २२ ॥

इत्यादिश्रुतिभिरित्यादिशब्देन "तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्वतोऽन्यः ।" "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ।" इत्यादिश्रुतिपरिग्रहः । तानेव न्यायान्दर्शयति ॥ जीवत्वावच्छिन्नजीवभेदस्येत्यादिना ॥ किंच श्रुतेः प्रत्यक्षमात्रमेवविषयत्वेऽपि न वैयर्थ्यम् । "षडेकलिंगावगतस्यैक्ये तात्पर्ये लिंगांतरस्येव वाक्यार्थत्वोपपत्तेः" इत्याह ॥ ऐक्य इति । प्रतिप्रसवार्थत्वादिति ॥ प्रत्यक्षसिद्धभेदस्य "नान्योऽतोऽस्ति द्रष्टा" "नात्र काचन भिदास्ति" "नह्यस्ति द्वैतसिद्धिः" इत्यादिना तदपवादप्रसक्तौ पुनस्तत्स्थापनार्थत्वादित्यर्थः । किंच श्रुतेः प्रत्यक्षप्रमानुवादित्वं प्रत्यक्षप्रामाण्यमभ्युपेत्योच्यते न वा । आद्ये प्रत्यक्षेणैव भेदसिद्धिः । अन्त्ये न श्रुतेरनुवादकत्वम् । अमन्य तद्विषयापहारे सामार्थ्याभावादित्यभिप्रेत्याह ॥ प्रत्यक्षस्येति । श्रुतेरिति ॥ यत्प्रमाणं स्वार्थप्रत्यायने कर्मत्वे स्वसमानविषयकप्रमाणांतरमपेक्षते तद्धि तदर्थानुवादः । नहि श्रुतिः जीवेश्वरभेदग्राहकप्रत्यक्षप्रवृत्त्यनंतरमेव स्वार्थप्रत्यायिकेति नियमोऽस्ति । येनानुवादिनीति स्यादिति भावः ॥ विद्वद्वाक्यवदिति ॥

यत्नेत्यादिनिषेधार्थानुवादलिंगाभावेन विधेयांतरभवत्वेन च निषेधार्थानुवादायोगात् । विधानार्थानुवादे चानुवाद्यस्य तात्त्विकत्वनियमाच्च, अनुवादकत्वेऽपि याथार्थ्यरूपप्रामाण्या-हानेश्च ।

किंचौपनिषदस्य ब्रह्मणोऽशास्त्रेणाप्राप्तेः तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः । नच शास्त्रसापेक्षप्राप्त्या शास्त्रस्यानुवादकता, भेदमात्रस्य प्राप्त्यानुवादत्वे तु घटेन घटैक्यस्य प्राप्त्यैक्यश्रुतिरप्यनुवादः स्यात् ।

॥ इति भेदश्रुतेरनुवादकत्वभंगः ॥ २२ ॥

---

यथाहि "य एवं विद्वान् पौर्णमासीं यजते" इत्यादिविधिवाक्यस्य समुदायद्वित्वापादनरूप-प्रयोजनवत्त्वात् स्वार्थपरत्वम्, एवं भेदश्रुतेरपि वादिविप्रतिपत्तिनिरसनरूपप्रयोजनवत्त्वात् स्वार्थपरत्वं युक्तमिति भावः । किंचायमनुवादो निषेधार्थः उत विध्यर्थः । आद्य आह ॥ यत्नेत्यादीति । विधेयांतरेति ॥ "अनश्नन्नन्योऽभिचाकशीति" इति अनशनेऽप्यभिचाकशनरूप-विधेयांतरेत्यर्थः । द्वितीय आह ॥ विधानार्थेति ॥

॥ इति भेदश्रुतेरनुवादकत्वभंगः ॥ २२ ॥

## ॥ अथ भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गः ॥ २३ ॥

नचानुवादकत्वेऽपि बाध्यव्यावहारिकभेदपरा श्रुतिः । अप्रामाण्यापातात् । नचाभेदश्रुतिविरोधात्तदिष्टम् । तस्या लक्षणया अखंडचिन्मात्रपरत्वेन भेदाविरोधित्वात् । वैपरीत्यस्यापि सुवचत्वाच्च । यदि तु भेदश्रुतिः प्रत्यक्षप्राप्तार्थत्वात् दुर्बला, तर्ह्यैक्यश्रुतिरपि तद्विरुद्धत्वात्तथा स्यात् । मानांतरप्राप्तिवत् तद्विरोधस्यापि दौर्बल्यहेतुत्वात् । यदि चैक्यश्रुतिः प्रत्यक्षाविरुद्धैक्यपरा तर्हि भेदश्रुतिरपि तदसिद्धत्रिकालाबाध्यभेदपराऽस्तु । नच षड्विधतात्पर्यलिंगवत्त्वादैक्यश्रुतिः प्रबला, लिंगानां तात्पर्यमात्रज्ञापकत्वेनार्थतथात्वाज्ञापकत्वात् । स्वीकृतं च भेदश्रुतेरनुवादकत्वं त्यजता त्वयापि भेदपरत्वम् । अस्ति चात्रापि "अत्ति अनश्नन् पूर्णः, परो जीवसंघो ह्यपूर्णः" इत्याद्युपपत्तिरूपं, सत्यं भिदा सत्यं भिदेत्यादावभ्यासरूपं च तात्पर्यलिंगम् । तद्बहुत्वं च त्वत्पक्षे प्रमाणसंप्लववत् व्यर्थमित्युक्तम् । वक्ष्यते च भेदश्रुतेरपि षड्विधलिंगवत्ता । निषेधवाक्यत्वात् ऐक्यश्रुतिः प्रबलेति तु निरस्तम् । किंच भेद एवैक्यनिषेधरूपः ।

किंच भेदश्रुतिरेव प्रबला । अनुपसंजातविरोधित्वात्, प्रत्यक्षादिसंवादात्, निरवकाशत्वाच्च । उक्तं हि ।

"स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः ॥" इति ।

---

### ॥ अथ भेदश्रुतेर्व्यावहारिकभेदपरत्वभंगः ॥ २३ ॥

बाध्येत्यस्य विवरणं ॥ व्यावहारिकेति । चिन्मात्रपरत्वेनेति ॥ भेदविरोधिभेदाभावाद्यविषयकत्वेनेत्यर्थः । तद्विशिष्टविषयकत्वे तदुपलक्षितचि(द्विषयत्वे वा.पा.)त्परत्वे वाऽखंडार्थत्वहानिरिति भावः । तात्पर्य(वत्त्व)लिंगवत्त्वादभेदश्रुतेः प्राबल्यं किमर्थम् । तथात्वविषयकत्वेन उत तत्परत्वमात्रेण । नाद्य इत्याह ॥ तात्पर्यलिंगानामिति ॥ द्वितीयेऽर्थसाम्यमित्याह ॥ स्वीकृतं चेति ॥ अनुवादत्यागे अपूर्वार्थत्वेन स्वार्थपरत्वावश्यंभावादिति भावः । नन्वभेदश्रुतौ तात्पर्यलिंगानां बहुत्वादाधिक्यमित्याशंक्याह ॥ अस्ति चेति ॥ वस्तुतस्तु तद्बहुत्वं त्वत्पक्षे व्यर्थमित्याह ॥ तद्बहुत्वं चेति । निरस्तमिति ॥ अग्नीषोमीयपशोर्हिंसाग्रहणसंस्कारत्वप्रतिपादकवाक्येभ्यः अहिंसाऽग्रहणासंस्कारत्वप्रतिपादकवाक्यानां प्राबल्यापातादित्यादिना निरस्तमित्यर्थः । किंच घटः पटो नेत्यत्र भेदः तादात्म्यनिषेधरूप इति भेदश्रुतिरेव प्रबलेत्याह ॥ किंचेति । अनुपसंजात-

क्रियायं भेदो न व्यावहारिकः । मुक्तावपि भेदस्य स्मृतेः श्रुतेश्च । नच सा मुक्तिरवांतरा ।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥"

इत्यादिस्मृतौ सर्गाद्यभावोक्तेः ।

"न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः पिशंगव(स्त्राः सुरुचः सु)स्त्राभरणाः सुपेशसः ॥"

इति स्मृतौ मायानिषेधाच्च ।

"यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ॥"

इत्यत्र शुद्धब्रह्मज्ञानफलत्वोक्तेश्च । त्वयापि शुद्धब्रह्मविषयत्वेन स्वीकृताया भूमविद्यायाः फलोक्त्यवसरे "तस्य सर्वेषु लोकेषु कामचारो भवति, स एकधा भवति त्रिधा भवति पंचधा भवति सप्तधा" इति भेदोक्तेश्च । "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन्क्रीडन्रममाण" इत्यादौ स्वरूपाभिव्यक्त्युक्तेश्च । "तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति" इत्यत्र कर्मक्षयोक्तेश्च । "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादौ भेदज्ञानान्मोक्षोक्तेश्च । त्वन्मतेऽपि भेदभोगादिपरेषु फलाध्यायांत्यपादस्थेषु "जगद्व्यापारवर्जं, संकल्पादेव च तच्छ्रुतेः, भोगमात्रसाम्यलिंगाच्च" इत्यादिसूत्रेषु प्रकांतशुद्धब्रह्मविद्याफलस्यैव वक्तव्यत्वाच्च ।

॥ इति भेदश्रुतेर्व्यावहारिकभेदपरत्वभंगः ॥ २३ ॥

---

विरोधित्वादिति ॥ न चैवं भ्रमस्यापि बाधापेक्षत्वात् प्राबल्यं स्यादिति वाच्यम् । प्रमाणस्य स्वतः प्रथमप्रवृत्तस्य प्राबल्यादिति भावः ॥ विशिष्टस्य इति ॥ मुक्तस्य इत्यर्थः ॥ स्मृतेरिति ॥ "मम साधर्म्यमागता" इति स्मृतेरित्यर्थः । "सह ब्रह्मणा विपश्चिता" इत्यादिश्रुतेश्चेत्यर्थः ॥ त्वयापीति ॥ नच [illegible]मुक्तत्वमिति वाच्यम् । तस्य मुक्तौ भेदाभावसिद्ध्यधीनत्वेनान्योन्याश्रयादिति भावः ।

॥ इति भेदश्रुतेर्व्यावहारिकभेदपरत्वभंगः ॥ २१ ॥

## ॥ अथ जीवेशभेदे शब्दान्तरादि ॥ २४ ॥

किंच पूर्वतंत्रे द्वितीयाध्याये यैः शब्दांतरादिभिः कर्मभेद उक्तः तैरेव जीवेश्वरभेद-

---

॥ अथ जीवेशभेदे शब्दांतरादि ॥ २४ ॥

॥ शब्दांतरादिभिरिति ॥ धात्वादिपदाभ्याससंख्यागुणप्रक्रियानामधेयानां ग्रहणम् । इत्थं हि पूर्वतंत्रे कर्मभेदः साधितः। तद्यथा—"शब्दांतरे कर्मभेदः कृतानुबंधत्वात्"(अ.२ पा.२ सू.१ अधि१) एकप्रकरणगताः यजति ददाति जुहोतयः किमेकां भावनां प्रतिपादयंति उत प्रतिधातु भिन्नामिति संशये यज्यादिधातुरभेदरूपेण शब्दांतरेण यागदानहोमानां भेदेऽपि प्रत्ययांशस्यैकरूपत्वेन भावनाभेदे प्रमाणाभावात् एकस्या एव भावनायाः क्रयभावनायाः ("अरुणया एकहायन्या पिंगाक्ष्या क्रीणाति" इति) आरुण्यादिभिर्यागदानहोमैरवच्छेदसंभवाच्चेति पूर्वः पक्षः । आरुण्यादीनां भिन्नपदोपात्तानां अगृह्यमाणविशेषतया एकक्रयभावनावच्छेदकत्वसंभवेऽपि यजतिसमानपदोपात्तयागावच्छिन्नभावनां प्रत्युत्पत्तिशिष्टगुणविरोधेन दानहोमयोरवच्छेद(क.पा.)त्वासंभवात्, यजत्यादयः पृथक्पृथगपूर्वजनकत्वेन भिन्नां भिन्नां भावनां प्रतिपादयंतीति सिद्धांत इति। "एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्" (अ.२ पा.२ सू.२ अधि.२)। समिधो यजति तनूनपातं यजति, इडो यजति, बर्हिर्यजति "स्वाहाकारं यजति" इति पंचकृत्वोऽभ्यस्ते यजतिपदे किमेका भावना उत भावनाभेद इति संशये इह धातुभेदाभावेनावच्छेदकधातुभेदस्याप्यभावात् "समिधो यजति" इत्यनेन समित्संज्ञको यागो विधीयते। उत्तरवाक्यानां तत्रैव विकल्पिततनूनपादादिनामकदेवताविधायकतया अभ्यासानर्थक्योपपत्तेरेकैव भावनेति पूर्वः पक्षः । सिद्धांतस्तु विधेयसमानपदोपस्थितयागभावनाविषयत्वस्वारस्यस्य "दध्ना जुहोति" इत्यादावप्राप्तगुणश्रवणवैयर्थ्यविशिष्टविधिगौरवस्य च भंगोपगमेऽपि "तनूनपातं यजति" इत्यादौ तनूनपादग्न आज्यस्य" इत्यादिमंत्रवर्णप्राप्तदेवतानुवादकतया तत्परिहारसंभवेन विधिस्वारस्यभंगायोगात् प्रत्यभ्यासं यागभेदस्तदवच्छिन्नभावनाभेदश्चेति । "पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात्" (अ.२ पा.२ सू.२१ अधि ७) "सप्तदश प्राजापत्यान् पशूनालभते" इत्यत्र संशयः । किं सप्तदशपशुद्रव्यकः एको यागः किं वा एकैकपशुद्रव्यकाः सप्तदश यागा इति । तत्र पूर्वः पक्षः "प्राजापत्यान्" इत्यत्र प्रजापतिर्देवता विधीयते । तद्धितेन पशुद्रव्यं बहुवचनेन बहुत्वम् । तत्र तद्धितार्थः पशुबहुत्वेन प्रथममन्वेति पश्चात्प्रजापतिना देवतया संबध्यत इति बहूनां पशूनां व्यासज्यैकदेवतासंबंधेन द्रव्यदेवतासंबंधैक्यात् एको यागः। तत्र प्राजापत्यशब्देन देवताविशिष्टद्रव्याभिधानात् सप्तदश इत्यनेन विशिष्टरूपेण संख्यान्वयः स्यात्, न

स्वरूपेणेति द्रव्यदेवतासंबंधभेदात् तत्रैवकल्प्ययागभेदः स्यादिति वाच्यम्। द्वौ त्रय इत्यत्र स्वरूपेणापि संख्यान्वयदर्शनात्। अन्यथा तत्र चतुर्णां नवानां च प्रतीतिप्रसंगात्। तद्वदिहापि स्वरूपेणैव संख्यान्वयो युक्तो यागैक्यकल्पनालाघवादिति। सिद्धांतस्तु स्वरूपेण संख्यान्वयादेकयागत्वे तत्र प्रकृतिभूताग्नीषोमीयपशोः हृदयं, जिह्वा, वक्षः, शकृत् यकृती(यकृतौ), सक्थ्योः, उभे पार्श्वे दक्षिणे श्रोणी गुदं तृतीयमिति दैवतानि" इति विहितस्यैकस्यैव एकपशुनिष्पाद्यावदानगुणस्यातिदेशतः प्राप्तौ यतः एव(एक)पशोरवदानगुणोऽयं गृहीतः स एव प्राजापत्यः कृतः स्यात् नान्ये षोडशपशव इति। तेषामपि प्राजापत्यत्वलाभायैकस्य यागस्यानेकपशुद्रव्यकत्वोपदेशेन तत्रैकस्यैवावदानग्रहणस्य प्रापकमतिदेशं बाधित्वा सप्तदशावदानग्रहणप्राप्तिः कल्प्या स्यात्। नच विशिष्टरूपेण संख्यान्वयमुपगम्य द्रव्यदेवतासंबंधभेदाद्यागभेदकल्पनया प्रतियागमवदानगुणस्यातिदेशतः प्राप्त्या पशूनां प्राजापत्यत्वोपदेशनिर्वाहे सत्यतिदेशाबाधेन संभवति स्वरूपेण संख्यान्वयाद्यागैक्यमवगम्य तद्बाधकल्पनं युक्तम्। तस्मादेकैकपशुद्रव्यकाः सप्तदश यागा इति"। 'गुणश्चापूर्वसंयोगे वाक्ययोः समानत्वात्" (अ.२ पा.२ सू.२३ अधि.९.)चातुर्मास्येषु "सा वैश्वदेव्यामिक्षा" इति विधायाम्नायते। "वाजिभ्यो वाजिनम्" इति। तत्र संशयः। किं पूर्वसिद्धेवामिक्षायागे वाजिनद्रव्यं विधीयते उत तद्द्रव्यकं कर्मांतरमिति। तत्र पूर्वः पक्षः। वाजिनमन्नमामिक्षारूपं येषामिति वाजिनशब्देन आमिक्षायागदेवतां विश्वान् देवानेव निर्दिश्य तत्संबंधितयोक्तं वाजिनं पूर्वकर्मण्येव विहितं भवति। एवंच गुणमात्रविधानात् विधेयलाघवम्। नचामिक्षा एकस्यैव यागस्योत्पत्तेस्तस्मिन्यागावच्छिन्नभावनायां होमस्यावच्छेदकत्वमिव वाजिनस्य द्रव्यत्वमयुक्तमाकांक्षाविरहादिति वाच्यम्। उत्पन्ने द्रव्ययुक्तस्यापि यागस्य द्रव्यदेवतासंबंधकल्पितयजिपदोपस्थापितस्यापि तस्य निष्कृष्टद्रव्ययुक्तस्वरूपमात्रे अनुवादेनाकांक्षासंभवात्। अभिधानविशेषकृता ह्याकांक्षा, कृता भावना तु प्रत्ययवाच्या। प्रकृत्यननुरक्ता नानुवदितुं शक्यत इति न यागावच्छिन्नायां तस्यां होमस्यावकाश इति वैषम्यम्। तस्मान्न यागभेद इति। सिद्धांतस्तु यद्यपि 'वाजिभ्यो वाजिनम्" इत्यत्र कल्पितेन यजिना आमिक्षायागस्वरूपमात्रं निष्कृष्यते, तथापि तस्योत्पत्तिवाक्यावगतस्यामिक्षाद्रव्यतत्स्वरूपमालोच्यमानं गुणयुक्तमवगम्यत इति नैराकांक्ष्यस्यावगमात् तत्र विशेषाकांक्षाभावात् गुणांतरमात्मनिवेशाय कर्मान्तरोत्पत्तिं गमयति इति युक्तो गुणात्कर्मभेद इति। "प्रकरणांतरे प्रयोजनान्यत्वम्।" (अ.२ पा.३ सू.२४ अधि ११) कुंडपायिनामयनाख्ये सत्रे श्रूयते। "मासमग्निहोत्रं जुहोति" इति। किमनेन नित्याग्निहोत्र एव मासो गुणो विधीयते किं वा कर्मांतरमिति संशये असंनिहितस्यापि नित्याग्निहोत्रस्याग्निहोत्रनाम्नैव "यावज्जीवं जुहोति" इत्यादिना अनारभ्याधीतवाक्ये नत्वप्रकरणगतानां

सिद्धिः । "एष एव जीवं प्रबोधयति एतस्माज्जीव उत्तिष्ठति" इति विरुद्धार्थधातुनिष्पन्नाख्यातरूपशब्दांतरस्य "नित्यः परो नित्यो जीव" इति अप्रत्यभिज्ञायमानपुनःश्रुतिरूपाभ्यासस्य "द्वा सुपर्णा" इत्यादिसंख्यायाः, "अभ्नन्नभन्" इत्यादेर्भेदकस्य गुणांतरस्य "यतो वाचो निवर्तंते" इत्यादिप्रकरणांतरस्य जीवेशावितिनामधेयभेदस्य च सत्त्वात् ।

॥ इति जीवेशभेदे शब्दांतरादि ॥ २४ ॥

---

होमवनां जुहोतिशब्देनैवोपस्थानसंभवात्तेष्वाहवनीय इव तस्मिन्सोमो गुणो विधीयत इति पूर्वः पक्षः । सिद्धांतस्तु "यदाहवनीये जुहोति" इत्यत्र यज्जुहोति तदाहवनीय इति होमानुवादेनाहवनीयविधानात्सन्निहिततया बुद्धावपरिवर्तमानमपि यज्जुहोतीति प्रासवन्निर्देशेन कथंचिद्दूरस्थमप्युपस्थाप्यत इति युक्तम् । इह तु न होमानुवादेन मासविधिः कालस्यानुपादेयत्वात् । नहि होमानुरोधेन मासः संपादयितुं शक्यते । नात्र यो मासस्तत्र जुहोतीति मासहोमस्य विधेयत्वान्न तु तस्यासिद्धवन्निर्देशेन दूरस्थकर्मोपस्थापकत्वम् । तथा सन्निधानमिति प्रकरणांतरानुपादेयसंबंधानुगृहीतात् कर्मभेदे तत्रैवाग्निहोत्रशब्दस्यापि वृत्तिर्युक्तेति कर्मांतरमिति । "संज्ञा चोत्पत्तिसंयोगात्" (अ.२ पा.२ सू.२२ अधि ८) ज्योतिष्टोमं प्रकृत्य श्रूयते । "अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेत" इति । तत्र किं प्रकृते ज्योतिष्टोमे सहस्रदक्षिणाख्यो गुणो विधीयते उत कर्मांतरविधिरिति संशये एतच्छब्दस्य प्रकृतज्योतिष्टोमाभिधायित्वात् तत्रैव गुणविधिरिति पूर्वः पक्षः । संज्ञाभेदेन संज्ञिभेदप्रतीतेरेतच्छब्दस्याप्रक्रियमाणकर्मपरतयाप्युपपत्तेः ज्योतिःसंज्ञकसहस्रदक्षिणकर्मांतरविधिरिति सिद्धांत इति ॥ विरुद्धार्थधात्विति ॥ विरुद्धधातूपरक्त(धातुपुरस्कृत)भेदवाचाख्यातभेदस्येत्यर्थः । तेनाख्यातस्यैकरूपत्वात् कथं शब्दांतरमिति शंका निरस्ता । यद्यपि च विरुद्धधातूपरक्ताख्यातेन प्रबोधनोत्थापनरूपक्रिययोर्भेदः सिध्यति, न तु जीवेशयोस्तथापि विरुद्धक्रियाकर्तृत्वरूपधर्मोपस्थापनद्वारा धर्मिभेदबोधकत्वमविरुद्धमिति ध्येयम् । अग्निहोत्रं जुहोति, दध्ना जुहोतीत्यत्राभ्यासत्वं वारयति ॥ अप्रत्यभिज्ञायमानपुनःश्रुतिरिति ॥ "स्वादत्ति" इत्येनदर्थनोऽनुवदति ॥ अभ्नन्नभन्निति ॥ तप्तायामामिक्षायागे वाजिनलक्षणगुणो निवेशमलभमानः स्वाश्रयमामिक्षायागात् भिन्नमेव कल्पयति । एवमभोक्तृत्वगुणावच्छेदे अकर्तृत्वं निवेशमलभमानं तदाश्रयात्क्रियमेव स्वाश्रयं कल्पयतीत्यर्थः ॥ नामधेयभेदस्येति ॥ "जीवेशा(वाभासेन)वभासेन करोति" इत्यादावित्यर्थः ।

॥ इति जीवेशभेदे शब्दांतरादि ॥ २४ ॥

## ॥ अथ भेदश्रुतेः षड्विधतात्पर्यलिङ्गानि ॥ २५ ॥

संति च भेदश्रुतेरपि षड्विधतात्पर्यलिंगानि । तथाहि । आथर्वणे "द्वा सुपर्णा" इत्युपक्रमः । परमं साम्यमुपैतीत्युपसंहारः । "तयोरन्यः अनश्नन्नन्यः अन्यमीशम्" इत्यभ्यासः । शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्यभेदस्य शास्त्रं विना अप्राप्तेरपूर्वता । "पुण्यपापे विधूय" इति फलम् । "अस्य महिमानम्" इति स्तुतिरूपोऽर्थवादः । "अपि अनश्नन्" इत्युपपत्तिः। अत्र "मायामात्रमिदं द्वैतम्" इत्यादाविव द्विशब्द एव भेदवाचकः तदाक्षेपको वा द्वित्वसंख्यैव वैक्यविरोधिनीत्युपक्रमो भेदविषयः । तद्भिन्नत्वविशेषितमेव तन्निष्ठबहुधर्मयोगित्वं तत्सादृश्यं नतु विशेष्यमात्रम् । नायं सः किंतु तत्सदृशः नायं तत्सदृशः किंतु स एवेति सादृश्यैक्ययोरेकतरविधानायान्यतरनिषेधात् । "गगनं गगनाकारम्" इत्यादि तु तत्सदृशवस्त्वंतरनिषेधपरम् । गगनाद्येकदेशस्य तदेकदेशसादृश्यपरं वेत्युपसंहारोऽपि भेदपरः । अभ्यासत्वे चार्थत एकप्रकारत्वं तंत्रम्, नतु शब्दतः, अतिप्रसंगात् । "पश्यत्यन्यमीशम्" इत्यत्रेशगतान्यत्वं प्रति पश्यतीति प्रकृतो जीवः षदिन्यायेन प्रतियोगितया संबध्यत इति सिद्धोऽभ्यासः ।

एवं "वेत्थ नु त्वं काप्य तमंतर्यामिणम्" इत्युपक्रमः । "एष त आत्मांतर्यामी" इत्युपसंहारः । "एष त आत्मांतर्याम्यमृतः" इत्येकविंशतिकृत्वोऽभ्यासः । अंतर्यामित्वस्याप्राप्त्वादपूर्वता । "स ब्रह्मवित्" इत्यादि फलम् । "तचेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चांत-

---

॥ अथ भेदश्रुतेः षड्विधतात्पर्यलिङ्गानि ॥ २५ ॥

नन्वुपक्रमोपसंहारयोर्भेद[illegible] कथं तयोर्भेदविषयतेत्यत आह ॥ अत्र चेति ॥ कथं तर्हि गगनं गगनाकारमित्यादौ कथं सादृश्य[illegible] इत्याशंक्य निराकरोति ॥ गगनमिति ॥ ननु [illegible] इत्याशंक्याह ॥ अभ्यासत्वे चेति । अतिप्रसंगादिति ॥ "[illegible]" इत्यस्य "[illegible]मुपसंक्रामति" इत्येतदभ्यासो न स्यात्, न स्याच्च "[illegible]भूतानि" इत्यस्य "आनन्देन जातानि" इत्येतदभ्यास इत्यतिप्रसंगादित्यर्थः । [illegible](नी)त्यत्र [illegible] प्रतियोगिविशेषोपस्थापक[illegible] इत्याशंक्याह ॥ अन्यत्वमित्यादि । षदिन्यायेनेति ॥ [illegible]

र्यामिणं ब्रह्मगवीरुद्जसे मूर्धा ते विपतिष्यति" इति निंदारूपोऽर्थवादः। "यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्याद्युपपत्तिः। इयं च श्रुतिर्भेदपरैवेति सूत्रकृतैवोक्तम्। "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इतिसूत्रं भेदपरमिति त्वयापि भाषितत्वात्।

॥ इति भेदश्रुतेःषड्विधतात्पर्यलिंगानि ॥ २५ ॥

---

गृह्णातीत्यत्र कस्य पदमित्याकांक्षायां सन्निहितपशुरेव निरूपकतयान्वेति, तन्न्यायेनेत्यर्थः। उपनिषदंतरे षड्विधतात्पर्यलिंगान्युपपादयति ॥ एवमिति ॥ यद्यप्यत्रांतर्यामित्वमेवोपक्रांतम्। ननु भेदः। तथापि नियामकत्वस्य भेदं विनानुपपत्तेस्तदुपक्रम एव तदुपक्रम इति भावः ॥ भाषितत्वादिति ॥ शारीरो भिन्नोऽन्यद्युभ्वाद्यायतनं यतः उभयेऽपि हि शाखिनः काण्वाः माध्यंदिनाश्चैनं परमात्मानं जीवाद्भेदेन "यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन्नित्यधीयते" इति त्वयापि भाषितत्वादित्यर्थः।

॥ इति भेदश्रुतेः षड्विधतात्पर्यलिंगानि ॥ २५ ॥

## ॥ अथ ऐक्यस्वरूपभङ्गः ॥ २६ ॥

किंच तिष्ठतु भेदः । ऐक्यं किमात्मस्वरूपम् उतान्यत् । नाद्यः । पर्यायत्वैकतरपरिशेषाद्यापत्तेः । सापेक्षस्यैक्यस्य निरपेक्षात्मत्वायोगाच्च । स्वप्रकाशस्यात्मनो विद्यादिसाक्षित्वेन सदा प्रकाशमानत्वेन शास्त्रवैयर्थ्याच्च । न च त्वन्मते अपर्यायत्वादिनिर्वाहको विशेषोऽस्ति । न च भेदभ्रमनिरासार्थं शास्त्रम् । अधिष्ठानाप्रकाशं विना भेदभ्रमस्यैवायोगात् । स्वरूपप्रकाशेन प्रकाशमानेऽप्यात्मन्यज्ञानविरोधिवृत्त्यभावाद्भ्रम इति त्वविद्याविषयभंगे निरस्तम् । अंत्ये ऐक्यं सत्यं मिथ्या वा । आद्ये अद्वैतहानिः । अभावद्वैतमभावस्याधिकरणमात्रत्वं च प्रागेव निरस्तम् । भेदाभावोपलक्षितं आत्मैक्यमित्यपि न युक्तम् । उपलक्षणीभूतभेदाभावस्य सत्त्वे अद्वैतहानिः । मिथ्यात्वे द्वितीयेऽन्तर्भावात् । न द्वितीयः । तत्त्वमसीत्यादेरतत्त्वावेदकत्वापातात् । भेदस्य सत्यत्वापत्तेश्च ।

किंचान्यत्वपक्षे ऐक्यं किमेकत्वसंख्या तन्निष्ठसकलधर्माश्रयत्वं वा तन्निष्ठासाधारणधर्माश्रयत्वं वा भेदाभावो वा तदनिष्ठधर्मानधिकरणत्वं वा । नाद्याः । निर्धर्मके ब्रह्मणि तत्त्वतः संख्याद्यभावात् । न चतुर्थः भेदस्यैक्याभावरूपत्वेनान्योन्याश्रयात् । न पंचमः शून्यस्यापि ब्रह्मैक्यापातात् । विशेषनिषेधे शेषाभ्यनुज्ञानेन सधर्मकत्वापाताच्च ।

किंचाभेदे अभेदत्वपारमार्थिकत्वासद्वैलक्षण्यादीनि तत्त्वतः संति चेत्तैरेव सद्वितीयत्वम्, न चेद्भेदत्वादिहानिरितिदिक् ।

---

### ॥ अथैक्यस्वरूपभंगः ॥ २६ ॥

॥ पर्यायत्वेति ॥ [illegible] न स्यादित्यर्थः ॥ एकतरपरिशेषादित्यादिपदेन [illegible] परिग्रहः । ननु यथा त्वन्मते धर्मधर्मिणोरभेदेऽपि यथा न पर्यायत्वादि तद्वदेव ममापि स्यादित्याशंक्य निराकरोति ॥ न चेति । अधिष्ठानप्रकाशं विनेति ॥ तथा चाधिष्ठानप्रकाश[illegible] शास्त्रवैयर्थ्यमेवेति भावः । ॥ निरस्तमिति ॥ [illegible] मोक्षेऽप्यज्ञानादित्यादिना निरस्तमित्यर्थः । [illegible] । [illegible] नाद्वैतहानिरभावाद्वैतांगीकारात् [illegible] नाद्वैतहानिरित्याशंक्याह ॥ अभावाद्वैतमिति ॥ अभावे [illegible] च [illegible] अपि विशिष्याद्वैत-

न चैक्यस्य दुर्वचत्वेऽप्यात्मस्वरूपमात्रमबाधितमिति वाच्यम् । तन्मात्रस्य सम्मतत्वेन त्वच्छङ्काविषयत्वात् । भेद एव खंड्योऽस्माकं न त्वभेदः साध्य इति तु निरस्तम् ।

॥ इति ऐक्यस्वरूपभंगः ॥ २६ ॥

---

विरोधित्वादित्यादिना सापेक्षस्य निरपेक्षस्वरूपत्वायोगादित्यादिना च निरस्तमित्यर्थः ॥ भेदस्येति ॥ परस्परविरुद्धरूपयोरेकस्य मिथ्यात्वेऽपरस्य सत्यत्व(नित्यत्व)नियमादिति भावः ॥ तत्वत इति ॥ (अ)तात्विकत्वे तूक्त एव दोष इति भावः ॥ निरस्तमिति ॥ अभेद एव खंड्योऽस्माकं नतु भेदः साधनीय इति साम्यादित्यादिना भेदखंडनोद्धारे निरस्तमित्यर्थः ।

॥ इति ऐक्यस्वरूपभंगः ॥ २६ ॥

## ॥ अथ ऐक्यश्रुतेरुपजीव्यबाधः ॥ २७ ॥

यत्त्वेदमुच्यते जीवब्रह्माभेदे "तत्त्वमसि" इत्यादिश्रुतिर्मानम् । यद्यप्यत्र सार्वज्ञासार्वज्ञादिविशिष्टयोस्तत्त्वंपदवाच्ययोरैक्यं जरद्गवादिवाक्यवद्योग्यताविरहान्न युक्तम् । तथापि सोऽयं देवदत्त इत्यादिवद्विरुद्धांशत्यागेन लक्षितयोरैक्यं युक्तम् । उक्तं हि ।

"युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।
अनभिज्ञेऽनर्थकं स्याद्बधिरेष्विव गायनम् ॥" इति ।

इयं च नवप्रकरणी षड्विधतात्पर्यलिंगवत्त्वात्प्रबला । तथाहि । "एकमेवाद्वितीयम्" इत्युपक्रमः । "तत्त्वमसि" इत्युपसंहारः । "तत्त्वमसि तत्त्वमसि" इति नवकृत्वोऽभ्यासः । जीवब्रह्मैक्यस्यान्यतोऽप्राप्तत्वादपूर्वता । "अथ संपत्स्यते" इतिफलम् । "येनाश्रुतं श्रुतं भवति" इत्यादिरर्थवादः । मृत्पिंडादिदृष्टांतैरुपपादनादुपपत्तिरपि । एवं विमता आत्मानः परमात्मनः परमार्थतो(तत्त्वतो)न भिद्यंते आत्मत्वात्परमात्मवदित्याद्यनुमानानि चेति । अत्र ब्रूमः । विरुद्धाकारत्यागः किं अविवक्षामात्रेणानित्यत्वेन वा मिथ्यात्वेन वा । नाद्यः । विरुद्धाकारस्याविवक्षायामप्यनपायात् । न हि "असद्वा इदमग्र आसीत्, सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्या ब्रह्मत्वशून्यत्वयोर्भिन्नजडत्वयोर्वा अविवक्षामात्रेण ब्रह्मणः शून्येन जडेन वैक्यं सुवचम् । न द्वितीयः । तथात्वे तत्त्वं भविष्यसीतिनिर्देशापत्त्याऽसीति वर्तमाननिर्देशायोगात् ।

---

॥ अथ ऐक्यश्रुतेरुपजीव्यबाधः ॥ २७ ॥

ननु जीवेशयोरभेदस्य तत्त्वमस्यादिप्रमाणसिद्धत्वात् तत्स्वरूपं यथाकथंचित् समर्थनीयमित्याशंक्य प्रमाणं विघटयितुमाह ॥ यत्त्वेदमिति । न युक्तमिति ॥ वाक्येन बोधयितुमिति शेषः । युष्मदस्मदर्थयोर्वैलक्षण्यार्थज्ञ इत्यर्थः ॥ गायनमिति[1] ॥ गानमित्यर्थः । ननु भेदश्रुतिविरोधात् कथमस्याः श्रुतेरैक्यबोधकत्वमित्याशंक्याह ॥ इयं चेति । नवप्रकरणीति ॥ नवकृत्वोऽभ्यस्यमानेत्यर्थः ॥ अनपायादिति ॥ विरोधानपायादित्यर्थः । तदेव दृष्टांतमुखेनोपपादयति ॥ नहीति ॥ ऐक्यार्थं अनित्यविरुद्धांशं त्यक्त्वा तथा अनित्यांशत्यागे ऐक्यं नासीदित्युक्तं स्यात् । तथा च वर्तमानतत्त्वमसीत्यैक्याभावेन वर्तमाननिर्देशो न स्यादिति । द्वितीयं दूषयति ॥ न द्वितीय इति ॥ ननु तत्त्वमसीत्यस्यैव त्वमुक्तार्थपरत्वमंगीक्रियते इत्याशंक्याह ॥ दशाभेदेनेति ॥ [illegible] ऐक्याभावेन भेदस्यापि सत्त्वप्रसक्तेरित्यर्थः । ननु न ब्रूमो विरुद्धांशत्यागे

1. गा स्तुतौ इति धातोः ण्युटि कृते आतो युक् चिण्कृतोः इति युगागमे गायनमिति रूपं सिध्यति । कै गै शब्दे इति धातुपाठे गानार्थकमेव भवति । युगागमाभावात् ।

द्ब्रह्माभेदेन भेदाभेदयोः सत्त्वापत्त्या त्वयाप्यनंगीकाराच्च । जीवेशयोः स्वातंत्र्यपारतंत्र्या-देर्नित्यत्वे श्रुत्यादेरुक्तत्वाच्च । न तृतीयः । निर्दोषश्रुतिसाक्षिसिद्धयोर्विरुद्धधर्मयोर्मिथ्या-त्वायोगादित्युक्तत्वात् । सोऽयमित्यादौ तु तत्तादेर्न त्यागः । क्रमेणैकत्र तत्तेदंतयोरविरो-धादित्युक्तम् ।

किंचैक्यश्रुत्या प्रत्यक्षसिद्धं जीवमनूद्य तस्य ब्रह्मत्वं वा श्रुतिसिद्धं ब्रह्मानूद्य जीवत्वं वा उभयानुवादेनाभेदो वा विधेयः । सर्वथाप्युपजीव्यविरोधान्नैक्ये प्रामाण्यम्, प्रत्यक्षेण जीवस्य ब्रह्मतो भिन्नत्वेन श्रुत्या च सर्वज्ञत्वादिना ब्रह्मग्राहिण्या ब्रह्मणस्तद्धीनत्वेनानुभूय-मानाज्जीवाद्भिन्नत्वेन ग्रहणात् । उपजीव्योपजीवकयोर्हि विरोधे न तावद्द्वयोः प्रामाण्यम्, वस्तुनो द्वैरूप्यापातात् । नापि द्वयोरप्रामाण्यम्, वस्तुनो निःस्वभावत्वापातात् । नाप्युपजीव्यस्यैवा-प्रामाण्यम्, दुर्बलेन प्रबलबाधायोगात् । तस्मात्परिशेषादुपजीवकस्यैवाप्रामाण्यम् । तदुक्तम् ।

"शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ।
अनुभूतिविरोधेन कथमेकत्वमुच्यते ॥ १ ॥
सार्वज्ञ्यादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ॥ २ ॥" इति ।

ईश्वरस्यानुमेयत्वेऽप्युपजीव्यविरोध एव । अनुमित्यापि तस्य सर्वज्ञत्वादिनैव सिद्धेः । नचैवं निषेध्यार्पिकेदंरूप्यमितिधीरपि नेदं रूप्यमित्यस्योपजीव्या स्यादिति वाच्यम् । यद्धि यदपेक्षं

---

वैक्यं नास्तीति । किंतु विरुद्धांशस्यैक्याभाव एव नास्तीति । तथाच न निर्देशानुपपत्तिरित्यतो दोषांतरमाह ॥ जीवेशयोरिति । श्रुत्यादेरिति ॥ "एष नित्यो महिमा ब्राह्मणस्य" इति श्रुत्या-देरित्यर्थः ॥ उपजीव्यविरोधादिति ॥ भेदग्राहकसाक्षिविरोधेनेत्यर्थः । ब्रह्मतो भिन्नत्वेन ग्रहणादि-त्युत्तरेणान्वयः ॥ श्रुत्या चेति ॥ जीवव्यावृत्तसर्वज्ञत्वादिविशिष्टतया ब्रह्म बोधयंत्या श्रुत्या जीव-भिन्नमेव ब्रह्म बोध्यत इति तद्विरोधो दुष्परिहर इत्यर्थः । ननूपजीव्योपजीवकयोर्विरोधे उपजीव्येनो-पजीवकस्यैव बाध इति कथम्, वैपरीत्यस्यापि संभवात् । अन्यथा उभयप्रामाण्यं उभयाप्रामाण्यं वा स्यात् इत्याशंक्याह ॥ उपजीव्योपजीवकयोरिति ॥ ननु यदि सर्वज्ञत्वविशिष्टस्ततो जीव-स्येश्वरबोधकश्रुतिविरोधादभेदश्रुतिर्न जीवाभेदं बोधयेत् । किंतु ईश्वरोऽनुमानादेव सिध्यतीति नोपजीव्यशास्त्रविरोध इत्याशंक्याह ॥ ईश्वरस्येति ॥ ननु यत्र यदपेक्षं तद्विरोधे तस्या-

यस्य बाधे स्वस्यापि बाधापत्तिश्च तत्तस्योपजीव्यमिह, तच्च यद्धर्म्यादिग्राहकं स्वप्रामाण्यादिग्राहकं च तदेव नतु निषेध्यार्पकम्। नहि ब्रह्मरूपधर्मिज्ञानाप्रामाण्ये ऐक्यज्ञानप्रामाण्यज्ञानाप्रामाण्ये च ब्रह्मात्मैक्यज्ञानाप्रामाण्यवत् प्रतिषेध्यज्ञानाप्रामाण्ये प्रतिषेधज्ञानाप्रामाण्यं प्रतिषेधस्याप्र(अफला)विपरिलोपापातात्। नचेदं रूप्यमिति धीरपि धर्मिग्राहित्वेनैवोपजीव्या। धर्मिण इदमंशस्यापि नेदं रूप्यमिति प्रत्यक्षेणैव सिद्धेः। नच जीवोऽपि तत्त्वमस्यादिवाक्यसिद्धः। अप्राप्ते शास्त्रस्यार्थवत्त्वात्। अस्तु वेदं रूप्यमिति धीरपि धर्मिग्राहकत्वेनोपजीव्या तथापि नेदमित्यत्रेदमंशमात्रं धर्मि नतु रजतत्वविशिष्टम्। इदमंशमात्रे रूप्यत्वनिषेधेनैवेष्टसिद्धेः। एवं च यदुपजीव्यं तन्न बाध्यम्। इदमंशस्याबाधात्। यच्च बाध्यं रजतत्ववैशिष्ट्यम्, न तदुपजीव्यं रजतत्वविशिष्टस्याधर्मित्वात्। नन्वेवमैक्येऽपि ब्रह्मस्वरूपमात्रं धर्मि न तु सार्वज्ञ्यादिविशिष्टम्। एवं च यदुपजीव्यं न तद्बाध्यं यच्च बाध्यं न तदुपजीव्यमिति चेत्। किं सार्वज्ञ्यादिना भावरूपेणासंसारित्वादिनाऽभावरूपेण वाऽसाधारणधर्मेण ब्रह्मोद्देश्यम्, चित्त्वादिना साधारणधर्मेण वा, स्वरूपेणैव वा। आद्ये स्फुट उपजीव्यविरोधः। द्वितीये चित एव जीवैक्यं सिद्ध्येत्। न तु ब्रह्मणः। तच्च ममापि सम्मतम्। न तृतीयः। शब्देनासाधारणब्रह्मस्वरूपोद्देशस्यासाधारणधर्मेण विनाऽसिद्ध्योपजीव्यविरोधतादवस्थ्यात्। साधारणस्वरूपोद्देशे च ब्रह्मैक्यासिद्धेः।

एतेन न सार्वज्ञ्यादिवाक्यसिद्धं ब्रह्म धर्मि, किंतु निर्गुणादिवाक्यसिद्धमिति निरस्तम्। तत्सिद्धस्याप्युक्तपक्षाबहिर्भावात्। निर्गुणादिवाक्येनापि धर्मिग्राहकविरोधेन गुणनिषेधासंभवाच्च। एतेन सार्वज्ञ्याद्युपलक्षितो धर्मीति निरस्तम्। जीवव्यावृत्तब्रह्मत्वस्योपलक्ष्य-

---

ब्राह्मण्यमित्यभ्युपगम्यते। भ्रमसापेक्षबाधस्यापि भ्रमविरोधे प्रामाण्यं न स्यादित्याशंक्य निराकरोति॥ नचैवमिति॥ इदमंशस्यानंतरं विवक्षितमिति शेषः। नन्वेवमपि बाधस्य भ्रमसापेक्षत्वात् पूर्वदोषानतिवृत्तिः। स्वस्वविषयकज्ञानयोरुपजीव्योपजीवकभावापत्तिश्चेत्याशंक्य तस्यार्थमाह॥ नचेति॥ तयोरुपजीव्यत्वं तदेव विवक्षितमित्युत्तरेणान्वयः॥ अफलापातादिति॥ अप्रामाण्यापत्त्या अफलत्वेत्यर्थः॥ अप्राप्त इति॥ जीवस्य प्रत्यक्षादिनैव सिद्धत्वात् धर्मिग्राहकप्रमाणं शास्त्रमित्यर्थः। ननु इदमंशस्य नेदं रजतमिति बाधेनैव सिद्धिरिति किं विचारेण, भ्रमेणापि तत्सिद्धिसंभवात्। अन्यथा तदाश्रितत्वज्ञानस्य कल्पनयापि न स्यादित्यत आह॥ अस्तु वेति। शुक्ते-

तावच्छेदकत्वे धर्मिग्राहकविरोधात्। चित्त्वस्य तत्त्वे सिद्धसाधनात्। सोऽयं देवदत्त इत्यादौ तु तत्ताविशिष्ट एवोद्देश्यः। यद्वत्तया ज्ञात एव यदन्वयधीः तत्स्वरूपस्य विशेषणत्वस्य तत्तादौ संभवादित्युक्तम्। नच प्रकृतेऽपि संसारित्वेन ज्ञाते ब्रह्मैक्यधीः, तज्ज्ञानस्य प्रमात्वे ब्रह्मैक्यायोगात् भ्रमत्वे चोपजीव्यस्योपजीवकेन बाधापातात्। पुरोडाशकपालेन तुषानुपवपतीत्यत्राधिष्ठानलक्षणायामपि न दोषः। तत्र तुषोपवापस्यान्यतोऽप्राप्त्या तत्र तुषोपवापविधानेनैवेष्टसिद्धिः। इह तु चितो जीवैक्येन नेष्टसिद्धिः। एवंच।

> "चिता चिदैक्यं सिद्धं नः सार्वज्ञादिविशिष्टयोः।
> ऐक्यं तु धर्मिग्राहिभ्यां श्रुत्यक्षाभ्यां विरुध्यते॥"

अन्यथा परमाणुः सावयवः, ईश्वरोऽसर्वज्ञः, आदित्यो यूप इत्यादावप्युपजीव्यविरोधो न स्यात्। उत्पत्तिशिष्टगुणविरुद्धगुणविधेरुत्पत्तिवाक्यविरोधश्च न स्यात्। तत्रापि परमाणुत्वादिविशिष्टो न धर्मी किंतु स्वरूपमात्रमिति सुवचत्वात्। निरवयवत्वादिना विना परमाण्वादेर्धर्मिकरणमेव न सिद्ध्यतीतिचेत् समं प्रकृतेऽपि। सर्वज्ञत्वादिना विनेश्वरस्यापि धर्मिकरणासिद्धेः। आरोपितेन सार्वज्ञादिना व्यावृत्तं धर्मीतिचेत्। तत्राप्यारोपितेन निरवयवत्वादिना व्यावृत्तो धर्म्यस्तु। निरवयवत्वादिग्राहिणः प्रमाणत्वान्न तथेति चेत्समं प्रकृतेऽपि।

---

नेति॥ उपलक्षिताविति। जीवेशाविति शेषः॥ सिद्धसाधनादिति॥ चितः चिद्भेदस्य प्रतियोगिनः स्यैव साधनादित्यर्थः। ननु सोऽयं देवदत्त इत्यादाविवात्रापि स्वरूपमात्रोद्देशेनाप्यभेदसाधनं स्यादित्याशंक्य दृष्टांतं विघटयति॥ सोऽयमिति॥ ननु दर्शपूर्णमासयोः "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र पुरोडाशकपालशब्देन पुरोडाशरूपविशेषणान्विततयोपस्थितस्य कपालतुषोपलक्षणेन शेष्यंतरेणाकांक्षाविरहादन्वयासंभवलक्षणविनियुक्तविनियोगविरोधदोषस्य परिहाराय पुरोडाशकपालशब्दस्य वस्तुतः पुरोडाशश्रपणशेषत्वाधिष्ठाने कपालस्वरूपलक्षणयान्वय(इति) बोधवत् इहापि सर्वकर्तृत्वादिविशिष्टस्याभेदान्वयासंभवात् अधिष्ठानमात्रलक्षणया भेदप्रतीतिरुपपद्यत इत्याशंक्याह॥ पुरोडाशकपालेति॥ तत्र स्वरूपलक्षणायामपि तुषोपवापलक्षणविधेयस्यत्वेन सार्थकत्वेऽप्यत्र लक्षणयाधिष्ठानोपस्थितावपि विधेयांतराभावेन वाक्यवैयर्थ्यं स्यादिति भावः॥ उत्पत्तिशिष्टगुणविरुद्धगुणविधेरिति॥ "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा।" इत्यादौ आमिक्षादिरूपोत्पत्तिशिष्टगुणोत्पत्त्यशिष्टगुणादिविरोधो न स्यादिति भावः॥ बहुश्रुति-

एतेनैक्यश्रुतेर्जीवान्यब्रह्म नास्तीत्यत्र तात्पर्यमिति निरस्तम्। निरीश्वरवादांतर्भावेन बहुश्रुतिविरोधात्। यदि तु सार्वज्ञासार्वज्ञादिके विरुद्धधर्मे सत्यपि चित्त्वादिनैक्यं विवक्षितम्, तन्ममापि सम्मतम्। एतेनैक्यश्रुतेर्लक्षणया चिन्मात्रपरत्वेनैक्यपरत्वाभावाच्च तस्या धर्मिग्राहकत्वेन श्रुत्यादिकमुपजीव्यं न वा तद्विरोध इति निरस्तम्। इष्टापत्तेः। यद्वा येन विना यस्यानुत्थानं तत्तस्योपजीव्यम्। इदं रूप्यमितिधीश्च प्रतिषेध्यार्पकतयोपजीव्यैव, तथापि न दोषः। नह्युपजीव्यत्वमेव प्राबल्ये तंत्रम्। किंतु परीक्षितत्वविशिष्टम्। नचाविशिष्टस्य व्यभिचाराद्विशिष्टमप्रयोजकं भवति। परीक्षा च न तावत्प्रतिषेध्यार्पकशुक्तिरूप्याभेदज्ञानांशेऽस्ति। त्वन्मतेऽपि तस्य व्यावहारिकप्रामाण्यापातात्। इह तु निषेध्यार्पिकापि भेदश्रुतिः साक्षिप्रत्यक्षं च निर्दोषत्वात्परीक्षितम्। इत्थमेव च दोषाभावादिज्ञानरूपपरीक्षायामनाश्वासे प्रमाणतदाभासव्यवस्था न स्यादित्युक्तं प्रत्यक्षप्राबल्यप्रस्तावे। यद्यपि धर्म्यर्पके इदंज्ञानांशे परीक्षितत्वविशिष्टमुपजीव्यत्वमस्ति, तथापि न तद्बाध्यमित्यनुपदमेवोक्तम्। तदुक्तम्।

"भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्य तु।<br>बाधकज्ञानवृत्तिः स्यान्न चैवं सुपरीक्षितेः॥" इति। तस्मादुपजीव्यविरोधात्।<br>"उत्पत्तिवाक्यविज्ञातं कर्म सर्वमनूद्यते।<br>नचाभि(श्रु)तगुणे शक्यं तद्विरोधि गुणांतरम्॥"

इति वार्तिकोक्तरीत्या आमिक्षावाक्योपजीवकस्य वाजिनवाक्यस्य तद्विरोधिगुणविधायकत्ववत् प्रत्यक्षोपजीवकस्य "यजमानः प्रस्तरः" इत्यादेस्तद्विरुद्धयजमानत्वबोधकत्ववच्च तत्त्वमस्यादिवाक्यस्य नैक्यबोधकता युक्ता। तदुक्तम्।

---

विरोधादिति॥ "भिन्नोऽचिन्त्यः परमो जीवसंघात्" इत्यादिबहुश्रुतिविरोधादित्यर्थः॥ श्रुत्यादिकमिति॥ "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुत्यादिकमित्यर्थः॥ इष्टापत्तेरिति॥ भेदस्याविषयत्वेनाप्यभिमतभेदसिद्धेरक्षतत्वादिति भावः। ननूपजीव्यत्वमात्रस्य प्रमाणो सत्त्वेन प्राबल्याप्रयोजकत्वात् परीक्षितत्वविशिष्टस्यप्रयोजकत्वमेव। तच्च तत्परीक्षितत्वाभावादित्याशंक्याह॥ नचेति॥ नचान्यं प्रविशिष्टहेतौ व्यभिचारकारणाच विशिष्टानुपपत्त्या(संभवा)त्(त्वा)दिति भावः॥ परीक्षा चेति॥ दोषाभावज्ञानरूपेत्यर्थः॥ अनूद्यत इति॥ गुणविधानायेति शेषः॥ श्राभितगुण इति॥ तत्त्वविशिष्टगुणान्तरस्य इत्यर्थः। बाधकज्ञानवृत्तिः बाधकज्ञानोत्पत्तिः॥ नचैवमिति॥

"यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥" इति ।

यजमानप्रस्तरादिवाक्यादैक्यश्रुतेर्वैषम्यशंका तु प्रत्यक्षस्य शब्दाबाध्यत्वप्रस्तावे निरस्ता। नैवं भेदश्रुतेरैक्यश्रुतिरुपजीव्या । धर्मिणो जीवस्य प्रत्यक्षेण ईश्वरस्य च सर्वज्ञादिवाक्येन शाब्द-धीप्रामाण्यादेव प्रत्यक्षेणैव सिद्धेः । तस्य च सर्वस्य भेदानुगुणत्वात्प्रतिषेध्यार्पकविरोधस्य च प्रतिषेधशास्त्राप्रामाण्यानापादकत्वादित्युक्तत्वात्। श्रुतिं विनैवैक्यप्राप्तेर्वक्ष्यमाणत्वाच्च। ऐक्य-श्रुतेस्तु निषेध्यप्रसक्तिर्भेदश्रुतिप्रत्यक्षाभ्यामेव । त्वत्पक्षे हि भेदश्रुतिरपि निषेध्यार्पिकैव, नतु सत्यचिन्मात्रपरा, तत्त्वावेदकत्वापत्तेः । निषेध्यार्पकमपि परीक्षितं चेन्न बाध्यमित्युक्तम् ।

एतेन "अभेदं नोल्लिखंती धीर्न भेदोल्लेखनक्षमा ।
तथाचाऽऽद्ये प्रमा सा स्यात्तांत्ये स्वापेक्ष्यवैशसात् ॥" इति निरस्तम् ।

तदुक्तम् "नोपजीव्यो ह्यभेदोऽत्र क्वचिद्भेदश्रुतेर्बलात् ।"

॥ इति ऐक्यश्रुतेरुपजीव्यबाधः ॥ २७ ॥

---

सुपरीक्षिते तु सर्वांशपरीक्षितज्ञाने तु । एवं बाधकज्ञानोत्पत्तेर्न च भ्रमांशाभावादित्यर्थः ॥ अनुपात्त इति ॥ गुणविधानायेति शेषः । अश्रुतगुण इति ॥ उत्पत्तिशिष्टगुणावरुद्ध इत्यर्थः ॥ वैषम्य-शंकात्विति ॥ अद्वैतवाक्यमनन्यपरत्वात् प्रबलं प्रस्तरादिवाक्यं तु न तथेत्यादिवैषम्यशंका-त्वित्यर्थः ॥ निरस्तेति ॥ सत्यपि तात्पर्यलिंगे मानांतरविरोधे प्रस्तरादिवाक्यवत् "सोमेन यजेत" इत्यादिवाक्यवच्चानन्यपरत्वस्यैवायोगादित्यादिना निरस्तेत्यर्थः ।

ननु भेदस्याप्यैक्याभावरूपतया तच्छ्रुतेरप्यैक्यश्रुत्युपजीवकत्वं किं न स्यादित्याशंक्य धर्म्यग्राहकत्वेनोपजीव्यतां निराकुर्वन् प्रतियोगिग्राहकत्वेनोपजीव्यत्वं तु न प्राबल्यप्रयोजक-मित्याह ॥ नैवमित्यादिना ॥ ननु तथापि श्रुतिप्रमाणस्य श्रुत्यैव निषेधे स्यादेवाप्रामाण्यम् । अन्यथा सप्रपंचवाक्यनिषेध्यसमर्पकत्वेऽप्यप्रामाण्यं स्यादिति त्वदुक्तिर्न स्यादित्यतः पक्षांतरमाह ॥ श्रुतिं विनैवेति ॥ ऐक्यश्रुतिरपि चिन्मात्रपरैवेति न तया अभेदश्रुतेर्बाध इत्याशंक्याह ॥ त्वत्पक्षे हीति ॥ ननु तर्हि निषेध्यार्पकत्वादेव तद्विरोधो न दोष इत्याशंक्याह ॥ निषेध्या-र्पकमपीति । एतेनेति ॥ अभेदश्रुतेरनुपजीव्यत्वसमर्थनेनेत्यर्थः ।

॥ इति ऐक्यश्रुतेरुपजीव्यबाधः ॥ २७ ॥

## ॥ अथ तत्त्वमसिवाक्यार्थः ॥ २८ ॥

किंच त्वन्मते पदद्वये लक्षणा, ततो वरं मद्रीत्यैकस्मिंस्तत्पदे त्वंपदे वा अमुख्यवृत्तिः। तथाहि तत्साहचर्यात्तदिति व्यपदेशः। "वसंतादिभ्यष्ठक्" इत्यत्र "साहचर्यात्ताच्छब्द्यं भविष्यति वसंतसहचरितमध्ययनं वसंत" इति महाभाष्योक्तेः। प्रसिद्धं च जीवस्य ब्रह्मसहचरितत्वं द्वा सुपर्णेत्यादौ। यद्वा तदाश्रितत्वात्तदिति व्यपदेशः। समर्थः पदविधिरित्यत्र समर्थपदाश्रितत्वात्पदविधिरुपचारेण समर्थ इति पदेनोच्यत इति महाभाष्योक्तेः। "सर्वाः प्रजाः सदायतना" इतिवाक्यशेषाच्च। अथवा "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिवत् ततो जातत्वात्तदिति व्यपदेशः। "इग्यणः संप्रसारणम्" इत्यत्र "यथा काकाज्जातः काकः श्येनाज्जातः श्येनः, एवं संप्रसारणाज्जातो वर्णः संप्रसारणम्" इति महाभाष्योक्तेः। "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इति वाक्यशेषाच्च।

"ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः।
यथावदच्छ्रुतिस्तद्वज्जीवो ब्रह्मेतिवाग्भवेत् ॥"

इतिस्मृतेश्च। अथवा "धान्यमसि धिनुहि" इत्यत्र तंडुले धान्यशब्दवत् तदधीनत्वात्तदिति व्यपदेशः। "प्राणबंधनं हि सोम्य मन" इतिवाक्यशेषे जीवस्येशाधीनत्वोक्तेः।

"यदधीना यस्य सत्ता तत्तदित्येव भण्यत" इतिभारतोक्तेश्च।

अथवा अतिदेशोऽयं तद्वत्त्वमसीत्यर्थः। "बहुगण" इत्यादिसूत्रे बहुगणवतुडतयः संख्यावद्भवंति अंतरेणापि वतिमतिदेशो गम्यते, अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन वयं मन्यामहे

---

### ॥ अथ तत्त्वमस्यादिवाक्यार्थविवरणम् ॥ २८ ॥

यद्यपि महाभाष्ये वसंताध्ययनशब्देनैव तथा सह तत्सहचरितमध्ययनमुच्यते न तु वसंतशब्देनेति नाम्ना तत्सहचरितत्वात् तच्छब्दोपादानत्वम्, तथापि वसंतशब्देनैव तत्सहचरितत्वमुच्यते। अध्ययनशब्दस्तु तत्र विशेषणोपस्थापक इति ध्येयम्। जीवस्य ब्रह्माश्रितत्वे प्रमाणमाह ॥ सर्वाः प्रजा इति ॥ जीवानां ब्रह्मजातत्वे प्रमाणमाह ॥ सन्मूला इति। प्राणबंधनं हीति ॥ तत्र प्राणमनःशब्दाभ्यां परमात्मजीवावुच्येते। ननु नायमतिदेशः। तद्वत्प्रत्ययादेरभावादित्यत आह ॥ बहुगुणेति। अतोऽयं स्यादिति ॥ योग्यतातिशयादिति भावः। तत्पदस्यामुख्यवृत्त्या

ब्रह्मदर्शनवदयं भवतीति महाभाष्योक्तेः। "सारूप्यम्" (अ.१ पा.४ सू.२३ अधि.१५) इति-जैमिनिसूत्रे "आदित्यो यूप" इत्यादिकं सादृश्यादित्युक्तत्वाच्च। "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति ब्रह्मसूत्रे ब्रह्मगुणयोगाज्जीवे तदिति व्यपदेश इत्युक्तत्वाच्च।

"भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः।
प्रोच्यंते ब्रह्मरूपेण वेदवादेषु सर्वशः॥" इति स्मृतेश्च।

अन्यथा तत्त्वमसीतिवाक्यमबोधकं स्यात्। यथोक्तं महाभाष्ये "यो गामश्व इति ब्रूयात् न जातुचित्संप्रत्ययः स्यात्" इति।

यद्वा शाखासदेशे चंद्रे शाखाशब्दवत् जीवांतर्यामितया जीवसदेशे ब्रह्मणि त्वमिति-व्यपदेशः। "य आत्मनि तिष्ठन्" इत्यादिश्रुतेः। यद्वा "ब्राह्मणो वै सर्वा देवताः" इत्यादिवत् जीवाश्रयत्वाद्ब्रह्मणि त्वमिति व्यपदेशः। यद्वा ब्रह्मणः सर्वकर्तृत्वात् "यजमानः प्रस्तरः" इत्यादिवत्तत्सिद्धया त्वमिति व्यपदेशः॥ एवं च

"तदधीनत्वतादेश्यतात्स्थ्यताद्धर्म्यपूर्वकैः।
निमित्तैस्तत्त्वमस्यादिसामानाधिकरण्यगीः"॥

नचैवं मुख्यार्थत्यागदोषः। अंतर्यामिणि त्वमित्यादेर्मुख्यताया वक्ष्यमाणत्वात्। त्वद्रीत्या पदद्वयलक्षणातः मद्रीत्या एकपदलक्षणाया ज्यायस्त्वाच्च। किंच जहदजहल्लक्षणायां वाच्यांतर्गतत्वेन प्राक्स्वीकृतस्याप्यनंतरमनुपपत्तिदर्शनेन त्यक्तस्य पुनःस्वीकारः। जहल्लक्षणायां तु अधीशस्याप्यत्यक्तस्यैव स्वीकारः। त्यक्तस्वीकारादपि वरं अधीशस्वीकारः। एवंच।

---

जीवपरत्वमुपपाद्य संप्रति त्वंपदस्य ब्रह्मपरत्वमुपपादयति॥ यद्वा शाखासदेश इत्यादिना॥ जीवसदेशत्वे प्रमाणमाह॥ जीवांतर्यामितयेति। ब्रह्मण इति॥ तथाहि "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसंति" इत्यादिश्रुतिप्रतिपन्नं सर्वदेवाश्रयत्वमादाय ब्राह्मणे देवताशब्दवत् य आत्मनि तिष्ठन्नित्यादिश्रुतिप्रतिपन्नं जीवस्य ब्रह्माधिष्ठानत्वमादाय ब्रह्मणि जीवपरत्वंशब्दप्रयोग इति भावः। ननु त्वदभिमतैकपदे जहल्लक्षणापेक्षया पदद्वयेऽपि जहदजहल्लक्षणैव युक्ता। सर्वथा मुख्यार्थत्यागादित्याशंक्य जहदजहल्लक्षणापेक्षया जहल्लक्षणाया ज्यायस्त्वं प्रतिपादयति॥ जहदजहल्लक्षणायामित्यादिना। तदिति॥ "तत्त्वमसि" इत्यत्र तत्पदस्य मुख्यवाच्यत्वाभ्युपगमे "तत्तेजोऽसृजत तदन्नमसृजत" इत्यादौ तत्पदार्थस्य शुद्धस्य जगत्कारणत्वाभावेन

"एकस्यामुख्यवृत्त्यैव तत्त्वमित्यस्य संभवे ।
भेदेनैवैक्यपरतानेकलक्षणया कुतः" ॥

नच सदेवेत्यादिवाक्ये लक्षणया प्रकृते शुद्धे प्रकृतवाचिनस्तत्पदस्याऽभिधेयेति वाच्यम् । शुद्धस्यावाच्यत्वात् । तदित्येकपदलक्षणानिरासाय "तदैक्षत तत्तेजोऽसृजत" इत्याद्यनेकपदलक्षणायोगाच्च ।

यद्वा "सुपां सुलुक्" इत्यादिना तृतीयाविभक्त्यादेर्लुक्, प्रथमैकवचनादेशो वा । ततश्च तेन त्वं तिष्ठसीति वा, ततस्त्वं जात इति वा, तस्य त्वमिति वा, तस्मिंस्त्वमिति वार्थः । "अनेन जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति, सन्मूलाः सोम्येमाः सर्वाः प्रजाः, ऐतदात्म्यमिदं सर्वम्" इत्यादिवाक्यशेषात् । मीमांसकैः "उत यत्सुन्वंति सामिधेनीस्तदन्वाहुः" इत्यत्र यत्र सुन्वंति तत्र हविर्धाने स्थित्वा सामिधेनीरनुब्रूयादिति सप्तम्यर्थे प्रथमास्वीकाराच्च । न्याय्यं च निरवकाशप्रधानभूतानेकप्रातिपदिकस्वारस्याय संख्यार्थत्वेन सावकाशाप्रधानैकविभक्त्यस्वारस्यम् । प्रोद्गातॄणामित्यत्र तु विभक्त्यंतरे प्रथमैकवचनस्यैव षष्ठीबहुवचन-

---

तस्मिन् लक्षणा स्यात् । तथाप्युक्तम् । एकपदलक्षणापरिहाराय अनेकपदलक्षणाश्रयणापत्तेः । उक्तार्थे वाक्यशेषानुगुण्यं दर्शयति ॥ अनेन जीवेनेत्यादिना । ऐतदात्म्यमिति ॥ इदं सर्वं एतदात्माधीनमित्यर्थः । ननु प्रधानभूतप्रातिपदिकानुसारेण विभक्त्यर्थस्वारस्यांगीकारो न युक्तः । तथाच कथं प्रातिपदिकानुसारेण विभक्त्यस्वारस्यांगीकार इत्याशंक्याह ॥ उत यत्सुन्वन्तीति ॥ "उद्गातृचमसमेकस्य श्रुतिसंयोगात्" (जै सू अ. ३ पा. ५ सू. २३ अधि ७) इत्यधिकरणविरोधात् । तत्र ह्येवं विचारितम् । "प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रैतु सदस्यानाम्" । इति श्रूयते । तत्र सन्ति हविर्धानवितारः स्थितास्तत्र भक्षणीयानां चमसानां नयनार्थं अध्वर्योरयं प्रैषः । प्रवोद्गातॄणामित्यस्माद्वाक्याद् उद्गातृचमसभक्षे स्थिते किं स एक एव भक्षयेत् उत तेन सहैकलोकसंबंधिनौ प्रस्तोतृप्रतिहर्तारावपीति संदेहे उद्गातृशब्दश्रवणात् स एक एव भक्षयेत् बहुवचनं तु प्रातिपदिकमुख्यार्थस्यानुसारेण तथैव व्याख्येयमिति पूर्वः पक्षः । सिद्धांतस्तु उद्गातृगणवर्तिषु सत्सु त्रिष्वपि उद्गातृशब्दस्य ... प्रयोगात् संभावितार्थतया बहुवचनस्वारस्ये संभवति न तस्यान्यथासाधनं युक्तम् । तस्मात् त्रयोऽपि भक्षयेयुरिति । ॥ प्रोद्गातॄणामिति ॥ तथाच प्रातिपदिकस्य प्राधान्येऽपि सुब्विभक्तौ लक्षणाश्रयेण

स्वान्यत्राविधानात् बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छंदोगेषु लक्षणाश्रिता । दृष्टं च "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्र प्रयाजशेषप्रातिपदिकस्वारस्याय प्रयाजशेषं हविःषु प्रक्षिपतीति विभक्त्यस्वारस्यम् । एवंच ।

अवकाशोज्झितानेकमुख्यनामानुसारतः ।
युक्तोऽस्तादृग्विभक्तेर्हि बाधः प्रयाजशेषवत् ॥

यद्वा तस्य त्वमित्यर्थे तत्त्वमिति समस्तं पदम् । यद्वा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्यत्र तदित्यनेन नात्मा परामृश्यते । किंत्वैतदात्म्यम्, नपुंसकलिंगत्वात् । ऐतदात्म्यमित्यस्य चैष चासावात्मा च एतदात्मा तस्येदं ऐतदात्म्यम् । एतदीयं वस्तु त्वमसीत्यर्थः । परमते हि एतत् सत् आत्मा यस्य तदैतदात्म्यमिति व्याख्यातत्वात् भावप्रत्ययो व्यर्थः । ततो वरमर्थांतराश्रयणम् । विचित्रा हि तद्धितगतिरिति वचनात् ।

"स स्रष्टा चैव संहर्ता नियंता रक्षिता हरिः ।
तेन व्याप्तमिदं सर्वमैतदात्म्यमतो विदुः ॥" इतिस्मृतेश्च ।

---

निरवकाशविभक्त्यनुसारेण प्रातिपदिकस्य नयनं तत्र युक्तम् । अत्र तु विभक्तेः सावकाशत्वात्तथेति भावः। यदि चैवं न स्यात् "अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात्" (अ.४ पा.१ सू.३३ अधि.१४) इति चतुर्थाध्यायाद्यपादाधिकरणविरोधः स्यादित्याह ॥ दृष्टश्चेति ॥ तत्र हि दर्शपूर्णमासप्रकरणस्थं "प्रयाजशेषेण हवींष्यभिघारयति" इत्यादिवाक्यमुदाहृत्य चिंतितम् । किमत्र प्रतिपाद्यमानमभिघारणं हविषां संस्कारः उत प्रयाजशेषस्यैव प्रतिपत्तिरिति संशये द्वितीयया हविषां संस्कार्यत्वेन प्राधान्यावगमात् तत्संस्कारः । न तु प्रयाजशेषस्य प्रतिपत्तिः । तृतीयानिर्दिष्टस्य गुणत्वेन प्रतिपाद्यत्वायोगादिति पूर्वपक्षयित्वा प्रतिपत्तिरेव युक्ता शेषशब्दश्रवणात्। उपयुक्तशेषस्य हविर्द्रव्यस्य कश्चित् धारणरूपा प्रतिपत्तिरपेक्षिता न तु हविःसंस्कारः । अतः प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यार्थकल्पनया प्रतिपत्तिरेव प्राप्नोति सिद्धांत इति ॥ नामानुसारत इति ॥ प्रातिपदिकानुसारत इत्यर्थः । ननु ष्यञ्प्रत्ययस्य भावार्थकत्वात् भावप्रत्ययानुशासनात् कथं तत्संबंधि वस्तुपरत्वमित्यत आह ॥ विचित्रा हीति ॥ [illegible] । तद्धितं तु त्वंशब्दस्य ब्रह्मशरीरभूतात्मवाचिनः आत्मशरीरकब्रह्मपरत्वांगीकारे आत्मशरीरकं तदित्यर्थः स्यात् । एवं चास्मीति मध्यमपुरुषप्रयोगानुपपत्तिः ब्रह्मात्मसंप्रतिपत्तिश्च । नच मनुष्योऽहमस्मीति प्रयोगानुपपत्तिः । तस्य

केचित्तु शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यंतत्वदर्शनात्, जीवस्य च यस्यात्मा शरीरमित्यादिश्रुत्येश्वरशरीरत्वात् तत्त्वमिति व्यपदेशः शरीरशरीरिभावनिबंधन इत्याहुः। इतरे तु आदित्यो ब्रह्मेत्यादिवत् जीवे ब्रह्मत्वोपासनार्थस्तत्त्वमसीति निर्देशः नतु वस्तुतत्त्वनिष्ठ इत्याहुः।

यद्वा स आत्मा तत्त्वमसीत्यत्र यद्यपि द्वेधा पदच्छेदः संभवति तथापि शब्दो नित्य इत्यत्रानित्यघटदृष्टांतेनानित्य इतिच्छेदवत् अत्रापि भिन्नशकुनिसूत्रादिदृष्टांतैरतदिति च्छेदः। नहि आद्ये खंडे स यथा शकुनिः सूत्रेण प्रबद्ध इत्युक्तयोः शकुनिसूत्रयोः षष्ठे लवणमेतदुदक इत्यादिनोक्तयोः लवणोदकयोः सप्तमे पुरुषं सोम्य गंधारेभ्य इत्यादिनोक्तयोः पुरुषगंधारदेशयोः नवमेऽपहार्षीत्स्तेयमकार्षीदित्यादिनोक्तयोः स्तेनापहार्ययोरैक्यम्, स्तेनापहार्यदृष्टांते हि स्पष्ट ऐक्यज्ञानिनोऽनर्थः। परकीयब्रह्मत्वाभिमानी हि स्तेनः। नतु विद्यमानब्रह्मत्वाज्ञानी। नच सत्यानृताभिसंधिमात्रमिह विवक्षितम्। तथात्वे सत्यानृतवाग्दृष्टांतेन पूर्वैरपहार्षीत्स्तेयमकार्षीदित्यपहारदृष्टांतायोगात्। आद्यखंडे सुषुप्तविषये स्वमपीतो भवतीत्यत्र ब्रह्मणि स्वशब्दो न जीवाभेदाभिप्रायः।

स्वातंत्र्यात्स्व इति प्रोक्त आत्मायं चाततत्वतः।
ब्रह्मायं गुणपूर्णत्वात् भगवान्विष्णुरव्ययः॥

इतिश्रुतेः आत्मीयार्थत्वसंभवाच्च। अपीतो भवतीत्यस्यापि तिरोहितः सन् प्राप्तो भवतीत्येवार्थः। न त्वभिन्न इति। अपेरपिधाने इणश्च गतौ निष्ठायाश्च कर्तरि शक्तेः ब्रह्मत्वादैक्ये

---

गौणत्वेन शरीरविशिष्टवाचकत्वेन वा उपपत्तेः। वस्तुतस्तु जीवस्य न ब्रह्मशरीरत्वं मानाभावात्। नच "यस्य शरीरम्" इत्यादिश्रुतिस्तत्र मानमिति वाच्यम्। तत्र तच्छरीरत्वोक्तेस्तद्विषयत्वमात्रनिबंधनत्वात्। नच मुख्यत्वे बाधकाभावः। चेष्टाश्रयत्वे सति अंत्यावयवित्वरूपशरीरत्वस्य तत्र बाधात्। [illegible] स्वसमानजातीयावयव्यन्तरानारंभकत्ववद्व्यत्वम्। तेन [illegible] उपर्युपरि विन्यस्तेष्व[illegible] कुम्भारंभकत्ववत् शरीराणां तथाविध(कीकटा)कृकटाद्यारंभकत्वासंभव इति निरस्तम्। नच चेष्टाश्रयत्वं शरीरत्वम्। शरीरावयवावयवेष्वतिव्याप्तेः। [illegible] स्वतंत्रत्वनिरूपणावसर इति। "अचेतनासत्याय्ययु[illegible]व्याम्" इति सांकर्यकल्पनात्, "ब्रह्मोपासनया, [illegible] जना" इत्यादिश्रुते[illegible] सूचयति॥ इतरे त्विति॥ ननु सुषुप्तिविषये "सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति" इति वाक्ये जीवब्रह्मणोरैक्यमेवाभिधीयते इति [illegible] त्वमसीत्यत्र अपीत इत्यनेन ऐक्यमिति [illegible] सूचयति॥ आद्यखंड इति। आत्मीयेति॥ [illegible]

योगरूढ्योरभावाच । ऐक्यार्थत्वे अपीत इत्यस्य भवतेश्चाकर्मकत्वेन श्रुतद्वितीयायोगाच । अश्रुततृतीयाकल्पनाप्रसंगाच ।

"स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे ॥" इति स्मृतेश्च ।

"यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतः संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवायं पुरुष" इतिसुषुप्तिविषयश्रुत्यंतरे भिन्नश्येननीडदृष्टांतोक्तेश्च, "प्राज्ञेनात्मना संपरिष्वक्त" इति सुषुप्तौ भेदश्रुतेश्च । त्वन्मतेऽपि भेदपरेण "सुषुप्त्युत्क्रांत्योर्भेदेन" इति-सूत्रेण विरोधाच । त्वत्पक्षेऽपि जागरण इव सुषुप्तावप्याविद्यकजीवब्रह्मभेदस्य सत्त्वाच । नच द्वितीयखंडे "नानात्ययानां वृक्षाणां रसानां" इत्यादिनोक्तानां नानावृक्षरसानाम् तृतीये "इमाःसोम्य नद्यः" इत्यादिनोक्तयोर्नदीसमुद्रयोश्चैक्यं शंक्यम् । नहि नानावृक्षरसा अन्योन्यं भेदत्यागेन प्राक्सिद्धेन मधुनैक्यमापद्यंते नवा प्रागभेदभ्रांतिविषयाः पश्चात्तदविषयाः, किंतु तंतव इव पटं अन्योन्यं भिन्ना एव प्रागसिद्धं मधूत्पादयंति । नचेदं दार्ष्टांतिकानुगुणम् । नदीसमुद्रदृष्टांतेऽपि किं नदीसमुद्रावयविनोरैक्यम्, किं वा तदवयवजलाणूनां उत द्रव्यांतरारंभः । नाद्यद्वितीयौ । माषराशौ प्रक्षिप्तमाषतदवयवानामिव क्षीरे प्रक्षिप्तनीरतदवयवानामिव चान्योन्यं मिश्रीभावेऽपि प्राग्भिन्नानां पश्चादप्यैक्यायोगात् । "ता एवापो ददौ तस्य स मुनिः संशितव्रतः" इति कौर्मे या इंद्रकमंडलुस्था आपः स्वकमंडलौ निक्षिप्तास्ता एव वसिष्ठो दत्तवानित्युक्तेश्च । सप्तनदीनां मिश्रीभूतानामपि पुनर्वि(यु)भज्य समुद्रगमनदर्शनाच

---

प्रसिद्धत्वादितिभावः । द्वितीयं निराह ॥ अपीत इति । द्वितीयायोगादिति ॥ स्वमिति द्वितीयायोगादिति भावः । अपीत इत्यस्य प्राप्त्यर्थत्वं उपबृंहणबलादभ्युपगंतव्यमित्याह ॥ स्वं कुलायमिति ॥ ननु यदि भिन्नशकुनिसूत्रादिदृष्टांतेनाविविक्तत्वं कथं तर्हि "यथा सोम्य मधु मधुकृतो निस्तिष्ठंति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां रसं गमयंति ते यथा तत्र न विवेकं लभंते अमुष्याहं वृक्षस्य रसो अमुष्याहं वृक्षस्य रसोऽस्मीति, यथा सोम्य नद्यः पुरस्तात्प्राच्यः स्यंदंते पश्चात्प्रतीच्यः ताः समुद्रात् समुद्रमेवापियंति स समुद्र एव भवति ते यथा तत्र न विदुः इयमहमस्मीयमहमस्मीति" इत्यैक्यपरदृष्टांतोपपत्तिरित्याऽऽशंक्याह ॥ नचेति ॥ ननु न ब्रूमः प्राक् भिन्नयोः पश्चादैक्यमिति किंतु भेदभ्रमनिवृत्तावभेदावभास इत्यतो न विरोध इत्याशंक्याह ॥ नचेति ॥ अमुष्याहं रसोऽस्मीति भेदज्ञानाभावेऽपि प्राग्विद्यमानभेदज्ञानस्य

"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" इति सावधारणश्रुतिविरोधात्।
"उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्।
नचैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥"

इति सयुक्तिकस्मृतिविरोधाच्च। समुद्रे तु महत्त्वाद्वृद्ध्यदर्शनम्। पूतापूतयोः शीतोष्णयोर्मधुर-लवणयोर्जलयोर्मेलने उभयगुणदर्शनाच्च। "ताः समुद्रात्समुद्रमेवापियंति" इति अवधित्वादि-निर्देशायोगाच्च। वाचस्पतिनापि "अवस्थितेरिति काशकृत्स्नः" इतिसूत्रे नदीसमुद्राभेदस्य निरस्तत्वाच्च। भेदाज्ञानं तु क्षीरनीरयोरिव व्याभिश्रीभूतसवर्णताम्रादेरिव च मिश्रीभावाद्युक्तम्। अन्त्ये न कस्यापि केनाप्यैक्यं दार्ष्टांतिकाननुगुण्यं च। "ताः समुद्रात्समुद्रमेवापियंति स समुद्र एव भवति" इत्यत्रापि प्रकृतनद्यादिभ्य समुद्रभवनविधाने ते तंडुला ओदनं भवंतीतिवत् ताः समुद्र एव भवंतीति स्यात्। अतो नद्यः नियतजलराशिरूपात्स्वातरूपाद्वा देवतारूपाद्वा समुद्राद्गच्छंति तं प्रविशंति च, समुद्रस्तु स एव नैतासां समुद्रत्वमिति वा स समुद्र एव नतु नद्यास्वं प्राप्नोतीति वार्थः। तस्मात्स्वतोऽप्यन्योन्यं भेदस्याज्ञान एव इमौ दृष्टांतौ। अत एव नानारसवाक्ये दार्ष्टांतिके "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामह इति, त इह व्याघ्रो वा" इति नदीसमुद्रवाक्ये च दार्ष्टांतिके "सत आगम्य न विदुः सत आगच्छामह इति, त इह व्याघ्रो वा" इति सतो भेदस्याज्ञानेनैवानर्थ उक्तः। नहि

---

भमन्ये मानाभावादिति भावः। ननु यत्र वृद्धिर्दृश्यते तत्र भेदो मा भूत्। समुद्रे च वृद्धेरदर्शनान्नदी-समुद्रयोः अभेदः स्यादित्याशंक्याह ॥ समुद्रे त्विति। वाचस्पतिनापीति ॥ "यथा सोम्येमाः नद्यः" इति नदीनिदर्शनेन कथित् जीवाभिन्नमपि नामरूपं स्वाभाविकं विज्ञायते। अतो जीव-ब्रह्मणोः संसारदशायां भेद एव अभेदव्यपदेशस्तु मुक्तौ भविष्यन्तमभेदमपेक्ष्येति "उत्क्रमिष्यत एवंभावादित्यौडुलोमि"रिति सूत्रार्थं तदेतदाचार्यदेशीयमतमुक्त्वा आचार्यमतमाहेत्युत्तरसूत्राव-तारिकागतेन प्राग्भिन्नयोः पश्चादभेदो न संभवतीत्यर्थकेनाभक्षितुमर्हतीत्यनेन सूचयता वाचस्पति-नापि नदीसमुद्रयोरभेदस्य निरस्तत्वादिति भावः। ननु यदि नदीसमुद्रयोर्भेदः कथं तर्हि तदनुपलब्धिरित्याशंक्याह ॥ भेदाज्ञानं त्विति ॥ ननु यदि नदीसमुद्रयोर्भेदः कथं तर्हि "समुद्र एव भवति" इति नदीनां समुद्रत्वोक्तिरित्याशंक्याह ॥ ताः समुद्रादिति। समुद्रं गच्छंतीति ॥ यद्यपि श्रुतौ गच्छंतीति पदं न दृश्यते तथापि समुद्रादिति पंचमीनिर्देशात् अपियंतीत्यत्रापि-शब्दस्य यंतीत्येति श्लिष्टत्वेन विभागसमुच्चयार्थत्वाद्वा लाभः। तथापियंतीत्येतत्समुदायार्थकमेकं पदं। नाताहत्वस्य तत्वस्य स्वतान्वयोगोऽसात्। तथार्थत्वे समुद्रमितिद्वितीयाऽनुपपत्तेश्चेति भावः॥ अनर्थ-

गृहं प्रविष्टस्य गृहादागतस्य वा तदैक्यम् । तस्माद् दृष्टांतानुसारेणातत्त्वमसीतिच्छेदो युक्तः । तथाच श्रुत्यंतरम् ।

"यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा ॥
यथा स्तेनापहार्यौ च यथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ" ॥ इति ।

किंचाद्य खंडे "स्वप्नांतं मे सोम्य विजानीहि" इति स्वातंत्र्यशंकानास्पदसुषुप्तिनिदर्शनेन चतुर्थे च "अस्य यदेकां शाखां जीवो जहाति" इत्यादिना अन्वयव्यतिरेकोक्त्या अष्टमे च "पुरुषं सोम्योपतापिनम्" इत्यादिना स्वातंत्र्यशंकानास्पदमरणनिदर्शनेनेश्वराधीनत्वस्योक्तत्वादत-दित्येव च्छेदो युक्तः । एवं च

"वाक्यशेषानुसारेण मुख्यार्थस्यैव संभवे ।
तद्विरुद्धानेकपदलक्षणा नैव युज्यते ॥"

चतुर्थखंडे "अनेन जीवेनात्मानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति" इत्यत्र च जीवशब्द ईश्वरपरः । मोदमान इति संसारिणः पृथगुक्तेः । "एतस्यैव सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति" इत्यत्राणिमशब्दः परमसूक्ष्मेश्वरपरः । "स एषोऽणिमा ऐतदात्म्यमिदं सर्वम्" इति इहैव श्रुतावीश्वरे तस्य प्रयोगात् नतु परीत्या धानापरः । "तासां किमत्र पश्यसि" इति अण्व्य

उक्त इति ॥ व्याघ्रादितिर्यग्योनिप्राप्तिलक्षण इत्यर्थः । "सत आगम्य(त्य)न विदुः" इति दार्ष्टांतिकवाक्यस्य भेदपरत्वमर्थांतरन्यासेन द्रढयति ॥ नहीति ॥ ननु अस्य "यदेकां शाखां" इत्यत्रान्वयव्यतिरेकाभ्यां जीवस्येश्वराधीनता नोच्यते, किंतु जीवान्वयव्यतिरेकप्रयुक्तं शरीरस्य शोषणमेवोच्यते । अनेन जीवेनात्मनानुप्रविश्येति पूर्ववाक्ये जीवशब्दस्य संसारिणि प्रयुक्तत्वा-दित्याशंक्य तथापि जीवशब्दः परमात्मपर एवेत्याह ॥ चतुर्थखंड इति ॥ ननु पंचमखंडे "एतस्यैव सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति" इति वाक्ये "अणिम(न्)शब्दार्थस्याण्व्य इवेमा धाना" इति पूर्ववाक्यनिर्दिष्टधानापरत्वात् महतो न्यग्रोधस्य धानोपादानकत्वेन तयोर्भेद एव प्रतीयत इति तत्र दृष्टांतपर्यालोचनायां तत्त्वमस्यादिवाक्यस्य जीवेश्वराभेदपरत्वमेवोचितमित्यत आह ॥ एतस्यैवेति ॥ नन्वष्टमे "पुरुषं सोम्योपतापिनम्" इत्यादिना मरणनिदर्शनेन जीवस्ये-श्वराधीनत्वं नोच्यते, किंतु ज्ञानिनो ब्रह्मप्राप्तिरेवोच्यत इति न भेदसिद्धिरित्याशंक्याह ॥ यदि

इवेमा धाना भगव इति भावप्रत्ययरहितेन स्त्रीलिंगेन बहुवचनांतेनेवशब्दशिरस्केन धाणु-शब्देन निर्दिष्टतया तद्विपरीताणिमशब्दानर्हत्वात्, न निमालयस इत्युक्ताद्दन्यत्वायोगाच्च । यदि चाष्टमे विदुषो ब्रह्मप्राप्तिमात्रं विवक्षितं तदा तस्य वाङ्मनसि संपद्यत इत्यादि तेजः परस्यां देवतायामित्यन्तमेव वाक्यं स्यात् । "तस्य यावन्न वाङ्मनसि संपद्यत" इत्यादि व्यर्थम् ।

स्मृतिश्च– "यदा प्राणान्ददातीशस्तदा चेतनकोऽखिलम् ।
जानाति ग्रस्तकरणस्तेन वेत्ति न किंचन ॥" इति ।

स आत्मेत्यत्र च सः अणिमशब्दोक्त ईश्वरः आत्मा आतत इत्येवार्थः नतु जीवात्मेति ।

"यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तेनात्मेति हि भण्यते ॥" इति भारतोक्तेः ।

"नानुमानमतच्छब्दात्, प्राणभृच्च" इति सूत्रे "तमेवैकं जानथात्मानम्" इति वाक्योक्तो न जीवः, तद्वाचिशब्दाभावादिति त्वयापि सिद्धांतितत्वेनात्मशब्दस्य जीवेऽमुख्यत्वाच्च । "स इमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्" इत्यत्रापि जीवशब्देनेश्वर उच्यते नतु संसारी, "जीव इति भगवतोऽनिरुद्धस्याख्या" इतिश्रुतेः, "विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्" इति स्मृतेश्च । जीवेऽपि योगसंभवेन रूढिकल्पकाभावाच्च ।

"अहं हि जीवसंज्ञो वै मयि जीवः समाहितः"

---

चेति । तस्येति ॥ "तस्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां" इत्यंतमेवावाक्यं स्यादित्यर्थः ॥ प्राणानिति ॥ करणानीत्यर्थः ॥ ग्रस्तकरण इति ॥ तेनेशेन ग्रस्तकरण इत्यर्थः । ननु स आत्मेति तच्छब्दनिर्दिष्टेश्वरेण प्रसिद्धजीवात्मनो अभेदोक्तेः कथं तयोर्भेद इत्याशंक्याह ॥ स आत्मेत्यत्रचेति ॥ ननु "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति परमोपक्रमे परमात्मन एव जीवभावेन प्रवेशोक्तेस्तत्त्वमसीत्यत्रापि जीवपरयोरभेद एवाभ्युपगंतव्य इत्याशंक्याह ॥ इमास्तिस्रो देवता इति ॥ यद्यपि "अनेन जीवेनात्मनानु(प्र भूत)प्रविश्य" इत्यत्र जीवात्मत्वस्य परमात्मपरत्वमुक्तम्, तथापि तत्र मोक्षमात्र इति पृथगुक्ति ... ... ... इत्येयम् । ननु जीवात्मत्वस्य संसारित्वं ... ... ॥ जीवेऽपीति ॥ मोक्षत्वाधिकरणत्वाभावेन जीवात्मत्वस्य ... संसारित्वं प्रयोगोपपत्तौ ... ... इति भावः । प्रत्युत

इतिमोक्षधर्मे भगवद्वचनाच्च । प्राणधारकत्वरूपनिमित्तस्येश्वर एव मुख्यत्वाच्च, संसारिणस्त्रिवृत्करणपूर्वकं नामरूपात्मकप्रपंचकर्तृत्वायोगाच्च । तेजोबन्नानां "तत्तेज ऐक्षत ता आप ऐक्षंत इमास्तिस्रो देवता" इति पूर्वमेव चेतनत्वसिद्धया पुनर्जीवप्रवेशोक्त्ययोगाच्च ।

एकमेवाद्वितीयमित्युपक्रमः । एकविज्ञानेन सर्वविज्ञानं च प्रागेव व्याख्यातम् । नचैक्याप्रसक्तेरतत्त्वमसीति निषेधायोगः । "इष्टापूर्तं मन्यमाना वरिष्ठम्" इत्यादाविव श्रुतितात्पर्यापरिज्ञानेन वा "तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यादाविवानादिकुसमयेन वा देहेंद्रियादीन्प्रति स्वातंत्र्यरूपस्येश्वरलक्षणस्य सर्वैरपि आत्मन्यभिमन्यमानत्वेन प्रत्यक्षेण वा प्रसक्तस्यैक्यस्य निषेधोपपत्तेः । एवंच "एकमेवाद्वितीयम्" इति समाभ्यधिकराहित्यस्योपक्रमात्, ऐतदात्म्यमिति तस्यैवोपसंहारात्, अतत्त्वमसीति नवकृत्वोऽभ्यासात्, शास्त्रं विना शास्त्रैकगम्येश्वरभेदस्याप्रसक्त्या अपूर्वत्वात्, अथ संपत्स्यत इति फलश्रवणात्, येनाश्रुतं श्रुतं भवतीत्याद्यर्थवादात्, शकुनिसूत्रादिदृष्टांतैरुपपादनात् षड्विधतात्पर्यलिंगानि भेदपराण्येवेति ।

॥ इति तत्त्वमसिवाक्यार्थः ॥ २८ ॥

---

परमात्मन्येव जीवशब्दस्य रूढिरित्याह ॥ अहं हीति ॥ ननु जीवशब्दस्य योगाप्रतिसंधानदशायां संसार्युपस्थितेः तत्रापि रूढिः । एवंच योगरूढयोरुभयत्रा(प्य)विशेषात् जीवशब्दस्य परमात्मपरत्वे किं विनिगमकमित्यत आह ॥ प्राणधारकत्वरूपेति ॥ "ननु एकमेवाद्वितीयम्, उत तमादेशम-प्राक्ष्यः" इत्यादिपूर्ववाक्यानुसारेण "अनेन जीवेनात्मनानुप्रविश्य, तत्त्वमसि" इत्यादीनामभेद-परत्वमेवेत्याशंक्याह ॥ एकमेवेति । इष्टापूर्तमिति ॥ "नान्यच्छ्रेयो वेदयंते प्रमूढा" इति निराक-रणनिषेधस्य श्रुतितात्पर्याज्ञानप्राप्तेष्टापूर्तवरिष्ठत्वविषयत्वं तद्वदित्यर्थः । उक्तरीत्या अभेदपरत्वं निरस्यन् भेदे षड्विधतात्पर्यमुपपादयति ॥ एवंचेति ॥

॥ इति तत्त्वमसिवाक्यार्थः ॥ २८ ॥

## ॥ अथ अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः ॥ २९ ॥

एतेनाहं ब्रह्मास्मीत्याद्यपि व्याख्यातम् । उक्तरीत्या एकपदलक्षणया ब्रह्मसाहचर्यादिना जीवे ब्रह्मेतिव्यपदेशस्य वा सादेश्यादिना ब्रह्मण्यहमितिव्यपदेशस्य चोपपत्तौ पदद्वयलक्षणयैक्यपरत्वायोगात् । किंचाहंशब्दो जीवांतर्यामिणि मुख्यः ।

"सर्वांतर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति नतु सर्वस्वरूपतः ॥"

इत्यादिस्मृतेः, "अहं मनुरभवं सूर्यश्च" इत्यंतर्यामिणि अहंशब्दप्रयोगाच्च । नहि त्वत्पक्षेऽपि विशिष्टचैतन्यरूपो वामदेवो विशिष्टचैतन्यरूपमनुसूर्यादिर्भवति । अहंमन्वादिशब्दैश्चिन्मात्रलक्षणायां चोत्तमपुरुषायोगः, "अहं भूमिमददामार्याय" इत्याद्ययोगश्च । नहि चिन्मात्रं भूमिमदात् । भगवान्विष्णुर्हीन्द्राय भूमिमदात्, तस्मादहंनामा भगवतस्तस्योपनिषदहमिति ।

"अहंनामा हरिर्नित्यमहेयत्वात्प्रकीर्तितः"

इत्यादिश्रुतेश्च । श्रुत्यंतरे "अहं तद्वेदोरस्मीनारायणं पुरुषं जातमग्रतः । तमिममहं विजानामि" इति अहेये अहंशब्दप्रयोगाच्च । अन्यथा अहं विजानामीति स्यात् । तत्रचांतर्याम्यैक्यमेवात्रोच्यते । उक्तं चांतर्यामिणि नियम्यानंत्यादिना भेदप्रसक्तिः । तथाच

---

॥ अथ अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः ॥ २९ ॥

इत्याद्यपीत्यादिशब्देन "य एष आदित्ये हिरण्मयः पुरुषो दृश्यते सोऽहमस्मि" इत्यादिवाक्यपरिग्रहः । "अहं मनुरभवं सूर्यश्च" इति वाक्यस्याभेदपरत्वं त्वत्पक्षे न संभवतीत्याह ॥ नहि त्वत्पक्षेऽपीति ॥ वामदेवाद्यनुपपत्तेश्चाहमादिशब्दानां लक्षणया चिन्मात्रपरत्वमित्याशंक्याह ॥ अहं भूमिमिति ॥ विष्णुर्हि वामनावतारं कृत्वा बलिचक्रवर्तितो(नो)राज्यं गृहीत्वा देवेन्द्राय प्रादादिति प्रसिद्धेरिति भावः ॥ अन्यथेति ॥ अहंशब्दस्य लक्षणाया अभ्युपगम इत्यर्थः ॥ अत्रेति ॥ "अहं ब्रह्मास्मीति" वाक्ये इत्यर्थः । नन्वंतर्यामिणि भेदस्याप्रसक्तेः कथं तन्निषेध इत्याशंक्याह ॥ उक्तं चेति ॥ "एकोऽव्यक्तोऽनंतरूपम्" इति श्रुत्या नियम्यानन्त्येन नियामकस्यानन्त्यमित्यनुमानेन "एकोऽव्यक्तोऽनन्तरूपम्" इति श्रुतितात्पर्यभ्रमेण च भेदस्य प्रसक्तिः "नेह नानास्ति" इति श्रुत्यर्थनिरूपणावसरे उक्तेत्यर्थः । "अहं ब्रह्मास्मि" इति वाक्यस्याभेदपरत्वे वाक्यमुख्यस्य सोऽहमस्मीति वाक्यस्यापि तत्परत्वे वाच्यमित्याह ॥ अन्यथेति ॥ किंच सोऽहम-

श्रुत्यंतरम्, "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति। अन्यथा "य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि" इति छांदोग्ये "स एनान्ब्रह्म गमयति" इति भेदपरोत्तरवाक्यविरोधः । किंच "स य एतमेवं विद्वानुपास्ते" इत्युत्तरवाक्ये उपास्तिश्रवणात् त्वन्मते चोपास्यस्यारोपितत्वावगमानेनैक्यसिद्धिः । "योसावसौ पुरुषः सोऽहमस्मि, वायुः" इतीशावास्ये च "वायुरनिलममृतमथेदं भस्मांतं शरीरम्" इत्युत्तरवाक्यविरोधः । नहि शरीरादेरपि जीवैक्यम् । "अग्ने नय सुपथा राये अस्मान्" इत्यादिभेदपरोत्तरवाक्यविरोधश्च । "तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यैतरेये च "चक्षुर्मित्रस्य वरुणस्याग्नेः" इतिभेदपरोत्तरमंत्रविरोधः । "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मि" इति बृहदारण्यके च "तद्यो यो देवानां प्रत्यबुध्यत तथा ऋषीणां तथा मनुष्याणाम्" इतिभेदपरवाक्यशेषविरोधः । किंचात्र वाक्ये ब्रह्मण एव प्रकृतत्वात् नानेन जीवब्रह्मैक्यसिद्धिः । "य एवं वेदाहं ब्रह्मास्मि" इत्युत्तरवाक्ये त्विति शब्दयोगात् त्वन्मते चेतिशब्दयुक्तानाम् "आदित्यो ब्रह्म" इत्यादीनामुपासनार्थत्वात् । "अथ योऽन्यां देवतामुपास्ते" इत्युत्तरवाक्ये उपास्तिश्रवणाच्च नानेनैक्यसिद्धिः । यद्वात्र ब्रह्मशब्दो बृंहणार्थ इति न परब्रह्मैक्यसिद्धिः । अन्यथा पूर्ववाक्ये "आत्मानमेवावेत्" इत्यनेनैव ब्रह्मेतिज्ञानस्य सिद्धत्वात् ब्रह्मास्मीतिव्यर्थम् । एतेन "अहं हरिः सर्वमिदं जनार्दनः" इत्यादिस्मृतयोऽपि व्याख्याताः । "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" इत्यत्राप्यंतर्यामिभेदज्ञानी निंद्यते । अन्यथा पदद्वयादिलक्षणादिदोषात् । यद्वा योऽन्यो जीवः अन्यां विलक्षणां देवतामुपास्ते । किमिति । अन्योऽसौ परमात्मा

---

स्मीत्यत्र तच्छब्दनिर्दिष्टस्य उपास्यत्वेना (आरोपितत्वेन) रोपितत्वावगमात् न तेनैक्यसिद्धिरित्याह ।। किंचेति ।। योऽसावसौ पुरुषः वायुः सोऽहमस्मीति संबंधः । प्रतीकग्रहणपूर्वकं वायुशब्दार्थमेवाह ।। वायुरनिलमिति । ब्रह्म वा इदमिति ।। यत् ब्रह्माग्र आसीत् तत्, ब्रह्म कर्म, जीवः स्वात्मतया जानीयादित्यर्थः । वेदनप्रकारमेवाह ।। अहं ब्रह्मास्मीति ।। "अहं ब्रह्मास्मि" इति वाक्यस्य जीवकर्तृकत्वेऽपि न त्वदभिमतब्रह्मैक्यसिद्धिरित्याह ।। यद्वेति ।। ननु यद्यहं ब्रह्मास्मीत्यस्य न जीवब्रह्मैक्यपरत्वं कथं तर्हि "अथ योऽन्यां देवतामुपास्ते" इति भेददर्शननिन्देत्याशंक्याह ।। अथेति । पदद्वयेति ।। "अहं ब्रह्मास्मि" इति वाक्यगतपदद्वयेऽपीत्यर्थः ।। उपास्त इत्युक्तमिति ।। तथा सति योऽन्योऽहं अन्यां देवतामुपास्ते इत्युक्तमनुक्तप्रयोग एव स्यात् इति

अहमस्मीति न स वेद यथा पशुरित्यर्थः। अन्यथाहमर्थस्यापि विशेष्यत्वे देवतामुपास्त इत्ययुक्तम्। न च व्यवहितान्वयदोषः। यस्य येनार्थसंबंध इति न्यायेन सन्निधानाद्योग्यतायाः प्रबलत्वात्। अथवा

स्वातंत्र्येणाऽन्यसद्भावनिषेधाय श्रुतिस्त्वियम्।
"अन्योऽसावन्योऽहमस्मीति पश्यन्नज्ञ इति स्म ह।
आह तद्ब्रह्मणोऽधीना भिन्ना जीवास्तु सर्वशः॥"

इत्यादिस्मृतेः स्वातंत्र्यज्ञानी पशुरित्यर्थः। केचित्तूपास्त इत्यादिश्रवणात्पुंप्रयत्नसाध्यज्ञान-विजातीयवृत्त्यंतररूपोपासनाया एव निषेधः न तु ज्ञानस्येत्याहुः। "स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि द्वितीयो ब्रह्मशब्दो जीवपरः। "बृह जातिजीवकमलासनशब्द-राशिषु" इतिवचनात्। "ब्रह्माणि जीवाः सर्वेऽपि" इत्यादिस्मृतेश्च। "द्वे ब्रह्मणी वेदितव्ये" इत्यादौ जीवे तत्प्रयोगाच्च। तथा च यः परमं ब्रह्म वेद स जीव एव भवति नतु परं ब्रह्मेत्यर्थः। अत एवाद्यो ब्रह्मशब्दः परमत्वेन विशेषितः। यद्वा ब्रह्म भवति बृंहितत्वरूप-ब्रह्मत्वाक्रांतो भवतीत्यर्थः।

"संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्" इतिवत्।

नहि शूद्रः संपूज्यब्राह्मणव्यक्तिरेव भवति किंतु ब्राह्मणत्वजात्याक्रांतः, ब्रह्मण्यपि ब्रह्मशब्दस्य बृंहणार्थत्वात्

---

भावः। यद्वा भेदोपासननिंदया अभेदपरत्वे देवतामुपास्त इत्युपास्योपासकभावानुपपत्तिरित्यर्थः। तस्मिन्पक्षे अहमर्थस्यापीत्यपिशब्दो देवताविशेष्यत्वसमुच्चयार्थः॥ यस्य येनार्थसंबंध इति॥ "यस्य येनार्थसंबंधो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानंतर्यमकारणमिति" न्यायेनेत्यर्थः (श्लोक वार्तिकम्)॥ योग्यताया इति॥ व्यवहितान्वययोग्यतारूपसंबंधसत्त्वा इत्यर्थः। ननु ब्रह्मशब्दस्य नानार्थत्वं तथाप्यत्र द्वितीयब्रह्मशब्दस्य जीवपरत्वे किं प्रमाणं तत्र आह॥ अत एवेति॥ यद्यपि जीवभावस्य ब्रह्मज्ञानात्प्रागपि सत्त्वेन न ब्रह्मज्ञानफलत्वोक्तिर्युक्ता, तथापि ब्रह्मैव भवती-त्यस्य [illegible] वचनवत् [illegible] सति त(स्य)स्थित जीवत्वनिश्चयेनैव भवति नतु ब्रह्मव्याप्तिमानित्यर्थः। नचैवं वचनानुसारेणत्यागो दोषः। अस्य त्वन्मतेऽपि समानत्वात्। अत एव [illegible]। किंच [illegible]॥ बृंहितत्वरूपेति॥ नच बृंहितत्वं पूर्णत्वं, तच्च ब्रह्मण एवासाधारणमिति कथं जीवस्य बृंहितत्वमिति वाच्यम्। स्वगुणव्यक्तिविशिष्ट[illegible]-

"ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता" इतिस्मृतेश्च ।

"अस्य महिमानमिति वीतशोक" इतिवाक्यशेषाच्च । अन्यथा पूर्वत्र "यथा नद्यः स्यंदमाना" इति भिन्ननदीसमुद्रदृष्टांतोक्तिः "परात्परं पुरुषमुपैति दिव्यम्" इति ब्रह्मप्राप्त्युक्तिश्चायुक्ता स्यात् । किंच त्वत्पक्षे नित्यं ब्रह्मभूतस्यापूर्वब्रह्मभावोक्तिरयुक्ता । आरोपनिवृत्तेः साध्यत्वेऽप्यज्ञाब्दत्वात्, "ब्रह्मैव सन्ब्रह्माप्येति" इत्यत्रापि जीव एव सन् ब्रह्म प्राप्नोतीति कर्तृकर्मभावेन भेद एवोच्यते । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवंति" इत्यत्रापि एकीभावः स्थानैक्यं मत्यैक्यं सादृश्यं वा न स्वरूपैक्यम् ।

"अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।

एकीभाव(स्त्रिधा)स्तथा प्रोक्तो नैकीभावः स्वरूपयोः" इतिवचनात् ।

"अह्नीतस्ततो गता गावः सायं गोष्ठे एकीभवंति, एकीभूता नृपाः सर्वे ववृषुः पांडवं शरैः, अस्मिन्ग्रामे महाजना एकीभूताः, कीटो भ्रमरेणैकीभूत" इत्यादौ प्रयोगाच्च । त्वत्पक्षे ऐक्यस्य प्रागेव सिद्धत्वादभूततद्भावार्थच्विप्रत्ययबाधः । तथा सकृत्प्रयुक्तस्यैकीभवंतीत्यस्य कर्मसु निवृत्तिरर्थः विज्ञानात्मन्यैक्यमर्थ इति अनेकार्थत्वम् । तथा "परेऽव्यये" इति श्रुतसप्तमीहानिः, अश्रुततृतीयाकल्पनापत्तिः । तथा "निरंजनः परमं साम्यमुपैति" इतिपूर्ववाक्येन "परात्परं पुरुषमुपैति दिव्यम्" इत्युत्तरवाक्येन च विरोधः स्यात् । नाप्यंतर्यामिप्रकरणस्थं "नान्योऽतोऽस्ति द्रष्टा" इतिवाक्यं अक्षरप्रकरणस्थं "नान्यदतोऽस्ति द्रष्टृ" इतिवाक्यं

---

यत् जीवेऽपि योग्यतानुसारेण पूर्णत्वाविरोधादिति भावः । मुक्तौ बृंहणत्वादिरूपब्रह्मगुणप्राप्तिरेव नतु तद्भावः । वाक्यशेषानुसारादित्याह ॥ अस्य महिमानमितीति ॥ अस्य ब्रह्मणो महिमानमेतीत्यर्थः । केचित्तु "ब्रह्म वेद ब्रह्मैव भवति" इत्यस्य "ब्रह्मविदाप्नोति परं, पुरुषमुपैति दिव्यम्" इत्यादिश्रुत्यंतरानुसारात् यः परं ब्रह्म वेद सः ब्रह्मैव प्राप्नोतीत्यर्थः । भू प्राप्ताविति धातोः । आत्मनेपदाभावश्छांदसः । एवं च ब्रह्मपदद्वयस्याप्यवैरूप्यमित्याहुः ॥ अभूततद्भावेति ॥ "अभूततद्भावे कृभ्वस्तियोगे सम्पद्य(मान)कर्तरि च्विः" इति पाणिनिस्मरणसिद्धाभूततद्भावार्थेत्यर्थः ॥ परमं साम्यमुपैतीति ॥ न च परमं साम्यमभेद एव, तत्वांतरगतसादृश्यम् । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति निषेधानुपपत्तेरिति वाच्यम् । परमसाम्यशब्देन "तदा विद्वान्पुण्यपापे विधूय" इति पूर्ववाक्योक्तपुण्यपापविधूननसादृश्यस्य वा, "जगद्व्यापारवर्जं, प्रकरणात्" इत्यधिकरणोक्तस्य जगद्व्यापारातिरिक्तधर्मघटितसादृश्यस्य वा विवक्षितत्वेन सर्वात्मना सादृश्यस्याविवक्षिततया तत्प्रतिषेधश्रुत्यविरोधित्वादितिभावः । ननु "अतोऽन्यदार्तम्" इत्यत्रार्तशब्देन परमात्मानं परामृश्य

चैक्ये मानम् । अत इत्यनेन प्रस्तुतं सर्वनियंतारं परामृश्यान्यो द्रष्टा नास्तीत्युक्ते अस्मिन्ग्रामे अयमेव सर्वनियोजकः नान्यः पुरुषोऽस्तीत्यादावन्यशब्दस्य प्रस्तुतसदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकद्रष्ट्रंतरनिषेधात् । उक्तं हि समानमितरच्छयेनेनेत्यत्र इतरशब्दस्य पूर्वनिर्दिष्टसदृशपरत्वम् । एवंच "कंदर्पः सुंदरो लोके नान्योऽस्तीह पुमान्" इत्युक्ते कंदर्पतोऽन्यः पुमान्नेति न प्रतीयते किंतु कंदर्पसदृशः सुंदरो नेति भासते । एवं परात्मसदृशद्रष्ट्रभावोऽत्र भासते । अन्यथा अंतर्यामिवाक्ये "य आत्मनोंऽतरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमंतरो यमयति" इति पूर्ववाक्येन "एष त आत्मांतर्याम्यमृतः अतोऽन्यदार्तम्" इत्युत्तरवाक्येन च विरोधः । तत्र परमात्मनोऽन्यं चेतनमंगीकृत्य तस्यार्तियुक्तत्वेनास्वातंत्र्यस्यैवोक्तेः । अक्षरवाक्ये च "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत" इत्यादिपूर्ववाक्येन विरोधः स्यात् । द्वितीयाद्वै भयं भवतीत्यस्यापि विरोधिनः समानाद्भयं भवतीत्येवार्थः, लोके तादृशादेव भयदर्शनात् । अस्य च लोकसिद्धानुवादित्वात् । "समानाद्धि भयं भवेत्" इतिस्मृतेश्च । पूर्वत्र "तस्मादेकाकी बिभेति" इति, उत्तरत्र च "तस्मादेकाकी न रमते" इतिश्रवणाच्च । "यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते" इत्यत्रापि एतस्मिन्निति विशेषणात्स्वगतस्यैव भेदस्य निषेधः । एवं "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिः ।

"एक एव हि भूतात्मा भूते भूते व्यवस्थित"

---

चनोऽन्यस्य सर्वस्यार्तत्वरूपविवर्तत्वप्रतिपादनेनाभेदस्यैव प्रतीतेः कथं तद्विरोध इत्याशंक्याह ॥ तत्र परमात्मन इति ॥ यथाच नैतद्बलेन मिथ्यात्वसिद्धिस्तथा प्रतिपादितमधस्तात् । ननु "द्वितीयाद्वै भयं भवति" इति श्रुत्या द्वितीयसत्त्वस्य भयहेतुत्वावगमात् मोक्षे च द्वितीयसत्त्वे भयं स्यात् । नचैतदुचितम् । तत्र भयाभावस्य प्रमाणसिद्धत्वात् । एवंच द्वितीयमात्रनिषेधेन जीवपरयोरैक्यमेव सिध्यतीत्याशंक्याह ॥ द्वितीयाद्वै भयमिति ॥ ननु "यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते, अथ तस्य भयं भवति" इत्यत्र उदरं अल्पमपि भेदं यः पश्येत् तस्य भयप्रतिपादनेन अत्यंतभेददर्शिनः अनर्थस्य कैमुत्यसिद्धत्वादभेद एव श्रुतेस्तात्पर्यमित्याशंक्याह ॥ यदा ह्येवैष इति । स्वगतस्यैवेति ॥ स्वप्रतियोगिकस्यैवेत्यर्थः । भेदस्य प्रतियोग्याकांक्षायां सन्निधानेनैतच्छब्दार्थस्यैव प्रतियोगित्वावगमसंभवे अन्यप्रतियोगिकत्वकल्पनायां मानाभाव-

इतिस्मृतिश्चांतर्याम्यैक्यपरा । भूतशब्दस्य "यतो वा इमानि भूतानि जायंते यत्प्रयंत्यभिसंविशंति" इत्यादाविव चेतनपरत्वात् ।

"यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च ।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः ।
विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते ।
आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यति ॥"

इत्यादिस्मृतिष्वपि भेदशब्दो मित्रभेद इत्यादाविव वैमत्यार्थः ।

"जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव च" इत्यादिस्मृतेः ।

जीवस्य हि आमोक्षमीश्वरकामविरुद्धकामिता न तु मोक्षे । अत एव मुक्तः सत्यकामः । असंतमभद्रमित्यर्थः ।

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत"

इत्यस्यापि क्षेत्रज्ञं सर्वज्ञं मां सर्वक्षेत्रेष्वपि विद्धीत्यर्थः । तत्रैव ।

"इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
तत् क्षेत्रं यच्च यादृक्च, तत्समासेन मे शृणु ॥" इत्युक्त्वा

---

विति भावः ॥ अंतर्याम्यैक्यपरेति ॥ अन्यथा बहुवचनांतसर्वभूतशब्दः "भूते भूते व्यवस्थित" इति वाक्यशेषश्च विरुध्येतेति भावः । ननु भूतशब्दस्य जडपरत्वात्कथं चेतनैक्यविरोधित्वमित्याशंक्याह ॥ भूतशब्दस्येति ॥ इत्यादावित्यादिपदात् "न हिंस्यात्सर्वा भूतानि" इत्यादिपरिग्रहः ॥ चेतनपरत्वादिति ॥ न च विनिगमनाविरहः । उभयपरत्वेऽप्यस्मद्विवक्षितार्थसिद्ध्यवैकल्यात् ॥ भेदहेतोरिति ॥ भेदस्थापकस्येत्यर्थः ॥ जीवस्येति ॥ जीवस्य परमात्मैक्योक्तिरविरुद्धविषयकबुद्धिसारूप्यपरेत्यर्थः । प्रसक्तप्रतिषेधत्वमाशंक्याह ॥ जीवस्य हीति ॥ जीवकामस्य प्रायशो विफलत्वदर्शनादिति भावः ॥ सत्यकाम इति ॥ "इमान् लोकान् कामान्नी कामरूप्यनुसंचरन् सोऽश्नुते सर्वान् कामान्" इत्यादिश्रुतिष्वपि मुक्तजीवकर्तृकेच्छाविषयालाभादर्शनाभावदर्शनादिति भावः । ननु गीतायां भगवता स्वस्य "क्षेत्रज्ञं चापि मां विद्धीति" क्षेत्रज्ञशब्दितजीवभावोक्तेः कथं जीवेश्वरयोर्भेद इत्याशंक्याह ॥ क्षेत्रज्ञं चापीति ॥ ननु क्षेत्रज्ञशब्दस्य सर्वज्ञार्थकत्वं कथमित्याशंक्य क्षेत्रशब्दस्य सकलप्रपंचपरत्वस्य तत्रैवोक्तत्वादित्याह ॥ तत्रैवेति ॥ ननु तथापि

"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥" इत्याद्युक्त्वा

"एतत्क्षेत्रं समासेन सविकारमुदाहृतम्"

इत्यनेन "यस्य पृथिवी शरीरम्" इतिश्रुत्या ईश्वरशरीरतयोक्तं चेतनाचेतनात्मकं सर्वं क्षेत्रमित्युक्तत्वात् । मोक्षधर्मे

"क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥" इति ।

"प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥" इतिचोक्तेः ।

नचैवं रूढार्थत्यागः । जीवेऽपि क्षेत्रज्ञशब्दस्य यौगिकत्वात् शाखस्था वेति न्यायाच्च । एवमन्यान्यपि वाक्यानि योज्यानि । तस्मादागम ऐक्ये प्रमाणम् ।

॥ इति अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः ॥ २९ ॥

---

"नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव नात्र काञ्चनमिवास्ति, नैवात्र काञ्चन मिवास्ति'' इत्यादिवाक्येन मर्मेदः सिद्ध्येदित्याशंक्याह ॥ एवमिति ॥ परमात्मनि तत्प्रतियोगिक-भेदाभावपरतया योज्यानीत्यर्थः ।

॥ इति अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः ॥ २९ ॥

## ॥ अथ ऐक्यानुमानभङ्गः ॥ ३० ॥

नाप्यनुमानम् । जीवाः परमात्मनस्तत्त्वतो न भिद्यंते आत्मत्वात्परमात्मवदित्यत्र त्वात्मत्वस्य ज्ञातृत्वादिरूपत्वे तवाऽसिद्धेः । अवेद्यत्वादिरूपत्वे ममासिद्धेः । जातिरूपत्वे विरोधात् । अबाध्यत्वादिरूपत्वेऽनैकांत्यात् । विस्तृतं चैतज्जडत्वभंगे । जीवाः परमात्मनो व्यवहारतोऽपि न भिद्यंते आत्मत्वात् परमात्मवदित्याद्याभाससाम्याच्च । विमता जीवाश्चैत्रा-त्तत्त्वतो न भिद्यंते । जीवत्वात् चैत्रवत् । विमतं वस्तुतो ब्रह्मतो न भिन्नं वस्तुत्वाद्ब्रह्मवदित्यत्रापि चैत्राद्व्यवहारतोऽपि न भिद्यंते जीवत्वाच्चैत्रवदित्याभाससाम्यात् । विमतानि शरीराणि चैत्रा-धिष्ठितानि शरीरत्वाच्चैत्रशरीरवदित्यत्र चैत्राधिष्ठितत्वेऽप्यन्याधिष्ठितत्वासंभवेनैक्यासिद्धेः। चैत्रे-णैवाधिष्ठितानीत्युक्तौ त्वीश्वरस्यापि चैत्रशरीराधिष्ठातृत्वेन दृष्टांतस्य साध्यवैकल्यात् । चैत्रस्यैव भोगायतनानीत्युक्तौ च त्वन्मते यस्य भोक्तृत्वमन्तःकरणविशिष्टस्य तस्य प्रतिशरीरं भेदः, यस्य चैक्यं शुद्धचैतन्यस्य तस्याभोक्तृत्वमिति बाधात् । विमतानि शरीराणि चैत्रमनसैव युक्तानि, शरीरत्वाच्चैत्रशरीरवदित्याद्याभाससाम्याच्च । आत्मा द्रव्यत्वातिरिक्तपरजात्या नाना

---

### ॥ अथ ऐक्यानुमानभङ्गः ॥ ३० ॥

॥ जातिरूपत्व इति ॥ जातेर्व्यक्तिनानात्वेनैव व्याप्ततया विरुद्धहेत्वाभासत्वादित्यर्थः । ॥ अबाध्यत्वादिरूपत्व इति ॥ अबाधिपदात् ध्वंसाप्रतियोगित्वरूपनित्यत्वपरिग्रहः ॥ अनै-कांत्यादिति ॥ भवतीति शेषः । नन्वात्मत्वं महत्त्वं आत्ममात्रशब्दवाच्यत्वं वा भविष्यतीति नोक्तदोष इत्याशंक्याह ॥ विस्तृतं चैतदिति ॥ आत्मन्यसिद्धेरितिभावः । जीवेशयोरभेदसाधकानु-मानं दूषयित्वा जीवानां परस्पराभेदसाधकं जडेश्वरयोश्च तत्साधकमनुमानं दूषयति ॥ विमता जीवा इत्यादिना ॥ चैत्रस्यैव भोगायतनानीत्यत्र चैत्रशब्देनांतःकरणविशिष्ट(चैतन्य)मुच्यते । शुद्धचैतन्यं वा । नोभयमपि बाधादित्याह ॥ त्वन्मत इति । द्रव्यत्वातिरिक्तेति ॥ द्रव्यत्व-व्याप्यत्ववृत्तिजात्यधिकरणप्रतियोगिकभेदवानात्मा भवतीत्यर्थः । (पाठांतरं लिख्यते । साध्यदृष्टांतं द्रव्यत्वव्याप्यगगनवृत्तिजातेरप्रसिद्धत्वात् जातिपदं धर्ममात्रपरम् । तथापि दृष्टांतस्य स्ववृत्ति-कालाकाशान्यतरत्वाधिकरणकालप्रतियोगिकभेदवत्त्वेन साध्यविकलत्वात् । ननु पक्षे बाधः । आत्मनस्तथाविधप्रतियोगिकभेदवत्त्वात् दृष्टांते साध्यवैकल्यं च । नच द्रव्यत्वव्याप्यत्ववृत्ति-जात्यधिकरण(प्रतियोगिक)भेदवांश्च भवतीति साध्यम् , दृष्टांते द्रव्यत्वव्याप्यगगनव्याप्यगगनवृत्ति-कालाकाशान्यतरत्वाधिकरणकालप्रतियोगिकभेदवत्त्वेन साध्यविकलत्वात् । नच स्ववृत्तिधर्मपदं

न भवति विभुत्वात् गगनवदित्यत्र त्वन्मते गगनस्य प्रतिकल्पं भेदेन साध्यवैकल्यात्। परिच्छिन्नत्वेन साधनवैकल्याच। आत्मत्वस्य परमाणुत्ववदजातित्वेऽप्यात्मभेदसिद्ध्यार्थांतरत्वाच।

विमतो भेदो मिथ्या एकस्यां दृशि कल्पितो वा भेदत्वात् दृश्यत्वाच चंद्रभेदवत्, एकस्यां दृशि क्षणिकत्वादिकल्पितभेदवद्वेत्यत्र तूक्तरीत्या मिथ्यात्वानिरुक्तेः, सत्यासत्यभेदानुगतभेदत्वसामान्यस्यासिद्धेश्च। चंद्रस्य कल्पिताद् द्वितीयचंद्राद्भेदस्य सत्यत्वेन दृष्टांतस्य साध्यवैकल्याच, मुक्तेः संसाराद्ब्रह्मणोऽनृतादात्मनो देहाद्भेदे च व्यभिचाराच। अभेदो मिथ्या अभेदत्वात् देहात्माभेदवदित्याभाससाम्याच। दृश्यत्वादेर्निरस्तत्वाच। विमता भेदप्रतीतिः भ्रांतिः भेदप्रतीतित्वात् चंद्रभेदप्रतीतिवदित्यत्र ब्रह्मणोऽनृताद्भेदप्रतीतौ व्यभिचारात् आभाससाम्याच।

"विमतं तत्त्वतः स्वांतर्भेदहीनं मत(द्रव्य)त्वतः।
यदित्थं तत्तथा यद्वत्खं तथेदं ततस्तथा॥"

इत्यत्र त्वन्मते गगनस्य सावयवत्वात् संयोगित्वेन सांशत्वस्य सुसाधत्वाच साध्यवैकल्यात्। संवित् स्वांतर्गतस्वाभाविकभेदहीना उपाधिभेदमंतरेणाविभाव्यमानभेदत्वात् गगनवदित्यत्र साध्यवैकल्यात्। इच्छादेरपि घटेच्छापटेच्छेत्युपाधिभेदेनैव विभाव्यमानभेदत्वेन व्यभिचाराच। विमतः अव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको भेदः स्वसमानाधिकरणात्यंताभावप्रतियोगी भेदत्वात् संयुक्तप्रतियोगिताकभेदवदित्यत्राव्याप्यवृत्तिशब्देन स्वसमा-

---

नाधिकरणात्यंताभावप्रतियोगिधर्मस्य विवक्षितत्वे प्रतिपक्षस्य प्राप्तेरिति चेन्न। द्रव्यत्वव्याप्येत्यनेनैव स्वसमानवृत्तित्वस्य लाभात्।) पक्षधुतसाध्याभिप्रायेणाह ॥ आत्मत्वस्येति ॥ एकस्यां दृशीत्युदेश्यसिद्धिः ॥ चन्द्रभेदवदिति ॥ चंद्रगतचंद्रप्रतियोगिकभेदवदित्यर्थः। ॥ चन्द्रस्येति ॥ यद्यप्यंगुल्यवष्टम्भचक्षुषा चंद्रभेदमात्रस्यैव कल्पनात् तस्य च मिथ्यात्वात्(व) दृष्टांते साध्यवैकल्यम्। तथापि कल्पितचंद्रांतरप्रतियोगिकसत्यचंद्रगतभेदस्य दृष्टांतत्वमभिप्रेत्यैवमुक्तिरित्यवेयम् ॥ आभाससाम्याच्चेति ॥ विमता अभेदप्रतीतिः भ्रांतिः अभेदप्रतीतित्वात् देहात्माभेदप्रतीतिवदित्याभाससाम्यादित्यर्थः। मतत्वत इति ॥ मतिविषयत्वात् वृत्तिविषयत्वादित्यर्थः। नच (घटादौ) घटादौ व्यभिचारः। तस्य पक्षसमत्वादिति भावः ॥ उपाधिभेदमंतरेणेति ॥ भिन्नोपाधिप्रतिसंबन्धमंतरेणेत्यर्थः। अन्योन्याभावस्याव्याप्यवृत्तित्वाभ्युपगंतृमतेनाव्य-

नाधिकरणात्यंताभावप्रतियोग्युक्तौ बाधात् । अवयववृत्त्युक्तौ त्ववयववृत्तिद्रव्यत्वाद्यवच्छिन्नप्रतियोगिकभेदस्यापक्षत्वापातात् । विमतो भेदः केवलान्वय्यत्यंताभावप्रतियोगी पदार्थत्वात् नित्यद्रव्यवदित्यत्र च स्वरूपेणात्यंताभावप्रतियोगित्वे साध्येऽत्यंतासत्त्वापातात् । पारमार्थिकत्वादिधर्मावच्छेदेन तत्प्रतियोगित्वे साध्येऽर्थांतरात् । अन्योन्याभावत्वं स्वसमानाधिकरणात्यंताभावप्रतियोगिवृत्ति त्रैकालिकाभावमात्रवृत्तित्वे सत्यभावत्वसाक्षाद्व्याप्यधर्मत्वात् अत्यंताभावत्ववदित्यत्र मन्मतेऽपि शुक्तौ शुक्तिभेदस्यारोपितत्वेन सिद्धसाधनात् । त्रैकालिकस्य मिथ्यात्वायोगेन विरोधाच्च, संयोगादिवत् सत्यत्वेऽपि स्वात्यंताभावसामानाधिकरण्यसंभवेनार्थांतरत्वाच्च । तत्र विप्रतिपत्तौ च दृष्टांतस्य साध्यवैकल्यात् । एवमन्या-

---

भेदमात्रस्य मिथ्यात्वसाधकमनुमानमाशंक्य निराकरोति ॥ विमत इति ॥ संयोगवदन्योन्याभाववदव्याप्यवृत्तित्वेनार्थांतरतावारणायाह अव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको भेद इति । ॥ बाधादिति ॥ प्रतियोगितावच्छेदकधर्मात्यंताभावस्य स्वप्रतियोग्यवच्छिन्नप्रतियोगिताकान्योन्याभावसमनियतत्वेनाव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वेन पक्षविशेषणे बाधादुक्तसाध्यसिद्धिरिति भावः ॥ केवलान्वयीति ॥ मात्रसंबंधारोप्यकव्यधिकरणधर्मावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यंताभावप्रतियोगीत्यर्थः । तेन व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगित्वेन व्यधिकरणसंबंधारोप्यकाभावप्रतियोगित्वेन चार्थांतरशंका निरस्ता ॥ अत्यंतासत्त्वापातादिति ॥ यथाचैतत्तयोक्तमन्यथस्तात् ॥ अर्थांतरादिति ॥ पारमार्थिकत्वरूपधर्मशून्यब्रह्मवत् सत्त्वेनाप्युपपत्तेरिति भावः ॥ त्रैकालिकाभावमात्रवृत्तित्वे सतीति ॥ ध्वंसत्वे व्यभिचारवारणाय सत्यंतम् । यद्यप्यभावो द्विविधः अन्योन्याभावः संसर्गाभावश्चेति इत्येवं विभागाश्रयणे ध्वंसत्वस्याभावत्व(व्याप्य) साक्षाद्व्याप्यधर्मत्वाभावेन विशेष्याभावादेव न व्यभिचारः । तथाप्यभावश्चतुर्धेति विभागमभिप्रेत्यैवमुक्तमिति ध्येयम् । प्रध्वंसघटात्यंताभावान्यतरत्वे व्यभिचारवारणाय मात्रपदम् । घटात्यंताभावत्वे व्यभिचारवारणायोत्तरदलमित्यवधेयम् । नन्वस्मन्मते संयोगाव्याप्यवृत्तित्वस्य विप्रतिपन्नत्वादर्थांतरमित्याशंक्याह ॥ तत्रेति । अन्यान्यपीति ॥ मुक्त्यन्वयिजीवस्वरूपं ब्रह्माभिन्नं ज्ञातृत्वाद्यनात्मकाकारत्वाद्वा ब्रह्मवत् । जीवो ब्रह्मणि स्वसमसत्ताऽविरोध्यत्यंताभावप्रतियोगी भेदप्रतियोगिपदार्थत्वात् ब्रह्मवत् । आत्मत्वं स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणं विभुमात्रवृत्तिधर्मत्वात् गगनत्वादिवदित्यादीनीत्यर्थः ॥ दूष्याणीति ॥ आद्यं ब्रह्माभिन्नमिति साध्ये ब्रह्मशब्देन सविशेषविवक्षायां बाधः । निर्विशेष(त्व)विवक्षायां तु तस्य ज्ञातृत्वाभावेन दृष्टांते साधनवैकल्यम् । मुक्त्यन्वयिति जीवस्वरूपं असिद्धं च । ज्ञानत्वहेतोरप्यसिद्धिः । दृष्टांते

न्यप्यनुमानानि दूष्याणि। धर्मिग्राहकप्रत्यक्षश्रुत्यादिबाधः। पूर्वोक्तैर्भेदानुमानैः सत्प्रतिपक्षत्वम्, अप्रयोजकत्वम्, सुखदुःखाद्यनुसंधानापत्तिरूपप्रतिकूलतर्कपराहतिरित्यादयो भेदमिथ्यात्वानुमानसाधारणदोषाः।

॥ इति ऐक्यानुमानभङ्गः ॥ ३० ॥

---

साधनवैकल्यं च। शुद्धचितो ज्ञानत्वस्य निरस्तत्वात्। द्वितीयानुमानेऽपि दृष्टान्ते साधनवैकल्यम्। जीवो ब्रह्मणि स्वसत्त्वाविरोध्यत्यन्ताभावप्रतियोगी भेदप्रतियोगिपदार्थत्वात् ब्रह्मवदित्याभाससाम्यं च। तृतीयेऽसम्मते जीवस्याणुत्वेन पक्षे हेतोरसिद्धिः। कालाकाशान्यतरत्वादौ व्यभिचारश्चेत्येवं दूष्याणीत्यर्थः॥ धर्मिग्राहकेति॥ नाहं चैत्रो नाहं सर्वज्ञ इति धर्मिग्राहकप्रत्यक्षेण 'द्वा सुपर्णा' इत्यादिश्रुत्या च बाध इत्यर्थः॥ पूर्वोक्तैरिति॥ चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् मैत्रानुसंहितदुःखाननुसंधातृत्वात् घटवत्। चैत्रो मैत्रप्रतियोगिकतात्त्विकभेदवान् मैत्रस्मृतसर्वार्थास्मर्तृत्वात् घटवत्। जीवब्रह्मभेदः परमार्थसन् अनादित्वादात्मवदित्यादिपूर्वोक्तानुमानैरित्यर्थः।

॥ इति ऐक्यानुमानभङ्गः ॥ ३० ॥

## ॥ अथ अंशत्वेनैक्यसिद्धिभङ्गः ॥ ३१ ॥

नच "अंशो ह्येष परमस्य, पादोऽस्य विश्वा भूतानि" इतिश्रुतौ
"ममैवांशो जीवलोके जीवभूतः सनातनः"

इत्यादिस्मृतौ "अंशो नानाव्यपदेशात्" इतिसूत्रे चांशत्वोक्तेरैक्यम्। अयं ज्येष्ठस्यांशः अयं तु कनिष्ठस्यांशः, चैत्रस्य चतुर्थांशबलो मैत्रः, अनर्घ्यस्यास्य रत्नस्यायं रत्नाभासः सहस्रांश इत्यादिवत् मार्गविन्यस्तचैत्रपादाकृतौ चैत्रपाद इतिवच्च भेदेनैवोपपत्तेः। त्वन्मतेऽपि ब्रह्म प्रति जीवस्यांशत्वं न तावदारंभकत्वम्। ब्रह्मणोऽनादित्वात्। नापि खंडत्वम्। अ(व)च्छेद्यत्वात्। नापि समुदायित्वम्। समुदायस्य समुदाय्यनन्यत्वेन व्यवहारदशायामपि संसारिजीवान्यशुद्धब्रह्माभावापातात्। नापि भिन्नाभिन्नद्रव्यत्वम्। अनंगीकारात्। नापि प्रदेशत्वम्। खंडपटस्य पटं प्रतीव निष्प्रदेशं ब्रह्म प्रत्यकल्पितस्य तस्यायोगात्। नापि घटाकाशस्याकाशं प्रतीव कल्पितप्रदेशत्वम्। प्रतिबिंबपक्षे तदयोगात्। स्वतो निरंशे औपाधिकांशायोगस्योक्तत्वाच्च। नाप्यत्यंताभिन्नत्वम्। तत्रांशशब्दाप्रयोगात्। पटाद्भिन्नेऽप्येकस्मिन् तंतौ पटांशत्वव्यवहाराच्च। तस्मात् तत्सदृशत्वे सति ततो न्यूनत्वं जीवस्यांशत्वम्, न तु तदेकदेशत्वम्।

"अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत्।
जीवाभिन्नांशकास्तत्र तेजसः प्रतिबिंबवत्॥" इतिस्मृतेः।

---

॥ अथ अंशत्वेनैक्यसिद्धिभङ्गः ॥ ३१ ॥

ननु तथापि श्रुतिस्मृतिसूत्रेषु जीवस्य परमांश(परमात्मांशत्वो)क्तोक्तस्यान्यथानुपपत्त्या मत्स्यादिवत्परमात्माभिन्नत्वसिद्धिरित्याशंक्य निराकरोति ॥ नचेति ॥ पादोऽस्य विश्वा भूतानीति श्रुतेः असाधारण्येनाप्यन्यथोपपत्तिमाह ॥ मार्गविन्यस्तेति ॥ जीवस्य ब्रह्मांशत्वेन भेद एव सिध्यतीत्यभिप्रायेणांशत्वं परिशेषयति ॥ त्वन्मतेऽपीति। अवच्छेद्यत्वादिति ॥ ब्रह्मण इति शेषः ॥ स्वत इति ॥ स्वतो निरंशे उपाधिसंबंधायोगेनौपाधिकसंबंधस्योक्तत्वादिति भावः ॥ नाप्यत्यंताभिन्नत्वमंशत्वमिति ॥ निर्विशेषाभिन्नत्वमित्यर्थः। अत्यंताभिन्नत्वमंशत्वमिति ब्रह्मांशत्वनिरुक्तिकमांशत्वमात्रनिरुक्तिरिति विकल्प्य द्वितीयं निराचष्टे ॥ घटादीति। (पटादीति) (पा) तत्सदृशत्वे सतीति ॥ एतच्च रामकृष्णाद्यवतारसाधारणमित्यत इत्युक्तं ॥ ततो न्यूनत्वमिति ॥ तादृशत्वं च अजडसाधारणमित्यतः पूर्वभागः। सादृश्यं च ज्ञानानंदादिना विवक्षितमिति

किंच त्वन्मते जीवस्यांशत्वं किं शुद्धचैतन्यं प्रति ईश्वरं प्रति वा। नाद्यः। "पादोऽस्य विश्वा भूतानि" इतिश्रुताविदंशब्देन सहस्रशीर्षत्वादिविशिष्टप्रकृतेश्वरस्य "ममैवांश" इति स्मृतौ चेश्वरप्रयुक्तास्मच्छब्देनेश्वरस्यैवोक्तेः। नांत्यः। त्वन्मते ईश्वरस्याप्युपहितत्वेन घटाकाशं प्रति करकाकाशस्येवेश्वरं प्रति जीवस्यांशत्वायोगात्। नच मठाकाश एव पुनर्घटेनेवेश्वरोपाधिना-वच्छिन्नमेव चैतन्यं पुनर्जीवोपाधिनावच्छिद्यते। तथात्वे हि मुक्तस्य शुद्धब्रह्मत्वं न स्यात्। तस्मात्त्वन्मतेऽपि न मुख्यांशत्वम्। अत एव त्वयापि भाषितम्। "अंश इवांशः। नहि निरवयवस्य मुख्यांशः संभवति" इति। एवं च

शतांशश्चंद्रबिंबस्य गुरुबिंबं यथा तथा।
भेदेऽपि न्यूनतामात्राज्जीवो ब्रह्मांश उच्यते॥

तस्माद्ब्रह्मांशत्वेनैक्यसिद्धिः।

॥ इति अंशत्वेनैक्यसिद्धिभंगः ॥ ३१ ॥

---

भावः ॥ शुद्धब्रह्मत्वं न स्यादिति ॥ एकमुक्तौ ईश्वरोपाधिनिवृत्त्यभावेन तदुपाध्यवच्छिन्नत्वान-पायादिति भावः। उपसंहरति ॥ तस्मादिति। मुख्यमिति ॥ एकदेशत्वादिरूपमित्यर्थः। ॥ भाषितमिति ॥ "अंशो नानाव्यपदेशात्" इति सूत्र इति शेषः। गुरुबिंबं बृहस्पतिबिंबम्।

॥ इति अंशत्वेनैक्यसिद्धिभंगः ॥ ३१ ॥

## ॥ अथ बिंबप्रतिबिंबैक्यभङ्गः ॥ ३२ ॥

नापि जीवब्रह्मणोर्बिंबप्रतिबिंबत्वान्मुखप्रतिमुखवदैक्यम् । दृष्टांतस्य साध्यवैकल्यात् । तथाहि । बिंबप्रतिबिंबयोरैक्ये न तावत्प्रत्यक्षं मानम् । इमे चैत्रतच्छाये भिन्ने इतिवत् इमे चैत्र तत्प्रतिबिंबे भिन्ने इत्येव पार्श्वस्थेन ग्रहणात् । स्वेनापि स्वकरतत्प्रतिबिंबे भिन्ने इत्येव ग्रहणाच्च । ननु यथा बहिःस्थितश्चैत्रो यत्स्वलक्षणः प्रतिपन्नः तत्स्वलक्षण एव वेश्मांतःस्थोऽपि भाति, तथा यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपि भाति, न तद्वस्त्वंतरत्वे युज्यते तस्मादेकमेकदेशस्थं च मुखं भ्रांत्या भिन्नं भिन्नदेशस्थं च भातीतिचेत् । उच्यते । किमनेन सव्येतरहस्तयोरिवात्यंतसादृश्यधीरुच्यते प्रत्यभिज्ञा वा । नाद्यः । तयैक्यासिद्धेः । अंत्येऽसिद्धिः । किंचित्स्वच्छताम्रादौ प्रतीते मुखच्छायामात्रे मुखसंस्थानविशेषाप्रतिपत्त्या प्रत्यभिज्ञाभावस्य स्पष्टत्वात् । स्वनेत्रगोलकादौ स्वस्याभिज्ञाभावेन प्रत्यभिज्ञायोगाच्च । सूर्यपार्श्वे प्रतिसूर्य इतिवत् दर्पणे मम मुखच्छायेत्येवानुभवेन दर्पणे मम मुखं लग्नमितिप्रतीत्यभावाच्च, चैत्रप्रतिबिंबमेव दृष्टम्, न चैत्रः चैत्रस्तु तेनानुमित इत्यनुभवायोगाच्च । प्रतिमुखे प्रत्यङ्मुखत्वादिना दृश्यमानेऽपि स्वमुखे तद्द्वयभावाच्च । अत एव बालानां स्वप्रतिबिंबे बालांतरभ्रमः । क्वचित्प्रतिमुखे मम मुखमिति व्यपदेशस्तु स्वच्छायाशिरसि स्वशिरोव्यवहारवत्, मार्गविन्यस्तस्वपादाकृतौ स्वपादव्यवहारवच्च गौणः । भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात् ।

---

॥ अथ बिंबप्रतिबिंबैक्यभङ्गः ॥ ३२ ॥

॥ नापीति ॥ जीवो ब्रह्माभिन्नः तत्प्रतिबिंबत्वात्, ब्रह्म जीवाभिन्नं, तद्बिंबत्वात्, प्रतिमुखवन्मुखवच्चेत्यनुमानमपि जीवब्रह्माभेदे न मानमित्यर्थः ॥ तद्द्वयभावाच्चेति ॥ प्रत्यङ्मुखत्वद्वयभावाच्चेत्यर्थः ॥ गौण इति ॥ सादृश्यनिबंधन इत्यर्थः । न चोक्तरीत्या स्वमुखसंस्थानविशेषस्याननुभवेन सादृश्यापरिज्ञानात् कथं सादृश्यनिबंधनमिति वाच्यम् । बिंबांतरसंनिधानदशायां दर्पणे प्रतीयमानमुखस्य स्वमुखप्रतिबिंबत्वनिश्चये सति तेन स्वमुखसंस्थानविशेषानुमानसंभवेन सादृश्यनिबंधनत्वोपपत्तेः । नन्वेवंप्रणालीकल्पने प्रत्यभिज्ञापि सुसंपादेत्यत आह ॥ भेदज्ञाने सतीति ॥ नन्वभेदज्ञाने सत्यपि भेदज्ञानं न विरुध्यते । तस्य (था) भेदज्ञाने सत्यपि

किंच बिंबप्रतिबिंबयोर्भेदसाक्षात्कारे तावन्न विवादः। अन्यथा त्वयापि कस्य भ्रमत्वमुच्येत। नच भेदं भेदकं च साक्षात्कुर्वन्नभेदमपि साक्षात्कुर्वन् दृष्टः। नचैक्ये साक्षात्कृतेऽपि सोपाधिकभेदभ्रमो युक्तः, तदुपादानस्याप्यैक्याज्ञानस्यैक्यज्ञानेन निवृत्तेः। नचोपाधिनिवृत्तिसहकृतमेवैक्यज्ञानं अज्ञाननिवर्तकम्। ज्ञाते कदापि न जानामीत्यननुभवेन ज्ञानस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यानपेक्षस्यैव निवर्तकत्वादित्युक्तत्वात्। नच बिंबप्रतिबिंबयोरैक्ये ज्ञातेऽपि तदवच्छिन्नचैत(न्यैक्या)न्याज्ञानात्तत्र भेदभ्रमः। अतिप्रसंगात्। नच बिंबप्रतिबिंबैक्याज्ञानाभावेऽपि मूलाविद्याकार्योऽयं भेदभ्रमः। व्यावहारिकत्वापत्तेः। नच सोपाधिकभ्रमं प्रति नाज्ञानज्ञाने उत्पादकनिवर्तके, किंतूपाधिसंनिधानरूपदोषतदपगमाविति वाच्यम्। दोषो निमित्तं कार्यानुगुणं मिथ्याभूतमज्ञानमेव तूपादानमिति त्वन्मतहानेः। अन्यथा अज्ञानाकार्यत्वेन ज्ञानानिवर्त्यत्वेन च बिंबप्रतिबिंबभेदः सत्यः स्यादिति दिक्। नाप्यनुमानं तत्र मानम्। अत्यंतसादृश्यस्य सव्येतरकरादौ व्यभिचारात् विरोधाच्च। वैधर्म्याभावस्य चासिद्धेः। क्रियासाम्यस्य च च्छायादावनैकांत्यात्। बिंबकारणमात्रजन्यत्वस्य च बिंबादर्वाचीने प्रतिबिंबेऽसिद्धेः। पृथगदृष्टकार्यानुरोधेन परिवेषेंद्रचापच्छायाप्रतिसूर्यादाविव

---

भ्रमेऽज्ञानं न विरुध्यते, तस्य सोपाधिकत्वेन विरोध्यदर्शनाप्रतिबद्धत्वादित्याशंक्य निराकरोति ॥ नचेति । अतिप्रसंगादिति ॥ शुक्तिरजतयोर्भेदज्ञानेऽपि तदवच्छिन्नचैतन्याभेदाज्ञानेनाभेदभ्रमः स्यात् । यदि च तत्रावच्छेदकभेदज्ञाने तदवच्छिन्नभेदज्ञानमप्यस्त्येवेति नाभेदभ्रमः, तर्हि अवच्छेदकैक्यज्ञाने अवच्छिन्नैक्यज्ञानमपि त्वदभिमतमेव भ्रमोऽपि न स्यादिति भावः ॥ व्यावहारिकत्वापत्तेरिति ॥ मूलाज्ञानकार्ये वियदादौ व्यावहारिकत्वदर्शनादिति भावः । ननु मूलाविद्याकार्यत्वात् व्यावहारिक एवायं भेदभ्रमः । नचैवमपि बाधानुपपत्तिः । तस्य प्रविलयमात्रात्मकत्वादिति चेन्न । शुक्तिरजतादेरपि प्रविलयमात्रमेवेति बाधाभावेन प्रातीतिकत्वं न स्यादित्यभिप्रेत्याह ॥ दिगिति । नाप्यनुमानमिति ॥ तत्प्रतिबंधकलिंगाभावादिति भावः । किं तल्लिंगम्, अत्यंतसादृश्यं वा, वैधर्म्याभावो वा क्रियासाम्यं वा बिंबकारणमात्रजन्यत्वं वा । तत्र नाद्य इत्याह ॥ अत्यंतेति । विरोधाच्चेति ॥ सादृश्यस्य भेदगर्भत्वादिति भावः । द्वितीयं निराह ॥ वैधर्म्याभावस्य चेति ॥ प्रत्यङ्मुखत्वादिवैधर्म्यस्यैव परिदृश्यमानत्वादिति भावः । न तृतीय इत्याह ॥ क्रियासाम्यस्य चेति ॥ न तुर्य इत्याह ॥ बिंबेति ॥ तदेतत्कारणस्याधिकस्यापेक्षितत्वात् इदानीमभावादिति भावः । ननु कारणान्तरस्यादर्शनात् बिंबकारणमात्रजन्यत्वं कल्प्यत इत्यत आह ॥ पृथगिति ॥

कारणस्य कल्प्यत्वात्। प्रतिबिंबमपि हि च्छायाविशेषः। नहि भेरीघातादिकृतहेत्वभावात् ध्वनावुपरतेऽप्युपलभ्यमानः प्रतिध्वनिर्न शब्दांतरम्। एतेन दर्पणादौ न मुखव्यक्त्यंतरमस्ति तज्जन्मकारणशून्यत्वात्, शशमस्तके विषाणवत् इतिविवरणोक्तं निरस्तम्। एतेनैवाभिज्ञायां भेदो भाति प्रत्यभिज्ञायां त्वभेदः। तत्र भेदधीर्मुखांतरहेत्वभावेनोपपत्तिहीनत्वात् भ्रांतिः। अभेदधीस्तु सोपपत्तिकत्वात्प्रमेति निरस्तम्। अभेदधीरेव नास्तीत्युक्तत्वात्। छायादाविव कारणस्य कल्प्यत्वेन भेदबुद्धेः सोपपत्तिकत्वाच्च। कृतद्रव्यानंतर्भावे तमोवद्द्रव्यांतरत्व-संभवाच्च। "नोपरक्तं न वारिस्थम्" इति स्मार्तव्यवहारस्तु चित्रितः सिंह इति लोकव्यवहार-वत्, "यथा दारुमयी योषा यथा चर्ममयो मृगः" इत्यादिस्मार्तव्यवहारवच्च गौणः। त्वत्पक्षेऽपि हि वारिस्थशब्दो न मुख्यः, वारिणि सूर्यांतराभावात्। गगनस्थस्य च वारिस्थ-त्वायोगात्। भेदस्तूक्तप्रत्यक्षेण न्यूनाधिकपरिमाणत्वचलत्वाचलत्वोपाधिसंयुक्तत्वासंयुक्तत्व-त्वगादिग्राह्यत्वाग्राह्यत्वप्रत्यक्प्राङ्मुखत्वरूपेण कस्तूरीतत्प्रतिबिंबयोः सौरभतदभावरूपेण गुड-तत्प्रतिबिंबयोर्माधुर्यतदभावरूपेण वह्नितत्प्रतिबिंबयोरौष्ण्यतदभावरूपेण पर्वततत्प्रतिबिंबयो-र्गुरुत्वतदभावरूपेण सशब्दभेरीतत्प्रतिबिंबयोः शब्दतदभावरूपेण चानुमानेन।

"यथैषा पुरुषे छाया एतस्मिन्नेतदाततम्।
छाया यथा पुंसदृशी पुमधीना च दृश्यते।
एवमेवात्मकाः सर्वे ब्रह्माद्याःपरमात्मनः॥" इत्यादिश्रुत्या

---

प्रतिबिंबं बिंबकारणातिरिक्तकारणजन्यं छायात्वात् प्रसिद्धच्छायावत्। नचासिद्धिः। इमे चैत्रतच्छाये इत्यनुभवादित्यभिप्रेत्याह॥ प्रतिबिंबमपि हीति॥ यद्वा परिवेषादेः छायाविशेषत्वात्पृथक्प्रतिबिंब-कारणजन्यत्वं प्रतिबिंबस्य त्वतथात्वात् बिंबकारणमात्रजन्यत्वमावश्यकमित्याशंक्याह॥ प्रतिबिंब-मपि हीति॥ ननु दर्पणे न मुखांतरोत्पत्तिर्वक्तुं शक्या, मुखं प्रति कृत्स्नसामग्र्यभावादित्याशंका-मर्थांतरन्यासेन निरस्यति॥ नहीति। एतेनेति॥ पृथक् दृष्टकार्यानुरोधेन सामग्रीकल्पनस्याव(?)-कल्पेनेत्यर्थः। ननु प्रतिमुखमुत्पद्यमानं न तावत्पार्थिवम्, काठिन्यगुरुत्वाद्यनुपलंभात्। नाप्याप्यं, स्नेहद्रवत्वाद्यनुपलंभात्। नापि तैजसम्। उष्णस्पर्शाद्युपलंभप्रसंगात्। अभिभवादिकल्पने त्वन्योन्याश्रयात्। न वायवीयादिकं रूपवत्त्वाच्चाक्षुषत्वाच्च। अतो भेदप्रतीतेरुपपत्तिशून्यत्वादभेद एव स्वीकार्य इत्याशंक्याह॥ कृतद्रव्यानंतर्भाव इति॥ ननु स्मृतौ सूर्यस्यैव वारिस्थत्वप्रति-पादनात् बिंबप्रतिबिंबयोरैक्यमावश्यकमित्याशंक्याह॥ नोपरक्तमिति॥ ननु प्रसिद्धकस्तूरी दर्पणस्थत्वमारोप्यते न तु दर्पणस्थकस्तूर्यन्तरम्। अत एव गंधोपलब्धिरित्यपेक्षयाशंक्य

"तथैव सदृशश्चायं बिंबस्य प्रतिबिंबवत् ।
बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले ।
एवमेवात्मका लोके परात्मसदृशा मताः ॥"

इत्यादिस्मृत्या च सिद्धः । नच बिंबातिरेकेण दर्पणे कस्तूर्यंतराभावादत्र गंधाभाव इति वाच्यम् । तथापि यत्स्वलक्षणं कस्तूर्यादि तत्स्वलक्षणस्यैव दर्पणस्थत्वेनारोपिततया तद्रूपादियुक्तस्येव तद्गंधादियुक्तस्यैव दर्पणस्थत्वेन प्रतीत्यापत्तेः । घटे गगनस्येव दर्पणे कल्पितभेदमुक्तमुखस्याप्यभावे उपाधेः प्रतिबिंबपक्षपातित्वेन मुखप्रतिमुखयोरवदातत्वश्यामत्ववत् जीवब्रह्मणोः संसारासंसारादिव्यवस्थितमिति त्वन्मतहानेश्च । नहि शुक्तौ न शुक्तिरियमिति भेदभ्रांतिमात्रेण रूप्यं न शुक्तावध्यस्तम्, आरोपितेन दर्पणस्थत्वेन विशिष्टं प्रतिबिंबं तत्र मालिन्याध्यास इति चेत् न ॥ मालिन्यवद्दर्पणस्थत्वस्याप्यारोपितत्वेनैकविशिष्टे इतरारोपायोगात्, प्रतिमुखमेव दर्पणस्थं नतु मुखमिति प्रतिबिंबे दर्पणस्थत्वानुभवेन प्रतिबिंबत्वस्य तत्स्थत्वगर्भितत्वाभावाच, मालिन्यस्थानीयसंसारस्यापि विशिष्टनिष्ठत्वापत्त्या शुद्धाश्रितमोक्षसामानाधिकरण्यायोगाच । एतेन वृक्षस्या कपिसंयोगाधारतामेवेव मुखस्या मालिन्याधारता उपाधिनावच्छिद्यते । तथाच दर्पणावच्छिन्न एव मालिन्यधीर्युक्तेति निरस्तम् । संसारस्यापि शुद्धचिन्मात्रगतत्वापातात्, वृक्षः कपिसंयुक्त इतिवत् मुखं मलिनमित्यनुभवापत्त्या मुखं न मलिनं किंतु प्रतिमुखमेवेत्यनुभवविरोधाच । यदि च कस्तूर्यादिप्रतिबिंबे तत्स्वलक्षणाननुगमेऽपि तदाकारतामात्रेण तत्त्वं तर्हि च्छायाप्रतिमुद्राप्रतिमादीनामपि तत्त्वं स्यात् । नच प्रतिमुखे प्रत्यङ्मुखत्वादिधीर्भ्रांतिः, प्रतिबिंबं बिंबाभिमुखं नेति कदाप्यननुभवात्, अबाधेऽप्यारोपितत्वे प्रतिमुखस्वरूपस्य मालिन्यस्य चारोपितत्वापातात्, छायादावपि वैधर्म्यधीर्भ्रांतिरिति सुवचत्वेन तस्यापि पूर्वादिनैक्यापत्तेश्च । एतेन

"दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् ।
व्याप्नुवंत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥" इति निरस्तम् ।

---

(न) मुख[illegible]त् मुख[illegible]वं स्यात् । तथाचोपाधेः प्रतिबिंबपक्षपातित्वेनात्र [illegible] स्यादि- त्याह ॥ घटे गगनस्येवेति ॥ ननु प्रतिमुखे [illegible] जीवे [illegible] च [illegible] [illegible]दीनां न मुख[illegible] आह ॥ नहीति ॥ प्रतिबिंब[illegible] [illegible] ॥ आरोपितेनेति । इतरारोपायोगादिति ॥ दर्पणस्थ[illegible]मालिन्ययोः [illegible] भावः ॥ तदाकारतामात्रे-

परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगात् । अस्मिन्पक्षे दर्पणादेर्नेत्राद्यभिघातकत्वमात्रेणोपक्षीणत्वेन दर्पणैक्य इव दर्पणभेदेऽप्यनेकमुखप्रतीतेः, मणिदर्पणकृपाणेषु च विरुद्धरूपानेकमुखप्रतीतेश्चायोगात् । अस्याः प्रक्रियाया ब्रह्मप्रतिबिंबे जीवे असंभवाच्च । नेत्रस्य परावृत्त्या नेत्रं प्रत्याभिमुख्येऽपि स्वात्मानं प्रत्याभिमुख्यप्रतीत्ययोगाच्च । विरलावयवस्य जलस्य नेत्राभिघातकत्वे स्वच्छजलांतर्गतशिलाद्यग्रहणापत्तेश्च । दर्पणाद्यभिहतेन नेत्रेण बहुयोजनव्यवहितोर्ध्वभागस्थसूर्यादिग्रहणे पृष्ठभागस्थस्यापि व्यवहितस्य ग्रहणापत्तेश्च । अस्यां प्रक्रियायां स्वच्छताया अनुपयोगेन शिलाद्यभिहतनेत्रस्यापि स्वमुखग्राहकत्वापाताच्च । प्रतिचंद्रादिदर्शनेन चंद्रादिदर्शनजन्यसुखादेः कपिलादिप्रतिबिंबदर्शनेन कपिलादिदर्शनजन्यपुण्यादेश्च प्रसंगाच्च । सूर्यकस्यापि सूर्यवद्दुर्दर्शत्वादिप्रसंगाच्च । अतिस्वच्छदर्पण इव किंचित्स्वच्छताप्रादावपि मुखसंस्थानविशेषप्रतीत्यापाताच्च । अवच्छेदपक्षे द्विगुणीकृत्य वृत्त्यसंभवेऽपि प्रतिबिंबनपक्षे तत्संभवेनांतर्यामित्वमिति स्वोक्तिविरोधाच्च । उपाधेः प्रतिबिंबपक्षपातित्वोक्त्ययोगादित्युक्तत्वाच्च । एतेन नेदं रूप्यमितिवन्नेदं मुखमिति स्वरूपेण न बाधः किंतु नात्र मुखमिति संसृष्टतयैवेति न दर्पणे मुखव्यक्त्यंतरमस्तीति निरस्तम् । नात्र मुखच्छायासीदित्यननुभवेन प्रत्युत एतावंतं कालमत्र प्रतिसूर्य आसीदितिवदत्र प्रतिमुखमासीदित्येवानुभवेन "प्रतिबिंबमिवादर्शे" इत्यादिस्मृत्या च प्रतिमुखे दर्पणस्थत्वस्याप्यबाधात् । नहि भूमौ मेघो नेत्येतावता मेघच्छायापि बाधिता ।

"छायापुरुषवत्तस्माच्छायावत्प्रतिसूर्यवत् ।
प्रतिध्वानादिवच्चित्रं प्रतिबिंबं हि बिंबतः ॥"

अन्यथा प्रतिबिंबाद्बिंबानुमितिर्न स्यात् । माध्यावैशिष्ट्यात् । "नेक्षेतोद्यंतमादित्यम्" इत्यनेन उद्यत्प्रतिबिंबदर्शनस्यापि निषेधः स्यात् । वारिस्थसूर्यदर्शननिषेधनाकाशस्थतद्दर्शनस्यापि निषेधः स्यात् । त्वत्पक्षे गगनस्थस्यैव वारिस्थत्वेन प्रतीतेः । प्रतिबिंबदर्शनेनैव "दृष्ट्वा स्नायात्" इतिशास्त्रार्थोऽप्यनुष्ठितः स्यात् । नच तात्त्विकाभेदेऽपि कल्पितभेदाच्छास्त्रीया व्यवस्था,

---

षेति ॥ न-सादृश्यमात्रेणेत्यर्थः । मालक्षण्यस्य बिंबसाधनस्वभावत्वात् । नन्वनेकदर्पणाभिहतमणिदर्पणादौ कृपाणाद्यभिहता च दृष्टिः मध्यमनानात्वदीर्घत्वादिकं गृहीत्वा मुखं भासयतीति अनेकमुखप्रतीतिर्विरुद्धमुखप्रतीतिश्चोपपद्यत एवेत्यतो दोषांतरमाह ॥ अस्या इति ॥ ननु चक्षुरिन्द्रियाभिमुख्याभावेन दोषः तस्याः प्रतीतेः गोलकाभिमुख्यं तु न विरुध्यत इत्यतो दोषांतरमाह ॥ विरलावयवस्येति । पुण्यादेश्चेति ॥ "अप्रियचित्कपिला सर्वा" इत्यादिवचनमतिपन्नपुण्यादेरित्यर्थः

अनौदुंबरतया[1] ज्ञातेनौदुंबरेणौदुंबरो यूपो भवतीति शास्त्रार्थासिद्धिप्रसंगात् आत्मतया ज्ञातदेहश्रवणादिना "आत्मा श्रोतव्यः" इतिशास्त्रार्थसिद्धिप्रसंगाच्च। किंचानादेर्जीवस्य नोपाध्यधीनत्वादिरूपं प्रतिबिंबत्वं, किंतु तदधीनत्वे सति तत्सदृशत्वरूपं तच्च भेदव्याप्तमिति विरुद्धो हेतुः। उक्तं हि सूत्रकृता "अत एव चोपमा सूर्यकादिवत्" इति। भाष्याकृता च "अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिना" इति।

॥ इति बिंबप्रतिबिंबैक्यभंगः ॥ ३२ ॥

---

॥ छायापुरुषवदिति ॥ तस्माच्छाया पुरुषवदिति योज्यम्। जीवो न परस्माद्भिद्यते तत्प्रतिबिंबत्वात् प्रतिमुखवदित्यत्र इयता प्रबंधेन दृष्टांतासिद्धिमुपपाद्य विरुद्धहेत्वाभास(त्व)मप्याह ॥ किंचेति ॥ इदमुपलक्षणम्। [illegible] न जीवाद्भिद्यते बिंबत्वात् मुखवदित्यत्रापि बिंबत्वस्य तत्क्रियामकत्वे सति तत्सदृशात्मकरूपतया विरुद्धत्वं बोध्यम्।

॥ इति बिंबप्रतिबिंबैक्यभंगः ॥ ३२ ॥

1. औदुंबरतया ज्ञानेनानौदुम्बरेण इति ग.

## ॥ अथ जीवाणुत्वविवरणम् ॥ ३३ ॥

अणुत्वाच्च जीवो व्याप्तादीशाद्भिन्नः। नन्वेतदयुक्तम्। "नित्यः सर्वगतः स्थाणुः" इत्याद्यागमैः जीवो नाणुः प्रत्यक्षगुणाश्रयत्वात् प्रत्यक्षत्वाच्च घटवदित्याद्यनुमानैश्च विपक्षे देहव्यापिस्पर्शादिज्ञानं न स्यादित्यादिबाधकसहितैस्तस्य विभुत्वादिति चेन्न। "अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च" "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानंत्याय कल्पते" इत्यादिश्रुत्या "अणुमात्रोऽप्ययं जीवः" इत्यादिस्मृत्या जीवो न व्याप्तः। उत्क्रांतिमत्त्वात्, गतिमत्त्वात्, आगतिमत्त्वात्, क्रियावत्त्वाच्च। स्वगशरीरवदित्याद्यनुमानैश्च विपक्षे हेतूच्छित्तिबाधकसहितैरणुत्वसिद्धेः। नचासिद्धिः। "सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमधिगच्छति अमुष्मादिमं लोकमागच्छति" इत्यादिश्रुतिभिः।

"तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते"

इत्यादिस्मृतिभिश्च तत्सिद्धेः। नच गत्यादिश्रुतिर्बुद्धिविषया, नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वाविशंति, ते अशुभमनुभूयावर्तंते" इत्यादिश्रुतौ गतेः सुखदुःखाद्यनुभवसामानाधिकरण्योक्तेः। "स एनान्ब्रह्म गमयति" इत्यादिश्रुतौ

"तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः"

इत्यादिस्मृतौ च मुक्तिसामानाधिकरण्योक्तेश्च। "तेन प्रद्योतेनैष आत्मा निष्क्रामति" इत्यात्मनिष्ठत्वश्रुतेश्च। अन्यथा बंधमोक्षादिकमपि बुद्धेरेव स्यात्। नच श्रुतिर्बुद्ध्युपाधिकगत्यादिविषया। "तद्यथानः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" इति स्वाभाविकगत्याश्रयशकटदृष्टांतोक्तेः। "तमुत्क्रामंतं प्राणोऽनूत्क्रामति" इत्यादिश्रुतौ त्वद्रीत्या प्राणाद्यपबुद्धिर्गतितः प्रागेव जीवगत्युक्तेश्च। "मन उदक्रामन्मीलित इवाश्नन्पिबन्नास्तैव" इत्यादिश्रुतौ मनस उत्क्रमणेऽपि आत्मनस्तदभावश्रवणाच्च। "तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादिश्रुतौ नामरूपाद्विमोक्षानंतरमपि गतिश्रवणाच्च। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः स तत्र पर्येति" इत्यादिश्रुतौ मुक्तेऽपि गत्युक्तेश्च।

---

॥ अथ जीवाणुत्वविवरणम् ॥ ३३ ॥

॥ प्रत्यक्षगुणाश्रयत्वादिति ॥ लौकिकप्रत्यक्षविषयगुणाश्रयत्वादित्यर्थः। ननु "नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा" इत्यादिश्रुतौ गतेर्भोक्तृनिष्ठत्वमात्रं प्रतीयते। भोक्तृत्वं चाहमर्थस्यैवेति न तदेकत्वसिद्धिरित्यतो दोषांतरमाह ॥ स एनानिति। गतिश्रवणाच्चेति ॥ "पुरुषमुपैति

किंच बुद्धिगतेन गत्यादिना तदवच्छिन्नात्मनि गत्यादि जायते वा बुद्धिगतमेवारोप्यते वा उपचर्यते वा। नाद्यः। घटगत्या तदवच्छिन्ने नभसि गत्यंतरादृष्टेः। अन्यथा यतो घटस्य बुद्धेर्वा गतिः नभआकाशस्यात्मनो वा सच्छिद्रत्वं अन्यत्र द्विगुणीकृत्य वृत्तिश्च स्यात्। नच प्रतिबिंबपक्षे नोक्तदोष इति वाच्यम्। तस्य वस्त्वंतरत्वमते दोषाभावेऽपि दर्पणाभिहता दृष्टिः परावृत्य स्वमुखं गृह्णातीति त्वन्मते उपाधिगत्या बिंबे न गतिः प्रतिबिंबे तु सत्यत्वायोगात्। नांत्यौ। कर्तुरवच्छिन्नस्यैतदात्मप्रदेशस्य भोगायतनलोकांतराप्राप्तेः। किंतु गतया बुद्ध्या अवच्छिन्नप्रदेशांतरमेव भुङ्क्ते इति स्वीकारे कृतहान्यादिप्रसंगात्, कर्तुर्भोक्तुश्चावच्छिन्नस्य भिन्नत्वात्, अभिन्ने चानवच्छिन्ने कर्तृत्वाद्यभावात्, बाधकं विना बहूनां वाक्यानामप्रामाण्यस्य उपचरितार्थत्वस्य चायोगाच्च। नच व्यावहारिकस्य गत्यादेः सत्त्वादात्यंताप्रामाण्यम्। अमूर्ते मूर्तावच्छिन्नेऽपि व्यावहारिकगत्यदृष्टेः व्यावहारिकत्वे घटगतिवद्बुद्धिगतव्यावहारिकगत्युपाधिकत्वायोगाच्च। "नच व्यावहारिकत्वेऽपि धर्मिणा परमार्थसदात्मना सत्त्वाभावादौपाधिकत्वं धर्मिणोऽवच्छिन्नात्मनोऽप्यपरमार्थत्वात्"। विस्तृतं चैतत्कर्तृत्वाध्यासभंगे।

केचित्तु आत्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववत्, जीवो वा न व्यापकः भूतेतरत्वे सति परत्वासमवायिकारणानाधारत्वे सत्यसर्वज्ञत्वात् शब्देतरानित्यविशेषणाश्रयत्वात् संस्काराश्रयत्वाच्च कटवत्। जीवोऽणुः ज्ञानासमवायिकारणाश्रयत्वात्

---

विम्बम्' इत्यत्र प्रतीतिबलात् गत्यवर्तकत्वादिति भावः ॥ नोक्तदोष इति ॥ न द्विगुणीकृत्य वृत्त्यादिदोष इत्यर्थः। ननु यदंतःकरणावच्छिन्नस्य कर्तृत्वं तदंतःकरणावच्छिन्नस्यैव भोक्तृत्वात् कर्तृभोक्त्रभेदाभावेन न कृतहा(ना)न्यादिकं प्रसज्यत इत्यतो दोषांतरमाह ॥ बाधकं विनेति ॥ ननु व्यावहारिकात्मगतेर्बुद्धिगत्युपाधिकत्वात् व्यावहारिकत्वेऽपि बुद्धिगत्युपाधिकत्वमित्यत आह ॥ विस्तृतं चैतदिति। द्रव्यत्वेति ॥ गुणत्वघटत्वाकाशत्वेषु व्यभिचारवारणाय क्रमेण विशेषणानि ॥ भूतेतरत्वे सतीति ॥ कालाकाशयोर्व्यभिचारवारणाय दलद्वयम्। ईश्वरे व्यभिचारवारणायासर्वज्ञत्वादिति विशेष्यम् ॥ शब्देतरेति ॥ आकाशेश्वरयोर्व्यभिचारवारणाय विशिष्टोपादानम्। वायुरिन्द्रियसंयोगव्यावर्तनम्। तद्बीजं तु मांसं ज्ञानासमानाधिकरणत्वस्य मूलवृत्तित्वस्य चोपाधित्वात्। नच द्वितीयस्य मनस्त्वे साध्याव्याप्तिः। मनसो मध्यमपरिमाणत्वात्। आत्मत्वं वायुविभुं ज्ञानसमवायिकारणत्वात् ईश्वरवदिति सत्प्रतिपक्षत्वाच्च। आत्मत्वं मध्यमपरिमाणवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात्। पृथिवीत्ववदित्याभाससाम्याच्च।

मनोवदित्याद्यनुमानैर्जीवस्याणुत्वमित्याहुः। अणुत्वेऽपि जीवस्य देहव्यापिस्पर्शादिज्ञानं ज्ञानरूपगुणव्याप्त्या युक्तम्। जीवस्याणुत्वेऽपि तद्गुणव्याप्तिस्तु प्रदीपगुणभूतायाः प्रभायाः प्रदीपं विनान्यत्र वर्तनवत् जातिसमवायादेर्धर्मितोऽन्यत्र वर्तनवत् वन्ह्यौष्ण्यस्य तत्समीपे वर्तनवत् गंधस्य द्रव्यं विनान्यत्र वर्तनवच्च युक्ता। वह्निसमीपस्थौष्ण्यस्य तत्समीपस्थानुद्भूतरूपतेजोंऽतरगुणत्वे वह्नेरुद्भूतस्पर्शो न सिद्ध्येत्। नच गंधे आश्रयद्रव्यावयवगतिः कल्प्या। सर्वतो योजनादिव्यापिगंधोपलंभायानेकस्थूलावयवापसारेण सद्यो गुरुत्वादिह्रासस्य द्रव्यक्षयस्य चापातात्। स्फटिककरंडकांतस्थकस्तूर्यादौ चावयवांतरानुप्रवेशकल्पने मानाभावात् प्रत्यभिज्ञाविरोधाच्च। "नित्यः सर्वगतः स्थाणुः" इत्यत्र

"नित्यसर्वगते विष्णावणुर्जीवो व्यवस्थितः"

इत्यादिस्मृत्यनुसारेण सर्वगतस्थश्चासावाणुश्चेति विग्रहः। अन्येतु क्रमेण नानादेहसंबंधाज्जीवस्य सर्वगतत्वोक्तिरित्याहुः। प्रत्यक्षत्वादितिहेतुस्त्वप्रयोजकः। तेनैवाविभुत्वस्यापि सुसाधत्वात् उक्तश्रुत्यादिविरुद्धश्च। किंचात्मनो व्याप्तत्वे सर्वशरीरेंद्रियाणां सर्वदा सर्वात्मसंयुक्तत्वेन सर्वात्मसाधारण्यात् कर्मणामपि साधारणदेहादिकृतत्वेनासाधारण्यायोगात्। अहंत्वारोपादेरपि नियामकमूलसंबंधाद्यभावे नैयत्यायोगात्। सर्वाण्यपि शरीराणि

---

नच मनस्त्वे व्यभिचारः। तस्य मध्यमपरिमाणत्वादित्युक्तत्वात्, मनस्त्वातिरिक्तत्वेन हेतुविशेषणाद्वा। द्वितीयानुमानेऽपि ज्ञाना(न)धिकरणत्वस्य वा सामान्यगुणमात्रानाधारत्वस्य वा उपाधित्वात्। न च द्वितीयस्य मनसि साध्याव्याप्तिः। विशेषगुणवत्त्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वसंभवात्। जीवो विभुः इच्छाद्याधारत्वात्। ईश्वरवदित्यनेन सत्प्रतिपक्षितत्वाच्च। तृतीयानुमानेऽपि पूर्वोक्तसत्प्रतिपक्षसंभवादुपाधिसंभवाच्चेति। ननु यदि जीवस्याणुत्वं कथं तर्हि सर्वांगीणसुखस्पर्शज्ञानादिकमित्याशंक्याह ॥ अणुत्वेऽपीति ॥ नन्ववयवानुसरणेऽपि न गुरुत्वग्रहे (त्व)वयवांतरप्रवेशकल्पनादित्याशंक्याह ॥ स्फटिककरंडकेति ॥ एवं स्वपक्षं प्रसाध्य विभुत्वसाधकत्वेनोक्तमागममन्यथयति ॥ नित्य इति ॥ अणुजीवस्य क्रमेणापि असंकुचितसकलदेहसंबंधित्वे प्रमाणाभावात् संकोच आवश्यकः। स चोक्तरीत्या मुख्यार्थसंभवे अयुक्त इति स्वरसं अन्ये त्वित्यनेन सूचयन् मतांतरमाह ॥ अन्ये त्विति ॥ सर्वशरीरव्यापिस्पर्शादिज्ञानोत्पादनेन विपक्षे बाधकाभावादप्रयोजकत्वं हेतुद्वयसाधारणमुपपाद्य द्वितीयहेतोः प्रकारांतरेणाप्रयोजकत्वमाह ॥ प्रत्यक्षत्वादिति। हेतुस्त्विति ॥ ननु सर्वकर्मार्जितत्वेन देहेंद्रियादीनामसाधारण्यं भविष्यति इत्याशंक्याह ॥ कर्मणामपीति ॥ एतच्छरीरेऽहंप्रत्ययः तच्छरीरसंबंध सर्वात्मसाधारण आह

सर्वेषां भोगायतनानि स्युरिति प्रतिकूलतर्कपराहतिः । एतेन चैत्रभोगार्थसांकुरादेः तददृष्टजन्यत्वात् आत्ममनश्चेतस्य चादृष्टस्य साक्षादंकुराद्यसंबंधेनात्मद्वारा संबंधस्य वाच्यत्वात् आत्मनो विभुत्वमिति निरस्तम् । चैत्रभोगाहेतोरप्यंकुरादेरात्मद्वारकादृष्टसंबंधेऽपि तदजन्यत्वेन तज्जन्यत्वे तत्संतत्वतया प्रतियोग्यनुयोगिभाववाच्यवाचकज्ञानज्ञेयादाविवादृष्टकार्ययोरपि संबंधांतरस्यैव वक्तव्यत्वात् । अस्ति हि कारीर्यदृष्टस्य वृष्ट्या सह तदुद्देशेन विहितक्रियाजन्यत्वादिरूपस्संबंधः । नच

"बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्य(ब)परोऽपि दृष्टः"

इतिश्रुतौ बुद्धिगुणेनाराग्रमात्रत्वमात्मनो गुणेन तु विभुत्वमुक्तमिति वाच्यम् । "तद्यथा अणुनश्चक्षुषः प्रकाशो व्यातन एवमेवाऽस्य पुरुषस्य प्रकाशो व्याप्तोऽणुर्ह्येष पुरुष" इतिश्रुत्यनुसारेण बुद्धेर्ज्ञानस्य गुणेनाप(व)रः आत्मगुणेन त्वाऽऽराग्रमात्र व्याप्तिः इति अन्वयादिति दिक् । तस्मादणुत्वादपि जीवो व्याप्तादीश्वराद्भिन्न इति जीवाणुत्वम् ॥ ३३ ॥

तस्मादविरोधाध्यायोक्तन्यायैर्दोषिभ्यो जीवेभ्योऽत्यंतभिन्नस्य निर्दोषस्य ब्रह्मणः साक्षात्कारायांगीभूतं निदिध्यासनमंगभूतं श्रवणादिकं च मुमुक्षुणा कार्यमिति सिद्धम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते द्वितीयः परिच्छेदः ॥ २ ॥

---

॥ अहं त्वागोपादर्पीति ॥ जीवाणुत्वमियता प्रबंधेन प्रतिपादितमर्थमुपसंहरन् वक्ष्यमाणमुपक्षिपति ॥ तस्मादिति ॥

॥ इति जीवाणुत्वविवरणम् ॥ ३३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचितायां आमोदाख्यायां न्यायामृतव्याख्यायां
द्वितीयः परिच्छेदः ॥

श्रीः श्रीः श्रीः श्रीः श्रीः

॥ इति न्यायामृतलघ्वामोदे द्वितीयः परिच्छेदः ॥

## ॥ तृतीयः परिच्छेदः ॥

### ॥ अथ मनननिदिध्यासनयोर्विवरणोक्तश्रवणांगत्वभङ्गः ॥ १ ॥

॥ श्रीगुरुभ्यो नमः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

नन्वेतदयुक्तम्, विवरणे श्रवणमंगि प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रपद्येते इति फलोपकार्यंगे इत्युक्तत्वादिति चेन्न । यतः—

विचारः करणं नैव बोधे शब्दप्रमाणजे ।
न चायं संनिपत्यांगं शब्दस्य करणात्मनः ॥ १ ॥
करणांतर्गतो येन विचारो हंतिवद्भवेत् ।
संनिपात्यपि नैवासौ(यं)शेषी मत्यादिकं प्रति ॥ २ ॥

---

॥ अथ मनननिदिध्यासनयोर्विवरणोक्तश्रवणांगत्वभंगः ॥ १ ॥

श्रीः ॥ ॐ ॥ श्रवणमननयोरंगत्वं निदिध्यासनस्य चांगित्वमित्युक्तमाक्षिपति ॥ नन्वेतदिति । प्रमाणस्येति ॥ अवधृतशक्तितात्पर्यकस्य प्रमाणतया प्रमाणकोटिनिक्षिप्तस्य शक्तितात्पर्यावधारणरूपश्रवणस्य प्रमेयावगमं प्रत्यंतरंगत्वादिति भावः ॥ प्रत्यगात्मेति ॥ प्रत्यगात्मप्रवणतालक्षणो यः संस्कारः प्रमेयासंभावनानिवृत्तिद्वारा विपरीतभावनानिवृत्तिद्वारा च तत्परिनिष्पन्ना, या तदेका(ग्र)प्रवृत्तिः सैव कार्यं तद्द्वारेणेत्यर्थः ॥ इति फलोपकार्यंगे इति ॥ इति हेतौ । यस्मात्करणकोटावनिवेशः श्रवणफलसाधनत्वं च तस्मात्फलोपकार्यंगं इत्यर्थः । विचाररूपस्य श्रवणस्य किं साक्षात्कारणत्वेनांगित्वं उत करणकोटिनिविष्टत्वेनेति विकल्प्याद्यं प्रत्याह ॥ विचार इति ॥ शाब्दबोधे शब्दस्य तज्ज्ञानस्य वा करणत्वम् । विचारस्त्वितिकर्तव्यतामात्रमिति भावः । द्वितीयं निराह ॥ न चेति ॥ अवघातादिद्वारा अवघातस्य करणशरीरनिर्वर्तकत्वे तथा व्रीह्यादीनां सौभरेण संनिपत्यांगत्ववदिह विचारस्य संनिपत्यांगत्वे प्रमाणाभावेन न करणकोटिनिविष्टत्वमित्यर्थः । न च तात्पर्यसंदेहे सति शब्दस्याबोधकत्वेन तात्पर्यावधारणविशेषितस्यैव करणत्वात् विचारस्यापि करणकोटिनिविष्टत्वमिति वाच्यम् । शाब्दज्ञानप्रतिबंधकसंशयनिरसनोपक्षीणत्वेन करणकोटिनिविष्टत्वे प्रमाणाभावादिति भावः । अस्तु वा करणकोटिनिविष्टत्वं तथापि न मननादिकं प्रति शेषित्वम्, प्रमाणाभावादित्याह ॥ संनिपात्यपीति ।

कोटित्वे मननादेरपि तदापत्तेः । किंच तात्पर्यज्ञानस्यापि करणत्वे वेदेऽपि तात्पर्यभ्रमसंभवात् बाह्यागमेऽपि तात्पर्यप्रमासंभवात् शाब्दज्ञानकरणस्य दुष्टत्वादुष्टत्वव्यवस्था न स्यात् । तस्मान्न तात्पर्यज्ञानं करणम् । नचाकरणमपि तद्यागस्यावघातादिकमिव शब्दस्य संनिपत्योपकारकं येन करणकोटिनिविष्टं स्यात् । तद्वत्करणीयद्रव्यशेषत्वादेरभावात् ।

किंच संनिपत्योपकारकत्वेऽपि न फलोपकारकमनननिदिध्यासनरूपांगं प्रति शेषिता । अन्यथाऽवघातादिः प्रयाजादिं प्रति शेषी स्यात् । एतेन करणभूतशब्दगतातिशयहेतुत्वाच्छ्रवणस्य करणत्वेनांगित्वम्, मनननिदिध्यासनयोस्तु सहचा(का)रिभूतचित्तगतातिशयहेतुत्वाच्छ्रवणे फलोपकार्यंगतेति चित्सुखोक्तं प्रत्युक्तम् । सोमयागसहकारिभूतदीक्षणीयाद्यंगत्वेन तद्गतातिशयहेतोः प्रयाजप्रोक्षणादेः सोमयागे संनिपात्यंगत्वेन तद्गतातिशयहेत्वभिषवग्रहणादिकं प्रत्यंगत्वप्रसंगात् । गौणांगत्वं त्वनंगत्वे पर्यवस्यति । एतेन करणीभूतशब्दधर्मशक्तितात्पर्यविषयत्वाच्छ्रवणस्य करणांतर्भावेनांगित्वमिति तत्वशुद्ध्युक्तं निरस्तम् ।

---

साक्षाद्विरोधिनो ज्ञानस्य जनकज्ञानविघटकतया प्रतिबंधकत्वमिति तात्पर्यभ्रमप्रतिबंधकत्वनिर्वाहायैव तात्पर्यज्ञानस्य कारणत्वमेषितव्यमिति वाच्यम् । मण्यादेरिवान्वयव्यतिरेकाभ्यां साक्षादेव तात्पर्यभ्रमस्य प्रतिबंधकत्वोपपत्तेरिति भावः ॥ बाह्यागमेऽपीति ॥ तदर्थस्य बाधितत्वेऽपि पुंमिच्छानियंत्रिततात्पर्यस्य अबाधितत्वादिति भावः ॥ व्यवस्था न स्यादिति ॥ प्रायेण ज्ञानरूपकरणस्य दुष्टत्वादुष्टत्वयोर्भ्रमप्रमाकरणत्वरूपतया लिंगपरामर्शादावव्यभूतत्वादिति भावः । ननु यदि तात्पर्यज्ञानं न वाक्यार्थज्ञाने करणं कथं तर्हि नानार्थावधिविशेषनिर्णय इत्याशंकामुपसंहारव्याजेन निरस्यति ॥ तस्मादिति ॥ तथापि पदार्थनिर्णय एव तात्पर्यज्ञानं हेतुः न वाक्यार्थज्ञान इति भावः ॥ तद्वत्करणीयेति ॥ अवघातस्य करणीभूतयागीयव्रीह्यादिशेषत्ववत् श्रवणस्य करणभूतशब्दोपकारकं प्रति शेषत्वाभावादित्यर्थः । एतमेवार्थमनेन विवृणोति ॥ सोमयागेति ॥ सोमयागस्य सहकारिभूता या दीक्षणीयेष्टिः शब्दसहकारिभूतचित्तस्थानीया तदंगत्वेन तद्गतातिशयहेतुभूतं यत् प्रयाजप्रोक्षणादिकं मनननिदिध्यासनस्थानीयं तस्य सोमयागे संनिपत्यांगत्वेन "सोममभिषुणोति आश्विनं गृह्णाति" इत्यादिना विहितं यदभिषवग्रहादिकं श्रवणस्थानीयं तत्प्रत्यंगत्वं स्यादित्यर्थः । ननु प्रयाजादेरभिषवादिकं प्रति साक्षादंगत्वरूपांगत्वाभावेऽपि सोमयागोपयुक्तदीक्षणीयांगत्वेनाभिषवादिकं प्रत्यपि गौणांगत्वमस्तीत्याशंक्याह ॥ गौणांगत्वमिति । एतेनेति ॥ प्रयाजादेरभिषवाद्यंगत्वापादनेनेत्यर्थः । दीक्षितस्य यथा भिन्नेति

किंच शब्देनापरोक्षज्ञप्तावप्रतिबद्धापरोक्षज्ञप्तौ वोत्पाद्यायां मनननिदिध्यासनयोरिवापरोक्षज्ञप्तौ प्रतिबद्धापरोक्षज्ञप्तौ वोत्पाद्यायां श्रवणस्याप्यपेक्षितत्वात्त्रयाणामपि शब्दं प्रति फलोपकार्यंगत्वे कथं परस्परमंगांगिभावः। अन्यथा "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय" इति श्रुतानां वृष्ट्यादिफलाय सौभरेतिकर्तव्यताभूतानां निधनगतहीषादीनां परस्परमंगांगिभावः स्यात्। करणापूर्वोत्पत्तौ च यागार्थस्यावघातादेः परमापूर्वोत्पत्तौ तदर्थप्रयाजादिः शेषः स्यात्। इदंच परोक्षज्ञानं लोके शब्दफलम्। नचाकरणमपि श्रवणं प्रति निदिध्यासनस्यांगत्वे श्रुतिवाक्ये स्तः। लिंगं तु विपरीतम्। नापि प्रकरणम्। श्रवणस्य फलासंबंधेन प्राधान्यासिद्धावितिकर्तव्यताकांक्षायोगात्। स्थानसमाख्ये त्वसंभाविते।

किंच तात्पर्यज्ञानस्य शाब्दप्रमाहेतुतायास्त्वया निषेधात्तदर्थस्य विचारस्य कथं प्रमा फलम्, येन मननादेः फलोपकार्यंगता स्यात्। यच्चोक्तं मननस्य चित्तैकाग्र्यायोग्यत्वरूपासंभावनानिरसनं द्वारं निदिध्यासनस्य तु विपरीतसंस्काररूपविपरीतभावनानिरसनं द्वारमिति। तन्न। सूक्ष्मवस्तुज्ञाने चित्तैकाग्र्यस्य हेतुत्वे दृष्टेऽपि युक्त्यनुसंधानरूपमननस्यायुक्तत्वशंकानिवर्तकताया एव दृष्टत्वेन तद्रहिते उक्तायोग्यत्वशंकानिवर्तकताया अदृष्टत्वेन च दृष्टहानाद्यापातात्। मननविधेरपूर्वविधित्वापाताच्च। "मतिर्यावदयुक्तता" इत्यादिस्मृति-

---

श्लोकं व्याचष्टे ॥ किंच शब्देनेत्यादिना ॥ ननु हीषादिदृष्टांतो विषमः। तत्र वृष्ट्यादिलक्षणफलभेदस्येवेह फलभेदाभावात्। शब्दस्यापरोक्षज्ञानमात्रफलकत्वाभ्युपगमादित्याशंक्याह ॥ इदं चेति ॥ ननु यथा प्रकरणप्रयाजादिकं प्रधानापूर्वाद्याधेः शेषत्वम्, यथा वा स्वर्गादिं प्रति यागादेः, एवं श्रवणस्य करणत्वेऽपि मनननिदिध्यासनयोस्तु तच्छेषत्वं स्यादित्याशंक्य निराकरोति ॥ नचेति ॥ यत्र "चतुर्मुखं पृच्छति प्रयाजेभ्यस्तत्। स्वर्गकामो यजेत" इत्यादिश्रुतिवाक्ययोरिव इह तयोरभावादिति भावः ॥ लिंगं त्विति ॥ सामर्थ्यरूपलिंगं तु विपरीतम्। श्रुतस्यैवार्थस्य मंतव्यत्वात्। मननस्य श्रवणशेषत्वे तु मतस्यैव श्रोतव्यत्वापत्तेस्तदस्तीति भावः ॥ प्रकरणमिति ॥ इतिकर्तव्यताकांक्षालक्षणमित्यर्थः ॥ फलासंबंधेनेति ॥ न च "द्रष्टव्यः श्रोतव्यः" इति दर्शनोद्देशेन श्रवणस्य विधानात् फलासंबंधोऽसिद्ध इति वाच्यम्। दर्शनस्यापरोक्षज्ञानरूपस्य श्रुत्यैव साध्यत्वायोगात्। शब्दस्य परोक्षज्ञानैकफलकत्वस्य व्यवस्थापितत्वादिति भावः। न च परोक्षज्ञानरूपशाब्दप्रमैव श्रवणस्य फलं स्यादिति वाच्यम्। तात्पर्यावधारणस्य शाब्दज्ञानहेतुत्वनिरासेनासावपि निरस्तत्वादिति भावः। ननु शक्तितात्पर्यावधारणं न

विरोधाच्च। निदिध्यासनस्य तु विपरीतसंस्कारनिवर्तकत्वे दृष्टेऽपि तन्निवृत्तेर्न ज्ञानहेतुता दृष्टा । रूप्यसंस्कारानुवृत्तावपि शुक्तिसाक्षात्कारदर्शनात् । तस्माच्छ्रवणसामर्थ्यरूपलिंगेन "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादिवाक्येन निदिध्यासनस्य फलसंबंधात् प्रकरणेन च श्रवणादिकं निदिध्यासने संनिपात्यंगम् । युक्तश्च विप्रकृष्टात्फलोपकारात् संनिकृष्टः स्वरूपोपकारः । अत एव नवमे पार्वणहोमयोरारादुपकारकत्वत्यागेन संनिपत्योपकारकतोक्ता । नच "द्रष्टव्यः श्रोतव्यः" इतिदर्शनाच्यवहितपाठरूपसंनिधानाच्छ्रवणस्य दर्शनान्वयः । सन्निधानस्य लिंगादितो दुर्बलत्वात् । किंच

"श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥"

इतिस्मृत्या श्रवणस्याज्ञाननिवृत्तिद्वारा मननस्य तु संशयविपर्ययनिवृत्तिद्वारा परोक्षतत्त्वनिश्चयसाध्ये साक्षात्कारफलके निदिध्यासनेऽगता सिद्धा । तदुक्तम्

"अपरोक्षदर्शिवैव श्रवणान्मननादनु ।
सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ॥" इति ।

उक्तं च सुधायां "निदिध्यासनं ब्रह्मदर्शनसाधनं तत्सिद्ध्यै श्रवणमनने अपि कर्तव्ये" इति । नच भावनाप्रकर्षजन्यत्वेन साक्षात्कारस्य कामुकस्य कामिनीसाक्षात्कारवदप्रमा(ण)त्वापातः । त्वयापि

---

श्रवणम् , किंतु विचार एव । तथाच तात्पर्यज्ञानस्य शाब्दज्ञानाहेतुत्वेऽपि विचारस्य तद्धेतुत्वमविरुद्धमित्याशंक्याह ॥ किंचेति । अपूर्वविधित्वापातादिति ॥ युक्त्यनुसंधानस्योक्तायोग्यत्वशंकानिरासकत्वस्य मानांतराप्रामाण्यादिति भावः ॥ निदिध्यासनस्य त्विति ॥ तथाच न विपरीतभावनानिरसनद्वारा निदिध्यासनस्य ज्ञानहेतुत्वमिति भावः । ननु मास्तु श्रवणस्यांगित्वं आग्नेयादिवत् त्रयाणामपि प्राधान्यं तु स्यादित्याशंकां निरस्यन् स्वविवक्षितमर्थमाह ॥ तस्मादित्यादिना ॥ ननु लिंगादिभिरंगत्वमात्रं बोध्यते, ननु संनिपत्यांगत्वमपीत्याशंक्याह ॥ युक्तश्चेति । उक्तेति ॥ "पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभिज्या हि" (अ. ९. पा. २ सू ५१ अधि. १८) दर्शपूर्णमासयोः "स्रुवेण पार्वणौ जुहोति" इति पर्वदेवत्यौ होमौ विहितौ । तत्र देवतावाची पर्वशब्दः कालवचनः उताग्नेयादियागसमुदायवचन इति संशये पर्वशब्दस्य काले मुख्यत्वात् कालवचन इति पूर्वःपक्षः । सिद्धांतस्तु पृणातिधात्वोर्दानवाचिनः पर्वशब्दो

"वेदांतवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन प्रामाण्यं प्रतिपद्यते ॥" इत्युक्तेः ।

न च निदिध्यासनस्य प्रमाकरणत्वमसिद्धमिति वाच्यम् । त्वया प्रतिबंधनिरासकत्वेनोक्तस्य श्रवणस्यापि तदसिद्धेः । निदिध्यासनानंतरं पुनरनुस्मृतः शब्दः एव करणं निदिध्यासनं तु तत्सहकारि श्रवणादि तु निदिध्यासनांगमिति संभवाच्च । अथवा श्रवणाद्यंगकनिदिध्यासनमपरोक्षज्ञानकरणमनःसहकारि । तस्मात्

ध्याने श्रुत्यादिभिः साक्षात्काररूपफलान्विते ।
मननश्रवणे अंगे निरस्ताज्ञानसंशयौ ॥

न तु विवरणमत इव श्रवणमंगि निदिध्यासनादिकं तु तदंगमिति ।

॥ इति मनननिदिध्यासनयोर्विवरणोक्तश्रवणांगत्वभङ्गः ॥ १ ॥

---

यथाधिकरणव्युत्पत्त्या काले मुख्यः तथा भावव्युत्पत्त्या कर्मण्यपि । तत्र प्रकरणात् कर्मार्थत्वं युक्तम् । आग्नेयादियागरूपस्य कर्मणः प्रकृताप्रकृतप्रत्यपेक्षणाय स्मरणांशेन संस्कार्यत्वसंभवेन सन्निपातित्वलाभाच्च । सन्निपातित्वकल्पनं ह्यारादुपकारकत्वकल्पनादभ्यर्हितम् । उक्तरीत्या दृष्टार्थतालाभात् सन्निपातिवाक्येषु सर्वत्र संस्कारत्वाविशेषेऽपूर्वसाधनत्वस्याप्यंगीकारेण आरादुपकारकविधियोजकात् प्रकरणादभ्यर्हितेन वाक्यप्रमाणेन विनियोगसंभवाच्च । तस्मात्कर्मवचन इत्यधिकरणे उक्तेरर्थः । ननु ब्रह्मदर्शनस्य निदिध्यासनजन्यत्वे विधुरकामिनीसाक्षात्कारवदप्रमात्वापातादित्याशंक्याह ॥ न चेति ॥ नन्वेवं शब्दापरोक्षाभ्युपगमापत्तिः निदिध्यासनं ब्रह्मदर्शनसाधनमिति श्रुतिविरोधश्च स्यादित्यतः पक्षांतरमाह ॥ अथवेति ॥

॥ इति मनननिदिध्यासनयोर्विवरणोक्तश्रवणांगत्वभङ्गः ॥ १ ॥

## ॥ अथ श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ॥ २ ॥

यच्चोक्तं विवरणे श्रवणादीनां विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धोपायत्वादिना तद्विधेरपूर्वपरिसंख्याविधित्वायोगेऽपि नियमविधित्वमिति । तन्न । यतः

श्रवणं ह्यपरोक्ष्याय त्वन्मते श्रवणेन च ।
नापरोक्ष्यं क्वचिद्दृष्टं तेनापूर्वविधिर्भवेत् ॥

तथाहि त्वन्मते परोक्षज्ञाने कामनाभावात् तत्कामस्य विचारविध्यनधिकारित्वेन परोक्षज्ञानं प्रति साधनत्वेन विचारविधानायोगात् त्वदभिप्रेतायाश्चापरोक्षज्ञानं प्रति विचारसाधनताया अत्यंताप्राप्तत्वेनापूर्वविधित्वमेव युक्तम् । ननु गांधर्वशास्त्रादिविचारस्य षड्जादिसाक्षात्कार-हेतुता क्लृप्तेति चेन्न । न तावद्विचार्यशास्त्रार्थसाक्षात्कारे स हेतुः क्लृप्तः । कर्मकांडविचारेण तदर्थसाक्षात्कारादर्शनात्। आत्मनोऽपरोक्षत्वात्तद्विचारस्तथा कर्माणि तु नैवमिति चेन्न अपरोक्षे विचारवैयर्थ्यात्। नहि(योयोऽ)योंऽशोऽपरोक्षःस(सस)विचार्यते। नापि विचारेण वा विचार्य-शास्त्रेण वा जन्यसाक्षात्कारे स हेतुः क्लृप्तः आत्मसाक्षात्कारोद्देशेन शास्त्रविचारविधिं विनात्म-साक्षात्कारस्य शास्त्रविचारजन्यत्वानिश्चयात् । नापि विचार्यशास्त्रार्थस्य साक्षात्कारयोग्यस्य साक्षात्कारे स हेतुः क्लृप्तः । कालांतरे साक्षात्करिष्यमाणत्वेन तद्योग्ये विचार्यशास्त्रार्थे स्वर्गादौ निष्यादौ च विचारेण तददर्शनात् । तस्मात्षड्जादिसाक्षात्कारे गांधर्वादिशास्त्र-विचारो हेतुत्वेन क्लृप्त इति वाच्यम् । नच प्रकृतकार्यविजातीयकार्ये प्रकृतविचारविजातीय विचारस्य हेतुताक्लृप्तिमात्रेण प्रकृते तस्यापूर्वविधित्वहानिः । अपूर्वविधिमात्रोच्छेदापातात् ।

---

॥ अथ श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ॥ २ ॥

॥ परोक्षज्ञाने कामनाभावादिति ॥ अज्ञाते कामनायोगात् ज्ञाते च ज्ञानावच्छेदकतया तद्विषयस्य ब्रह्मणोऽपि ज्ञातत्वेन परोक्षज्ञानमात्रे न कामना । सिद्धे इच्छाविरहादिति भावः । ननु विचार्यशास्त्रार्थस्य साक्षात्कारयोग्यस्य विद्यमानस्य साक्षात्कारे विचारो हेतुरिति न स्वर्गादौ व्यभिचार इत्याशंकामुपसंहारव्याजेन निरस्यति ॥ तस्मादिति ॥ यथा च विशेषरूपेणैव कार्यकारणभावात् नोक्तरूपेण कार्यकारणभावः । मानाभावात् । न च यद्विशेषयोरिति न्यायानुक्तरूपेणापि कारणता, षड्जादिसाक्षात्कारस्य कर्मेन्द्रियादिना पदोपपत्त्या विचारस्यान्यथा-सिद्धत्वेन बाधकसत्त्वादिति भावः ॥ प्रकृतविचारेति ॥ वैदिकन्यायानुसंधानरूपस्यार्थः ॥ अपूर्व-विधीति ॥ स्वर्गजातीयालौकिकसुखे यागजातीयलौकिकक्रियायाः हेतुत्वस्य मानानिरूपणात् ,

किंच पाक्षिकप्राप्तौ हि नियमः । सा च साधनांतरप्राप्तौ । नच रूपादिरहितात्मज्ञाने-ऽन्यप्राप्तिरस्ति । नन्वपू(र्वीये)र्वीयेषु व्रीहिषु नखविदलनादेरप्राप्तावपि व्रीहिमात्रे तत्प्राप्त्या "व्रीहीनवहंति" इति यथा नियमः तथा निर्विशेषात्मनि मानांतराप्राप्तावप्यात्ममात्रे तत्प्राप्त्या नियम इति चेन्न । व्रीहीनित्यत्र व्रीहिशब्दोऽपूर्वीयद्रव्यपरो न तु व्रीहिपरः । अन्यथा यवेष्ववघात औपदेशिको न स्यात् । नीवारेषु च व्रीहिरूपद्वाराभावेनातिदिष्टोऽपि बाध्येतेति नवमे स्थापितत्वेनापूर्वीयद्रव्य एव विदलनादिप्राप्तेर्वक्तव्यत्वात् । अन्यथा वैतुष्यमात्रेऽव घातनियमे द्रव्यार्जने याजनाद्युपायनियमवत् तस्य पुरुषार्थत्वप्रसंगेन लौकिकेष्वपि व्रीहिषु दलने प्रत्यवायः स्यात् । न च सामान्ये दलनादिप्राप्त्या विशेषेऽवघातनियमः । इह निर्विशेषसविशेषरूपविशिष्टद्वयानुगते विशेषाभावादिद्वारा वेदांतवेद्ये चिन्मात्रे मानांतराप्राप्तेः । यत्रापूर्वीयेष्ववघातनियमस्तत्रैव दलनप्राप्तिसंभवे वैयधिकरण्यायोगाच्च । संभवति ह्यपूर्वीयेष्वपि व्रीहिषु नियमादृष्टाजनकस्यापि दलनस्य प्राप्तिः । नहि तस्य प्राप्तिर्नाम तेन तस्य वैतुष्यसंपादनम् । तथात्वेऽवघातनियमायोगात् । किंतु शक्तत्वेन प्रसक्तिमात्रम् । तच्च

---

"स्वर्गकामो यजेत" इत्यादिविधेरप्यपूर्वविधित्वं न स्यादिति भावः । यत्त्पुक्तं पक्षविधेर्नियमविधित्वमिति । तदप्ययुक्तमित्याह ॥ किंचेत्यादिना । व्रीहीनित्यत्रेति ॥ तथाच दृष्टांतासंप्रतिपत्तिरित्यर्थः ॥ नवमे स्थापितत्वेनेति ॥ "द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात्" (अ. ९ पा. १ सू. ११ अधि ५) दर्शपूर्णमासयोर्व्रीहीनवहंतीत्यादिसंस्कारवाक्येषु व्रीह्यादयः प्रोक्षणादिभिः किं व्रीहित्वाद्याकारेण संस्क्रियंते उत "व्रीहिभिर्यजेत" इत्यादिवाक्याकातापूर्वसाधनत्वाकारेणेति संशये(श्रुते श्रुतव्यतिक्रमे कारणाभावात् व्रीहित्वाद्याकारेणेति पूर्वपक्षं कृत्वा उक्तरीत्या सिद्धांतितत्वेनेत्यर्थः । यथोक्तरीत्या व्रीहिपदस्यापूर्वीयद्रव्यपरत्वे शूर्पादावप्यवघातः स्यादिति वाच्यम् । यथांतरापूर्वीयत्वकद्रव्यविशेषस्यैव व्रीहिपदलक्ष्यत्वांगीकारादिति भावः । ॥ अन्यथेति ॥ व्रीहिपदस्य व्रीहिमात्रपरत्वमभ्युपेत्य तत्र साधनांतरप्राप्त्या नियमविधित्वाभ्युपगमे वैतुष्यमात्रेऽवघातनियम इति स्यात् । एवं च पुरुषार्थत्वमेव स्यात् न क्रत्वर्थत्वमित्यर्थः । अन्यस्तु यथाप्यपूर्वीयव्रीहिदरस्यापूर्वीयद्रव्यपरत्वम् । साधनांतरप्राप्तिस्तु व्रीहित्वसामान्येनैव भविष्यतीति नियमविधित्वोपपत्तिरित्याशंक्य निराकरोति ॥ नचेति ॥ यदुक्तं व्रीहित्वमीहां-व्रीहित्वसामान्येन साधनांतरप्राप्तिरिति तदपि न युक्तमित्याह ॥ तत्रेति ॥ यन्नोक्तमिव साध्ये वनियतत्वसाधनप्राप्तौ नियमो वक्तव्यः । यथावघातसाध्ये वैतुष्ये नखविदलनस्य प्रसक्तिरपि

दलनादेरपूर्वीयेष्वप्यस्ति । निर्विशेषात्मनि तु प्रत्यक्षादेः प्रसक्तिरपि नास्तीति विशेषः । अवघातसाध्यवैतुष्यस्य दलनादिसाध्याद्वैजात्येऽपि विध्यंतरापेक्षितवैतुष्यस्य सामान्यस्य दलनेनापि सिद्धेर्नियमः ।

कौमुद्यां तु यथा मंत्रार्थज्ञानस्य तन्मूलकल्पसूत्रीयग्रहणकवाक्यादिप्राप्त्या पक्षेऽप्राप्तमंत्रसाध्यत्वं नियम्यते "मंत्रैरेव स्मृतिः साध्या" इति । तथा वेदांतमूलस्त्रीशूद्रसाधारणस्मृतिपुराणादिप्राप्त्या पक्षेऽप्राप्तवेदांतश्रवणादिपरिपूरणार्थो नियमः । "तस्माद्ब्राह्मणो नावैदिकमधीयीत" इति श्रुतेः । "श्रोतव्यः श्रुतिवाक्येभ्यः" इति स्मृतेश्चेत्युक्तम् । तन्न । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इत्यादिस्मृतिविरोधात् । न ह्यविचारितेन गहनेन तेनोपबृंहणं युक्तम् । "अपि स्मर्यते" इत्यादिना सूत्रकारेणाप्युपबृंहणाच्च । नच वेदांततात्पर्यनिर्णयायैव तद्विचारो न तु ब्रह्मज्ञानायेति वाच्यम् । कर्मविषयकस्मृतिभिः कर्मज्ञानस्येव ब्रह्मविषयकात् भारतादौ मुमुक्षून् शुकादीन् प्रत्युपदिष्टादितिहासादपि साक्षाद्ब्रह्मज्ञानस्योदयात् । समुपबृंहयेदित्यस्य तु वेदतात्पर्यं वेदवाक्यानुसारेणैवाऽनेकशास्त्राद्यभिज्ञऋषिप्रणीतनिर्णयात्मकेतिहासाद्यनुसारेणैव ज्ञेयमित्यर्थः । न तु सर्वेणापीतिहासादिना वेदतात्पर्यमेव ज्ञेयम्, अर्थस्तु न ज्ञेय इति । "नावैदिकम्" इतिश्रुतिस्त्ववैदिकबाह्यागमाद्यध्ययनं निषेधति । न तु वैदिकेतिहासादेः । "ऋग्वेदं भगवोऽध्येमि" इत्यारभ्य "इतिहासपुराणं पंचमं वेदानां वेदम्" इतिश्रुत्या "वेदानध्यापयामास महाभारतपंचमान्" इत्यादिस्मृत्या च विरोधात् । वेदांगाध्ययनस्यापि निषेधापाताच्च । "श्रोतव्यः श्रुतिवाक्येभ्यः" इति तु श्रुतीनां मूलप्रमाणत्वाभिप्रायम् ।

---

संभवति । अवघातसाध्यतुषविमोकस्य विजातीयत्वेन तं प्रति नखविदलनस्य स्वरूपायोग्यत्वादित्याशंक्याह ॥ अवघातसाध्येति । ग्रहणकवाक्येति ॥ संप्रदायवाक्येत्यर्थः । ननु समुपबृंहयेदिति इतिहासपुराणयोर्वेदार्थनिर्णयोपयोगित्वमात्रं प्रतीयते, न तु वेदतुल्यतया ब्रह्मज्ञानसाधनत्वमित्याशंक्याह ॥ समुपबृंहयेदित्यस्य चेति । वेदाङ्गाध्ययनस्येति ॥ नचोक्तश्रुतेः "ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्च" इति वाक्यांतरबलादंगातिरिक्तविषयत्वमिति वाच्यम् । तर्हि तादृग्वाक्यबलादेव इतिहासाद्यतिरिक्तविषयत्वमप्यस्तु । किंच नियमादृष्टस्याभावादपि न श्रवणे नियमविधिः संभवति । तत्र किं तत्त्वनिश्चयस्तत्साध्यः, चित्तशुद्धिर्वा, अपरोक्षं वा, अज्ञाननिवृत्तिर्वा, अपरोक्षविशेषो वा, अन्यद्वा, इति विकल्प्याद्यं दोषमाह ॥ किंचेति ॥

किंच विप्रकीर्णनानाशाखार्थसंग्रहादिरूपेणेतिहासादिना तत्वनिश्चयदर्शनात् सति च तस्मिन् विविदिषाद्वारा तदर्थाया अंतःकरणशुद्धेरपेक्षितत्वात् । आपरोक्ष्यस्य च विषयस्वभावादेव सिद्धया वेदजन्ये ब्रह्मज्ञाने इतिहासादिजन्यादधिकस्याऽऽपरोक्ष्यस्याननुभवेन च तस्य नियमादृष्टासाध्यत्वात् । ज्ञानस्य च स्वप्रागभावनिवर्तन इवाऽज्ञाननिवर्तनेऽप्यदृष्टनिरपेक्षत्वादन्यस्य च नियमादृष्टसाध्यस्याभावाच्च नियमविधिर्युक्तः । तस्मात्

"नियमादृष्टसाध्यस्य व्यावर्त्यस्याप्यभावतः । श्रवणादेर्नियमनं परपक्षे न युज्यते ॥"

एतेन शूद्रप्रणीतात्मविद्याप्रबंधादिप्राप्तिनिमित्तकाप्राप्तांशपूरणार्थो नियमविधिरिति निरस्तम् ।

॥ इति श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ॥ २ ॥

---

व्यावर्त्यसाध्यस्य नियमादृष्टफलत्वायोगादिति भावः । द्वितीयं निराह ॥ सति च तस्मिन्निति ॥ न तृतीय इत्याह ॥ आपरोक्ष्यस्य चेति ॥ न चतुर्थ इत्याह ॥ वेदजन्य इति ॥ न पञ्चम इत्याह ॥ ज्ञानस्य चेति ॥ न षष्ठ इत्याह ॥ अन्यस्य चेति ॥ ननु म्लेच्छगीतादिव्यवच्छेद्यस्य सत्त्वान्तरव्यावर्त्यासिद्धिः । नच न म्लेच्छितवै इत्यादिनैव तद्व्यावृत्तिसिद्धेर्न श्रवणविधिव्यावर्त्यत्वमिति वाच्यम् । क्रत्वर्थपुरुषार्थभेदेनानृतवदननिषेधद्वयवत् इहापि निषेधद्वयसंभवादित्याशंक्याह ॥ एतेनेति ॥ नियमादृष्टसाध्याभावेनेत्यर्थः । एतच्चोपलक्षणम् । परस्परनिरपेक्षस्वतन्त्रसाधनद्वयस्य पाक्षिकप्राप्त्यभावेन नियमस्य वक्तव्यत्वात् । म्लेच्छगाथादेश्च वेदसमानविषयत्वेन वेदोपजीव्यतया तद्व्यावृत्तेरयोगात् । अन्यथा तथाभूतम्लेच्छगाथयादिना यागस्वर्गसाधनादेः ज्ञातुं शक्यत्वेन स्वर्गकामादिवाक्यस्यापि अपूर्वविधित्वाभावप्रसङ्गाच्च श्रोतव्य इत्यादौ नियमविधित्वमिति ।

यथा च न घटते श्रवणस्य नियमविधिविषयत्वं तथा प्रपंचितमस्माभिर्न्यायमौक्तिकमालायां तत्रैवानुसंधेयम् ।

॥ इति श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ॥ २ ॥

## ॥ अथ परमते श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥

किंच न तावच्छक्तितात्पर्यावधारणं वा तद्विशिष्टशब्दावधारणं वा तात्पर्यप्रमापकलिंगावधारणं वा आगमाचार्योपदेशजन्यज्ञानं वा श्रवणम्। परमते ज्ञानविध्यभावात्। अवाच्ये च ब्रह्मणि शक्त्यसंभवात्। तात्पर्यमपि न तावदापातधीजन्यस्य विचारनिवर्त्यस्य संशयस्य धर्मिणि। तस्य प्रागेव निश्चितत्वेन तन्निश्चयार्थं तात्पर्यनिश्चयसाधनस्य विचारस्य वैयर्थ्यात्। अन्यथा विचारानंतरमपि संशयादिप्रसंगात्। नापि संशयधर्मिगतप्रकारविशेषे तद्विशिष्टे तदुपलक्षिते वा। अखंडार्थताहानेः। नापि गुरुमुखाद्वेदांतानां ब्रह्मणि संयोजनं श्रवणम्। संयोगस्याऽप्युक्ततात्पर्यावधारणाद्यनतिरेकात्। नापि वाक्यविशेषप्रयोगरूपवादकथा श्रवणम्। तत्र श्रवणपदाप्रयोगात्। अत एव न परमते मनननिदिध्यासनविधिर्युक्तः। तयोरपि ज्ञानविशेषव्यतिरेकेण दुर्निरूपत्वात्। न चानिच्छतोऽपि दुर्गंधादिज्ञानदर्शनेन ज्ञानस्याविधेयत्वेऽपि निदिध्यासनस्य ज्ञानसंतानत्वेन विधेयत्वम्। अनिच्छतोऽपि दुर्गंधज्ञानसंतानदर्शनात्। न चावधारणं नाम न ज्ञानम्, किंतु ध्यानमुभयविजातीयं चेतोवृत्त्यंतरं वा। "श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः" इति सुरेश्वरेण क्रियाशब्दप्रयोगादिति वाच्यम्। तात्पर्यरूपे विषये उपक्रमादिरूपे प्रमाणे च सति जायमानस्य तस्य ज्ञानाद्बहिर्भावानुपपत्तेः। नहि वाचो धेनुत्वेनोपासनादिकं प्रमाणवस्तुपरतंत्रम्। एतेन तर्कात्मको विचारः श्रवणमिति प्रत्युक्तम्। व्याप्तिज्ञानपरतंत्रत्वेनानुमितेरिव तर्कज्ञानस्याप्यपुंतंत्रत्वात्। न हि पुंतंत्रः प्रतिमादौ नारायणाद्यारोपो व्याप्तिज्ञानाद्यपेक्षः। तस्मात्

श्रुत्वादेर्धीस्वरूपत्वाद्विध्यनर्हत्वतो धियाम्। परपक्षे नैव युक्तः श्रवणादिविधिः क्वचित्॥

॥ इति परमते श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥

---

॥ अथ परमते श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥

॥ ज्ञानविध्यभावादिति ॥ तस्य प्रमाणवस्तुपरतन्त्रतया पुमधीनत्वाभावादित्यर्थः (पुंस्यधीनत्वादिति भावः) ॥ अवाच्य इति ॥ तत्र शक्तिपदं वृत्तिमात्रपरम्। तथावाच्येऽप्यस्तीति वाच्यम्। शुद्धस्यासंगित्वेन वृत्तिमात्रस्याप्यसंभवादिति भावः ॥ अखण्डार्थताहानेरिति ॥ उपलक्ष्यस्याप्युपलक्षितत्वरूपधर्मविशिष्टत्वाभावादिति भावः। ननु सति प्रमाणे जायमानस्य ज्ञानत्वमिति न नियमः। वाग्धेनुत्वोपासनस्याज्ञानरूपत्वादित्याशंक्याह ॥ नहीति ॥ तर्कात्मक इति ॥ स च व्याप्तिग्रहसापेक्षोऽपि पुंतन्त्र इति भावः। श्रुत्यादेः श्रवणादेः।

॥ इति परमते श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥

## ॥ अथ श्रोतव्यइत्यादेरनुवादत्वभङ्गः ॥ ४ ॥

केचित्तु अधीतात्स्वाध्यायात्प्रयोजनवदर्थदर्शनात्तन्निर्णयाय पुरुषः स्वयमेव तत्त्वदर्शिन आचार्यान्न्याययुक्तवाक्यार्थग्रहणरूपे श्रवणे प्रवर्तत इति श्रोतव्य इत्यनुवादः । आचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनरूपस्य मननस्य श्रवणप्रतिष्ठार्थत्वेन प्राप्तत्वान्मंतव्य इति चानुवादः । निदिध्यासितव्य इत्येव तु विधिः । अविच्छिन्नस्मृतिसंतानरूपध्यानात्मकनिदिध्यासनकर्तव्यताया अन्यतोऽप्राप्तेः । द्रष्टव्य इत्यनेन तु तस्य ध्यानस्य विशदतरावभासस्वरूपा दर्शनसमानाकारता विधीयत इत्याहुः । तन्न । त्वयापि "सहकार्यंतरविधिः" इतिसूत्रे "तस्माद्ब्राह्मणः पांडित्यम्" इत्यादिवाक्ये औपदेशिकार्थाधिगमस्य पुनःपुनर्ग्रंथसंशीलनस्य च विधेरनंगीकृतत्वेन तयोरेव श्रोतव्यो मंतव्य इत्याभ्यां विधिसंभवात् । औपदेशिकार्थाधिगमादौ श्रवणादिपदप्रयोगात् ।

किंचोपायत्वदशाप्रभृति भगवज्ज्ञानं प्रीतिरूपमिति वदतस्तव मते कृतश्रवणमननं पुरुषं प्रति भगवतोऽत्यंतानुकूलत्वात् अनुकूलविषयचिंतने च रागत एव प्रवृत्तेश्चिंतनरूपनिदिध्यासनस्यैव विधिर्न स्यात् । न च रागप्राप्ते चिंतनेऽविच्छिन्नत्वादिगुणविधानं चेत् रागप्राप्ते

---

॥ अथ श्रोतव्यइत्यादेरनुवादत्वभङ्गः ॥ ४ ॥

॥ स्वयमेवेति ॥ विधिप्रयुक्ति विनेत्यर्थः । न च स्वतंत्रविध्यभावेऽपि अर्थज्ञानपर्यंताध्ययनविधिपरिगृहीतत्वात्स्वयमेवेत्ययुक्तमिति वाच्यम् । अध्ययनविधेरर्थज्ञानपर्यंतत्वे प्रमाणाभावात् । अध्ययनविधेरर्थज्ञानपर्यंतत्वाभावे प्रवर्तकाभावेन प्रवृत्तिरेव न स्यादिति चेन्न । सांगस्वाध्यायाध्ययनवतः संशयादिसंभवेन तन्निरासाय स्वयमेव प्रवृत्तेरुपपत्तेरिति भावः । ॥ मोक्षहेतुत्वायोगादिति ॥ "सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इति श्रुत्या सम्यग्ज्ञानस्यैव मोक्षहेतुतावगमादिति भावः । द्रष्टव्य इत्यनेन दर्शनसमानाकारत्वविधाने दृष्टांतमाह ॥ दर्शनश्रुतीनामिति ॥ न च "आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिप्रतिलंभे सर्वग्रंथीनां विप्रमोक्षः", "निचाय्य तं मृत्युमुखात् प्रमुच्यते" इत्यादिश्रुत्या निदिध्यासनस्यैव मोक्षसाधनत्वावगमात् दर्शनश्रुतीनामुपचरितार्थत्वमावश्यकमिति वाच्यम । "ततस्तु तं पश्यते निष्कलं ध्यायमानः, क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इतिश्रुत्या ध्यानस्य

वाक्यार्थग्रहणे गुरुमुखपूर्वकत्वादिगुणविधानं श्रवणादिवाक्येष्वस्तु । किंच ज्ञानस्य विशदतरावभासत्वं न तावदधिकविषयत्वम्, स्मरणस्य स्वजनकानुभवात्तजन्यस्मरणाच्चाधिकविषयत्वायोगात्। नापि साक्षात्त्वम्। स्मृतौ तदसंभवात्। पुत्रादिध्यानस्येव साक्षात्त्वस्य भ्रांतिमात्रत्वे च मोक्षहेतुत्वायोगात् । दर्शनश्रुतीनामुपचरितार्थत्वापत्तेश्च ।

॥ इति श्रोतव्यइत्यादेरनुवादत्वभङ्गः ॥ ४ ॥

---

दर्शनहेतुत्वस्य तस्य च मोक्षहेतुत्वस्य चावेदनेन त्वदुदाहृतश्रुतेश्च दर्शनफलानुवादितया त(त्व)दुक्तार्थासाधकत्वादिति । प्रपंचितं चैतत् अस्माभिर्न्यायमौक्तिकमालिकायां तत्रैव अनुसंधेयम् ।

॥ इति श्रोतव्यइत्यादेरनुवादत्वभङ्गः ॥ ४ ॥

## ॥ श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः ॥ ५ ॥

यथोक्तं विवरणे श्रवणविधिरेव विचारविधायक इति विचारविधायकं जिज्ञासासूत्रं श्रवणविधिमूलमिति । तन्न । त्वया विचारविधौ श्रवणसाध्यपरोक्षज्ञानाधीनाया अपरोक्षज्ञानकामनाया अधिकारिविशेषणत्वांगीकारेणान्योन्याश्रयापातात् । किंचायं जिज्ञासासूत्रोक्तो विचारस्तत्त्वनिर्णायकन्यायानुसंधानरूपः । अन्यथा न्यायग्रथनात्मकशास्त्रारंभसिद्धये तत्कर्तव्यतोक्त्ययुक्तेः । इतरस्य वेदेतिकर्तव्यतानुपपत्तेश्च । न च श्रवणमुक्तन्यायानुसंधानरूपम् । मननाभेदप्रसंगात् । नन्वद्वितीये ब्रह्मणि वेदांतानां शक्तितात्पर्यावधारणं श्रवणम् । तच्चोपक्रमोपसंहारादितात्पर्यलिंगविचाराधीनमिति विचारविधायकं श्रवणविधिमूलमेव जिज्ञासासूत्रम् । मननं तु श्रुतस्यार्थस्य युक्तिभिरनुचिंतनमिति चेन्न । विवरणे श्रवणमंगि, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानादिति करणत्वेनोक्तस्य श्रवणस्येतिकर्तव्यतारूपविचारत्वायोगात् । किंच युक्तिभिरनुचिंतनं नाम यदि श्रवणनिश्चितस्य तात्पर्यस्य तद्विषयस्य वा स्मरणं वा प्रत्यभिज्ञा वा संस्कारदार्ढ्यफलकं श्रवणसमानाकारमभिज्ञांतरं वा तर्हि तस्याऽऽवश्यकश्रवणादेव सिद्धेर्मननविधिवैयर्थ्यम् । त्रिविधस्यापि तस्य श्रवणानंतर्गतयुक्त्यनपेक्षत्वेन "श्रोतव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिः" इतिव्यवस्थापकस्मृतिविरोधश्च ।

---

॥ अथ श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः ॥ ५ ॥

॥ श्रवणसाध्येति ॥ श्रवणं विना वेदार्थज्ञानासंभवेनापरोक्षज्ञानकामनाहेतुभूतं परोक्षज्ञानं श्रवणसाध्यमिति भावः । एवं च श्रवणे प्रवृत्त्यनंतरमेवाधिकारसिद्धिः तत्सिद्धौ च श्रवणे प्रवृत्तिरित्यन्योन्याश्रयापातादित्यर्थः । ननु सांगसशिरस्कस्वाध्यायाध्ययनवतः श्रवणं विनापि परोक्षज्ञानमुत्पद्यते । तदेव चापरोक्षज्ञानकामनाहेतुरिति नान्योन्याश्रय इति चेन्न, वेदार्थस्यातिगंभीरत्वेन श्रवणं विना ज्ञातुमशक्यत्वादिति भावः । किंच न्यायानुसंधानरूपविचारविधायकजिज्ञासासूत्रस्य न श्रवणविधिमूलत्वं संभवति, श्रवणस्याविचाररूपत्वादित्याह ॥ किंचायमिति ॥ एवं सति मननाभेदं विवृणोति ॥ मननं त्विति ॥ ननु श्रवणस्य विचाररूपत्वेऽप्यंगित्वं न विरुद्धं तस्य करणविचाररूपत्वेन करणत्वोपपत्तेरित्यतो दोषांतरमाह ॥ किंचेति ॥ दृष्टफलानां श्रवणादीनां वाक्यार्थानुष्ठानस्य "अप्रवृत्तिरलक्षणत्वात्" इत्यधिकरणसिद्धत्वादिति भावः ॥ श्रवणानंतर्गतेति ॥ श्रवणानपेक्षितेत्यर्थः ॥ स्मृतिविरोधश्चेति ॥ मननस्य श्रवणसमानाकारत्वे

“श्रवणं यावदज्ञानं मतिर्यावदयुक्तता” इति मननस्य श्रवणानिवर्त्यायुक्तत्वशंकानिवर्तकत्ववाचिस्मृतिविरोधश्च । यदि त्वनुचिंतनं श्रवणेन तात्पर्ये गृहीतेऽप्यस्यात्र तात्पर्यं युक्तं नवेति संशयादिनिवर्तकयुक्त्यनुसंधानरूपम्, तर्हि युक्तायुक्तत्वसंशयादेः संशयपूर्वपक्षसिद्धांतैर्मीमांसाशास्त्रे प्रथितात्संशयादिनिवर्तकान्न्यायजातादन्येनानिवृत्तेस्तादृशन्यायप्रथनात्मकमीमांसाशास्त्रारंभोपयुक्तविचारकर्तव्यतां प्रतिपादयदाद्यं सूत्रं मननविधिमूलमेव स्यात् ।

एतेन गुरुमुखाद्वेदांतानां ब्रह्मणि संयोजनं श्रवणम् । मननं तु युक्तितोऽसंभावनानिरसनमिति कौमुदीकृतस्तयोर्भेदः प्रत्युक्तः । श्रवणे उक्तयुक्त्यननुप्रवेशे इष्टसिद्धेः । अनुप्रवेशे च भेदासिद्धेः । तेनैवासंभावनानिरसनसिद्धेश्च । युक्त्यननुसंधानेऽपि श्रुतपदप्रयोगाच्च । नच कौमुदीकृतस्य वादकथारूपश्रवणस्य युक्त्यनुसंधानात्मकमननाद्भेदः । वादकथायास्तत्वनिर्णायकन्यायचर्चारूपत्वेन मननाद्भेदायोगात् । वाक्यार्थग्रहणं विना निरालंबनचर्चायोगेन तदर्थवाक्यार्थग्रहणरूपत्वे चेष्टापत्तेः । न्यायानुसंधानार्थप्रश्नोत्तररूपवाक्यविशेषप्रयोगरूपत्वे च तत्र श्रवणपदाप्रयोगात् । विचारविधायकस्याद्यसूत्रस्य श्रवणविधिमूलत्वासिद्धेश्च । ननु समन्वयाध्यायोक्ततात्पर्यनि(श्चाय)र्णायकोपक्रमादियुक्त्यनुसंधानं श्रवणम् । द्वितीयाध्यायोक्तार्थासंभवाशंकानिवर्तकयुक्त्यनुसंधानं तु मननम् । सुरेश्वरेण—

“वेदांतश्रवणं यत्तदुपायस्तर्क एव च ।
श्रुतिलिंगादिको न्यायः शब्दशक्तिविवेककृत् ॥
आगमार्थविनिश्चित्यै मंतव्य इति भण्यते ।
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते ॥” इत्युक्तेः ।

---

श्रवणनिवर्त्यायुक्तत्वशंकानिवर्तकत्वायोगादिति भावः ॥ मननविधिमूलमेव स्यादिति ॥ समानविषयत्वादिति भावः । अत्र वादकथाशब्देन किं तत्त्वनिर्णयात्मकन्यायचर्चोच्यते तदुपनिभूतवाक्यार्थग्रहणं वा न्यायानुसंधानार्थप्रश्नरूपवाक्यप्रयोगो वेति विकल्प्य क्रमेण दूषयति ॥ वादकथाया इत्यादिना । विचारविधायकेति ॥ एतच्च दूषणं मध्यमपक्षेऽपि योजनीयम् । ॥ वेदांतश्रवणमिति ॥ यः शक्तिनिर्णयानुकूलश्रुतिलिंगादिन्यायस्तदनुकूलतर्कश्च तद्वेदांतश्रवणम् । यश्चागमार्थनिश्चायकः तदनुकूलतर्कश्च तन्मंतव्य इति श्रुत्युक्तमननम् । नच “शुष्कतर्कं तु वर्जयेत्” “तर्काप्रतिष्ठानात्” इत्यादिना तर्कस्य निषेधात्कथं तस्य श्रवणाद्यंतर्गतिरिति वाच्यम् । शुष्कतर्कस्य निषेधेऽपि वैदिकतर्कस्य “मीमांसते ब्रह्मवादिनः” इत्यादौ

अन्यैरपि "वेदांतानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमितिधीः श्रवणं भवेत् ॥
समन्वयाध्याय एतत्सूक्तं धीस्वास्थ्यकारिभिः ।
तर्कैः संभावनार्थस्य द्वितीयाध्याय ईरिता ॥"

इत्युक्तेरिति चेन्न । विवरणे "यौक्तिकासंभावनाविपरीतभावनानिरसिततर्काणां प्रथमज्ञानेऽन्तर्भूतत्वात्" इत्यादिनार्थोपपत्तीनामपि श्रवणांतर्गतिमुक्त्वा "ब्रह्मात्मपरिभावनाप्रचयनिमित्तकत्वादेकाग्रवृत्त्ययोग्यत्वमसंभावना, विपरीतभावना तु शरीराद्यध्याससंस्कारप्रचयः" इत्यादिना असंभावनानिवर्तकस्य मननस्यार्थनिश्चयानंतरभाविभावनाप्रचयहेतुचित्तैकाग्र्यहेतुताया एवोक्तत्वात्, जिज्ञासासूत्रस्यांशे मननविधिमूलत्वापाताच्च । "मंतव्यश्चोपपत्तिभिः" इतिस्मृतिस्थोपपत्तिशब्दस्य "मतिर्यावदयुक्तता" इतिस्मृतिस्थायुक्तशब्दस्य च "श्रोतव्यः श्रुतिवाक्येभ्यः" इति श्रुतिशब्दस्येव सामान्यपरताहानेन "आदौ यच्छ्रद्धया सिद्धं पश्चान्न्यायेन साधितम्" इति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिवाक्यमयमस्य वाक्यस्यार्थ इति गुरुमुखाद्वाक्यार्थग्रहणं श्रवणं पश्चान्न्यायानुसंधानं मननमिति भेदसंभवे युक्तिष्वेव श्रवणमननभेदकल्पनायोगाच्च । उक्तस्य वाक्यार्थग्रहणस्य श्रवणादित्रयानंतर्भावेन चतुर्थस्यापि मुमुक्ष्वनुष्ठेयत्वापाताच्च । केवलं गुरुमुखाद्वेदार्थं श्रुतवति न श्रुतमनेनेति प्रसंगाच्च । प्रमाणभूतश्रुतितात्पर्ये निश्चितेऽर्थसत्त्वार्थमुपपत्त्यपेक्षाऽयोगेन मननस्यार्थासत्त्वरूपाप्रामाण्यशंकानिवर्तकत्वे वक्तव्ये निश्चितप्रामाण्यस्य पुंसो मननाभावप्रसंगाच्च । नचापेक्षितसर्वतर्काणां श्रवणांतर्गतावपि श्रुत्यविरुद्धमनुमानमर्थापत्तिर्वा मननमिति युक्तम् । ब्रह्मण औपनिषदत्वश्रुत्यानुमानाद्यगोचरत्वात् । श्रवणनियमेन शब्देतरस्य सर्वस्य कारणस्य निषेद्धव्यत्वाच्च ।

---

विनियुक्तत्वादित्यर्थः ॥ आदिमध्यावसानत इति ॥ उपक्रमोपसंहारपरामर्शैरित्यर्थः । धीस्वास्थ्यकारिभिः तर्कैः अर्थस्य संभावना द्वितीयाध्याय ईरिता इत्यर्थः । शक्तितात्पर्यावधारणानुकूलन्यायानुसंधानं श्रवणं प्रमाणगतार्थनिर्णयानुकूलं न्यायानुसंधानं मननं इत्येतद्दूषयति ॥ विवरण इति । प्रथमज्ञानेनेति ॥ श्रवण इत्यर्थः । तर्काणां श्रवणांतर्गतत्वे दोषांतरमाह ॥ जिज्ञासासूत्रस्येति ॥ ननु माऽस्तु जिज्ञासासूत्रस्य मननविधिमूलत्वं श्रवणांतर्गतयुक्त्यपेक्षया मननांतर्गतयुक्तीनां विजातीयत्वादित्यत आह ॥ मन्तव्यश्चोपपत्तिभिरिति । उक्तस्येति ॥ न्यायानपेक्षस्येत्यर्थः

अन्यथा कदाचिदनुमानादिनापि ब्रह्मनिश्चयसंभवेन श्रवणे नियमेन न प्रवर्तेत। तस्माद्युक्त्यनुसंधानरूपो विचारो न श्रवणं किंतु मननमेवेति मननविधिमूलमेव जिज्ञासासूत्रम्। उक्तं हि सुधायां "जिज्ञासा नाम युक्त्यनुसंधानात्मकविचारापरपर्यायं मननम्" इति।

किंच त्वन्मते कर्मकांडविचारो यथोत्तरक्रतुविधिप्रयुक्तस्तथा ब्रह्मकांडविचारो ज्ञानविधिप्रयुक्तः किं न स्यात्। उत्तरक्रतुविधिभिः स्वानुष्ठाप्यार्थनिर्णयाय तद्विचारस्येव "तरति शोकमात्मवित्" इत्यादिना शोकनिवृत्तिहेतुत्वेनावगतेनात्मज्ञानेन स्वसिद्धये वेदांतविचारस्याऽऽक्षेपात्। युक्तं चानेकेषां क्रतुविधीनामाक्षेपकत्वादप्येकस्यैव तत्। यदि चाध्ययनविधेर्नित्यत्वेनार्थज्ञानार्थत्वाभावेनादृष्टार्थत्वाद्विचारविध्यभावे विषनिर्हरणमंत्रस्येव तरतीत्यादेरर्थपरत्वाभावाच्च तदाक्षेपकता तर्हि तत एवोत्तरक्रतुविधीनामपि सा न स्यात्। अथाध्ययनविधेर्नित्यत्वेऽपि शब्दसामर्थ्यात् प्रतीतार्थो न त्याज्य इति क्रतुविधीनामाक्षेपकता तर्हि तत एव तरतीत्यादेरपि सा स्यात्। अस्ति च ब्रह्मकांडवत्कर्मकांडेऽपि साक्षाद्विचारविधिः "स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। पठेद्वेदानर्थानधीयीत। यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इत्यादिः। तस्माच्छ्रवणविध्याक्षिप्तो विचार इति विवरणमतं न युक्तम्। अत एव कर्मकांडविचारस्यार्थज्ञानपर्यंताध्ययनविधिप्रयुक्तत्वेऽपि ब्रह्मविचारः श्रवणविधिप्रयुक्त इति कौस्तुभोक्तं च निरस्तम्। विचारस्य श्रवणविधिप्रयुक्तत्वनिरासात्। कर्मविचारवत् ब्रह्मविचारस्याप्यध्ययनविधिप्रयुक्तत्वसंभवाच्च।

ननु साक्षात्कारफलकमावृत्तिगुणकं मननाद्यंगकमिदं श्रवणमध्ययनविधिप्रयुक्तश्रवणमात्राद्भिन्नमिति विध्यंतरं युक्तमिति चेन्न। ब्रह्मविचारस्याध्ययनविधिप्रयुक्तत्वेऽपि साक्षात्कारस्यापरोक्षकरमात्मविषयकत्वेनैव सिद्धेः। आवृत्तेश्च विध्यंतरांगीकारेऽप्यवघातादिवद्दृष्टफलत्वेनैव वक्तव्यत्वात्। कर्मकांडेऽपि तात्पर्यावधारणपर्यंतं विचारावृत्तेरपेक्षितत्वात्। ततः

---

॥ युक्तं चेति ॥ यदा अनेकेषामप्युत्तरक्रतुविधीनां विचाराक्षेपकत्वमंगीकृतं तदा किमु वक्तव्यमेकस्य ज्ञानस्य प्रयोजकत्वमित्यर्थः ॥ यदि चाध्ययनविधेरिति ॥ ननु विचारविध्यभावेऽप्यध्ययनविधिनैव स्वाध्यायस्य विवक्षितत्वसंभवात् तरतीत्यादिवाक्यविचाराक्षेपकत्वं स्यादित्याशंक्योक्तं ॥ अर्थज्ञानार्थत्वाभावेनेति ॥ तत्र हेतुः ॥ नित्यत्वेनेति ॥ अर्थज्ञानार्थत्वे हि तत्कामस्यैवाधिकारित्वान्नित्यत्वं न स्यादित्यर्थः। ननु ब्रह्मकांडे श्रोतव्य इति विचारविधिश्रवणात्

परं ब्रह्मकांडेऽपि तदावृत्तेरनपेक्षणात्। मननस्य च कर्मकांडेऽपि तदर्थनिश्चयायापेक्षितत्वादध्ययनविधिविहितैकदेशारण्यकाध्ययनानुवादेन वाक्यांतरेणारण्याद्यंगांतरविधानवत् मुंडककारीयाद्यध्ययनानुवादेन शिरोव्रतभूभोजनाद्यंगविधानवत् "तां चतुर्भिरादत्ते" इत्यश्वाभिधानीप्रादानानुवादेन संख्याविधानवच्चाध्ययनविध्याक्षिप्तविचारैकदेशानुवादेन त्वद्रीत्या मननाद्यंगविधानस्य संभवात्। तस्मात्

युक्तिचिंतनरूपस्य विचारस्य विधायकम्।
सूत्रं तद्रूपमननविधातृश्रुतिमूलकम् ॥

न तु विवरणकारमत इव श्रवणविधिमूलम्।

॥ इति श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः ॥ ५ ॥

---

कर्मकांडे विचारविधेरभावात् वैषम्यमित्याशंक्याह ॥ अस्ति चेति ॥ किं विध्यनंतरं ज्ञानस्याऽऽपरोक्ष्यसिद्ध्यर्थत्वमभ्युपगम्यते उतावृत्तिरूपगुणसिद्ध्यर्थं वेति विकल्प्य क्रमेण दूषयति ॥ श्रवणस्याध्ययनविधिप्रयुक्तत्वेनेत्यादिना ॥ ननु यदि श्रवणादिविधिः कथं तर्हि मननाद्यंगविधानं स्यात्। अविहितस्यांगस्य विधानायोगादित्याशंक्याह ॥ अध्ययनविधिविहितेति ॥

॥ इति श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः ॥ ५ ॥

## ॥ अथ अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥ ६ ॥

यत्तु भामत्युक्तं श्रवणादिविध्यभावादध्ययनविधिरेव कांडद्वयविचाराक्षेपक इति तत् "स्वाध्यायस्य हि तथात्वेन" इत्यत्र सूत्रभाष्यादौ "अध्ययनस्य चार्थज्ञानपर्यंतत्वात्" इति टीकायां च तस्य तदाक्षेपकताया उक्तत्वादिष्टम् । श्रवणादिविधिस्तु समर्थयिष्यते । ननु तत्रैव टीकायां योऽनधीत्येत्यकरणे प्रत्यवायस्मरणेनाध्ययनस्य नित्यताप्युक्ता । तत्कथं तस्यार्थज्ञानपर्यंतत्वमिति चेन्न । अर्थज्ञा(नार्थत्वे)नपर्यंतत्वेऽप्यध्ययनविधेरवयध्यायाधीतेनैव वेदेन कर्तव्यतां ज्ञात्वानुष्ठितं कर्म फलायालमित्यादिनियमाभयणात् । असत्यध्ययने यथोक्तनित्यादिकर्मानुष्ठानासिद्ध्या प्रत्यवायश्रवणोपपत्तिः । तथाचार्थज्ञानार्थस्याप्यध्ययनस्य फलतो नित्यत्वमिति केचित् । अपरे तु अनध्ययनेन संध्यानुपासनेनेव साक्षात्प्रत्यवायस्मरणेनाध्ययनस्यादृष्टार्थत्वेऽप्यर्थज्ञानस्यापि दृष्टत्वादपेक्षितत्वाच्च तादर्थ्यमपीत्युभयार्थता पशुपुरोडाशादिवदित्याहुः ।

---

### ॥ अथ अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥ ६ ॥

॥ उक्तत्वादिति ॥ "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति भाष्योदाहृतस्मृतौ सरहस्यशब्देनाध्ययनविधेरर्थज्ञानपर्यन्तत्ववर्णनादिति भावः। नन्वध्ययनविधेर्नित्यत्वेनादृष्टार्थत्वात् उभयार्थत्वे प्रमाणाभावात् कथमर्थज्ञानार्थत्वमित्यभिप्रेत्य शंकते ॥ नन्विति । अपेक्षितत्वाच्चेति ॥ अनुष्ठानायेतिशेषः । तथाचोभयार्थत्वे प्रमाणाभावोऽसिद्ध इति भावः । "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिविहितैकदेशारण्यकाध्ययनानुवादेन "संवत्सरमेतद्व्रतं चरेत्" इत्यादिना "अरण्येऽधीयीत" इत्यंतेन वाक्यांतरेण यथांगांतरं विधीयते, यथा वा "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् । नैतदचीर्णव्रतोऽधीते" इत्यादिवाक्यांतरेण मुण्डकाध्ययनानुवादेन शिरस्यंगारपात्रधारणरूपशिरोव्रतनामकमंगं विधीयते यथा वा "मारुतमसि मरुतामोजः" इत्यादिकाठकवाक्याध्ययनांगत्वेन तैत्तिरीयान् प्रति भूभोजनाद्यंगं विधीयते, यथा वा "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वत्" इत्यादिमंत्रेषु आददेऽङ्गिरस्वदिति सामर्थ्यलक्षणलिङ्गप्रमाणानुवादेन तां चतुर्भिरिति ब्राह्मणेन यथा चतुष्ट्वसंख्या विधीयते तद्वदित्यर्थः ॥ पशुपुरोडाशादिवदिति ॥ चतुर्थे प्रथमपादे चिन्तितम् । 'आश्रयिष्वविशेषेण भावार्थः प्रतीयेत ।' (जै. सू. अ. ४ पा. १ सू. १८) ज्योतिष्टोमेऽग्नीषोमीयपश्वंगत्वेन पुरोडाशयागः श्रुतः । अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं

ज्ञानार्थत्वेऽपि "यदेव विद्यया करोति" इत्यादिश्रुत्या ब्रह्मज्ञानस्यैवावश्यकत्वात् ज्ञानार्थत्वेऽप्यध्ययनस्याकरणे प्रत्यवायश्रवणं युक्तम् । एतेन नित्यत्वादध्ययनविधिर्न विचाराक्षेपक इति यद्विवरणाभिप्रेतं तन्निरस्तम् । तस्मात्

ब्रह्मज्ञानफलस्यापि स्वाध्यायाध्ययनस्य या ।
टीकायां नित्यता प्रोक्ता सापि नैव विरुध्यते ॥

॥ इति अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥ ६ ॥

---

ग्रयवशात् काम्यो नित्यश्च दर्शपूर्णमास इति सिद्धांत इति ॥ यद्वोक्तश्रुत्येति ॥ यद्यप्युक्तश्रुत्या स्वाध्यायस्यैवार्थज्ञानार्थत्वं प्रतीयते । नाध्ययनस्य । तथाप्यनधीतवेदेनार्थज्ञानोत्पादनायोगात् अधीतेनैवेतरदुत्पाद्यमित्यध्ययनस्यापि अर्थज्ञानार्थत्वमुक्तमित्यवगंतव्यम् ॥ ननु कथमध्ययनविधेरर्थज्ञानपर्यंतत्वम्, आवश्यकत्वाल्लाघवात् हुंफडादिष्वनुगतत्वादक्षरावाप्तिरेव फलमस्त्विति चेन्न । अक्षरग्रहणमात्रस्य दुःखरूपतया विधेः पर्यवसानाभावप्रसंगात् । अर्थपरत्वे प्रमाणाभावेन स्वाध्यायस्याविवक्षितार्थत्वप्रसंगाच्च । विस्तृतं चेदमस्माभिः श्रवणविधिविलासाऽदौ, तत्रैवानुसंधेयम् ।

॥ इति अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥ ६ ॥

## ॥ अथ स्वमते श्रवणादिविधिसमर्थनम् ॥ ७ ॥

अस्माकं तु— श्रवणं शब्दजं ज्ञानमुपपत्त्यनुचिन्तनम्।
मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यते ॥

आपातदर्शनभिन्नं कृतिसाध्यत्वेन विधानार्हं प्रतिवाक्यमयमस्य वाक्यस्यार्थ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशास्त्रस्थवाक्यार्थग्रहणमात्रं श्रवणम्। तच्चाज्ञानमात्रविरोधि। नतु मननमिव संशयादिविरोधि। मननरूपन्यायावतारांगसंशयधर्मिज्ञानरूपत्वात्। उक्तं हि सुधायाम् "श्रवणजं ज्ञानं पूर्वप्रवृत्तम्" इति मीमांसातः श्रवणस्य पूर्वप्रवृत्तत्वम्। मननं त्वयमेव वाक्यार्थो युक्तो नान्य इति निर्णयहेतुयुक्त्यनुसन्धानम्। तत्र समन्वयाध्यायोक्ता उपक्रमादियुक्तयो वाक्यार्थतत्वनिर्णायिकाः। युक्तिसमयपादाभ्यामुक्तास्तु युक्तत्वनिर्णायिका इत्युभयविधयुक्त्यनुसंधानमपि मननान्तर्गतम्। तच्च संशयादिविरोधि। निरन्तरं ध्यानं निदिध्यासनम्। तच्चापरोक्षज्ञानसाधनम्। एतच्च "तन्निर्धारणार्थनियमः" इति सूत्रभाष्यादौ स्पष्टम्। उक्तञ्च भामत्यामपि तृतीयाध्याये इत्थमेव श्रवणादीनां भेदः। विचारादिविधिस्त्वपूर्वविधिः। ब्रह्मज्ञाने वेदविचारहेतुताया

---

॥ अथ स्वमते श्रवणादिविधिसमर्थनम् ॥ ७ ॥

परमते श्रवणादीनां दुर्निरूपत्वमुक्त्वा श्रवणादिविध्युपपत्तये स्वाभिमतश्रवणादिस्वरूपमाह ॥ अस्माकं त्विति ॥ नन्वेवं मननवैयर्थ्यमित्यत आह ॥ नत्विति ॥ यदि श्रवणस्यैव संशयनिवर्तकत्वं तदा तस्य नियमेन पूर्वं प्रवृत्तत्वात् मननावसर एव न स्यादिति भावः ॥ एतच्चेति ॥ श्रवणादेरज्ञानादिनिवर्तकत्वादीत्यर्थः ॥ तन्निर्धारणेति ॥ "तन्निर्धारणार्थनियमः तद्दृष्टेः पृथग्घ्यप्रतिबंधः फलम्" इति सूत्रम्। एतच्च ननु श्रवणमननाभ्यां ध्यानेनैव वा ब्रह्मदर्शनसिद्धेरन्यतरवैयर्थ्यमित्याशंकायां प्रवृत्तम्। तदर्थस्तु तन्निर्धारणं तन्निश्चयः श्रवणफलं ज्ञानं तेन सहितोऽर्थनियमः अयमेव वेदार्थो नान्य इति वेदार्थनिर्णयो मननफलं तद्दृष्टेः ध्यानफलीभूताद् ब्रह्मदर्शनात् पृथगेव पृथक्फलमेव। अतो ध्यानं दर्शनार्थं कर्तव्यमिति वाक्यशेषः। नन्वेवं निदिध्यासनादेव ब्रह्मदर्शनसिद्धेः श्रवणमननवैयर्थ्यमित्यत उक्तं अप्रतिबंधः फलमिति। श्रवणमननयोः ब्रह्मदर्शनप्रतिबंधकीभूताऽज्ञाननिवृत्तिः फलमिति। नन्वर्थज्ञानपर्यन्ताध्ययनविधिनैव विचारकर्तव्यतासिद्धेः मननविधिवैयर्थ्यं स्यात्। जिज्ञासासूत्रं न मननविधिमूलं स्यात्, किन्त्वध्ययनविधिमूलं स्यादित्याशंक्याह ॥ विचारादिविधिस्त्विति ॥ ननु वेदार्थज्ञानस्यावच्छिन्नहेतुतायाः

अत्यन्ताप्राप्तत्वात्, नहि वेदार्थज्ञानाय वेदविचारः कर्तव्य इति वचनव्यक्तिः। ब्रह्मज्ञानस्योद्देश्यत्वात्। नापि ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति। तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात्। किंतु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः। यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः तथापि न ब्रह्मविचाररूपेण विधानम्। किंतु वेदविचाररूपेण। तथा च श्रुतिः "तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत्" इति। टीका च 'ब्रह्मज्ञानोद्देशेन जिज्ञासाविधानात्कुतोऽप्राधान्यम्' इति। एवं च यथा घटादावितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनता, यथा वा स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपे चोदकत

---

प्राप्तत्वात् कथं विचारस्यापूर्वविधिविषयत्वमित्याशंक्याह ॥ ब्रह्मज्ञान इति। वचनव्यक्तिरिति ॥ विचारविधिवचनव्यक्तिरित्यर्थः ॥ अनुद्देश्यत्वादिति ॥ विचारविधाविति शेषः। स्वाभिमतवचनव्यक्तिपरिशेषाय संभावितं पक्षांतरं निराकरोति ॥ ब्रह्मज्ञानायेति ॥ वेदविचारः कर्तव्य इति वचनव्यक्तेः ब्रह्मविचारः कर्तव्य इति वचनव्यक्त्या भेदमाशंक्य निराकरोति ॥ यद्यपीति ॥ ननु सत्यज्ञानादिवाक्यात् विचारमंतरेणापि ब्रह्मप्रतिपत्तिदर्शनात्तदुद्देशेन विचारविधिवैयर्थ्यमित्याशंक्य निराकरोति ॥ नहीति। अवांतरकारणादिवाक्येनेति ॥ "आत्मन आकाशः संभूतः" इत्यादिवाक्येनेत्यर्थः ॥ अत एवेति ॥ विचारविधेरपूर्वस्थानप्रकरणाधिकरणोक्तरीत्येति। एतच्च तृतीयाध्याये तृतीयपादे चिंतितम्। "राजसूये बहवः पश्विष्टिसोमयागाः। सर्वे फलवंतः समप्रधानाः। तत्राभिषेचनीयो नाम सोमयागः। तत्सन्निधौ हि देवनादयः समाम्नाताः। ते किं सर्वस्य राजसूयस्यांगमुताभिषेचनीयस्यैवेति। यदि सन्निधिः बलीयान् अभिषेचनीयस्यांगम्, यदि प्रकरणं ततो राजसूयस्येति। तत्र सन्निधिविशेषादभिषेचनीयस्यांगत्वमिति पूर्वः पक्षः। सिद्धांतस्तु प्रकरणाविशेषात् सर्वार्थता। तत्राभिषेचनीयस्याप्यन्येषां फलवत्त्वात्। प्रकरणं यद्यस्ति तथाप्यन्येषामप्यस्तीति तादर्थ्यमप्युक्तम्। यदि परमविशेषतः सर्वेषामाकांक्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषत आकांक्षां कल्पयित्वा तादर्थ्यं स्यात् ततश्च विप्रकर्षः। सर्वार्थता च क्लृप्ताकांक्षातः सुखमवगम्यते। अभिषेचनीयांगत्वं त्वाकांक्षाकल्पनयेति। अपि च नास्त्यभिषेचनीयस्य प्रकरणं, प्राकृतैरेवांगभावैन कथमाकांक्षापूरणात्। नन्वन्येषामपि इष्टिपशुसोमानां विकृतित्वात्तेषामप्येव प्रकरणं, सत्यं प्रातिस्विकस्वरूपेण नास्ति। राजसूयात्मना त्वस्त्येव। कथं श्रुत्यादिविहितांगसंबंधात् तद्रूपेण निवृत्ताप्याकांक्षा पुनरुत्थाप्यते। पविवादाख्य अवस्य दृति यावदंगविधिषु "प्रायेण राजसूयाय सेना उत्पुनाति तस्माद्राजसूयेनेजानः सर्वमायुरेति" इति

इतिकर्तव्यताप्राप्तावपि राजसूयरूपे तदप्राप्तिः, तथा वेदविचारत्वोपहिते ब्रह्मज्ञानहेतुताया अप्राप्तेरपूर्वविधिरिति। नहि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन पदवर्णस्वरादिना च आपाततोऽपि ब्रह्मधीरस्ति। अतएवानुव्याख्याने "जिज्ञास्योऽयं विधीयते" इति भाष्ये च "आत्मेत्येवोपासीतेत्यादिविधीनामिति" नित्यपदविधिपदप्रयोगः।

यद्वा निदिध्यासनस्याव्यक्तस्वभावब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति स तावदपूर्वविधिः। तथाऽज्ञातादौ निदिध्यासनासंभवेन श्रवणमननयोर्निदिध्यासने लिंगादेव प्राप्तावपि नियतविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिंगेन तयोरप्राप्तेस्तद्विधिरप्यपूर्वविधिरेव। एवंच श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वाराऽन्यत्र त्वदृष्टद्वारेण निदिध्यासनांगतेति ध्येयम्।

यद्वा गुरुप्रसादपूर्वकत्वरहितस्वयत्नमात्रसाध्यवाक्यार्थग्रहणादिप्राप्तिनिमित्तकः श्रोतव्य इत्यादिनियमोऽस्तु। "आचार्यवान् पुरुषो वेद" इत्यादिश्रुतेः। अथवा दुःशास्त्ररूपोपायांतरप्राप्तिनिमित्तको नियमोऽस्तु पाशुपताद्यागमविचारस्य ब्रह्मप्रमाहेतुत्वाभावेऽपि जगत्कारणज्ञानहेतुतायाः प्राप्तेः। अत एव शास्त्रयोनिसूत्रम्। "दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः" इतिस्मृतिश्च। "सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं तु परित्यजेत्" इत्यनुव्याख्यानं च।

यद्वा विचारसाध्यज्ञानविशेष्यात्मज्ञानेष्वनुमानादेः प्राप्त्या नियमोऽस्तु। "नैषा तर्केण" इत्यादिश्रुतेः। न च यदाकारज्ञानं विचारहेतुकं तदाकारज्ञाने उपायान्तरप्राप्तिर्नियमे तन्त्रम्। इदं तत्वत एव परामर्ष्टव्यमित्यादावेकस्मिन्विशेष्ये उपायान्तरप्राप्तिमात्रेण नियम-

---

राजसूयप्रकरणात् तावत्तद्देशमनुसृत्य राजसूयरूपभावं शक्नोति तन्मध्यपतितानि विदेवनादीनि बाधितुम्। अतः प्रकरणात् राजसूयार्था विदेवनादय इति। ननु सत्यज्ञानादिवाक्यात् विचारमन्तरेणापि ब्रह्मप्रतिपत्तिदर्शनात् तदुद्देशेन विचारविधिर्वैयर्थ्यमित्याशंक्य निराकरोति ॥ नहीति। अवान्तरकारणादिवाक्येनेति ॥ आत्मन आकाशः संभूत इत्यादिवाक्येनेत्यर्थः ॥ अतएवेति ॥ विचारविधेरपूर्वविधित्वादेवेत्यर्थः। तेन ब्रह्मणोऽप्यव्यक्तस्वभावत्वे निदिध्यासनादेवेत्यर्थः ॥ अव्यक्तस्वभावेति ॥ स्वप्रसादैकलभ्यापरोक्षत्वोपेतसाक्षात्कारविषयेत्यर्थः। तेन ब्रह्मणोऽप्यव्यक्तस्वभावत्वे निदिध्यासनेनापि तत्साक्षात्कारानुपपत्तिरिति शंका, ब्रह्मसाक्षात्कारस्य तत्प्रसादैकसाध्यः, तत्प्रसादस्य निदिध्यासनफलीभावात् तत्साक्षात्कारशंका च निरस्ता ॥ नियतविषयेति ॥ बहुशाखोक्तगुणानां संभवेऽपि स्वयोग्यताः कतिपयगुणोपासनाया एव कर्तव्यत्वादिति भावः ॥ यद्वेति ॥ यद्यपि 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्। आचार्यवान् पुरुषो वेद' इत्यादेरेवा-न्यथासंभवेन नैव स्वप्रकाशकत्वाभ्यासापूर्तिसिद्धेर्न तथावृत्तिः श्रवणविधेः प्रयोजनं, तथापि

दर्शनात्। न ह्येकस्मिन्नेवाकारे तात्त्विकत्वातात्त्विकत्वयोः प्राप्तिरस्ति। परमते तु विशेष्यस्यैवौपनिषदत्वात्तत्रैवोपायान्तराप्राप्तिरिति वैषम्यम्। संभवति च शब्दयुक्तिजन्यज्ञानवाचिभ्यां श्रोतव्यमन्तव्यपदाभ्यां दुरागमरूपशब्दाभासतदनुग्राहकन्यायाभासजन्यज्ञानव्यावर्तनम्। एवं श्रवणस्याप्यध्ययनवद्गुरुनिरूप्यत्वाद्गुरुमुखाभ्यासव्यावृत्तिः। तस्माज्ज्ञानरूपमपि श्रवणादिविधेयम्।

केचित्तु कार्यत्वाद्यनुमानस्य श्रुतिविचारस्य च नियमेन प्राप्तावाज्यभागौ यजतीतिवदेकस्मिन् शेषिणि शेषद्वयप्राप्तौ शेषान्तरनिवृत्तिफलकपरिसंख्येत्याहुः। तन्न। तत्राखंडोपकारस्य समुच्चिताज्यभागप्रयाजादिसाध्यत्ववदिह ज्ञानसमुच्चितप्रमाणसाध्यत्वाभावात्। शब्देतिकर्तव्यताभूततर्कसाहित्यस्य चेष्टत्वात्। अन्ये तु "अन्या वाचो विमुञ्चथ" इतिश्रुतेरब्रह्मविचारनिषेधपरत्वमित्याहुः। तन्न। ब्रह्मज्ञानेऽब्रह्मविचारस्याप्राप्तेः। इतरे तु श्रुत्यादिविचारस्यापातप्रतीतब्रह्मतदन्यज्ञानसाधनत्वे प्राप्ते "इत्यश्वाभिधानीमादत्ते" इतिवदेकस्य शेषस्य

---

गुरूपसदनेनाप्युपदेशमात्रं सिध्येत् न तु प्रसादपूर्वकमिति गुरुप्रसादपूर्वकत्वरहितश्रवणव्यावर्तनाय अस्ति श्रवणविधेरवकाशः। मत एवाह॥ गुरुप्रसादपूर्वकत्वरहितेनेति ध्येयम्। (आज्यभागौ) आज्यभागौ यजतीतिवदिति॥ चातुर्मास्ये साकमेधपर्वणि गृहमेधीयेष्टिराम्नाता। "मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्" इति श्रूयते॥ आज्यभागौ यजतीति वदिति॥ चातुर्मास्ये साकमेधपर्वणि गृहमेधीयेष्टिराम्नाता। तत्र प्रकृतितः प्राप्तयोराज्यभागयोः पुनर्वचनानर्थक्यमाशंक्य पंचमपक्षेण समाधानं पूर्वपक्षेऽभिहितम्। परिसंख्येयमाज्यभागावेवेति। तेनैकस्य गृहमेधीयाख्यस्य शेषिणः प्रति प्रयाजाज्यभागाद्यनेकशेषप्राप्तौ आज्यभागेतरेषां यथा परिवर्जनं भवति एवमेकं ब्रह्मज्ञानं प्रति श्रुत्यनुमानयोः प्राप्तौ श्रुतिग्रहणेनानुमानं परिसंख्यायत इत्यर्थः। तत्राखंडेति परस्परमंगांगिभावापन्नाभ्यां प्रयाजाज्यभागाभ्यामेकोपकारस्य साध्यत्ववत् शब्दानुमानाभ्यां परस्परमंगांगिभावमापन्नाभ्यामेकस्य ब्रह्मज्ञानस्य साध्यत्वाभावान् समुच्चित्य प्राप्त्यभावेन न परिसंख्या युज्यते। शब्दांगतया च प्राप्तस्य च नितरां परिसंख्यानं, तद्विना शब्दस्य ब्रह्मज्ञानसाधनत्वायोगादित्यर्थः। ननु श्रोतव्य इति नियमविधिरेवायम्। आत्मज्ञानमात्र जीवात्मविचारस्यापि साधनत्वेन प्राप्ततया तन्निवृत्तिफलकत्वसंभवात्। एवं च "अन्या वाचो विमुञ्चथ" इत्येवापि श्रुतिरनुकूलिता भवतीति वदतामन्येषां मतमपि दूषयितुमनुवदति॥ अन्ये त्विति। ब्रह्मज्ञान इति॥ श्रवणविधौ हि ब्रह्मज्ञानस्यैवोद्देश्यता। तत्र च साधनान्तरस्य न

शेषिद्वयसंबन्धप्राप्तौ शेष्यन्तरनिवृत्तिफलकपरिसंख्येत्याहुः। तन्न। श्रुत्यादिनाऽऽपाततोऽन्यप्रतीतावपि श्रुत्यादिविचारस्यान्यज्ञानसाधनत्वेनाप्राप्तेः। अपरे तु "श्रवणाज्जनलोकादिः" इत्यादिवचनेनापोदितं यच्छ्रवणस्य ज्ञानहेतुत्वं तस्य प्रतिप्रसवार्थं ज्ञानोद्देशेन श्रवणादिविधानमित्याहुः। तन्न। श्रवणादितिवाक्यस्य श्रवणात् दृष्टज्ञानद्वारा जनलोकादिरित्येवंपरत्वेन ज्ञानसाधनत्वानपवादकत्वादिति।

॥ इति स्वमते श्रवणादिविधिसमर्थनम् ॥ ७ ॥

---

प्राप्तिरिति नोक्तप्रकारसंभव इति भावः। "इत्यश्वाभिधानीमादत्ते" इतिवदिति। "इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या" इति मंत्रलिंगेन अश्वगर्दभरशनाग्रहणयोः शेषित्वेन प्राप्तेन "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यनेन गर्दभरशनादानं यथा परिसंख्यायते तथा श्रुतिविचारस्य ब्रह्माब्रह्मज्ञानरूपशेषिद्वयप्राप्तेः श्रोतव्य इत्यनेनाब्रह्मज्ञानरूपशेष्यंतरं परिसंख्यायत इत्यर्थः। दृष्टांतवैषम्येण दूषयति ॥ तन्न श्रुत्यादिनेति ॥

॥ इति स्वमते श्रवणादिविधिसमर्थनम् ॥ ७ ॥

## ॥ अथ ज्ञानविधिसमर्थनम् ॥ ८ ॥

अत्र परैरुक्तं अनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनात् ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाविधेयत्वाल्लिङादयः श्रूयमाणा अपि शिलातलप्रयुक्तक्षुरतैक्ष्ण्यवत् कुण्ठीभवन्तीति। तन्न। "पत्न्यवेक्षितमाज्यं भवति। विदुषा कर्म कर्तव्यम्, तस्मात्यज्ञेत नित्यशः" इत्यादिना तद्विधानात्। तत्र तद्वेत्विन्द्रियसंप्रयोगादिविधौ लक्षणाप्रसङ्गात्। संप्रयोगस्यापीन्द्रियनिष्ठक्रियाद्वारा कृतिसाध्यत्वेन साक्षात्तदसाध्यत्वात्। परंपरया कृतिसाध्यत्वस्य च ज्ञानेऽपि संभवात्। अनिच्छतश्चानिष्टसंप्रयोगदर्शनात्। "भक्षे हि"[1] इतिभक्षमंत्रे च तृप्तेरनुनिष्पादितत्तयाननुष्ठेयत्वेन तृप्तिप्रकाशकभागस्य तत्र विभज्य विनियोगाभावेऽप्यवेक्षणस्या-

---

॥ अथ ज्ञानविधिसमर्थनम् ॥ ८ ॥

॥ कुंठीभवंतीति ॥ "विष्णुरुपांशु यष्टव्यः, जर्तिलयवाग्वा वा जुहुयात् गवी(गवेधुक)-धुकयवाग्वा वा जुहुयात्" इत्याविवदर्थवादा भवंतीत्यर्थः ॥ लक्षणाप्रसंगादिति ॥ नचेष्टापत्तिः। बाधकाभावे लक्षणाश्रयणस्य "न विधौ परः शब्दार्थः" इति न्यायविरुद्धत्वादिति भावः। ननु कृतिसाध्यत्वाभावरूपबाधकसत्वाद्बाधकाभावोऽसिद्ध इत्याशंक्य किं साक्षात्कृतिसाध्यत्वाभावादविधेयत्वम्, उत परंपरया तदभावादिति विकल्प्य नाद्य इत्याह ॥ संप्रयोगस्यापीति ॥ तथाच त्वदभिमतेंद्रियसंप्रयोगस्यापि विधेयता न स्यादिति भावः। अंत्ये त्वसिद्धिरित्याह ॥ परंपरयेति ॥ ननु यदि ज्ञानं कृतिसाध्यं तर्ह्यनिष्टदुर्गंधादिज्ञानं न स्यादित्याशंक्य संप्रयोगविधिपक्षेऽप्येतद्दोषस्य साम्यमित्याह ॥ अनिच्छतश्चेति ॥ अस्तु वा ज्ञानमात्रस्याविधेयत्वम्। ज्ञानविशेषस्य कृतिसाध्यत्वेन विधेयत्वमकामेनापि स्वीकार्यम्। न ह्यस्ति कस्यचिदविधेयत्वमित्येतावता तज्जातीयस्य सर्वस्याप्यविधेयत्वम्, तार्तीयीकाधिकरणविरोधापत्तेरित्यभिप्रेत्याह ॥ भक्षेहीति ॥ तृतीयाध्याये द्वितीयपादे चिंतितम् — "लिंगसमाख्याभ्यां[2] भक्षार्थतानुवाकस्य" (जै.सू.अ.३ पा. २ सू. २४) अस्ति भक्षानुवाकः "भक्षे हि मा विश दीर्घायुत्वाय" इत्यादिः। तत्र कश्चिदंशो

1. अनुवाकस्तु यथा आहुमप्रोदाहृतः "भक्षे हि मा विश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय। एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सघ्यासम्। नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्। हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः। शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः। मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य माध्यन्दिनस्य सवनस्य तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसोऽभिष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि।"
2. लिङ्गसमाख्यानाभ्यामिति भाष्यपाठः।

नुष्ठेयत्वात्तत्प्रकाशकभागस्यावेक्षणे विभज्य विनियोग इति तृतीयेऽभिहितत्वात्। एक-श्रोत्रगतानेकवारगकारेषु च बुभुत्साप्रयत्नाभ्यामभीष्टगकारज्ञानदर्शनात्। ज्ञानस्य च "यदेव विद्यया करोति" इत्यंगत्वश्रवणात्। अविहितस्य चांगत्वानुपपत्तेः। दुर्गन्धादि-ज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्ववत्, ज्ञानान्तरस्य नियमादृष्टासाध्यत्वेऽपि ब्रह्मज्ञानस्य तत्साध्यत्ववत्, पर्वतादिज्ञानस्य नयनोन्मीलने सति प्रयत्नान्तर निरपेक्षत्वेऽपि ध्रुवारुन्धत्यादिज्ञानस्य तत्सापेक्षत्ववदातिसूक्ष्मब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्व-संभवात्। शास्त्रार्थज्ञानस्य च नियमेन पुंतन्त्रत्वदर्शनात्। ब्रह्मणश्च शास्त्रार्थत्वात्। प्रशस्ताप्रशस्तज्ञानयोश्च विधिनिषेधदर्शनात्। इच्छादिना चोत्पत्तिनिरोधयोरनुभवात्। तत्र च करणव्यापारस्यैव पुंतन्त्रत्वांगीकारे नामादिषु ब्रह्मोपासनायां त्वया विधेयत्वेनांगी-कृतायामपि मनोनिरोधादेरेव पुंतन्त्रत्वं न तूपासनाया इति प्रसङ्गात्। अनेकशाखाजन्य-ज्ञानरूपस्य च श्रवणस्य तदुपक्रमोपसंहारैकरूप्याद्यनुसंधानरूपस्य च मननस्य श्रुतमतानेक-गुणविशिष्टतया निरन्तरानुस्मरणरूपस्य च निदिध्यासनस्यातिप्रयत्नसाध्यत्वानुभवात्। निदिध्यासनादेव

> "लब्धा स्मृतिर्धारणा स्यात्तल्लब्धा ध्यानमुच्यते।
> अप्रयत्नात्समाधिश्च॥"

---

भक्षणस्य प्रकाशकः "उपहूत उपहूतस्य भक्षयामि" इत्यादिः, कश्चिद्ग्रहणस्य "अश्विनोस्त्वा बाहुभ्यां सघ्यासम्" इत्यादिः, कश्चिदवेक्षणस्य "अवख्येषम्" इत्यादिः, तत्र संशयः किं कृत्स्नोऽयमनुवाको भक्षणे विनियोक्तव्य उत भक्षणप्रकाशकोंऽशो भक्षणे, ग्रहणादिप्रकाशकोंऽशो ग्रहणादिष्विति विभज्य विनियोक्तव्य इति। तत्र भक्षानुवाकसमाख्यानात् विहितभक्षणप्रकाशकांशैकवाक्यत्वाच्च कृत्स्नोऽपि भक्षणे विनियोक्तव्यः। यद्यपि "अश्विनोर्बाहुभ्यां सघ्यासम्" इत्यादीनां ग्रहणादि-प्रकाशने सामर्थ्यरूपं लिङ्गमस्ति, तच्च वाक्यसमाख्याभ्यां बलीयः। तथापि ग्रहणादीनामचोदिता-नामननुष्ठेयत्वात्तत्प्रकाशनमनर्थकमिति ग्रहणादिप्रकाशकभागानामपि इन्द्रादिपदानामिव लक्षणया-स्वस्वार्थविशिष्टे भक्षणे लक्षणासम्भवात् कृत्स्नोऽपि तत्रैव विनियोक्तव्य इति पूर्वः पक्षः। सिद्धान्त-स्तु साक्षादचोदितमपि ग्रहणादि भक्षार्थमर्थप्राप्तमनुष्ठेयम्। ग्रहणं यद्यपि भक्षार्थं वा साक्षाद्वा कृतिसाध्यं तथापि सम्भवद् अर्थांशत्वेन भवत्यं दृष्टम्। लोकप्रसिद्धसम्बन्धतया तदपि प्रकाश्यार्थ-मन्त्रविनियोगद्वारा अनुष्ठेयम्। तस्माल्लिङ्गबलाद्विभज्य विनियोक्तव्य इति। तथैवोक्ताधिकरणे

इत्यादिस्मृत्या प्रयत्नसाध्यत्वप्रतीतेः । त्वन्मतेऽपि परोक्षज्ञानसन्तानरूपस्य निदिध्यासनस्य विधेयत्वात् । सन्तानिनां च कृत्यसाध्यत्वे सन्तानस्य तदयोगात् । श्रवणादीनां ज्ञानातिरेकेण दुर्निरूपत्वस्योक्तत्वात् । तेषां च ज्ञानानात्मकत्वे "श्रवणं यावदज्ञानम्" इत्यज्ञानविरोधित्वस्मृतेः श्रवणेनाज्ञानं निवृत्तमित्यनुभवस्य चानुपपत्तेः । "विज्ञाय प्रज्ञां कुर्वीत" इत्यादौ च विज्ञानानन्तरभाविनः प्रज्ञाशब्दार्थस्य विचारत्वानुपपत्तेः । ध्यानस्य च त्वयापि विधेयत्वेनांगीकृतत्वात् । तस्य च ज्ञानानात्मकत्वे तेन स्वविषये व्यवहाराभावप्रसङ्गात् । ध्यानान्यज्ञानेन च ध्यानविषये व्यवहाराङ्गीकारे गौरवात् । ध्यानविषये च कदाचिन्न जानामीत्यनुभवप्रसङ्गात् । संस्कारस्य च ज्ञानजन्यत्वेन ध्याने स्मरणाभावप्रसंगात् । "तस्याभिध्यानात्" इति श्रुतौ च ध्यानस्य मायाख्याविद्यानिवर्तकत्वोक्तेः । त्वयापि विधेयतयाङ्गीकृतोपासनायां च श्रुतौ "मनो ब्रह्मेत्युपासीत य एवं वेद" इति तथा "आत्मेत्येवोपासीत यस्तद्वेद" इत्यादिबहुस्थलेषु ज्ञानार्थविदधातुप्रयोगेणोपासनाया

---

चिंतितम् । "गुणाभिधानान्मंत्रादिरेकमंत्रः स्यात्तयोरेकार्थसंयोगात्" । (जै. सू. अ. ३ पा. २ सू. २६) भक्षानुवाक एव "वाग्जुषाणा[1] सोमस्य तृप्यतु" इति तृप्तिप्रकाशको भागः तृप्तौ विनियोक्तव्य उत भक्षयाज्यं तदेकवाक्यतया भक्षण एवेति संशये पूर्वपक्षिणा लिङ्गाद्विभज्य विनियोगे प्राप्ते राद्धांतः— न तावत्तृप्तिः साक्षादनुष्ठेया, नापि जरणवत् भक्षणातिरिक्तकिंचित्साधनानुष्ठानद्वारा, भक्षणानुनिष्पादितत्वात् । तस्मात्केवलतृप्तिप्रकाशने अनुष्ठेयाभावात् अदृष्टार्थतास्य, तृप्तिविशिष्टभक्षणप्रकाशने तु उत्साहजननात् दृष्टार्थता भवति । तस्माद्भक्षणे विनियोग इति । किंच यज्ज्ञानं तत्पुरुषप्रयत्नसाध्यमिति व्याप्तिरसिद्धैव व्यभिचारादित्याह ॥ एकधोपगनेति । यदेव विद्ययेति ॥ न चात्र विद्याशब्देन मानसक्रियाविशेषरूपोपासनोच्यते न ज्ञानमिति वक्तुं शक्यम । विद्याशब्दस्य ज्ञान एव व्युत्पन्नत्वादिति भावः ॥ अविहितस्य चेति ॥ "न चाविहितमंगं भवति" इति शाबरभाष्योक्तेरिति भावः । अप्रयत्नात्समाधिश्चेति समाधेरप्रयत्नसाध्यत्वोक्त्या धारणाध्यानयोः प्रयत्नसाध्यत्वमवगम्यत इति भावः । नन्वावृत्तिलक्षणगुण एव विधिः न त्वावर्त्यमानज्ञानमित्याशंक्याह ॥ संतानिनां चेति ॥ किंच विज्ञाय प्रज्ञां कुर्वीत इति श्रुतिबलादपि न ज्ञानस्य विधेयत्वम् । न च तत्र प्रज्ञाशब्दो विचारपरः । विज्ञानानंतरभाविन्याः प्रज्ञायाः विचाररूपत्वायोगादित्याह ॥ विज्ञायेति ॥ त्वन्मते परोक्षज्ञानसंतानरूपस्येत्यत्रोक्तमपि स्पष्टीकरणाय पुनराह ॥ ध्यानस्य चेति ॥ ननु ध्यानस्य ज्ञानरूपत्वाभावेऽपि ध्यानप्रयोजकीभूतज्ञानजन्यसंस्कारादेव

1. "मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु" (इति पूर्णः मन्त्रः)

ज्ञानात्मकत्वात् । प्रमाणादिपरतन्त्रस्यापि ज्ञानस्य प्रतिग्रहीत्रादिपरतन्त्रस्यापि दानादेरिव पुंतन्त्रत्वोपपत्तेः । ब्रह्मपरवाक्यमध्येऽप्युपासनाविधिवत् ज्ञानविधेरपि संभवात् । पूर्वैव वैदिकलिङ्कादेरसारस्यायुक्तेः ।

नच ज्ञानस्याक्रियात्वेनाविधेयत्वम् । धात्वर्थस्य पूर्वापरीभूतस्य वा क्रियात्वासिद्धेः । ध्यानार्थे जानामीत्यादौ पचतीत्यादाविव पूर्वापरीभावप्रतीतेः । स्पन्दस्याक्रियात्वे तु यागादेरप्यक्रियात्वं स्यात् । तस्मात्

पत्न्यवेक्षितमित्यादौ ज्ञानस्यैव विधानतः ।
दृश्यमानार्थबुद्धेश्च कृतिसाध्यत्वदर्शनात् ॥ १ ॥
ध्यानस्यापि च विज्ञानव्यतिरेकानिरूपणात् ।
ज्ञानस्वरूपमपि च श्रवणादि विधीयते ॥ २ ॥

ननु तथापि ज्ञानस्यानवगमे तत्कर्तव्यताबोधनासंभवात्तदवगमस्य च विषयावगमं विनाऽयोगाद्विषयस्याप्यवगमे फलस्य जातत्वाद्व्यर्थो विधिरिति चेन्न । त्वयापि विचारविध्यङ्गीकारात् विचारस्य च विषयनिरूप्यत्वेन साम्यात् । सामान्यतो ब्रह्मज्ञानमात्रेण च तद्विषयकश्रवणादेः कर्तव्यताबोधनसंभवात्, वेदान्तवाक्यानुग्राहकन्यायानुसंधानादिरूपतया च ब्रह्मज्ञानात्प्रागेव ज्ञातस्य मननादेः ब्रह्मज्ञानाय विधानसंभवाच्चेति ।

ननु तथापि ज्ञानं न विधेयम् । तथाहि । विधीयमानं ज्ञानं किं शाब्दं किं वा तदभ्यासः यद्वा तत्त्वमनपेक्ष्यारोपितविषयतया मनसः संकल्पप्रवाहरूपं ध्यानं किंवा परोक्षफलं ज्ञानान्तरम् । नाद्यः । कर्मकाण्ड इव गृहीतसङ्गतेः स्वतःसिद्धत्वेन कृत्यसाध्यत्वेन विध्यनपेक्षणात् । द्वितीये तद्विधिर्मोक्षाय चेत् तस्य नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वं स्यात्, साक्षात्काराय चेत् स नादृष्टं फलम् । प्रमाणाधीनत्वात्तस्य । नापि फलं दृष्टम् ।

तत्त्वमस्यादिवाक्यजन्यज्ञानस्य दोषांतरमाह ॥ तस्याभिध्यानादिति ॥ ननु सर्वस्य वेदांतवाक्यस्य ब्रह्मपरत्वात् ज्ञानविधिपरत्वम् । वाक्यभेदप्रसंगादित्याह ॥ ब्रह्मपरंति ॥ तथाच यथोपासनाविधावेकवाक्यतात्पर्याभ्युपगमेऽपि ब्रह्मणीव महातात्पर्यानभ्युपगमात् वाक्यभेदस्तथेहापीति भावः । ननु सामान्यतो ब्रह्मज्ञानमात्रेण तद्विषयविचारविधिः संभवतीत्याशंक्य तुल्यं प्रकृतेऽपीत्याह ॥ सामान्यत इति ॥ अत एवेति ॥ मनःसंकल्पप्रवाहरूपध्यानस्य मोक्षाय विधाने अनित्यत्व-

परोक्षज्ञानाभ्यासेन साक्षात्कारादर्शनात्। अत एव न तृतीयः। प्रोषितपुत्रादिध्यानेनारोपितरूपसाक्षात्कारदर्शनेऽपि तत्त्वसाक्षात्कारादर्शनात्। चतुर्थे शब्दस्य ब्रह्मणि प्रामाण्यं न स्यात्। ब्रह्मणि प्रमाणीभूतज्ञानकर्तव्यतायामेव प्रमाणत्वादिति चेत् न तावदाद्ये दोषः। कर्मकाण्डेऽप्यापातजन्यस्य स्वतःसिद्धत्वेऽपि विमर्शजन्यस्य कृतिसाध्यत्वात्। अन्यथाऽध्ययनविधेरुत्तरक्रतुविधेर्वा तद्विचाराक्षेपकता न स्यात्। द्वितीयेऽपि न दोषः। दृष्टफलत्व इव नैयोगिकफलत्वेऽपि बन्धध्वंसस्य ध्वंसत्वाच्छ्रुत्यादिफलत्वाच्च नित्यत्वोपपत्तेः। तृतीयेऽपि न दोषः। मोक्षस्य नैयोगिकफलत्वेऽपि नित्यताया उक्तत्वात्। ध्यानादिना प्रसन्नदेवतासाक्षात्कारदर्शनेन ध्यानसंस्कृतमनसा ब्रह्मसाक्षात्कारोपपत्तेश्च। चतुर्थेऽपि न दोषः। ज्ञानविधिवाक्यस्य ज्ञानकर्तव्यतायां प्रमाणत्वेऽपि ब्रह्मण्यपि महातात्पर्यवत्त्वात् सत्यज्ञानादिवाक्यस्याविधिपरत्वाच्चेति ॥

॥ इति ज्ञानविधिसमर्थनम् ॥ ८ ॥

---

प्रसंगादेवेत्यर्थः। साक्षात्काराय तद्विधाने दूषणमाह ॥ प्रोषितेति। अन्यथेति ॥ न चावश्यकत्वाद्विचारस्यैव कृतिसाध्यत्वं न ज्ञानस्यैवेति वाच्यम्। तस्यापि ज्ञानातिरेके प्रमाणाभावादिति भावः ॥ नित्यत्वोपपत्तेरिति ॥ न च "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतिविरोधात्कथं नियोगसाध्यस्य मोक्षस्य नित्यत्वमिति वाच्यम्। तस्याः विचारसाध्यज्ञानासहकृतकर्मसाध्यफलपरत्वादिति भावः।

॥ इति ज्ञानविधिसमर्थनम् ॥ ८ ॥

## ॥ अथ शाब्दप्रत्यक्षभङ्गः ॥ ९ ॥

यत्तोक्तं "तत्त्वमसि" इत्यादिवाक्यादेवापरोक्षधीः । "तद्ब्रह्म विजज्ञौ, तमसः पारं दर्शयति" इत्यादावुपदेशादेवापरोक्षज्ञानोक्तेः । "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यत्र शाब्दज्ञानस्य विशब्देन विशेषविषयत्वे सिद्धे सुशब्देनापरोक्षत्वोक्तेश्च । विमतं शाब्दज्ञानमपरोक्षं अपरोक्षमात्रविषयकत्वात् । सुखादिज्ञानवत् । अपरोक्षत्वं वेदान्तवाक्यजन्यज्ञानवृत्ति । अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् । ज्ञानत्ववदित्याद्यनुमानाच्च । न च विमतः शब्दो नापरोक्षधीहेतुः । शब्दत्वाज्ज्योतिष्टोमादिशब्दवदित्यादिना सत्प्रतिपक्षत्वम् । दशमस्त्वमसीत्यादौ शब्दादेवापरोक्षधीदर्शनेन व्यभिचारात् । नच तत्रापीन्द्रियमेव करणं शब्दस्तु सहकारीति युक्तम् । क्वचिद्बहुलतमे तमसि क्वचिच्च लोचनहीनस्यापि वाक्याद्दशमोऽसीत्यपरोक्षधीदर्शनादिति ।

मैवम् । "तद्ब्रह्म विजज्ञौ" इत्यादेः परोक्षज्ञानेनापि चरितार्थत्वात् । दर्शयतीत्यादेस्तु ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीतिवत्परंपरया साक्षात्कारसाधनत्वेन कृतार्थत्वात् । अन्यथा "मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतिविरोधात् । वेदान्तविज्ञानेत्यत्र सुशब्देनाप्रामाण्यशङ्काभावादेरुक्तेः । अन्यथा वेदान्तश्रोतव्यस्य च विचारकर्तव्यतादेरर्चिरादेश्चापरोक्ष्यापातात् । आद्यानुमानस्य अयं घटः त्वं सुखवानसीत्यादिवाक्यजन्यज्ञाने वक्ष्यमाणरीत्या व्यभिचारात् । अज्ञानावृते ऐक्ये आपरोक्ष्याभावेनासिद्धेश्च । आपरोक्ष्ययोग्यत्वविवक्षायां तु मिथ्यन्तरित-

---

॥ अथ शाब्दप्रत्यक्षभङ्गः ॥ ९ ॥

॥ अपरोक्षमात्रेति ॥ अपरोक्षविषयके धर्मधानहमितिज्ञाने व्यभिचारवारणाय मात्रपदम् । ॥ परोक्षज्ञानेनापीति ॥ न च विचारस्यापरोक्ष्यासिद्धिः । तस्य ज्ञानगतसम्यक्त्वप्रतिपत्तिपरत्वेनाप्युपपत्तेरिति भावः ॥ मनसैवेति ॥ अप्रामाण्यत्वेन मनोव्यतिरिक्तस्य ब्रह्मसाक्षात्कारसाधनत्वनिषेधादिति भावः ॥ अर्चिरादेरिति ॥ अर्चिरादिमार्गस्येत्यर्थः ॥ वक्ष्यमाणरीत्येति ॥ स किं स्वात्मनो दशमत्वं स्वयं प्रति अन्यं प्रति वा । नाद्यः, तस्य दशघटं प्रति प्रयुक्तादयं घट इतिवाक्यादन्यज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धार्थानुवादित्वमात्रेण प्रत्यक्षत्वाभिधानात् । द्वितीयेऽपि चक्षुरिन्द्रियस्यापरोऽस्ति तथोपदेशानन्तरं तत्सन्निकृष्टेन्द्रियादेवापरोक्षधीरित्यादि वक्ष्यमाणरीत्येत्यर्थः ॥ अज्ञानावृतेति ॥ स्वप्रकाशे ब्रह्मवृत्ततत्संविदानामन्यस्येव विषयापरोक्ष्यरूपतया अज्ञानावृतत्वापरोक्ष्यानुपपत्तेरिति भावः ॥ प्रतिकूलतर्कपराहतत्वादिति ॥ नैतदनुमानमित्याह

घटविषयकशब्दज्ञाने व्यभिचारात् । द्वितीयानुमाने अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्य-ज्ञानवृत्तीत्यपि सुसाधत्वेनाभाससाम्यात् । शब्दत्वहेतुना सत्प्रतिपक्षत्वाच्च ।

किंचास्य शब्दस्यापरोक्षधीहेतुत्वे प्रत्यक्षेऽन्तर्भावापत्तिः । नच यथा बाह्यप्रत्यक्षत्वे योगिमनोऽन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वं तन्त्रम्, तथा स्वतोऽपरोक्षविषयशब्दान्यत्वे सति प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षत्वे तन्त्रमिति वाच्यम् । वक्ष्यमाणरीत्या क्वापि शब्दादपरोक्ष-ज्ञानाभावेन विशेषणकल्पकाभावात् । यश्च शब्दत्वहेतोर्दशमस्त्वमसीत्यादौ व्यभिचार उक्तः स किं स्वात्मनो दशमत्वं पश्यन्तं प्रति प्रयुक्ते दशमस्त्वमसीति वाक्ये अन्यं प्रति वा । नाद्यः । तस्य दृष्टघटं प्रति प्रयुक्तादयं घट इति वाक्याजन्यज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धार्थानुवादित्वमात्रेण प्रत्यक्षत्वाभिमानात् । द्वितीयेऽपि यदीन्द्रियव्यापारोऽस्ति तदा रत्नतत्त्व इवोपदेशसहकृतेन्द्रियेणैव दशमत्वेऽपरोक्षधीः । यदि स नास्ति तदा धर्मवां-स्त्वमसि पर्वतोऽग्निमानित्यादाविव विशेष्यस्य प्रत्यक्षत्वेऽपि विशेषणे दशमत्वे परोक्षधीरेव ।

तत्राप्यपरोक्षेति मयोच्यमानत्वात्प्रतीतिकलहोऽयं निरवधिक इति चेत् न ताव-च्छब्दस्यापरोक्षधीहेतुत्वं स्वाभाविकम् । अतिप्रसङ्गात् । नाप्यपरोक्षविषयकत्वनिमित्तकम् । जीवाः परमात्मनो न भिद्यन्ते आत्मत्वादित्यादिलिङ्गजन्यायाः श्रवणात्प्रागापाततो वेदान्त-जन्याया भाषाप्रबन्धजन्यायाः अनधीतवेदान्तजन्यायाश्चैक्यप्रतीतेरापरोक्ष्यापातेन श्रवण-नियमादेरयोगात् । किंच अर्थस्यापरोक्षत्वं न तावदपरोक्षधीरूपत्वम् । तस्य ब्रह्मणि सत्त्वेऽपि दशमत्वादावसत्त्वात् । चैत्रस्यापरोक्षज्ञाने मैत्रस्य शब्दादिना साक्षात्कारादर्शनाच्च । नाप्य-परोक्षव्यवहारविषयत्वम् । व्यवहारापरोक्ष्यस्य परोक्षविषयत्वरूपत्वेऽन्योन्याश्रयात् । अप-रोक्षोऽयमित्येवंरूपत्वे त्वज्ञानावृते ऐक्ये तदभावात् । त्वयापि न प्रकाशत इत्यादि-व्यवहारार्थमेवावरणकल्पनात् । उक्तव्यवहारयोग्यत्वरूपत्वे भित्तिव्यवहिते घटे शब्दाद-परोक्षधीप्रसङ्गात् । अपरोक्षज्ञानजन्यत्वरूपत्वे च वक्ष्यमाणपक्षान्तर्भावात् । तस्मादर्थस्या-

---

॥ किंचेत्यादिना ॥ तत्त्वमस्यादिवाक्यस्य प्रत्यक्षप्रमाणान्तर्भावनिरासायाह ॥ स्वतोऽपरोक्ष-विषयान्यत्वे सतीति ॥ स्वतो योऽपरोक्षविषयः तद्विषयशब्दान्यत्वे सतीत्यर्थः । तथा च प्रत्यक्ष-घटादिप्रतिपादकशब्दस्य प्रत्यक्षप्रमाणान्तर्भावापत्तिः । तत्प्रतिपाद्यघटस्य इन्द्रियव्यापारसापेक्षतयैवा-परोक्षत्वादिति वाच्यम् । तथाप्यज्ञातार्थबोधकत्वाभावेन प्रत्यक्षप्रमितिकरणत्वरूपविशेष्या-भावादिति भावः ॥ श्रवणनियमादेरयोगादिति ॥ तथाप्यतोऽप्यपरोक्षज्ञानेऽर्थविषयानिवर्तकज्ञानं श्रवणादेवेति नियम्यत इति वाच्यम् । अपरोक्षज्ञाने सत्यविद्यानिवृत्तेरन्यानपेक्षत्वस्योक्तत्वादिति

परोक्षधीविषयत्वमेवापरोक्षत्वं वाच्यम् । तत्र चैतज्ज्ञानविषयत्वेन तदुक्तावन्योन्याश्रयात् । ज्ञानान्तराभिप्राये तु केषाञ्चिदपरोक्षे स्वर्गादावस्माकं शब्दादपरोक्षधीः स्यात् । एकपुरुषाभिप्राये च पूर्वेद्युश्चैत्रस्यापरोक्षे इदानीं शब्दादपरोक्षधीः स्यात् । एककालाभिप्राये च प्रत्यक्षेऽग्नौ लिङ्गाच्छब्दाच्चापरोक्षधीः स्यात् । न चेष्टापत्तिः । करणशक्तिमतिलंघ्य ज्ञानस्य विषयानुसारित्वे चाक्षुषादिविषयकस्मृत्यनुमितिस्पार्शनज्ञानादेश्चाक्षुषत्वाद्यापातात् । लिङ्गशब्दादिसिद्धे चेन्द्रियात्परोक्षधीप्रसङ्गात् । अनुमिते च शब्दादनुमितिप्रसङ्गात् । एवंच

परोक्षे चापरोक्षे च चाक्षुषे स्पर्शिनीव च ।
अपरोक्षे परोक्षा धीर्युक्ता करणशक्तितः ॥

तस्माद्ये विरुद्धे ज्ञानत्वावान्तरजाती परोक्षत्वापरोक्षत्वे तदाश्रययोर्ज्ञानयोर्भिन्नत्वात् । यश्चैको विषयस्तत्र विरुद्धजात्यभावाद्विरुद्धजात्याधारज्ञानविषयत्वस्य च चाक्षुषस्पार्शनज्ञानविषयत्वस्येवैकस्मिन् संभवात्प्रत्यक्षविषयमपि शाब्दज्ञानं परोक्षमेव ।

किंच धर्मिमात्रस्य प्रत्यक्षत्वाभिप्राये प्रत्यक्षे घटादौ अयं गुरुः पर्वतोऽग्निमानित्यादिशब्दादपरोक्षधीः स्यात् । नापि सप्रकाराभिप्रायम् । प्रकृते तदभावात् । नहि दशमस्त्वमसि तत्त्वमसीत्यादिबोध्यं दशमत्वैक्यादि प्रागपरोक्षम् । वाक्यवैयर्थ्यात् । नच स्वरूपाभिन्ने ऐक्ये स्वरूपज्ञानेनापरोक्षतो भात्यपि वृत्त्यर्थं शब्दः । त्वया स्वरूपज्ञानप्रयुक्तभानप्रतिबन्धार्थमेवावरणकल्पनात् ।

---

भावः ॥ वक्ष्यमाणपक्षेति ॥ तत्र चान्योन्याश्रयादि वक्ष्यत इति भावः । नन्वनावृतसंवित्तादात्म्यमेवार्थस्यापरोक्षत्वं संविदस्तु स्वत एवेत्याशंक्यामुपसंहारव्याजेन निरस्यति ॥ तस्मादिति ॥ संविदर्थयोश्च तादात्म्यं निषिद्धमिति भावः ॥ तत्र चैतदिति ॥ दशमस्त्वमसीत्यादिवाक्यजन्यापरोक्षज्ञानविषयत्वेनार्थस्यापरोक्षत्वम् । सति तु तस्मिन् तद्विषयत्वेनापरोक्षज्ञानजनकत्वमित्यन्योन्याश्रय इत्यर्थः ॥ चाक्षुषादीनि ॥ चाक्षुषार्थविषयकस्मृत्यादीनां चाक्षुषत्वम् । स्पार्शनार्थविषयकस्मृत्यादीनां स्पार्शनत्वं स्यादित्यर्थः । ननु यथा ज्ञानस्य परोक्षत्वापरोक्षत्वे विरुद्धे एवमर्थस्यापीत्याशंक्य ज्ञाने जातिरूपत्वाद्विरोधः । अर्थे तु परोक्षापरोक्षज्ञानविषयत्वरूपत्वान्न विरोधः । न च विरुद्धजातिद्वयविशिष्टज्ञानाधारज्ञानविषयत्वमपि विरुद्धमिति वाच्यम् । एकस्यैव चाक्षुषस्पार्शनज्ञानविषयत्वदर्शनादित्याह ॥ तस्मादित्यादिना ॥ अपरोक्षार्थविषयत्वं प्रमाणस्यापरोक्षज्ञानजनकत्वे तंत्रमित्यतो दोषांतरमाह ॥ किंचेति । नचेति ॥

एतेनापरोक्षे ब्रह्मणि परोक्षधीः परोक्षे कामिन्यादावपरोक्षधीरिवाप्रमाणं स्यादिति निरस्तम्। स्मृतेऽनुभववत्, अनुमितेऽभाविन्द्रियेणापरोक्षधीवत्, पूर्वं परोक्षे पश्चाद्योगज-साक्षात्कारवत्, परोक्षतत्तायामपरोक्षप्रत्यभिज्ञानवच्चापरोक्षज्ञानविषयेऽर्थे परोक्षत्वजात्याधार-ज्ञानोदयेऽप्यपरोक्षस्य परोक्षत्वेनानुल्लेखेनाप्रामाण्यानापत्तेः। कामिनीसाक्षात्कारस्तु बाधाद-प्रमाणम्। न तु परोक्षार्थविषयकापरोक्षत्वजात्याधारत्वात्। तथात्वे योगजसाक्षात्कारा-देरप्यप्रामाण्यप्रसङ्गात्।

किंचैवं शब्दादेवापरोक्षधीरिति त्वदेकदेशिमते दोषाभावेऽपि इन्द्रियमादावभिज्ञान-मुत्पाद्य संस्कारसचिवं प्रत्यभिज्ञानमिव शब्द आदौ परोक्षज्ञानमुत्पाद्य मननादिसाध्य-प्रतिबन्धनिवृत्तिसचिवोऽपरोक्षज्ञानं जनयतीति त्वदेकदेशिमते प्रथमोत्पन्नपरोक्षज्ञानस्याप्य-प्रामाण्यं स्यात्। एतेन प्रमातारमपेक्ष्य देशतः कालतः स्वभावतो वा विप्रकृष्ट एव परोक्ष-ज्ञाननियमात्स्वप्रकाशप्रमातृचैतन्याभिन्नत्वेनाविप्रकृष्टे ब्रह्मणि परोक्षधीरेव न युक्तेति निर-स्तम्। प्रत्यक्षे वह्नौ लिङ्गादप्यपरोक्षधीप्रसङ्गात्। अविप्रकृष्ट एवापरोक्षज्ञाननियमेन विप्रकृष्टतद्व्याप्त्यादाविन्द्रियजन्यप्रत्यभिज्ञाव्याप्त्यादिज्ञानस्यापि परोक्षत्वापाताच्च। तत्र संस्कारादेरेव सन्निकर्षत्वेऽत्राप्यावरणकृतविप्रकर्षस्य सत्त्वात्। वृत्तेरावरणनिवर्तकत्वेऽपि वृत्त्यु-दयात्प्राग्विप्रकर्षात् पराचीनस्य चाविप्रकर्षस्य प्राचीनवृत्त्या आपरोक्ष्येऽतन्त्रत्वात्।

ननु कर्तृत्वादिरूपापरोक्षाध्यासस्य परोक्षप्रमयाऽनिवृत्तेरौपनिषदे ब्रह्मणि मानान्तरा-प्रवृत्तेः शब्दादपरोक्षज्ञानानुत्पत्तावनिर्मोक्षः स्यादिति चेन्न। तस्य ज्ञाननिवर्त्यताया निरस्त-

---

"सत्तादेर्विप्रकृष्टस्य संस्कारात्सन्निकृष्टता।
यदि स्यादावृतत्वेन ब्रह्मणो विप्रकृष्टता॥" इत्यर्थः।
"यद्यप्यज्ञाननाशे तु सन्निकृष्टत्वसंभवः।
तथापि तन्निवृत्तेः प्राक् सन्निकृष्टः कुतो भवेत्॥" इत्याह॥ वृत्तेरिति॥
"पाश्चात्यसन्निकर्षेण प्राचीनस्यापरोक्षता।
यदि स्यात्तद्यथार्थेऽपि प्रत्यक्षं स्याद्घटादिकम्।"
इत्यभिप्रेत्याह॥ पराचीनस्य चेति॥
"ननु प्रत्यक्षमात्रेण निवर्त्यः कर्तृताभ्रमः।
निवर्तेत कथं शब्दादपरोक्षं न चेद्यदि।
न च मानान्तरादापरोक्षज्ञानमिष्यते॥"

त्वात् । निदिध्यासनसंस्कृतमनसाऽपरोक्षधीसंभवाच्च । "यन्मनसा न मनुते" इत्यादि-श्रुतिस्तु "मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतिविरोधेनापक्वमनोविषया । "मनसा तु विशुद्धेन" इत्यादिश्रुतेः । अन्यथा शब्दस्य करणत्वेऽपि "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिबाधः स्यात् । मनसा न क्वाप्यपरोक्षधीर्दृष्टेति चेन्न । योगजसाक्षात्कारदर्शनात् । शब्देनापि तददर्शनाच्च । मनसस्तत्करणत्वे उक्तश्रुतेरिव शब्दस्य तत्करणत्वे श्रुत्यादेरदर्शनाच्च । "औप निषदः पुरुषः" इत्यादि तु मनसः करणत्वेऽप्यौपनिषदनिदिध्यासनापेक्षत्वात् । तदुक्तम् ।

शब्देन दृश्यते ब्रह्मेत्यत्र मानं न दृश्यते ।
मनसा दृश्यते ब्रह्मेत्यत्र मानं तु दृश्यते ॥ इति ।

॥ इति शाब्दप्रत्यक्षभङ्गः ॥ ९ ॥

तस्मात्साधनाध्यायोक्तन्यायैर्मोक्षाय श्रवणादिसाध्यनिदिध्यासनजन्यसाक्षात्कारेणे श्वरः प्रसन्नीकरणीय इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते तृतीयः परिच्छेदः ॥ ३ ॥

---

इति शांकरे ॥ तस्येति ॥ कर्तृत्वादेरध्यासनिरासेन ज्ञानविकर्तृत्वस्यापि निरस्तत्वादितिभावः । ॥ मनसैवेति ॥ अवधारणयुक्तत्वात् प्रबलेयं श्रुतिर्मतेति भावः । किंच श्रुत्यंतरावेधा प्रबलेत्यत्र-प्रार्थ्यते इत्याह ॥ मनसा त्विति ॥

"निषेधप्रबलान्मनसः करणत्वं न चेत्त्वया ।
शब्दस्यापि तथेदं तु कारणत्वं कथं भवेत् ॥"

इत्याह ॥ अन्यथेति ॥ मनसेति ।

"सुखादेः साक्षिगम्यत्वमात्मनः स्वप्रकाशता ।
अतः क्वापि मनोजन्यं प्रत्यक्षं नैव दृश्यते ॥" इति भावः ।
प्रमेयमुपसंहरन् ।
उपक्षिपति वर्तिष्यमाणं संगतिसिद्धये ॥ तस्मादिति ॥

॥ इति शाब्दप्रत्यक्षभंगः ॥ ९. ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचितायां आमोदाख्यायां न्यायामृतव्याख्यायां तृतीयः परिच्छेदः ॥

श्रीः श्रीः श्रीः श्रीः श्रीः

॥ इति न्यायामृतव्याख्यामोदे तृतीयः परिच्छेदः ॥

# ॥ चतुर्थः परिच्छेदः ॥

## ॥ अथ अविद्यानिवृत्तिभङ्गः ॥ १ ॥

॥ श्रीगुरुभ्यो नमः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

नन्वेतदयुक्तम् । अविद्यानिवृत्तिर्हि मोक्षः । ज्ञानं चाविद्यां दीप इवान्धकारं प्रसादनिरपेक्षमेव निवर्तयति । स्यादेतत् । अविद्यानिवृत्तेरात्ममात्रत्वे न साध्यत्वम् । अनात्मत्वे तु सत्त्वेऽद्वैतहानिः । अनिर्वाच्यत्वेऽविद्यातत्कार्ययोरन्यतरत्वं स्यात् । न च वृत्तिविशिष्ट आत्मा-

---

॥ अथ अविद्यानिवृत्तिभङ्गः ॥ १ ॥

अथेदानीं पराभिमतमुक्तिस्वरूपनिरासपूर्वकं स्वाभिमतमुक्तिस्वरूपं निरूपयितुं पूर्वपक्षमाह ॥ नन्वेतदिति ॥ यत्तृतीयपरिच्छेदान्ते उक्तम् । श्रवणादिसाध्यनिदिध्यासनजन्येश्वरसाक्षात्कारस्य तत्प्रसादद्वारा मोक्षसाधनत्वं प्रतिज्ञातम् ॥ अयुक्तत्वमुपपादयति ॥ अविद्यानिवृत्तिर्हीत्यादिना ॥ अयमर्थः । लोके प्रदीपादिप्रकाशस्य प्रसादनिरपेक्षस्यैव स्वविरोध्यंधकारनिवर्तकत्वं दृश्यत इति ज्ञानलक्षणप्रकाशस्यापि तन्निरपेक्षस्यैव स्वविरोध्यविद्यानिवर्तकत्वं स्वीकार्यम् । अतः पूर्वोक्तमीश्वरसाक्षात्कारस्य तत्प्रसादद्वारा अविद्यानिवृत्तिरूपमोक्षहेतुत्वमयुक्तमिति । अथ सिद्धान्ती परस्य विवक्षामुद्घाटयितुमविद्यानिवृत्तिमापाततो दूषयति ॥ स्यादेतदित्यादिना ॥ एतत् वक्ष्यमाणदूषणम् । तत्राविद्यानिवृत्तिः आत्ममात्रभूता वाऽतिरिक्ता वेति विकल्पद्वयं हृदि निधायाद्ये दोषमाह ॥ अविद्यानिवृत्तेरिति ॥ न साध्यत्वमात्मनो नित्यसिद्धत्वात् । तथा चाविद्यानिवृत्तिरूपमोक्षस्य पुरुषप्रयत्नसाध्येष्टत्वरूपपुरुषार्थत्वं न स्यादिति भावः । अविद्यानिवृत्तिरात्मातिरिक्तेति द्वितीयं पक्षमनूद्य सा किं सती अनिर्वाच्या वेति विकल्पावभिप्रेत्य प्रथमपक्षे दोषमाह ॥ अनात्मत्व इति ॥ अनात्मत्वे ज्ञानातिरिक्तत्वे । अत्र तुशब्दः आत्ममात्रत्वपक्षोक्तदोषासंभवं व्यनक्ति । सत्त्वे सत्यपक्षे अद्वैतहानिः । आत्मातिरिक्तं किमपि सदस्तीति पराभिमताद्वैतस्य हानिः प्रसज्येतेत्यर्थः । द्वितीये दोषमाह ॥ अनिर्वाच्यत्वे त्विति ॥ अत्रापि तुशब्दः पूर्ववत् । अन्यतरत्वं स्यात् । अनिर्वाच्ये तृतीयप्रकारासंभवादित्यर्थः । तथा च तत्र ज्ञानसाध्याविद्यानिवृत्तेस्तन्निवर्त्याविद्यात्वे व्याघातः । अविद्यायाः ज्ञानेन निवृत्तौ श्रवणादिप्रयासवैयर्थ्यम् । निवृत्तौ मोक्षनिवृत्तिः । अविद्याकार्यत्वे त्वदभिमताविद्यानिवृत्तिरूपमोक्षस्याप्यविद्याकार्यप्रपंचवत् ज्ञानेन तन्निवृत्तिः तन्निवृत्तौ च सत्त्वापत्त्या सदसद्विलक्षणत्वादिरूपानिर्वाच्यत्वव्याघातः । अविद्यानिवृत्तिं विना तत्कार्यानुवृत्त्य-

ऽज्ञानहानिः । वृत्तिनिवृत्तौ मोक्षनिवृत्त्यापातादिति चेत् वृत्त्युपलक्षितस्यात्मनोऽज्ञानहानित्वात् । उपलक्षणे निवृत्तेऽपि मुक्तेरनिवृत्तिः पाके निवृत्तेऽपि पाचकस्येव युक्ता । उक्तं हि

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥" इति ।

यद्वा आत्मान्यैव निवृत्तिः । तत्र चानिर्वाच्यत्वं सदसद्विलक्षणत्वं चेन्निवृत्तिरनिर्वाच्यैव

---

वोक्तमोक्षावस्थायामन्यविद्यानुवृत्तिश्चेत्यादिदोषः प्रसज्येतेति भावः । सिंहावलोकनन्यायेनात्ममात्राविद्यानिवृत्तिपक्षोक्तसाध्यत्वे दोषपरिहारमाशंक्य निराकरोति ॥ नचेति ॥ अज्ञाननिवृत्तिर्न केवलात्ममात्ररूपा । किंतु वृत्तिविशिष्टात्मरूपा । सा च ज्ञानसाध्यैवेति न पूर्वोक्तासाध्यत्वदोषावकाश इति न च वाच्यमित्यर्थः । अत्र वृत्तिशब्देन वेदांतजन्यापरोक्षवृत्तिर्विवक्षिता । वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति । तथापि मोक्षः स्यादिति वक्तुमशक्यत्वात् । अन्यथेदानीमपि परोक्षवृत्तिविशिष्टात्मनः सत्त्वेन मोक्षापादनसंभवे जीवन्मुक्तिग्रहणमनर्थकं स्यात् । एतेनैव चरमसाक्षात्कारेणेत्यापूर्वग्रंथे साक्षात्त्वशब्देनैव तद्ग्रहणाच्चेति कुतो न वाच्यमित्यत आह ॥ वृत्तिनिवृत्ताविति ॥ विशेषणीभूतवृत्तिनिवृत्तौ तद्विशिष्टात्मनिवृत्तेरावश्यकत्वेन तादृगात्मस्वरूपभूताविद्यानिवृत्तिरूपमोक्षस्यापि निवृत्त्यापातादित्यर्थः । अत्र वृत्तिविशिष्टात्मरूपमोक्षस्य वृत्तिसाध्यत्वे आत्माश्रय इत्यपि दूषणं द्रष्टव्यम् । पूर्वपक्षी इमां सिद्धान्तिशंकां समाधत्ते नेति ॥ कुतोनेत्यत आह ॥ वृत्त्युपलक्षितस्येति ॥ एवं चाविद्यानिवृत्तेरात्मातिरिक्तत्वपक्षे उक्ताद्वैतहान्यादिदोषस्य अनतिरिक्तत्वपक्षेऽपि वृत्तिविशिष्टात्मस्वरूपत्वपक्षोक्तमोक्षनिवृत्तिरूपदोषस्य वा अनवकाश इति भावः । नन्वेवमप्युपलक्षणीभूतवृत्तिनिवृत्तौ तदुपलक्षितात्मनोऽपि निवृत्तेस्तन्मात्राविद्यानिवृत्तिरूपमोक्षनिवृत्तिः कथमित्यत आह ॥ उपलक्षण इति ॥ (यथा)यथा उपलक्षणीभूतपाके निवृत्तेऽपि पाचकस्यानिवृत्तिः पचत्यपि सुप्ते पाचक इति व्यवहारदर्शनात् । तथा उपलक्षणीभूतवृत्ती निवृत्तायामपि तदुपलक्षितात्मस्वरूपभूताविद्यानिवृत्तिरूपमुक्तेरनिवृत्तिर्युक्तेत्यर्थः । उक्तमर्थं संवादयति ॥ उक्तं हीति ॥ मोहस्याज्ञानस्य निवृत्तिः ज्ञातत्वेन वृत्तिविषयत्वेनोपलक्षितः आत्मा आत्ममात्ररूपा अत उपलक्षणहानेऽपि उपलक्षणीभूतवृत्तिनिवृत्तावपि मुक्तिस्तदुपलक्षितात्ममात्रभूताविद्यानिवृत्तिरूपमुक्तिः स्यात् । स्वयमनुवर्तेत पाचकादिवत् । यथा उपलक्षणे पाके निवृत्तेऽपि पाचकोऽनुवर्तते तद्वदिति श्लोकार्थः । तदेवमनतिरिक्तत्वपक्षमाश्रित्य स्यादेतदित्याशंका समाहिता । इदानीमतिरिक्तत्वपक्षमाश्रित्य तां शंकां समाधत्ते ॥ यद्वेति ॥ निवृत्तिः अज्ञाननिवृत्तिः ॥ पंचमप्रकारापि ॥ आत्मान्यैव [illegible] । अतो आत्ममात्रपक्षोक्तदोषानवकाश इति भावः ।

अविद्यान्यतरत्वे तु निवृत्तिमत्त्वं तन्त्रम्। नच निवृत्तेर्निवृत्तिर्युक्ता। अनिर्वाच्यत्वं ज्ञाननिवर्त्यत्वरूपं बाध्यत्वं बाध्यत्वं चेत् पञ्चमप्रकारः। उक्तं हि—

"न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः।
यश्चानुरूपो बलिरित्याचार्याः प्रत्यपीपदन्॥" इति।

एवंच नाद्वैतहानिः। सतो द्वितीयस्याभावात्। नाप्यविद्यान्यतरत्वापत्तिः। अनिर्वाच्यत्वाभावात्। अथवा भावाद्वैतमते आत्मान्या सत्यैव निवृत्तिरिति।

उच्यते न तावदात्मान्यत्वपक्षो युक्तः। आत्मा वृत्तिव्याप्योऽपि नेतिमतेऽपसिद्धान्तात्।

---

अत्र सदसद्विलक्षणत्वमनिर्वाच्यत्वमित्येकः पक्षः, ज्ञाननिवर्त्यत्वरूपं बाध्यत्वमनिर्वाच्यत्वमित्यपरः। तत्राद्यपक्षांगीकारेण सत्त्वपक्षोक्ताद्वैतहानिदोषं तावदुद्धरति॥ नचेति॥ अनिर्वाच्यैव न सती, अतो नाद्वैतहानिरित्यर्थः। हंत तर्हि प्रागुक्ताविद्यान्यतरत्वाविशेषः स्यादित्यत आह॥ अविद्यान्यतरत्वे त्विति॥ तत्र निवृत्तिमत्त्वं तंत्रम्, ननु सदसद्विलक्षणत्वरूपानिर्वाच्यत्वमित्यर्थः। तर्हि निवृत्तिमत्त्वप्रयुक्तमेवाविद्यान्यतरत्वं निवृत्तौ स्यादित्यत आह॥ नचेति॥ निवृत्तेर्निवृत्त्यंगीकारे पुनस्तस्या अपि निवृत्तेर्निवृत्त्यंतरमित्यनवस्था स्यादतो निवृत्तेर्निवृत्तिरयुक्ता तथाच निवृत्तेर्निवृत्तिमत्त्वाभावात्तत्प्रयुक्तमविद्यान्यतरत्वं तत्र न प्रसज्यत इति भावः। द्वितीयपक्षानुसारेणातिरिक्तत्वपक्षोक्तदोषद्वयं परिहर्तुं अविद्यानिवृत्तिस्वरूपमाह॥ अनिर्वाच्यत्वमिति। पंचमप्रकारेति॥ निवृत्तिरितिपूर्वेणान्वयः। अविद्यानिवृत्तेः पंचमप्रकारत्वं न स्वकपोलकल्पितमित्याह॥ उक्तं हीति॥ तत्क्षयः। तस्या अनिर्वाच्याविद्यायाः क्षयः (अविद्याक्षयः) निवृत्त्यपरनामको नाशः। (१) अविद्याक्षयः न सन्, (२) अपसिद्धांतान्नासन्, (३) विरोधान्न सदसन् (४) प्रतियोगिसालक्षण्यायोगान्नानिर्वाच्यश्च (५) किंतु यक्षानुरूपबलिवदनिर्वाच्यानुरूपसद्विलक्षणः पंचमप्रकार एवेत्याचार्याः प्रतिपादयामासुरिति श्लोकार्थः। सत्त्वादिपक्षोक्तदोषोद्धारप्रकारमाह॥ एवंचेति॥ सर्वाविद्यानिवृत्तेः पंचमप्रकारत्वेऽङ्गीकृते सतीत्यर्थः॥ सतो द्वितीयस्याभावादिति॥ अविद्यानिवृत्तेः द्वितीयत्वेऽपि तस्याः सत्त्वानंगीकारादित्यर्थः॥ अनिर्वाच्यत्वाभावादिति॥ अविद्यान्यतरत्वप्रयोजकानिर्वाच्यत्वानंगीकारादिति भावः। अतिरिक्तातिरिक्तपक्षोक्तागेषदोषानवकाशाय प्रकारांतरेणाविद्यानिवृत्तिस्वरूपमाह॥ अथवेति॥ अत्रात्मैक्यपक्षे नान्यत्वपक्षोक्तासाध्यत्वस्य, सतीत्यनेनानिर्वचनीयत्वपक्षोक्ताविद्यान्यतरत्वस्य भावाद्वैतमित्यनेनाद्वैतहानेरनवकाश इति विवेचनीयम्। सिद्धांती क्रमेण पूर्वपक्षं निराकर्तुं प्रतिजानीते॥ उच्यत इति॥ तत्र प्रथमपक्षं दूषयति॥ न तावदिति॥ आत्मत्वपक्षः वृत्त्युपलक्षितात्मत्वपक्ष इत्यर्थः। कुतो

वृत्त्युपलक्षितस्य वृत्तेः पश्चादिव पूर्वमपि सत्त्वात् । पाकोपलक्षितोऽपि पाकात्पूर्वमस्त्येव । किंतु तदज्ञानात्पाचकइत्यव्यवहारः । नचात्र मुक्त इति व्यवहारः साध्यः । किंतु मुक्तिः ।

एवंच— वृत्त्योपलक्षितचितः पश्चादिव पुरापि च ।
सद्भावान्मोहकालेऽपि मोहहानिः प्रसज्यते ॥

किंच पाककर्तृत्वं पाचकत्वमिति मते पश्चान्न पाचकः । तद्व्यवहारस्तु भ्रष्टाधिकारे दण्डनायक इतिवद्भूतपूर्वगत्यैव । कर्तृत्वावच्छेदकावच्छिन्नत्वरूपं कर्तृत्वात्यन्ताभावानधिकरणत्वरूपं वा

---

न युक्त इत्यत आह ॥ आत्मेति । अपसिद्धांतादिति ॥ तन्मते आत्मनः कदापि वृत्तिसंबंधाभावेन वृत्त्युपलक्षितत्वाभावादितिभावः । तर्हि वृत्त्यव्याप्यत्वमंगीकुर्म इति वदंतं प्रत्याह ॥ वृत्त्युपलक्षितस्येति ॥ ननु कथं वृत्त्युपलक्षितस्यात्मनो वृत्तेः पूर्वं सत्त्वम्, पाकोपलक्षितस्य पाचकस्य पाकात् पूर्वमसत्त्वादित्यत आह ॥ पाकोपलक्षितोऽपीति ॥ तर्हि पाकसंबंधात् पश्चादिव पूर्वमप्ययं पाचक इति व्यवहारः स्यादित्याशंक्य परिहरति ॥ किंत्विति ॥ तदज्ञानात् पाककरणात्पश्चादिव पूर्वं पाकोपलक्षितत्वाज्ञानादयं पाचक इत्यव्यवहार इत्यर्थः । नन्वेवमिहापि वृत्त्युपलक्षितात्मनो वृत्तेः पूर्वं सत्त्वेऽपि पश्चादिव पूर्वं वृत्त्युपलक्षितत्वाज्ञानात् मुक्त इति व्यवहाराभावोऽप्यस्तु इत्यत आह ॥ नचात्रेति ॥ यथा तत्र पाचक इति व्यवहारः साध्यः तथा अत्र मुक्त इति व्यवहारः न साध्य इत्यर्थः । किं तर्हि साध्यमित्यत आह ॥ किंतु मुक्तिरिति ॥ वृत्त्युपलक्षितस्येत्युक्तहेत्वनुवादपूर्वकं फलितार्थं श्लोकेनाह ॥ एवंचेति ॥ चिदात्मनः पश्चादिवेत्यादौ अवच्छेदकतायां वृत्तेरितिशेषोऽन्वयम् । मोहकालेऽपि अज्ञानकालेऽपि मोहहानिः अज्ञाननिवृत्तिः प्रसज्यत इति । अज्ञाननिवृत्तेः अज्ञानकालीनवृत्त्युपलक्षितात्मस्वरूपत्वांगीकारादिति भावः । इदमुपलक्षणम् । वृत्तेः प्राग्विद्यमानायाः अज्ञाननिवृत्तेर्वृत्तिसाध्यत्वं घटतद्ध्वंसयोरिवाज्ञानध्वंसयोरेककालत्वं च विरुद्धं प्रसज्येतेत्यपि द्रष्टव्यम् । मुक्तौ स्यान्मुक्तिः पाचकवदिति दृष्टांतवैषम्यं वक्तुं तद्दृष्टांतस्वरूपं विवेचयति ॥ किंचेत्यादिना ॥ पश्चात् पाकनिवृत्त्यनंतरं न पाचकः । तदा पाककर्तृत्वाभावात् । तथाच दृष्टांत एवासिद्ध इतिभावः । किंनिबंधनस्तर्हि तदा पाचक इति व्यवहार इति जिज्ञासायामाह ॥ तद्व्यवहारस्त्विति ॥ यथा भ्रष्टाधिकारे पुरुषे दण्डनायकत्वाभावेऽपि पूर्वं तथाभूतत्वात्तदभिप्रायेण दंडनायक इति व्यवहारस्तथा निवृत्तपाके पाचकत्वाभावेऽपि पूर्वं तस्य तथाभूतत्वात् तदभिप्रायेण पाचक इति व्यवहार इत्यर्थः ॥ कर्तृत्वावच्छेदकेति ॥ पाककर्तृत्वावच्छेदक इत्यर्थः । अवच्छेदकं स्वत्वादिकं

तद्योग्यत्वं पाकानवच्छिन्नाधिकरणताकपाकबोधितव्यावृत्त्यधिकरणत्वरूपं पाकोपलक्षितत्वं वा पाचकत्वमिति मतेऽपि तदुभयं पश्चादप्यस्ति । नचेह मुक्तावात्मातिरिक्तं योग्यत्वाद्यस्ति । चिन्मात्रं तु प्रागपि । एवंच

वृत्त्योपलक्षितस्यापि चिन्मात्रत्वे न साध्यता ।
पाकोपलक्षितस्येव त्वाधिक्ये सविशेषता ॥

किंच वृत्त्युपलक्षितात्मरूपस्याज्ञानध्वंसस्य प्रागेव सिद्धत्वे श्रवणादिवैयर्थ्यम् । असिद्धत्वे नात्ममात्रत्वम् । आत्मनो नित्यसिद्धत्वात् । अभावापलापपक्षेऽपि कैवल्यादिविशिष्ट-

---

मुक्त्यम् ॥ कर्तृत्वेति ॥ पाककर्तृत्वेत्यर्थः । तद्योग्यत्वं पाककर्तृत्वयोग्यत्वम् । पाकोपलक्षितत्वं पाचकत्वमिति प्रकारं विवक्षुः किंरूपं तत् पाकोपलक्षितत्वमिति(च)जिज्ञासायां तन्निरुक्तिपूर्वकं तत्पक्षमाह ॥ पाकानवच्छिन्नेति ॥ अत्र पाकेनानवच्छिन्ना अविशिष्टा अधिकरणता यस्याः सा पाकानवच्छिन्नाधिकरणताका तादृशी या पाकबोधिता व्यावृत्तिस्तदधिकरणत्वं पाकोपलक्षितत्व-मिति निरुक्त्यक्षरार्थः । एवंच पाकविशिष्टे पाकबोधितव्यावृत्तिः पाकावच्छिन्नाधिकरणतैव न, तदनवच्छिन्नाधिकरणताकेति न तत्रातिव्याप्तिः । पाकानवच्छिन्नाधिकरणताकव्यावृत्त्यधिकरणत्वं दंडविशिष्टेऽप्यस्तीत्यतिव्याप्तिस्तत्परिहारार्थं पाकबोधितेति व्यावृत्तिर्विशेषिता । एवंच पाकान-वच्छिन्नाधिकरणताकव्यावृत्त्यधिकरणदंडविशिष्टव्यावृत्तिर्दण्डबोधितैव न तु पाकबोधितेति न तत्रातिव्याप्तिरिति विशेषणप्रयोजनमूह्यम् ॥ तदुभयमिति ॥ पाककर्तृत्वावच्छेदकेत्यादिनिरुक्तरूपं पाककर्तृत्वयोग्यत्वं, पाकानवच्छिन्नेत्यादिनिरुक्तपाकोपलक्षितत्वरूपं पाचकत्वं तदुभयं पश्चादपि पाकनिवृत्त्यनंतरमप्यस्ति । आत्मनि तु नैवं योग्यत्वादिकमस्तीति दृष्टांतदार्ष्टांतिक-योर्वैषम्यमित्यर्थः । ननु निवृत्त्यनंतरमपि आत्मनि वृत्तिविषयतावच्छेदकावच्छिन्नत्वरूपं वा वृत्तिविषयतात्यंताभावानधिकरणत्वरूपं वा योग्यत्वं वृत्त्यनवच्छिन्नाधिकरणताकवृत्ति-बोधितव्यावृत्त्यधिकरणत्वरूपवृत्त्युपलक्षितत्वं नास्तीति कथं दृष्टांतदार्ष्टांतिकवैषम्यमित्या-शंक्य किमिदं योग्यत्वादिकं आत्मातिरिक्तं आत्ममात्रं वेति विकल्प्याद्यं दूषयति ॥ नचेहेति ॥ तथाच पाचकत्वप्रयोजकयोग्यत्वादिवदात्मनि मुक्तत्वप्रयोजकयोग्यत्वाद्यभावान्न मुक्त्य-भावः । भावे च सविशेषत्वं स्यादिति भावः । द्वितीयं दूषयति ॥ चिन्मात्रं त्विति ॥ प्रागपि वृत्तेः प्रागप्यस्तीत्यर्थः । तथाच चिन्मात्रस्याविद्यानिवृत्तिलक्षणमोक्षस्यासाध्यत्वप्रसंगः इति भावः । उक्तमेवार्थं कारिकायां संगृह्णाति ॥ एवंचेति ॥ न साध्यता मोक्षस्येतिशेषः । आधिक्ये उक्तयोग्यतादिमत्त्वे । दूषणांतरमाह ॥ किंचेति । वृत्त्युपलक्षितात्मरूपस्येति ॥ ननु प्राभा-

स्यैवाधिकरणस्याभावत्वात्। अन्यथा तत्राप्युक्तदोषात्। आत्मान्यत्वे तु मुक्तावप्यविद्याभेदयोरनिवृत्तिः। एवंच

प्रागेव सिद्धो मोक्षश्चेच्छ्रवणादिश्रमो वृथा।
असिद्धौ नात्ममात्रत्वमन्यत्वे सद्वितीयता॥

किंचेयं प्रक्रिया किमन्यत्रापि इहैव वा। नाद्यः। बिंबप्रतिबिंबैक्याज्ञाननिवृत्तावपि ज्ञातं तदैक्यमित्यापत्त्या तदैक्यधीकाले सोपाधिकतद्भेदभ्रमोपादानाज्ञानानुवृत्त्ययोगात्। नान्त्यः। नियामकाभावात्। विश्वमिथ्यात्वश्रुतेर्ज्ञानाद्विश्वनिवृत्तिपरत्वेन स्वतात्पर्यविषयनिवृत्तीतरमिथ्यात्वपरत्वोपपत्तेः। अपिच वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति तदापि

---

कपालिमते यथा घटध्वंसादेरधिकरणरूपत्वेऽपि साध्यत्वं तद्वदत्रापि भविष्यतीत्यत आह ॥ अभावापलापपक्षेऽपीति ॥ अतिरिक्ताभावापलापपक्षेऽपीत्यर्थः ॥ अन्यथेति ॥ (न)केवलव्यतिरिक्तस्यानभ्युपगम इत्यर्थः। तत्रान्यभावापलापपक्षेऽपि। उक्तदोषात् असाध्यत्वाद्युक्तदोषात् ॥ आत्मान्यत्वे त्विति ॥ अपारमार्थिकत्वे चेत्यपि द्रष्टव्यम्। उपादेयस्योपादानं विनाऽयोगात् अपरमार्थभावस्याविद्योपादानकत्वस्वीकारादित्यर्थः। पारमार्थिकत्वे तु सद्वितीयतेति बोध्यम्। एवं परेणाविद्यानिवृत्तिरूपमोक्षस्यात्ममात्रत्वांगीकारे दोष उक्तः। इदानीं तदंगीकार एव परस्य न संभवतीति भावेनाह ॥ किंचेयमिति ॥ इयं प्रक्रिया वृत्त्युपलक्षितात्मैवाविद्यानिवृत्तिरिति प्रक्रिया। अन्यत्रापि। आत्माज्ञाननिवृत्तिस्थलादन्यत्राप्यज्ञाननिवृत्तिस्थले। स्वीकृतेति शेषः। इहैव वा। आत्माज्ञाननिवृत्तिस्थल एव वा। तदैक्यं बिंबप्रतिबिंबैक्यम्। तदैक्यधीकाले ममेदं मुखमिति बिंबप्रतिबिंबैक्यापरोक्षधीकाले ॥ सोपाधिकतद्भेदभ्रमेति ॥ दर्पणाद्युपाधिकृतबिंबप्रतिबिंबभेदभ्रमेत्यर्थः ॥ अज्ञानानुवृत्त्ययोगादिति ॥ स्वनिवृत्तिदशायां स्वानुवृत्तेर्विरुद्धत्वादिति भावः ॥ नियामकाभावादिति ॥ अन्याज्ञाननिवृत्तिर्ज्ञातात्मरूपा न, किंत्वात्माज्ञाननिवृत्तिरेव ज्ञातात्मरूपेत्यत्र विशेषनियामकाभावादित्यर्थः। नन्वज्ञाननिवृत्तेरात्ममात्रत्वे नेह नानेत्याद्यात्मेतरसर्वमिथ्यात्वश्रुतिप्रामाण्यान्यथानुपपत्तिरेव नियामिका। अन्यथा आत्माज्ञाननिवृत्तेः आत्मान्यत्वे तस्यापि मिथ्यात्वबोधनावश्यंभावे सर्वमिथ्यात्वश्रुतेरन्यथात्वेनाप्रामाण्यं स्यादित्याशंक्याह ॥ विश्वमिथ्यात्वश्रुतेरिति ॥ विश्वमिथ्यात्वश्रुतेरविद्यानिवृत्तीतरविश्वनिवृत्तिपरतयापि प्रामाण्यसंभवान्न तदन्यथानुपपत्तिरविद्यानिवृत्तेरात्ममात्रत्वे नियामिकेति भावः। अस्तु वा अज्ञाननिवृत्तेरात्ममात्रत्वं तथापि न तस्याः मोक्षरूपत्वं संभवति। तथात्वे अतिप्रसंगादित्याह। ॥ अपिचेति ॥ जीवन्मुक्तौ अपरोक्षज्ञानावस्थायां अपरोक्षमोक्षः स्यात् परममोक्षः स्यात्।

मोक्षः स्यात् । नच सर्वकर्मनाशोपलक्षितत्वे सति वृत्त्युपलक्षित आत्मा मोक्षः तदा चारब्ध-कर्मास्तीतिवाच्यम् । विशेष्यवैयर्थ्यात् । कर्मनाशोपलक्षितस्य कर्मकालेऽपि सत्त्वाच्च । अविद्यानाश इव कर्मनाशेऽप्यात्ममात्रत्वे तदन्यत्वे चोक्तदोषाच्च । एतेन वृत्तिनिवृत्त्युपलक्षित आत्मा मुक्तिः, सच वृत्तेः प्राङ् नास्तीति निरस्तम् । वृत्तिनिवृत्तेरात्मत्वादावुक्तदोषात् । जीवन्मुक्तस्य सुषुप्त्यादौ वृत्तिनिवृत्त्युपलक्षितस्य सत्त्वाच्च । एतेनैव चरमसाक्षात्कारेण निवृत्तेन तेन वोपलक्षित आत्मा मोक्षः । जीवन्मुक्तौ च न चरमः साक्षात्कारोऽस्तीति निरस्तम् ।

---

परांगीकृतात्मरूपाविद्यानिवृत्तेः तदापि सत्त्वादिति भावः । ननु नाविद्यानिवृत्तिः केवलवृत्त्युपलक्षितात्मरूपांगीक्रियते येनोक्तातिप्रसंगः स्यात् । किंतु सर्वकर्मनाशोपलक्षितत्वे सति वृत्त्युपलक्षितो य आत्मा तद्रूपा । सा चोक्तजीवन्मुक्तिदशायां नास्ति । तदा प्रारब्धकर्मणां सत्त्वेन तन्नाशाभावात् । तथाच नोक्तातिप्रसंग इत्याशंक्य निराकरोति ॥ नचेति । विशेष्यवैयर्थ्यादिति ॥ सर्वकर्मेत्यादिविशेषणेनैवोक्तातिप्रसंगनिरासंभवेन वृत्त्युपलक्षितेत्यादिविशेष्यवैयर्थ्यादित्यर्थः । कर्मकाले कर्मनाशोपलक्षितस्यासंभवमंगीकृत्य विशेष्यवैयर्थ्यमुक्तम् । वस्तुतस्तु विशेषणस्वीकारेऽपि नोक्तातिप्रसंगनिरास इत्याह ॥ कर्मनाशोपलक्षितस्येति ॥ किंच कर्मनाशस्याविद्यानिवृत्तौ उक्तवक्ष्यमाणदूषणग्रस्तत्वेन तत्तुल्ययोगक्षेमत्वात् पृथग्विशेषणतयोपादानमेवायुक्तमिति भावेनाह ॥ अविद्यानाश इवेति ॥ दोषोक्तेः असाध्यत्वाद्वैतहान्यादिदोषोक्तेः । उक्तदूषणं पक्षांतरेऽप्यतिदिशति ॥ एतेनेति । सच वृत्तेः प्राङ्नास्तीति ॥ निवृत्तेः प्रतियोगिसमानकालीनत्ववत् प्रागभावसमानकालीनत्वस्यापि विरुद्धत्वादितिभावः । एतच्छब्दपरामृष्टं हेतुमाह ॥ वृत्तिनिवृत्तेरिति ॥ दोषोक्तेः असाध्यत्वादिदोषोक्तेः । वृत्तिनिवृत्तावविद्यानिवृत्तिसाधारणं दोषमुक्त्वा प्रातिस्विकं दोषमप्याह ॥ जीवन्मुक्तस्येति ॥ सुषुप्त्यादावित्यादिशब्देन मूर्च्छादिकं ग्राह्यम् । निवृत्तवृत्त्युपलक्षितस्य सत्त्वादिति सुषुप्त्यादौ वृत्तेर्निवृत्तत्वादिति भावः । तथाप्यदपि पक्षद्वयमनूद्याविद्यानिवृत्तावुक्तदोषातिदेशेन निराकरोति ॥ एतेनैवेति ॥ नच चरमसाक्षात्कारोऽस्तीति चरमसाक्षात्कारे सति देहाद्यनुवृत्त्ययोगात् चरमसाक्षात्काराभावादेव तन्निवृत्तिरपि नास्ति । तस्मात्तदुपलक्षितस्याभावान्न । ततश्चरमसाक्षात्कारेण वा निवृत्तेन तेन तेन वोपलक्षित आत्मा जीवन्मुक्तौ तु नास्तीति नोक्तातिप्रसंग इत्यर्थः । अत्र प्रथमपक्षे एतच्छब्दपरामृष्टं दोषमाह ॥ चरमसाक्षात्कारादिति ॥ द्वितीयपक्षं आह ॥ तन्निवृत्तेरिति ॥ उक्तदोषात् असाध्यत्वाद्युक्तदोषात् । प्रथमपक्षे प्रातिस्विकदोषमप्याह ॥ सर्वस्मादिति ॥ अविद्यानिवृत्तेः पूर्वसाक्षात्कारेणैव [illegible] चरम

चरमसाक्षात्कारात्प्रागिव पूर्वमपि तदुपलक्षितस्य सत्त्वात् । तन्निवृत्तेरात्मत्वादौ दोषोक्तेश्च । पूर्वस्मात्चरमज्ञाने आनंदाभिव्यक्तिरूपविशेषाभावे चरमक्षणेन वा चरमश्वासेन वोपलक्षित आत्मा मुक्तिरित्यापाताच्च । एवंच—

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
इत्येतन्नैव घटते जीवन्मुक्तौ प्रसक्तितः ॥

किंच वेदांतश्रवणादिसाध्येन पुरुषार्थेन भाव्यम् । नच त्वन्मते तद्युक्तम् । मुक्त्यनुस्यूतस्य सुखज्ञप्तिरूपस्यात्मनः पुरुषार्थत्वेऽप्यसाध्यत्वात् । चरमवृत्त्युपलक्षितस्याप्यद्वैतभंगापत्त्या मिथ्यात्ममात्रत्वात् । वृत्तेस्तु साध्यत्वेऽपि स्वतोऽपुरुषार्थत्वात् । तथाचात्मान्यो वृत्तिसाध्य आवरणनिवृत्तिरूप आनंदप्रकाशः पुरुषार्थो वक्तव्य इति कथमात्मैव निवृत्तिः एवंच— यः पुमर्थः स साध्यो न आत्मानंदचिदात्मकः ।
या च साध्या वृत्तिरिष्टा न तत्र पुरुषार्थता ॥

तस्मादज्ञानहानिरात्मस्वरूपम् । अनिर्वाच्यत्वपक्षोऽप्ययुक्तः । अनिर्वाच्यस्याध्यस्तत्वेन मोक्षे तदध्यासोपादानाज्ञानानुवृत्त्यापत्तेः । अध्यस्तस्याप्यभावत्वेन निरुपादानत्वे सघटे घटाभावा-

---

साक्षात्कारोपलक्षितेऽप्यभावादतिप्रसंगनिरासमात्रस्य चरमसाक्षात्कारादिनापि संभवाद्विशिष्ट-चरमसाक्षात्कारोपलक्षितत्वोक्तिव्यवस्था व्यर्थेतिभावः । पूर्वोक्तार्थमुक्तमर्थं श्लोकेन संगृह्णाति ॥ एवंचेति ॥ श्रवणाद्यैकव्यवस्थाप्यविद्यानिवृत्तिरात्मान्यैव स्वीकार्येतिभावेनाह ॥ किंचेति ॥ अत्र श्रवणादिसाध्येन पुरुषार्थेनेत्यनेन पुरुषार्थस्य श्रवणाद्यसाध्यत्वे तद्वैयर्थ्यं स्यादिति सूचितम् । नन्व-स्मन्मते पुरुषार्थस्य श्रवणादिसाध्यत्वं कुतो न युक्तमित्याशंक्य कोऽत्र श्रवणादिसाध्यः पुरुषार्थः आत्मा वृत्तिर्वेति विकल्प्याद्ये दोषमाह ॥ मुक्त्यनुस्यूतस्येति ॥ सुखज्ञप्तिरूपस्येत्यात्मनः पुरुषार्थत्वो-पपादनम् । ननु आत्मा चरमवृत्त्युपलक्षित आत्मा श्रवणादिसाध्यः । अतः पूर्वोक्तहेतुरसिद्ध इत्यत आह ॥ चरमवृत्त्युपलक्षितस्यापीति ॥ अद्वैतभंगापत्त्या आत्मान्यत्व इति शेषः । द्वितीये दोषमाह ॥ वृत्तेस्त्विति ॥ फलितमाह ॥ तथाचेति ॥ वृत्तिसाध्यश्रवणादिजन्यापरोक्षवृत्तिसाध्यः आवरणनिवृत्तिरूपः । अविद्याख्यावरणनिवृत्तिरूपः । किंचेत्यादिनोक्तमर्थं श्लोकेन निबध्नाति ॥ एवंचेति ॥ पुमर्थः आनंदचिदात्मक आत्मा साध्यो नैव या च साध्या वृत्तिस्तत्र पुरुषार्थता नेष्टेत्य-न्वयः । उपसंहरति ॥ तस्मादिति ॥ अविद्यानिवृत्तिरात्मातिरिक्तत्वेनोक्तेषु अनिर्वाच्यत्वपंचमप्रकार-(त्व)त्वरूपत्वेषु प्रथमं पक्षं दूषयितुं प्रतिजानीते ॥ अनिर्वाच्यत्वेति ॥ कुतोऽयुक्त इत्यत आह ॥ अनिर्वाच्यस्येति ॥ अनिर्वाच्यस्य मोक्षस्य ॥ तदध्यासेति ॥ तादात्म्योपाध्यासेत्यर्थः ।

ध्यासस्य प्रपंचांतर्गतस्य घटध्वंसस्य घटान्योन्याभावस्य च ज्ञानान्निवृत्तिर्न स्यात् । किंच निवृत्तेरबाध्यत्वे कथमबाध्यरूपसद्वैलक्षण्यम् । बाध्यत्वे तु तन्निवृत्तिः स्यात् । ज्ञानान्निवृत्तेरेव बाध्यत्वात् । प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधस्यापि तथात्वात् । निवृत्तेर्निवृत्तिरयुक्तेति चेन्न । अत एवानिष्टत्वेन तव तदापादनात् । नच निवृत्तेर्निवृत्तिरस्तु अज्ञानानुन्मज्जनं तु प्रागभावनिवृत्तिरूपघटनाशेऽपि प्रागभावस्येव युक्तमिति वाच्यम् । अप्रामाणिकानंतनिवृत्त्यापातात्, आत्मान्यस्याभावात् । तन्मात्रस्य चाहेतुत्वेन निवृत्तेर्निवृत्तिहेत्वभावाच्च । पंचम-

---

नन्वध्यस्तस्य सोपादानत्वे भावत्वं तंत्रम् । मोक्षस्य तदध्यस्तत्वेऽपि अभावरूपत्वान्नोपादाना-पेक्षेत्याशंक्यैवमंगीकारे बाधकमाह ॥ अध्यस्तस्यापीति ॥ अत्र अध्यस्तस्यापीत्यनंतरं मोक्षस्येति योज्यम् ॥ ज्ञानान्निवृत्तिर्न स्यादिति ॥ अज्ञानतत्कार्ययोरेव ज्ञानान्निवृत्तेरभावस्य तदन्यतरत्वा-भावादितिभावः ॥ प्रपंचांतर्गतस्येति ॥ (प्रपंचांतर्गतस्येत्यनेन) व्यावहारिकस्येत्यर्थः । एवमविद्या-निवृत्तेरनिर्वाच्यत्वमंगीकृत्य दोष उक्तः । इदानीं सदसद्विलक्षणत्वरूपमनिर्वाच्यत्वमप्ययुक्त-मित्याह ॥ किंच निवृत्तेरिति ॥ अबाध्यत्वरूपं यत्सत् तद्वैलक्षण्यमिति योजना । अबाध्ये अबाध्यवैलक्षण्यस्य व्याहतत्वादिति भावः । निवृत्तिः स्यात् । ज्ञानादिति शेषः । कुत इत्यत आह ॥ ज्ञानादिति ॥ ननु बाधो न ज्ञानान्निवृत्तिः किंतु प्रतिपन्नोपाधौ त्रैकालिकनिषेधः । एवंचा-विद्यानिवृत्तेः बाध्यत्वेऽपि न ज्ञानान्निवृत्तिरित्यत आह ॥ प्रतिपन्नोपाधाविति ॥ तथात्वात् ज्ञाननिवर्त्यत्वव्याप्तत्वात् । तथाच तादृशनिषेधेनैव ज्ञानान्निवृत्तिरप्यापाद्यतेति भावः ॥ निवृत्ते-रिति ॥ निवृत्तेर्निवृत्तौ प्रतियोग्युन्मज्जनप्रसंगान्निवृत्तेर्निवृत्तिरयुक्तेत्यर्थः । अत एवायुक्तत्वादेव । बाध्यत्वे तु निवृत्तिः स्यादित्यत्रेष्टापत्तिमाशंक्य परिहरति ॥ नचेति ॥ निवृत्तेर्निवृत्तिरिष्टा चेत् कथं प्रतियोगिभूताज्ञानानुन्मज्जनमितिजिज्ञासायामाह ॥ अज्ञानानुन्मज्जनं त्विति ॥ कुतो न वाच्यमित्यपेक्षायामाह ॥ अप्रामाणिकेति ॥ प्रामाणिकविषयत्वेनापादनमयुक्तमित्याशंकानिरासार्थं अप्रामाणिकेत्युक्तम् । आत्मनिष्ठत्वमुक्तनायानंतेत्युक्तम् । किंच निवृत्तेर्निवृत्तौ को हेतुः । आत्मान्यो वा आत्ममात्रं वेति विकल्प्याद्यं दूषयति ॥ आत्मान्यस्येति ॥ अविद्यानिवृत्तिरूपमोक्ष-दशायामात्मान्यस्याभावादित्यर्थः । द्वितीयं प्रत्याह ॥ तन्मात्रस्येति ॥ आत्ममात्रस्याभावत्वादिति भावः । तदेवमविद्यानिवृत्तौ निवृत्तिलक्षणबाधाभावेनाबाध्यायां तद्रूपसद्वैलक्षण्यलक्षणम-निर्वाच्यत्वमयुक्तमित्युक्तम् । अथ द्वितीयं पक्षं निराकर्तुं प्रतिजानीते ॥ पंचमेति ॥ चतुर्थ-

प्रकारत्वपक्षोऽप्ययुक्तः । चतुर्थप्रकारस्यैव निरस्तत्वेन तस्याष्टमरसतुल्यत्वात् । बौद्धैरपि-

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्वं माध्यमिका विदुः ॥"(मा. का. १ ९)

इत्युक्तत्वेन तत्वस्थितौ बौद्धमतानुसरणापाताच्च । बाध्यत्वाबाध्यत्वयोर्दोषोक्तेश्च । मिथ्यात्वमनिर्वाच्यत्वादिकमिति मते दृश्यत्वादेर्निवृत्तौ व्यभिचाराच्च । प्रातिभासिकव्यावहारिकान्यसत्त्व पारमार्थिकत्वेनाद्वैतहानेश्च । प्रतियोगिनोऽनिर्वाच्यत्वेनाज्ञाननाशस्यापि घटनाशवदनिर्वाच्यत्वावश्यंभावाच्च । प्रतियोगिवैलक्षण्येऽपि सदसदात्मकत्वापत्त्या पंचमप्रकारत्वासिद्धेश्च । एवंच—

"पक्षानुरूपबलिवत्प्रतियोगिविलक्षणः ।
मोहध्वंसो यदि तदा भवेत्सदसदात्मकः ॥"

---

प्रकारस्यैवानिर्वाच्यत्वलक्षणस्यैव निरस्तत्वेन अनिर्वाच्यभंगे निरस्तत्वेन तस्य पंचमप्रकारस्याष्टमरसतुल्यत्वात् । यथा लोके सप्तमरसस्यैव निरस्तत्वेनाष्टमरसोऽत्यंतायुक्तः तद्वदत्यंतायुक्तत्वादित्यर्थः । अनुभयात्मकं सदसद्विलक्षणम् । चतुःकोटिविनिर्मुक्तं उक्तचतुःप्रकारबहिर्भूतं पंचमप्रकारत्वम् । स्थितौ तत्वज्ञानविषये अन्यत्र बौद्धानुसरणात् तत्वनिर्णयविषये तदनुसरणमिति गर्हितमितिभावः ॥ बाध्यत्वेति ॥ पंचमप्रकाराविद्यानिवृत्तेर्बाध्यत्वे ज्ञाननिवर्त्यत्वप्रसंगस्याबाध्यत्वे सत्यत्वप्रसंगस्य दोषस्योक्तत्वादित्यर्थः । अनिर्वाच्यत्वादिकमित्यत्रादिशब्देन ज्ञाननिवर्त्यत्वादिकं ग्राह्यम् । निवृत्तौ पंचमप्रकाराविद्यानिवृत्तौ व्यभिचारात् अदृश्यत्वे मोक्षस्याप्यपुमर्थत्वापत्त्या तत्र दृश्यत्वे सत्यपि अनिर्वाच्यत्वादिरूपमिथ्यात्वाभावादित्यर्थः ॥ प्रातिभासिकव्यावहारिकान्यस्येति॥ अत्र पंचमप्रकारस्यानिर्वाच्यत्वाभावादेव प्रातिभासिकव्यावहारिकान्यत्वं तयोरेवानिर्वाच्यत्वादितिबोध्यम् । अथासति व्यभिचारवारणाय असदन्यस्येत्यपि ग्राह्यम् ॥ पंचमप्रतियोगिन इति ॥ यथाऽनिर्वाच्यस्य घटस्य नाशोऽप्यनिर्वाच्यस्तथानिर्वाच्याज्ञानस्यापि नाशोऽनिर्वाच्य एवावश्यं वाच्यः । तथाच तद्विलक्षणरूपः पंचमप्रकारो न सिद्ध इत्यर्थः । ननु प्रातिभासिकरूप्यादिभावस्य अप्रातिभासिकत्वेन प्रतियोगिवैलक्षण्यस्य दर्शनात् अनिर्वाच्याविद्यानिवृत्तेरपि तद्वैलक्षण्यं वाच्यम् । तथाचाविद्यानिवृत्तेः पंचमप्रकारत्वसिद्धिरित्यत आह ॥ प्रतियोगिवैलक्षण्येऽपीति ॥ सदसदात्मकत्वापत्त्या सदसदात्मकत्वरूपतृतीयप्रकारत्वापत्तेरित्यर्थः । अत्र विरोधात्सदसदात्मकत्वासंभवः शंक्यः । तत एवाविद्यात्मकमपि सदसद्विलक्षणत्वासंभवप्रसंगादिति भावः । संग्रहश्लोकः

सत्त्वपक्षोऽप्ययुक्तः । अभावद्वैतस्य निरासात् । ध्वंसस्य प्रतियोगिसमसत्ताकत्वेनाविद्याया अपि सत्त्वापत्तेश्च । एवंच

प्रागेव सिद्धो मोक्षश्चेच्छ्रवणादिश्रमो वृथा ।
असिद्धौ नात्ममात्रत्वमन्यत्वे सद्वितीयता ॥

॥ इति अविद्यानिवृत्तिभङ्गः ॥ १ ॥

---

स्पष्टार्थः । तृतीयपक्षं निराकर्तुं प्रतिजानीते ॥ सत्त्वेति । निरासादिति अभावे अभावत्वादेः तदाश्रये चाभावाश्रयत्वादेः भावस्यावश्यकत्वादित्यादिना परिच्छिन्नत्वभंगे अभावाद्वैतपक्षस्य निरस्तत्वादित्यर्थः । एतच्चोपलक्षणम् । अभावस्य भावापेक्षया गुरुत्वेन अभावाद्वैतापेक्षाया भावाद्वैतस्य सुतरामनिष्टत्वादित्यपि बोध्यम् । अविद्याया अपि सत्त्वापत्तेरिति । तद्ध्वंसस्य सत्वांगीकारादिति भावः ।

॥ इति अविद्यानिवृत्तिभङ्गः ॥ १ ॥

वृत्तिश्चैतन्यादधिकप्रकाशिका । त्वन्मतेऽयं घट इत्यादिवृत्तावपि घटस्य प्रकाशेऽपि चितोऽप्रकाशाच्च । उक्तं चैतदविद्याविषयभंगे । किंच तन्निवर्तकत्वे तत्स्थित्यसहिष्णुस्थितिकत्वरूपविरोधस्य तंत्रत्वात्कार्यस्य चोपादानेनाविरोधाच्च वृत्तिः स्वोपादानाज्ञाननिवर्तिका । उपांत्यजन्योऽन्त्यःशब्दस्तन्निवर्तकोऽपि न तदुपादानकः । आतंचनादिना निवृत्तक्षीरत्वगोमयत्वाद्यवस्था एव च तत्तदवयवा दधिवृश्चिकाद्युपादानानीति न क्वापि कार्येणोपादाननाशः । एतेन वृत्तिप्रतिबिंबिता चिदेवाविद्यानिवर्तिका । उक्तं हि—

"तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकांतमुपारुह्य तं न्यायं चिति योजयेत् ॥" इति निरस्तम् ।

अपरोक्षवृत्तौ सत्यां चित्प्रतिबिंबनेनानिवृत्तेरदर्शनाच्च । किंच निवर्तकस्य ज्ञानस्य न तावच्छुद्धात्मा विषयः । तस्यादृश्यत्वात् । उक्तं चैतद्दृश्यत्वभंगे ।

---

इत्याद्यपरोक्षवृत्तेश्चिद्विषयत्वम् । इतोऽप्यज्ञाननिवर्तकत्वं वृत्तौ न संभवतीत्याह ॥ किंचेति । तंत्रत्वादिति ॥ अंधकारादिनिवर्तकालोकादावंधकारादिस्थित्यसहिष्णुस्थितिकत्वस्य दर्शनादिति भावः ॥ कार्यस्य चेति ॥ घटादौ स्वोपादानभूतमृत्पिण्डादिना सह तत्स्थित्यसहिष्णुस्थितिकत्वरूपविरोधस्यादर्शनादितिभावः । ननूपान्त्यशब्दजन्यान्त्यशब्दस्य शब्दनिवर्तकत्वं दृष्टम् । अतः कथमदर्शनमित्यत आह ॥ उपांत्यजन्य इति ॥ न तदुपादानकः नोपांत्यशब्दोपादानकः । ननु दधिवृश्चिकादेः स्वोपादानक्षीरगोमयादिनिवर्तकत्वमपि दृष्टम्, मृद्घट इत्यादिव्यवहारवत् क्षीरं दधि, गोमयं च वृश्चिक इत्याद्युपादानानुविद्धव्यवहारादर्शनादित्यत आह । आतंचनेनेत्यादिनेति ॥ तत्वनिवृत्तक्षीरत्वगोमयत्वावस्था इत्येवशब्दार्थः । तत्तदवयवाः क्षीरगोमयाद्यवयवाः ॥ न क्वापीति ॥ दध्यादावुपादानक्षीराद्यवयवानिवृत्तावपि तेषां निवृत्तक्षीरत्वाद्यवस्थात्वेनैव क्षीराद्यननुविद्धप्रतीत्युपपत्तेर्न तेनोपादाननाशकल्पनावकाश इति भावः । वृत्तिरेवाज्ञाननिवर्तिकेति पक्षं निराकृत्य चिदेवाज्ञाननिवर्तिकेति पक्षं निराकरोति ॥ एतेनेति ॥ तस्मिन्पक्षे अज्ञानसाधिकायाश्चितः कथमज्ञाननिवर्तकत्वमिति शंकामभियुक्तवचनेन परिहरति ॥ उक्तं हीति ॥ तं न्यायं चितीति योजयेत् इति । यथा तृणादेर्भासिकापि सूर्यदीप्तिः सूर्यकांतोपारूढा सती तृणादिकं दहति एवमज्ञानसाधिकापि चिदपरोक्षवृत्तिप्रतिबिंबिता सती अज्ञानं निवर्तयतीति योजयेदित्यर्थः । कुतो निरस्तमित्यत तत्रदृष्टान्तोक्तं हेतुं स्पष्टयति ॥ अपरोक्षवृत्ताविति । अदर्शनादिति ॥ सत्यपि सूर्यकांते सूर्यदीप्तेस्तदनुपारोहेण तृणादाहवत् सत्यामप्यपरोक्षवृत्तौ चित्तत्प्रतिबिंबेनाज्ञानानिवृत्तेरदर्शनाल्लोकदृष्टान्तोऽज्ञाननिवर्तकत्वेऽन्यथेत्यर्थः । एवं विशिष्य पक्षद्वयं निराकृत्य

नाप्यन्यः । तस्याप्यस्तत्वेन तज्ज्ञानस्य भ्रांतित्वापातात् । अपि चांत्यज्ञानस्य निवर्तकं स्वयमेव वान्यद्वा । नाद्यः । प्रागभावः प्रतियोगिहेतुरितिपक्षे तन्मात्रस्याहेतुत्ववत्प्रतियोगी ध्वंसहेतुरितिपक्षेऽप्यतिप्रसंगेन तन्मात्रस्याहेतुत्वात् । दग्धदाह्यदहनस्यापीशेच्छादिनैव नाशात् । कतकरजस्तु न पंकं नाशयति । नापि स्वयं स्वेनैव नश्यति । विश्लेषमात्रदर्शनात् । नांत्यः । शुद्धात्ममात्रस्य किंचिदपि प्रत्यहेतुत्वात् । तदन्यस्य च निवृत्तत्वादिति ।

॥ इति अविद्यानिवर्तकभङ्गः ॥ २ ॥

---

सामान्याकारेणापि निराकरोति ॥ किंचनिवर्तकस्येति ॥ तस्य शुद्धात्मनः ॥ उक्तं चैतदिति ॥ एतच्छुद्धस्य दृश्यत्वम् । ननु शुद्धं न दृश्यमित्यादिना दृश्यत्वहेतोः शुद्धेऽनैकांतिकत्वं परिहरता त्वयैवोक्तमित्यर्थः । नाप्यन्यः विषयः इति संबंधः ॥ तज्ज्ञानस्य भ्रांतित्वापातादिति ॥ तथाच भ्रांतेरज्ञानोपादानकत्वात् स्वोपादानाज्ञाननिवर्तकत्वमेव न संभवतीति भावः । यद्वा भ्रमत्वापातादित्यर्थः । भ्रमस्याज्ञान(ा)निवर्तकत्वादिति भावः । अज्ञानस्य भ्रमेतरनिवर्तकत्वं न संभवतीति भावेनाह ॥ अपि चान्त्यज्ञानस्येति ॥ भ्रमोत्तरज्ञानेन स्वनिवृत्तिशंकावारणायांत्यपदम् । तन्मात्रस्य प्रागभावमात्रस्य । अहेतुत्ववदिति तद्धेतुत्वेऽप्यादावेव(ध्यादावेव)(युगपत्)सर्वकार्योत्पत्तिप्रसंग इति भावः ॥ अतिप्रसंगेनेति ॥ सर्वस्यापि कार्यस्योत्पत्तिसमनंतरमेव ध्वंसः स्यादित्यतिप्रसंगेनेत्यर्थः । तन्मात्रस्य प्रतियोगिमात्रस्य । दग्धदाह्यदहनवत् स्वस्यैव स्वनिवर्तकत्वमस्त्वित्याशंक्याह ॥ दग्धदाह्यदहनस्येति ॥ दग्धो दाह्यः काष्ठादिर्येन स तथोक्तः स चासौ दहनश्च तस्येति विग्रहः । ईशेच्छादिनैवेत्यादिशब्देन काष्ठनाशादिर्गृह्यते । तथाच दृष्टांत एवासिद्ध इतिभावः । ननु यथा कतकरजो जलगतं पंकं नाशयित्वा स्वयमपि स्वेनैव नश्यति तथांत्यज्ञानमपि स्वव्यतिरिक्तं सर्वं निवर्त्य स्वयमपि स्वेनैव निवर्ततामित्यत आह ॥ कतकरजस्त्विति । विश्लेषमात्रदर्शनादिति ॥ जलात्पंकस्य स्वस्य च विश्लेषमात्रदर्शनादित्यर्थः । अत्र मात्रशब्देन पंकादीनां नाशं व्यावर्तयति । एवं चायमपि दृष्टांतोऽसिद्ध एवेतिभावः ॥ अहेतुत्वादिति ॥ तस्योदासीनैकस्वभावत्वादिति भावः ॥ तदन्यस्येति ॥ शुद्धात्मान्यस्यांत्यज्ञानातिरिक्तस्य सर्वस्याप्यंत्यज्ञानेन निवृत्तत्वादित्यर्थः ।

॥ इति अविद्यानिवर्तकभङ्गः ॥ २ ॥

## ॥ अथ निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥ ३ ॥

यच्चोच्यते न वैशेषिकादीनामिवास्माकं मुक्तौ दुःखनिवृत्तिमात्रम् । किंतु निरतिशयानंदस्फुरणमपि । उक्तं हि

"तस्मादविद्यास्तमयो नित्यानंदप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च(पुरुषार्थःपरो मतः)पुमर्थः परमो मतः ॥" इति ।

तत्र न तावत्सुखात्मता पुरुषार्थः । सुखी स्यामितिवत्सुखं स्यामितीच्छाया अदर्शनात् । स्वतःपुरुषार्थे चेच्छाया अनियम्यत्वात् । अन्यथा आत्मनाशादिरपि बौद्धादिनियमितेच्छया पुमर्थः स्यात् । अत एव नापरकीयं सुखं पुरुषार्थः । तथेच्छाभावाद्गौरवाच्च । सुखसाधने

---

### ॥ अथ निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥ ३ ॥

एवमविद्यानिवर्तकं निरस्येदानीं पराभिमतपरमपुरुषार्थस्वरूपं निरसितुं तन्मतमनुवदति ॥ यच्चोच्यत इत्यादिना ॥ मुक्तौ अविद्यानिवृत्तिरूपमुक्तिदशायाम् । दुःखनिवृत्तिमात्रमित्यत्र मात्रशब्देन सुखानुभवमात्रस्य व्यवच्छेदः । आत्मादेस्तदापि सत्त्वात् सांसारिकानंदादिविशेषशंकानिरासाय निरतिशयेत्युक्तम् । उक्तार्थे संवादयति ॥ उक्तं हीति ॥ अविद्यास्तमयः पुरुषार्थो मत इत्यन्वयः । नन्वविद्यास्तमयस्य सुखदुःखाभावान्यतरत्वाभावात् कथं पुरुषार्थत्वमत आह ॥ नित्यानंदेति ॥ अविद्यास्तमयस्य सुखदुःखाभावान्यतरत्वाभावेऽपि तद्धेतुत्वात्पुरुषार्थत्वमित्यर्थः । अत्र किं सुखात्मता पुरुषार्थः, उतापरकीयं सुखं, आहोस्वित्सुखसाक्षात्कारः अथवा परकीयसुखसाक्षात्कारः इति चतुर्धा विकल्प्याद्यं दूषयति ॥ तत्र न तावदिति ॥ कुतो नेत्यत आह ॥ सुखी स्यामितिवदिति ॥ तर्हि सुखं स्यामितीच्छा कार्येत्यत आह ॥ स्वत इति ॥ स्वतः पुरुषार्थे स्वत एव जायमानेच्छानुसारेण पुरुषार्थे कल्पनीये इच्छायाः अनियम्यत्वात् । स्वकल्पितपुरुषार्थानुसारेणेच्छायाः अनियम्यत्वात् । स्वनियमितेच्छानुसारेण पुरुषार्थकल्पनीयत्वादित्यर्थः । यद्वा पुरुषार्थे स्वतः स्वत एव इच्छायाः नियम्यत्वात् । स्वाभाविकेच्छाया एव पुरुषार्थप्रयोजकत्वादित्यर्थः । विपक्षे बाधकमाह ॥ अन्यथेति ॥ अन्यथा नियमितेच्छानुसारेण पुरुषार्थत्वे बौद्धादिनियमितेच्छया आत्मनाशोऽपि पुरुषार्थः स्यादित्यर्थः । द्वितीयं पक्षं दूषयति ॥ अत एवेति ॥ अत एवोक्तदूषणादेवेत्यर्थः । नापरकीयमित्यस्यापरस्यान्यस्येदमपरकीयमित्यर्थः । अपरकीयसुखस्य स्वं प्रत्यपुरुषार्थत्वेनाबाधप्रसक्तत्वात् । न वा न परः अपरः स्वयं तदीयमित्यर्थः । अस्य पक्षस्य परिशेषणीयत्वेनादूषणीयत्वात् । तथेच्छाभावादिति दूषणानन्वयाच्च । किंतु परकीयं

परकीयेऽप्यस्वकीयेऽपुरुषार्थत्वस्य च दर्शनेनेष्टत्वाविशेषात्सुखेऽपि तत्कल्पनाच। दुःखतत्साधनयोः स्वकीयतयैवापुमर्थत्वस्य दर्शनेन सुखादेरपि तथैव पुमर्थत्वाच। त्वन्मतेऽपरकीयेन मुक्तस्वरूपसुखेन संसारिणः सुप्तचैत्रस्वरूपसुखेन जाग्रतो मैत्रस्य च पुरुषार्थप्रसंगाच। नापि सुखापरोक्ष्यं पुरुषार्थः। ईश्वरादीनामस्मदादिसुखदुःखापरोक्ष्येणार्थानर्थनिप्रसंगात्। एतेन उपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात्सुखमप्युपलब्धमेव पुरुषार्थो न तु

---

परकीयं न परकीयमपरकीयमित्यर्थः। उक्तं दूषणं स्मारयति ॥ तथेति ॥ अपरकीयं सुखं स्यादितीच्छाभावादित्यर्थः ॥ गौरवादिति ॥ स्वकीयसुखत्वापेक्षया अपरकीयसुखत्वस्य पुरुषार्थतावच्छेदकस्याभावघटितत्वेन गुरुत्वादित्यर्थः। असति बाधके दृष्टप्रकारानुसरणमेव न्याय्यमित्याह ॥ सुखसाधन इति ॥ सुखसाधने कुंकुमादौ ॥ परकीयेऽपि ॥ वस्तुतः परकीयेऽपि स्वकीये(यद्वितर्कत्वादिनिमित्तेन)। स्वकीये स्वसंबंधिनि पुरुषार्थत्वस्य दर्शनेन अपरकीयेऽपि परासंबंधिन्यपि, अपरकीये स्वसंबंधिनि फणिफणमण्यादावपुरुषार्थत्वस्य दर्शनेनेष्टत्वाविशेषात् पुरुषार्थत्वाविशेषात् साधन इव सुखेऽपि तत्कल्पनात् स्वकीयतयैव पुरुषार्थत्वकल्पनादित्यर्थः। अत्रसुखसाधन इत्यादिना दर्शनेनेत्यंतेन सनिदर्शनमन्वयव्यतिरेकव्याप्त्योरिष्टत्वाविशेषादित्यनेन हेतोः, सुखेऽपीत्यनेन पक्षस्य तत्कल्पनादित्यनेन साध्यस्य चोक्त्या "विमतं सुखं स्वसंबंधितया पुरुषार्थः इष्टत्वात् यः पुरुषार्थः सः स्वसंबंधितयैव पुरुषार्थः यथा कुंकुमादिकम्। यः स्वासंबंधी स न पुरुषार्थः। यथा फणिफणमण्यादिकम्" इति प्रयोगो विवक्षित इत्यवगंतव्यम्। प्रतिबन्धभिप्रायेणाह ॥ दुःखेति ॥ तथैव स्वकीयत्वेनैव। अन्यथा दुःखस्याप्यपरकीयत्वेनैव पुरुषार्थत्वोपपत्तौ सुखस्येवात्मस्वरूपत्वं स्यात्। आनंदं ब्रह्मेति सुखस्यात्मस्वरूपत्वं प्रमितं चेत् सर्वं खल्विदं ब्रह्मेति दुःखस्याप्यात्मस्वरूपत्वं प्रमितमिति समम्। चिदिष्यात्मप्रमितत्वं चाप्रयोजकम्। अन्यथा यज्ञदत्तो ब्राह्मणः, पक्वे च ब्राह्मण इत्यागमप्रमितत्वेन यज्ञदत्त इव विष्णुमित्रादौ चिदिष्यात्मप्रमितत्वात् ब्राह्मण्यं न सिध्येत्। अपरिचितविष्णुमित्र मतांतरेऽपि तत्सिद्धेरनपवादत्वात्। नेह नानेत्यादिनिषेधः सुखेऽपि समः। अनतिरिक्तस्य न निषेध इति परिहारो दुःखेऽपि सम इति दुःखप्रतिबंदी युक्तेति भावः। एवं सुखस्य स्वकीयत्वेनैव पुरुषार्थत्वं प्रसाध्य परकीयत्वेन पुरुषार्थत्वे बाधकं चाह ॥ त्वन्मत इति ॥ अत्र संसारिणं प्रति मुक्तस्य, जाग्रन्मैत्रं प्रति सुप्तचैत्रस्य च वस्तुतः परत्वाभावात् तत्स्वरूपसुखस्यापरकीयत्वं बोध्यम्। तृतीयपक्षं निराकरोति ॥ नापीति ॥ कुतो नेत्यत आह ॥ ईश्वरादीनामिति ॥ आदिशब्देन योगिनो गृह्यंते। चिदात्मकसुखमतमनूद्य निराकरोति ॥ एतेनेति ॥ अनात्मसुखवादाभिमतानां विमतं सुखमुपलब्धमेव पुरुषार्थः, पुरुषार्थ-

स्वसंबद्धं गौरवात्। संबंधस्त्वनित्यत्वसाधनपारतंत्र्यादिवदवर्जनीयसंनिधिरिति विवरणोक्तं प्रत्युक्तम्। परकीयसुखसाधनस्योपलभ्यमानस्याप्यपुरुषार्थत्वात्। सुखं मे स्यादिति संबंध इवा-नित्यत्वादौ प्रार्थनाभावाच्च। नाप्यपरकीयस्य सुखस्य साक्षात्कारः पुरुषार्थः। सुखस्वरूप-सुखसाक्षात्कारादिना ईश्वरादेः पुरुषार्थप्रसंगात्। किंच अपरकीयसुखसाक्षात्कारो न तावत्स्वसंबद्धः स्वस्य पुरुषार्थः। मुक्तस्य सुखसाक्षात्काररूपतया तं प्रत्यपि तस्यापुरुषार्थत्वा-पत्तेः। नाप्यपरकीयसुखसाक्षात्कारः स्वेतरासंबद्धः स्वस्य पुरुषार्थः। मुक्तस्वरूपेण सुखानु-भवेन संसारीतरासंबद्धेन संसारिणः पुरुषार्थप्रसंगात्। नाप्यपरकीयसुखानुभवरूपता पुरुषार्थः। तादृशेच्छायाः कदाप्यदर्शनात्। एतेन प्रत्यक्प्रदृश्यमानमनतीतं सुखं पुरुषार्थ इत्यानंदबोधोक्तं निरस्तम्। प्रत्यक्शब्देन स्वरूपत्वस्य स्वकीयत्वस्यापरकीयत्वस्य वा विवक्ष-णीयत्वात्। तस्य च दूषितत्वात्। अपिच सुखत्वेन सुखसाक्षात्कारः पुरुषार्थः। न च

---

स्यात् सुखसाधनवदिति प्रयोगोऽनुसंधेयः। गौरवात् उपलभ्यतया पुरुषार्थत्वापेक्षया स्वसंबंध-तयोपलभ्यतया च पुरुषार्थत्वे गौरवादित्यर्थः। ननु विद्यमानस्य संबंधस्य कुतो न पुरुषार्थकोटौ प्रवेश इत्यत आह ॥ संबंधस्त्विति ॥ तत्र विद्यमानत्वमात्रेण संबंधस्य पुरुषार्थकोटौ प्रवेशे अनित्यत्वादेरपि तत्प्रवेशः स्यात्, इति प्रतिबंदिसूचनार्थमनित्यत्वादिदृष्टांतोपादानम्। अस्मिन्पक्षे एतच्छब्देन परामृष्टेश्वरादीनामस्मदादिसुखदुःखोपलब्धिसद्भावेनार्थानर्थप्रसंग इति पूर्वोक्तातिप्रसंग एको दोषः, अतः सुखसाधनस्य स्वसंबंधितयोपलभ्यमानस्यैव पुरुषार्थत्वात् सुखस्यापि तथैव पुरुषार्थत्वं वाच्यम्। तच्च मुक्तौ परस्य न युक्तमिति भावः। अनित्यत्वादि-प्रतिबंदीमुखरयति ॥ सुखं म इति ॥ सुखं मे स्यादिति यद्वत्स्वसुखसंबंधे प्रार्थनावदनित्यं साधन(परतन्त्रं)पारतन्त्र्यं वा सुखं स्यादित्यनित्यत्वादौ प्रार्थनाभावात्संबंधवदनित्यत्वादेरपि पुरुषार्थप्रवेशः स्यादिति प्रतिबंधनवकाश इति भावः। चतुर्थपक्षं दूषयति ॥ नाप्यपरकीयेति ॥ मुक्तस्येश्वरभावापत्तया तत्स्वरूपसुखसाक्षात्कारस्येश्वरं प्रत्यपरकीयत्वादितिभावः। सामान्या-कारेण दूषितं चतुर्थपक्षं विशेषाकारेणापि दूषयति ॥ किंचेति ॥ तं प्रत्यपि मुक्तं प्रत्यपि तस्य सुखसाक्षात्कारस्याप्यपुमर्थत्वापातात्। स्वसंबद्धत्वाभावादित्यर्थः। संसारीतरो मुक्तस्तदसंबद्धेन। तादृशेच्छायाः अयं सुखानुभवः स्यामितीच्छायाः। प्रकारांतरेणाप्युक्तविकल्पदूषणान्यतिदिशति ॥ एतेनेति ॥ अतीतसुख(अपुमर्थत्वात्(वा)स्यापुरुषार्थत्वादनतीतमित्युक्तम्। तस्य च दूषितत्वा-दिति। उक्तलक्षणसुखस्येच्छाभावेन, स्वरूपत्वस्य स्वरूपत्वेन स्वकीयत्वस्य। मुक्तस्वरूप-

परमते न मोक्षोऽस्ति। एतेन परमते दुःखाभावस्य तदपरोक्षस्य वा पुरुषार्थत्वं निरस्तम्। तस्मादहं सुखीति स्वसंबंधिसुखानुभवः स्वस्य पुरुषार्थः। स च परमते नेति न मोक्षः पुरुषार्थः। किंचायं मोक्षः कस्य पुरुषार्थः। किमहमर्थस्य किंवा चिन्मात्रस्य। त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात्। नांत्यः। अहं मुक्तः स्यामितीच्छावच्चिन्मात्रं मुक्तं स्यादितीच्छाया अदर्शनात्। उक्तं चैतदहमर्थस्यानात्मत्वभंगे। किंच सुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुमर्थता। अतिरेके सद्वितीयत्वम्। अपिचात्मनः सुखमात्रत्वे प्रकाशमात्रत्वे च

---

वेद्यत्वापुरुषार्थत्वादिप्रसंगेनापरकीयत्वस्य सूचितत्वादित्यर्थः। सुखप्रकाशः पुरुषार्थ इतिपक्षे मोक्षस्य पुरुषार्थत्वमेव न संभवतीत्याह ॥ अपिचेति ॥ सुखत्वेन सुखप्रकाशः पुरुषार्थः, न तु यथाकथंचित्सुखप्रकाशमात्रम्। तथात्वे प्रमेयत्वादिना तत्प्रकाशमादायापि पुरुषार्थत्वापातादितिभावः। स च सुखत्वेन सुखप्रकाशः, परमते न मोक्षेऽस्ति। परैर्मोक्षस्य निर्विशेषात्ममात्रत्वांगीकारादितिभावः। एवं सुखस्य पुरुषार्थत्वं निराकृत्य दुःखाभावस्यापि तन्निराकरोति ॥ एतेनेति ॥ एतेन सुखस्य पुरुषार्थत्वनिरासप्रकारसूचनेन। अयमत्र तन्निरासप्रकारः। न तावद्दुःखाभावात्मना पुरुषार्थः। निर्दुःखः स्यामितीच्छावत् दुःखाभावः स्यामितीच्छायाः अभावात्। नाप्यपरकीयो दुःखाभावः पुरुषार्थः। अपरकीयदुःखाभावः स्यादिति इच्छायाः अभावात्। स्वकीयदुःखाभावत्वापेक्षया अपरकीयदुःखाभावत्वस्याभावद्वयघटितत्वेन गुरुत्वाच्च। नापि दुःखाभावसाक्षात्कारः पुरुषार्थः। ईश्वरादीनामस्मदादिदुःखाभावसाक्षात्कारेणानर्थप्रसंगात्। नाप्यपरकीयो दुःखाभावसाक्षात्कारः पुरुषार्थः। मुक्तस्वरूपदुःखाभावसाक्षात्कारादीश्वरादेः पुरुषार्थत्वप्रसंगात्। परकीयदुःखाभावसाक्षात्कारो न तावत्स्वसंबद्धः स्वस्य पुरुषार्थः मुक्तस्य दुःखाभावात् साक्षात्काररूपतया तं प्रत्यपि तस्यापुरुषार्थत्वप्रसंगात्। नाप्यपरकीयदुःखाभावसाक्षात्कारः स्वैतत्संबद्धः स्वस्य पुरुषार्थः। मुक्तस्वरूपेण दुःखाभावसाक्षात्कारेण संसारीतरसंबंधेन संसारिणः पुरुषार्थप्रसंगात्। नाप्यपरकीयदुःखाभावानुभवात्मता पुरुषार्थः। तादृशेच्छायाः अदर्शनात्। अपि च दुःखाभावत्वेन दुःखाभावसाक्षात्कारः पुरुषार्थः। स च परमते न मोक्षेऽस्तीत्युपलक्षयति ॥ तस्मादिति। परमतेनेति ॥ अस्ति चेत्सविशेषत्वं स्यात् इत्यर्थः ॥ मुक्त्यनन्वयादिति ॥ अहमर्थस्यानात्मत्वादित्यर्थः ॥ इच्छाया अदर्शनादिति ॥ इच्छानुसारेणैव पुरुषार्थस्य व्यवस्थापनादित्यर्थः। अपुमर्थता। अतिरिक्तसुखाभावात्। अतिरेके सुखस्य दुःखाभावातिरिक्तत्वे। सद्वितीयत्वम्। तेन मोक्षान्वयिनोः परस्परातिरिक्तयोः सुखदुःखाभावयोरन्यतरस्याप्यात्मातिरिक्तत्वेनैकस्यात्मातिरिक्तस्य सद्भावेन सद्वितीयत्वं स्यादित्यर्थः ॥ अपि चात्मन इति ॥

सुखप्रकाशाभावेनापुमर्थत्वम्। उभयात्मकत्वे चाखंडत्वहानिः। किंच दुःखाभावस्य सुखस्य च तत्वतो दुःखाद्भेदेऽपसिद्धांतः। अभेदे त्वपुमर्थता। किंच स्वप्रकाशस्य सुखस्य स्वतःस्फुरणेऽपि दुःखाभावस्यास्फुरणादपुमर्थतेति दिक्।

॥ इति निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥ ३ ॥

---

सुखमात्रत्वे इति प्रकाशत्वम्, प्रकाशमात्रत्वे इति सुखत्वं व्यवच्छिद्यते। एवंचात्मनः सुखमात्रत्वे प्रकाशस्य प्रकाशमात्रत्वे सुखस्याभावात् सुखप्रकाशाभावेनापुरुषार्थत्वं स्यादित्यर्थः। उभयात्मकत्वे सुखप्रकाशोभयात्मकत्वे। अपसिद्धांतः। परमते तात्विकभेदानंगीकारादित्यर्थः। अभेदे तत्वतोऽभेदे। अपुमर्थता तत्वतो दुःखाभिन्नस्य पुरुषार्थत्वायोगात्। नच कल्पितभेदेन पुरुषार्थता। मोक्षे कल्पितभेदाभावादित्यर्थः। इति दिक् इति दूषणमार्गः। अनेनैव मार्गेण दूषणांतराण्यपि सुखादेरात्ममात्रत्वे असाध्यत्वम्, अतिरेके सद्वितीयत्वमित्यादीनि स्वयमूहनीयानीत्यर्थः।

॥ इति निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥ ३ ॥

## ॥ अथ जीवन्मुक्तिभङ्गः ॥ ४ ॥

यथोच्यते तत्त्वसाक्षात्कारेण नष्टाविद्योऽनुवृत्तदेहादिप्रतिभासश्च जीवन्मुक्तः। नच तत्त्वज्ञानादविद्यानाशे सद्यः शरीरादि निवर्ततेति वाच्यम्। चक्रभ्रमणवद्भयकम्पादिवच्चाविद्यासंस्कारादपि तदनुवृत्तेः। नच क्रियाज्ञानयोरेव संस्कारः। निःसारितपुष्पायां तत्पुटिकायां पुष्पवासनादर्शनात्। विमतो नाशः संस्कारव्याप्यः संस्कारनाशान्यत्वे सति नाशत्वात्। ज्ञाननाशवदित्यनुमानाच्च। संस्कारः कार्योऽपि ध्वंस इव निरुपादानः। अविद्येव च शुद्धात्माश्रित इति नाविद्यापेक्षः। संस्कारनिवृत्तिश्चाऽऽवृत्ततत्त्वसाक्षात्कारात्। यद्वा अविद्यालेशानुवृत्त्या तदनुवृत्तिरिति।

---

## ॥ अथ जीवन्मुक्तिभङ्गः ॥ ४ ॥

तदेवं परमते परममुक्तिं निराकृत्य जीवन्मुक्तिमपि निराकर्तुं तदभिमतं जीवन्मुक्तिस्वरूपमनुवदति ॥ यथोच्यत इत्यादिना ॥ तत्र नष्टाविद्य इति संसारिणः, अनुवृत्तदेहादिप्रतिभास इति परममुक्तस्य व्यवच्छेदः ॥ भ्रमणवदिति ॥ यथा भ्रमणक्रियायां निवृत्तायामपि तत्संस्काराच्चक्रभ्रमणानुवृत्तिः, यथा च सर्पाविज्ञाने निवृत्तेऽपि तत्संस्काराद्भयकम्पाद्यनुवृत्तिस्तथा अविद्यायां निवृत्तायामपि तत्संस्कारात् शरीराद्यनुवृत्तिर्युक्ता। अतो नोक्तदोष इत्यर्थः। ननु क्रियाज्ञानयोरेव संस्कारो दृश्यते। नान्यस्य। अतः कथं तद्व्यतिरिक्ताया अविद्यायाः संस्कार इत्याशङ्क्य निराकरोति ॥ नचेति ॥ कुत इत्यत आह ॥ निस्सारितेति ॥ अतः क्रियाज्ञानयोरेवेति नियमाभावात् अविद्याया अपि संस्कारो युक्त इति भावः। विमतो नाशः अविद्यानाशः। हेतौ नाशत्वादित्येवोक्ते संस्कारनाशे व्यभिचारः। तस्यापि संस्कारव्याप्यत्वेऽनवस्थाप्रसङ्गेन तत्र संस्कारव्याप्यत्वाभावात्। तत्परिहाराय संस्कारनाशान्यत्वे सतीति विशेषणम्। घटादिनाशः पक्षसम इति न तत्र व्यभिचारशङ्केति भावः। ननु जीवन्मुक्तिदशायां अविद्यासंस्काराङ्गीकारे तस्याविद्योपादानकत्वेनाविद्याकार्यत्वादविद्याविशिष्टात्माश्रितत्वेन अविद्यां विनाऽनुपपत्त्याऽविद्यापि स्यादिति जीवन्मुक्तिव्याघात इत्याशङ्क्याह ॥ संस्कार इति ॥ नन्वविद्यानिवर्तकतत्त्वसाक्षात्कारेणाविद्यावत्तत्संस्कारोऽपि निवृत्त एवेति कुतो देहाद्यनुवृत्तिः तदनिवृत्तौ निवर्तकान्तराभावेन सदापि तदनुवृत्तेः परममुक्त्यनवकाश इत्यत आह ॥ संस्कार-

अत्र ब्रूमः । न तावत्संस्कारपक्षो युक्तः । भावकार्यमध्यस्तं संस्कारं देहादिकं तद्धेतुप्रारब्धकर्मादिकं च प्रत्युपादानत्वेनाज्ञानानुवृत्त्यापातात् । सर्पादिभ्रमसंस्कारस्तु सत्यो नत्वज्ञानोपादानकः । पूर्वसाक्षात्कारानिवृत्तस्याध्यस्तस्य तदनधिकविषयेणाऽऽवृत्तेनाप्युत्तरेण ज्ञानेन निवृत्त्यदर्शनाच्च । जीवन्मुक्तस्याविद्यावरणाभावेन तदा निरतिशयानंदस्फूर्त्यापाताच्च । संस्कारस्तु नावरणमिति त्वयैवोक्तम् । एतेन तत्वे ज्ञातेऽपि द्विचंद्रादिवद्दोषाद्बाधितानुवृत्तिरिति निरस्तम् । तत्रैवात्र तत्वज्ञानानिवर्त्यदोषाभावात् ।

---

निवृत्तिश्चेति ॥ तत्त्वसाक्षात्कारेण निर्दोषाविद्यानिवृत्तौ तदुपादानसंस्कारानुवृत्तिरुपपन्ना । तदुपपादनाय तस्याविद्यानुपादानकत्ववचनमपि न पण्डितहृदयमधिरोहतीत्यस्वरसादुक्तं तृतीयं पक्षान्तरमनुवदति ॥ यद्वेति ॥

दूषयितुं प्रतिजानीते ॥ अत्र ब्रूम इति ॥ तत्र प्रथमपक्षं दूषयति ॥ न तावदिति ॥ कुतो नेत्यत आह ॥ भावकार्यमिति ॥ कार्यत्वेऽपि अभावत्वेन ध्वंसवन्निरुपादानत्वशङ्कानिरासायाभावपदम् । भावत्वेऽप्यविद्यावदकार्यत्वेन निरुपादानत्वशङ्कानिरासाय कार्यपदम् । भावकार्यत्वेऽप्यज्ञानान्योपादानकत्वशङ्कानिरासायाध्यस्तपदम् । देहादिकमित्यत्रादिशब्देनेन्द्रियादिकं गृह्यते । प्रारब्धकर्मादिकमित्यत्र तु सुखदुःखादिकमिति बोध्यम् ॥ अज्ञानानुवृत्त्यापातादिति ॥ उपादाननिवृत्तौ तत्कार्यानुवृत्त्ययोगादिति भावः । ननु रज्ज्वादितत्त्वसाक्षात्कारेण तदज्ञाननिवृत्तावपि सर्पादिभ्रमसंस्कारानुवृत्तिवत् निवृत्तायामप्यविद्यायां तत्संस्कारानुवृत्तिः किं न स्यादित्यत आह ॥ सर्पादिभ्रमसंस्कारस्त्विति ॥ न त्वज्ञानोपादानकम् । अतो दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः । यदुक्तमावृत्तात्तत्त्वसाक्षात्कारादविद्यासंस्कारनिवृत्तिरिति तद्दूषयति ॥ पूर्वसाक्षात्कारेति ॥ तदनधिकविषयेण पूर्वसाक्षात्कारानधिकविषयेण ॥ तस्यादर्शनादिति ॥ अन्यथा इदं रजतमित्यादिभ्रमस्थले इदं प्रमेयमिति ज्ञानेनानिवृत्तस्यापि रजतादिभ्रमोपादानाज्ञानादेस्तदनधिकविषयेणावृत्तेनेदं प्रमेयमिति ज्ञानेन निवृत्तिः स्यात् । तथा चाविद्यासंस्कारस्य निवर्तकत्वाभावेन सर्वदानुवृत्तौ परममुक्त्यनवकाशः स्यात् । पूर्वसाक्षात्कारेणैव तन्निवृत्तौ च तदनुवृत्तिनिबन्धनशरीराद्यनुवृत्त्ययोगः । एवञ्च जीवन्मुक्तिलक्षणमसमञ्जसमिति भावः । अविद्याभावेऽपि तत्संस्कारस्यावरणस्य सत्त्वात्तु जीवन्मुक्तस्य निरतिशयानन्दस्फूर्तिरित्यत आह ॥ संस्कारस्त्विति ॥ अविद्यासंस्कारस्त्वित्यर्थः ॥ त्वयैवोक्तमिति ॥ प्रमाणज्ञानमित्यविद्यानुमाने स्वविषयावरणविनाशकं प्रयुञ्जानेन त्वयैवोक्तप्रायमित्यर्थः । एतेन अविद्यासंस्कारनिरासेन । तत्त्वे निष्प्रपञ्चात्मतत्त्वे ज्ञातेऽपि ॥ द्विचन्द्रादिवदिति ॥ यथा चन्द्रैकत्वे ज्ञातेऽपि अङ्गुल्यवष्टम्भादिदोषात् बाधित

लेशपक्षेऽपि न तावल्लेशोऽवयवः। अज्ञानस्य निरवयवत्वात्। एतेनाविद्यैव दग्धपटन्यायेन कंचित्कालं तिष्ठतीति निरस्तम्। निरवयवे दग्धपटन्यायासंभवात्। अनुवृत्तस्य ज्ञानानिवर्त्यत्वेन सत्त्वापाताच्च। अथ मतं लेशो नामाऽऽकारः। "इंद्रो मायाभिः" इत्यादिश्रुत्या अविद्याया अनेकाकारत्वेन प्रपंचे परमार्थसत्त्वादिभ्रमहेत्वाकारनिवृत्तावपि देहाद्यपरोक्षप्रतिभासहेत्वाकारोऽनुवर्तते। विरोधिनि तत्त्वज्ञाने सत्यपि तदनुवृत्तिश्चाऽऽरब्धकर्मभिर्ज्ञानप्रतिबंधात्। कर्मानुवृत्तिश्च तद्धेत्वज्ञानलेशानुवृत्तेः। उक्तं च

---

द्विचन्द्राद्यनुवृत्तिः तद्वदविद्यासंस्कारलक्षणदोषात् बाधितदेहाद्यावृत्तिरिति निरस्तमित्यर्थः। कुत इत्यत आह ॥ तत्रेति ॥ यथा तत्र द्विचन्द्रादिभ्रमस्थले चन्द्रैकत्वादितत्त्वज्ञानानिवर्त्यो द्विचन्द्रादिभ्रमानुवृत्तिप्रयोजकः अङ्गुल्यवष्टम्भादिदोषोऽस्ति तथात्र जीवन्मुक्त्यवस्थायां देहादिभ्रमानुवृत्तिप्रयोजकस्यात्मतत्त्वज्ञानानिवर्त्यस्य दोषस्याभावात् अविद्यासंस्कारस्य निरस्तत्वादित्यर्थः। अथाप्यविद्यासंस्काररूपलेशस्य(स्तोऽनु)मनुवर्तत इति भ्रान्तिनिरासायाह ॥ लेशपक्षेऽपीति ॥ अत्र लेशो अवयवो वा आकारो वेति द्वेधा विकल्प्याद्यं दूषयति ॥ न तावदिति ॥ एतेन निरवयवत्वेन ॥ दग्धपटन्यायेनेति ॥ यथा दग्धपटः किञ्चित्कालं तादृगवयवसंस्थानानुवृत्त्या अनुवर्तते तथेत्यर्थः ॥ निरवयव इति ॥ सावयवालम्बनत्वात् दग्धपटन्यायस्येत्यर्थः। सावयवालम्बनत्वनियममनङ्गीकुर्वाणं प्रत्याह ॥ अनुवृत्तस्येति ॥ अनुवृत्तस्य ज्ञानानन्तरमपि दग्धपटन्यायेनानुवृत्तस्याज्ञानस्य ॥ ज्ञानानिवर्त्यत्वेनेति ॥ पूर्वज्ञानान्निवृत्तावनुवृत्त्ययोगात्तदुत्तरज्ञानान्निवृत्तेर्निरस्तत्वादिति भावः ॥ सत्त्वापातादिति ॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्यापि ज्ञाननिवर्त्यत्वव्याप्यतया तदभावे तस्या अनुपपन्नत्वादिति भावः। इदञ्च दूषणं संस्कारपक्षेऽपि बोध्यम्। किञ्चोक्तरीत्या ज्ञानस्याविवर्तकत्वात् स्वतो निवृत्तेर्निरस्तत्वात् आत्मनः उदासीनतया किञ्चिदपि अप्रवर्तकत्वात् तदतिरिक्तस्य सर्वस्य ज्ञानेन निवृत्ततया निवर्तकान्तराभावात् दग्धपटन्यायेनानुवृत्तस्य (आवृतस्य) अज्ञानरूपस्यकार्येण देहादिप्रतिभासेन सह सर्वदानुवृत्तौ परममुक्त्यनवकाशः, पूर्वज्ञानेनैव तन्निवृत्तौ तु देहाद्यनुवृत्त्ययोगात् जीवन्मुक्त्ययोग इति दूषणप्रकाराद्यनुसंधेयम्। द्वितीयपक्षमाशङ्कते ॥ अथेति। अनेकाकारत्वेनेति ॥ श्रुतौ मायाभिरिति बहुवचनप्रयोगादिति भावः ॥ निवृत्तावपि ॥ तत्त्वज्ञानेनेति शेषः। ननु विरोधिनि तत्त्वज्ञाने सत्याकारान्तरस्यैवास्त्वाकारस्य निवृत्त्यवश्यंभावात् कथं तदनुवृत्तिरित्यत आह ॥ विरोधिनीति ॥

ननु तत्त्वज्ञानेनाज्ञाने निवृत्ते सति कर्मानुवृत्तिरेव कथं येन तस्य प्रतिबन्धकता स्यादित्यत आह ॥ कर्मानुवृत्तिश्चेति ॥ उक्तमर्थं संवादयति ॥ उक्तञ्चेति ॥ स्वार्थोऽयं

"अविद्यालेशशब्देन मोहाकारांतरोक्तितः ।
ज्ञानस्य प्रतिबंधाच्च प्रबलारब्धकर्मभिः ॥" इत्यादि ।
आकारिनिवृत्तावप्याकारस्यानुवृत्तिर्व्यक्तिनिवृत्तावपि जातेरिव युक्तेति ।

तत्राऽऽकारो जातिशक्त्यादिरूपो धर्मो वा स्वर्णस्य कुंडलादिरिवावस्थाविशेषो वा अज्ञानव्यक्त्यंतरं वा । नाद्यद्वितीयौ । तयोर्देहादिभ्रमोपादानत्वेऽविद्यात्वापातात् । अनुपादानत्वे चोपादानांतराभावेन देहादिभ्रमायोगात् । आत्मान्यत्वेन ज्ञाननिवर्त्यत्वेन च तयोरविद्यातत्कार्ययोरन्यतरत्वावश्यंभावेनाज्ञाने निवृत्ते स्थित्ययोगाच्च । धर्मे उपादानत्वस्यावस्थायां चावस्थावंतं विना स्थितेरयोगाच्च । न तृतीयः । अज्ञानैक्यपक्षे तदयोगात् । तद्भेदपक्षेऽपि व्यक्त्यंतरं पूर्वाज्ञानादधिकविषयं न वा । नाद्यः । निर्विशेषे तदयोगात् । नांत्यः । एकस्मिन्नपि विषये यावंति ज्ञानानि तावंत्यज्ञानानीतिमतस्य प्रतिकर्मव्यवस्थाभंगे दूषितत्वात् । चरमसाक्षात्कारान्यूनविषयसाक्षात्कारस्य पूर्वमपि सत्त्वे पश्चादिव जीवन्मुक्तावपि तदज्ञानहेतुकाभ्यासायोगाच्च । नच पूर्वज्ञानस्य कर्मणा प्रतिबंधादज्ञानानिवर्तकतेति युक्तम् । ज्ञानस्य

---

श्लोकः । नन्वाकारिण्यज्ञाने निवृत्ते तदाकारापरनामकवृत्तिलेशानुवृत्तिरपि कथमित्यत आह ॥ आकारनिवृत्तावपीति ॥ जातेरिव जातेरनुवृत्तिरिव । इमं पक्षं दूषयितुं पृच्छति ॥ तत्राकार इति ॥ तयोर्जात्यादिधर्मावस्थाविशेषयोः ॥ भ्रमोपादानत्वे अविद्यात्वापातादिति ॥ भ्रमोपादानत्वस्य अविद्यालक्षणत्वात् । तथाच नष्टाविद्यत्वाभावेन जीवन्मुक्तित्वासम्भव इति भावः ॥ देहादिभ्रमायोगादिति ॥ तथाचानुवृत्तदेहादिप्रतिभासस्याभावेन जीवन्मुक्तित्वासम्भव इति भावः । आत्मान्यत्वेनेत्यत्र असदन्यत्वेनेत्यपि ग्राह्यम् । आत्मान्यत्वेऽप्यध्यस्तताविद्यायाम्यतरत्वाभावात् । एतानि दूषणानि संस्कारपक्षेऽपि योज्यानि । धर्मे जात्यादिरूपधर्मे । तदयोगात् वृत्त्यवस्थायोगात् । तदयोगात् अधिकविषयत्वायोगात् ॥ दूषितत्वादिति ॥ एकया वृत्त्या किं सर्वज्ञानानां निवृत्तिः उतैकतरज्ञानस्येत्यादिना दूषितत्वादित्यर्थः ॥ पूर्वमपि सत्त्व इति ॥ अन्यथा चरमसाक्षात्कारस्य पूर्वसाक्षात्कारादधिकविषयत्वापत्त्या ज्ञानः सविशेषत्वं स्यादिति भावः । पश्चादिव चरमसाक्षात्कारात्पूर्वमिव । अभ्यासायोगात् । अन्यथा पूर्ववत् पश्चादपि अभ्यासप्रसङ्गादिति भावः ॥ प्रतिबन्धायोगादिति ॥ अन्यथा जानेऽपि न जानामीति कदाचित् व्यवहारापातादिति भावः । तदनुवृत्तौ कर्मानुवृत्तौ ॥ भूय इति ॥ श्रवणादित्यादिभूयःशब्दस्य पुनरर्थकत्वात् । "भूयश्चान्ते" (इत्युक्तवाक्ययाज्ञवल्क्यतया) भुञ्जते तेन मायानिवृत्त्यनन्तरं पुनर्मायावृत्त्यवगमात् तस्याश्च प्रतियोगिभूताविद्यालेशानुवृत्तिः

स्वप्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽपि प्रतिबंधायोगात्। स्थिते लेशे कर्मानुवृत्तिस्तदनुवृत्तौ च ज्ञानस्य प्रतिबंधेन लेशस्थितिरित्यन्योन्याश्रयाच्च। नच "भूयश्चांते विश्वमायानिवृत्तिः" इत्यत्र भूय इतिश्रवणात् लेशानुवृत्तेर्मानांतरेणाधिगमाच्च ज्ञप्तावन्योन्याश्रय इतिवाच्यम्। तथापि स्थितावन्योन्याश्रयात्। श्रुतौ च भूयोयोऽननादित्यन्वयः। एतेन ब्रह्मज्ञानस्याप्रायणमनुवृत्तिहेतुज्ञानार्थयज्ञादिकर्मभिः प्रतिबंध इतिनिरस्तम्। प्रतिबंधायोगादेरुक्तत्वात्। अन्यथा शुक्तिज्ञानमपि तदज्ञानकार्येण भ्रमादिना उत्तरं ब्रह्मज्ञानमप्यारब्धकर्मणा प्रतिबध्येत। तदा भोगेन कर्म क्षीणमिति चेत् न। भोगैकनाश्यत्वे ज्ञानानिवर्त्यत्वेन सत्त्वापातात्।

एतेनाज्ञानस्यानेकशक्तित्वेनारब्धकर्मतत्कार्यतराध्याससंपादनशक्तिमात्रस्य वा प्रपंचे पारमार्थिकसत्यत्वादिभ्रमहेतुशक्तिमात्रस्य वा प्रतिबंधो लेशानुवृत्तित्वेन विवक्षित इति निरस्तम्। पूर्वज्ञानस्य शक्तिमात्रप्रतिबंधकत्वे तदनधिकविषयस्य चरमस्यापि तत्त्वापत्त्या कदाप्यज्ञानहान्यसिद्धेः।

तस्मात्परमते मोहकार्यत्वादखिलस्य च।
ज्ञानेन मोहनाशाच्च जीवन्मुक्तिर्न युज्यते॥

---

विनानुपपत्तेः तत्सिद्धिरिति श्रौतार्थापत्तिरूपमानान्तरेणाविद्यालेशानुवृत्तेरधिगमादित्यर्थः। श्रुतावपि "भूयः" इत्यस्य पूर्ववाक्येनैवान्वयो नोत्तरवाक्येन, अतोऽर्थापत्तिरसिद्धेत्याह॥ श्रुतौ चेति॥ यद्वा अन्योन्याश्रयादिना, अविद्यालेशानुवृत्तिनिरासे अर्थापत्त्या तत्साधनमिति सत्प्रतिपक्षमेत्याशंक्याह॥ श्रुतौ चेति॥ अतो नार्थापत्त्यवकाश इति भावः। एतेन भोगार्थयज्ञादिकर्मप्रतिबन्धकनिरासेन आप्रायणं आजन्मान्तं ब्रह्मज्ञानस्यानुवृत्तिहेतुभूतानि यानि ज्ञानार्थानि यज्ञादिकर्माणि तैः प्रतिबंधः। प्रतिबन्धयोगादेरित्यादिशब्देनान्योन्याश्रयो ग्राह्यः। उक्तत्वात् ज्ञानस्य स्वप्रागभावज्ञानवत्त्वेति निवर्तकत्वेऽप्यविनोक्तत्वादित्यर्थः। अन्यथा तज्ज्ञानस्य तदज्ञानकार्येण प्रतिबन्धे। आरब्धकर्मणैवेत्यत्र तदज्ञानकार्येणेति योज्यम्॥ कर्म क्षीणमिति॥ कर्मण एवासत्त्वात् न तेन प्रतिबन्धशंकावकाश इति भावः॥ सत्त्वापातादिति॥ ज्ञानविवर्त्ये ज्ञाननिवर्त्यस्वरूपस्य तदाऽस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपस्य वा मिथ्यात्वस्य दुर्वचत्वादितिभावः। एतेनोत्तरब्रह्मज्ञानस्य पूर्वज्ञानानधिकविषयतया तस्यान्योन्याश्रयप्रतिपादनेनेत्यर्थः। आरब्धकर्मेत्यत्र मात्रपदेन आरब्धकर्मेतर कार्यतराध्यासस्यासन्मात्रत्वेनेतरकार्यव्यवच्छेदः। प्रपञ्चपारमार्थिकसत्त्वेत्यत्र मात्रपदेन प्रपञ्चस्वरूपभ्रमहेतुशक्तिव्यवच्छेदः। सत्यत्वादीत्यादिशब्देन मिथ्यात्वाभावो गृह्यते। तथात्वापत्त्या प्रतिबन्धकत्वापत्त्या। कदापि पूर्वज्ञानकाल इव चरमज्ञानकालेऽपि। उक्तमर्थं श्लोकबन्धेनोपसंहरति

अस्माकं तु अपरोक्षज्ञानिनोऽपि स्वयोग्यपरमानंदहेतुपरमकाष्ठापन्नभक्त्यभावे तत्साध्यस्य मोचकस्येश्वरप्रसादस्याभावेन प्रारब्धकर्मणा संसारानुवृत्त्या जीवन्मुक्तिः । भावे तु प्रसादस्यापि भावेन निःशेषदुःखनिवृत्तिविशिष्टस्वतोनीचोच्चभावापन्नस्वरूपानंदाविर्भावरूपा मुक्तिर्युक्तेति ।

॥ इति जीवन्मुक्तिभङ्गः ॥ ४ ॥

---

।तस्मादिति। जीवन्मुक्तिर्नयुज्यत इति ॥ मोहापरनामकाज्ञाननाशे तत्कार्यस्य देहादेरनुवृत्त्ययोगादिति भावः । नन्वज्ञाननिवृत्तिरेव मोक्ष इति वदतस्तवाप्यपरोक्षज्ञानेन सद्य एव देहादिनिवृत्तेः जीवन्मुक्त्ययोगः समः । तथाच

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे ॥"

इति न्यायादहं न पर्यनुयोज्य इत्याशंक्य न परमत इवास्मन्मते संसारः केवलाज्ञाननिबन्धनः येन ज्ञानेनाज्ञाननिवृत्तेः सद्य एव देहादिबन्धरूपसंसारनिवृत्तिः स्यात्। किन्त्वज्ञानकृताज्ञाननिमित्तकेश्वरकोपनिबन्धनः । अतस्तन्निवृत्तौ नाज्ञाननिवृत्तिमात्रेणालम् , किन्त्वपरोक्षज्ञानानन्तरभाविभक्तिविशेषसाध्येश्वरप्रसादोऽप्यपेक्षितः । अतस्तत्सम्पत्तिपर्यन्तमपरोक्षज्ञानिनोऽपि प्रारब्धकर्मणा संसारानुवृत्तिः। सत्यां च तत्सम्पत्तौ देहादिबन्धनिवृत्तिरविरुद्धेति नोक्तन्यायावकाश इत्याह ॥ अस्माकं त्विति ॥ काष्ठा उत्कर्षः। तत्साध्यस्य तद्दशाभक्तिसाध्यस्य । अत्र नित्यस्यापीश्वरप्रसादस्य भक्त्यनन्तरं प्राकट्यात् तत्साध्यत्वोक्तिः । भावे तु तादृशभक्तिसद्भावे तु ॥ स्वतो नीचोच्चभावापन्नेति मुक्तौ तारतम्यसाधनाय शङ्काबीजोत्थापनम् ।

॥ इति जीवन्मुक्तिभङ्गः ॥ ४ ॥

## ॥ अथ मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ५ ॥

ननु मुक्तौ न तारतम्यम् । मानाभावात् । "परमं साम्यमुपैति" इति साम्यश्रुतेश्च । सातिशयत्वे च मुक्तेः स्वर्गादिवदनित्यत्वं स्यात् । अधिकदर्शनेन दुःखद्वेषेर्ष्यादिकं च स्यादिति चेत् । उच्यते । मुक्तावतारतम्यं किं तत्र भेदभोगादेरेवासत्त्वात् । किंवा तत्सत्त्वेऽपि साम्यात् । नाद्यः । भेदप्रस्तावोक्तश्रुत्यादिभिस्तत्सिद्धेः । अंत्येऽपि किं मुक्तजीवेशयोरतारतम्यं किंवा मुक्तजीवानामेव । नाद्यः । त्वन्मतेऽपि तयोर्विभुत्वाणुत्वशेषित्वशेषत्वस्वातंत्र्यपारतंत्र्यादिना तारतम्यात् । अनेकेश्वरापत्त्या जगत्प्रवृत्त्ययोगाच्च । "अल्पशक्तिरसार्वज्ञम्" इत्यादिभेदप्रस्तावोक्तश्रुतिभिः,

"ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे ॥"

---

॥ अथ मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ५ ॥

स्वतो नीचोच्चभावेन्मुक्तमुक्तौ तारतम्यमसहमानः शंकते ॥ नन्विति ॥ न केवलं तारतम्ये मानाभावः । प्रत्युत तद्विरोधिप्रमाणमेवास्तीत्याह ॥ परमं साम्यमिति ॥ तारतम्ये बाधकं चाह ॥ सातिशयित्वे चेति ॥ सातिशयत्वयुक्तत्वे चेत्यर्थः । अन्यथा अणुत्वादिभ्यः परिमाणतः सातिशये नित्ये परमाण्वादावनैकान्त्यं स्यादिति मंतव्यम् ॥ अधिकदर्शनेनेति ॥ स्वतोऽधिकदर्शनेन स्वस्य दुःखादिकं स्यादित्यर्थः । शंकां परिहर्तुमारभते ॥ उच्यत इति ॥ अत्र मुक्तौ अतारतम्यं केनोच्यते, किमद्वैतिना, किं वा नैयायिकेन, अथवा रामानुजेन इति विकल्प्य क्रमेण दूषयति ॥ मुक्तावित्यादिना ॥ अतारतम्यं तारतम्याभावः । तत्र मुक्तौ ॥ भेदभोगादेरेवासत्त्वादिति ॥ भेदाभावः अद्वैतिमते । भोगाद्यभावो नैयायिकमते इति मंतव्यम् । भेदभोगादेरेवासत्त्वादित्यनेन मोक्षावस्थायामपि सूच्यते । विकल्पद्वये युगपद्दूषणमाह ॥ भेदप्रस्तावेति ॥ भेदप्रस्तावोक्तश्रुत्यादीनि च "द्वा सुपर्णा" इत्यादीनि द्रष्टव्यानि ॥ तत्सिद्धेरिति ॥ तस्य भेदभोगादेः सिद्धेरित्यर्थः । भोगसिद्धिश्च "रसं ह्येवायं लब्ध्वाऽनंदी भवति, शोकातिगो मोदते स्वर्गलोके" इत्यादिश्रुत्येति द्रष्टव्यम् । तृतीयविकल्पमपि विकल्प्य दूषयति ॥ अंत्येऽपीति ॥ तयोः मुक्तजीवेशयोः । त्वन्मतेऽपीत्यनेन मुक्तजीवेशयोस्तारतम्यानंगीकारे परस्यापसिद्धांत उक्तो भवति । एतदुत्तरत्रापि ज्ञेयम् ॥ जगत्प्रवृत्त्ययोगादिति ॥ अनेकेश्वरत्वे अन्योन्यसंप्रतिपत्त्यभावेन कस्यापि जगत्प्रवृत्त्यसंभवादिति भावः । जीवेश्वरतारतम्ये तारतम्यबोधकश्रुत्यादिविरोधमप्याह

इत्यादिस्मृतिभिः "जगद्व्यापारवर्जम्" इत्यादिसूत्रैः मुक्तजीवभोगः ईश्वरभोगान्निकृष्टः । जीवभोगत्वात्संसारिभोगवत् । एवं मुक्तजीवज्ञानादिकमपि पक्षीकृत्य प्रयोक्तव्यम् । ईश्वरानन्दो जीवानंदादुत्कृष्टः । तदवश्यतन्नियामकानंदत्वात् । यदेवं तदेवम् । यथा सेवकानंदात्सेव्यमानानंदः । ईश्वरो जीवस्वभावानंदादित उत्कृष्टस्वाभाविकानंदादिमान् । तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । यो यत्प्रेप्सुत्वे सति तत्र शक्तः स तद्वान् यथा संमत इत्याद्यनुमानैश्च विरोधाच्च । न द्वितीयः । त्वन्मतेऽपि जीवान्प्रति द्वेषिणोऽपि लक्ष्मी-तत्वात् तान्प्रतिनियामकाद्विष्वक्सेनादितश्चेतरजीवानां निकृष्टत्वात् । "सैषानंदस्य मीमांसा भवति । ते ये शतं मानुषा आनंदाः । स एको मनुष्यगन्धर्वाणामानंदः । श्रोत्रियस्य-चाकामहतस्य" इत्यादितैत्तिरीयश्रुत्या, "अथ ये शतं कर्मदेवानामानंदाः, स एक आजा-नजदेवानामानंदः । यश्च श्रोत्रियोऽवृजिनोऽकामहतः" इत्यादिवाजसनेयश्रुत्या, "अक्षण्वंतः कर्णवंतः सखायो मनोजवेष्वसमा बभूवुः" इत्याद्यैतरेयश्रुत्या,

नृपाद्याः शतधृत्यंता मुक्तिगा उत्तरोत्तरम् ।
सर्वैर्गुणैः शतगुणा मोदंत इति हि श्रुतिः ॥

---

॥ अल्पशक्तिरित्यादिना ॥ ब्रह्मेशानादिभिर्देवैर्यत्कैवल्यं स्वातंत्र्यं प्राप्तुं नैव शक्यते तत्कैवल्यं यस्य स्वभावः स केवलः स्वतंत्रो हरिर्भवानित्यन्वयः ॥ प्रयोक्तव्यमिति ॥ मुक्तजीवज्ञानबला-दिकं ईश्वरज्ञानबलादितो निकृष्टं, जीवज्ञानबलादित्वात्, संसारिजीवज्ञानबलादिवदिति प्रयोक्तव्यमित्यर्थः । मुक्तजीवानंदादेरीश्वरानंदादितो निकृष्टत्वसाधनेनैवार्थात्तस्योत्कृष्टत्वं सिद्धम् । साक्षादपि तत्साधयति ॥ ईश्वरानंद इति ॥ अत्र तदवश्यानंदत्वात् तन्नियामका-नंदत्वादिति हेतुद्वयम् ॥ जीवानंदादिति ॥ मुक्तजीवानंदादित्यर्थः । तेन संसार्या-नंदमादाय न सिद्धसाधनमिति ध्येयम् ॥ तदवश्यतन्नियामकानंदत्वादिति ॥ जीवत्वावच्छिन्नस्य वश्यः जीवत्वावच्छिन्नं प्रति नियामकश्च तस्यानंदत्वादित्यर्थः । हेतुद्वयेऽपि जीवानंदेऽनैकांत्य-परिहाराय तदवश्यत्वेन तन्नियामकविशेषणम् । न हि जीवः स्वावश्यः स्वनियामकश्च ॥ यदेवं तदेवमिति ॥ यो यदवश्यानंदो यन्नियामकानंदो वा स तदानंदादुत्कृष्टः इत्यर्थः । अस्य तारतम्यस्य वैषयिकानंदविषयत्वशंकानिरासाय (परिहाराय) स्वाभाविकस्वरूपानंदतारतम्यं साधयति ॥ ईश्वर इति ॥ अत्र हेतौ । तत्र तद्वत्सुप्राप्तो, शक्तोऽपि विरक्तः तद्वत्त्वादर्शनात् तत्प्रेप्सुत्वं सतीत्युक्तम् । तत्प्रेप्सोरप्यशक्तस्य तद्वत्त्वादर्शनात् तत्र शक्तत्वादित्युक्तम् इति ध्येयम् । संमतो

"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशांतात्मा कोटिष्वपि महामुने ॥"

इत्यादिस्मृतिभिः "वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवम्" इत्यादिसूत्रैरुक्तवक्ष्यमाणश्रुतितर्कानुगृहीतैः अस्मदादिमुक्तभोगः मुक्तचतुर्मुखभोगान्निकृष्टः । अस्मदादिभोगत्वात् । संसारस्थास्मदादिभोगवत् । एवमस्मदादिज्ञानादिकं च पक्षीकृत्य प्रयोक्तव्यम् । जीवस्वरूपानंदः परतंत्रानंदत्वसाक्षाद्व्याप्यधर्मेण सजातीयानंदप्रतियोगिकतारतम्यवान् । जीवानंदत्वात् । तदीयवैषयिकानंदवत् । प्रकृतिबंधनिवृत्तिः स्वसजातीयबंधनिवृत्त्याश्रयप्रतियोगिकतारतम्यवदाश्रिता । बंधनिवृत्तित्वात् । निगडबंधनिवृत्तिवदित्याद्यनुमानैश्च विरोधाच्च । स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन च संख्यापरिमाणकृतवैषम्याभावेऽपि जलक्षुधापानसुखयोरिव मधुरमधुरतरत्वादिवत्स्वरूपकृतवैषम्यं युक्तम् । प्रसिद्धं च सालोक्यादिमुक्तितः

---

यज्ञादिः । तान् प्रति जीवान् प्रति । शतश्रुतिर्ग्रन्था ॥ वृद्धिह्रासेति ॥ भक्तिज्ञानसाधनानंदवृद्धिह्रासैर्भाक्त्वं न्यूनाधिकभावः । तारतम्यं ब्रह्मादीनामधिकफलानामस्मदादीनां च भक्तत्वेऽन्तर्भावात्(वे)मोक्षाधिकारान्तर्भावात् । एवं भक्तितारतम्ये सत्येवेश्वरस्य उभयान् ब्रह्मादीनस्मदादीनुभयविधाधिकारिणः प्रति सामंजस्यादिति सूत्रार्थः । इत्याद्युक्तवक्ष्यमाणश्रुतितर्कानुगृहीतैः "सैषानंदस्य" इत्याद्युक्तश्रुतिभिः साधनवैषम्येऽपि साम्यसाम्ये वाधिकविधायकश्रुतेरनुपादेयत्वं फलसाम्ये चेश्वरस्य वैषम्यादिकं च स्यात्, इत्यादिवक्ष्यमाणतर्कैश्चानुगृहीतैरित्यर्थः ॥ एवमिति ॥ अत्र प्रयोगः पूर्ववत् स्पष्टः । पूर्वं वैषयिकानंदविषयशंकानिरासाय जीवस्वरूपानंदतारतम्यं साधयति ॥ जीवस्वरूपानंद इति ॥ भक्तिज्ञानादिसाधनानां वृद्धिह्रासभाक्त्वं न्यूनाधिकभावः तारतम्यं, ब्रह्मादीनामधिकफलानामल्पफलानामस्मदादीनां च भक्तत्वेऽन्तर्भावात् । एवं भक्तितारतम्ये सत्येवेश्वरस्योभयान् ब्रह्मादीनस्मदादीनुभयविधाधिकारिणः प्रति सामंजस्यादिति सूत्रार्थः । जीवानंदत्वादि मुक्तजीवानंदत्वादीत्यर्थः । तेन लोकस्थानंदमादाय न सिद्धसाधनमिति ध्येयम् ॥ तदधःपतनभियामकानंदात्वादिति ॥ जीवत्वाद्यवच्छिन्नव्यापकत्वः जीवस्वरूपसिद्धं प्रति विधायकश्च तस्यानंदत्वादित्यर्थः । ज्ञानवाक्यादिप्रयुक्तजीवोपाधिकजीवस्वरूपानंद इत्यर्थः । तेन सामान्यानंदांशे न बाध इति ध्येयम्(बोध्यम्) । वैषयिकानंदतारतम्यमादायार्थान्तरवारणाय स्वरूपेत्युक्तम् । पक्षादितारतम्यमादाय सिद्धसाधनता स्यादित्यत उक्तम् आनंदप्रतियोगिके(त्येति)ति । तदीयविजातीयवैषयिकानंदप्रतियोगिक(क)तारतम्यमादाय सिद्धसाधनमित्यत उक्तं सजातीयेति । आनंदत्वेन सजातीयवैषयिकानंदप्रतियोगि(क)तारतम्यमादाय सिद्धसाधनमित्यत उक्तम् ॥ परतंत्रानंदत्वसाक्षाद्व्याप्यधर्मेणेति ॥ स्वसाम्यपरं विधायोक्त-

सायुज्यादेरुत्कृष्टत्वम् । नच सायुज्यमैक्यम् । सारूप्यादिमति सालोक्यादिवत्सायुज्यवत्यपि सारूप्यादेः सत्त्वात् । "चन्द्रमसः सायुज्यं सलोकतामाप्नोति" इत्यादिश्रुतौ "सायुज्यं चेदिभूभुजः" इत्यादिस्मृतौ च भेदे सत्यपि सायुज्योक्तेश्च । "सयुजः परमात्मानं प्रविश्य च बहिर्गताः" इत्यादिस्मृतौ सयुजां प्रवेशमात्रोक्तेश्च । सयुजोर्भावः सायुज्यमिति तच्छब्देन संबन्धस्यैवोक्तेश्च ।

"सालोक्यमथ सामीप्यं सारूप्यं योग एव च"

इतिस्मृतौ सायुज्ये संबन्धार्थयोगपदप्रयोगाच्च । तस्मात्सायुज्यं नाम क्षीरनीरवदन्यदेहप्रविष्टब्रह्मदेवतादिवच्च संश्लेषमात्रम् । नत्वैक्यम् ।

"हरौ नियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचित् ॥" इति स्मृतेः ।

नचोक्ततारतम्यश्रुतिरमुक्तविषया । प्रकृते मनुष्यगंधर्वादावप्रकृतेऽन्यस्मिन्वा संसारिणि तैत्तिरीयोक्तस्याकामहतत्वस्य वाजसनेयोक्तयोरवृजिनत्वाकामहतत्वयोश्चायोगात् । अकामहतत्वं हि कामकृतोपद्रवाभावः । नत्वकामत्वम् । हतशब्दवैयर्थ्यात् । स च सत्यकामस्य

---

परतंत्रानंदत्वव्याप्येन यज्ञदत्तजीवानंदत्वेन सजातीयवैषयिकानंदप्रतियोगिकतारतम्यसाधनाय सिद्धसाधनम् । तद्वारणाय ॥ साक्षादिति ॥ यद्यपि स्वरूपानंदत्वं वैषयिकानंदत्वं च परतंत्रानंदत्वं प्रति न साक्षाद्व्याप्यम् । जीवानंदत्वस्यैव तत्साक्षाद्व्याप्यत्वात् । तथापि परतंत्रानंदत्वव्याप्येन जीवानंदत्वमेव विवक्षितम् । प्रकृते जीवस्वरूपानंदत्वेन सजातीयानंदप्रतियोगिकतारतम्यस्य सिषाधयिषितत्वात् । अन्यथा सिद्धसाधनतादोषप्रसंगादिति । तथा च यज्ञदत्तादिजीवस्वरूपानंदः जीवानंदत्वसाक्षाद्व्याप्यधर्मेण जीवस्वरूपानंदत्वेन सजातीयो यो विष्णुमित्रादिजीवांतरस्वरूपानंदस्तत्प्रतियोगिकतारतम्यवानिति प्रतिज्ञातार्थः । यथा यज्ञदत्तादिजीववैषयिकानंदः जीवानंदत्वसाक्षाद्व्याप्यधर्मेण जीववैषयिकानंदत्वेन सजातीयविष्णुमित्रादिजीवांतरवैषयिकानंदप्रतियोगिकतारतम्यवान् तद्वदित्युदाहरणार्थः । तारतम्यसिद्धांतत्वात् नोक्तदोषः । तथापि यज्ञदत्तस्वरूपानंदं जीवानंदत्वव्याप्येन यज्ञदत्तस्वरूपानंदत्वेन सजातीयः स एव यज्ञदत्तानंद इति तत्प्रतियोगि(क) तारतम्याभावात् बाधः स्यात् । तत्परिहाराय साक्षाद्व्याप्येत्युक्तम् । यज्ञदत्तानंदत्वस्य जीवानंदत्वव्याप्यजीवस्वरूपानंदत्वव्याप्यत्वेन न साक्षाद्व्याप्यत्वबाधः । नहि जीवानंदत्वसाक्षाद्व्याप्येन यज्ञदत्तानंदत्वेन सजातीययज्ञदत्तवैषयिकानंदप्रतियोगिकतारतम्येन सिद्धसाधनता स्यादिति चेत्, न, यज्ञदत्तानंदत्वस्यापि मनुष्यानंदत्वाद्यन्यतमव्यवधानेनैव जीवानंदत्वव्याप्यतया साक्षाद्व्याप्यत्वाभावात् । न चैवं जीवानंदत्वसाक्षाद्व्याप्येन मनुष्यानंदत्वादिनैव सजातीय-

मनुष्यादिवैषयिकानंदप्रतियोगिकतारतम्येन सिद्धसाधनं स्यादिति वाच्यम्। पक्षीकृतब्रह्मानंद-स्वरूपानंदे मनुष्यानंदत्वादिनियमाभावेन मनुष्यादिवैषयिकानंदस्यासजातीयतया तत्प्रतियोगिक-तारतम्यस्योक्तसजातीयानंदप्रतियोगि(क)त्वाभावात् । तर्हि तादृशासजातीयानंदप्रतियोगित्वा-भावादेव हेतौ चानंदत्वादित्येवोक्तौ ब्रह्मानंदजीवानंदत्वसाक्षाद्व्याप्यजीवस्वरूपानंदादेः अभावात्तेन रूपेण ब्रह्मानंदादिषु तारतम्यप्रतियोगिभूतजीवस्वरूपानंदादेः तज्जातीयत्वाभावेन तादृशानंदप्रति-योगिकतारतम्याभावाद्व्यभिचारः स्यात् । तत्परिहाराय जीवपदम् ॥ प्रकृतिबंधनिवृत्तिरिति ॥ प्रकृत्या यो बंधस्तन्निवृत्तिरित्यर्थः। अत्र स्वशब्दस्य समभिव्याहृतपरत्वात् स्वसजातीयबंधनिवृत्तिः प्रकृतिबंधनिवृत्तिः तदाश्रयो जीवः तत्प्रतियोगिकतारतम्यवान्योऽन्यजीवस्तन्निष्ठेत्यर्थः। अनेन प्रकृतिबंधनिवृत्तिमतां मुक्तजीवानां तारतम्यं पर्यवस्यति। अत्र पक्षे प्रकृतिबंधनिवृत्तौ निगड-बंधनिवृत्त्याश्रयसंसारिजीवप्रतियोगिकतारतम्यवन्मुक्तजीवनिष्ठत्वांगीकारात् सिद्धसाधनता तन्नि-रासाय स्वसजातीयेत्युक्तम्। निगडबंधनिवृत्तेः प्रकृतिबंधनिवृत्तिसजातीयत्वाभावात् न तामादाय सिद्धसाधनत्वशंका । इत्याद्यनुमानैरित्यत्रादिशब्देन, मुक्तजीवाः सुखतारतम्यवंतः, तत्साधन-तारतम्यवत्त्वात्। ये यत्फलसाधनतारतम्यवंतस्ते तत्फलतारतम्यवंतः, यथा स्वर्गादय इत्यनु-मानांतराणि ग्राह्याणि। उक्तानुमानेषु बाधकमाशंक्य परिहरति ॥ स्वरूपसुखानामिति ॥ संख्या-परिमाणकृतवैषम्याभावेऽपि एकस्य एकं सुखं अपरस्य द्वे इति संख्याकृतस्य, एकस्याल्पमात्रं सुखं अपरस्य महदिति परिमाणकृतस्य वैषम्यस्याभावेऽपि ।

प्रसिद्धम् लोकवेदयोरितिशेषः । ननु सायुज्यस्य ब्रह्मैक्यरूपत्वात् ब्रह्मण एवोत्कृष्टत्व-भावात्तम् । न तु मुक्तानां तारतम्यमित्याशंक्य निराकरोति ॥ नचेति ॥ ऐक्यं जीवब्रह्मैक्यम् । कुतो नेत्यत आह ॥ सारूप्यादिमध्यमिति ॥ सालोक्यसामीप्यसारूप्यसायुज्येषु, सारूप्यादिमध्ये सामीप्यादिवदुत्तरोत्तरवति पूर्वपूर्वस्यावश्यकत्वेन सायुज्यवत्यपि सारूप्यादेः सत्त्वात् । तथा च सारूप्यादिवत् सायुज्यस्यापि ब्रह्मभिन्नविषयत्वात् तद्भिन्ननिष्ठैक्यरूपतेति भावः ॥ भेदं मत्यपि ॥ दधिपयसि प्रवीतस्य वंशात्, वेदिभूभुजः कृष्णाङ्गे सम्पदीत्यर्थः। प्रवेशमात्रेत्यत्र मात्रशब्दे-नैक्यव्यवच्छेदः । तच्छब्देन सायुज्यशब्देन । संबंधमात्रेत्यत्रापि मात्रशब्देनैक्यव्यवच्छेदः। सायुज्ये सायुज्यस्थाने । उपपादितं सायुज्यस्यैक्यान्यत्वम् उपसंहरति ॥ तस्मादिति ॥ क्षीर-नीरवत् क्षीरनीरयोः संश्लेषवत्। अन्यदेहाविष्टब्रह्मदेहादिवत्, अन्यदेहाविष्टब्रह्मदेहादेस्तद्देहि-संश्लेषवत् संश्लेषमात्रम् । मात्रशब्दार्थमेवाह ॥ नत्वैक्यमिति ॥ ननु "परेऽव्यये सर्व एकी-भवंति" इत्यादिश्रुतिषु मोक्षस्य ब्रह्मैक्यत्वश्रवणात् कुतो नैक्यं सायुज्यमुक्तिशब्दार्थ इत्यत आह

मुक्तस्यैव। "सोऽश्नुते सर्वान्कामान्, कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि" इत्यादिश्रुतेः। "स हि मुक्तोऽकामहत" इति ब्रह्मांडोक्तेश्च। अवृजिनत्वमप्यदुःखत्वमपापत्वं वा। उभयमपि मुक्तस्यैव। अपरोक्षज्ञानिन्यपि प्रारब्धपापतत्कार्यदुःखयोः सत्त्वात्। नचाबाधे मुख्यार्थस्त्यागार्हः। श्रोत्रियत्वं च मुक्तस्यैव मुख्यम्।

---

॥ हराविति ॥ तत्प्रवेशनाख्यरौ प्रवेशनात् निमित्तात्। मोक्षं सायुज्यं मोक्षं तादात्म्यमित्याहुः श्रुत्यादय इति शेषः। न तु कश्चिदपि तद्रूपतां ब्रह्मस्वरूपतां तदात्मतां सायुज्यमाहुरित्यर्थः। ॥ हरि स्मृतेरिति ॥ स्मृत्यैव। "एकीभवंति" इत्यादिश्रुत्यादीनां भेदगर्भप्रवेशनादिपरत्वेन व्याख्यातत्वात् तद्बलेन सायुज्यमोक्षस्यैक्यरूपत्वसिद्धिरिति भावः। सैषानंदस्येत्यादिमुक्ततारतम्यविषयोदाहृतश्रुतीनामन्यथासिद्धिमाशंक्य परिहरति ॥ नचोक्तेति ॥ कुतो नेत्यत आह ॥ प्रकृते इति ॥ प्रकृते "ते ये शतं मानुषा आनंदाः स एको मनुष्यगंधर्वाणामानंद" इत्यादिना प्रकृते मनुष्यगंधर्वादौ। आदिशब्दाद्देवगंधर्वादौ। "अथ ते ये शतं कर्मदेवानामानंदाः स एक आजानजानां देवानामानंद" इत्यादिना प्रकृते कर्मदेवादौ। अप्रकृते उक्तश्रुतौ मनुष्यगंधर्वादिवदप्रकृते अन्यस्मिन्संसारिणीति प्रकृताप्रकृतोभयविशेषणम्। तैत्तिरीयोक्तस्य "श्रोत्रियस्य चाकामहतस्य" इति तैत्तिरीयोक्तस्य। वाजसनेयोक्तयोः "यश्च श्रोत्रियोऽवृजिनोऽकामहत" इत्यादिवाजसनेयोक्तयोः। अयोगादित्युक्तमयोगमेवोपपादयति ॥ अकामहतत्वं हीति ॥ सः कामकृतोपद्रवाभावात् मुक्तस्यैव, न तु संसारिणः। तस्य कामोपद्रुतत्वादिति भावः। ननु मुक्तस्य सत्यकामत्वे अकामहतत्वं युक्तम्। तदेव कुतः इत्यत आह ॥ सोऽश्नुत इति ॥ अकामहतत्वपर्यवसायिनीं स्मृतिमाह ॥ स हि मुक्त इति ॥ उभयमपि अदुःखत्वमपापत्वं चेत्युभयमपि। मुक्तस्यैव न तु संसारिणः। कुत इत्यत आह ॥ अपरोक्षज्ञानिन्यपीति ॥ (ज्ञानिनोऽपीति पा.) अपरोक्षज्ञानमहिम्ना संचितानां पापानां नष्टत्वेन आगामिनां चाश्लेषेण तयोरसंभवात् प्रारब्धपापेत्युक्तम्। ननु संसारिण्यपि विरक्ते कामोपद्रवप्राचुर्याभावेनाकामहतत्वस्य, पुण्यशीले पापादिप्राचुर्याभावेनापापादेश्च उपचारेण संभवात्तद्विषयैवास्तु श्रुतिरित्यत आह ॥ न चाबाध इति ॥ मुख्यार्थः कामोपद्रवमात्राभावः पापादिमात्राभावश्च मुक्तस्यैव मुख्यः न तु संसारिण इत्यर्थः। ननु श्रोत्रियत्वं "श्रोत्रियश्छांदसौ समा"वित्यभिधानात् "श्रोत्रियंश्छंदोऽधीते" इति पाणिनिस्मरणात् छंदोऽनुवर्तिनः संसारिण एव मुख्यं, तत्कथमुक्तं मुक्तस्यैवेति। किंच "सोऽश्नुते" इत्यादिश्रुतौ मुक्तस्य सर्वकामाप्तिरेवोक्ता न त्वकामहतत्वम्। "स हि मुक्तोऽकामहत" इति स्मृतावपि कामहतत्वाक्षेप एव कृतो न तु साक्षादकामहतत्वमुक्तम् ॥ अतः कथं मुक्तस्याकामहतत्वमपी-

"प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वाच्चाऽकामहता मताः ॥" इति भारतोक्तेः ।

किंच प्रकृतमनुष्यगन्धर्वादिपरत्वे श्रोत्रियस्य चेत्यत्र यश्च श्रोत्रिय इत्यत्र चैकवचनं समुच्चयार्थश्चशब्दश्चायुक्तः। न हि संभवति वसिष्ठो वसिष्ठोऽरुन्धतीपतिश्च तथेति । अप्रकृतसंसारिपरत्वे तु बाधः । चतुर्मुखाद्यानंदस्यान्यस्मिन्संसारिण्यदर्शनात् । अपिच प्रकृतश्रोत्रियः सर्वत्राप्येकैकस्मान्मानुषादिभ्यः सावधारणं शतगुणितमनुष्यगंधर्वाद्यनेकानंदा एकस्मिन्विरुद्धाः । भिन्नभेदकामहतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानंदव्यवस्थाऽयोगः । अथ व्यवस्थार्थं तत्र तत्र तत्तत्पदाकामः तदितरपदकामश्च विवक्ष्यते तदाऽश्रुतकल्पना बाधश्च । नहींद्रादिपदे राजपदे वा निष्कामस्य भिक्षुकस्येंद्राद्यानंदानुभवोऽस्ति । उक्तं हि—

---

न्यायांशं सोपपत्तिकेन श्रोत्रियस्येत्यादिश्रुतिव्याख्यानरूपभारतवाक्येन परिहरति ॥ प्राप्तश्रुतीति ॥ मताः श्रोत्रियस्य च, यश्च श्रोत्रिय इत्यादिश्रुतिविशेषः । अनेन मुक्तस्य श्रोत्रियत्वादौ श्रुतिः स्मृतिश्चोभयमपि प्रमाणमित्युक्तं भवति । एवं श्रोत्रियस्येत्यादेः प्रकृताप्रकृतसंसारिविषयत्वपक्षयोः साधारणदूषणमभिधाय प्रथमपक्षेऽप्यसाधारणदूषणमाह ॥ किंचेति ॥ नहि संभवत्यनेकेष्वेकवचनमित्येवं युक्त्युपपादनं स्पष्टमित्युपेक्ष्य चशब्दायुक्तत्वमेवोपपादयति ॥ नहीति ॥ द्वितीयपक्षेऽप्यसाधारणदूषणमाह ॥ अप्रकृतेति ॥ अत्र पक्षे "स एको ब्रह्मण आनंद इत्यादिनोक्तचतुर्मुखाद्यानंदः "श्रोत्रियस्य चाकामहतस्य" इत्यादिना प्रकृतस्य कस्यचित् संसारिणोऽनूद्यत इति वक्तव्यम् । तच्च बाधितमित्यर्थः । कुतो बाध इत्यत आह ॥ चतुर्मुखाद्यानंदस्येति ॥ अदर्शनमात्रं न बाधकमिति मन्वानः प्रकारांतरेण प्रकृतविषयत्वपक्षं दूषयति ॥ अपिचेति । सर्वत्रापीति ॥ मनुष्यगंधर्वादिब्रह्मपर्यंतस्थलेष्वपीत्यर्थः ॥ मनुष्यादिभ्य इति ॥ "ते ये शतं मानुषा आनंदाः, स एको मनुष्यगंधर्वाणामानंदः" इत्यादिश्रुतौ सर्वत्रैवशब्दोऽवधारणार्थः । अनेकत्वसंख्यापरः । तथासति तावानेव आनंद इत्यर्थः स्यात् । स च न युक्तः । नहि मनुष्यगंधर्वादीनां मानुषानंदादिशतगुणितानेकानंदसद्भावे मानमस्ति । एवंच "ते ये शतं मानुषा आनंदाः, स एकः" स एव तावानेव मनुष्यगंधर्वाणामानंदः, न न्यूनो नाधिकः । स एव तावानेव श्रोत्रियस्य च पुनस्ते ये शतं मनुष्यगंधर्वाणामानंदाः स एकः स एव तावानेव देवगंधर्वाणामानंदः न न्यूनः नाधिकः । स एव तावानेव श्रोत्रियस्य चेत्यादिप्रकारेण [illegible]स्थितश्रोत्रियानंदपर्यंतं श्रुत्योच्यमानमानुषानंदादिपूर्वपूर्वानंदानाम् सावधारणशतगुणितोत्तरोत्तरमनुष्यगंधर्वाद्यनेकानंदा एकस्मिन्श्रोत्रिये विरुद्धाः अवधारणार्थैवशब्दाव्यवच्छिन्नयोर्न्यूनाधिक-

"कुत्रचित्कामिनः पुंसः कामाभावात्क्वचित्क्वचित् ।
इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ॥" इति ।

नचाबाधे वैराग्यप्रशंसामात्रपरत्वं युक्तम् । तस्माच्छ्रुत्या पूर्ववाक्येनामुक्तानां तारतम्यमुक्त्वा "श्रोत्रियस्य च" इत्यादिना "यश्च श्रोत्रिय" इत्यादिना चोत्तरवाक्येन मुक्तस्य तदुच्यते। "अक्षण्वंत" इतिश्रुतिस्तु तत्प्रकरणे "ऋचां त्वः पोषमास्ते" इत्यादिना ब्रह्मबहुत्वोक्ते-

---

नंदयोः समावेशादित्यर्थः । अकामहतत्वादेः आदिशब्दादवृजिनत्वस्य चैकरूपतया श्रुतस्य तैत्तिरीये श्रोत्रियस्य चाकामहतस्य" इति वाजसनेयके "यश्च श्रोत्रियोऽवृजिनोऽकामहतः" इति मनुष्य-गंधर्वादिब्रह्मपर्यंतवाक्यस्थितश्रोत्रियेष्वेकरूपतया श्रुतस्य अव्यवस्थापकत्वात् न्यूनाधिक्या-भावेन न्यूनाधिकानंदव्यवस्थापकत्वासंभवादानंदव्यवस्थायोगः । उत्तरोत्तरश्रोत्रिये पूर्वपूर्वश्रोत्रियात् शतगुणाधिकानंदव्यवस्थायोग इत्यर्थः । तत्र तत्र श्रोत्रियस्यचाकामहतस्य, श्रोत्रियस्याचाकामह-तस्येत्यादिवाक्येषु तत्तत्पदाकामः मनुष्यगंधर्वादिपदाकामः स किं मुक्तः तर्हि सिद्धं नः समीहितमित्यत उक्तं ॥ तदितरेति । अश्रुतकल्पनेति ॥ तदितरपदकाम इत्यस्यार्थस्याकामहत इत्यत्र अश्रुतत्वादिति भावः । बाधश्चेत्युक्तं बाधमुपपादयति ॥ नहीति ॥ उक्तार्थेऽभियुक्त-संमतिमाह ॥ उक्तं हीति । क्वचित्क्वचिदिति ॥ इन्द्रादिपदेष्वित्यर्थः । इति इत्युक्ते सति अनुभूतिरनुभवः । कुप्यति विरुणद्धि हि, लोके तथानुपलंभादित्यर्थः । ननु "नैराश्यं परमं सुखम्" इत्यादेः श्रोत्रियस्येत्यादिवाक्यं वैराग्यप्रशंसापरं ननु मनुष्यगंधर्वाद्यानंदविधिपरम् । अतो नोक्तविरोधादिदोष इत्याशंक्य निराकरोति ॥ नचेति ॥ उपसंहरति ॥ तस्मादिति ॥ श्रुत्या सैषानंदस्येत्यादिश्रुत्या ॥ पूर्ववाक्येनेति ॥ "ते ये शतं मानुषा आनंदाः, स एको मनुष्यगंधर्वाणामानंद" इत्यादिना पूर्ववाक्येनामुक्तानां मनुष्यगंधर्वादीनां मुक्तमनुष्योत्तमादि-तच्छतगुणाधिकानंदत्वलक्षणतारतम्यमुक्त्वा श्रोत्रियस्य चेत्यादिना चोत्तरवाक्येन मुक्तस्य मनुष्य-गंधर्वादेर्मुक्तमनुष्यादितच्छतगुणाधिकानंदत्वलक्षणं तारतम्यमुच्यत इत्यर्थः । सैषानंद-स्येत्यादिश्रुतेरमुक्तविषयत्वशंका निरस्याक्षण्वंत इत्यादिश्रुतेरपि तां निराचष्टे ॥ अक्षण्वंत इति ॥ श्रुतिस्त्विति तुशब्दः पूर्वस्मादत्र मुक्तविषयत्वसमर्थनसौलभ्यं द्योतयति । तत्प्रकरणं अक्षण्वंत इति वाक्यसमभिव्याहृतप्रकरणे ॥ ब्रह्मबहुत्वोक्तेरिति ॥ त्वशब्दः कश्चिदर्थः, कश्चिन ब्रह्मा ऋचां पोषमुपबृंहणं आस्ते करोति । कश्चिद् ब्रह्मा गायत्रं नाम पुरुषानुपबृंहयन् गायति । कश्चित् ब्रह्मा शक्करीषु छंदोविशेषेषु जातविद्यां सर्ववर्तितविद्यां वदन्नुपदिशति । कश्चिद्ब्रह्मा यज्ञस्य ज्योतिष्टोमादेर्विध्योर्वा मात्रामेकदेशं प्रयाजादिकं यागादिकं वा विमिमीते अनुतिष्ठति

इत्यादिस्मृत्या मुमुक्षुभक्तादमुमुक्षोर्निरुपाधिकभक्तस्याधिक्योक्तेश्च । तदाधिक्यस्य लोकरीति-सिद्धत्वाच्च । "भक्तिः सिद्धेर्गरीयसी" इत्यादिस्मृत्याऽल्पभक्तिसाध्यमुक्तितोऽधिकमुक्ति-हेतुभक्तेराधिक्योक्तेश्च ।

"अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥" इत्यत्रापिशब्देन,
"स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्याः ।"

इत्यत्र कैमुत्येन साधनतारतम्येन साध्ये तत्प्रतीतेश्च ।

"साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनंदश्रुतौ श्रुताः ॥" इति भाष्ये ।
"अधिकं तव विज्ञानमधिका च गतिस्तव ।"

इति मोक्षधर्मे च साधनतारतम्येन साध्ये तदुक्तेश्च । "विकल्पो विशिष्टफलत्वात् ।" इति सूत्रे त्वया विकल्पेन मोक्षहेतुत्वेनोक्तानां दहराक्षरादिविद्यानामधिकाल्पगुणविषयत्वेन तार-तम्याच्च । त्वद्रीत्या प्रत्येकं मोक्षहेत्वोर्निरंतरचिंताभरन्यासरूपयोर्भक्तिप्रपत्त्योः स्वरूपतः

---

तारतम्यमपि सप्रमाण(क)माह ॥ यस्त आशिष इत्यादिना ॥ यः ते तव सेवाफलभूता आशिषः ऐहिकामुष्मिकपुरुषार्थलक्षणाः आशास्ते अपेक्षते स्वामिनः सकाशादिति शेषः । स न भृत्यः न सेवकः तर्हि स क इति जिज्ञासायामुक्तम् ॥ स वणिगिति ॥ वणिक्सदृश एव यथा वणिक् धनधान्यादिकं विक्रीय धनादिकं स्वीकरोति तद्वदसावपीत्यर्थः ॥ स वै भृत्य इति ॥ यो भृत्यः स्वामी चोभौ गुणलुब्धौ परस्परगुणाकांक्षिणौ न कामुकौ न परस्परोपकारकांक्षिणौ स एव भृत्यः स एव स्वामीत्यर्थः । एतेन (अनेन) सकामभक्तापेक्षया निष्कामभक्तस्याधिक्यमुक्तं भवति । परः उत्कृष्टः सः एकांतभक्तिमान् । निरुपाधिकभक्तिमान् तस्याधिक्यस्य सोपाधिकभक्ता-पेक्षयाधिकभक्ताधिक्यस्याल्पभक्तिसाध्येतिफलात् साधनस्याधिक्याभावेन यथाश्रुतार्थस्यानु-पपन्नत्वात् श्रुतेरयमेवार्थ इति भावः । अनेनाल्पभक्तिसाध्यमुक्तेरप्यधिकाया अधिकमुक्ति-साधनभक्तेरल्पभक्तित आधिक्यं किं वक्तव्यमित्युक्तं भवति । एवं साधनतारतम्यात् मुक्ततारतम्यमनुमानेन साधयित्वा स्मृत्यादिनापि तत्साधयति ॥ अन्ये त्वित्यादिना ॥ [illegible]त्यादिशब्देन संवर्गादीनां ग्रहणम् ॥ स्वरूपत इति ॥ निरंतरचिंतनस्यापुनःस्वरूपत इत्यर्थः । कर्मेति वर्णाश्रमविहितकर्मेत्यर्थः । विषमत्वादधिकतरत्वात् । तयोर्भक्तिप्रपत्त्योः ।

"कर्मणामल्पमहतां फलानां च स्वगोचरे ।
विभागस्थानसामान्यादविशेषेऽपि चोदितः ॥"

इतिवार्तिकेनाविशेषेण स्वर्गसाधनत्वेन श्रुतयोरपि ज्योतिष्टोमाग्निहोत्रयोस्तारतम्यात्तत्साध्ये स्वर्गेऽपि तदुक्तम् । उक्तं च—

"युक्तं च साधनाधिक्यात्साध्याधिक्यं सुरादिषु ।
नाधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुतः ॥"

इति । किञ्च "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादिश्रुत्या "तस्य कार्यं न विद्यते" इत्यादिस्मृत्या च यस्य स्थितप्रज्ञस्य मोक्षाय कर्तव्यांतराभाव उक्तस्तस्यापरोक्षज्ञानिनो भक्तस्य प्रपन्नस्य वा शुकादेर्नित्यादिकर्मब्रह्मध्यानादिकं च न तावद्ब्रह्मस्येव विविदिषादिद्वारा वा पापक्षयादिद्वारा वा प्रत्यवायपरिहारद्वारा वा ज्ञानादेः संनिपत्यांगम् ।

---

यदेव स्वोचितमुक्तिफलं तत्यविकलता वक्तव्या । तथा च ज्ञानादिसाधनतारतम्यं फलतारतम्यप्रयुक्तमेव न शक्त्यशक्तिप्रयुक्तमित्यर्थः । एतेन वक्ष्यमाणहेतुना तथाऽश्रवणात् भक्तिप्रपत्त्योः शक्ताशक्तविषयत्वेनाश्रवणात् कल्पने तयोः शक्ताशक्तविषयकत्वकल्पनेऽतिप्रसंगात् । कृताकृतयोः कृतयोरपि सुकृतदुष्कृतयोः सुकृतयोरपि सकलविकलयोः कर्मणोः शक्ताशक्तविषयत्वेन स्वर्गादितुल्यफलसाधनत्वप्रसंगादित्यर्थः । समर्थितमर्थमुपसंहरति ॥ तस्मादिति ॥ उक्तार्थे सम्मतित्वेन तंत्रवार्तिकश्लोकमुदाहृत्य तदभिप्रेतार्थमाह ॥ अत एवेति ॥ स्वर्गेऽपि तदुक्तं तारतम्यमुक्तम् । अत्र पूर्वमीमांसोदाहरणं तस्या उत्तरमीमांसयैकशास्त्र्यमंगीकुर्वतां परेषां तदुक्तार्थानंगीकारे अपसिद्धांतोद्भावनार्थमित्यवगंतव्यम् । स्वकपोलकल्पितत्वशंकानिरासाय सोपपत्ति स्वाभियुक्तवाक्यसंमतिमाह ॥ उक्तं चेति ॥ साधनाधिक्यात् मनुष्याद्यपेक्षया सुरादिषु ज्ञानादिसाधनाधिक्यात् साध्याधिक्यं सुखादिसाध्याधिक्यम् । साध्ये सुखादौ साधने ज्ञानादौ प्रयत्नः कुतः । (व्यर्थः स्यात् ) (वा) व्यर्थत्वं न स्यादित्यर्थः । परिशेषप्रमाणेनापि मुक्तावानंदवैचित्र्यं साधयति ॥ किंचेत्यादिना ॥ अपरोक्षज्ञानिन इति भक्तप्रपन्नयोर्विशेषणम् । नित्यादीत्यादिशब्देन नैमित्तिकग्रहणम् । ध्यानादिकमित्यादिशब्देन श्रवणादिकम् । विविदिषादीत्यादिशब्देनांतःकरणशुद्धिर्ग्राह्या । ज्ञानादेरित्यादिशब्देन भक्तिर्ग्राह्या । संनिपत्यांगं स्वरूपोपकारकम् । तस्य ज्ञानस्य । अमुक्त्यापातात् । मुक्तेः ज्ञानसंबंधेन ज्ञानसाध्यत्ववत् कर्मसाध्यत्वस्याप्यापातादित्यर्थः । कर्मणां विचित्रत्वेनाल्पत्वबहुत्वादिनापि विचित्रत्वेन मोक्षेऽपि वैचित्र्यापातात् । अल्पकालत्वबहुकालत्वादिनापि वा वैचित्र्यापातात् । उक्तश्रुत्यादिविरोधात् "तस्य तावदेव चिरम्" इत्याद्युक्तश्रुत्यादिविरोधात् ।

तस्य सिद्धत्वात् । नापि फलोपकार्यंगम् । मुक्तौ ज्ञानकर्मणोः समुच्चयापातात् । कर्मणां विचित्रत्वेन मोक्षवैचित्र्यापाताच्च । मोक्षाय कर्तव्यांतराभावपरोक्तश्रुत्यादिविरोधाच्च । नापि फलांतरार्थम् । नित्यत्वात् । ज्ञानिनोऽनिष्टत्वाच्च । नापि लोकसंग्रहार्थमीश्वराज्ञापालनार्थं वा । तयोरपि स्वतोऽफलत्वात् । नापीश्वरप्रीत्यर्थम् । भक्त्यादिनैव मोक्षहेतुप्रीतेः सिद्धेः । नापि तत्प्रीत्यतिशयार्थम् । फलातिशयाभावे तस्य पारिभाषिकत्वापातात् । तद्वैयर्थ्याच्च । नापीश्वरवल्लीलार्थम् । "आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्य (गम्य.पा.) शांतो भवेद्दांतो भवेत् , पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन्" इत्यादिनाऽपरोक्षज्ञानिनः,

> "मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
> मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥"

इत्यादिना भक्तिप्रपंचिमतश्च तद्विधानात् ।

> "शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।
> वर्षायुतं च सूर्येण तपोऽर्वाक् शिरसा कृतम्"

इत्यादिस्मृतिषु क्लेशेनानुष्ठानोक्तेश्च । सूर्यादयश्चापरोक्षज्ञानिनः । "न देवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिताः" इत्यादिस्मृतेः । अद्वैतिभिः "यावदधिकारम्" इतिसूत्रे क्लेशेन कर्मानुष्ठातॄणां वसिष्ठादीनामपरोक्षज्ञानित्वोक्तेश्च । तस्मादपरोक्षज्ञानोत्तरं कर्मादिकं मुक्तावानंदातिशयार्थमेव । ब्रह्मांडे च—

---

॥ नित्यत्वादिति ॥ नित्यकर्मणः फलांतराभावादिति भावः । अनिष्टत्वात् फलांतरस्येति शेषः । ईश्वराज्ञापालनार्थं श्रुतिस्मृतिरूपेश्वराज्ञायाः पालनार्थम् ॥ स्वतोऽफलत्वादिति ॥ सुखदुःखाभावयोरन्यतरत्वाभावादिति भावः । तस्य प्रीत्यतिशयस्य । पारिभाषिकत्वापातात् शब्दमात्रत्वापातात् । तद्वैयर्थ्यात् । प्रीत्यतिशयवैयर्थ्यात् । ईश्वरवत् ईश्वरकर्मवत् । विद्यां अपरोक्षज्ञानम् । आत्मानं परमात्मानम् । शांतः क्रोधरहितः । भगवन्निष्ठबुद्धिर्वा । दांतः निगृहीतेंद्रियः ॥ तद्विधानादिति ॥ कर्मानुष्ठानादिविधानात् । लीलार्थत्वे विधानायोगादित्यर्थः । तपोऽर्वाक्शिरसा अधःकृतशिरसा ॥ क्लेशेनानुष्ठानोक्तेरिति ॥ लीलार्थत्वे क्लेशेनानुष्ठानायोगादिति भावः । ननु सूर्यादेरपरोक्षज्ञानित्वाभावात्तदर्थं कर्मविधानादिकमित्यत आह ॥ सूर्यादयश्चेति ॥ कुत इत्यत आह ॥ न देवपदवीमिति ॥ देवपदवीं देवत्वम् । प्राप्ताः ब्रह्मदर्शनवर्जिता न किंतु ब्रह्मदर्शनवंत (एवेत्यन्वयः पा.) एवेत्यर्थः । सूर्यादेश्च प्राक्तन एवमपरोक्षज्ञानित्वात् तदर्थं कर्मविधानादिकमिति भावः । एवं प्रसक्तपक्षप्रतिषेधेन परिशिष्टमर्थमुपसंहारमुखेनाह ॥ तस्मादिति ॥ अन्यार्थे प्रमाणमाह ॥ ब्रह्मांडे चेत्यादिना ॥ ज्ञानापरोक्ष्यानात् । सर्वार्थप्रदंहतोऽपि सर्वसुखकर्म-

"ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनंदो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धते ॥" इति ।

स्मर्यते च— "सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानंदचित्रता ॥" इति ।

अत एव "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इतिश्रुतौ ज्ञानिकृतस्य कर्मणो मोक्षान्वयादक्षयफलत्वमुक्तम् । नहि मोक्षादन्यत्राक्षयत्वम् । परमसाम्यश्रुतिस्तु दुःखाभावसत्यकामत्वादिना सरःसागरयोरिव स्वयोग्यानंदपूर्त्या च साम्यात् ।

"लिंगभेदः परानंदो दुःखाभावः समा मताः ।"

इतिस्मृतेः । अन्यथा मुक्तस्येश्वरवज्जगत्स्रष्टृत्वादि किं न स्यात् । तच्च "जगद्व्यापारवर्जम्" इतिसूत्रे त्वयापि निषिद्धम् । अत्र जगद्व्यापारशब्द उपलक्षणार्थ इति तवापि संमतम् । अन्यथा मुक्तस्य स्वातंत्र्यापत्तिरपि स्यात् । "भोगमात्रसाम्यलिंगाच्च" इतिसूत्रस्थमात्रशब्दस्य तु

---

कृतोऽपि । अपरोक्षज्ञानानंतरमिति शेषः । तर्ह्यकार्यस्य किं फलमित्यत उक्तम् ॥ आनंदो ह्रसत इति ॥ अकार्यादपरोक्षज्ञानानंतरकृतात् । एवं शुभं कृत्वेत्यादावप्यपरोक्षज्ञानानंतरं मंतव्यम् । अत्र स्वरूपानंदस्य ह्रासवृद्धी नाम संकोचविकासौ । सम्यगनभिव्यक्त्यभिव्यक्ती वा । न तु विद्यमानस्यापगमोऽविद्यमानस्य प्राप्तिरिति वदंति ॥ उपासनया ध्यानादिलक्षणया । आनंदचित्रता आनंदवृद्धिः । अत एवापरोक्षज्ञानिकृतकर्मणो मुक्तावानंदातिशयार्थत्वस्य प्रमितत्वादेव । इदानीं मुक्तौ तारतम्ये परमसाम्यश्रुत्यविरोधाय तस्याः श्रुतेर्गतिमाह ॥ परमसाम्यश्रुतिस्त्विति । सरःसागरयोरिति ॥ लोके यथा सरःसागरयोः स्वयोग्यजलपूर्त्या साम्यात् साम्यव्यवहारस्तथा मुक्तजीवेशयोर्मुक्तजीवानां च दुःखाभावसत्यकामत्वादिना स्वयोग्यानंदपूर्त्या च साम्यात् परमसाम्यश्रुतिः । न तु सर्वात्मना साम्यादित्यर्थः । कुत इत्यत आह ॥ लिंगभेद इति ॥ अत्र लिंगभेदः मुक्तानां समः । परानंदः पृ पालनपूरणयोरिति धातोः स्वस्वयोग्यतानुसारेण पूर्णानंदो दुःखाभावश्च मुक्तजीवेशयोर्मुक्तजीवानां च सम इति विवेचनीयम् । सर्वात्मना साम्ये बाधकमाह ॥ अन्यथेति ॥ इष्टापत्तिमाशंक्य परिहरति ॥ तच्चेति ॥ तच्च जगत्स्रष्टृत्वादिकम् । नहि जगत्कर्तृत्वातिरिक्तैः सर्वधर्मैः साम्यमस्त्वित्यत आह ॥ अत्रेति ॥ असम्मतत्वे बाधकमाह ॥ अन्यथेति ॥ कथं तर्हि भोगमात्रेतिसूत्रे मात्रशब्देन इतरासाम्योक्तिरित्यत आह ॥ भोगमात्रसाम्येति ॥ तद्विशेषो भोगविशेष इत्यर्थ इति ॥ तथाचास्मन्मते मात्रशब्दः सामान्यार्थ एव ।

मन्मते भोगसामान्य एव साम्यं नतु तद्विशेष इत्यर्थः। त्वन्मतेऽपि भोगमात्रे मुक्तस्य ब्रह्मसाम्याल्लिंगाज्जगद्व्यापारवर्जमिति व्याख्यातत्वादवधारणार्थो मात्रशब्दो न कार्त्स्न्यार्थः। सत्यकामत्वं च जगत्स्रष्टृत्वादाविवाधिकानंदेऽपि कामस्यैवाभावादुक्तम्। वाराहे च —

"स्वाधिकानंदसंप्राप्तौ सृष्ट्यादिव्यापृतिष्वपि।
मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुंजते॥"

इति। सातिशयत्वेऽपि नित्यत्वं चेश्वरादपकृष्टत्व इव मुक्तांतरेण साम्य इव च श्रुत्यादिबलादुक्तम्। अन्यथोत्कर्षस्याप्यनित्यत्वव्याप्त्या ब्रह्मानन्दोऽप्यनित्यः स्यात्। नच द्वेषेर्ष्यादिप्रसङ्गः।

"निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः।
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादि ततः कुतः॥
भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते।
तप्यमानाः समानदृष्ट्वा द्वेषेर्ष्यादियुता अपि॥

---

न तु कार्त्स्न्यार्थ इति भावः॥ इतिव्याख्यातत्वादिति॥ जगद्व्यापारव्यवच्छेदपरतया मात्रशब्दस्य व्याख्यातत्वादित्यर्थः। ननु मुक्तानां सर्वसाम्याभावे स्वाधिकानंदविषयकामस्य तत्प्राप्त्योपहतत्वात् कथं तेषां 'सोऽश्नुते सर्वान्' इत्यादिश्रुत्युक्तं सत्यकामत्वमिति जिज्ञासायामाह॥ सत्यकामत्वं चेति। जगत्स्रष्टृत्वादाविवेति॥ यथा तथापि मुक्तानामीश्वरेण सर्वसाम्याभावेऽपि तद्विषयजगत्स्रष्टृत्वादौ कामस्यैवाभावात् सत्यकामत्वं तथेत्यर्थः। उक्तार्थे प्रमाणेन स्थिरीकरोति॥ वाराहे चेति॥ अन्यान् स्वयोग्यान्। काम्यंत इति कामान् भोग्यान्। इतीति। श्रुत्युक्तमित्यर्थः। सातिशयत्वे मुक्तेरनित्यत्वं स्यात्। स्वाधिकदर्शनेन स्वस्य दुःखद्वेषादिकं च स्यादिति बाधकद्वयं प्रागुक्तम्। तत्र प्रथममुद्धरति॥ सातिशयत्वेऽपि नित्यत्वं चेति॥ विपक्षे बाधकमाह॥ अन्यथेति॥ अन्यथा सत्यपि श्रुत्यादौ। सातिशयत्वादित्यस्यानित्यत्वव्याप्यत्वादेव सातिशयमुक्तेरनित्यत्वे ब्रह्मानंदोऽप्यनित्यः स्यादिति। तस्योत्कृष्टत्वादिति भावः। द्वितीयं च बाधकमुद्धरति॥ नचेति॥ कुत इत्यतः सोपपत्तिकस्मृतेरित्याह॥ निःशेषेति॥ निश्शेषगतदोषाणां हरेरपरोक्षं हि यस्मात्ततः तस्मान्मुक्तौ द्वेषेर्ष्यादि कुतः? न कुतोऽपि। कारणाभावादित्यर्थः। मुक्तानामीश्वरे द्वेषः स्यादित्युक्तौ बाधकं भवेदित्यादि। समेष्वपि कुतो न ते इत्यादिना प्रतिबन्दीमुखेनैवोद्भाविता। ते द्वेषेर्ष्यादयः दोषा एवात्र कारणमित्यादिना साम्याभिव्यक्तौ तत्परिहार उक्तः। यत्र द्वेषादौ दोष एव कारणं न स्वाधिक्यादि तत्र मुक्तौ

दृश्यंते बहवो लोके दोषा एवात्र कारणम् ।
यदि निर्दोष(तात)तैवात्र किमाधिक्येन दूष्यते ॥"

इत्युक्तेः । नच मुक्तिः स्वरूपा(नंदा)विर्भावमात्ररूपा, स्वरूपाणि चैकरूपाणीति कथं तारतम्यमिति वाच्यम् । "यो यद्रूपः स तद्रूपः निसर्गो ह्येष भवति" इत्यादिश्रुत्या,

"अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥
त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।"

इत्यादिस्मृत्या चतुर्मुखादितरेभ्य उत्कर्षस्य दृष्टेनादृष्टेन वाऽऽगंतुकहेतुना साध्यत्वे तत्रापि हेत्वंतरान्वेषणेऽनवस्थापत्त्याऽनादियोग्यताहठापरपर्यायस्वभावो हेतुर्वाच्य इत्यादियुक्त्या च तारतम्यस्वभावत्वात् । "तद्यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणं रूपं

---

किमाधिक्येन दूष्यते त्वदीयसाम्येनाप्राप्तौ मदीयाधिक्येन प्राप्तो दोषः कः, न कोऽपीति स्तुत्यर्थः । श्रुत्यादिसद्भावेऽपि नोपपन्नं जीवानां स्वरूपतारतम्यमित्याशंक्य निराकरोति ॥ न च मुक्तिरिति ॥ कुतो न वाच्यमित्यतः स्वरूपाणामेकरूपत्वमेवासिद्धमितिभावेनाह ॥ यो यद्रूप- इत्यादिना ॥ देवमनुष्यदानवेषु सात्त्विकराजसतामसेषु वा ब्रह्मादिस्थावरांतेषु सर्वजीवेषु वा यो यद्रूपः स तद्रूपः देवो देव एव नान्यः, एवं सर्वत्रापि द्रष्टव्यम । कुतः? निसर्गो ह्येष भवति । हि यस्मादेषः देवादिभावः निसर्गः स्वभावो भवति, अतः स्वभावो नान्यथा भवतीति श्रुत्यर्थः । प्रकृतिं स्वभावं मोहिनीं मिथ्याज्ञानजननीम । श्रद्धामयः श्रद्धास्वरूपः । स्वरूपं स्वभाव इति च पर्यायः । यो यच्छ्रद्धः स एव सः । यः सात्त्विकश्रद्धावान् सः सात्त्विक एव न राजसादिः । एवं राजसतामसश्रद्धावंतौ व्याख्येयौ । इतरेभ्यो रुद्रादिभ्यः दृष्टेन यज्ञादिलक्षणेन अदृष्टेन धर्मादिलक्षणेन । तत्रापि आगंतुकहेतावपि । हेत्वन्तरान्वेषणेन हेत्वन्तरगवेषणेन । तद्यथेतिश्रुतेरयमर्थः । "यथा पेशस्करी भ्रमरीपेशसः तृणकीटस्य मात्रां अंशं उपादाय उपादानीकृत्य अन्यतमतृणकीटा- दन्यन्नवतररूपं भ्रमररूपं तनुते, एवमेवायमात्मा परमात्मा इदं शरीरं लिंगाख्यं निहत्य विनाश्या- विद्यां प्रकृत्यपरनामिकां गमयित्वापसार्य अन्यत् प्राकृतपित्रादिरूपादन्यन्नवतरं अदृष्टपूर्वं पित्रादि-

तनुते । एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणं रूपं कुरुते पित्र्यं वा गांधर्वं वा प्राजापत्यं वा ब्राह्मं वान्येषां भूतानाम्" इतिश्रुतौ लिंगशरीराविद्यानिवृत्तेरूर्ध्वमपि पितृत्वाद्युक्तेश्च । नच मुक्तस्य देहाद्यस्ति चेत् दुःखादि स्यात् नचेद्भोगायोग इतिवाच्यम् । ईश्वरवच्चिदात्मकस्य वा कर्मानारब्धस्यैच्छिकस्य प्राकृतदेहस्य वा सत्त्वात् । अस्ति हि तावच्चिद्रूपं शरीरम् ।

"चिदानंदशरीरेण सर्वे मुक्ता यथा हरिः ।
भुंजते कामतो भोगांस्तदंतर्बहिरेव च ॥" इतिश्रुतेः ।

न्यायविवरणे "नच मुक्तस्य चिदात्मको देहोऽपि नास्तीतिवाच्यम् । अकृत्रिमत्वेन तस्यानपगमात्" इत्युक्तेश्च । अस्ति च जडशरीरम् ।

"स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन ॥"

इतिब्रह्मवैवर्तोक्तेः । तत्त्वप्रदीपे "शुद्धप्रकृतिमयानि ज्योतीरूपाणि सुखैकतानानि शरीराण्यनुप्रविश्य" इत्युक्तत्वाच्च । "चिता वाऽचिता वा नित्येन वाऽनित्येन वाचानंदी ह्येष भवति" इतिदेहद्वयश्रुतेश्च । मोक्षधर्मे च—

---

रूपं अन्येषां मनुष्यगन्धर्वादीनां भूतानां रूपं तनुत इति । ननु "तथयेति" श्रुत्या कथं तारतम्यस्य स्वाभाविकत्वसिद्धिरित्यतस्तत्प्रकारं विवृणोति ॥ इति श्रुताविति ॥ तथाच लिंगशरीराद्युपाधिनिवृत्त्यनंतरं मुक्तावपि पितृत्वादेरप्यस्यां श्रुतौ श्रूयमाणत्वात्तारतम्यस्य स्वाभाविकत्वसिद्धिरिति भावः । पित्र्यादिरूपप्रसंगेन मुक्तस्य चिदचिद्रूपशरीरसद्भावं प्रतिपादयितुं तदनुसारिणीं शंकामुपन्यस्य निषेधति ॥ नच मुक्तस्येति ॥ ऐच्छिकस्य इच्छामात्रारब्धस्य । कामतो यथेष्टतः । अंतः हरेरंतः । चिदानंदेति श्रुत्या स्वाभिमते जीवस्य चिदात्मकशरीरे सिद्धांतानुमतिमाह ॥ न्यायविवरणे चेति ॥ यद्यप्युक्तमपि । चिदानंदात्मकदेहोऽपीत्यपिशब्दो जडदेहसमुच्चयार्थः । अकृत्रिमत्वेन स्वाभाविकत्वेन । तस्य चिदानंदात्मकदेहस्य । तेजोरूपाणि तेजोभूतस्वरूपाणि प्रकाशात्मकानि वा स्वीकृत्य धृत्वा जागरितवत्, यथा स्वप्नावस्थायामीश्वरेच्छाधीनकर्मवासनाजन्यानुगुणशरीराणि स्वीकृत्य तदनुचितभोगान् भुक्त्वा जागरितस्त्यजति तद्वत् भुक्त्वा भोगानिति शेषः । त्यागस्तेषां शरीराणामिति शेषः । तत्र स्वीकारत्यागाभ्यां शरीराणामस्वरूपत्वमवगम्यते । तत्त्वप्रदीपे विशिष्टाकारव्याख्याने ग्रंथे । शुद्धप्रकृतिमयानि रजआद्यमिश्रितप्रकृत्यात्मकानि सुखैकतानानि न तु दुःखावहानि । अत्र प्रवेशोक्त्या अस्वरूपत्वं बोध्यम् । ननु

"प्रकृतिं चाप्यतिक्रम्य गच्छंत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वंद्वं प्रकृतेः परम् ॥
इंद्रियाण्यनुबुध्यंति स्वदेहं योगिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मैः पश्यति तैस्तु सः ।
स जिघ्रति यथान्यायं स्पर्शान्स्पृशति च प्रभो ॥"

इति । नच प्राकृतदेहयोगे दुःखाद्यापत्तिः । मुक्तस्य वश्यप्रकृतित्वेन प्रकृतिवशत्वाभावात् । नहि यस्य वन्यादिर्वश्यस्तस्य तद्योगजं दुःखम् । उक्तं हि न्यायविवरणे "मुक्तानां वशिता यतः" इति । तत्वप्रदीपे च "वश्यप्रकृतीनाम्" इति । भाष्ये च "शरीरमनुप्रविश्य पुण्यानेव भोगाननुभवति । न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते नतु काष्ण्यादीन्" इति । सूत्रितं च "प्रदीपवदावेशस्तथाहि दर्शयति" इति । "नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतिस्तु कर्मारब्धदेहविषया ।

---

चिदचिदुभयोः प्रत्येकप्रमाणोक्त्या नोभयशरीरप्रसिद्धिः । एकस्याप्यानुसारेण नयनसंभवाविस्याशंक्योभयत्रापि निरवकाशं स्पष्टं प्रमाणमाह ॥ चिता चेति ॥ स्वरूपक्रियादिसत्वेऽपि प्रमाणमाह ॥ मोक्षधर्मे चेति ॥ निर्द्वंद्वं समाभ्यधिकरहितम् । योगिनो गच्छंत्यात्मानमित्युक्तपरमात्मप्राप्तिमतो मुक्तस्य स्वदेहं स्वस्य स्वरूपदेहमनुसृत्य इन्द्रियाणि चक्षुरादीनि बुध्यंति उद्बुद्धानि भवंति । आत्मनः मुक्तात्मनः(परमात्मनः) । कर्तुः तानि चक्षुरादिस्वरूपेन्द्रियाणि करणानि. कुतः सः मुक्तः आत्मा सूक्ष्मैः तैः स्वरूपचक्षुरादिभिः रूपाणि पश्यति । सः मुक्तः गंधान् जिघ्रति, स्पर्शान् स्पृशति, उपलक्षणमेतत् । शब्दान् शृणोति, रसानास्वादयति, इत्याद्यपि ग्राह्यम् इति स्मृत्यर्थः । अत्र प्रकृतिं च व्यतिक्रम्य गच्छन्त्यात्मानमित्युक्तमुक्तसंबंधप्रतीत्येंद्रियाणां स्वरूपत्वमवगम्यते । मुक्तस्य देहाद्यस्ति चेत् दुःखादिप्राप्तिरिति पूर्वोक्तबाधकमाशंक्य परिहरति ॥ नचेति ॥ प्रकृतिदेहयोः मध्ये ... । दुःखादीत्यादिशब्देन कामक्रोधादिकं ग्राह्यम् । वशीकृतदेहप्रकृतित्वेन दुःखाद्यभावः । कथमित्यतस्तमुपपादयति ॥ नहीति ॥ उक्तमर्थमाचार्यादिभिः संवादयति ॥ उक्तं हीत्यादिना ॥ "प्रदीपवदावेश" इति सूत्रार्थः शरीरमनुप्रविश्येत्यादिना भाष्य एव स्पष्टः । मुक्तस्य शरीरित्वेऽपि वश्यदेहत्वेन दुःखादिकं न संभवति "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः का गतिरिति जिज्ञासायामाह ॥ न ह वै सशरीरस्येति ॥

मुक्तस्याशरीरत्वश्रुतिरपि तन्निकृष्यभावात् । नहि तानि शीर्यंते । तच्छरीरस्य लोकविलक्षणत्वाद्यभावोक्तिः । अप्रहर्षमनानंदमित्यादिवत् । उक्तं च "ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः" इति । कथमन्यथा देहि(सदेहे)ष्वेव जयादिषु "देहेन्द्रियासुहीनानाम्" इत्युक्तिः । तस्मात्फलाव्याप्त्यायोक्तन्यायैस्तरतमभावापन्नमुक्तब्रह्मरुद्रादिनियामको भगवान् श्रीपतिः सर्वोत्तम इति सिद्धम् ॥

नमो निरस्तदोषाय समस्तगुणराशये ।
विमलानंददेहाय कमलापतये सदा ॥ १ ॥
मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।
वाग्यज्ञरूपा लक्ष्मीशस्तया प्रीणातु केशवः ॥ २ ॥

॥ इति मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ५ ॥

---

प्रियाप्रिययोः सुखदुःखयोः । अपहतिः निरासो नास्ति । किंतूपहतिरेवास्तीत्यर्थः । कर्मारब्धदेहविषया । नतु देहमात्रविषया । उक्तश्रुत्यादिविरोधात् । तर्हि "अशरीरं वा व संतं प्रियाप्रिये न स्पृशतः" इत्याद्यशरीरत्वश्रुतेः कोऽभिप्राय इति जिज्ञासायामाह ॥ मुक्तस्याशरीरत्वश्रुतिरपीति ॥ तन्निकृष्यभावात् । शीर्यंत इति शरीराणीति शरीरनिरुक्त्यभावात् । न तु शरीरस्यैवाभावात् । उक्तश्रुत्यादिना शरीरस्य प्रमितत्वादिति । निरुक्त्यभावमेवोपपादयति ॥ न हि तानीति ॥ तानि मुक्तशरीराणि । शीर्यंते कर्मारब्धशरीराणीव शीर्णानि क्षिन्नानि जायंत इत्यर्थः । तच्छरीरस्य लोकविलक्षणत्वोक्तिः श्रुतौ श्रुता । अशरीरमिति मुक्तशरीरस्य लोकविलक्षणत्वोक्तेरेवार्थः इत्यत्र दृष्टांतः ॥ अप्रहर्षमित्यादि ॥ तद्वत्त्वेऽपि तद्रहितत्वोक्तिर्लोकवैलक्षण्यादित्युक्तम् । अत्र संमतिमाह ॥ उक्तं चेति ॥ विपक्षे बाधकमाह ॥ अन्यथेति ॥ अन्यथा सर्वत्र तद्रहितत्वोक्तिस्तदभावादेव नतु लोकविलक्षणत्वादित्यंगीकारे । उपसंहरन् समग्रशास्त्राधिगतार्थमाह ॥ तस्मादिति ॥

॥ इति मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ५ ॥

एवं समाप्तग्रंथः तत्प्रचयगमनायांते लक्ष्मीपतिनमस्काररूपं मंगलमाचरति ॥ नम इति ॥ अत्र स्तोत्रत्वेनास्य नमस्कारस्य भगवदनुग्रहार्थत्वमवगम्यते । नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् । तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥ तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः कर्मन्यासो हरावेवं विष्णोस्तुष्टिकरः सदा ॥" इति स्मृत्युक्तप्रकारेण स्वकृतां पूजां भगवते समर्पयति ॥ मत्प्रेरकेणेति ॥ मत्प्रेरकेण हरिणा मया या वाग्यज्ञरूपा पूजा कारिता तया लक्ष्मीशः केशवः मम प्रीणात्वित्यन्वयः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते चतुर्थः परिच्छेदः ॥ ४ ॥

॥ श्रीः श्रीः श्रीः श्रीः श्रीः ॥

॥ संपूर्णश्चायं ग्रन्थः ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचितायां आमोदाख्यायां न्यायामृतव्याख्यायां चतुर्थः परिच्छेदः ॥

॥ श्रीः श्रीः श्रीः श्रीः श्रीः ॥

॥ समाप्तोऽयं ग्रंथः ॥

# शुद्धाशुद्धपत्रिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ix | 19 | —चैतन्य | चैतन्यम् |
| xi | 21 | निर्मातणाम् | निर्मातॄणाम् |
| xii | 6 | सहस्रख्या | सहस्रसंख्या |
| xiii | पञ्चमपंक्त्यनन्तरं विषयः—श्री आनन्दभट्टारक (पाण्डुरङ्गी) विरचितं न्यायामृत-कण्टकोद्धाराख्यं व्याख्यानं तथा श्रीवंशपल्याचार्यविरचितं न्यायामृतप्रकाशाख्यम्-समग्रं व्याख्यानम् । | | |
| xiv | 12 | विराजमाना | विराजमानानां |
| xvi | 1 | कंतॄणां | कर्तॄणां |
| 7 | 11 | णा(ख्य) | णाख्या |
| 13 | 19 | तदुक्ते | तदुक्तेः |
| 14 | 22 | नोद्भवयितुं | नोद्भावयितुं |
| 15 | 7 | प्रतिपत्तौ | विप्रतिपत्तौ |
| 15 | 24 | बायम् | बाध्यम् |
| 18 | 12 | रूप | रुप |
| 23 | 22 | रूपणो | रूपेण |
| 24 | 5 | छिन्नस्य | छिद्यस्य |
| 50 | 1 | व्यग्यं | व्यंग्यम् । |
| 53 | 21 | स्वपीत्यर्थः | स्वापीत्यर्थः |
| 65 | 23 | बासिद्धिः | बसिद्धिः |
| 73 | 26 | तिइ | इति |
| 74 | 26 | विषयस्य | विषय |
| 80 | 15 | तथंव | तथैव |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 84 | 4 | षडिभ | षड्विध |
| 111 | 9 | मिथ्वा | मिथ्या |
| 112 | 11 | साक्षात्कारत्व | साक्षात्कार |
| 123 | 6 | वैय्यर्थात् | वैयर्थ्यात् |
| 128 | 14 | यद्यत्यपि | यद्यपि |
| 135 | 8 | परोक्षाज्ञाने | परोक्षज्ञाने |
| 137 | 10 | प्राप्रम् | प्राप्तम् |
| 137 | 12 | स्वास्य | स्वस्य |
| 139 | 3 | पात् | पातात् |
| 141 | 3 | त्य | त्यं |
| 144 | 18 | प्रतिबन्धित्वेन | प्रतिसंबंधित्वेन |
| 145 | 18 | अध्यस्तत्व | अध्यस्त |
| 163 | 8 | विशेषज्ञानं च | विशेषाज्ञानं च |
| 167 | 27 | प्रथमोस्थित | प्रथमोपस्थित |
| 168 | 9 | मिथ्यात्व | मिथ्यात्व |
| 174 | 5 | ति: | श्रुति: |
| 186 | 19 | द्वेधा | द्वेधाच |
| 189 | 22 | आमित | आमिता |
| 193 | 23 | गम्यत | गम्यत इति |
| 199 | 9 | असंबंधिना: | असंबंधिन: |
| 200 | 27 | नानाश्री | नानाश्री |
| 222 | 19 | मिथ्यात्वासिद्धि | मिथ्यात्वासिद्धि |
| 231 | 15 | ज्ञाननिवृत्ति | ज्ञानानिवृत्ति |
| 304 | 14 | स्पावरण | स्यावरण |
| 364 | 26 | विषय | विषय |
| 370 | 23 | भूतलेनदत्यन्ताभावयो: | भूतलनदत्यन्ताभावयो: |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 370 | 26 | संयोगध्वंस | संयोगध्वंसः |
| 375 | 10 | चेता | चेत्ता |
| 375 | 10 | त्यतो | स्वतो |
| 386 | 21 | पच्यते: | पच्यते |
| 403 | 9 | व्यवहारिकैः | व्यावहारिकैः |
| 401 | 24 | सर्वेण | सर्वेषां |
| 408 | 4 | भावकनीति | भावकानीति |
| 572 | 2 | अपरोक्षाज्ञसौ | अपरोक्षज्ञसौ |
| 595 | Foot Notes | अनुवचाकस्तु | अनुवाकस्तु |
| 620 | 4 | अनर्थमिप्रसंगात् | अनर्थप्रसंगात् |



*Name of Institution :* **Shri Raghavendraswamy Brindavan Office**

*Name of Department :* **Adhyaksha, SGS Vidya Peetham, Mantralaya Oriental Library**

| *Sl. No.* | *Name of the Book* | *Author's Name* |
|---|---|---|
| 1 | BRAHMASUTRA NYAYASANGRAHA | Sri Vijayeendrateertharu |
| 2 | BRAHMASUTRA ADHIKARANA RATNAMALA | Sri Sudheendrateertharu |
| 3 | TATWAPRAKASIKA NYAYAMALIKA | Sri Krishnacharya (Sri Sumateendrateertharu) |
| 4 | NAVYA DURUTI SIKKSHA | Sri Vadendrateertharu |
| 5 | VISHAYA VAKYA SANGRAHA | Sri Dheerendrateertharu |
| 6 | ADHIKARANA RATNAMALA | Sri Venkatacharya Panchamuki |
| 7 | RAGHAVENDRA VIJAYA | *Vidwat Kavikulatilaka* Sri Narayanacharya |
| | With English Translation | Sri G. B. Joshi |
| 8 | RAGHAVENDRA VIJAYA | *Vidwat Kavikulatilaka* Sri Narayanacharya |
| | With Commentary in Sanskrit **Bala Bhodini** | Sri Desika Gopalakrishnacharya disciple Sri Ramacharya |
| | Gurupada Seva | *Nyayalaya Pandita* Sri Raghavendracharya |
| 9 | RAGHAVENDRA VIJAYA KATHA SANGRAHA | Sri P. P. Lakshminarayana Upadhyaya |
| 10 | BHATTA SANGRAHA Vol. I | Sri Raghavendrateertharu |
| 11 | SARVASIDDHANTA SARAASARA-VIVECHANAM X Chap. | Sri Vijayeendrateertharu |
| 12 | BHATTA SANGRAHA Vol. II | Sri Raghavendrateertharu |
| 13 | RAGHAVENDRA VIJAYA (III and IV Canto) | *Vidwatkavikula Tilaka* Sri Narayanacharya |
| | With Two commentaries in Sanskrit **Bala Bhodini** | s/o Sri Desika Gopalakrishnacharya disciple Sri Ramacharya |
| | Gurupadaseva | *Nyayalaya Pandita* Sri Raghavendracharya |

| Sl. No. | Name of the Book | Author's Name |
| --- | --- | --- |
| 14 | TARKA SANGRAHA<br>With Sabdhabhoda | Sri Annambhatta<br>Sripadaputra Sri Giri Acharya |
| 15 | SARVASIDDHANTA SARAASARA-VIVECHANAM | Sri Vijayeendrateertharu |
| 16 | DURITAPAHARA STOTRAM<br>(With Kannada Vyakhyana) | Sri Vijayeendrateertharu<br>Sri Magadi Ranganathachar |
| 17 | RAGHAVENDRA VIJAYA | *Vidvatkavikula Tilaka* Sri Narayanachar |
| 18 | MANIMANJARI<br>(With Sanskrit commentary) | Sri Narayanapanditacharya, son of Sri Trivikramapanditacharya |
| 19 | NYAYADHWA DEEPIKA Vol. I | Sri Vijayeendrateertharu |
| 20 | VISHNU BHAGAVATA PADODAKA PRASANA KRAMA NIRNAYA | Sripadaputra Sri Giri Acharya |
| 21 | SRIMAN MADHWA MATAM<br>With Kannada Translation | Sri Venkata Raghavendracharyaru (Sri Sujayeendrateertharu)<br>Sri Magadi Ranganathachar |